ओम्

श्रीहयवदन पाहि ॥

# ॥ श्रीगीता भावचन्द्रिका ॥

श्रीमद्भगवद्गीताप्रथमषट्कार्थविचारात्मिका श्रीमध्व-
व्याख्यानोत्कर्षप्रकाशनरूपा

यमुत्तूरुवास्तव्येन बि.ए. बि.एल्. इत्युपपदधारिणा हैकोर्ट् वकील्
सि. एम्. पद्मनाभाचार्येण रचिता

श्रीमन्मन्त्रालयस्वाम्यपरपर्यायश्रीमद्राघवेंद्रयतिवरकृतगीता-
विवृत्या, तथा श्रीशङ्कराचार्यरामानुजाचार्यभाष्याभ्यां
च सह मुद्रिता ॥

चेन्नपुर्यां
ला प्रिण्टिङ् मुद्राक्षरशालायां अमुद्र्यत ।

१९१७

मूल्यं रूप्य ६—०—० ॥ विना तपाल् व्ययं ॥

# श्री हयवदन मध्वेश पाहि ॥

## भूमिका ।

करोतु मम कल्याणं हरिर्हयमुखाभिधः ।
गुरुश्च मध्वनामा मे वरदोऽस्तु निरन्तर ॥

पृथ्वीमण्डलमध्यस्थाः पूर्णबोधमतानुगाः ।
वैष्णवा विष्णुहृदयास्तान्नमम्ये गुरून्मम ॥

अत्र नास्ति मे वक्तव्यो बहुवृत्तान्तः ॥ जातोऽस्मि श्रीमन्न्यायसुधादिप्रवचनचतुराणां सौंधेत्युपपदविशिष्टानां अन्वये । मम तातपादाः विद्यागुरवश्च श्रीमन्मध्वाचार्याभिधास्तावन्न्यायवेदान्तप्रवीणाः परमहंसाः जपप्रवचननिरताः स्वतेजसानिरस्तसमस्ताश्रितजनाज्ञानांधतमसाः श्रीरंगनाथनिरंतरध्यानसमुपार्जिततदनुग्रहाः भूवैकुण्ठायमाने श्रीरंगक्षेत्रे विराजन्तेतरां ॥

हरिगुरुवरभक्तान् श्रीसुधावाग्विलासात्
परकुमतनिरासे बद्धदीक्षान्यतीन्द्रान ।
बहुमतमुनिवर्यान् लंभिताशीतिसख्यान्
परिणतवयसोमे तातपादान्नमामि ॥

एवमनूचानसंततिजातोऽपि कालगत्यनुसारेण आंग्लेयभाषाभ्यासश्रमाहृतपूर्ववयाः, वकील् इत्यभिधापरिकल्पिताभिभाषिकजीवनेन समापितयौवनः अधुना श्रीमन्मध्वपादाववलंब्य ममगुरुपरंपरां करावलंबं प्रार्थये ॥ चिरकालमन्यथानियोजनेन कलुषीकृतां मद्वाचं श्रीमध्वरमणदास्ये विनियोजनेन मुनिपत्नीमिव श्रीराघवपादारविंदरजस्सेवया विशुद्धां कर्तुं सन्नह्ये ॥

स्यान्नाम मन्दाशङ्का सत्स्वपि प्राचीनेषु व्यख्यानेषु किमिति श्रीमदानन्दतीर्थापरपर्यायाः पूर्णप्रज्ञभगवत्पादाचार्याः श्रीमद्भगवद्गीतार्थप्रकाशकं भाष्यं तात्पर्यं इति ग्रन्थयुगळं रचयांबभूवुरिति ॥ अन्यैरन्यथाव्याख्यातां श्रीमद्गीतोपनिषदं श्रुतिस्मृत्यानुगुण्येन यथावद्व्याचख्युः श्रीमदाचार्यचरणाएव। एतत्प्रदर्शनायास्मिन्ग्रंथे तदनुग्रहबलः प्रयतिष्ये ॥

भगवत्पादीयग्रन्थेषु प्रथमरचितं तावद्गीताभाष्यं ॥ यत्याश्रमस्वीकारानंतरं आचार्यैर्बदरीप्रयाणे निश्चितेसति विरहासहिष्णूनां स्वगुरूणामच्युतप्रेक्षाणा समाधानाय श्रीमद्भीरचितमिदमिति कविकुलतिलकनारायणपंडिताचार्यकृतश्रीमन्मध्वविजयग्रन्थात् ज्ञायते ॥ तदेतत् गीताभाष्यं "गीतार्थं वक्ष्यामि लेशतः" इति प्रतिज्ञया पुरस्कृतमपि संक्षिप्तवाक्यैः अल्पेतरभावनिबिडैः समलंकृतं प्रकाशतेतमां ॥ श्रीमज्जयतीर्थमुनिवर्याः तदर्थान् अतिसुंदरमाविष्कृतवन्तः प्रमेयदीपिकायां ॥ तथा श्रीमदाचार्यकृतगीतातात्पर्याख्यस्य ग्रन्थरत्नस्य न्यायदीपिकाख्या टीका तैरेवाकारि ॥ अनयोर्दीपिकयोष्टिप्पणकाराणां श्रीनिवासतीर्थादीनां वह्वी दृश्यते श्रीमदाचार्यसेवा ॥

ननु टीकाटिप्पणाद्यदृष्टस्य कस्यचिदप्यपूर्वप्रमेयविशेषस्यानाविष्कारे उद्यमो व्यर्थः स तु न शक्यः, इति न वक्तव्यं ॥ नूतनप्रमेयानाविष्कारेऽपि विक्षिप्तसंग्रहादिना मदुद्यमस्य सार्थकत्वात् ।

"विक्षिप्तसंग्रहात्कापि क्वाप्युक्तस्योपपादनात् ।
अनुक्तकथनात्कापि सफलोऽयं श्रमो मम ॥"

इति श्रीमद्व्यासराजपूज्यचरणैर्यदुक्तं तन्मूलटीकानुक्तार्थप्रतिपादने न कोऽपि समर्थ इति लोकं शिक्षयत् विराजते ॥ इदं चात्र विज्ञाप्यते ॥ सूत्रप्रस्थाने सन्ति विचारग्रन्था बहवो ये परमतान्यनूद्य तन्निरासपूर्वकं द्वैतमतं सप्रमाणं सयुक्तिकं च स्थापयन्ति ॥ गीताप्रस्थाने तु तादृशसविस्तर-

पूर्वपक्षनिरासपूर्वकसिद्धान्तस्थापनग्रन्थः नाद्यापि सहृद्भिर्गोचरतां गतः ॥ नात्र न्यूनताशङ्कया प्राचीनाचार्येषु ॥ सुधाचन्द्रिकायुक्तन्यायातिदेशेन शिष्यैरेव परमतनिरासपूर्वकस्वमतस्थापनप्रकारः ऊह्यतां इति तेषां हृदयं गम्यते । यथामति परव्याख्यानानुवादपूर्वं सिद्धान्तार्थस्य दृढीकरणेन श्रमो मे सार्थको भूयात् ॥ अद्य कालकौटिल्यं जीवनोपायव्यासङ्गबाहुल्याकृष्टमनसां सामान्यतः प्राचीनविद्यासु विशेषतो वेदान्तविद्यासु औदासीन्यं चालोच्य श्रीमदाचार्यपादावलंबिनां उपकारलेशः क्वचित् कदाचित् भूयादिति केवलं आशाप्रचोदितोऽस्मि ॥ नाहं अनन्तोत्सर्गापवादपुंजितशब्दशास्त्रनिपुणः । नवाऽवच्छेदकावच्छिन्नादिशब्दनिबिडन्यायतन्त्रप्रतिपादितशाब्दबोधप्रकारप्रक्रियाप्राज्ञः । तथापि प्रयते श्रद्धावेशात् बालभाषितेन सज्जनसेवां विधातुं ॥

अस्मिन्ग्रन्थे श्रीमद्भगवद्गीतापद्यं स्थूलाक्षरैः मुद्रितं विद्यते ॥ अनन्तरं श्रीमद्राघवेन्द्रतीर्थविरचिता गीतार्थविवृतिर्ग्रथिता ॥ पश्चात् शङ्कराचार्यभाष्यं ॥ तदनन्तरं रामानुजाचार्यभाष्यं च ॥ तदनन्तरं विचार इत्यभिधया पूर्वपक्षसिद्धान्तपरीक्षा कृता द्रष्टव्या ॥ अस्य विचारभागस्य भावचन्द्रिकेत्याख्या ॥

इहग्रन्थे विचारितं रामानुजाचार्यभाष्यं तट्टीकया वेदान्तदेशिककृतया तात्पर्यचन्द्रिकया प्रकाशितं ॥ विचारितं च शंकरभाष्यं तट्टीकया आनन्दगिरिरचितयाऽथ शंकरभाष्योत्कर्षदीपिकया च विशदीकृतं ॥ किंच मधुसूदनीगूढार्थदीपिका, नीलकण्ठीयचतुर्धरी, श्रीधरीयसुबोधिनी, शंकरानन्दाभिनवगुप्ताचार्याभ्यां रचिते व्याख्ये वेङ्कटनाथकृतब्रह्मानन्दगिरिव्याख्या च, प्रसङ्गात् काश्चिदन्याश्च व्याख्याः विचारिताः द्रष्टव्याः ॥ एतेषु व्याख्यातृषु वेङ्कटनाथः केवलमतिदुराग्रहकलुषितान्तःकरणतया परिमुषितविवेक इव दृश्यते ॥ अयं श्रीमन्मध्वमुनिव्याख्यानमनूद्य तत्र तत्र तद्दूषयति ॥ दूषणावसरे अस्य वाक्यानि न किंचिदपि गम्भीराणि न वा सभ्यानि दृश्यन्ते ॥ सर्वज्ञाचार्यान्प्रत्याग्रहमूलं निर्लज्जं दूषणमवलोक्य अस्वस्थचित्तो

हरिगुरुसेवात्वेन स्वमनोवाक्कायशुद्ध्यर्थं प्रवृत्तोऽभवम् ॥ विद्वद्भिरविनयः क्षन्तव्यः ॥

श्रीमद्भगवद्गीताप्रथमषटकस्यैव विचारोऽत्र कृतो द्रष्टव्यः ॥ यद्यप्यष्टादशाध्यायात्मिकायाः गीतोपनिषदः कात्स्न्र्येन व्याख्याने कुतूहलातिशयभरितोऽस्मि । परंतु तादृश्यां बहुसेवायां न मे भागधेयं स्यादिति शङ्कितमनाः प्रथमषट्कात्मकं इमं प्रकटीकरोमि ॥ यदि भवेद्भगवदनुग्रहः तर्हि क्रमेण कृतसंपूर्णकृत्यो भवेयम् ॥

अयं ग्रन्थः मन्नारगुडीकृष्णाचार्यरामाचार्यमाधवाचार्यादिभिः विद्वाद्भिरवलोकितः ॥ कुंभघोणराघवेन्द्राचार्यैः विद्वत्कविभिः परीक्षितश्च ॥ तेषु कुंभघोणराघवेन्द्राचार्याणां इयमभिप्रायपत्रिका लिख्यते ॥

"गीताया व्याख्येयं चेन्नपुरिन्यायविशदनस्थाने ।
मुख्ये वादेधिकृतैः कोयम्मुत्तूरुपुरकृतावासैः ॥ १ ॥

सत्ताम्रपर्णिवंशोद्भवनिजतातोपदिष्टसच्छास्त्रैः ।
सुकृतिवरपद्मनाभाचार्यैरचिता षडध्यायी ॥ २ ॥

एषा परकीयाश्चव्याख्यास्सम्यङ्मया व्यलोकिषत ।
तास्वेषाऽऽग्रहरहिता गीताक्षरलब्धभावगंभीरा ॥ ३ ॥

प्राचार्याणां सूक्तिभिरविरुद्धार्थासुबोधसद्वाक्या ।
अविरुद्धार्थपदांतरकरणादपि सुज्ञलोकतोषकरी ॥ ४ ॥

परमतदूषणविषये सर्वादरणीयबहुलसद्युक्तिः ।
परकीयव्याख्यानां प्रत्येकं साधुदूषणावसरे ॥ ५ ॥

पद्यालभ्यार्थत्वं केवलनैजाग्रहैकमूलत्वं ।
तत्पूर्वाचार्याणां वचनैश्च तथा परस्परवचोभिः ॥ ६ ॥

श्रुतिभिस्स्मृतिभिस्सूत्रवद्भिर्युक्तिभिश्च तात्त्वेन ।
एतासु विद्यमानं विशेषमखिलं स्फुटं प्रकाशयति ॥ ७ ॥

तस्मादियं सुमतिभिरखिलैस्त्वादरादादेया ।
इतिमन्ये सुविशेषात् वटवीणावासिराघवेन्द्रार्यः" ॥ ८ ॥

अत्र मम तातपादानां श्रीमतामाशीश्च लिख्यते ॥

"श्रीकान्तकान्तपदपङ्कजभावभाजां
नृत्यन्महेशमुकुटाद्युसरित्सखीनां ।
मोघीकृतारिवचसाममृतोर्मिलानां
सत्पद्मनाभवचसां हरितो हि मौल्यं ॥

एवं मध्वमुनीशेन कृताशीः पद्मनाभके ।
गीतार्थसारकनकवर्षेस्तोपितनातके ॥

नूनं स्मरामि करुणां मयि मध्वनाथे
सत्पद्मनाभगदितं मधुगीतिकार्थं ।
श्रुत्वातिमोदमभिगन्तुमनल्पमायु-
र्दत्वाभिरक्षसि हरे कथमन्यथैतत् ॥

राज्ञस्सदसि स्वप्राप्त'वीरशंगिलि'भूषणं ।
मध्वस्तुष्टो ददौ गीतापद्मनाभाय धीमते" इति ॥

एतस्याः भावचन्द्रिकायाः इंग्लीष्भाषायां प्रतिनिधिभूतं मयारचितं पुस्तकं नातिचिरात् प्राक् मुद्रितं प्रकटितं च महद्भिरवलोकनीयमिति प्रार्थ्यते ॥ एतयोर्ग्रन्थयोः शुद्धीकरणमुद्रणादिषु मम सहायभूतेभ्यः पंडितेभ्यः अत्यंत-कृतज्ञतासूचकवन्दनं करोमि ॥ मुद्रणेतावत् शोध्यपत्रावलोकने ममसहायभूतौ मज्ज्येष्ठसुतः वि.ए. बि.एल्. इत्युपपदधारी हैकोर्ट्वकील् सि. पी. जय-

नाथाचार्यः मम ज्येष्ठजामाता, बि.ए. बि.एल्., इत्युपपदधारी को. श्रीनिवाससरावाख्यश्च सुमन्तव्या ॥

जयनाथश्रीनिवासौ श्रीमध्वार्यकृतसेवया सन्तौ ।
भूयास्तां मानमुदितौ श्रेष्ठश्रीद्रविणसंपदा नित्यम् ॥

॥ श्री कृष्णार्पणमस्तु ॥
ओं तत् सत् ॥

एवं विधेयः
सि. एम्. पद्मनाभाचार्यः.

# पद्यानां अकारादिक्रमेणानुक्रमणिका ॥

## अनुक्रमणिका ।

अनुक्रमणिका ।

## अनुक्रमणिका

## अनुक्रमणिका

# ॥ श्रीमद्भगवद्गीता ॥

## ॥ श्रीहयवदनो विजयतेतराम् ॥

यस्माच्छ्रीरमणात्कृपाजलनिधेः पार्थोद्धृतौ प्रेमतः
सर्वेषां भवरोगमूर्च्छितधियां मोहापनोदौषधम् ।
आम्नायप्रतिपाद्ययोगभरितं गीतामृतं निस्सृतं
तस्मै ते पुरुषोत्तमाय हरये भूयान्नतिस्सन्ततम् ॥ १ ॥

वन्दारुमन्दारमगाधबोधब्रह्मादिवृन्दारकवन्द्यपादम् ।
मुकुन्दमिन्दीवरबन्धुवक्त्रं स्मरामि दामोदरमादरेण ॥ २ ॥

मन्येपार्थरथस्य मूर्ध्नि दिविजे जाग्रद्ध्वजाग्रे कपिः
शुश्रावेति सगीतिकाम्भगवतो भीमोपि सेनान्तरे ।
योसावेव हरेर्मुखाच्छ्रवणतः श्रीमध्वनामा गुरु
र्व्याचख्यौ तमहं भजे गुरुमतिं सर्वेष्टचिन्तामणिम् ॥ ३ ॥

यश्च श्रीजयपाण्डुराजतनयश्शुश्राव वक्त्राद्धरे-
र्गीतां भारतशास्त्रसारसुरसां पार्थो हनूमद्ध्वजः ।
तं वन्दे पुनरेव यः पशुरभूद्ग्रन्थान्समस्तान्गुरोः
श्रुत्वातो जयनाकिराड्भ्वितवान् टीकातुले दीपिके ॥ ४ ॥

हरिगुरुवरभक्तान् श्रीसुधावाग्विलासान्
परसमयनिरासे बद्धदीक्षान्यतीन्द्रान् ।
परिणतवयसोऽस्मि तातवर्यान्नमामि
बहुमतमुनिशीलान् लंघिताशीतिसंख्यान् ॥ ५ ॥

नत्वा कृष्णस्य पादाब्जमुज्वलद्वारतीमताम् ।
पूर्णबोधगुरूणाञ्च टीकाचार्यादिसद्विदाम् ॥ ६ ॥

मध्वनाथमुनीन्द्राणां पादपङ्कजसेविना ।
पद्मनाभेन गीतायाः क्रियते भावचन्द्रिका ॥ ७ ॥

श्रीमदाचार्यवर्याणां करुणापाङ्गलेशतः ।
मनोवाक्तनुशुध्यर्थं परोक्तध्वान्तभङ्गकृत् ॥ ८ ॥

प्रतिगीतं प्रकाश्येते घटनाघटने मया ।
स्वीयान्यपक्षयोः किञ्चिद्विमृशन्त्वत्रपण्डिताः ॥ ९ ॥

धृतराष्ट्र उवाच—

**ॐ धर्मक्षेत्रे कुरुक्षेत्रे समवेतायुयुत्सवः ।**
**मामकाः पाण्डवाश्चैव किमकुर्वत संजय ॥ १**

वि. ॐ लक्ष्मीनारायणं नत्वा पूर्णबोधान्गुरूनपि ।
कुर्मः श्रीकृष्णगीताया भाष्याद्युक्तार्थसंग्रहं ॥

'स्त्रीशूद्रब्रह्मबन्धूनां त्रयी न श्रुतिगोचरा। इति भारत-माख्यानं कृपया मुनिना कृतं' इति भागवतोक्त्या वेदार्थ-ज्ञानानधिकारिणां स्त्रीशूद्रादीनां धर्मज्ञानद्वारा मोक्षोभवे-

दिति भगवान्वेदव्यासः संभवसभारण्यविराटोद्योगभीष्म-द्रोणकर्णशल्यगदासौप्तिकशान्त्यानुशासनिकाश्वमेधिकमौसलमहाप्रस्थानस्वर्गारोहणभाविष्यत्पर्वभेदेनाष्टादशपर्वात्मकं भारतं कृत्वात्र भीष्मपर्वणि भारतपारिजातमधुभूतां सर्वभारतार्थसंग्रहभूतां श्रीकृष्णार्जुनसंवादरूपां भगवद्गीतां निबबन्ध। तत्र पूर्वषट्के ज्ञानोपायोक्तिः। द्वितीयषट्के साधनोक्तिः। तृतीयषट्के प्रागुक्तस्य प्रपंचनं क्रियते इति विवेकः। तत्राद्याध्यायो द्वितीये कतिपयश्लोकाश्च कृष्णेनार्जुनबोधने प्रसक्तिसंपादनाय प्रवृत्ताः। तत्रायमर्थः। धृतराष्ट्र उवाच। किमित्याह—धर्मेति। धर्मसाधनभूमौ कुरुक्षेत्रे। युयुत्सवः युद्धमिच्छन्त एव समवेता मिलिताः सन्तो मामका मदीया दुर्योधनादयः पाण्डवाश्च हे संजय किमकुर्वतेति इति शब्दोयोज्यः। पाण्डवानां भगवत्प्रियत्वं सर्वसाक्षिकमप्यजानन्धृतराष्ट्रः स्वपुत्राणां विजयविविदिषया संजयं पप्रच्छेत्यर्थः। इति॥

अत्र प्रतिपत्तिसौकर्याय भाष्यकाराणामुपोद्घातभाष्यं लिख्यते।

### श्रीमदानन्दतीर्थभाष्यं।

देवं नारायणं नत्वा सर्वदोषविवर्जितं। परिपूर्णं गुरूंश्चान्गीतार्थं वक्ष्यामि लेशतः॥

नष्टधर्मज्ञानलोककृपालुभिर्ब्रह्मरुद्रेन्द्रादिभिरर्थितोज्ञान-प्रदर्शनाय भगवान् व्यासोऽवततार। ततश्चेष्टानिष्टप्राप्ति-

परिहारसाधनादर्शनाद्वेदार्थाज्ञानाच्च संसारे क्लिश्यमानानां वेदानधिकारिणां स्त्रीशूद्रादीनां च धर्मज्ञानद्वारा मोक्षो-भवेदिति कृपालुः सर्ववेदार्थोपबृंहितां तदनुक्तकेवलेश्वर-ज्ञानदृष्टार्थयुक्तां च सर्वप्राणिनामवगाह्यानवगाह्यरूपां केवलभगवत्स्वरूपपरां परोक्षार्थां महाभारतसंहितामचीक्लृ-पत् । तच्चोक्तं ।—"लोकेशाब्रह्मरुद्राद्याः संसारे क्लेशिनं जनं । वेदार्थाज्ञमधीकारवर्जितं च स्त्रियादिकं ॥ (१) अवेक्ष्य प्रार्थयामासुर्देवेशं पुरुषोत्तमं । ततःप्रसन्नोभगवान् व्यासोभूत्वा च तेन च ॥ (२) अन्यावतारुरूपैश्च वेदानु-क्तार्थभूषितं । केवलेनात्मबोधेनदृष्टवेदार्थसंयुतं ॥ (३) वेदा-दपिपरं चक्रे पञ्चमं वेदमुत्तमं । भारतं पञ्चरात्रं च मूलरामायणं तथा ॥ (४) पुराणं भागवतञ्चेति संभिन्नः शास्त्रपुंगवः ।(५) इति नारायणाष्टाक्षरकल्पे । (६) "ब्रह्मापि तन्नजानाति ईषत्सर्वोपि जानति । बह्वर्थमृषयस्तत्तु भारतं प्रवदन्तिहि" इत्युपनारदीये । (७) "ब्रह्माद्यैः प्रार्थितोविष्णुर्भारतं सचकार ह । यस्मिन्दशार्थाः सर्वत्र नज्ञेयाः सर्वजन्तुभिः"॥ इतिनारदीये। (८)"भारतं चापि कृतवान्पञ्चमं वेदमुत्तमं । दशावरार्थं सर्वत्र केवलं विष्णु-बोधकं । परोक्षार्थं तु सर्वत्र वेदादप्युत्तमं च यत्"॥ इति स्कान्दे । (९) "यदि विद्याच्चतुर्वेदान्सांगोपनिषदान्द्विजः । नचेत्पुराणं संविद्यान्नैव सस्याद्विचक्षणः"।(१०) "इतिहास-

पुराणाभ्यां वेदं समुपबृंहयेत्"। (११) "बिभेत्यल्पश्रुताद्वेदो मामयं प्रचलिष्यति"। (१२) "मन्वादि केचिद्ब्रुवते ह्यास्तिकादि तथापरे । तथोपचरिचराद्यन्ये भारतं परिचक्षते । (१३) भारतं सर्ववेदाश्च तुलामारोपिताः पुरा । देवैर्ब्रह्मादिभिस्सर्वैः ऋषिभिश्च समन्वितैः ॥ (१४) व्यासस्यैवाज्ञया तत्र त्वत्यरिच्यत भारतं । महत्वाद्भारवत्वाच्च महाभारतमुच्यते ॥ (१५) निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥ (१६) यदिहास्ति तदन्यत्र यन्नेहास्ति नतत्क्वचित्"॥ 'विराटोद्योगसारवान्' इत्यादितद्वाक्यपर्यालोचनया ऋषिसंप्रदायात, (१७) "कोह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत" ॥ इत्यादिपुराणग्रन्थान्तरगतवाक्यान्यथानुपपत्या नारदाध्ययनादिलिंगैश्चावसीयते ॥ कथमन्यथा भारतनिरुक्तिज्ञानमात्रेण सर्वपापक्षयः॥ प्रसिद्धश्च सोर्थः । कथंचान्यस्य कर्तुं न शक्यते । ग्रन्थान्तरगतत्वाच्च नाविद्यमानस्तुतिः । न च कर्तुरेव ॥ इतरत्रापि साम्यात् । तत्र च वासुदेवार्जुनसंवादरूपां सर्वभारतार्थसंग्रहां भारतपारिजातमधुभूतां गीतामुपनिबबन्ध ॥ तच्चोक्तं । (१८) 'भारतं सर्वशास्त्रेषु भारते गीतिका वरा । विष्णोस्सहस्रनामापि ज्ञेयं पाठ्यंचतद्द्वयं' इति महाकौर्मे ॥ (१९) 'सहि धर्मः सुपर्याप्तोब्रह्मणः पदवेदने' इत्यादि च—

## शंकराचार्यभाष्यं ।

ॐ नारायणः परोऽव्यक्तादण्डमव्यक्तसंभवम् ।

अण्डस्यान्तस्त्विमेलोकाः सप्तद्वीपाच मेदिनी ॥

सभगवान्सृष्ट्वेदं जगत्तस्यच स्थितिं चिकीर्षुर्मरीच्यादीनग्रे सृष्ट्वा प्रजापतीन् प्रवृत्तिलक्षणं धर्मं ग्राहयामास वेदोक्तं । ततोन्यांश्च सनकसनन्दनादीनुत्पाद्य निवृत्तिधर्मं ज्ञानवैराग्यलक्षणं ग्राहयामास । द्विविधोहि वेदोक्तो धर्मः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च । तत्रैको जगतः स्थितिकारणं । प्राणिनां साक्षादभ्युदयनिश्रेयसहेतुर्यः सधर्मः ब्राह्मणाद्यैर्वर्णिभिराश्रमिभिश्च श्रेयोर्थिभिरनुष्ठीयमानो दीर्घेण कालेनानुष्ठातॄणां कामोद्भवाद्धीयमानविवेकविज्ञानहेतुकेनाधर्मेणाभिभूयमाने धर्मे प्रवर्धमानेचाधर्मे जगतः स्थितिं परिपिपालयिषुः स आदिकर्ता नारायणाख्यो विष्णुर्भौमस्य ब्रह्मणोब्राह्मणत्वस्य रक्षणार्थं देवक्यां वसुदेवादंशेन कृष्णः किल संबभूव । ब्राह्मणत्वस्य हि रक्षणेन रक्षितः स्याद्वैदिकोधर्मः तदधीनत्वाद्वर्णाश्रमभेदानाम् ॥

सच भगवान् ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिस्सदा संपन्नस्त्रिगुणात्मिकां वैष्णवीं स्वां मायां मूलप्रकृतिं वशीकृत्याजोव्ययोभूतानामीश्वरो नित्यशुद्धबुद्धमुक्तस्वभावोपि सन्स्वमायया देहवानिव जातइव लोकानुग्रहं कुर्वन् लक्ष्यते,

स्वप्रयोजनाभावेऽपि भूतानुजिघृक्षया वैदिकं हि धर्मद्वयमर्जुनाय शोकमोहमहोदधौ निमग्नायोपदिदेश, गुणाधिकैर्हि गृहीतोऽनुष्ठीयमानश्च धर्मः प्रचयंगमिष्यतीति । तं धर्मं भगवता यथोपदिष्टं वेदव्यासः सर्वज्ञोभगवान्गीताख्यैः सप्तभिः श्लोकशतैरुपनिबबन्ध ॥

तदिदं गीताशास्त्रं समस्तवेदार्थसारसंग्रहभूतं दुर्विज्ञेयार्थं तदर्थाविष्करणायानेकैर्विवृतपदार्थवाक्यार्थन्यायमप्यत्यन्त - विरुद्धानेकार्थत्वेन लौकिकैर्गृह्यमाणमुपलभ्याहं विवेकतोऽर्थं निर्धारणार्थं संक्षेपतो विवरणं करिष्यामि ।

तस्यास्य गीताशास्त्रस्य संक्षेपतः प्रयोजनं परं निश्रेयसं सहेतुकस्य संसारस्यात्यन्तोपरमलक्षणम् । तच्च सर्वकर्मसन्यासपूर्वकादात्मज्ञाननिष्टारूपाद्धर्माद्भवति । तथेममेव गीतार्थधर्ममुद्दिश्य भगवतैवोक्तं, "सहि धर्मः सपर्याप्तो ब्रह्मणः पदवेदनं" इत्यनुगीतासु । किंचान्यदपि तत्रैवोक्तं "नैवधर्मी नचाधर्मी नचैव हि शुभाशुभी ॥ यः स्यादेकासनेलीनस्तूष्णीं किंचिदचिन्तयन्" 'ज्ञानं सन्यासलक्षणं' इति च ॥ इहापि चान्ते उक्तमर्जुनाय 'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज' इति । अभ्युदयार्थोऽपि यः प्रवृत्तिलक्षणो धर्मो वर्णाश्रमांश्चोद्दिश्य विहितः सचदेवादिस्थानप्राप्तिहेतुरपि सन्नीश्वरार्पणबुध्यानुष्ठीयमानः सत्वशुद्धये भवति फलाभिसन्धिवर्जितः । शुद्धसत्वस्य च

ज्ञाननिष्ठायोग्यताप्राप्तिद्वारेण ज्ञानोत्पत्तिहेतुत्वेन च निःश्रेयसहेतुत्वमपि प्रतिपद्यते । तथा चेममर्थमभिसन्धाय वक्ष्यति—" ब्रह्मण्याधाय कर्माणि यतचित्ताजितेन्द्रियाः । योगिनः कर्मकुर्वन्ति संगं त्यक्त्वात्मशुद्धये " ॥ इमं द्विप्रकारं धर्मं निश्रेयसप्रयोजनं परमार्थतत्वं च वासुदेवाख्यं परब्रह्माभिधेयभूतं विशेषतोऽभिव्यंजयद्विशिष्टप्रयोजनसंबन्धाभिधेयवद्गीताशास्त्रं यतस्तदर्थविज्ञानेन समस्तपुरुषार्थसिद्धिरतस्तद्विवरणे यत्नः क्रियते मया ॥

## रामानुजाचार्यभाष्यं ।

यत्पदाम्भोरुहध्यानविध्वस्ताशेषकल्मषः ।
वस्तुतामुपयातोऽहं यामुनेयं नमामि तम ॥

श्रियःपतिर्निखिलहेयप्रत्यनीककल्याणैकतानः स्वेतरसमस्तवस्तुविलक्षणान्तज्ञानानन्दैकस्वरूपः स्वाभाविकानवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्तितेजःप्रभृत्यसंख्येयकल्याण - गुणगणमहोदधिः स्वाभिमतानुरूपैकरूपाचिन्त्यादिव्याद्भुतनित्यनिरवद्यनिरतिशयौज्ज्वल्यसौन्दर्यसौगन्ध्यसौकुमार्यला - वण्ययव्वनाद्यनन्तगुणनिधिदिव्यरूपः स्वोचितविविधविचित्रानन्ताश्चर्यनित्यनिरवद्यापरिमितदिव्यभूषणः, स्वानुरूपासंख्येयाचिन्त्यशक्तिनित्यनिरवद्यनिरतिशयकल्याणदिव्या - युधः, स्वाभिमतानुरूपनित्यनिरवद्यस्वरूपरूपगुणविभवैश्वर्य-

शीलाद्यनवधिकातिशयासंख्येयकल्याणगुणगणश्रीवल्लभःस्व-
संकल्पानुविधायिस्वरूपस्थितिप्रवृत्तिभेदाशेषतैकरतिरूपनि -
त्यनिरवद्यनिरतिशयज्ञानक्रियैश्वर्याद्यनन्तगुणगणापरिमित -
सूरिभिरनवरताभिष्टुतचरणयुगलः, वाङ्मनसापरिच्छेद्यस्व-
रूपस्वभावः स्वोचितविविधविचित्रानन्तभोग्यभोगोपकरण-
भोगस्थानसमृद्धानन्ताश्चर्यानन्तमहाविभवानन्तपरिमाण -
नित्यनिरवद्याक्षरपरमव्योमनिलयः विविधविचित्रानन्तभो-
ग्यभोक्तृवर्गपरिपूर्णनिखिलजगदुदयविभवलीलः परं ब्रह्म
पुरुषोत्तमो नारायणो ब्रह्मादिस्थावरान्तमखिलं जगत्सृष्ट्वा
स्वेन रूपेणावस्थितःब्रह्मादिदेवमनुष्याणां ध्यानाराधनाद्य-
गोचरोऽपारकारुण्यसौशील्यवात्सल्यौदार्यमहोदधिः स्वमेव-
रूपं तत्तत्सजातीयसंस्थानं स्वस्वभावमजहदेव कुर्वंस्तेषुतेषु
लोकेष्ववतीर्यावतीर्य तैस्तैराराधितस्तत्तदिष्टानुरूपं धर्मार्थ-
काममोक्षाख्यं फलं प्रयच्छन्, भूभारावतारणापदेशेनास्मदा-
दीनामपि समाश्रयणीयत्वायावतीर्योर्व्यां सकलमनुजनयन-
विषयतांगतः परावरनिखिलजनमनोनयनहारिदिव्यचेष्टिता-
नि कुर्वन् पूतनाशकटयमलार्जुनारिष्टप्रलम्बधेनुककालिय-
केशिकुवलयापीडचाणूरमुष्टिकतोसलकंसादीन्निहत्यानवधि -
कदयासौहार्दानुरागगर्भावलोकनालापामृतैर्विश्वमाप्याययन्
निरतिशयसौन्दर्यसौशील्यादिगुणगणाविष्कारेणाक्रूरमाला -
कारादीन्परमभागवतान्कृत्वा पाण्डुतनययुद्धप्रोत्साहनव्या-

जेन परमपुरुषार्थलक्षणमोक्षसाधनतया वेदान्तोदितं स्वविषयं ज्ञानकर्मानुगृहीतं भक्तियोगमवतारयामास ॥ तत्र पाण्डवानां कुरूणां च युद्धे प्रारब्धे स भगवान् पुरुषोत्तमः सर्वेश्वरेश्वरो जगदुपकृतिमर्त्यं आश्रितवात्सल्यविवशः पार्थं रथिनामात्मानं च सारथिं सर्वलोकसाक्षिकं चकार ॥ एवं ज्ञात्वापि सर्वात्मनान्धो धृतराष्ट्रः सुयोधनविजयबुभुत्सया संजयं पप्रच्छ ॥ इति ॥

विचारः

अत्र व्यासावतारवर्णनपुरस्सरमुपोद्घातस्यप्रवृत्तिः श्रीमदाचार्यभाष्ये द्रष्टव्या। इतरौ तु भाष्यकारौ कृष्णावतारवर्णनद्वारा उपोद्घातं रचयामासतुः॥ गीतायामहाभारतान्तर्गतत्वात्, ज्ञानावतारस्य भगवतो बादरायणस्य भारतकृतो वन्दनादिकं पुरस्कृत्य ग्रन्थसङ्गत्युत्थापनं उचितं भाति। केचिदत्रमन्यन्ते (i) व्यासोनामकश्चिन्महर्षिर्भारतादिकं रचयामास। सतुननारायणइति (ii) भारतैकदेशत्वेपि गीताशास्त्रं नव्यासप्रणीतमपितु श्रीकृष्णेनैवसाक्षाद्रचितं पद्यजातं इतिच। अत्रोच्यते—व्यासस्य नारायणावतारत्वमनभ्युपगच्छतां बहुप्रमाणविरोधो द्रष्टव्यः। व्यासावज्ञांकुर्वत्सु देशिकएकः। सआह तात्पर्यचन्द्रिकायां (पु२७६). चतुर्थाध्याये परित्राणायेति पद्यव्याख्याने— "मत्क्षेपभूतमाराधनं मयैव हि स्थापनीयं अनुष्टानमुखेनोपदेशमुखेन च॥ धर्मप्रवर्तनं *व्यासादिद्वारापि शक्यं*। आराध्यस्वरूपप्रदर्शनेन भक्त्युत्पादनमवतारासाधारणप्रयोजनं" इति। किंच जन्मकर्मेतिपद्यव्याख्याने "प्रारब्धस्य च कर्मणः कियन्ति जन्मानि साध्यानीति ननियमः। *व्यासादिष्वानियमदर्शनात्*" इति। एतेन, आराध्यरूपदर्शनं व्यासेन कर्तुमशक्यं, 'व्यासः प्रारब्धवशः' इत्युक्तिद्वयेन व्यासस्यकेवलंऋषित्वंवक्तव्यं न भगवत्वं इतिदैशिकंमतमाधिगम्यते॥ इदंस्वव्यूहएव विप्रतिपन्नं ज्ञायते। "कृष्णद्वैपायनं व्यासं

विद्धि नारायणं प्रभुं । कोह्यन्यो भुवि मैत्रेय महाभारतकृद्भवेत् "—"तैर्विज्ञापितकार्यस्तु भगवान्पुरुषोत्तमः । अवतीर्णो महायोगी सत्यवत्यां पराशरात् ।। उत्सन्नान भगवान्वेदानुज्जहार हरिस्स्वयम् । चकार ब्रह्मसूत्राणि येषां सूत्रत्वमजसा " ।। इत्यादिप्रमाणोदाहरणपूर्वकं, कैश्चिद्विशिष्टाऽद्वैतिभिर्गीताभाष्यब्रह्मसूत्रभाष्योपोद्घातेषु व्यासस्य विष्ण्ववतारत्वमंगीकृतं दृश्यते ।। "ततस्सप्तदशेजातस्सत्यवत्यां पराशरात् । चक्रे वेदतरोश्शाखादृष्ट्वा पुंसोऽल्पमेधसः " ।। इति भागवते । प्र०स्कं०त्रि०अ० अवतारप्रकरणे ।। तथा २ स्कंध, ७ अ० ।। व्यासस्यविष्णुत्वं । "कालेन मीलितदृशाऽवमृश्य नृणां स्तोकायुषां स्वनिगमो बत दूरपारः । आविर्हितस्त्वनुयुगं सहिसत्यवत्यां वेदद्रुमं विटपशो विभजिष्यतिस्म " ।। इति ।। तस्माच्छ्रीमदाचार्योदाहृतवचनान्यपीहालोच्य श्रीबादरायणस्य नारायणाऽभेदमेवबुधामन्येरन् ।। इति ।। द्वितीया विप्रतिपत्तिः ।। किं भगवान् व्यासः श्रीकृष्णोपदिष्टमर्थं हृदिनिधाय यथावच्छ्लोकजातं स्वयं रचयामास उत श्रीकृष्णप्रणीतमेवपद्यजातं भारते केवलं संयोजयामास इति ।। अत्र द्वितीयपक्षावलंबिनः कानिचिद्भारतवचनान्यन्यत्र दृष्टानि स्वसाधकत्वेनोदाहरंति । यथोक्तं । भीष्मवधपर्वणि ।।

"गीता सुगीताकर्तव्या किमन्यैश्शास्त्रसंग्रहैः । यास्वयंपद्मनाभस्य मुखपद्माद्विनिस्सृता ।। षट्शतानि सविंशानि श्लोकानां प्राहकेशवः । अर्जुनुस्सप्तपंचाशत्सप्तषष्टिं तु संजयः ।। धृतराष्ट्रः श्लोकमेकं गीतायामानमुच्यते ।। भारतामृतसर्वस्वगीतायामथितस्य च । सारमुद्धृत्य कृष्णेनार्जुनस्य मुखेहुतं " इति ।। आद्यपक्षमाश्रितास्तु प्रतिवदन्ति । तथाहि (१) इमे श्लोकाः केषुचित्पुस्तकेषु न दृष्टाः (२) धृतराष्ट्रउवाचइत्युक्तिमात्रेण प्रथमपद्यस्य व्यासारचितत्वे,—तेनैवन्यायेन सर्वत्र जनकयाज्ञवल्क्यादिसंवादादिषु च व्यासाकृतत्वं प्रसज्येत । (३) यदीष्टापत्तिरत्रोच्यते—तर्हि व्यासकृतं भारतमल्पीभविष्यति ।। कोन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेदित्युक्तिदुर्बलास्तुतिर्भवति । (४) व्यासप्रणीतत्वेनोक्तसंख्यायाः च्युतिरपि संभवति ।।

(५) भगवद्गीतेतिनाम तु व्यासप्रणीतत्वपक्षं नाविरुणद्धि ॥ अष्टावक्रगीता, श्रुतिगीता, गोपीगीता, भ्रमरगीतेत्यादिवदुपपत्तेः ॥ इति ॥

अयंविवादो नीरसः॥ कृष्णव्यासयोरभेदेन श्रीमन्नारायणत्वात् यथादृष्टं तथा द्वाभ्यामपि रचितत्वे बाधकं न दृश्यते ॥ भीष्मपर्वगतानि वाक्यानि प्रामाणिकानीति स्वीकारेऽपि व्यासकर्तृकत्वं तैर्नाविहन्यते । उक्तोत्तरत्वात् ॥ श्रीकृष्णोपादिष्टसारं साक्षात्कृत्य बादरायणः श्लोकरूपेण रचयामासेत्युक्तौ च न बाधकं दृश्यते । एतेन कृत्स्नभारतकर्तृत्वेन बादरायणस्य माहात्म्यं च सुगमं ॥ यत्र यत्र अयमुवाच, सउवाच इति दृश्यते तत्र सर्वत्र बादरायणएवग्रन्थकृत्, गीतायास्तु वासुदेवः कर्ता इति वैलक्षण्यं ये मन्यन्ते तैर्वैषम्यबीजं सम्यगुपपादनीयं ॥ तत्तु नस्फुटमवगम्यते ॥—

अथाद्यपद्यार्थः किञ्चिद्विचार्यते.

युद्धवृत्तान्तं सर्वं साक्षाद्द्रष्टुं चक्षुषी प्रयच्छामीति व्यासेनोक्ते सति घातपाताद्यनर्थदर्शने विमनाभूत्वा नेत्रलाभमप्रार्थनीयं मन्यमानो धृतराष्ट्रः प्रतिश्रुतमनुग्रहमुपेक्षितवान् ॥ अनन्तरं भगवान् संजयमनुजग्राह समस्तं रणरङ्गव्यापारं आन्तरं बाह्यं करतलामलकमिव दिव्यचक्षुषा पश्यन्संजयस्सर्वं राज्ञे कथयत्विति ॥ यथोक्तं भारते "एषते संजयो राजन्युद्धमेतद्वदिष्यति । प्रकाशं वाप्रकाशं वा दिवि वा यदि वा निशि ॥ मनसा चिन्तितमपि सर्वं वेत्स्यति संजयः । नैनं शस्त्राणि छेत्स्यन्ति नैनं बाधिष्यते श्रमः" इति ॥—तस्माद्धृतराष्ट्रस्संजयं पृच्छति धर्मक्षेत्रइति ॥ श्लोकस्य यथाश्रुतप्रतीतोर्थः प्रमाणिकोनिरवद्यश्च, विवृत्याचार्योपपादितो द्रष्टव्यः ।

द्वितीयार्धे 'चैवे' त्युक्तौ, एवेत्यस्य युयुत्सवइत्यनेनान्वयः । युयुत्सवएवसमवेताः इति योजना ॥ 'चैवेत्यव्ययद्वयमनतिरिक्तार्थ' इति देशिकोक्तं तु न प्रत्याययति ॥ अस्वारस्यभियेव तेनैव यद्वेति पक्षान्तरं चोक्तं । "यद्वा समस्तभूमण्डलवर्तिनां राज्ञां तत्र समाहारेपि तादर्थ्याद्वर्गद्वयमेव तथा भूदित्येवकाराभिप्रायः" इति ॥

मामकाः पाण्डवाश्चेति विभागोक्त्या, पाण्डवानां शत्रुत्वेन परकीयत्वं ध्वन्यते ॥ मामकाः मदीयाः इति दुर्योधनादीनां संग्रहः । एतेन स्वाभिमानविषयत्ववाचकेनपदेन अकुर्वतेत्यात्मनेपदप्रयोगाच्च स्वपुत्राणां विजयविविदिषा ध्वन्यते ।

संजयेत्यनन्तरं 'इति' शब्दोऽध्याहार्यः । तस्य उवाचेत्यनेन संबन्धः ॥

धर्मक्षेत्रे, कुरुक्षेत्रे,—इतिपदद्वयस्यसार्थक्यमनुसन्धेयं । धर्मक्षेत्रं नाम धर्मसाधनभूमिर्वा धर्मप्रधानभूमिर्वा ॥ धर्मशब्दोभगवत्परोवा ॥ धारकत्वाद्धर्मोभगवानित्युक्तेः । अथवा धर्मशब्दो यागपरः । अयंदेशिकाभिमतोऽर्थः ॥ तथाच धर्मक्षेत्रे, समराध्वरसमुचितभूमावित्यर्थः ॥

कुरुक्षेत्रं तन्नामकपुण्यभूमिविशेषः ॥ तद्वर्णनं—भारते वनपर्वणि—८३—"दक्षिणेन सरस्वत्याद्दृषद्वत्युत्तरेण च । ये वसन्ति कुरुक्षेत्रे ते वसन्ति त्रिविष्टपे"—इति ॥ तथा शल्यपर्वणि—५३—"मानवा ये निराहारा देहं त्यक्ष्यन्त्यतन्द्रिताः । युधि वा निहतास्सम्यगपि तिर्यग्गता नृप ॥ ते स्वर्गभाजो राजेन्द्र भविष्यन्ति महामते । पांसवोपि कुरुक्षेत्राद्वायुना समुदीरिताः । अपिदुष्कृतिकर्माणं नयन्ति परमां गतिं" इति ॥

अत्र धर्मक्षेत्रइतिधृतराष्ट्रप्रश्नस्य संपूर्णस्वारस्यावगत्यै, पूर्वकथाकिंचिदनुसंधेया ॥ उक्तंभारते (अध्याय—१३ ॥ गीता तु २५ अध्यायः) "अथगावल्गणिर्विद्वान्संयुगादेत्य भारत । प्रत्यक्षदर्शी सर्वस्य भूतभव्यभविष्यवित् ॥ ध्यायतो धृतराष्ट्राय सहसोपेत्य दुःखितः । आचष्ट निहतं भीष्मं भरतानां पितामहं" इति ॥ अनन्तरं भीष्महननश्रवणात्परिशोचनपूर्वकं संजयं विस्तरेण युद्धवर्णनाय धृतराष्ट्रः प्रार्थयते । भीष्मरक्षणाय यथोचितोद्यमानकृतास्स्युर्दुर्योधनेनेति धृतराष्ट्रेण शङ्किते सति, संजयशङ्कां परिहरति ॥ अनन्तरं उभयसेनावर्णनपूर्वकंसमरभूमावाभिमुख्येन समावेशउक्तः ॥

"अन्योन्यं वीक्ष्यमाणानां योधानां भरतर्षभ । कुञ्जराणां च नदतां सैन्यानां च प्रहृष्यता" इति पूर्वाध्यायान्तिमश्लोकः ॥ एवं लब्धावसरो धृतराष्ट्रः पृच्छति धर्मक्षेत्रइति ॥ भीष्मवधं संक्षेपतः श्रुतवतो राज्ञो विस्तरेणाद्यन्तशुश्रूषया प्रश्नउपपद्यते । लोकानुभवेचेदं दृश्यते ॥ पुत्रादिमरण-रूपानिष्टवार्ता श्रुतवता पित्रादिना शोकाद्याविष्कारानन्तरं किंचिदात्मानं समाश्वास्योच्यते खलु 'कथमेतदभूत् कगतो मेपुत्रः कुत्रातिष्ठन्, कथं स्वरक्षणायामसमर्थो बभूव—सर्वं विस्तरेणादितोवदेति" ॥ एवमेव राजात्र पृच्छ-तीति भावः ॥ 'भीष्मोहतः इति त्वया भणितं कथमयमनर्थः संबभूव तत्पूर्वं महान्ति कार्याण्यभूवन्निति तकयामि रणभूमिस्तु पुण्यक्षेत्रं तन्महिम्ना विचित्रं खलु पुण्यकार्यमभून्नाम । तत्र धर्मयुद्धमभवद्वा उताधमयुद्धं । आद्ये कथं नामा-प्रतिद्वन्द्वश्शूरवरो मे पितृव्यः पराजितः । कुरुक्षेत्रे युद्धायमेलनानन्तरकथै-वादितोवगन्तुमिच्छामि ॥ भीष्मपराजयमतिशोचामि । मदीयाः दुर्योधनादयो हि मूढाः मामकाः मत्सदृशा अन्धाः अथवा मामकाः मातुलानुवर्तिनः शकुनिभागिनेयाः कुमतयः, पाण्डवास्तु शुद्धस्वभावाः, एवंमति, क्षेत्रपरिशुद्धे सति पाण्डवानामतिपरिशुद्धत्वेपि, कथं भीष्मोहतः किं कुत्सितं तेऽकुर्वन्'— इत्यादिव्यंग्यार्थाः पूर्वकथासंदर्भानुगुणा अनुसन्धेयाः ॥

एतेन कैश्चित्कृतानिक्लिष्टव्याख्यानानि प्रत्युक्तानि भवन्ति । तथाहि यन्नीलकण्ठेनोक्तं । "'तेषांकुरुक्षेत्रंदेवयजनमास' इतिकर्मकाण्डप्रसिद्धं कुरु-क्षेत्रमन्यत् ॥ 'अविमुक्तं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्म-सदनं' इत्यविमुक्ताख्यं ब्रह्मप्राप्तिस्थानभूतं कुरुक्षेत्रमन्यत ॥ एतद्व्यावृत्यर्थं धर्मक्षेत्रे इति विशेषणं" इति । इदं न रम्यं । कुरुक्षेत्रादागत्य भीष्मपराजय-मुक्तवन्तं संजयं प्रति, मिथ्याप्रतीतिवारणाय विशेषणप्रक्षेपेण, इदं कुरुक्षेत्रं, इतिश्शङ्किग्राहकवचनस्यायुक्तत्वात् ॥ यच्च मधुसूदनेन शङ्करानन्देन च भावः प्रदर्शितः, "किं क्षेत्रमहिम्नास्वयमेवधर्मपरो भूत्वा, दुर्योधनस्तत्पित्र्यं धर्म्य-मर्धराज्यं तेभ्यो दत्तवान् वा, उत तस्यैव माहिम्ना धर्मपुत्रः स्वजनवधो नरकायेति नरकभयाद्युद्धादुपरतोवा"—इति तदपिनघटते । युद्धमभवदिति

संक्षेपेण श्रुतवतोधृतराष्ट्रस्यैवं प्रश्नायोगात। विस्मृत्य मोहात्प्रश्नः कृतइत्युपपत्ति-स्त्वगतिकागतित्वेनोपेक्ष्या ॥ तस्मादामूलाग्रं श्रोतुकामोराजा, 'युयुत्सवएव समवेताः किमकुर्वत' इत्यपेक्षितायाः कथायाः पूर्वावधि प्रदर्शयन तदनन्तर-वृत्तान्तं विस्तरेणकथयेत्याहेति प्रश्नभावएव निरवद्योभाति ॥

यथा वाल्मीकिरामायणे मानिषादेतिपद्येन, वक्त्रभिप्रायाभावेपि, श्री-रामचरितं सत्यसरस्वत्या प्रकाशितं, तथात्रापि धर्मक्षेत्र इति पद्येन, धृतराष्ट्राभिप्रायाभावेपि, गूढार्थोऽभिव्यज्यते इति मन्वानोवेङ्कटनाथः पद्यं व्याचष्टे॥ अयमस्याशयः ॥ किमित्येतत्कुत्सायां, आश्चर्ये च वर्तते ॥ मामकाः कौरवाः कुत्सितमकुर्वन । पाण्डवाः आश्चर्यमकुर्वन ॥ धर्मावतारत्वाद्युधिष्ठिरो धर्मः । तदुपलक्षिताः पाण्डवाः तेषां क्षेत्रं शरीरं कृष्णः 'ममप्राणाहि पाण्डवाः' इत्युक्तेः । तदेव श्रीकृष्णाख्यं धर्मक्षेत्रं कुरुक्षेत्रं देवयजनस्थानत्वात । 'यज्ञेन यज्ञमयजन्त देवाः' इतिभगवान देवयजनस्थानत्वेन श्रुतः । "यदनु-कुरुक्षेत्रं देवानां देवयजनं" इति जाबालश्रुतिः। 'कुरुक्षेत्रं वै देवयजनं' इति शत-पथश्रुतिः। पाण्डवैस्सह युयुत्सवः कौरवाः कृष्णेनैवयुयुत्सवस्संपन्नाः श्रीकृष्णाख्ये कुरुक्षेत्रे समवेताः निलीनाः, "अमीच त्वां धृतराष्ट्रस्य पुत्राः" 'यथा प्रदीप्तं ज्वलनं पतङ्गाः' इत्यादिवक्ष्यमाणरीत्या नष्टाः ॥ पाण्डवास्तु कृष्णे समवेताः कृतार्था बभूवुः। काचान्वेषिणो दिव्यमणिलाभ इव युयुत्सोरर्जुनस्य तत्वज्ञान-लाभोऽत्यन्तविचित्र इति भावः ॥ एवमन्योपि जनः कृतकृत्योभवेदिति च ध्वनिः इति ॥

प्रतिपन्नं आध्यात्मिकार्थोऽन्वेषणीय इति व्यग्रचित्तैः कैश्चिद्वक्ष्यमाणं आकूतं प्रदर्शितं ॥ तथाह्यभिनवगुप्ताचार्येण "कुरूणां करणानां यत्क्षेत्रं अनुग्राहकं, अत एव सांसारिकत्वधर्माणां सर्वेषां क्षेत्रमुत्पत्तिनिमित्तत्वात । 'अयंसपरमोधर्मोयद्योगेनात्मदर्शनं' इत्यस्य च धर्मस्य क्षेत्रं ॥ समस्ता-धर्माणां क्षयादपवर्गप्राप्त्या त्राणभूतं तदधिकारिशरीरं सर्वक्षेत्राणामक्षादेर्हि-सार्थत्वात परस्परबाध्यबाधकभावेन वर्तमानानां रागवैराग्यक्रोधक्षमाप्रभृतीनां समवायो यत्र तस्मिन्स्थिता ये मामका अविद्यापुरुषोचिताः अविद्यामयाः

संकल्पाः, पाण्डवाः शुद्धाविद्यापुरुषोचिताः विद्यात्मानस्ते किमकुर्वत । कैः खलु के जिता इति यावत् ।। ममेति कायन्तीति मामका अविद्यापुरुषाः ।। पाण्डुश्शुद्धः " इति ।। अत्रचिन्त्यते ।। यद्यपि दशावरार्थं सर्वत्र भारतं ।। तथापि यथा मानिषादेत्यत्र गूढार्थः कल्पितस्तथा इहापि तादृशोर्थः कल्पनीयः इति क्लेशबाहुल्येन यद्वेङ्कटनाथेन व्याख्यातं तन्न प्रत्याययति ।। गुप्ताचार्योक्तापूर्वार्थे-च गमकं दुर्गमं ।। इति ।।

संजय उवाच—

**दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।**
**आचार्यमुपसंगम्य राजा वचनमब्रवीत् ॥२॥**

वि० धृतराष्ट्रप्रश्नस्य संजय उत्तरमुक्तवानित्याह पायनो जनमेजयं प्रति संजय उवाचेत्यादिनवभिः श्लोकैः ॥ दुर्योधनकृतव्यापारमाह । दृष्ट्वेत्यादिना । दुर्योधनस्तु राजा तदा युद्धार्थं मिलितसमये व्यूढं व्यूहात्मनारचितं पाण्डव-सैन्यं दृष्ट्वा तु दृष्ट्वैवेतिवा, तोरन्वयः। द्रोणाचार्यसमीपमागत्य वचनमुवाच ।

विचारः

उक्तंमधुसूदनीये । "स्वपुत्रकृतराज्यप्रत्यर्पणशंकया तु माग्लासीरिति राजानं तोषयितुं दुर्योधनस्य दौष्ट्यमेवप्रथमतोवर्णयति ।। दृष्ट्वेति " इति ।। इदं संगत्युद्भावनं प्रकरणविरुद्धं भाति। धर्मक्षेत्रमहिम्ना किं दुर्योधनोऽर्धराज्यं प्रत्यर्पयामासेति शंकाया निर्मूलत्वात् । एतत्प्रागेव भीष्मपराजयस्य संक्षेपतो धृतराष्ट्रेण श्रुतत्वात् युद्धमभवद्वा संधिर्बभूववेति विकल्पस्यैवानुत्थानात् ।

दृष्ट्वा 'तु' इति तु शब्दः यथायोगं सर्वपदेषु संबध्यते ॥ दृष्ट्वातु दृष्ट्वैव ॥ दर्शनानन्तरं न तु विलंबं कृत्वेतिभावः। दर्शनमात्रेण धैर्यभ्रंशो जातः सुयोधनस्येति ध्वनिः॥ पांडवानीकं तु पांडवसैन्यमेव। न तु नायकान पांडवादीन वा। सैन्यदर्शनमात्रेण भयं ज्ञाप्यते। व्यूढं तु व्यूहात्मना रचितमेव न तु प्रारब्धयुद्धं। आचार्यं तु द्रोणाचार्यमेव न तु तदन्यं कंचन। उपसंगम्य तु स्वयमेव तत्समीपं गत्वैव न तु स्वसमीपे तमाहूय। राजा तु राजैव न तु कश्चित्भटः। वचनं तु वचनमेव न तु निग्रहादिकं चकार इति ॥

व्यूढमिति व्यूहप्रकारस्तु भारते उक्तः ॥ यथा ॥ "धार्तराष्ट्रान्यनीकानि दृष्ट्वा व्यूढानि पांडवः। अभ्यभाषत धर्मात्मा धर्मराजो धनंजयं ॥ सूचीमुखमनीकं स्यादल्पानां बहुभिःसह"॥ अर्जुन उवाच "एषव्यूहामिते व्यूहं राजसत्तम दुर्जयं। अचलं नाम वज्राख्यं विहितं वज्रपाणिना ॥ सनः पुरो योत्स्यते वै भीष्मः प्रहरतां वरः" इति ॥

राजेति। हीनांगत्वेन धृतराष्ट्रो वस्तुतो न राजा॥ अत एव पांडुराधिपत्यमवहत् ॥ यथोक्तं भारते "तथैवाहं मतिमता परिचिन्त्येह पांडुना। ज्येष्ठः प्रभ्रंशितो राज्यात् हीनांगइति भारत" इति ॥ (उ. १४८, ३०) ज्येष्ठभ्रातृसुतत्वात् हीनांगत्वादिप्रतिबंधकविधुरत्वाच्च दुर्योधनस्य राजत्वं अवधेयं ॥ किंचैतत राजेत्यनेन ध्वन्यते। तथाहि ॥ ननु द्रोणभीष्मौ सज्जनौ अधर्मयुद्धे सुयोधनारब्धे कथं प्रवृत्तौ ॥ एतेन युद्धेन तयोः पापसंश्लेषो भवति वा न वा इति जिज्ञासायां उच्यते। यद्यपि तौ पांडवपक्षपातिनौ तथापि कृतसमयत्वेनैव युद्धे समुद्यतौ ॥ यथोक्तं भारते ॥ भीष्मवचनं॥ "यथैव हि भवन्तो मे तथैव मम पांडवाः ॥ अपिचैव मया श्रेयो वाच्यं तेषां नराधिप॥ संयोद्धव्यं तवार्थाय यथा मे समयः कृतः" इति ॥ उद्योगे—१५६—१७.

तथा द्रोणवचनं ॥ "अश्वत्थाम्नि यथा पुत्रे भूयो मम धनंजये। बहुमानः परो राजन् सन्नतिश्च धनंजये ॥ तं च पुत्रात्प्रियतमं प्रतियोत्स्ये धनंजयं क्षत्रधर्ममनुष्ठाय धिगस्तु क्षत्रजीविकां" इति ॥ विराट–१२८–४–५ ॥ इत्थं ह्यत्र राजनीतिः ॥ राष्ट्रे शत्रुभिर्युद्धे प्रस्तुते सति तस्य धर्म्यत्वाधर्म्यत्वादिविचारपूर्वकं कर्तव्यत्वाकर्तव्यत्वादिकं राज्ञैव निश्चेयं ॥ कृतस्य निर्णयस्य धुरंधरो नृप एव न तु योधाः केवलं प्रोक्तकारिणः। एवं ज्ञात्वा सुयोधनो राजत्वेन पुण्यपापभारवाहिणं स्वमेव मत्वा कृतसमयत्वेन राजाधीनो द्रोणो युद्धं कुर्यादेवेति निश्चित्य तमुपगम्य अब्रवीदिति ध्वनिः। अतएव सुयोधन इति नामग्रहणं विहाय राजा वचनमब्रवीदित्युक्तं। आचार्योपसंगमने भावानेकत्वं द्रष्टव्यं ॥ ब्राह्मणत्वेन स्वगुरुत्वेन च पूज्यत्वं सूच्यते ॥ किञ्च प्रतिज्ञातद्रोणवधो धृष्टद्युम्नः परानीकस्य नायकत्वेन प्रतिष्ठितः इति वदन् द्रोणं उज्वालयतीव भाति ॥ द्रोणभीष्मौ पाण्डवपक्षपातिनाविति प्रसिद्धं ॥ भीष्मतोषणं तस्मै आधिपत्यप्रदानेन कृतं ॥ द्रोणतोषणं तमुपसंगम्यावश्यं कर्तव्यमिति भावेन तं सुयोधनो गच्छति इति ध्वन्यते ॥

वचनमब्रवीदिति ॥ अत्र अब्रवीदित्यनेनैवालं वचनं इति पदं नावश्यकं इति न वाच्यं ॥ ओदनपाकं पचति इत्यादिवत् प्रयोग उपपद्यते अथवा वचनपदं संक्षिप्तबह्वर्थत्वादिगुणविशिष्टवाक्यं गमयतीति स्यात् ॥

**पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूं।**
**व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥**

वि०. तद्वचनमेवानुवदति सञ्जयः। पश्यैतामित्यादिना। हे आचार्य तव शिष्येण धीमता धृष्टद्युम्नेन व्यूढां पाण्डुपुत्राणां एतां महतीं चमूं सेनां पश्य ॥ ३ ॥

विचारः

अत्र सूचिताः विशेषाः मधुसूदनीये । तथाहि । पश्येत्यनेन अपरोक्षीकुर्वित्युक्तं ।। दृष्ट्वा च तत्कृतावज्ञां स्वयमेव ज्ञास्यसीति भावः । द्रुपदपुत्रेणेति द्रुपदपूर्ववैरसूचनेन कोपोद्दीपनं कृतम् ।। धीमतेति अनुपेक्षणीयत्वं सूचितं ।। तव शिष्येण व्यूढामित्यनेन शिष्यापेक्षया गुरोराधिक्यं सर्वसिद्धं अतः तन्निरसनं तव सुकरम् इति ।। शिष्यस्य वैयात्यादिकं च अनेन ज्ञाप्यते ।।

हे पाण्डुपुत्राणां आचार्य इति योजना ।। तेषां आचार्यस्त्वं न तु मम । तेषु स्नेहातिशयादिति ध्वनिः । शिष्येण द्रुपदपुत्रेणेत्युक्त्या त्वद्वधार्थं उत्पन्नोऽपि त्वया अध्यापित इति तव मौढ्यमेव ममानर्थकारणं इति ध्वन्यते ।।

द्रुपदपुत्रस्य धीमत्त्वं त्वत्सकाशात् त्वद्वधोपायभूता विद्या संगृहीता ।। भ्रान्तत्वात् तवैव आनन्दः स्यात् इति त्वमेवैतां पश्येत्याचार्यं प्रति तत्सैन्यप्रदर्शनं कृतम् ।।

इदं सूचितं वेंकटनाथीये । "नसंख्याकृतमिहसेनामहत्त्वं । "शतमप्यंधानां न पश्यन्ति " इति न्यायात् । किंतु विशिष्टसेनापत्यधिष्ठितत्वपरबलाभेद्यव्यूहविशेषपतनशौर्योत्साहादि संपन्नत्वरूपं । तच्चात्र प्रत्यक्षमेवेति अङ्गुल्या निर्देशसूचकोऽयमेतच्छब्दः " । इति ।।

अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।
युयुधानो विराटश्च द्रुपदश्च महारथः ॥४॥

त्रि० ॥ अत्र सेनायां महेष्वासाः महाधनुष्काः युधि भीमार्जुनसमाः शूराः सन्ति ॥ ते कइत्यत आह । युयुधानइत्यादिना । महारथइति प्रत्येकमन्वेति ॥ ४ ॥

विचारः

महेष्वासाः ॥ इषवो अस्यन्ते क्षिप्यन्ते एभिरिति इष्वासाः कोदण्डाः ॥ ते महान्तो येषां ॥ दूरतएव परसैन्यविद्रावणकुशलाः इति महत्वं ॥

भीमार्जुनसमाइत्यनेन भीमार्जुनयोः सर्वसंप्रतिपन्नपराक्रमत्वं सूचितं ॥

युयुधानः ॥ अतिशयेन युध्यत इति युयुधानः सात्यकिः ॥

विराटः ॥ शत्रून् विशेषेण रटयतीति विराटः ॥

द्रुपदः ॥ द्रुः वृक्षः पदं ध्वजे चिह्नं यस्येति द्रुपदः ॥ महारथः ॥ महारथलक्षणं तु उक्तं ॥ "एको दशसहस्राणि योधयेद्यस्तु धन्विनां । शस्त्रशास्त्रप्रवीणश्च महारथ इतिस्मृतः" इति ॥ युधि इति सप्तमी चतुर्थ्यर्थेपि ॥ चर्मणिद्वीपिनं हन्तीतिवत् ॥

आगताइति शेषः । अत्र पाण्डवसेनायां युधि युद्धार्थं आगताः जनाः यतो महेष्वासाः भीमार्जुनसमाश्च अतो युधि युद्धविषये शूराः ॥

— ———

धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ।
पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुंगवः ॥ ५ ॥

वि० वीर्यवानिति विशेषणं नरपुंगवो नरश्रेष्ठ इत्यपि त्रयाणां ॥

विचारः

यद्वा वीर्यवानिति, प्रथमोक्त धृष्टकेतु चेकितान काशिराज विशेषणम् । नरपुंगव इति द्वितीयार्धोक्तानां ॥

धृष्टकेतुः ॥ धृष्टः परभयङ्करः केतुरस्येति यथोक्तिः ॥

चेकितानः ॥ चिकितानस्यापत्यं चेकितानः ॥

पुरुजित् ॥ पुरुं पुरून् बहून् जयतीति पुरुजित् ॥

कुन्तिभोजः ॥ अथ कुन्तीपिता ॥

शैब्यः ॥ शिबिगोत्रापत्यं शैब्यः ॥

युधामन्युश्च विक्रान्तउत्तमौजाश्च वीर्यवान् ।
सौभद्रो द्रौपदेयाश्च सर्वएव महारथाः ॥ ६ ॥

वि० महारथत्वं नाम "एको दशसहस्राणां योधयेद्यः स धन्विनां । शस्त्रशास्त्रप्रवीणश्च महारथ इति स्मृतः" इत्युक्तरूपं ॥ विक्रान्तः पराक्रमवान् । सौभद्रः अभिमन्युः । द्रौपदेयाः । द्रौपदीपुत्राः ॥

विचारः

युधामन्युः ॥ युधायां युद्धे मन्युः कोपवेगो यस्य सः ॥

उत्तमौजाः ॥ उत्तमं ओजो बलं यस्य । पाञ्चालः ॥

वीर्यवान ॥ तेजोबलविक्रान्तानपि शत्रून्विविधर्मीरयति पलाययतीति वीरः ॥ तस्य कर्म वीर्यं । तदस्यास्तीति वीर्यवान ॥

द्रौपदेयाः = द्रौपद्याः पुत्राः–

१ प्रतिविन्ध्यः

२ सुतसमः

३ श्रुतकीर्तिः

४ शतानीकः

५ श्रुतसेनः

**अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम ।**
**नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते ॥ ७ ॥**

वि० अस्माकंत्विति पाण्डवव्यावर्तकस्तुशब्दः। अस्माकं संबन्धिनो विशिष्टाः बलिष्ठाः मम सैन्यस्य नायकाः नेतारो ये तान्निबोध बुद्धिस्थाञ्जानीहि। ते तव सम्यग्ज्ञानार्थं तान्ब्रवीमि । द्विजोत्तमेत्याचार्यसंबोधनम् ॥

विचारः

उक्तं मधुसूदनीये । "यद्येवं परबलं अतिप्रभूतं दृष्ट्वा भीतोऽसि हन्त तर्हि संधिरेव परैरिष्यतां । किं विग्रहाग्रहेणेत्याचार्याभिप्रायमाशंक्याह—अस्माकमिति । तु शब्देन अन्तरुत्पन्नमपि भयं तिरोदधानः धृष्टतां आत्मनो द्योतयति । संज्ञार्थं ॥ असंख्येषु तेषु मध्ये कतिचिन्नामभिर्गृहीत्वा परिशिष्टान उपलक्षयितुं ब्रवीमि नत्वज्ञातं किंचिदज्ञापयामीतियावत ॥

प्रियशिष्याणां पाण्डवानां चमूं दृष्ट्वा हर्षेण व्याकुलमनसस्तव स्वीयवीरविस्मृतिर्माभूदिति ममेयमुक्तिरिति वा भावः" ॥ इति ॥

द्विजोत्तम इति । इयं स्तुतिः ॥ स्वभावतस्सुयोधनस्य दुष्टत्वादेवमपि ध्वनिः । ब्राह्मणत्वात्त्वं युद्धाकुशलः । समये विमुखोपि स्याः । त्वयि विमुखेपि भीष्मप्रभृतीनां क्षत्रियप्रवराणां सत्वान्नास्माकं महती क्षतिरिति ॥

**भवान् भीष्मश्च कर्णश्च कृपश्च समितिञ्जयः ।**
**अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च ॥ ८ ॥**

वि० तानाह द्वाभ्यां भवानित्यादिना । समितिञ्जयः युद्धे जयशीलः सौमदत्तिः सोमदत्तसुतो भूरिश्रवाः ॥

विचारः

समितिञ्जयः । वीराणामपि युद्धक्रियां जयतीति तथोक्तिः ॥ समितिञ्जयेति कृपविशेषणे स्वारस्यं तु कर्णानन्तरं गण्यमानत्वेन तस्य कोपमाशंक्य तन्निरासार्थं ॥

अश्वत्थामा द्रोणपुत्रः ॥ विकर्णः स्वभ्राता कनीयान् ॥ तथैवचेति स्थाने जयद्रथइति क्वचित्पाठः ॥ भीष्मापेक्षया आचार्यस्य प्रथमगणनवत् विकर्णाद्यपेक्षया नायकेषु मध्ये तत्पुत्रस्य प्रथमगणनं आचार्यपरितोषार्थं स्यात् ॥

अतीतश्लोके " विशिष्टाः " " नायका " इति चोक्तं । केचिद्विशिष्टाः केचिन्नायकाः तद्भिन्नाः इति क्वचिद्व्याख्यात ॥ प्रकृतश्लोके द्रोणभीष्मकर्णकृपाः विशिष्टसंज्ञिताः अश्वत्थामविकर्णसौमदत्तयः नायका इति तद्व्याख्यानाशयः ॥

**अन्ये च बहवश्शूराः मदर्थे त्यक्तजीविताः ।**
**नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ९ ॥**

वि० शूरा एवेति वा मदर्थ एवेति वाऽवधारणान्वयः । त्यक्तजीविताः प्राणत्यागे कृतनिश्चया इत्यर्थः । प्रहियन्ते एभिरिति प्रहरणानि अस्त्राणि । नानाविधानि शस्त्राणि येषां ते नानाशस्त्रप्रहरणाः ॥ युद्धविशारदाः युद्धकुशलाः ॥

विचारः

अन्ये अवशिष्टबाल्हीकभगदत्त शल्यकृतवर्मादय । त्यक्तजीविता इत्यनेन स्वस्मिन् अनुरागातिशयस्तेषां कथ्यते ॥ अद्याप्यमृतानां परामर्शे मृतत्वबोधकामाङ्गलिकप्रयोगोऽत्र द्रष्टव्यः ॥ भाव्यनर्थसूचकमिदं वचनं ॥ आह वेङ्कटनाथः । " बहवः अनन्ताः ॥ एतं बहुशस्त्रयोधिभिः परकीयैरभिभूयेरन्नित्यत उक्तं नानाशस्त्रप्रहरणा इति ॥ सर्वे इत्यनेन एतेषां मध्ये न कश्चिदपि अनेवं विधोऽस्तीत्युक्तं ॥ युद्धविशारदा इत्यनेन बहुयुद्धानि पूर्वं कृतवन्तः

नत्विदं प्रथमतया युद्धे प्रवर्तिता इति शौर्यातिशयो दर्शितः ॥" इति। अत्र बह्व इत्यस्य अनन्ता इति व्याख्यानं चिन्त्यं। दुर्योधनवचसां स्वबलोत्कर्ष-परबलापकर्षपरत्वेन अपर्याप्तमिति समनन्तरश्लोकं व्याचक्षाणेन वेङ्कटनाथेन बह्व इत्यादि शब्दाः स्वोत्कर्षद्योतकतया व्याख्याता दृश्यन्ते ॥ वयं तु अपर्याप्तमिति श्लोकभावं अन्यथा प्रदर्शयिष्यामः ॥

**अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितं।**
**पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितं ॥१०॥**

वि० बलद्वये बलिष्ठपरिगणने पाण्डवविजये मम सन्देहोऽस्ति ॥ ततो भवदादयः सर्वे बहुसन्नद्धा भवन्त्विति भावेनाह ॥ अपर्याप्तमिति ॥ सेनापतिभूतभीष्माभिरक्षितं अस्माकं तत्प्रागुक्तबलिष्ठोपेतं बलं अपर्याप्तं पाण्डवजये न समर्थं प्रतीयते। भीमाभिरक्षितं इदं पाण्डवानां बलं तु पर्याप्तं अस्मद्विजये शक्तं प्रतीयते ॥

विचारः

स्वबलं भीष्मरक्षितं परविजयाय नालम्। परबलं भीमरक्षितं स्व-विजयाय अलमिति अर्थः स्फुट. ॥ केचिदिममर्थमनुपपन्नमाहुः। तथाहि ॥ न तावद्दुर्योधनः स्वबलमसमर्थं मन्येत ॥ "न भेतव्यं महाराज न शोच्या भवता वयम। समर्थाः स्म परान् जेतुं बलिनः समरे विभो" इत्युद्योग-पर्वणि धृतराष्ट्रं प्रति दुर्योधनवाक्यम् ॥ द्वितियादिनयुद्धारम्भे "अपर्याप्तं तदस्माकं बलं पार्थाभिरक्षितं। पर्याप्तं त्विदमेतेषां बलं पार्थिवसत्तमाः" इति

अयमेव वक्ष्यति ॥ एतत्प्रकरणे स्वोत्कर्षोविवक्षित इतिभावस्तु स्फुटः ॥ एवं एकवाक्यतासंपादनार्थं प्रकृतश्लोकोपि स्वोत्कर्षपरएव भवेत् । अयमर्थः पाठ-भेदकल्पनया व्यवहितान्वयेन वाक्यभेदेन पदार्थभेदेन वा लभ्य इति प्रायशः सर्वे शंकरानुगव्याख्यातारो मन्यन्ते ॥

(१) पाठभेदेन यथा । भीष्मभीमपदयोर्विपर्यासात् ॥ "अपर्याप्तं तदस्माकं बलं भीमाभिरक्षितम् । पर्याप्तं त्विदमेतेषां बलं भीष्माभिरक्षितं" इति केचित् पठन्ति ॥ एवं पाठे तद्बलमिति विप्रकृष्टत्वेन परबलस्योक्तिरुचिता भवति ॥ अन्यत्र स्वबलप्राबल्योक्त्यविरोधश्च प्राप्यत इति मन्यन्ते ॥

अत्रोच्यते ॥ अयं पाठः सर्वथा अप्रसिद्ध इत्युपेक्षणीयः ॥ स्वाभि-प्रायानुसारेण अप्रसिद्धपाठकल्पनायाः अन्याय्यत्वात् ॥

(२) व्यवहितान्वयेन यथा ॥ अपर्याप्तं नालं भीमाभिरक्षितं बलं पर्याप्तं भीष्माभिरक्षितं इति ॥ औचित्यसंपादनाय व्यवधानं सह्यत इति तदाशयः ॥ अत्र वृथाक्लिष्टकल्पनं कृतमित्येतत् स्फुटदूषणम् ॥

(३) वाक्यभेदेन यथा ॥ अपर्याप्तं नालं तद्बलं अस्माकं । कुतः । अस्मद्बलं भीष्माभिरक्षितमित्यतः । पर्याप्तं अलं अस्मद्बलं तद्विजये । कुतः ॥ तद्बलं भीमाभिरक्षितमित्यतः ॥ यद्वा ॥ 'अपर्याप्तं युद्धाय यदनलं अस्माकं तद्भी-ष्माभिरक्षितं भीष्मेण अभितः शरीरवाक्शस्त्रास्त्रबलेन रक्षितं सत् मम जय-संपादनाय पर्याप्तमेव भवति ॥ तेषां पाण्डवानां तु इदं पुरोदृश्यमानं बलं पर्याप्तमपि अलमपि भीमेनाभिरक्षितं सत् अपर्याप्तमेव, हीनपुरुषाश्रयत्वात्' इति शंकरानन्दः ॥ अस्मिन्व्याख्याने क्लेशः स्फुटः ॥

(४) पदार्थभेदेन यथा ॥ पर्याप्तं नाशनसमर्थ (पर्यापनं नाशः) कर्त-रि क्तः ॥ अपर्याप्तं नाशनासमर्थ ॥ तथा च तत् भीमबलं अस्माकं बलं नाशयितुं

नालमिति ॥ अथवा यथोक्तं नीलकण्ठीये । पर्याप्तं परितः आप्तं परिवेष्टितं सप्ताक्षोहिणीभितत्वात् अल्पं । एकादशाक्षोहिणीमितत्वेन अस्मत्सैन्येन वेष्टयितुं शक्यं न तु तदीयेन अस्मदीयं अपर्याप्तं अपारणीयमिति ॥ अथवा यथोक्तं मधुसूदनीये । अपर्याप्तं अनन्तं पर्याप्तं परिमितं ॥ अथवा तत् पाण्डवानां बलं अपर्याप्तं नालं अस्माकं अस्मभ्यं ॥ कीदृशं तत् । भीष्मो अभिरक्षितो अस्माभिर्यस्मै यन्निवृत्यर्थ इत्यर्थः ॥ तत् पांडवबलं भीष्माभिरक्षितं इतियोजना ॥ इदं पुनः अस्मदीयं बलं एतेषां पाण्डवानां पर्याप्तं परिभवे समर्थ भीमोऽतिदुर्बलहृदयोऽभिरक्षितो यस्मै तदस्माकं भीमाभिरक्षितमिति ॥ पश्यन्तु बुधाः भीष्माभिरक्षितभीमाभिरक्षितशब्दयोः क्लिष्टव्याख्यानम् ॥

दुर्योधनस्य वचनाभिप्राये विचार्यमाणे, असौ स्वबलस्य उत्कर्ष वक्तुं नोद्यत इत्युपक्रमोपसंहारबलादवगम्यते ॥ तथाहि ॥ महतीं चमूं इति परसेना वर्णिता । धीमतेति द्रुपदपुत्रः स्तुतः ॥ शूरा महेष्वासाः भीमार्जुनसमा इति शूरस्तुतिः कृता ॥ पांडवपक्षे सप्तदशशूराः नामभिर्निर्दिष्टास्तत्र तत्र उत्कर्षविशेषद्योतकविशेषणैस्सह ॥ स्वपक्षे तु नचमूर्वर्णिता । सप्तैवशूराः उक्ताः । अन्ये चेति इतरे आकृतिगणान्तर्भूतत्वेन उक्ताः॥ त्यक्तजीविता इति अमांगलिकविशेषणेन जीवत्यागो भविष्यति न तु जयः इति ध्वनितः ॥ उत्तरत्रापि 'तस्यसंजनयन्नि' ति पद्यं दुर्योधनविषादमेव स्पष्टयति ॥ यत्तु 'न भेतव्यं महाराजे' ति उद्योगपर्वगतं वाक्यमुदाहृतं तत्प्रकरणभेदात् अन्यथोपपद्यते । पितृप्रमुखे स्वबलस्तुत्या युद्धानुज्ञावाप्त्यर्थं प्रवृत्तं खलु तद्वचनं॥ यत्तु द्वितीयदिनारंभे स्वबलस्तुतिपरं वाक्यमुदाहृतं तदपि प्रकरणभेदेनैवोपपद्यते ॥ प्रथमदिवसे पराजितान् प्रोत्साहयितुं हि तत्र निर्देशः । प्रकृते तु परबलोत्कर्षं वर्णयित्वा भीष्मद्रोणौ गूढाभिसंधितया विनिन्द्य तौ प्रोद्बोधयितुं उद्यमः कृतः॥ तस्माद्भावमजानाना एव कुरुबलाधिक्यपरतया पद्यं व्याकृतवन्तः ॥ तस्मात् साधूक्तं विवृत्याचार्येण "पाण्डवविजये मम संदेहोऽस्ति ततो भवदादयः सर्वे

बहुसन्नद्धा भवन्तु इति भावेन आह" इति ॥ अपरे तु अपर्याप्तमिति पद्यं कुरुबलापकर्षप्रतिपादकतया व्याकुर्वन्तोपि भीष्मं भीमापेक्षया बलपौरुषाद्यतिशयितं मन्वानाः तदानुगुण्येन वाक्यार्थं वदन्ति ॥ यथाह श्रीधरः ॥ "भीष्मेणाभिरक्षितमप्यस्माकं बलं अपर्याप्तं तैस्सह योद्धुं असमर्थं भाति" इति ॥ यथाह देशिकः ॥ "इह तावत् भीष्माभिरक्षितमित्येतत्प्रतिशिरस्तया भीमाभिरक्षितमिति केनाभिप्रायेण निर्दिश्यते। न तावत् भीष्मवत् भीमस्यापि सेनापतित्वेन । धृष्टद्युम्नस्य तत्पतित्वेनोक्तत्वात् ॥ नापि भीष्मसमपौरुषत्वेन, अत्यन्तविषमतया प्रसिद्धेः" इत्यादि ॥ उच्यते ॥ भीष्मप्रतिशिरस्तया भीमस्योक्तेर्भावो निर्णयाचार्योपदिष्टां भीमयोग्यतां ये जानन्ति तैरेवावगम्यते ॥ यथाह भीष्मः उद्योगपर्वणि "न तस्यास्ति समो युद्धे गदया सायकैरपि । नागायुतबलो मानी तेजसा न स मानुषः ॥" इति ॥ शान्तिपर्वणि भीष्मवचनं ॥ "वायुर्भीमो भीमनादो महौजाः सर्वेषां च प्राणिनां प्राणभूतः" इति ॥ यथाह विदुरो विराटपर्वणि ॥ "पंचानां पाण्डुपुत्राणां यत्तेजः प्रजिहीर्षसि । पंचानामिव भूतानां महतां लोकधारिणां ॥ भीमसेनं तु कौन्तेयं यस्य नास्ति समोबले ॥" इति ॥ यथाह धृतराष्ट्रः ॥ "सर्व एते महोत्साहा ये त्वया परिकीर्तिताः । एकतस्त्वेव ते सर्वे समेता भीम एकत ॥ भीमसेनाद्धि मे भूयो भयं संजायते महत् । क्रुद्धादमर्षणात्तात व्याघ्रादिव महारुरोः ॥ जागर्मि रात्रयस्सर्वा दीर्घमुष्णं च निश्वसन्" इत्युद्योगे (अ० ५१) ॥ यथाह द्रोणः ॥ "सपुत्रः सकृपः शस्त्रं ग्रहीष्ये भवतां कृते ॥ रक्षणे भवतां चैव कुर्यां यत्नं स्वशक्तितः ॥ न तु भीमाद्रक्षितुं वः शक्तः सत्यं ब्रवीम्यहं" इति ॥ रामावतारे वायुपुत्रस्य हनुमतः तदा अवतीर्णसकलदेवतापेक्षया बलिष्ठत्वादिकं सर्वसंप्रतिपन्नं ॥ तथा अत्रापि वायुपुत्रस्य भीमस्यांगीकार्यं ॥ किंच अतिबलिष्ठजरासन्धकीचकदुर्योधनादिहननेनापि स्पष्टं ज्ञायते भीममाहात्म्यं ॥ भीष्मेण तु एतादृशस्य

कस्य बलिष्ठस्य वधः कृतः ॥ अतस्तत्साम्यमेव नेति कुत आधिक्यं ॥ अविमर्शमूलमेवान्यथाकथनं इत्यलं ॥ अत्रापि प्रकरणे 'भीमार्जुनसमा.' 'भीमकर्मा-वृकोदरः' इत्यादि प्रयोगैर्ज्ञायते भीममाहात्म्यं इति भीष्मात् भीमस्य अतिविषमत्वकथनमत्यन्ताविमर्शमूलं ॥ किं बहुना, श्रीमन्महाभारतकृत् कृष्णद्वैपायनः स्वयमेव स्वाभिप्रायमाह । (पश्यन्तु आचार्योदाहृतं भारतवाक्यं) "द्वाविमौ पुरुषौ लोके वासुदेवादनन्तरौ । भीमस्तु प्रथमं तत्र द्वितीयो द्रौणिरेवच" इति ॥ कलिस्वरूपोयं दुर्योधनः सम्यग्वेत्ति भीमपराक्रमं स्वयूथपिण्डीकरणसमर्थोयमिति ॥ अतः कम्पमानहृदयस्सन्नायकं धृष्टद्युम्नमवज्ञाय भीमाभिरक्षितमित्याह ॥

तद्बलं भीष्माभिरक्षितमित्यत्र स्वबलस्य विप्रकृष्टत्वोक्तिरनुपपन्नेति भिया तदिति तस्मादित्यर्थे प्रयुक्तत्वात् सामानाधिकरण्यप्रतीत्ययोग इति देशिको वक्ति ॥ 'तत्' पूर्वोक्तं इत्यर्थे नकाप्यनुपपत्तिरिति भाति ॥ किंच पश्यैतां पाण्डुपुत्राणामिति पूर्वसन्निहिततरवाचकैतच्छब्दप्रयोग. पाण्डुसैन्ये कृतः॥ तथा 'अत्र शूरामहेष्वासा' इति एतच्छब्दप्रकृतिकात्रशब्दप्रयोगश्च दृश्यते । अतः पाण्डुसैन्यस्यैव सन्निकृष्टत्वं कुरुसैन्ये तु तान्निबोधेति तान्ब्रवीमीति च विप्रकृष्टवाचकतच्छब्दप्रयोगः कृतः ॥ अतस्तस्य विप्रकृष्टत्वं । तदिति परोक्षे विजानीयादित्युक्तत्वात् ॥ अतः कुरुसैन्येऽपर्याप्तं तदिति तच्छब्दप्रयोगो युक्तः । बुद्धिसन्निधानासन्निधाने एव मुख्ये देशसन्निधानाऽसन्निधानेत्वमुख्ये ॥ तथैव लोकशास्त्रयोर्व्यवहारदर्शनात् । किंच पर्याप्तंत्विदमेतेषामिति पाण्डुसैन्ये इदं शब्दः प्रयुक्तः । अतः कुरुसैन्ये तद्विपरीततच्छब्दप्रयोगो युक्तएव ॥ अतस्तदित्यस्य तस्मादितिव्याख्यानमनभिज्ञतामूलं इत्यलम् ॥

**अयनेषु च सर्वेषु यथाभागमवस्थिताः ।**
**भीष्ममेवाभिरक्षन्तु भवन्तस्सर्वएव हि ॥११॥**

वि०।हि यस्मादेवं ॥ अतो भवन्तः सर्व एव सर्वेष्वयनेषु व्यूहप्रवेशमार्गेषु यथाभागमवस्थिताः स्वस्वरणस्थानेषु दृढमवस्थितास्सन्तः भीष्ममेवाभिरक्षन्तु ॥ अन्यैर्युध्यमानो भीष्मः पृष्टतोऽरिभिर्यथा न हन्येत तथा रक्षन्त्विति द्रोणाचार्यमुक्त्वा विषसाद ॥

विचारः

समरसमारंभसमये योधानां यथाप्रधानं युद्धभूमौ पूर्वापरादिदिग्विभागेन अवस्थितिस्थानानि यानि नियम्यन्ते तान्यत्र अयनान्युच्यन्त इति मधुसूदनीये ।

यथाभागमिति—स्वस्वरणस्थानेषु नियमसमयादिभिः पूर्वमेव निश्चित्य यथोदिष्टं तत्रेत्यर्थः ।

अथवा युद्धकाले तत्तत्समयसमवस्थाद्यनुगुणभागधेयमनुसृत्येति ।

अभिरक्षन्तु—सर्वतोरक्षन्तु । मन्त्रादिना श्वेतसर्षपादिविक्षेपैः यातुधानादिभ्यो रक्षणमभिरक्षणम् । अन्यैर्युध्यमानो भीष्मो यथापृष्टतः कैश्चिन्नहन्येत तथेति यावत् ।

एव शब्दः पद्यस्थानेकशब्दैः संबध्यते । तस्माद्यथायोगं विवक्षाभेदः अभिव्यज्यते । तथाहि । भीष्ममेव नान्यं । कुतः ।

(१) तस्य नायकत्वेन जयसंपादनाय परमप्रधानइति सर्वसाहसेन रक्षणयित्वात् ॥

(२) महायोधस्सन् सहस्ररथिनो अयुतयोधांश्च हन्तुं प्रतिज्ञां कृतवानित्यत. तस्य अवश्यं रक्षणीयत्वात् ॥ यथोक्तं उद्योगपर्वणि भीष्मेण ॥

"हन्यामहं महाभाग पाण्डवानामनीकिनीं। दिवसेदिवसे कृत्वा भागं प्रागान्हिकं मम ॥ योधानां दशसाहस्रं कृत्वा भागं महाद्युते। सहस्रं रथिनां एकं एषभागो मतो मम ॥" इति ॥

(३) युद्धे ऐकमत्यमावश्यकं एकमुखत्वसंपादनार्थं। तस्मात् तमेव अभिरक्षन्त्विति वा ॥

(४) अथवा एव शब्दः अभिरक्षन्त्वित्यनेन संबध्यते ॥ अभिरक्षन्त्वेव न तु भवद्भिः स्वातन्त्र्येण योद्धव्यमिति यावत् ॥

(५) अथवा सर्वे एव इति योजना ॥ यद्यपि दुःशासनादि द्वादशजनपदाः विशेपरक्षकाः नियमिताः। यथोक्तं भीष्मपर्वणि। "पृष्ठगोपाश्च भीष्मस्य पुत्रास्तव नराधिप ॥ द्वादशैते जनपदाः सर्वेशूरास्तनुत्यजः। महता रथवंशेन ते ररक्षुः पितामहम् ॥" इति। एतैर्विशेपरक्षकैस्सह भवन्तस्सर्वेपि तमभिरक्षन्त्वित्यर्थः ॥

(६) अथवा यथाभागमवस्थिता एवेति योजना। समरारंभात्पूर्वं हि भीष्मोब्रवीत् योधान्प्रति ॥ "एषवश्शाश्वतः पन्थाः पूर्वैः पूर्वतरैः कृतः। संभावयध्वमात्मानं अव्यग्रमनसो युधि ॥ अधर्मः क्षत्रियस्यैषयद्व्याधिमरणं गृहे ॥" इत्यादिवाक्यैर्नायकत्वेन सर्वानपि वीरान् स्वस्वयोग्यस्थाने स्थित्वा योद्धव्यमित्याज्ञापयामास ॥ भवन्नायकाज्ञाया अविरोधेनैव यथाभागं यथाविभज्योद्दिष्टं तदनतिक्रम्यैव तमभिरक्षन्त्वित्यर्थः ॥

संजय उवाच—

**तस्य संजनयन्हर्षं कुरुवृद्धः पितामहः ।**
**सिंहनादं विनद्योच्चैः शंखं दध्मौ प्रतापवान् ॥१२**

वि०। एवं विषादिनस्तस्य दुर्योधनस्य हर्षं संजनयन् जनयितुं। लक्षणहेत्वोः क्रियाया इति हेतौ शत्रंतं । कुरुवृद्धः पितामहः भीष्मः सिंहनादं उच्चैर्विनद्य शंखं दध्मौ ॥ ध्मा शब्दे ॥

विचारः

तस्य संजनयन्हर्षमित्यनेन पूर्वं विषादस्सिद्धः ॥

हर्षमिति ॥ इष्टाधिगमजन्य आनन्दो हर्षः । बुद्धिगतं उल्लासविशेषं स्वविजयसूचकं इति यावत् ॥

कुरुवृद्धः ॥ कौरवेषु वयसा ज्येष्ठः ॥ सिंहनादं विनद्य सिंहनादं कृत्वेत्यर्थः ॥ ओदनपाकं पचतीतिवदुपपत्तिः ॥ सिंहवन्नादः सिंहनादः श्रेष्ठनादो वा। सिंहनादमिति णमुलंतं वा । तेन विनद्येत्यस्य अनुप्रयोगः । कषादित्वात् समूलकाषं कषति स्म दैत्यान् इतिवत् उपपत्तिः ॥

दध्मौ पूरयामास ॥ वादितवान् ।

प्रतापवान् वीर्यवान् ।

कुरुवृद्धत्वात् दुर्योधनाभिप्रायपरिज्ञानं । पितामहत्वादनुपेक्षणं नत्वाचार्यवदुपेक्षणं । प्रतापवत्वादुच्चैस्सिंहनादपूर्वकशंखवादनं परेषांभयोत्पादनायेति मधुसूदनीये दर्शितम् ॥

नादइति । "आकाशाग्निमरुज्जातो नाभेरूर्ध्वं समुच्चरन्। मुखेऽतिव्यक्तमायाति यस्सनादइतीरितः" इति सङ्गीतशास्त्रे ॥

स्वबलं अपर्याप्तं इति दुर्योधनोक्तं विषादवाक्यं श्रुत्वा भीष्मो दुर्योधनस्य हर्षं जनयितुं सिंहनादं कृत्वा शङ्खं पूरयामासेति श्लोकाशयः ॥ किञ्च "अहन्यहनि पार्थानां वृद्धः कुरुपितामहः । भरद्वाजात्मजश्चैव प्रातरुत्थाय संयतौ ॥ जयोऽस्तु पाण्डुपुत्राणां इत्यूचतुररिन्दमौ । युयुधाते तवार्थाय यथा ससमयः कृतः" इति भीष्मपर्वण्युक्तप्रकारेण पाण्डवविजयप्रार्थनां अहन्यहनि द्रोणभीष्मौ कुर्वात इति प्रसिद्धं ॥ एतन्निधाय हृदि सुयोधनो भीष्मापकर्षं चकारेति ध्वनिप्राप्तां शङ्कां निवारयन्ति "कुरुवृद्धः" "पितामहः" "प्रतापवान्" इति त्रीणि विशेषणानि ॥ तथाच कौरवान्नेनाभिवृद्धवयस्कत्वात् कुरुपितामहत्वात् शूरत्वाच्च "मित्रद्रोहे निष्कृतिर्नास्ति लोके महत्पापं ब्रह्महत्या समं तत्" (भा० आश्व० पर्व ५ अध्याय १) इत्युक्त पापानुसन्धातृत्वाच्च भीष्मो न द्रोहं कुर्यादिति भावः ॥

किंच वृद्धः पितामहः इत्याभ्यां भीष्मस्यपरवयस्कत्वं द्योत्यते ॥ सेनाधिपत्यं न तस्य देयमिति भीष्मनिन्दाप्रकरणे यदाह कर्णः ॥

"श्रोतव्यं खलु वृद्धानामितिशास्त्रनिदर्शनं । नत्वेवं ह्यतिवृद्धानां पुनर्बाला हि ते मताः" इति । कर्णपक्षपातिनं तद्वाक्ये विशेषतो विश्वसन्तं दुर्योधनं जानन् कर्णोक्तरीत्या वृद्धोपि पितामहोप्यहं अद्यापि प्रतापवान् इति ज्ञापयितुं नादं कृत्वा शङ्खं दध्माविति भावः ॥

तस्य संजनयन्हर्षमित्यत्र तस्येति दुर्योधनस्य परामर्शः स्फुटः ॥ यद्वा-भीष्माभिरक्षितं बलमिति प्रसक्तस्य बलस्य परामर्शः । कुरुसैन्यविषादस्यापि सम्भावितत्वात् ॥ यद्वा भीमाभिरक्षितमिति भीमबलस्य परामर्शः ॥ बहुकालं प्रतीक्षितस्य समरकालस्य प्राप्तौ धीरशत्रूणां हर्षस्य संभावितत्वात् । अस्मिन्नर्थे जनयन्निति न हेतौ शत्रन्तं । किंतु उत्पादयन् न तु उत्पादयितुमित्यर्थः ॥

यद्वा तस्येति भीमस्यैव परामर्शः । युद्धं त्वरया आरभ्य दुर्योधनोरू विदार्य दुःशासनहृदयं भित्त्वा द्रौपदीवेणीसंहारेण स्वप्रतिज्ञा पूरणीयेति सोत्कण्ठं अभिलषन्नास्ते खलु भीमसेनः ॥ तस्य हर्ष जनयन् दध्मौ ॥

यद्वा जनयन् जनयितुमित्यादाय भीमप्रीत्यर्थं दध्माविल्यर्थः ॥ जानाति खलु भीष्मः भीममाहात्म्यम् ॥ "वायुर्भीमो भीमनादो महौजाः" इति भीष्मवचनं मोक्षधर्मे ॥ तस्य बलप्रेरकस्य मुख्यप्राणस्य हर्ष जनयन् प्रीत्यर्थं दध्मौ इत्यर्थः ॥

यद्वा तस्येति परब्रह्मणः श्रीकृष्णस्य परामर्शः ॥ श्रीकृष्णप्रीत्यर्थं भीष्मः समराध्वरं आरब्धवान् ॥ निष्कामनया भगवत्प्रीत्यर्थं कर्म कर्तव्यमिति गीताप्रतिपाद्यमर्थमनुसंधाय श्रीहरितोषाय नादं कृत्वा शङ्खं दध्माविल्यर्थः ॥ तच्छब्दस्य परब्रह्मवाचकत्वं "ओंतत्सदितिनिर्देशो ब्रह्मणस्त्रिविधः स्मृतः" इति गीतावाक्यादिप्रसिद्धम् ॥

**ततः शंखाश्च भेर्यश्च पणवानकगोमुखाः ।**
**सहसैवाभ्यहन्यन्त सशब्दस्तुमुलोऽभवत्॥ १३॥**

वि० ततः तच्छङ्खध्मानानन्तरं पणवानकगोमुखाः वाद्यविशेषाः ॥ सहसैव युगपदेव तुमुलः सर्वत्र परिपूर्णः अभवत् ॥

विचारः

लोके अतिशयविशेषे द्योत्ये कर्मकर्तरिप्रयोगो दृष्टः ॥ प्रकृते च द्योत्यातिशयविशेषाभावात् कर्मकर्तरि इति परव्याख्यानं चिन्त्यम् ॥

ततः श्वेतैर्हयैर्युक्ते महति स्यंदने स्थितौ ।
माधवः पाण्डवश्चैव दिव्यौ शंखौ प्रदध्मतुः
॥ १४ ॥

वि० ततः तेषां घोषानन्तरं श्वेतहयैः शुक्लवर्णाश्वैः युक्ते स्यन्दने रथे पाण्डवस्त्वर्जुनः । स्थितावेवेत्यन्वयः ॥

विचारः

अग्निदत्ते दुष्प्रधृष्ये रथे स्थितौ सर्वथा जेतुमशक्याविति सूचनाय रथस्थत्वकथनं इति मधुसूदनीये ॥

इदमुक्तं वेंकटानाथीये ॥ तन्नास्माकमनिष्टमिति लिख्यते ॥

" कौरवेषु दुर्योधनस्येव पाण्डवेष्वपि प्रधानभूतस्य राज्ञो वृत्तान्ते कथनीये माधवः पाण्डव इति प्राधान्यतो भगवद्वृत्तान्तं वदता भगवानेव पाण्डवबले प्रधानभूतो राजा धर्मार्जुनादयस्तु निमित्तमात्रमिति ज्ञाप्यते ॥ तत्र च कथं पाण्डवसारथेः भगवतस्तद्राजत्वं इति शंकानिरासाय माधवः पाण्डवः इति पूर्वपश्चाद्भावेन निर्दिष्टम् ॥ पाण्डवरक्षार्थमवतीर्णेन भगवता स्वरक्षणीयस्य परैरुपघाते प्राप्ते तं पृष्ठतो विधाय स्वयमग्रे अवस्थितमित्येतदेव भगवतः पाण्डवसारथ्यं नाम ॥ तच्च न तत्स्वामित्वविरोधीति भावः ॥ माधवपदेन लक्ष्मीपतिः यत्र तत्रैव जयशौर्यादि सर्वविधलक्ष्मीनिवासः इति पाण्डवानामेव जयः न त्वलक्ष्मीकस्य दुर्योधनस्येति सूचितम् ॥ स्यन्दने स्थिताविति रथस्थत्ववर्णनेन परबलं दृष्ट्वा भयेनाचार्यमुपसंगम्य ततो योधान् भीष्मं च उपधाव्य तत इतो विलुठतो दुर्योधनाद्वैलक्षण्यमुक्तम् " ॥

" महति इत्यनेन, ' उपेतं राजतैरश्वैः गन्धर्वैर्हेममालिभिः। पाण्डुराभ्रप्रतीकाशैः मनोवायुसमैर्जवे ॥ सर्वोपकरणैर्युक्तं अजेयं देवदानवैः। ससर्ज यं स्वतपसा भुवने भुवनप्रभुः ॥ प्रजापतिरनिर्देश्यं यस्य रूपं रवेरिव ॥ आश्रिता यं रथश्रेष्ठं शक्रध्वजसमा बभौ ॥ तापनीया सुरुचिरा ध्वजयाष्टिरनुत्तमा ॥ यस्यां तु वानरो दिव्यः सिंहलाङ्गूललक्षणः। भीमो ननर्द तत्रास्य संश्रितो मूर्ध्न्यशोभत ॥ ध्वजे भूतानि चात्रासन् विविधानि महान्तिच ॥ नादेन रिपुसैन्यानां येषां संज्ञा प्रणश्यति ' " ॥ इत्यादि पूर्वोक्तं रथमाहात्म्यं स्मारितं ॥ "तेन च तादृशो रथएकएवालं ॥ तदुपरि माधवः पाण्डवश्च किल? किमुवक्तव्यं जयविषय इति सूचितं ॥ दिव्यौ शङ्खावित्यनेन ततश्शङ्खाश्चेति पूर्वोक्तपरशङ्खानां प्राकृतत्वेनाकिंचित्करत्वं उक्तं ॥ माधवः पाण्डवश्चैवेत्येवकारस्यत्वयमर्थः। कुरुसेनापतिना भीष्मेण स्वयं शङ्खं ध्मात्वा सर्वतस्सैन्ये शंखनादे प्रवर्तिते सति तदनुरूपतया पाण्डवसेनापतिना धृष्टद्युम्नेन स्वयं तथा विधातुमुचितं॥ न तु तथा कृतम् ॥ कृष्णार्जुनावेव शंखौ वादितवन्ताविति ॥ अत्र हेतुः प्रदध्मतुरित्यत्र प्रकर्षार्थवाचिना प्रेत्युपसर्गेणोक्तः। प्रकर्षोऽयत्र सकलधार्तराष्ट्रगर्भनिर्भेदपर्यन्ततारूपः ' स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ' ॥ इत्यादिवक्ष्यमाणत्वात् " ॥

" ततश्चायं भावः। यदि धृष्टद्युम्नादयएव शंखान्वादयेयुः तदा भीष्मादिवादनस्यात्रापि प्रतिशंखवादनं जातमित्येव स्यात्। परहृदयविदारणपर्यन्तं शंखध्वनिर्विधेय इति हि भगवतोभिमतं। अतस्तदर्थं कृष्णार्जुनावेव प्रदध्मतुः "॥ इति (वेङ्कटनाथीयम्).

**पांचजन्यं हृषीकेशो देवदत्तं धनंजयः ।**
**पौण्ड्रं दध्मौ महाशंखं भीमकर्मा वृकोदरः ॥१५**

वि० तद्विवृणोति ॥ पाञ्चजन्यमिति ॥ हृषीकेशशब्दार्थ उक्तो गीताभाष्ये एकादशे ॥ हृषीकाणामिन्द्रियाणामीशत्वाच्च हृषीकेश इत्यादि ॥ दध्माविल्यन्वयः ॥ १५ ॥

विचारः

पाञ्चजन्यं ॥ पञ्चजनादुत्पन्नं ॥ "सतुपञ्चजनं हत्वा शंखं लेभे जनार्दनः । स च देवमनुष्येषु पाञ्चजन्य इति श्रुतः ।" इति हरिवंशे ॥

किंच विष्णुपुराणे ॥ "इत्युक्तोऽन्तर्जलं गत्वा हत्वा पञ्चजनं च तम् । कृष्णो जग्राह तस्यास्थिप्रभवं शंखमुत्तमं" इति ॥

हृषीकेशः ॥ कृष्णः "हर्षात् सुखात् सुखैश्वर्याद्धृषीकेश उच्यते" इत्युद्योगपर्वणि ॥ "अविकारितया जुष्टो हृषीको वीर्यरूपया । ईशः स्वातन्त्र्य योगेन नित्यसृष्ट्यादिकर्मणि" ॥ "ऐश्वर्यवीर्यरूपत्वं हृषीकेशत्वमुच्यते" ॥ इत्यहिर्बुध्नसंहितायाम् ॥

देवैर्दत्तं देवदत्ताख्यं शंखं ॥ "प्रदीयमानं देवैस्तं देवदत्तं बलोद्भवं । प्रत्यगृह्णं जयायैनं स्तूयमानस्तदामरैः ॥" इति वनपर्वणि भारते ॥

पौण्ड्रं तन्नामकं दध्मौ ॥ ध्मामयामास । लोकभयंकराणि कर्माणि अस्येति भीमकर्मा ॥

वृकोदरः ॥ "भक्तिर्ज्ञानं सवैराग्यं प्रज्ञामेधाधृतिस्थितिः ॥ योग. प्राणो बलं चैव वृकोदरइति स्मृतः ॥ एतादृशात्मकोवायुस्तस्मात्भीमस्तदात्मकः" ॥ इति स्मृतिः ॥

सर्वेन्द्रियप्रेरकत्वेन सर्वान्तर्यामी कृष्णः पाण्डवानां सहायः इति कथयितुं हृषीकेशपदं ॥

दिग्विजये सर्वान् राज्ञो जित्वा धनमाहृतवानिति अजेयोऽयमिति कथयितुं धनंजयपदं ॥ "पाञ्चजन्यो देवदत्तः पौण्ड्रः अनन्तविजयः ॥ सुघोषः मणिपुष्पकश्चेति शंखनामकथनं परसैन्ये स्वस्वनामप्रसिद्धाः एतावन्तश्शंखाः भवत्सैन्ये तु न कोपि स्वनामप्रसिद्धः शखोऽस्तीति परेषां उत्कर्षातिशयकथनार्थमि" ति मधुसूदनीये ॥

**अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।**
**नकुलस्सहदेवश्च सुघोषमणिपुष्पकौ ॥ १६ ॥**

वि० अनन्तविजयाख्यं नकुलः सुघोषाख्यं शंखं सहदेवो मणिपुष्पकाख्यं शंखं दध्मुरित्यन्वयः ॥

विचारः

युधि जयभागित्वेन स्थिरः युधिष्टरः । कुंतीपुत्रइति मातृग्रहणे अस्ति विशेषः । उद्योगपर्वणि सन्धिप्रयत्नप्रकरणे वीरसूः कुंती शूरत्वात्स्वपुत्रैरवश्यं योद्धव्यमिति तेभ्यः संदेशं प्रेषयामास ॥ यथा "दारिद्र्यमितियत्प्रोक्तं पर्यायमरणं हि तत् ॥ कालो वा कारणं राज्ञो राजा वा कालकारणम् ॥ इति ते संशयो माभूत् राजाकालस्य कारणम् ॥ भैक्ष्यं विप्रतिषिद्धंते कृषिर्नैवोपपद्यते । क्षत्रियोसि क्षतात्त्राता बाहुवीर्योपजीविता ॥ ततो दुःखतरं किन्नु यदहं हीनबांधवा ॥ परपिण्डमुदीक्षे वै त्वां सूत्वामित्रनंदनम्" ॥ इति मातृवाक्यपरिपालनशीलो धर्मः अनन्तविजयं दध्मौ ॥ १६ ॥

काश्यश्च परमेष्वासः शिखंडी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥१७

वि० परमेष्वासो महाधनुष्कः काश्यः महारथः शिखंडी च अपराजितः सात्यकिश्च ॥ १७ ॥

विचारः

काश्यः ॥ काशिराज । परमेष्वासः महाधनुर्धरः ॥ महान् इष्वासो यस्य सः ॥ शिखंडी ॥ शिखंडं श्मश्रुशून्यता इत्यभिधानात् तदस्यास्तीति पांचालः । महारथः धृष्टद्युम्नः धृष्टं परधर्षकं द्युम्नं बलं यस्य सः धृष्टद्युम्नः ॥ विराटः ॥ सात्यकिः सत्यकस्यापत्यं पुमान् ॥ अपराजितः न पराजितः ॥ पारिजातहरणबाणयुद्धादि महासंग्रामेष्वेतादृशः सात्यकिः इति मधुसूदनीये ॥

द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ।
सौभद्रश्च महाबाहुः शंखं दध्मुः पृथक् पृथक्
॥ १८ ॥

वि० पृथिवीपते हे धृतराष्ट्र ॥ महाबाहुः सौभद्रोऽभिमन्युश्च शंखमिति समुदायाभिप्रायं ॥ स्वस्वशंखान्दध्मुरिति ॥

---

स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।
नभश्चपृथिवीं चैव तुमुलो व्यनुनादयन् ॥१९ ॥

वि० स घोषस्तुमुलोव्याप्तो भूत्वानभश्च पृथिवीं च व्यनुनादयन् तत्र प्रतिध्वनिं जनयन्नेव धार्तराष्ट्राणां त्वत्पुत्राणां हृदयानि व्यदारयत् ॥ अद्यैव नष्टं कुरुकुलमिति त्वत्पुत्रा मेनिरइत्यर्थः ॥ १९ ॥

विचारः

सः पाञ्चजन्यादिमहाशंखेभ्यः समुत्पन्नः घोषः महाध्वनिः । धार्तराष्ट्राणां धृतराष्ट्रस्य पुत्राः पौत्राः सैनिकाश्च सर्वे धार्तराष्ट्राः । संबन्धार्थे अण्-प्रत्ययः ॥ तेषां हृदयानि व्यदारयत् विदलितवान् । तेन नादेन भग्नहृदयाः जनाः हृदयविदारणतुल्यां व्यथां प्राप्ताः इत्यर्थः ॥

इदं वेङ्कटनाथीये ॥ हृदयानि मनांसि वक्षांसि च । हृदयं चित्तवक्षसोः इति निघंटुः । व्यदारयत् बिभेद ॥ तत्र मनोविदारणं नाम ज्ञानेच्छाकृतिधैर्यादि मनोधर्मनाशनं । वक्षोविदारणं तु भयप्रयुक्तः महाविपत्तिषु अनुभूयमानो गर्भनिर्भेदः ॥ इति ॥

नभश्च आकाशं सर्वादिशः, पृथिवीं च भूलोकम् पर्वतबिलानि, तुमुलः संकीर्णः । व्यनुनादयन् स्वस्वनादानुरूपं प्रतिध्वनयन् ॥ श्रीकृष्णस्य पांचजन्यः महामहिमोपेत इति प्रसिद्धः ॥

भीमार्जुनशंखयोर्माहात्म्यावधारणे तावत् अयमर्थः स्मर्तव्यः ॥ तथाहि सौगन्धिकवनसंचारे हनुमद्भीमयोः संगमे ईषत्कलहानन्तरं हनुमान् भीमा-

र्जुनावनुजग्राहेति वनपर्वणि कथितम् ॥ यथा—"एवमुक्तस्तु हनुमान् भीमसेनमभाषत। भ्रातृत्वात्सौहृदाच्चैव करिष्यामि प्रियं तव ॥ चमूं विगाह्य शत्रूणां परशक्तिसमाकुलाम्। यदा सिंहरवं वीर करिष्यसि महाबल ॥ तदाहं बृंहयिष्यामि स्वरवेण रवं तव ॥ यं श्रुत्वैव भविष्यन्ति व्यसवस्तेऽरयो रणे ॥ विजयस्य ध्वजस्थश्च नादान्मोक्ष्यामि दारुणान्। शत्रूणां ये प्राणहरास्सुखं येन हनिष्यथ ॥" इति अ० १५३. वनपर्वणि ॥ प्रकृते तुमुलस्य विशेषतो व्याप्तिः परहृदयविदारणं च हनुमदनुग्रहादपि स्यादिति भाति ॥ यद्धार्तराष्ट्राणां सैन्ये शंखादिध्वनिरतितुमुलोऽपि न पाण्डवानां क्षोभकोऽभूत् ॥

पृथिवीं चैवेत्येवकारः पाण्डवकर्तृकघोष एव धार्तराष्ट्राणामेव इति संबध्यते ॥ 'नाद्यापि युद्धं प्रारब्धम्। इदानीमेव एतादृशी दुरवस्था धार्तराष्ट्राणां ॥ पाण्डवैः सह युद्धप्रारम्भे तु किमुवक्तव्यम्। पाण्डवाः धार्तराष्ट्राणां हृदयं विदारयन्ति ॥ तेन च धार्तराष्ट्राणां दुरवस्था अतिशायिता भवेत्' इति यावत् ॥ धार्तराष्ट्राणामेवेत्यनेन च प्रधानभूतानां दुर्योधनादीनामेव एतादृशी गतिः अप्रधानानां तु किमुवक्तव्यमिति च सूचितम् ॥१९॥

**अथ व्यवस्थितान् दृष्ट्वा धार्तराष्ट्रान् कपिध्वजः।**
**प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः ॥ २० ॥**

वि० तत्वोपदेशप्रसंजकमर्जुनविषादं वक्तुमेतावानुपोद्घातः प्रवृत्तः। एवं दुर्योधनव्यापारं बलद्वयगतव्यापारं चोक्त्वा अधुनार्जुनव्यापारमाह ॥ अथेत्यादि चतुर्भिः श्लोकैः ॥ अथ अनन्तरं कपिध्वजः अर्जुनः व्यवस्थितान् युद्धे कृत-

निश्चयान् धार्तराष्ट्रान् दृष्ट्वा शस्त्रसंपाते शस्त्रप्रहरणे प्रवृत्ते ॥ वर्तमानसामीप्ये वर्तमानवद्वा । प्रवर्तितुमुद्युक्तेसति तदा शस्त्रसंपातप्राक्काले इदं वक्ष्यमाणं वाक्यमाहेत्यन्वयः ॥

रा० अथ युयुत्सून् अवस्थितान् धार्तराष्ट्रान् दृष्ट्वा लंकादहनवानरध्वजः पाण्डुतनयः ज्ञानशक्तिबलैश्वर्यवीर्यतेजसां निधिं स्वसंकल्पकृतजगदुदयविभवलयलीलं हृषीकेशं परावरनिखिललोकान्तरबाह्यसर्वकरणानां सर्वप्रकारकनियमने स्थितं समाश्रितवात्सल्यविवशतया स्वसारथ्येऽवस्थितं युयुत्सुर्यथावदवेक्षितुं तदीक्षणक्षमस्थाने रथं स्थापयेत्यचोदयत् । स च तेन चोदितः तत्क्षणादेव भीष्मद्रोणादीनां सर्वेषामेव महीक्षितां पश्यतां यथाचोदितमकरोत् । ईदृग् भवदीयानां विजयस्थितिरिति चावोचत् ॥

विचारः

धार्तराष्ट्रान् धृतराष्ट्रपुत्रादीन् दृष्ट्वा पश्यन् । कपिध्वजः कपिः कं सुखं पाययति अर्जुनस्य स्वनादेन अधिकसुखमुत्पाद्य बलपुष्टिं कुर्वन्निति-यावत् । सः हनूमान् ध्वजे यस्य सः अर्जुनः । हनुमता ध्वजस्थित्यानुगृहीतः, धनुः गाण्डीवमुद्यम्य ऊर्ध्वं धृत्वा ॥

तुमुलवर्णनानन्तरं अयं ताडयामास स ममारेत्यादि कथां प्रतीक्षमाणानां मनोगतिं निरुध्य एतावत्पर्यन्तं भूमिकामात्रं रचितं इतःपरं तत्वोपदेशस्य साक्षात्सङ्गतिभूतं अर्जुनविषादाख्यं प्रकरणान्तरमारभ्यत इति सूच्यते अथ शब्देन ॥ यः पूर्वं अतिस्थैर्यधैर्यसंपन्नो वीरो न कदापि युद्धाद्वि-

चचाल । स एवायमर्जुनः भयोद्विग्नतया वैषम्येणावस्थितानां युयुत्सूनां दर्शनानन्तरं विपसादेति किंचिदाश्चर्यसहितस्संशयश्च ध्वन्यते अथशब्देन ॥ [अत्र अथेत्यधिकारस्य कपिध्वज इति मुख्यप्राणावलंबित्वस्य च कथनात् श्रोत्रानुकूल्यं, व्यवस्थितान् दृष्ट्वा प्रवृत्ते शस्त्रसंपाते इत्यनेन प्रसंगानुकूल्यं, उत्तरपद्यस्थेन हृषीकेशपदेन गुरोः श्रीकृष्णस्य सर्वेन्द्रियप्रवर्तकत्वकथनात् वक्त्रानुकूल्यं च सूच्यते ]॥

---

**हृषीकेशं तदा वाक्यमिदमाह महीपते ।**

*अर्जुन उवाच—*

**सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत॥२१॥**

वि० सार्धश्लोकद्वयेन तद्वाक्यमाह सेनयोरिति ॥

विचारः

हृषीकेशं सर्वान्तःकरणवृत्तिज्ञं सर्वेषां मनआदीन्द्रियप्रेरकं वा ॥ तेन यथाऽर्जुनो वक्ष्यमाणं सेनयोरुभयोरित्यादि वाक्यं वदेत् तथा तं प्रेरयित्वा तेन च तथोक्त्यनन्तरमेव गीताशास्त्रोपदेशस्य प्रसक्तौ तदनन्तरमेव गीतोपदेशः कर्तव्य इति सूच्यते । तादृशं श्रीकृष्णं इदं वाक्यं वक्ष्यमाणं आह उक्तवान् । आह महीपते इत्यत्र ध्वनिः ॥ आहैव नत्वविमृश्यकारितया स्वयमेव यत्किञ्चित्कृतवान् यथा त्वं अविमृश्यकारितया परेषां राज्यं गृहीतवान् असीति ॥

वेङ्कटनाथ आह ॥ "ननु सेनाद्वयमध्ये रथस्थापने सति मुखे पतितान् बन्धूनुपलक्ष्य स्वजनवधव्यामोहेन युद्धविमुखोभविष्यसि ॥ तथासति प्रच्यावितमेवसर्वमपिकार्यमित्यतः सम्बोधयति ॥ अच्युतेति ॥ **समरसमारंभतः**

प्रच्युतेऽपि मयि भक्तरक्षणव्रतादच्युतस्त्वं मां न च्यावयिष्यसि ॥ तादृशे त्वयि मम नियंतरि यन्तरि च अवस्थिते सति का मम कार्यच्युतिशङ्केतिभावः" इति ॥

तादृश हे अच्युत सर्वथा च्युतिशून्य सेनयोः उभयोः स्वपक्षप्रतिपक्षभूतयोः मे मम रथं स्थापय स्थिरीकुरु ॥

**यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ।**
**कैर्मयासहयोद्धव्यमस्मिन्रणसमुद्यमे ॥ २२ ॥**

वि० ॥ अस्मिन्रणोद्योगे कैस्सह मया योद्धव्यम् ॥

**योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।**
**धार्तराष्ट्रस्य दर्बुद्धेर्युद्धे प्रियाचिकीर्षवः ॥ २३ ॥**

वि० ॥ दुर्बुद्धेः धार्तराष्ट्रस्य प्रियं कर्तुमिच्छन्तो येऽत्र समागताः तान्योद्धुकामानवस्थितान् योत्स्यमानान् यावद्द्रक्ष्यामि तावदुभयोः सेनयोर्मध्ये मे रथं स्थापयेत्यर्थः ॥

विचारः

यावत् इति देशपरः ॥ यावद्देशं गत्वाहं निरीक्षितुं क्षमः स्यां तावत्प्रदेशे स्थापय । यावत्कालं निरीक्षे तावत्कालं स्थापयेति वा ॥ यावच्छब्दुस्साकल्यवाची वा । निरीक्षणस्य भविष्यत्वद्योतको वा ॥ एतान् भीष्मद्रोणादीन् निरीक्षे पश्यामि । अहं स्वयमेव साक्षात् । योद्धुकामान् युद्धेच्छून् । भयाद्विषण्णा अपि ये वैय्यात्यात् युद्धकामाः अवस्थिताः तान् अवस्थितान् व्यूढान् ॥

मधुसूदनः ॥ "कैस्सह मया योद्धव्यम् । मत्कर्तृकयुद्धप्रतियोगिनः के । अथवा मया सह कैर्योद्धव्यम् किं कर्तृकयुद्धप्रतियोग्यहम्" इति । रणसमुद्यमे युद्धव्यापारे । सेनयोरुभयोर्मध्ये रथं स्थापयेति पूर्वमुक्तत्वात् तदानुगुण्येन सेनयोरुभयोरपि स्थितानपश्यदिति वक्ष्यमाणत्वाच्च अर्जुनः स्वबलं परबलं च द्रष्टुमैच्छत् इति भाति ॥ कैर्मया सह स्थित्वा परैर्योद्धव्यमिति योजनायां स्वसैन्यदर्शनाभिप्रायो गम्यते॥ योद्धुमवस्थितानित्यनुक्त्वा योद्धुकामानवस्थितानित्युक्तिः युद्धे इच्छा परं वर्तते न तु युद्धे सामर्थ्यं इति सूचयितुम् । योत्स्यमानान् युद्धाभिमुखान अवेक्षे पश्यामि । ये एते अत्र समागताः मिलिताः धार्तराष्ट्रस्य दुर्योधनस्य दुर्बुद्धेः अयोग्यस्य स्वरक्षणोपायं अजानतः युद्धे प्रियचिकीर्षवः युद्धेन इष्टमर्थं संपादयितुकामाः नतु दुर्बुध्यपनयनादौप्रवृत्ताः । युद्धे अप्रियचिकीर्षव इति पदच्छेदे पद्यस्य स्वपक्षयोधपरतया व्याख्या उपपद्यते ॥

अथवा योजना । भीष्मादीनां कल्यावेशेन दुर्बुद्धेः सत्वात् धार्तराष्ट्रस्य दुर्बुद्धेर्हेतोः । तदुपदेशदानमानादिनेति यावत् । दुर्बुद्धेर्धार्तराष्ट्रस्य प्रियचिकीर्षवः भीष्मादयइति ॥ तच्चोक्तं ॥ म. भा. ता, १९ अ० ॥

"एवं हि सैनिकगणा अपि दानमानैः प्रायोवशं मम गता अपि चैषकर्णः ।
अस्त्रे बलेप्यधिकएव सुरेन्द्रसूनोर्जेष्ये च मन्त्रबलतस्त्वहमेव भीमम् ॥

द्रौणेर्हि नास्ति सदृशो बलवान् प्रतापी
सोयं मया बहुविधैः परमैरुपायैः ।
नीतो वशं मम गतोस्य च मातुलेन
साकं पिता तमनु चैष नदीप्रसूतः" ॥

"इत्युक्ता अपि भीष्माद्याः कल्यावेशेन मोहिताः" इति च ॥ श्री. म. ता०, अ. २९ श्लोक ३३५ ॥ युद्धेप्रियकारित्वंच—

"अब्रवीद्धार्तराष्ट्रांश्च द्रोणो विप्रोऽपि सन्नहम् ।
सपुत्रः सकृपः शस्त्रं ग्रहीष्ये भवतां कृते ॥
रक्षणे भवतां चैव कुर्यां यत्नं स्वशक्तितः ।
नतुभीमाद्रक्षितुं वः शक्तः सत्यं ब्रवीम्यहम्" ॥
इति म० भा० ता० अ २१ श्लो० ४८३ ॥

धार्तराष्ट्रस्येति प्रयोगेण धृतराष्ट्रस्य पितृत्वेन गौरवार्हत्वं तत्सुतस्यापीषत्क्षन्तव्यत्वं सूच्यते ॥ दुर्बुद्धेरिति प्रयोगेणापि दुर्योधनचरितं कुबुध्यधीनं। दुःसहवासादिबलात् भ्रान्तस्सन् करोति ॥ नायमात्यन्तिकः खलः । परन्तु सुबुद्धिविरहादमार्गे नीत इति ध्वन्यते । योद्धुकामानवस्थितानित्येकमेव वा पदम् । योद्धुकामेन युद्धेच्छया अनवस्थितान् अस्वस्थचित्तानित्यर्थः । इदमपि विशेषणं दुर्योधनस्य दोषह्रासेनान्ततः क्षन्तव्यत्वं सूचयति ॥ तदनुगानां क्षत्रियत्वात् युद्धातुरत्वादनवस्थितचित्तत्वं सहजमिति च ॥ किंच सार्धश्लोकद्वये अर्जुनप्रयुक्तानि कानिचित्पदान्यवेक्षणीयानि । स्थापयेति भगवन्तं प्रत्याज्ञा ॥ मे रथमिति स्वस्य रथस्वामित्वम् ॥ निरीक्ष इति उत्तमपुरुषप्रयोगानन्तरमपि अस्मद्युत्तम इति व्याकरणानुशासनं विस्मृत्येव पुनः अहमिति कर्तृवाचकपदप्रयोगः ॥ मया योद्धव्यं इति युद्धस्य भगवदधीनतां कालाद्यधीनतां स्वपारतन्त्र्यं च विस्मृत्य तस्य स्वकर्तृत्वावधारणम् ॥ अवेक्ष इति पुनः उत्तमपुरुषक्रिया । अनन्तरं अहमिति कर्तृवचनम् ॥ इति ॥ एतैरवगम्यते अहं ममेत्यसद्ग्राहं पुरस्कृत्य प्रवृत्तं वचनमिति । यानि भगवान् द्वितीयाध्याये स्वमनीषोत्थवचनत्वेन प्रज्ञावाद इति दूषयति ॥ तेषां वादानां इयं अहंतामूलता ममतामूलता च पीठिका॥ अर्जुनस्य ज्ञानित्वेऽपि मानुषान्नभोजनात् ईषत्तिरोभावोऽङ्गीकृतः । अर्जुनं निमित्तीकृत्य लोकोपदेशाय गीतायाः प्रवृत्तेः सामान्यलोकवदहङ्कारमोहादिकं प्रकाशयतीति नात्रसिद्धान्तविरोधः ॥

सजयउवाच—

**एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।**
**सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥२४॥**

वि० ॥ एवं गुडाकेशेन गुडाकाया निद्राया ईशेन जित-निद्रेणार्जुनेनोक्तो हृषीकेशः सर्वेन्द्रियप्रेरकः श्रीकृष्णः बल-द्वयमध्ये ॥

विचारः

एवं उक्तप्रकारेण । 'अङ्गुष्ठतर्जनीयोगो गुडानाम्नीति मुद्रिका' इतिवचनादङ्गुष्ठतर्जनीयोगोगुडेत्युच्यते । तत्परिमाणाः अग्रकेशाः यस्य सः गुडाकेशइति शङ्करानन्दः ॥ सेनयोः बलयोः उभयोः (कुरुपाण्डवसंब-न्धिन्योः) रथोत्तम रथिकसारथिभ्यां अश्वविशेषैः ध्वजप्रभावेणचोत्कृष्टत्वेन तद्रथस्योत्तमत्वम् । अग्निना दत्तो दिव्यरथइति भगवता सारथ्येनाधिष्ठित इति च तस्य सर्वोत्तमत्वम् ॥

**भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ।**
**उवाच पार्थ पश्यैतान् समवेतान्कुरूनिति॥२५॥**

वि० ॥ भीष्मद्रोणप्रमुखतः तदाभिमुख्येन तथा सर्वेषां च महीक्षितां राज्ञां प्रमुखत इति बुध्या विविक्तेनान्वयः ॥ रथं स्थापयित्वा हे पार्थ! समवेतान् युद्धार्थं मिलितानेता न्कुरून्पश्येत्युवाचेति ॥

विचारः

भीष्मद्रोणप्रमुखत इति भीष्मद्रोणयोः पृथक्कीर्तनं प्राधान्यसूचनाय ॥ सर्वेषां च ॥ चस्समुच्चयार्थ. अवधारणार्थो वा ॥ चकारेण समासनिविष्टोऽपि 'प्रमुखतः' शब्दः आकृष्यते ॥ आह देशिकः ॥ "यद्वा भीष्मद्रोणप्रमुखतः इत्यत्र मुखशब्दः आदिशब्दसमानार्थः तद्गतस्तसिप्रत्ययश्च सार्वविभक्तिकत्वात् षष्ठीबहुवचनार्थः । भीष्मद्रोणादीनां महीक्षितामित्यन्वयः" इति । भीष्मद्रोणयो राजत्वाभावादिदं व्याख्यानं न सम्यक्। छत्रिन्यायेनात्र भीष्मस्यैव महीक्षित्वम् इत्याशये तु वक्तव्यं ॥ नहि महीक्षिच्छब्दः क्षत्रियपर्यायः किंतु राजपर्यायः। न च भीष्मस्य राजत्वं । अतः छत्रिन्यायस्याप्यत्रावकाशो नास्तीति ॥ प्रयोजनाभावाच्च छत्रिन्यायानुसरणं अयुक्तम् ॥ प्रमुखशब्दस्य आदिशब्दार्थत्वे अन्वयोपि नास्ति ॥ न च मध्ये इत्यनेनान्वयः। सेनयोरुभयोर्मध्य इत्यनेन पुनरुक्तिप्रसङ्गात् । सर्वमहीक्षितां सेनान्तर्गतत्वात् रथगजतुरगपदातिरूपत्वात्तस्याः ॥

छत्रिन्यायानुसारे अस्वरसात् "भीष्मद्रोणाभिमुख्येन तथा महीक्षितां च प्रमुखतः स्थापयित्वा उवाचेति" विवृतिकारा व्याकरिष्यन्ति ॥ प्रमुखत इत्येतत् स्थापयित्वेत्यनेन उवाचेत्यनेन च संबध्यते ॥ अर्जुनवचनं श्रुत्वा रथमपेक्षितप्रदेशे स्थापयामासेति ध्वनिः ॥ हृषीकेशस्सर्वज्ञोऽर्जुनस्य शोकमोहावुपस्थिताविति विज्ञाय तदानीं किंचिदप्यनुक्त्वा सपदि रथं प्रचोदयामास ॥ सर्वथा निर्भयस्सन् शत्रुनिवहे रथं स्थापितवान् । न केवलं दर्शनपथे । अपि तु श्रोत्रपथे निक्षिप्य सापहासमुवाच पश्येति । उपदेशप्रकरणे भीष्ममनुगृह्णन् परसैन्यायुर्हर्तुं श्रीकृष्णः एवं चकारेत्यपि भाति । यथोक्तं भागवते ॥ प्र. स्क. भीष्मस्तुतौ ॥

"सपदि सखिवचो निशम्य मध्ये निजपरयोर्बलयोरथं निवेश्य ।
स्थितवति परसैनिकायुरक्ष्णा हृतवति पार्थसखे रतिर्ममास्तु ॥" इति

तत्रापश्यात्स्थितान्पार्थः पितॄनथ पितामहान् ।
आचार्यान् मातुलान् भ्रातॄन् पुत्रान्पौत्रान् सखीं-
[स्तथा ॥ २६ ॥

वि० तत्रेत्यस्य विवरणं सेनयोरुभयोरपीति । तथेति समुच्चये ॥ २६ ॥

रा० (तत्रापश्यत्स्थितान्पार्थ इत्यारभ्य एवमुक्त्वार्जुनः संख्ये इत्यन्तं) स तु पार्थो महामनाः परमकारुणिको दीर्घबन्धुः परमधार्मिकः सभ्रातृको भवद्भिरतिघोरैर्मारणैर्जतुगृहादिभिरसकृद्वंचितोपि परमपुरुषसहायेनात्मना हानिष्यमाणान्भवदीयान्विलोक्य बन्धुस्नेहेन परमया च कृपया धर्मभयेन चातिमात्रखिन्नसर्वगात्रः सर्वथाहं नयोत्स्यामीत्युक्त्वा बन्धुविश्लेषजनितशोकसंविग्नमानसः सशरं चापमुत्सृज्य रथोपरि उपाविशत् ॥

विचारः

तत्र सेनयोरुभयोः । यत्र रथः स्थापितस्तत्र स्थित्वा अपश्यत् ददर्श । स्थितान् विद्यमानान् पार्थः कुन्तीपुत्रः पितॄन् पितृसदृशत्वात् पितृव्यान् भूरिश्रवः प्रभृतीन्—अथ भगवदुक्तेरनन्तरं । अथवा अथ शब्दः तथा शब्दपर्यायः । पितामहान् भीष्मसोमदत्तप्रभृतीन् आचार्यान् द्रोणादीन् मातुलान् शल्यशकुनिप्रभृतीन् भ्रातॄन् दुर्योधनादीन् पुत्रान् लक्ष्मणप्रभृतीन् पौत्रान् लक्ष्मणादिपुत्रान् सखीन् अश्वत्थामजयद्रथप्रभृतीन् वयस्यांस्तथा ॥

**श्वशुरान् सुहृदश्चैव सेनयोरुभयोरपि ।**
**तान्समीक्ष्य सकौंतेयस्सर्वान्बंधूनवस्थितान्॥२७**

वि० तानवस्थितान् सर्वान्बन्धून्समीक्ष्यैवेत्येवकारेणान्वयः ॥ २७ ॥

विचारः

श्वशुरान् भार्याणां जनयितृन् सुहृदः मित्राणि कृतवर्मभगदत्तप्रभृतीन्। सुहृद इत्यनेन यावन्तः कृतोपकाराः मातामहादयश्च ते द्रष्टव्याः ॥ (म० स०) सेनयोरुभयोः स्वसैन्ये परसैन्ये च। उक्तरीत्या पित्रादीन् स्वसेनायामप्युपलक्षणीयम् । तान् उक्तान् समीक्ष्य ग्रीवामुन्नमय्य सम्यग्दृष्ट्वा सः युद्धकर्मणि प्रवृत्तः कौन्तेयः अर्जुनस्सर्वानखिलान्बन्धून् बन्धुत्वधर्मविशिष्टानेवावस्थितान् युद्धसन्नद्धान् ॥ २७ ॥

---

**कृपया परयाविष्टो विषीदन्निदमब्रवीत् ॥**

*अर्जुन उवाच—*

**दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ।**
**सीदन्ति मम गात्राणि मुखं च परिशुष्यति॥२८**

वि० विषीदन्विषादं कुर्वन् । विषादो नाम मोहनिमित्तकाच्छोकाद्यन्मनोदौर्बल्यं यस्मिन्सति सर्वव्यापारोपरमो भवति स इति ज्ञेयम् । इदमब्रवीदित्युक्तमर्जुनवाक्य-

माह । दृष्ट्वेत्यादिना आध्यायसमाप्ति । हे कृष्ण ! सकललोककर्षक । तदुक्तं गीताभाष्ये पंचमेऽध्याये । "नियमनादिना सकललोककर्षणात्कृष्णः" । तच्चोक्तम् । "यतः कर्षसि देवेश नियम्य सकलं जगत् । अतो वदन्ति मुनयः कृष्णं त्वां ब्रह्मवादिनः, इति महाकौर्मे" इत्युक्तेः ॥ युयुत्सुं योद्धुमिच्छन्तं सम्यगवस्थितं इमं बन्धुजनं दृष्ट्वा ॥ मम गात्राणि हस्ताद्यवयवाः सीदन्ति विशीर्यन्ते षद्लृविशरणगत्यवसादनेष्विति धातोः। मुखे म्लानताच जायते ॥ इति ॥

विचारः

कृपया दयया परया उत्कृष्टया ॥ अपरयेति वा पदच्छेदः। जघन्यया। आविष्टः व्याप्त. युक्तः । ननु कृपयाविष्ट इत्ययुक्तं । शत्रुवधे प्रवृत्तस्य हन्तव्येषु तेषु कृपायोगात् । अत आह । परयेति । विलक्षणयेत्यर्थः ॥ वैलक्षण्यमेवोपपादयति । तान्बन्धून्समीक्ष्येति ॥ सम्यक् पितृत्वाचार्यत्वादिप्रकारेण ईक्षित्वेत्यर्थः । हननबुध्या प्रवृत्तस्यैव पितृत्वादिप्रकारकतत्साक्षात्कारानन्तरं एते न हन्तव्या इति विपरीतबुध्युदये सति ततो मन्निमित्तकमेतेषां मरणदु.खं माभूदित्येवमाकारकमनोवृत्तिरूपा काचित्कृपा जाता । सा च आततायिषु वस्तुतो हन्तव्येषु दुर्योधनादिषु अस्थाने पातिनीतिलोकप्रसिद्धकृपाविलक्षणैवेत्यतो मोहविकाररूपेयं कृपेत्यर्थः । आविष्ट इत्यनेन च अकस्मात्पिशाचावेशवत् कृपाख्यमोहावेशो जातइति सूच्यते ॥ विषीदन् उपतापं प्राप्नुवन् ॥ विशेषेण सीदन् । अवसादं ग्लानि लभमानः । (श्री) । इदं वक्ष्यमाणं अब्रवीत् उवाच । दृष्ट्वा मदीया इति ज्ञात्वा इमं पुरस्थं स्वजनं ॥ पितृपुत्रादिकं ॥ कृष्ण हे भगवन् ! युयुत्सुं योद्धुकामं समुपस्थितं सन्नद्धं समीपे वर्तमानम् ॥

मुखं वदनं परिशुष्यति शुष्को भवति निर्द्रवी भवति। श्रमादिनिमित्तशोषापेक्षयातिशयकथनाय सर्वतोभाववाचिपरिशब्दप्रयोगः ॥ (म० स०)॥ नन्वत्र कृपयापरयेति कृपाया उत्कृष्टत्वमुच्यते । तदनुपपन्नम् । अयोग्येषु कृपाया अयुक्तत्वात् । न च वाच्यं सौगतजैनवादोक्तरीत्या अहिंसा परमोधर्म इति ॥ वैदिकहिंसाया अवश्यमनुष्ठेयत्वात् । शान्तिपर्वणि अर्जुनेनैव दण्डनीतिप्रशंसापूर्वकं विहिताया हिंसायास्स्तुतत्वात् ॥ यथोक्तम् । "न हि पश्यामि जीवन्तं लोके किंचिदहिंसया । सत्वैस्सत्वाहि जीवन्ति दुर्बलैर्बलवत्तराः ॥ राजदण्डभयादेके पापाः पापं न कुर्वते । यमदण्डभयादेके परलोकभयादपि । परस्परभयादेके पापाः पापं न कुर्वते ॥" इति ॥ न च वैधहिंसायाधर्मत्वेऽपि बन्धुवधः सर्वात्मना निषिद्ध इति वाच्यम् । नारायणद्विट्तदनुबन्धिनिग्रहस्य क्षत्रियाणां परमधर्मत्वात् । नापिवाच्यं भूधनाद्यर्थं वधो निन्द्य इति । युद्धस्य निष्कामनया भगवत्प्रीत्यर्थमेव कर्तव्यत्वेन काम्यफलार्थं युद्धं कर्तव्यमिति यदर्जुनवाक्यं तस्य भ्रान्तिमूलत्वात् ॥ तस्मात्कृपायाः परत्वमनुपपन्नमिति चेन्न । अत्र विवक्षितं परत्वं उत्कटत्वमात्रम् ॥ अतिशयितया कृपयाऽऽविष्ट इत्यर्थः ॥ न तु शास्त्रसंमतया समीचीनयेति ॥ अथवा कृपयेत्यत्र अपरयेति पदविभागः ॥ तेनानुत्कृष्टत्वं गम्यते । किंच अपरयेत्यस्य अन्यया कालतो द्वितीयया इति व्याख्याने अर्थविशेषश्च लभ्यते ॥ यदुक्तं अर्जुनेनैवोद्योगपर्वणि ॥ "न चाहं कामये पापमपि कीटपिपीलयोः । किं पुनर्ज्ञातिषु वधं कामयेयं कथंचन ॥ एतदर्थं मया तात पञ्चग्रामावृताः पुरा"॥ इति॥ अनेन ज्ञायते कृपापूर्णस्सन् पूर्वमयं युद्धाद्विमुखो धर्मबुध्या युद्धे प्रवेशितः ॥ पुनरनुष्ठानसमये कृपापूर्णो विषसादेति कृपाया आवृत्तिः सूचितेति ॥

---

वेपथुश्च शरीरे मे रोमहर्षश्च जायते ।
गाण्डीवं स्रवते हस्तात्त्वक्चैव परिदह्यते ॥२९॥

वि० शरीरे कम्पो रोमांचश्च जायते धनुर्हस्तात्पतति । त्वक् च परितस्तप्यत एव ॥

विचारः

वेपथुः कंपः शरीरे गात्रे रोमहर्षः रोमांचः सन्तापेन रोमोद्गमः पुलकितत्वं ॥ गाण्डीवं धनुः स्रवते पतति ॥ अनेनाधैर्यलक्षणं दौर्बल्यं सूचितम् । गाण्डीवं इति । उद्योगपर्वणि जमदग्निना दुर्योधनं प्रति गाण्डीवमाहात्म्यं वर्णितम् ॥ ( " तस्माद्यावद्धनुःश्रेष्ठे गाण्डीवेऽस्त्रं न युज्यते । तावत्त्वं मानमुत्सृज्य गच्छन्राजन् धनंजयम् ॥ काकुदीकं शुकं नाकमक्षिसंतर्जनं तथा । सन्तानं नर्तकं घोरमास्यमोदकमष्टमम् ॥ एतैर्विद्धास्सर्वे एव मरणं यान्ति मानवाः । उन्मत्ताश्च विचेष्टन्ते नष्टसंज्ञाविचेतसः ॥ स्वपन्ति च प्लवन्ते च छर्दयन्ति च मानवाः । मूत्रयन्ते च सततं रुदन्ति च हसन्ति च ") इति । एतेषामस्त्राणां आध्यात्मिकाभिप्रायमाह ॥ " कामक्रोधौ लोभमोहौ मदमानौ तथैव च ॥ मात्सर्याहंकृती चैव क्रमादेतउदाहृताः " इति ॥

एतादृशं धनुरुद्यम्य । कामक्रोधाद्यपरपर्यायकाकुदीकादीन्यस्त्राणि प्रयोक्तुं जितेन्द्रियेणैव वशीकृतकामादिना भाव्यं (अर्जुनस्तु यदा अशास्त्रीयस्नेहवशो बभूव तदा गाण्डीवमपतद्धस्तादिति भावः) ॥ इदं " मन्वादि केचिद्ब्रुवते ह्यास्तिकादि तथापरे । तथौपरिचराद्यन्ये भारतं परिचक्षते " ॥ इतिप्रमाणोक्तं भारतश्लोकानां गूढार्थगर्भितत्वं दृष्टान्तयति ॥

---

न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ।
निमित्तानि च पश्यामि विपरीतानि केशव ॥३०॥

वि० ॥ अवस्थातुं च न शक्नोमि । मनश्च मे भ्रमतीव च । विपरीतानि निमित्तानि दुर्निमित्तानि च पश्यामि । केशव ! ब्रह्मरुद्रप्रवर्तक । कश्च ईशश्च केशौ तौ सृष्ट्यादिना वर्तयतीति व्युत्पत्तेः । केशपदोपपदाद्वृतुवर्तने इत्यतोंतर्णीतण्यर्थाड्डप्रत्यये रूपसिद्धेः । उक्तं हि स्थितप्रज्ञस्यकाभाषेत्येतद्भाष्ये । "हिरण्यगर्भः कः प्रोक्त ईशः शंकर एव च । सृष्ट्यादिना वर्तयाति तौ यतः केशवो भवान्" इति ॥

विचारः

अवस्थातुं शरीरं धारयितुं । भ्रमति इव मे मनः ॥ भ्रमणकर्तृसादृश्यं नाम मनसः कश्चिद्विकारविशेषोमूर्छायाः पूर्वावस्था । निमित्तानि वामनेत्रस्फुरणादीनि विपरीतानि दुःखसूचकानि पश्यामि अनुभवामि । विपरीतानि निमित्तानि भीष्मपर्वण्युक्तानि ॥ तानि च ॥ "दीप्यमानाश्चसंपेतुः दिवि सप्तमहाग्रहाः । द्विधाभूतइवादित्यः उदये प्रत्यदृश्यत ॥ ज्वलंत्या शिखया भूयो भानुमानुदितो रविः । ववाशिरे च दीप्तायां दिशि गोमायुवायसाः । लिप्समानाश्शरीराणि मांसशोणितभोजनाः" ॥ इति ॥

वें ॥ "रामरावणयुद्धे राक्षसारिष्टसूचकानि निमित्तानि रघुनाथेनेव वस्तुतः कौरवारिष्टसूचकान्येव निमित्तानि अर्जुनेनोपलब्धानि । परंतु अर्जुनेन तेषु स्वारिष्टसूचकत्वमारोप्यैवमुक्तमिति ध्येयम् ॥ केशवः क्लेशनाशयेति क्लेशनाशार्थं अनुसन्धेयतया पुराणप्रसिद्धेन केशवपदेन संबोधयन् दुःशकुनक्लेशनाशनमाशास्ते" ॥ ३० ॥

**न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे।**
**न कांक्षे विजयं कृष्ण न च राज्यं सुखानि च॥३१**

वि० युद्धेन श्रेयो लभ्यत इत्यत आह। न चेति। श्रेयश्च न पश्यामि। आहवे युद्धे विजयादिकं फलं नेच्छामि॥३१॥

विचारः

नच नापि। श्रेयः पुरुषार्थ। अथवा अनु पश्चात्। पश्यामि वीक्ष्ये विजाने। हत्वा स्वजनम् बन्धुवर्गं॥ यद्वा अस्वजनमिति पदविभागः। आहवे युद्धे न कांक्षे नेच्छामि विजयं॥ कृष्ण! न च नापि, राज्यं राष्ट्राधिपत्यं, सुखानि भूपत्वेन प्राप्यानि विषयसुखानि। अत्र हननं निषिद्धमिति सिद्धसाधनत्ववारणाय आहवे इत्युक्तं॥ ननु विपरीतानिमित्तानां परानिष्टसूचकतयोपपन्नत्वात्त्वन्निवृत्तौ न तानि कारणं भवन्ति। वधानन्तरं भवतः श्रेयो भविष्यत्येवेति चेन्न। यतः, अनु पश्चादपि, न श्रेयः पश्यामि॥ न च वाच्यं "द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ। परिव्राड्योगयुक्तश्च रणे चाभिमुखे हतः"। इति प्रमाणानुसारेण युद्धस्य पुरुषार्थोपायत्वमिति॥ यतः अत्र हतस्यैव पुरुषार्थोक्तिः न तु हन्तुः॥ अतो नाहं हत्वा श्रेयः पश्यामि॥ नन्वन्यवचनानां उभयोरपि श्रेयस्साधकानां विद्यमानत्वादिति चेन्न। यतः अनु, शास्त्रपर्यालोचनानन्तरमपि, न श्रेयः पश्यामि। ननु ज्ञातिश्चेदनलेन किमिति न्यायेन द्रोही स्वजनो वधार्ह इति चेन्न॥ यतः स्वजनवधान्नश्रेयः पश्यामि। जयार्थं राज्यार्थं वैषयिकसुखार्थं वा ज्ञातिवधः कर्तव्यः। तेषु ममेच्छाभावेन न श्रेयः पश्यामि॥ नापि वाच्यं अयमस्वजनः तमाहवे हन्तुं का नामाशङ्केति। फलाकांक्षाभावे निर्निमित्तास्वजनवधस्यापि हेयत्वात् इति भावः॥३१॥

**किं नो राज्येन गोविंद किं भोगैर्जीवितेन वा ।**
**येषामर्थे कांक्षितं नो राज्यं भोगास्सुखानि च॥३२**

वि० ॥ येषामर्थे प्रयोजननिमित्तं राज्याद्यपेक्षितं नः अस्माकं ॥

विचारः

किं नः किं प्रयोजनं । धर्माधर्मविवेकवतां अस्माकं राज्येन आधिपत्येन गोविंद हे कृष्ण! किं कि प्रयोजनम्॥ भोगैः सुखैः अथवा सुखसाधनैः जीवितेन जीवनेन ॥ अथवा जीवितसाधनेन विजयेन । कांक्षितं अपेक्षितं नः अस्माकं अस्माभिरित्यर्थः ॥ तृतीयार्थेषष्ठी । राज्यं भूपतित्वं । भोगाः सुखसाधनानि सुखानि च ॥ किं नः इति ॥ अधर्ममूलकं दोषावहमेतत्सर्वं सतां नाशास्यामित्यर्थः ॥ (शं आ०) 'अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत्' इति वचनात् पित्रादिभरणार्थं कृतोप्यधर्मो नदोषायेत्यत आह येषामर्थे इति । येषामर्थे अकार्यशतेनापि पोषणीयानां येषां पितृपुत्रादीनां अर्थे निमित्ते । अथवा किं नः किं प्रयोजनं इत्यस्यायं भावः । "इष्टैस्सह भुक्तं भुक्तं" इति न्यायानुरोधेन बंधुवर्गाभावे राज्यभोगादिसुखानि रसराहितानि भवन्तीति । यथाह कुंती ।

("अरिभिर्या न खिद्येत सुहृद्भिर्या न तृप्यते । किं तयार्जितया राजन्विदेशगतया श्रिया" ॥ इति.)

**तइमेऽवस्थितायुद्धे प्राणांस्त्यक्त्वा धनानि च ।**
**आचार्याः पितरः पुत्रास्तथैव च पितामहाः**
**॥ ३३ ॥**

वि० तइमे बांधवाः प्राणान्धनानिच त्यक्त्वा युद्धे व्यवस्थिताः। ते के इत्यत आह। आचार्या इति। नैवेच्छामीत्यन्वयः ।

विचारः ।

ते इमे अवस्थिताः तिष्ठन्ति प्राणान् त्यक्त्वा । जीविताशां त्यक्त्वा । धनानि धनाशां ॥ आचार्याः केचित् ॥

**मातुलाः श्वशुराः पौत्राः श्यालाः संबंधिनस्तथा ।**
**एतान्न हंतुमिच्छामि घ्नतोऽपि मधुसूदन ॥ ३४**

वि० यदि मां युद्धान्निवृत्तमेते हन्युस्तर्हि घ्नतोपि नैव हन्तुमिच्छामीत्यर्थः । हे मधुनामकदैत्यमर्दन ।

विचारः

तथा एवं सर्वे स्वजना एव नान्ये इत्यर्थः। खड्गैर्मां घ्नतोऽपि हिंसतोऽपि एतान् आचार्यादीन् हन्तुं नेच्छामि ॥

वें ॥ ननु 'जिघांसन्तं जिघांसीयादि' तिवचनात् आचार्यादयोऽपि जिघांसन्तो हन्तव्या इत्यत आह । घ्नतोऽपीति । "गुरुं त्वंकृत्य हुंकृत्य विप्रं

निर्जित्य वादतः । श्मशाने जायते वृक्षः कङ्कगृध्रोपसेविते " । इति शब्दमात्रेणापि गुरुद्रोहस्य अनिष्टफलकत्वश्रवणात् जिघांसन्तं इति वचनं आचार्याद्यतिरिक्तविषयकमिति भावः ॥ इति ॥ ३४ ॥

## अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ।
## निहत्य धार्तराष्ट्रान्नः काप्रीतिः स्याज्जनार्दन॥३५

वि० कैमुत्यन्यायेनाप्याह । अपीति । त्रैलोक्यराज्यस्यापि हेतोरेतान्हन्तुं नेच्छामि ॥ किमुत महीमात्रनिमित्तमिति ॥ किंच धार्तराष्ट्रान्निहत्य नोऽस्माकं का प्रीतिः । किमैहिकं सुखं । न किमपि । नापि पारत्रिकं प्रत्युत पारत्रिकदुःखहेतुः पापमेवास्मानाश्रयेत् । न जायत इति जनः, अर्दयति संसारमित्यर्दनः, जनश्चासौ अर्दनश्च जनार्दनः। तस्य संबुद्धिः । उक्तं ह्येवं गीताभाष्ये दशमे ॥

विचारः

त्रैलोक्यराज्यस्य हेतोः अपि त्रैलोक्याधिपत्यप्राप्त्यर्थमपि । किन्तु किमुत महीकृते भूमात्रप्राप्तये धार्तराष्ट्रादीन् दुर्योधनादीन् भ्रातॄन्निहत्य हत्वा नः स्थितानां अस्माकं का प्रीतिः स्यात् ॥ ३५ ॥

पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः ।
तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान्सबांधवान्॥३६

वि० आततायिनः । "अग्निदोगरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारापहारी च षडेते ह्याततायिनः" इत्युक्तलक्षणात् ॥ तस्मात्सीदन्ति मम गात्राणीत्यादिनोक्तोपपत्तिबलात्सबान्धवान्धार्तराष्ट्रान्हन्तुं वयं नार्हाः । "आततायिनमायान्तं हन्यादेवाविचारयन् । नाततायिवधे दोषो हन्तुर्भवति कश्चन" इत्युक्तेस्तेषां आततायित्वेन हन्तव्यतया प्राप्तत्वेपि तद्धननप्रसक्त्या बन्धूनामपि हननप्राप्तेर्नहन्तुं वयं योग्या इति भावः ॥

विचारः

पापं पारत्रिकदुःखहेतुर्दोषविशेषः । 'एव'—अवधारणे । न तु किंचिदपि पुण्यमाश्रयेत् इति भावः॥ आततायिनः आततायाः दोषाः येषां सन्ति ते आततायिनः । तान्। ननु त्रैलोक्यराज्यार्थमपि हन्तुं नेच्छामि इत्युक्तमसंगतम्। आततायिवधस्य शास्त्रसंमतत्वात् पारत्रिकसुखसाधनत्वाच्च॥ न हि दुर्योधनादयः नाततायिनः । अग्निदोगरदश्चेति स्मृत्युक्तलक्षणात् तेषामाततायित्वस्य स्फुटत्वात् । "उद्यतासि विषाग्निं च शापोद्यतकरं तथा। आथर्वणेन हन्तारं पिशुनं चैव राजसु । भार्यातिक्रमणं चैव विद्यात्सप्ताततायिनः" इति विष्णूक्तेः । किंच ("उद्यम्य शस्त्रमायान्तं भ्रूणमप्याततायिनम् । निहत्य भ्रूणहा नस्यादहत्वा भ्रूणहा भवेत्" इति देवलः)। भ्रूणो ब्राह्मणविशेषः । यथाह देवलः । "अनूचानो गुणोपेतो यज्ञस्वाध्याय-

यन्त्रितः । भ्रूण इत्युच्यते शिष्टैः शेषभोजी जितेन्द्रियः" इति ॥ किंच मनुः । "गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् । आततायिनमायान्तं हन्यादेवाविचारयन्" इति ॥ जतुगृहदाहेन विषप्रदानेन धनक्षेत्रदारापहारेभ्यश्च शस्त्रपाणित्वेनावस्थिता दुर्योधनादय. आततायिन इत्यत्र न काप्याशङ्का इति तद्वधो विहित एवेत्यत आह पापमेवेति । यद्यप्येतेषां आततायित्वमभ्युपगम्यते । तथापि आततायित्वेन हन्तव्यतया प्राप्तत्वेऽपि तद्धननप्रसक्त्या बन्धूनामपि हननप्राप्तेः प्रकृते आततायिवधो दोषाय भवति ॥ किंचाततायिवधः शास्त्रविहित इति यत् तच्चिन्त्यम् । अर्थशास्त्रे खल्वयं वध उक्तः ॥ धर्मशास्त्रे तु नहिंस्यात्सर्वभूतानि इति हिंसामात्रं सर्वात्मनाप्रतिषिद्धम् । अर्थशास्त्राद्धर्मशास्त्रस्य प्राबल्यं स्मृतावेवोक्तम् । यथा "स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः । अर्थशास्त्राद्धि बलवद्धर्मशास्त्रमिति स्थितिः" इति ॥ एवं बलाबलचिन्तायां अवच्छेदकावच्छेदेन हिंसाया निषेध एव शास्त्रार्थः । किच अर्थशास्त्रविहितत्वेन दौर्बल्यानङ्गीकारेपि आततायिनो द्विविधाः । उत्कृष्टाः अपकृष्टाश्चेति । आद्येतद्धननं निषिद्धम् ॥ यथाह कात्यायनः । "आततायिनि चोत्कृष्टे तपस्वाध्यायजन्मतः । वधस्तत्रतु नैव स्यात् पापे हीने वधो मतः ॥ आततायिनमुत्कृष्टं वृत्तस्वाध्यायसंयुतम् । यो न हन्याद्वधप्राप्तं सोश्वमेधफलं लभेत्" इति च ॥ तथा चोत्कृष्टाततायिवधे प्रत्यवायः, वधान्निवृत्तौ अश्वमेधसुकृतमित्युक्तेः, भीष्मद्रोणादीनां उत्कृष्टत्वात् पापमेवाश्रयेदिति साधूक्तम् ॥ अत एव शान्तिपर्वणि युद्धप्राप्तपापपरिहाराय पाण्डवान्प्रत्युक्तम् । "अश्वमेधेन शुध्यन्ति महापातकिनस्त्विमे" इति ॥ एतानाततायिनो हत्वा अस्मान्पापमेवाश्रयेदित्येका योजना ॥ अस्मत्कर्तृकाततायिकर्मकं हननं अस्माकं पापसाधनमित्यर्थः । यद्वा अस्मान्निरपराधिनः युद्धाद्विमुखान्हत्वा त आततायिनो भवन्ति ॥ तानेव पापमाश्रयेत् ॥ आततायिकर्तृकं अस्मत्कर्मकं हननं आततायिनां तेषामेव पापसाधनमित्यर्थः । "एत एवास्मद्वधेन नश्यन्तु न तु वयं एतेषां वधेन नंक्ष्यामः" इति (नीलकण्ठः) ॥ ३६ ॥

**स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ।**
**यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ॥ ३७ ॥**

वि० बन्धुत्वेऽप्याततायिसंबन्धित्वात्तेऽपि बन्धुजना हन्तव्या एवेत्यत आह ॥ स्वजनं हीति ॥ स्याम भवेम । तद्दर्शनस्पर्शनसंभाषणादेरभावप्राप्तेरिति भावः ॥ कुत एवं बुद्ध्या ते न निवृत्ता इत्यत आह ॥ यद्यपीति ॥ एते दुर्योधनादयः राज्यलोभेनोपहतचेतसः नष्टधर्मज्ञानाः दोषं पातकं न च पश्यन्ति ॥ यद्यपि तथापि ॥ ३७ ॥

विचारः

लोभः ॥ ( " परवित्तादिकं दृष्ट्वा नेतुं यो हृदि जायते । अभिलाषो द्विजश्रेष्ठ सलोभः परिकीर्तितः " ॥ पद्मपु० । परद्रव्येषु अतिशयिताभिलाषो लोभः । लोभरूपोपाधिग्रस्तत्वात्परेषां नष्टधर्मज्ञानत्वं । किंच भा० आ० १६७ युधिष्ठिरेण पापस्य किं कारणमिति प्रश्ने लोभ एव कारणमिति भीष्म आह ॥ यथा ॥ "एको लोभो महाग्राहो लोभात्पापं प्रवर्तते । लोभान्मोहश्च माया च मानः स्तम्भः परासुता । लोभात्क्रोधः प्रभवति लोभात्कामः प्रवर्तते ॥ अक्षमा ह्री परित्यागः श्रीनाशो धर्मसंक्षयः ॥ अभिध्याऽप्रख्यता चैव सर्वं लोभात्प्रवर्तते ॥ अत्यागश्च कुतर्कश्च विकर्मसु च याः क्रियाः ॥ कुलविद्यामदश्चैव रूपैश्वर्यमदस्तथा ॥ सर्वभूतेष्वभिद्रोहः सर्वभूतेष्वसत्कृतिः ॥ सर्वभूतेष्वविश्वासः सर्वभूतेष्वनार्जवं ॥ हरणं परवित्तानां परदाराभिमर्शनम् ॥ वाग्वेगो मनसोवेगो निंदावेगस्तथैव च ॥ उपस्थोदरयोर्वेगो मृत्युवेगश्च दारुणः ॥ ईर्ष्यावेगश्च बलवान् मिथ्यावेगश्च दुर्जयः ॥ कुत्सा विकत्था मात्सर्यं पापं दुष्कर्मकारिता " इति ॥ शां० अन्यत्रापि १६१ अ० । )

"ततः प्रभवति क्रोधः कामो वा भरतर्षभ ।। शोकमोहौ विधित्सा च परासुत्वं तथा मदः ।। लोभो मात्सर्यमीर्ष्या च कुत्सासूया कृपा भयम् ।। अज्ञानप्रभवो लोभो भूतानां दृश्यते सदा ।। एते हि धार्तराष्ट्राणां सर्वे दोषास्त्रयोदश" इत्यादिना लोभादिदोषाः धार्तराष्ट्राणां भीष्मेणैवोक्ताः । "एतादृशसर्वानर्थकारणलोभेनोपहतचेतसः नष्टधर्मज्ञाना इत्यर्थः ।। तादृशलोभरूपोपाधिग्रस्तत्वात्परेषां नष्टधर्मज्ञानत्वम् । अन्यथास्थितवस्तुनः अन्यथाप्रकाशकरूपे निमित्तविशेषे ह्युपाधिशब्दः प्रयुज्यते । उपाधीयते दूष्यते विनाश्यते अभिभूयते स्वधर्मो अनेनेत्युपाधिः । स्वसामीप्यादिना अन्यस्मिन्स्वधर्मारोपसाधनं यथाजपाकुसुमसान्निध्यात् स्फटिकस्य लौहित्ये सति संसर्गारोपसाधनं सान्निध्यं कुसुमं वा उपाधिरित्युच्यते । प्रकृते लोभ एवोपाधिः ।। अत एव लोभजन्याज्ञानपरवशाद्दुर्योधनादयः ।। तैरज्ञानेन कृतं पापं प्रायश्चित्तार्हं स्यात् । यथाह याज्ञवल्क्यः ।। "प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत् । कामतोऽव्यवहार्यस्तु वचनादिह जायते" ।। इति अ० २२६ ।।

तस्मादावयोरस्ति वैषम्यं, लोभानुपहतचेतसामस्माकं प्रायश्चित्तानर्हं पापं भवेत् परेषां तु न तथेति ।।

**कुलक्षयकृतं दोषं मित्रद्रोहे च पातकं।**
**कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुं॥३८**

**कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन।**
**कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः॥ ३९**

वि० हे जनार्दन जननरहित संसारार्दन! कुलक्षयकृतं दोषं प्रपश्यद्भिरस्माभिः अस्माद्दोषान्निवर्तितुं कथं न ज्ञेयम्। कः कुलक्षयकृतो दोष इत्यत आह। कुलक्षय इति। सनातनाः परंपराप्राप्ताः कुलधर्माः क्षत्रियादिकुलधर्माः॥ ३८, ३९॥

विचारः

कुलक्षयकृतं कुलक्षयकरणेन प्राप्तं दोषं प्रत्यवायम्। मित्रद्रोहे विश्वासघाते, तज्जन्यमित्यर्थः। पातकं पापम्॥ "मित्रद्रोहे निष्कृतिर्नास्तिलोके महत्पापं ब्रह्महत्या समं तत्"॥ (इति भा० आ० १० अ) इत्यादिनोक्तं च॥ यद्यपि न पश्यन्तीति पूर्वेणान्वयः॥ अस्माभिः पण्डितैः अस्मात्पापात् कुलक्षयकृतात् पापात् निवर्तितुं कथं न ज्ञेयमिति काकुः॥ कथं न विचारितव्यं विचारितव्यमेव। निवृत्तावेव बुद्धिः कर्तव्या॥ प्रपश्यद्भिः विजानद्भिः। जनार्दन हे कृष्ण॥ कुलक्षये कुलनाशे सति॥ कुलपदेन कुलसंबन्धिनः पुरुषा लक्ष्यन्ते॥ कुलधर्मप्रवर्त्तकपुरुषक्षये सति॥ प्रणश्यन्ति प्रकर्षेण नश्यन्ति। कुलधर्माः कुलानुरूपेण जात्यनुरूपेण च कर्तव्याः आचारविशेषाः॥ सनातनाः वंशपारंपर्येणागताः॥ कुलक्षयदोषं प्रपश्यद्भिः इत्यनुवादेन 'मित्रद्रोहे पातक'मित्युक्तं प्रासङ्गिकमित्यवगम्यते॥ यदि कुलक्षयदोषः मित्रद्रोहपातकं च

पाण्डवानां संभावितत्तया शङ्किते स्यातां तर्हि "कुलक्षयकृतं दोषं प्रपश्यद्भि"रिति तन्मात्रस्यग्रहणमनुपपन्नं स्यात् ॥ नापि मित्रद्रोहशङ्कायाः अवसरो दृश्यते ॥

ननु "आहूतो न निवर्तेत द्यूतादपि रणादपि" इति रणार्थमाहूतेनार्जुनेन तस्मान्निवृत्तिरधर्म इत्यत आह 'कुलक्षयकृतं दोषं प्रपश्यद्भि'रिति ॥ अनिवृत्तिस्मृतिर्लोभमूलका कुलक्षयदोषविधिना बाध्यत इति भावः ॥ आहूतयुद्धादनिवृत्ति. क्षत्रियाणां धर्म इति सामान्यविधेः कुलक्षयदोषानर्थान्तराननुबन्धित्वे सतीति विशेषणनिबद्धत्वात् ॥ तादृशानर्थपरिज्ञानाभावे तु प्रसक्तस्य प्रायश्चित्तैः परिहार्यत्वं स्यात् ॥ परिज्ञाने सति युद्धान्निवृत्तिरेव धर्म इति भावः ॥

**धर्मे नष्टे कुलं कृत्स्नमधर्मोभिभवत्युत ।**
**अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः॥४०॥**

वि० उत शब्दोप्यर्थे । अवशिष्टं कृत्स्नमपि कुलधर्मोभिभवति अधर्माक्रान्तं भवति ॥ ४० ॥

विचारः

धर्मे कुलाचारे जात्याचारे । नष्टे स्वरूपेणादर्शनंगते सति । कुलं कृत्स्नं सर्व कुलम् । अधर्मः अनाचारः । अधर्माभिभवात् अनाचारवृद्धेः । प्रदुष्यन्ति कुवृत्त्या दूपिताभवन्ति ॥ कुलस्त्रियः प्रदुष्येयुरित्यर्थः ॥ अस्मदीयैः पतिभिः धर्ममतिक्रम्य कुलक्षयः कृतश्चेदस्माभिरपि व्यभिचारे कृते को दोषस्स्यादित्येवं कुतर्कहताः कुलस्त्रियः प्रदुष्येयुरित्यर्थः । अथवा कुलक्षय-

कारिपतितपतिसम्बन्धादेव स्त्रीणां दुष्टत्वं॥ (म० स०) कुलस्त्रियः प्रदुष्यन्तीत्येतद्भारते आनुशासनपर्वणि उक्तम्॥ अ० ३८॥

"अनर्थित्वान्मनुष्याणां भयात्परिजनस्य च॥ मर्यादायाममर्यादाः स्त्रियस्तिष्ठन्ति भर्तृषु"॥ इति॥

**स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः।**
**संकरो नरकायैव कुलघ्नानां कुलस्य च॥ ४१॥**

वि० वार्ष्णेय वृष्णिकुलोद्भव॥ कुलस्य चेति पुत्रपौत्रादिसन्तानस्य चेत्यर्थः॥ ४१॥

विचारः

स्त्रीषु सतीषु। दुष्टासु पतितासु। जायते उद्भवति। वर्णसंकरः आनुलोम्येन प्रातिलोम्येन च ब्राह्मणादिवर्णानां संकीर्णता। संकरः व्यवस्थामतिक्रम्य संकीर्णता। नरकायैव नरकप्राप्त्यै एव। कुलघ्नानां इति। कुलधर्मव्यवस्थापकपुरुषनाशकाः कुलघ्नाः। (शं० आ०) तेषां। कुलस्य च, कुले विद्यमानानां उत्पत्स्यमानानां च पुत्रपौत्रादिसन्तानस्य च॥

आनुलोम्येन प्रातिलोम्येन वा संकरो यथा॥

| | | | |
|---|---|---|---|
| ब्राह्मणपितुः। | क्षत्रियावैश्याशूद्रान्यतममातरि॥ | जातः॥ | अपसदः। |
| क्षत्रियपितुः। | वैश्यमातुः शूद्रमातुर्वा॥ | जातः॥ | अपसदः। |
| वैश्यपितुः। | शूद्रमातुः॥ | जातः॥ | अपसदः। |
| ब्राह्मणपितुः। | वैश्यमातुः॥ | जातः॥ | अम्बष्टः। |

| | | |
|---|---|---|
| तथा । | शूद्रमातुः ॥ | जातः॥ निषादः । |
| क्षत्रियपितुः । | शूद्रमातुः ॥ | जातः॥ उग्रः । |

प्रतिलोमजाः ॥

| | | |
|---|---|---|
| क्षत्रियापितुः । | ब्राह्मणमातुः ॥ | जातः ॥ सूतः । |
| वैश्यपितुः । | क्षत्रियमातुः ॥ | जातः ॥ मागधः । |
| वैश्यपितुः । | ब्राह्मणमातुः ॥ | जातः । |

"वैश्यराजन्यविप्रासु जायन्ते वर्णसंकराः । एकान्तरेत्वानुलोम्यादंबष्टोग्रौ यथा स्मृतौ । क्षत्तृवैदेहकौ तद्वत्प्रातिलोम्येपि जन्मनि ॥ यत्रत्वेते परिध्वंसा जायन्ते वर्णदूषकाः । राष्ट्रिकैस्सह तद्राष्ट्रं क्षिप्रमेव विनश्यति" ॥ इति मनुः ॥

**पतन्ति पितरोह्येषां लुप्तपिण्डोदकक्रियाः ।**
**दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः ॥ ४२ ॥**

वि० ॥ एषां कुलघ्नानां पितरः लुप्तपिण्डाः लुप्तोदकक्रियाश्च सन्तः नरके पतन्ति ॥ ४२ ॥

विचारः

पतन्ति पितरः । हि, चार्थो प्रसिध्यर्थो वा । लुप्तपिण्डोदकक्रियाः पुत्रादीनां कर्तृणामभावाल्लुप्ता पिण्डस्योदकस्य च क्रिया येषां ते ॥ दोषैः दोषवशात् । एतैः उक्तैः कुलघ्नानां कुलनाशकानां वर्णसङ्करकारकैः वर्णसाङ्कर्योत्पादकैः ॥ ननु क्षेत्रजादिपुत्रेभ्यश्चापि पिण्डोदकक्रियाणां संभवात् कथं पितरो लुप्तपिण्डो

दकक्रियाभवेयुरितिचेन्न। 'न शेषोऽग्ने अन्यजातमस्ति' इति श्रुत्या क्षेत्रजादीनां वैदिकव्यवहारे पुत्रत्वाभावात् ॥ अन्यजातं अन्यस्माज्जातं शेषः अपत्यं न भवति इति हि श्रुत्यर्थः ॥ तथा "अन्योदर्यो मनसापि न मन्तव्यो ममायं पुत्र इति" इति यास्कवचनाच्च। बीजपतेरेव पिण्डादिप्राप्तिर्न तु क्षेत्रपतेरिति लुप्तपिण्डोदकक्रियत्वादवश्यं पितॄणां पातो भवति ॥ क्षेत्रजपुत्रस्मृतिस्तु इह लोके वंशस्थापनमात्रपरा। न तु तेन क्षेत्रपतेः कश्चिदामुष्मिक उपकारोऽस्ति। उदाहृतश्रुतिविरोधात्। इति नीलकण्ठः॥ अनेन गीतास्थो 'हि' शब्दः वैदिकीं प्रसिद्धिं द्योतयतीत्युक्तं भवति ॥

पतन्ति ॥ महाभारते आस्तिकोपाख्याने, जरत्कारुः कस्मिंश्चिद्गभीरकूपांते मूषिकदन्तविच्छिद्यमानतृणावलंबिहस्तान् अधस्तान्निरालम्बतया पातालं पिपितिषतः स्वपितॄन्दृष्ट्वानुकंपयोद्वोढुं मनश्चक्रे इत्युक्तम् "पतन्तिपितरोह्येषां लुप्तपिण्डोदकक्रियाः" इत्यनेन स्मृतिगोचरं भवति ॥

**उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः।**
**उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ॥ ४३ ॥**
**नरके नियतं वासो भवतीत्यनुशुश्रुम।**
**अहोबत महत्पापं कर्तुं व्यवसितावयं ॥ ४४ ॥**

वि० ॥ उक्तदोषमुपसंहरति दोषेरेतैरिति द्वाभ्याम्। जातिधर्माः क्षत्रियत्वादि जातिप्रयुक्ता धर्माः कुलधर्माश्च शाश्वताः परंपराप्राप्ताः ॥ उत्सन्नकुलधर्माणां उत्सन्नजाति-

धर्माणां चेत्यपि ज्ञेयम्। अनुशुश्रुम। "प्रायश्चित्तमकुर्वाणाः पापेषु निरतानराः। अपश्चात्तापिनः कष्टान्निरयान्यान्ति दारुणान्" इत्यादिविवदद्भिर्वृद्धैः श्रुतवन्तः स्मः ॥ एवं बन्धुवधस्य दोषहेतुत्वाध्यवसायेन सन्तप्यमानोऽर्जुन आह अहोबतेति॥ ४३, ४४ ॥

विचारः ।

उत्साद्यन्ते लुप्यन्ते । कुलधर्माः असाधारणाश्च परंपराप्राप्ताः । नियतं शाश्वतं । अथवा नियमेन ।। अथवा अनियतं इति पदविभागः। रौरवादावनियतं युगमन्वन्तराद्यवधिरहितं यथा तथा वासः स्थितिः। अहोबत ॥ अहो इत्याश्चर्ये। बतेतिखेदे॥ अहो बतेत्येकं पदं वा (१). शोकं विषादं सूचयति । (२). धिगित्यर्थेऽपि । (३). दयां च । (४). विस्मयं च । महत्पापं इति॥ पापमेवाश्रयेदस्मान् इत्युक्तरीत्या स्वस्य पापप्राप्तेः, पतन्ति पितरो ह्येषामित्युक्तरीत्या पितॄणां नरकप्राप्तेः, उत्सन्नकुलधर्माणां नरके नियतं वास इत्युक्तरीत्या पुत्रपौत्रादीनां सर्वेषां नरकप्राप्तेः, प्रसक्तस्य पापस्य महत्त्वम् ॥

यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ।
यदिमामप्रतीकारमशस्त्रं शस्त्रपाणयः ॥ ४५ ॥

वि० ॥ राज्यसुखलोभेन स्वजनं हन्तुं वयमुद्यताइति यत्तदेतन्महत्पापं कर्तुं व्यवसिता निश्चयवन्तो वयम्। अहोबत महाकष्टमिति। एवं सन्तप्तः सन् मृतिमेवार्थयमान

आह । यदीति । अकृतप्रतीकारमशस्त्रं तूष्णीमासीनं मां यदि शस्त्रपाणयो धार्तराष्ट्रा रणे हन्युस्तर्हि तद्धननं मे क्षेमतरं अत्यन्तहितमेव भवेत् । बन्धुवधदोषाभावाद्रणे हननेन गतिसंभवाच्चेति भावः ॥ ४५ ॥

विचारः

राज्यसुखलोभेन राज्यप्राप्त्या यत्सुखं तत्र यो लोभः लांपट्यं तेन दोषेण ॥ स्वजनं पितृभ्रातृपुत्रादिकं हन्तुं उद्यताः उद्युक्ताः । अप्रतीकारं प्रतिक्रियामकुर्वन्तं तूष्णीं सन्तम ॥ अशस्त्रं शस्त्रहीनम् ॥ ४५ ॥

धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत्

संजयउवाच

**एवमुक्त्वार्जुनः संख्ये रथोपस्थ उपाविशत् ।**
**विसृज्य सशरं चापं शोकसंविग्नमानसः ॥ ४६ ॥**

ओंतत्सदिति भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां
योगशास्त्रे श्रीकृष्णार्जुनसंवादे अर्जुनविषाद
योगो नाम प्रथमोऽध्यायः ॥

वि० ॥ ततः किं जातमिति धृतराष्ट्रहार्दं परिहरति । संजय इति । संख्ये रणे रथोपस्थे रथमध्ये उपाविशत् । कथं ॥ शोकेन कंपितचित्तः सन् सशरं चापं विसृज्येति॥४६॥

विचारः

तत् हननं क्षेमतरं भवेत् अत्यन्ताहितमेव भवेत्। बंधुवधदोषाभावाद्रणे-मरणे गतिसंभवाच्च॥

रथोपस्थे रथमध्ये पश्चाद्भागे वा रथोपरि (पूर्वं युद्धार्थमवलोकनार्थं चोत्थितोरथोपर्युपविवेश) ॥ उपाविशत् उपविवेश ॥ विसृज्य परित्यज्य सशरं शरसहितं चापं धनुः। शोकसंविग्नमानसः शोकेन पीडितं मानसं यस्य सः॥

क्षेमतरं भवेदिति॥ नन्वेवं युद्धमारभ्य अकस्मान्निर्व्यापारं त्वां प्रसह्य धार्तराष्ट्राः निहन्युरिति चेत्। इष्टापत्तिः॥ कुलक्षयपर्यवसितात् स्वजनवध-महापातकतः स्वमरणस्यैव श्रेयस्त्वात्। तच्च मरणं लोके द्वेधा भवति। एकं तावत्परैस्सहयुध्यमानस्य तैर्मरणं। अन्यत्तु न्यस्तशस्त्रस्य तूष्णीं स्थितस्य परैर्हननं॥ द्विविधमपि तत्स्वजनवधाद्वरिष्ठमेव॥ तत्रापि द्वितीयं वरिष्टतरं। तत्र स्वजनवधस्यैवाप्रसक्तेः पापशंकानवकाशात्॥ प्रथमं तु अनीदृशत्वात् पापशंकास्कंदितं। अतश्च द्वितीयमेव मरणं ममास्त्वित्यभिप्रेत्याह॥ यदीति॥

भारते शान्तिपर्वणि ४७ अध्याये युद्धे शस्त्रैर्हतस्य सद्गतिश्चोक्ता॥

"तस्य शस्त्राणि यावन्ति त्वचं भिन्दन्ति संयुगे। तावतः सोऽश्नुते लोकान् सर्वकामदुहोऽक्षयान्॥ यदस्य रुधिरं गात्रात् आहवे संप्रवर्तते। सह तेनैव पापेन सर्वपापैः प्रमुच्यते॥ अविक्षतेन देहेन प्रलयं योऽधिगच्छति॥ क्षत्रियो नास्य तत्कर्म प्रशंसन्ति पुरा विदः॥ तीक्ष्णैः शस्त्रैरभिक्लिष्टः क्षत्रियो मृत्युमर्हति"॥ इति

"शस्त्रपूतादिवंगता" इति च॥ भा. शा॥ ९७॥ अप्राप्तप्रापणं योगः क्षेमस्तु स्थितरक्षणं, इतिन्यायेन स्थितस्य परिपालनं क्षेमः॥ तस्मादधिकः क्षेमतरः। कुलनाशनदोषतद्धेतुकनरकपातदुष्कीर्त्याद्यनर्थराहित्येन प्राचीन पुण्यपुंजस्य क्षत्यभावएव क्षेमतरशब्दार्थः॥ श० आ०. स्वप्राणत्राणाय

व्यापारमकुर्वाणं धार्तराष्ट्रा प्रायशो न हन्युः ॥ एवं समयबद्धत्वात् ॥ यदि-समयमतिक्रम्य कथंचिद्धन्युः तर्हि तेषां पापं मम अतिशयितः क्षेमश्च भवेत् ॥ यथा समय उक्तः भीष्मपर्वणि ॥ ३३.

"निष्क्रान्ताः प्रतनामध्यान्नहंतव्याः कथंचन । रथीच रथिना योध्यो गजेन गजधूर्गतः । अश्वेनाश्वः पदातिश्च पदातेनैव भारत ॥ २९ ॥ यथायोग्यं यथाकामं यथोत्साहं यथाबलं । समाभाष्य प्रहर्तव्यं नविश्वस्ते न विह्वले । एकेन सहसंयुक्तः प्रपन्नो विमुखस्तथा ॥ क्षीणशस्त्रो विवर्मा च न हन्तव्यः कदाचन ॥ ३१ ॥ न सूतेषु न धुर्येषु न च शस्त्रोपजीविषु । न भेरीशंख-वादेषु प्रहर्तव्यं कथंचन ॥ एवं च समयं कृत्वा कुरुपाण्डवसोमकाः" ॥ इति

इति श्रीगीताभावचंद्रिकायां पद्मनाभाचार्य
विरचितायां प्रथमोऽध्यायः ॥

## ॥ अध्यायसंग्रहः ॥

श्रीमत्समीराचार्यो "गीतार्थं वक्ष्यामि लेशतः" इति प्रतिज्ञाय, अतिरोहितार्थत्वेन प्रथमाध्यायस्य तात्पर्यकथनेनैव व्याख्याततां मन्वानो, द्वितीयस्थाशोच्यानिति पद्यमारभ्य भाष्यं ग्रथयामास । रामानुजाचार्य-शङ्कराचार्यावप्येवमेव प्रायशः प्रथमाध्यायव्याख्यां संकुचितामकुर्वाताम् ॥

महतां करतलामलकत्वेऽपि महाभारतस्थानां सर्वेषामपि श्लोकानां दशाधिकार्थत्वात् प्रथमाध्यायेऽपि विद्वद्वलोडनार्हाः प्रमेयविशेषास्सन्तीत्यत्र न सन्देहः ॥ विषादद्वयमभिव्यज्यतेऽस्मिन्नध्याये । प्रथममुपोद्घातत्वेन दुर्यो-धनस्य ॥ अनन्तरमर्जुनस्य ॥ दुर्योधनस्तु नैव विषसादेति केचित् ॥ परबलातिशयं दृष्ट्वा असहमानचेतास्सन्भीमपराक्रमं च स्मृत्वा हर्षहीनो-बभूवेत्यन्ये ॥ अत्रास्तीषद्विचार । दुर्योधनस्तावत्परसेनां महत्वेनोत्कृष्य द्रोणमुपसंगम्य साभिप्रायं परसेनानायकानुक्त्वा, स्वव्यूहे कतिपयनायको-

क्तिपूर्वकं अन्येचेत्याकृतिगणान्तर्भूतत्वेनेतरानतिदिश्य स्वबलमपर्याप्तं परबलं पर्याप्तमित्युवाच ॥ अस्य वचनस्येयान्भाव इति स्पष्टं न ज्ञायते। किमयं स्वरूपतो दुरात्मा स्वापकर्षं परोत्कर्षं कदाप्यसहमानः परप्राबल्यमङ्गीचकार, उत स्वबलमेव उत्कृष्टमवददिति सन्दिह्यते ॥ किंच भीष्मप्रतिशिरस्कतया भीमाभिरक्षितमिति भीमप्राधान्यकथने कोभाव इत्यत्राप्यस्ति विचारः। (स्वबलमेवोत्कृष्टत्वेनामन्यतेति मधुसूदनशंकरानन्दनीलकंठादयो वदन्ति ॥ स्वबलं नालं परबलमेवालमित्यर्थ इति राघवेन्द्रस्वामिन:) ॥ तथा श्रीधरवेदान्ताचार्यादयः ॥ इदमेव प्रामाणिकं भाति। भीष्मद्रोणयोरोषवृद्धिजननार्थं हीदं वचनम्। अनेनेदमुक्तं भवति। "कर्णवचनमवज्ञाय भवन्तं भीष्मं नायकत्वेनाधिपतिं कृतवानहम्। भवन्तौ भीष्मद्रोणौ परपक्षपातिनाविति प्रसिद्धम् ॥ भवद्रक्षितं बलं भीमबलादवरं भाति। तस्माद्यदि भवन्तौ विशेषाकारेण बलपौरुषप्रकाशिनौ न भवेतां, तदास्माकं पराजयोनिश्चितः" इति। अत एव भीष्मो वृद्धोऽपि पितामहोऽपि तस्य हर्षं जनयितुं सिंहनादं विनद्य शंखं दध्मौ। तस्मात्सुयोधनो विपसाद इत्येव ज्ञायते। एवं व्याख्यातारोऽपि श्रीधरवेदान्ताचार्यादयः "भीमाभिरक्षितं" इत्यत्र तु तात्पर्यं तत्वतो न प्रकाशयन्ति। भीमजीवोत्तमत्वापरिज्ञानमेवात्र निमित्तम्। भीष्मादपि भीममवरं बलवीर्यादिषु मन्यमानाः उपपत्ति प्रकारान्तरैः कल्पयन्ति। वस्तुतस्तु। "वायुर्भीमो भीमनादो महौजाः" इति मोक्षधर्मस्थभीष्मवचनेन, प्रमाणान्तरैश्च भीमो भीष्मादत्युत्तमः। (कल्यभिन्नो दुर्योधनो जीवोत्तमस्याखणाऽभवदशक्यकलिप्रवेशस्य वायोर्वीर्यं ज्ञात्वा सदाभयकंपितचेताः परसेनानायकं धृष्टद्युम्नं विहाय पाण्डवाधिपतिं युधिष्ठिरं तिरस्कृत्य "भीमाभिरक्षितम" इत्याह ॥

अनन्तरं अर्जुनविषादनिरूपणे युक्तिजातमुपन्यस्तमस्ति। (अर्जुनवचसां प्रज्ञावादत्वं सर्वसम्मतम्। बुद्धिमद्वादत्वेन प्रज्ञावादत्वं वा स्वमनीषोत्थ-

वचनत्वेन तथात्वं वेत्यत्र संदेहः ॥ वेदान्तोपदेशाधिकारसंपादकं वैराग्यं सूचयतीति शंकरानन्द आह ॥ अर्जुनविषादमूलभूतां कृपां परामिति विशेषितां व्याख्याय परमकारुणिकोऽर्जुन इत्याह रामानुजाचार्यः । अर्जुनवचसि युक्तिबाहुल्यमवगम्यते ॥ तथाहि ॥ येषामर्थे राज्यं विजयः आधिपत्यं धनादिकं च मानवैः कांक्षितं तेषामेव वध्यत्वे सति प्रयासेन निष्फलेनालं इति । किंच अमुत्रापि पापमेव स्यात् ॥ आततायित्वेऽपि बंधुत्वात्तद्धननं पापकारणं इति च ॥ कुलक्षयकारिणोऽनर्थप्राप्तेस्सुप्रसिद्धत्वात् । स्त्रीपातित्यपूर्वकं वर्णसंकरकारकत्वात् । वर्णसांकर्ये पितॄणां पिण्डोदकच्युतेः। कुलस्थानां पुत्रपौत्राणां धर्मोपदेष्टृहीनानां नरकप्राप्तेश्चेति ॥ आपातरमणीयत्वेऽपि इदं वचो न शास्त्रसंमतं ॥ आरंभ एव ममैते अहमेतेषां मन्निमित्तं नश्यंतीति अहन्तां ममतां च विशेषतः पुरस्कृत्य 'मे रथं स्थापय' 'अहं निरीक्ष्ये' इत्यादि प्रयोगैः प्रवृत्तमिदं ॥ स्वसुखार्थमथवा बंधुश्रेयसे योद्धव्यमिति निष्प्रमाणममतामादाय यायुक्तिरभिहिता सा न साध्वी ॥ भगवत्प्रीत्युद्देशेनैव स्वधर्मत्वेन योद्धव्यत्वात् । आततायित्वेऽपि बन्धुत्वात् तद्वधोनिषिद्धः कुलक्षयजनकत्वाच्च इत्यादीनि वचांऽस्यपि भ्रममूलानि ॥ नारायणद्विट्तदनुबंधिनिग्रहस्य क्षत्रियाणां परमधर्मत्वात् ॥ बान्धवाः विष्णुभक्ता एव । न तु दुर्योधनादयः ॥ तस्मादर्जुनविषादमूलं उपन्यस्तं युक्तिजातं शास्त्रसंमतं नेति विरक्तेस्सुज्ञविरक्तित्वं वा अर्जुनस्योत्कृष्टकृपाळुत्वं वा नसेत्स्यति ॥ यद्यप्यन्यभाष्यकारवत् श्रीमत्सर्वज्ञाचार्योऽर्जुनमज्ञं मूढं वा न मन्यते ॥ अर्जुनस्य नरांशत्वादिन्द्रत्वादपरोक्षज्ञानित्वात् ॥ तथापि मानुषान्नभोजनादिना ज्ञानस्येषत्तिरोभावोऽङ्गीकृतः । किंचार्जुनं निमित्तीकृत्य लोकोपकाराय बुद्धिसन्निहिततयारब्धशास्त्रस्य पीटिकारचनात्मके पूर्वपक्षग्रन्थे सामान्यजनानां यस्संभावितोमोहः तमेवादायापातरमणीयैर्युक्तिविशेषैर्ज्ञानाय स्थापनाय वा प्रकटं अर्जुनः पप्रच्छेति भावः ॥

इति श्रीगीताभावचन्द्रिकायां प्रथमाध्यायसंग्रहः सम्पूर्णः ॥

# द्वितीयोऽध्यायः ।

सजय उवाच—

**तं तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणम् ।**
**विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥ १ ॥**

वि० ततः किं जातमिति धृतरा स्यापेक्षायां संजय उवाच ॥ तं तथेति ॥१॥

विचारः

संजयवाक्याविच्छेदेऽपि 'संजय उवाच' इति निर्देशोऽध्यायान्तरारम्भरूपतया अन्योक्तिशंकापरिहाराय इति वेदान्ताचार्यः । तथा, अस्थाने रथोपस्थे । अश्रुपूर्णाकुलेक्षणं अश्रुपूर्णे आकुले दर्शनाक्षमे ईक्षणे यस्य । विषीदन्तं पूर्वाध्यायोक्तरीत्या विषादं प्राप्योपविष्टम् । स्नेहविषयीभूतस्वजनविच्छेदाशंकानिमित्तः शोकापरपर्यायश्चित्तव्याकुलीभावो विषादः (म० स०) विषादो नाम मोहनिमित्ताच्छोकाद्यन्मनोदौर्बल्यं यस्मिन्सति सर्वव्यापारोपरमोभवति सः ॥

कृपयाविष्टं इत्यत्रार्जुनस्य कर्मत्वं कृपायाश्च कर्तृत्वं वदता तस्या आगन्तुकत्वं व्युदस्तम् ॥ विषीदन्तमिति (विषादस्य कर्मत्वेनार्जुनस्य कर्तृत्वेन वदता) तस्यागन्तुकत्वं सूचितं इति मधुसूदनः ॥

(१) मध्वाख्यमसुरं सूदयतीति मधुसूदनः ॥

(२) सर्वेषां देहे मधुवादिष्टत्वान्मधुरहंकारः तं सूदयतीति वा ॥

(३) इयं पृथिवी सर्वेषां भूतानां मधुइति श्रवणान्मधुः स्वरूपानन्दः। तं स्वापरोक्षवतां सूदयति स्फोरयतीति वा॥ "भक्तानां कर्मणां चैव सूदनान्मधुसूदनः" इति निरुक्तिः ॥

कृपयेति ॥ "स्नेहेन, नतु दयया परदुःखप्रहाणेच्छारूपया ॥ तस्याः परदौर्बल्यनिश्चयोत्तरभाविन्याः अर्जुने 'यदिवानो जयेयुरि'ति स्वपराजयमाशंकमाने दुर्भणत्वात्। यानेव हत्वा न जिजीविषाम इति स्नेहातिशयसूचकवाक्यशेषविरोधाच्च" इति नीलकण्ठः॥ अत्रचिन्त्यं, आत्यन्तिकजयपराजयनिश्चयाभावेऽपि केषांचिद्धननस्य निश्चितत्वात्परदुःखप्रहाणेछारूपा कृपा संभवत्येव॥ कृपाशब्दस्य स्नेहपरत्वं चायुक्तम् । अभिधानाभावात् इति ॥

*श्रीभगवानुवाच—*

**कुतस्त्वा कश्मलमिदं विषमे समुपस्थितं।**
**अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ २ ॥**
**क्लैब्यं मास्मगमः पार्थ नैतत्त्वय्युपपद्यते ।**
**क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ट परन्तप ॥ ३ ॥**

वि० उक्तदिशा कृपयाविष्टमेवं विषण्णमर्जुनं भगवानुवाच। कुत इत्यादि द्वाभ्यां श्लोकाभ्याम् ॥ हे अर्जुन

कुतो हेतोस्त्वा त्वां विषमे संकटे इदं कश्मलं उपस्थितं अयं मोहः प्राप्तः । यतः आर्यैरसेवितम् । अस्वर्ग्यं स्वर्गविरोधि अयशस्करं च ॥ २ ॥

तस्मात्क्लैब्यं कातर्यं मास्मगमः नैव प्राप्नुहि । हे पार्थैतत्क्लैब्यं त्वयि नोपपद्यते योग्यं न भवति । क्षुद्रं लाघवकरं हृदयदौर्बल्यं कातर्यं त्यक्त्वोत्तिष्ठ । उत्थाय सन्नद्धो भव । हे परन्तप परं शत्रुं तापयतीति शत्रुतापन। 'द्विषत्परयोस्तापेः' इति खचिखित्यनव्यस्येतिमुमागमः ॥ ३ ॥

रा० एवमुपविष्टे पार्थे कुतोऽयमस्थाने समुपस्थितः शोक इत्याक्षिप्य तमिमं विषमस्थं शोकमविद्वत्सेवितं परलोकविरोधिनमकीर्तिकरमतिक्षुद्रं हृदयदौर्बल्यकृतं परित्यज्य युद्धायोत्तिष्ठेति श्रीभगवानुवाच ॥

विचारः

कुतः कस्मात्कारणात् । कालदोषात्कर्मदोषाद्वा कस्मादयं भ्रमः शुद्धस्वभावस्य विवेकिनस्तव प्राप्तइत्यर्थः । मोक्षेच्छया स्वर्गेच्छया कीर्तीच्छया वा ॥ हेतुत्रयमपि निषेधत्युत्तरार्धेन ॥ कुत इति धिक्कारगर्भोवा ॥ त्वा त्वां क्षत्रियप्रवरं । कश्मलं चित्तव्यामोहः । विषमे संकटे शस्त्रसंपातसमये । समुपस्थितं प्राप्तं ॥ अनार्यजुष्टं आर्यैरसेवितं । अनार्यैः पामरैः ॥ आर्यैर्मुमुक्षुभिर्नजुष्टं । "(यत्तु आर्यैरजुष्टामिति विग्रहो दर्शितस्तदर्थैक्येऽपि पदव्युत्क्रमदोषादुपेक्ष्यं" इति नीलकण्ठः) ॥ व्याकरणभ्रममूलं दूषणं ॥ अस्वर्ग्यं स्वर्ग-

विरोधि ॥ अकीर्तिकरं अयशस्करं । अर्जुन=हे पार्थ, हे शुद्धस्वभाव ॥ भगवानिति ॥ "ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसश्श्रियः । ज्ञानविज्ञानयोश्चैवषण्णांभग इतीरणा" इत्युक्तभगशब्दार्थवान् ॥ "उत्पत्तिं च विनाशं च भूतानामागतिं गतिं । वेत्ति विद्यामविद्यां च स वाच्योभगवानि" ति ॥ म०स० ॥

अर्जुनशब्दो धवळार्थकः । "पृथिव्यां चतुरन्तायां वर्णो मे दुर्लभस्समः । करोमि कर्म शुद्धं च तेन मामर्जुनं विदुः" ॥ इतिविराटपर्वणि स्वयमेव स्वनाम निरुक्तवान् ॥ अर्जुनस्य शुद्धस्वभावत्वात् तस्य धावल्यं कथं दूषयति कश्मलं इति विरोधाभासालंकारेणाश्चर्यमुक्तं ॥ विषमइति ॥ अनेन कश्मलायोग्यत्वं सूचितं—विषमशब्दस्यायुग्मवाचित्वात् ॥ कश्मलस्य स्वभावतोर्जुनत्वविरोधात् ॥ अनेन कुतश्शब्दसूचिताक्षेपधिक्काराश्चर्यादय उपपादिता भवन्ति ॥

अनार्यजुष्टं इति ॥ आर्यः साधुः । अनार्यः पामरः इति सामान्याकारेण व्याख्यानं प्रसिद्धं ॥ अतत्वेभ्य आरात् दूरात् यता बुद्धिः यस्येति योगव्युत्पत्या साधुवाचक इति स्फुटं ॥ कोषप्रसिद्धरूढ्यापि अयमेवार्थः । "महाकुलकुलीनार्य सभ्यसज्जनसाधवः" इत्यमरः ॥ एवमेव लक्षणमभिहितं वसिष्टस्मृतौ ॥ "कर्तव्यमाचरन्काममकर्तव्यमनाचरन् । तिष्ठति प्रकृताचारे सत्वार्य इति स्मृतः" ॥ इति । योगरूढिभ्यामार्यशब्देन साधुर्बोध्यते ॥ म्लेच्छशब्दस्याविद्वत्परतया आर्यशब्दस्यविद्वत्परतया प्रयोगोदृष्टः ॥ "यवशब्दंम्लेछाः प्रियङ्गौःप्रयुञ्जते आर्याः दीर्घशूकविशिष्टे" इत्यादौ प्राचीनग्रन्थेष्वेतत्पदस्य जातिविशेषबोधकतया च प्रयोगोदृष्टः । अत एवामरसिंहो महाकुलकुलीनपर्यायत्वेनेममाह ॥ ऋग्वेदे "योनो दासआर्यो वा पुरुष्टुतादेव इन्द्रयुधयेचिकेत" इति प्रयोगाद्दासवज्जनताविशेषवाचित्वं आर्यशब्दस्यावगम्यते ॥

एवं मनुस्मृतौ ॥

" मुखबाहूरुपज्जानां यालोके जातयो बहिः । म्लेच्छवाचश्चार्यवाचस्सर्वे ते दस्यवः स्मृताः । जातोनार्यामनार्यायां आर्यादार्यो भवेद्गुणैः । जातोप्यनार्यादार्यायां अनार्य इति निश्चयः" इति । अनेन साद्गुण्यविवक्षां विना मातापित्रोरार्यत्वानार्यत्वप्रातिलोम्यानुलोम्यविवक्षया पुत्रस्यार्यत्वमनार्यत्वं च निश्चीयते इति ज्ञायते ॥

एवमश्वमेधपर्वणि अर्जुनानुयायिनः केचिन्म्लेच्छाः केचन किराताः केचिद्यवनाः केचन आर्याः इति म्लेच्छादिवज्जातिविशेषवन्त आर्या उक्ताः॥ "आर्या म्लेच्छाश्च कौरव्य तैर्मिश्राः पुरुषाविभो । किराता यवना राजन् बहवोसिधनुर्धराः। म्लेच्छाश्चान्ये बहुविधाः पूर्वं ये निकृतारणे । आर्याश्च पृथिवीपालाः प्रहृष्टानरवाहनाः । समीयुः पाण्डुपुत्रेण बहवो युद्धदुर्मदाः" ॥ इति ॥ (अश्व० ७३.) "नार्या म्लेच्छन्ति भाषाभिर्मायया नचरन्त्युत" ॥ इति च महाभारते (सभा)। तथा मनुस्मृत्यादौ "अनार्यजुष्टं" इति निन्दावाचकः प्रयोगस्तत्र तत्र बहुस्थलेषु दृश्यते ॥ कुलगोत्रनैच्यवाचकत्वेन चण्डालशब्दवत् अनार्य इत्युपालम्भः प्रकोपकस्संतापकश्च)॥ (तथाच अनार्यजुष्टमित्यनेन न केवलं पामरयोग्यं अपि तु दस्यूनां म्लेच्छानां वा योग्यं नत्वार्यकुलजानां इत्यर्थः प्रकाशितो भवति ॥ उत्तमजन्मनस्सामान्यतस्सदाचारेण व्याप्तेरार्यशब्दस्य साक्षात्सदाचारवद्बोधकत्वं चोपपद्यते ॥ २ ॥

त्वयि राजधर्मज्ञे वीरे क्षुद्रं लाघवकरं निकृष्टत्वापादकं तुच्छम् ॥ सुनिरसनं वा ॥ हृदयदौर्बल्यं कातर्यं अधैर्यं हृदयकृतमेव न तु शक्तिसहायाद्यभावकृतं । त्यक्त्वा विवेकेनापनीय । " क्लैब्यं नोपपद्यते " इति । निमित्तविशेषबलादज्ञातवासे विराटनगरे क्लीबवेषस्योपपत्तावपि नाद्य शूरे त्वयि तदुपपद्यते इति ध्वनिः ॥ पार्थ इत्यनेन कुंतीवचनं स्मारितम् ॥ आह हि सा पुत्रं प्रति ॥ "भैक्ष्यं विप्रतिषिद्धं ते कृषिर्नैवोपपद्यते ॥ क्षत्रियोसि क्षतात्त्राता बाहुवीर्योपजीविता" इति ॥

अर्जुन उवाच—

**कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन ।**
**इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४ ॥**

**गुरूनहत्वा हि महानुभावान्**
**श्रेयोभोक्तुम् भैक्षमपीहलोके ।**
**हत्वार्थकामांस्तु गुरूनिहैव**
**भुंजीय भोगान् रुधिरप्रदिग्धान् ॥ ५ ॥**

वि० पुनः स्नेहकारुण्यतया व्याकुलो भगवदुक्तं हितमजानन्नर्जुन उवाच ॥ कथमित्यादि पंचभिः श्लोकैः । हे मधुदैत्यघातक शत्रुनिबर्हण संख्ये युद्धे भीष्मं द्रोणं कथमहमिषुभिर्बाणैः प्रतियोत्स्यामि । कुतः यतस्तौ पूजार्हौ पूजनीयौ तत इति ॥ ४ ॥

ननु चैतदहनने राज्याप्राप्तेः देहनिर्वाहो न स्यादित्यत आह । गुरूनिति । इह महानुभावान् भगवद्भक्त्यादिगुणसंपन्नान्द्रोणादिगुरूनहत्वा इह लोके भैक्षं भिक्षयोपलब्धं अन्नं भोक्तुं श्रेयः वरम् । पारत्रिकदुःखाभावादिति भावः । हि यतोतो न योत्स्यामीत्यन्वयः ॥ न केवलं तेषां हनने पारत्रिकदुःखम् ॥ इहाप्यतिदुःखमित्याह । हत्वेति ॥ अर्थं कामयन्त इत्यर्थकामास्तान् गुरून्हत्वा

तैर्भुज्यमानांस्तानेवभोगांस्तद्रुधिरेण प्रदिग्धान् प्रकर्षेण लिप्तान् तदीयासनेष्वेवोपविश्य इह भुंजीय अनुभवेयं॥ तदे-तत्परलोकदुःखादतिशयितं दुःखमिति भावः ।

रा० पुनरपि पार्थः स्नेहकारुण्यधर्माधर्मभयाकुलो भगव-दुक्तं हिततममजानन्निदमुवाच । भीष्मद्रोणादिकान् गुरून् बहुमन्तव्यान् कथमहं हनिष्यामि ॥ कथतरांभोगेष्वति-मात्रप्रसक्तान् तान् हत्वा तैर्भुज्यमानांस्तानेव भोगांस्तद्रुधिरे-णोपसिच्य तेष्वासनेषूपविश्य भुंजीय ॥ ४, ५ ॥

विचारः ।

प्रतियोत्स्यामि प्रतिपक्षीभूय युद्धं करिष्यामि ॥ अरिसूदन मधु-प्रमुखशत्रुनिबर्हण ॥ मधुसूदन, अरिसूदन इति समानार्थकसंबोधनद्वयं शोकव्याकुलत्वं सूचयति ॥ (म० स०) प्रतियोत्स्यामीति ॥ युद्धमात्रमपि यत्र नोचितं दूरे तत्र वधः इति सूचयति । कथमिति । गुरुं हुंकृत्य त्वंकृत्य इत्यादिना शब्दमात्रेणापि गुरुद्रोहो निषिद्धः । किं वाच्यं युद्धं निषिद्धमिति ॥ ४ ॥

अहत्वा हननं विना । हि शास्त्रसंमतम् ॥ "अकृत्वा परसंतापम-गत्वा खलमन्दिरम् ॥ अक्लेशयित्वा चात्मानं यदल्पमपि तद्बहु" ॥

अर्थकामान्॥ अर्थं कामयंत इत्यर्थकामाः द्रव्यलुब्धाः । तान्। अर्थेषु कामो येषां (विग्र) । अर्थान् धर्मादिपुरुषार्थान् शिष्येभ्यः कामयन्ते बोधयन्तीत्यर्थकामाः ॥ धर्मोपदेष्टार इति वा ॥ (शं० आ०) तु अपि अथवा एव॥

भुंजीय ॥ गर्हार्थे इह लिङ् प्रत्ययः ॥ भोगान् तैर्भुज्यमानानेव भोगान् विषयान् रुधिरप्रदिग्धान् रक्तधारया प्रकर्षेण लिप्तान्। गुरुवधस्य पापापादकतया निषिद्धत्वाद्भिक्षान्नं तस्माद्वरं इत्याह ॥ ननु "गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः। उत्पथप्रतिपन्नस्य परित्यागो विधीयते" इति स्मृतेः गुरुत्वेऽपि भीष्मादीनां त्याज्यत्वमेवेत्यत आह। महानुभावानिति ॥ भगवद्भक्तत्वेन तेषां पूज्यत्वं निश्चितमिति भावः। ननु भीष्मादयोह्यर्थकामाः। यथोक्तं भीष्मेणैव युधिष्ठिरं प्रति। "अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्य चित्। इति सत्यं महाराज बद्धोस्म्यर्थेन कौरवैः" ॥ इति ॥ तथा द्रोणस्याप्यर्थातुरत्वं प्रसिद्धम्। (गोसम्पादनार्थं द्रुपदं गत्वा तेनावज्ञातस्सन्ननर्थपरम्परामजनयद्द्रोण इति हि कथा ॥ अर्थकामत्वात्तेषां वध्यत्वमित्यत आह पुनर्गुरूनिति॥ तु शब्दोप्यर्थः ॥ अर्थकामत्वेऽपि गुरुत्वात् वधो नयुक्त इति भावः ॥

अर्थकामानिति ॥ १. अर्थातुरान् इत्यर्थः। क्षुधितानां ओदनहरणवदन्याय्यं इति भावः ॥

२. अथवा कर्मिर्ज्ञानार्थकः। धर्माद्युपदेष्टन्। (श० आ०)

३. अथवा अर्थकामात्मकान् भोगानेव भुंजीय (न तु धर्ममोक्षावित्यर्थकामपदस्यभोगविशेषणतया योजना ॥ (म० स०)

रुधिरप्रदिग्धान् इत्यत्यन्तजुगुप्सा सूचिता ॥(हिमहानुभावानित्येकमेव पदं वा ॥ हिमं जाड्यमपहन्तीति हिमहा आदित्योऽग्निर्वा ॥ तस्येवानुभावः सामर्थ्यं येषां तान्। "(धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम्। तेजीयसां न दोषाय वह्नेस्सर्वभुजो यथा" इत्युक्तेः (म० स०)

न चैतद्विद्मः कतरन्नो गरीयो
यद्वा जयेम यदि वा नो जयेयुः।
यानेव हत्वा न जिजीविषामस्ते
ऽवस्थिताः प्रमुखे धार्तराष्ट्राः॥ ६॥

कार्पण्यदोषोपहतस्वभावः
पृच्छामि त्वां धर्मसंमूढचेताः।
यच्छ्रेयस्स्यान्निश्चितं ब्रूहि तन्मे
शिष्यस्तेहं शाधि मां त्वां प्रपन्नं॥ ७॥

वि० पापमंगीकृत्य युद्धकरणेऽपि जयस्सन्दिग्धएवेत्याह। न चैतदिति। द्वयोर्मध्ये नोऽस्माकं कतरत् किन्नाम गरीयः अधिकतरं भविष्यतीति नविद्मः॥ तदेव द्वयमाह। यद्वेति। एतान्वयं जयेम जेष्यामः। यदि वा नोऽस्मान् ते जयेयुः जेष्यन्तीति। किंचास्माकं जयोऽपि पराजय एव बुध्यत इत्याह। यानेवेति। यानेव हत्वा जीवितुं नेच्छामः तएव धार्तराष्ट्राः संमुखेऽवस्थिताः॥ तस्मात् कार्पण्यदोषेणैतान् हत्वा कथं जीविष्याम इति॥ ६॥

कृपणता दोषेणाभिभूतशौर्यलक्षणस्वभावः धर्मसंमूढचेताः धर्मे संमूढं संदिग्धं चेतो यस्य स तथोक्तस्तादृशोऽहं

त्वा त्वां पृच्छामि। यच्छ्रेयस्स्यात् भिक्षाटनयुद्धयोर्मध्ये यच्छ्रेयस्स्यान्निश्चितं तन्मे ब्रूहि। किंचाहं ते शिष्यः शासनार्हः। अतस्त्वां प्रपन्नं शरणागतं मां शाधि शिक्षय॥ ७॥

रा० एवं युद्धमारभ्य निवृत्तव्यापारान्भवतो धार्तराष्ट्राः प्रसह्य हन्युरिति चेत्—अस्तु। तद्वधलब्धविजयादधर्म्यादस्माकं धर्माधर्मावजानद्भिस्तैर्हननमेव गरीय इति मे प्रतिभातीत्युक्त्वा यन्मह्यं श्रेय इति निश्चितं तत् शरणागताय तव शिष्याय मे ब्रूहीत्यतिमात्रकृपणो भगवत्पादावुपससाद॥ ६, ७॥

विचारः।

"न च नापि। एतत् विद्मः जानीमः। नः अस्माकम्॥ भैक्षयुद्धयोर्मध्ये कतरन्नोऽस्माकं गरीयः किं भैक्षं हिंसाशून्यत्वादुत युद्धं स्वधर्मत्वादिति न जानीमः॥ इदं च नजानीमः वयं जयेम उत ते अस्मान् जयेयुरिति"(म० स०)॥ ६॥

कार्पण्यदोषोपहतस्वभावः अस्थानकृतस्नेह इति यावत्। महान्विषादश्चेह कार्पण्यशब्दार्थः। निश्चितं श्रुतिस्मृतिनिर्णीतम्। शिष्यः उपदेशापेक्षकः। शाधि अनुगृहाण॥ कार्पण्यमिति॥(यः स्वल्पमपि वित्तक्षतिं न क्षमते स कृपणः इति धनलुब्ध उच्यते। एवं बन्धुस्नेहातिशयात् कमपि हतं क्षतं वा न सहत इत्ययं कृपणः॥ यद्वा "महद्वा व्यसनं प्राप्तो दीनः कृपण उच्यते" इत्युक्तेः महाव्यसनप्राप्तो दीन इत्यर्थः। किंच पणक्रीतः दासादिः कृपण उच्यते॥ (यथा क्रीतो दासस्सर्वथा यजमानाधीनस्तथार्जुनो बन्धुस्नेहाधीन इति भावः)॥ (केचित् उपनिषदुक्तकृपणत्वमिह विवक्षित्वा-

र्जुनः अनात्माध्यासेन देहात्मैक्यभ्रमरूपदोषोपहतस्वचैतन्य इति व्याकुर्वन्ति ॥ "योवा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात्प्रैति स कृपणः" इति उपनिषद्वाक्यमुदाहरन्ति ॥ "कृपणो योऽजितेन्द्रियः" इति स्मृतिं च ॥ तथाच कार्पण्यं आत्मयाथात्म्याज्ञानं तदेव दोषः तेन उपहतः तिरोहितः स्वभावः स्वस्याविक्रियस्य प्रत्यगात्मनो भावः सत्ता यस्येत्यविद्यातिरस्कृतात्मस्वरूप इति )॥ एतच्चिन्त्यं ॥( अर्जुनस्य जातापरोक्षित्वादजितेन्द्रियत्वं मिथ्याज्ञानित्वं वा तस्य न शङ्कनीयं ॥ अत्र स्वभावशब्देन क्षात्रं शौर्यमेवोच्यते नत्वात्मपारमार्थिकसत्ता ॥ शौर्यमभिभूय विद्यमानो दोषः कार्पण्य शब्दोक्तः स्नेहातिशयो महाव्यसनं वा नतूपनिषदुक्ताक्षराज्ञानं इति भाति )॥

निश्चितं निर्णीतं ॥ यथा निश्चयो भवेत्तथेति वा ॥ ऐकान्तिकमात्यन्तिकंच श्रेयः परमपुमर्थफलं येन स्यात्तत्॥ यथा ह्यौषधे कृते कदाचिद्रोगनिवृत्तिर्नभवेदपि। जातापि च रोगनिवृत्तिः पुनरपि रोगोत्पत्या विनाश्यते, इति तस्य नैकान्तिकत्वं आत्यन्तिकत्वं वेति ॥ (म०स०)

शिष्यः—शाधि—प्रपन्नं॥ इति ॥ "नापुत्राय शिष्याय वै पुनः" इत्युपदेशप्रतिषेधात् "अहं शिष्यः" इत्यर्जुन आह ॥ "(अलसा मलिनाः क्लिन्नादांभिकाः कृपणास्तथा ॥ दरिद्रा रोगिणो रुष्टा रागिणो भोगलालसाः ॥ असूयामत्सरग्रस्तास्तथा परुषवादिनः। अन्यायोपार्जितधनाः परदाररताश्च ये। भ्रष्टव्रताश्च ये कष्टवृत्तय. पिशुनाः खलाः॥ बह्वाशिनः क्रूरचेष्टा दुरात्मानश्च निंदिताः॥ एवं भूताः परित्याज्याः शिष्यत्वेनोपकल्पिताः" ) इत्यगस्त्यसंहितायां )

"(शान्तो विनीतः शुद्धात्मा श्रद्धावान् धारणे क्षमः ॥ समर्थश्च कुलीनश्च प्राज्ञस्सच्चरितो धनी॥ एवमादिगुणैर्युक्तः शिष्यो भवति इति च )

नहि प्रपश्यामि ममापनुद्या-
द्यच्छोकमुच्छोषणमिन्द्रियाणां ।
अवाप्य भूमावसपत्नमृद्धं
राज्यं सुराणामपि चाधिपत्यं ॥ ८ ॥

सजयउवाच-

एवमुक्त्वा हृषीकेशं गुडाकेशः परन्तपः ।
नयोत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥९

वि० (त्वमेव विचार्य यद्युक्तं तत्कुर्वित्याहार्जुनः) ॥ नहीति । इंद्रियाणामुच्छोषणमतिशोषकरं मदीयं शोकं यत्कर्मापनुद्यादपनयेत्तदहं न पश्यामि ॥ राज्यलाभहेतु युद्ध-कर्मैव तादृशमित्यत आह । अवाप्येति ॥ यद्यपि भूमौ निष्कंटकं राज्यं प्राप्स्यामि । तथा सुराणां देवानामाधिपत्यं च प्राप्स्यामि ॥ (एवमभीष्टं सर्वमवाप्यापि शोकापनोदनो-पायं न प्रपश्यामीत्यर्थः ॥ हत्वार्थकामानित्युक्तदिशा सर्व-स्यापि दुःखहेतुत्वादिति भावः) ॥ ८ ॥ ततः किमकरोदर्जुन इति धृतराष्ट्राकांक्षां निराह संजयः ॥ एवमुक्त्वेति ॥ हृषीकेशं सर्वेन्द्रियप्रेरकं गुडाकेशो जितनिद्रः परन्तपः शत्रुतापनः गोविंदं गाः वेदवाचः प्रतिपादकत्वेन विन्दते

लभत इति गोविन्दः तं ॥ हेत्याश्चर्ये, महाधैर्यादिगुणवतोऽप्येवं बुद्धिर्जातेति ॥ ९ ॥

रा० एवमस्थानसमुपस्थितस्नेहकारुण्याभ्याम् अप्रकृतिंगतं क्षत्रियाणां युद्धं परमधर्ममप्यधर्मं मन्वानं धर्मबुभुत्सया च शरणागतं पार्थमुद्दिश्यात्मयाथात्म्यज्ञानेन युद्धस्य फलाभिसन्धिरहितस्यात्मप्राप्त्युपायताज्ञानेन च विना अस्य मोहो न शाम्यतीति मत्वा, भगवता परमपुरुषेण अध्यात्मशास्त्रावतरणं कृतं ॥ तदुक्तं ॥

"अस्थानस्नेहकारुण्यधर्माधर्मधियाकुलं ॥ पार्थं प्रपन्नमुद्दिश्य शास्त्रावतरणं कृतं" इति ॥ ८, ९ ॥

विचारः ।

प्रपश्यामि=स्पष्टं पश्यामि ॥ यत् = य उपायः इन्द्रियाणां=देहेन्द्रियमनोबुद्धीनां ॥ असपत्नं=निष्कण्टकं—निश्शात्रवं ॥ ऋद्धं राज्यं सार्वभौमत्वं सुराणां च आधिपत्यं = इन्द्रत्वं ॥ शोकमिति । अत्रार्जुनविवक्षाविषयश्शोको बन्धुमरणजन्यः प्रसक्तो वा उत सांसारिकसर्वदुःखं वेति सन्दिह्यते ॥ आत्यन्तिकदुःखनिवृत्त्युपायं पृच्छतीति केचित् ॥ "विषयप्राप्तेः तद्भोगस्य च जन्यत्वेन विनाश्यत्वादात्यन्तिकशोकनिवर्तकौ तौ न भवेताम् ॥ इहराज्यममुत्रेन्द्रत्वादिकं नश्वरं न दुःखप्रहाणायेति मोक्षमार्गं पृच्छति" इति (शङ्करानन्दमधुसूदनसरस्वत्यौ) परंतु इन्द्रियाणामुच्छोषणः भीष्मद्रोणादिवधनिमित्तश्शोक एव प्रसक्त इति भाति ॥ सार्वभौमत्वस्य इन्द्रत्वादेर्वा वैषयिकत्वेन नश्वरत्वात्स्वयं तानि शोकजनकानीत्यर्थो नेह विवक्षितः ॥

बन्धुमरणविषादमेव शोकत्वेनाह न तु सामान्यतः सांसारिकदुःखम् ॥ अपि त्रैलोक्यराज्यस्येति पूर्वं यदुक्तं महीकृते त्रिलोकाधिपत्यार्थं वा न भीष्मादिभिर्योद्धव्यमिति तदेवानुसन्धाय ऐहिकामुष्मिकाधिपत्येन बन्धुवधशोको न निवर्तते इत्येवार्थ उपपन्नः ॥

सुराणां आधिपत्यं इति । इन्द्रत्वं ब्रह्मत्वं वा प्राप्येति व्याख्याय 'संसारदुःखनिवृत्तिकारणं न भवति ब्रह्मविष्णवादिपदलाभः' इत्याह शंकरानन्दः । ब्रह्मत्वं विष्णुत्वं तु न सुतरां अर्जुनेच्छायोग्यं ॥ एवं भावकथनं निर्बीजं शास्त्रासंमतं च ॥ ८ ॥

एवं उक्तप्रकारेण कथं भीष्ममित्यादिनायुद्धायोग्यतां ॥ गुडाकेशः गुडो लगुडो (नामैकदेशे) दण्डस्तद्वद्दीर्घा आसमन्तात्समाश्च केशाः शिरोजा यस्य ॥ ९ ॥

**तमुवाच हृषीकेशः प्रहसन्निव भारत।**
**सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥ १० ॥**

वि० ततः किं जातमित्यत आह ॥ तमुवाचेति ॥ हे भारतेति धृतराष्ट्रसंबोधनम् ॥ प्रहसन्निवेति परिहासकरवाक्योक्तिद्योतकहासस्य सूचनायेव शब्दः ॥

रा० एवं देहात्मनोर्याथात्म्याज्ञाननिमित्तशोकाविष्टं देहातिरिक्तात्मज्ञाननिमित्तं च धर्मं भाषमाणं परस्परविरुद्धगुणान्वितं उभयोः सेनयोर्युद्धायोद्युक्तयोर्मध्ये अकस्मान्निरुद्योगं पार्थमालोक्य परमपुरुषः प्रहसन्निवेदमुवाच ॥

परिहासवाक्यं वदन्निव आत्मपरमात्मयाथात्म्यतत्प्राप्त्युपायभूतकर्मयोगज्ञानयोगभक्तियोगगोचरं ('नत्वेवाहं जातु नासम्' इत्यारभ्य 'अहंत्वा सर्वपापेभ्यो मोक्षयिष्यामि माशुचः' इत्येदन्तं वचनमुवाचेत्यर्थः) ॥

विचारः

प्रहसन्निवेति ॥ "(अनुचिताचरणप्रकाशनेन लज्जोत्पादनं प्रहासः)" लज्जाच दुःखात्मकेति द्वेषविषय एव समुख्यः ॥ अर्जुनस्य तु भगवत्कृपाविषयत्वादनुचिताचरणप्रकाशनस्य च विवेकोत्पत्तिहेतुत्वादेकदलाभावेन गौण एवायं प्रहास इति कथयितुमिवशब्दः ॥ लज्जामुत्पादयितुमिव विवेकमुत्पादयितुमर्जुनस्यानुचिताचरणं भगवता प्रकाश्यते ॥ (म० स० ॥) सेनयोरुभयोरिति ॥ महता संरम्भेण युद्धभूमावागत्य विषाद अनुचित इति सूचनाय विशेषणं। एतत् विषीदन्तं इत्यनेन योज्यते ॥ यद्वा उवाचेत्यनेन संबध्यते ॥ (सामान्यतउपदेशानार्हभूमावपि सर्वेन्द्रियप्रेरको भगवान् अर्जुनवचसा वा सेनान्तरितत्वेनायोग्यभूतं स्थलं इति वा न कुपितस्सन् ईषद्धसनविलास उवाचेति भावः)॥ १० ॥

अथ अशोच्यानिति श्लोकव्याख्यानात्पूर्वं, कृत्स्नस्य गीताशास्त्रस्य श्रीमदाचार्यप्रतिपादितो भावः, तदधस्ताच्छंकरभाष्योक्तं च जिज्ञासुमननार्थं लिख्यते ॥ उक्तं गीतातात्पर्ये ॥ (" तत्र साक्षादिन्द्रावतारमुत्तमाधिकारिणमात्मनः प्रियतममर्जुनं क्षत्रियाणां विशेषतोऽपि परमधर्मं नारायणद्विट्तदनुबन्धिनिग्रहं बन्धुस्नेहादधर्मत्वेनाशंक्य ततोनिवृत्तप्रायं स्वविहितवृत्या भक्त्या भगवदाराधनमेव परमोधर्मः तद्विरुद्धः सर्वोऽप्यधर्मो भगवदधीनत्वात्सर्वस्येति बोधयति भगवान्नारायणः ॥ सर्वंचैतदत्रैवागम्यते । (अथचेत्त्वं धर्म्यमिमं

संग्रामं न करिष्यसि । ततः स्वधर्मं कीर्तिंश्च हित्वा पापमवाप्स्यसि ॥ इत्यादिना युद्धस्य स्वधर्मत्वम् । यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः । श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् । स्वधर्मे निधनं श्रेयः परधर्मो भयावहः । सर्वगुह्यतमं भूयः शृणु मे परमं वचः ॥

इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ।
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ॥
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ।
सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि माशुचः ॥ इत्यादिना स्वधर्मेणैव भगवदाराधनस्यैव कर्तव्यत्वं तदन्यस्य त्याज्यत्वं च ॥

नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवं विधो द्रष्टुं दृष्टवानसि मां यथा ॥
भक्त्या त्वनन्यया शक्य अहमेवं विधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परन्तप ॥ इत्यादिना विष्णुभक्तेरेव सर्वसाधनोत्तमत्वं परोक्षापरोक्षज्ञानयोर्ज्ञानिनोऽपि मोक्षस्य तदधीनत्वं च ॥ मत्कर्मकृन्मत्परमो मद्भक्तः संगवर्जितः । निर्वैरः सर्वभूतेषु यः स मामेति पाण्डवेत्यादिना भक्तस्यापि तत्कर्मविकर्मत्यागश्च । कुरुकर्मैव तस्मात्त्वं पूर्वैः पूर्वतरैः कृतमित्यादिना ज्ञानिनोऽपि भगवत्कर्म ॥ सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम । देवा अप्यस्य रूपस्य नित्यं दर्शनकांक्षिणः । इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥ दैवी संपद्विमोक्षाय निबंधायासुरी मता । माशुचः संपदं दैवीमभिजातोऽसि पाण्डव । महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः । भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ।

दर्शयामास पार्थाय परमं रूपमैश्वरमित्यादिनार्जुनस्योत्तमाधिकारित्वमपरोक्ष-ज्ञानित्वं च ॥ न मे विदुः सुरगणाः प्रभवं न महर्षयः । अहमादिर्हि देवानां महर्षीणां च सर्वशः । यो मामजमनादिं च वेत्ति लोकमहेश्वरम् । असंमूढः समर्त्येषु सर्वपापैः प्रमुच्यते । बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः । महर्षयस्सप्तपूर्वे । एतां विभूतिं योगं च । अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते । इति मत्वा भजन्ते मां बुधाभावसमन्विताः । तेषामेवानुकंपार्थमहमज्ञानजं तमः । नाशयामि ॥

तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ॥

सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ।
ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ॥

यद्ज्ञात्वा नेहभूयोन्यद्ज्ञातव्यमवशिष्यते ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥

मत्तः परतरं नान्यत्किंचिदस्ति धनंजय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥

इदं तु ते गुह्यतमं प्रवक्षाम्यनसूयवे ।

ज्ञानं विज्ञानसहितं यद्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ राजविद्या राजगुह्यं । मया ततमिदं सर्वं जगदव्यक्तमूर्तिना । मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः । भूतभृन्न च भूतस्थः ॥ नत्वत्समोस्त्यभ्याधिकः कुतोन्यः ॥

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।
ममयोनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
संभवः सर्वभूतानां ततो भवति भारत ॥

ब्रह्मणोहि प्रतिष्ठाहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कुटस्थोऽक्षरउच्यते ॥

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥

यस्मात्क्षरमतीतोहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥

यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥

इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ।
एतद्बुध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत ॥

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन ।

नानवाप्तमवाप्तव्यमित्यादिना सर्वस्माद्भगवतो भेदः सर्वस्य तदधीनत्वं तस्यानन्याधीनत्वं सर्वोत्तमत्वं सर्वगुणपूर्णत्वं सर्वशास्त्राणां तत्परत्वं तथा तदज्ञानादेव मोक्ष इत्यादि ॥ अधाते विष्णो विदुषा चिदर्ध्यः स्तोमो यज्ञश्च राध्यो हविष्मता । पश्यन्नपीममात्मानं कुर्यात्कर्माविचारयन् । यदात्मनः सुनियतमानन्दोत्कर्षमाप्नुयात् । भक्त्या प्रसन्नः परमोदद्याज्ज्ञानमनाकुलम् । भक्तिं च भूयसीं ताभ्यां प्रसन्नो दर्शनं व्रजेत् । ततोऽपि भूयसीं भक्तिं दद्यात्ताभ्यां विमोचयेत् । मुक्तोऽपि तद्वशे नित्यं भूयो भक्तिसमन्वितः । साध्यानन्दस्वरूपैव भक्तिर्नैवात्र साधनं । ब्रह्मरुद्ररमादिभ्योप्युत्तमत्वं स्वतन्त्रताम् । सर्वस्य तदधीनत्वं सर्वसद्गुणपूर्णताम् । निर्दोषत्वं च विज्ञाय विष्णोस्तत्राखिलाधिकः । स्नेहोभक्तिरितिप्रोक्तः सर्वोपायोत्तमोत्तमः । तेनैव मोक्षो

नान्येन दृष्ट्यादिस्तस्य साधनम् । अधमाधिकारिणो मर्त्या मुक्तावृष्यादिकाः समाः । अधिकार्युत्तमादेवाः प्राणस्तत्रोत्तमोत्तमः । नैव देवपदं प्राप्ता ब्रह्मदर्शनवर्जिताः । तिरोहितं तथाप्येते शृण्वन्ति क्रीडयाथवा ॥ बहुवारतदभ्यासात्तिरोभावोऽपि नोभवेत् । यथाभ्यासानुशिष्टानां देवानां क्षत्रजन्मनाम् । पार्थानामतिरोधानं ज्ञानं सुस्थिरतां गतम् । अस्य देवस्यमील्हुषोवयाविष्णोरेषस्य प्रभृथेहविर्भिः । विदेहि रुद्रोरुद्रियं महित्वम् यासिष्टं वर्तिराश्विनाविरावत् । एको नारायण आसीन्न ब्रह्मा न च शंकरः । समुनिर्भूत्वासमचिन्तयत्ततएते व्यजायन्त विश्वोहिरण्यगर्भोग्निर्यमोवरुणरुद्रेन्द्रा इति ॥

एकोनारायण आसीन्न ब्रह्मा नेशानः । वासुदेवोवा इदमग्र आसीन्न ब्रह्मा न च शंकरः ॥ यं यं कामयते विष्णुस्तं ब्रह्माणं च शङ्करम् । शक्रं सूर्यं यमं स्कन्दं कुर्यात्कर्तास्य न क्वचित् ॥ सर्वोत्कर्षे देवदेवस्य विष्णोर्महातात्पर्यं नैवचान्यत्र सत्यम् । अवान्तरं तत्परत्वं तदन्यत्सर्वागमानां पुरुषार्थस्ततोत इति पैङ्गिश्रुतिः । परो मात्रया तन्वा वृधान नते महित्वमन्वश्नुवन्ति ॥ अनन्तगुणमाहात्म्यो निर्दोषो भगवान्हरिः। न समोवाधिकोवापि विद्यते तस्य कश्चन । नासीन्न च भविष्यो वा परतः स्वत एव चेत्यादि श्रुतेश्च ॥ यस्त्वात्मरतिरेव स्यादित्यादि तु मुक्तविषयम् । यस्त्वेवात्मरतो मुक्तः कार्यं तस्यैव नास्तिहि ॥ तस्मात्कुर्वीत कर्माणीत्याह कृष्णोऽर्जुनं स्मयन्निितिच स्कान्दे । ज्ञानयोगेन सांख्यानामित्यादि तु बाह्यकर्मसंकोचापेक्षया । नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् । शरीरयात्रापि च ते न प्रसिध्येदकर्मणः । एतान्यपि तु कर्माणि संगं त्यक्त्वा फलानि च । कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् । ज्ञानीच कर्माणि सदोदितानि कुर्यादकामः सततं भवेत ॥ न सर्वकर्मणां त्यागः कस्यचिद्भवति क्वचित् । त्यागिनो यतयोपिस्युः संकोचाद्बाह्यकर्मणामित्यादि । उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्वदर्शिन इत्यादिचोत्पन्नज्ञानतिरोभावनिवृत्त्यर्थम्" । इति श्रीमदाचार्यगीतातात्पर्यगतोपोद्घातः ॥

अथ शङ्कराचार्यभाष्यगतोपोद्धातः

"अत्र च (दृष्ट्वा तु पाण्डवानीकमित्यारभ्य यावत् 'नयोत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूवह' इत्येतदन्तः) प्राणिनां शोकमोहादि संसारबीजदोषोद्भवकारणप्रदर्शनार्थत्वेन व्याख्येयो ग्रन्थः ॥ तथाहि । अर्जुनेन राज्यगुरुपुत्रमित्रसुहृत्स्वजनसंबन्धिबान्धवेषु अहमेतेषां ममैते इत्येवं प्रत्ययनिमित्तास्नेहविच्छेदादि निमित्तावात्मनश्शोकमोहौ दर्शितौ ॥ कथं भीष्ममहं संख्ये इत्यादिना शोकमोहाभ्यां ह्यभिभूतविवेकज्ञानः स्वत एव क्षत्रधर्मे युद्धे प्रवृत्तोऽपि तस्माद्युद्धादुपरराम ॥ परधर्मं च भिक्षाजीवनादि कर्तुं प्रववृते ॥ तथाच सर्वप्राणिनां शोकमोहादिदोषाविष्टचेतसाम् स्वभावत एव स्वसर्वधर्मपरित्यागः प्रतिषिद्धसेवाच स्यात् । स्वधर्मे प्रवृत्तानामपि तेषां वाङ्मनः कायादीनाम् प्रवृत्तिः फलाभिसंधिपूर्विकैव साहंकारा भवति ॥ तत्रैवं सति धर्माधर्मोपचयादिष्टानिष्टजन्मसुखदुःखप्राप्तिलक्षणस्संसारोऽनुपरतो भवतीत्यतस्संसारबीजभूतौ शोकमोहौ । तयोश्च सर्वकर्मसन्यासपूर्वकादात्मज्ञानान्नान्यतो निवृत्तिरिति तदुपदिदिक्षुस्सर्वलोकानुग्रहार्थमर्जुनन्निमित्तीकृत्याह भगवान् वासुदेवः अशोच्यान्, इत्यादि ॥ अत्र केचिदाहुः । सर्वकर्मसन्यासपूर्वकादात्मज्ञाननिष्ठामात्रादेव केवलात् कैवल्यं न प्राप्यत एव । किं तर्हि । अग्निहोत्रादिश्रौतस्मार्तकर्मसहितात् ज्ञानात् कैवल्यप्राप्तिरिति सर्वासु गीतासु निश्चितोऽर्थः इति ॥ ज्ञापकं चाहुरस्यार्थस्य । अथचेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि । कर्मण्येवाधिकारस्ते, कुरुकर्मैव तस्मात्त्वं इत्यादि । हिंसादियुक्तत्वाद्वैदिकं कर्माधर्मायेतीयमाशङ्का न कार्या । कथम् ? क्षात्रं कर्मयुद्धलक्षणं गुरुभ्रातृपुत्रादिहिंसालक्षणमत्यन्तं क्रूरमपि स्वधर्म इति कृत्वा नाधर्माय । तदकरणे च 'ततस्स्वधर्मं कीर्तिञ्च हित्वा पापमवाप्स्यसि' इति ब्रुवता यावज्जीवादि श्रुतिचोदितानाम् पश्वादिहिंसादिलक्षणानाञ्च कर्मणाम् प्रागेव नाधर्मत्वमिति सुनिश्चितमुक्तं भवतीति ॥

तदसत् । ज्ञानकर्मनिष्ठयोः विभागवचनाद्बुद्धिद्वयाश्रययोः अशोच्यान् इत्यादिना भगवता यावत् स्वधर्ममपि चावेक्ष्य इत्येतदन्तेन ग्रन्थेन यत्परमार्थात्मतत्वनिरूपणम् कृतम् तत्साङ्ख्यम् तद्विषयाबुद्धिः । आत्मनो जन्मादिविक्रियाभावादकर्तात्मेति प्रकरणार्थनिरूपणात् या जायते सा साङ्ख्याबुद्धिः ॥ सा येषां ज्ञानिनामुपचिता भवति, ते साङ्ख्यास्स्युः । एतस्या बुद्धेर्जन्मनः प्राक् आत्मनो देहादिव्यतिरिक्तस्य कर्तृत्वभोक्तृत्वापेक्षो धर्माधर्मविवेकपूर्वको मोक्षसाधनानुष्ठानलक्षणो योगः । तद्विषया बुद्धिर्योगबुद्धिः । सा येषां कर्मिणामुपचिता भवति ते योगिनः । तथाच भगवता विभक्ते द्वे बुद्धी निर्दिष्टे । एषातेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां श्रुणु इति ॥ तयोश्च साङ्ख्यबुद्ध्याश्रयां ज्ञानयोगेनिष्ठां साङ्ख्यानां विभक्तां वक्ष्यति ‘ पुरावेदात्मना मया प्रोक्ता ’ इति ॥ तथाच योगबुद्ध्याश्रयां कर्मयोगेन निष्ठां योगिनां विभक्तां वक्ष्यति कर्मयोगेनयोगिनाम् इति । एवं सांख्यबुद्धिं योगबुद्धि चाश्रित्य द्वेनिष्ठे विभक्ते भगवतोक्ते ॥ ज्ञानकर्मणोः कर्तृत्वाकर्तृत्वानेकत्वैकत्वबुद्ध्याश्रययोर्युगपदेकपुरुषाश्रयत्वासंभवं पश्यता यथैतद्विभागवचनम् तथैव दर्शितम् शातपथीयेब्राह्मणे एतमेवप्रव्राजिनोलोकामिच्छन्तः प्रव्रजन्ति इति । सर्वकर्मसन्यासं विधाय तच्छेषेण किं प्रजया करिष्यामो येषां नोयमात्मायं लोकः इति ॥ तत्रच प्राग्दारपरिग्रहात् पुरुषः आत्मा प्राकृतो धर्मजिज्ञासोत्तरकालं लोकत्रयसाधनं पुत्रं द्विप्रकारं च वित्तम् मानुषम् दैवञ्च, तत्र मानुषङ्कर्मरूपम् । पितृलोकप्राप्तिसाधनम् विद्याञ्च दैवं वित्तं देवलोकप्राप्तिसाधनम् । सोऽकामयत इत्यविद्याकामवत एव कर्माणि दर्शितानि ॥ तेभ्योभ्युत्थानमात्मानमेव लोकमिच्छतोऽकामस्य विहितम् । तदेतद्विभागवचनमनुपपन्नं स्यात् यदि श्रौतकर्मज्ञानयोस्समुच्चयोऽभिप्रेतःस्याद्भगवतः । नचार्जुनस्य प्रश्नउपपन्नो भवति ज्यायसी चेत्कर्मणस्ते इत्यादिः ॥ एकपुरुषानुष्ठेयत्वासंभवम्

बुद्धिकर्मणोर्भगवता पूर्वमनुक्तं कथमर्जुनोऽश्रुतं बुद्धेश्च कर्मणोज्यायस्त्वं भगवत्यध्यारोपयेन्मृषैव ज्यायसी चेत् कर्मणस्ते मताबुद्धिः इति।

किंच यदि बुद्धिकर्मणोस्सर्वेषां समुच्चयउक्तस्स्यात् अर्जुनस्यापि स उक्तएवेति यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् इति कथमन्यतरविषय एव प्रश्नः स्यात्॥ नहि पित्तप्रशमनार्थिनो वैद्येन मधुरं शीतलञ्च भोक्तव्यमित्युपदिष्टे तयोरन्यतरत्पित्तप्रशमनकारणं ब्रूहीति प्रश्नस्संभवति॥

अथ, अर्जुनस्य भगवदुक्तार्थविवेकानवधारणनिमित्तः प्रश्नः कल्प्येत तथापि भगवता प्रश्नानुरूपं प्रतिवचनं देयम् मया बुद्धिकर्मणोस्समुच्चयउक्तः किमर्थमित्थं त्वं भ्रान्तोसि इति। न तु पुनः प्रतिवचनमननुरूपं पृष्टादन्यदेव द्वे निष्ठे मयाप्रोक्ते इति वक्तुं युक्तम्।

नापि स्मार्तेनैव कर्मणा बुद्धेः समुच्चयेऽभिप्रेते विभागवचनादि सर्वमुपपन्नम्। किञ्च क्षत्रियस्य युद्धं स्मार्तम् स्वधर्म इति जानतः तत् किङ्कर्मणि घोरे मां नियोजयसि इत्युपालम्भोऽनुपपन्नः। तस्माद्गीताशास्त्रे ईषन्मात्रेणापि श्रौतेन स्मार्तेन वा कर्मणा आत्मज्ञानस्य समुच्चयो न केनचिद्दर्शयितुं शक्यः।

यस्यत्वज्ञानाद्रागादिदोषतोवा कर्मणि प्रवृत्तस्य यज्ञेन दानेन तपसा वा विशुद्धसत्वस्य ज्ञानमुत्पन्नं परमार्थतत्वविषयम्। एकमेवेदं सर्वं ब्रह्माकर्तृच इति तस्य कर्मणि कर्मप्रयोजने च निवृत्तेऽपि लोकसंग्रहार्थम् यत्र पूर्वं यथा प्रवृत्तः तथैव प्रवृत्तस्य यत्प्रवृत्तिरूपं दृश्यते न तत्कर्म येन बुद्धेस्समुच्चयस्स्यात्॥ यथा भगवतो वासुदेवस्य क्षत्रधर्मचेष्टितं न ज्ञानेन समुच्चीयते नापि पुरुषार्थसिद्धये तद्वत्फलाभिसन्ध्यहङ्काराभावस्य तुल्यत्वात्। तत्ववित् नाहं करोमि इति मन्यते न च तत्फलमभिसन्धत्ते। तथाच स्वर्गादिकामार्थिनोऽग्निहोत्रादि कामसाधनानुष्ठानाया-

हिताग्नेः काम्यएवाग्निहोत्रादौ प्रवृत्तस्य साभिकृते विनष्टेऽपि कामे तदेवाग्निहोत्राद्यनुतिष्ठतोऽपि न तत् काम्यमग्निहोत्रादि भवति ॥ तथा च दर्शयति भगवान् कुर्वन्नपि न लिप्यते न करोति न लिप्यते इति तत्र तत्र ॥ यच्च पूर्वैः पूर्वतरं कृतम् । कर्मणैव हि संसिद्धिमास्थिताजनकादयः इति ॥ तत्तु प्रविभज्य विज्ञेयम् । तत् कथम् । यदि तावत्पूर्वेजनकादयस्तत्वविदोपि प्रवृत्तकर्माणस्स्युः ॥ ते लोकसंग्रहार्थं गुणागुणेषु वर्तन्ते इति ज्ञानेन संसिद्धिमास्थिताः कर्मसन्यासे प्राप्तेऽपि कर्मणासहैव संसिद्धिमास्थिताः न कर्मसन्यासं कृतवन्त इत्यर्थः । अथ न ते तत्वविदः । ईश्वरसमर्पितेन कर्मणा साधनभूतेन संसिद्धिं सत्वशुद्धिं ज्ञानोत्पत्तिलक्षणां वा संसिद्धिमास्थिता जनकादय इति व्याख्येयम् । एतमेवार्थं वक्ष्यति भगवान् । सत्वशुद्धये कर्मकुर्वन्ति इति स्वकर्मणातमभ्यर्च्य सिद्धिं विन्दति मानवः इत्युक्त्वा सिद्धिं प्राप्तस्य पुनर्ज्ञाननिष्ठां वक्ष्यति ॥ सिद्धिं प्राप्तो यथा ब्रह्म इत्यादिना ॥ तस्माद्गीताशास्त्रे केवलादेव तत्वज्ञानान्मोक्षप्राप्तिः न कर्मसमुच्चितादिति निश्चितोऽर्थः । यथाचायमर्थस्तथा प्रकरणशो विभज्य तत्र तत्र दर्शयिष्यामः" । इति शंकरभाष्योपोद्घातः ॥

---

**अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे।**
**गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ ११**

वि० ॥ (भगवन्माहात्म्यज्ञानतद्भक्तिपूर्वकं भगवदाराधनरूपतया स्वविहितवृत्तित्वेन चानुष्ठीयमानो नारायणद्विट् तदनुबंधिनिग्रहः क्षत्रियाणां परमोधर्मः । तं धर्मं बन्धुस्नेहादधर्मत्वेनोक्तदिशा शंकमानं अर्जुनं प्रत्युक्तरूपो निग्रह

एव परमधर्मः तद्विरुद्धः सर्वोऽपि अधर्म इति कृत्स्नगीताशास्त्रेण बोधयिष्यन्नादौ तावदविवेकेन तवशोक इत्याह ॥ अशोच्यानिति ॥ अशोच्यान् शोकानर्हान् हे पार्थ! त्वं अन्वशोचः । यान् त्वं शोचितवानभूः ते न शोकार्हा इति यावत् । प्रज्ञावादांश्च भाषसे । प्रज्ञयोत्थावादाः प्रज्ञावादाः स्वबुद्धिमात्रपरिकल्पिता वादाः न वृद्धसंमता इति यावत् ॥ यद्वा प्रकर्षेण जानन्तीति प्रज्ञाः॥ इगुपधज्ञाप्रीकिरः कः । तेषामवादाः प्राज्ञविरुद्धवादाः तान्प्रभाषसे इत्यर्थः । न हि दृष्ट्वेमं स्वजनं कृष्णेत्यर्जुनवाक्येषु कश्चित्प्राज्ञसंमतवादोऽस्ति। न हि प्राज्ञा नारायणद्विट् तदनुबंधिनिग्रहं अधर्मं वदन्तीति भावः॥ ननु आसन्नविनाशास्ते कथमशोच्या इत्यत आह । गतासूनिति । पण्डिताः ज्ञानिनः गतासूनासन्नविनाशान् अगतासूनिवेत्युपमार्थश्चकारः जीवत इव तान्नानुशोचन्ति ॥ यतोतो न शोच्यास्त इति तानन्वशोचस्त्वमित्यर्थः ॥

श० तत्रैवं धर्मसंमूढचेतसो महति शोकसागरे निमग्नस्य अर्जुनस्यान्यत्रात्मज्ञानादुद्धरणमपश्यन् भगवान्वासुदेवस्ततोर्जुनमुद्दिधारयिषुरात्मज्ञानायावतारयन्नाह । अशोच्यानित्यादि ॥ न शोच्या अशोच्याः भीष्मद्रोणादयः सद्वृत्तत्वात् परमार्थस्वरूपेण च नित्यत्वात् । तानशोच्यानन्वशोचः अनुशोचितवानसि । ते म्रियन्ते मन्निमित्तं अहं तैर्विनाभूतः किं करिष्यामि राज्यसुखादिना इति ॥ त्वं

प्रज्ञावादान् प्रज्ञावतां बुद्धिमतां वादांश्च वचनानि च भाषसे। तदेतन्मौढ्यं पाण्डित्यं च विरुद्धमात्मनि दर्शयस्युन्मत्त इवेत्यभिप्रायः॥ यस्माद्गतासून् गतप्राणान् मृतान् अगतासूनगतप्राणान् जीवतश्च नानुशोचन्ति पण्डिता आत्मज्ञाः। ते हि पण्डिताः "पाण्डित्यं निर्विद्य" इति श्रुतेः॥ परमार्थतस्तु तान्नित्यानशोच्याननुशोचसि अतो मूढोसीत्यभिप्रायः॥

रा० अशोच्यान्प्रत्यनुशोचसि। पतन्ति पितरोह्येषां लुप्तपिण्डोदकक्रियाः इत्यादिकान् देहात्मस्वभावप्रज्ञानिमित्तवादांश्च भाषसे। देहात्मस्वभावज्ञानवतां नात्र किंचिच्छोकनिमित्तमस्ति। गतासून्देहान् अगतासूनात्मनश्च प्रति तत्स्वभावयाथात्म्यविदो न शोचन्ति। अतस्त्वयि विप्रतिषिद्धमिदमुपलक्ष्यते। यदेतान्हनिष्यामीत्यनुशोचनं यच्च देहातिरिक्तात्मज्ञानकृतं धर्माधर्मभाषणं अतो देहस्वभावं च न जानासि तदतिरिक्तमात्मानं च नित्यं तत्प्राप्त्युपायभूतं युद्धादिकं धर्मं च। इदं च युद्धं फलाभिसंधिरहितमात्मयाथात्म्यावाप्त्युपायभूतं। आत्माहि न जन्माधीनसद्भावो न मरणाधीनविनाशश्च तस्य जन्ममरणयोरभावात्। अतः स न शोकस्थानं। देहस्त्वचेतनः परिणामिस्वभावः। तस्योत्पत्तिविनाशयोगः स्वाभाविक इति सोऽपि न शोकस्थानमित्यभिप्रायः॥

विचारः

अन्वशोचः भाषसे इति भाषणापेक्षयानुशोकस्य प्राक्कालीनत्वादतीतत्वनिर्देश उपपन्नः । अद्यतन एव चिरानुवृत्तत्वविवक्षया सोपसर्गलङ्प्रयोगो ज्ञातव्यः । यद्वायं वर्तमानार्थः । सुप्तिङुपग्रह इत्यादिना लकारव्यत्ययः । तूष्णीं बभूवेत्युक्त्वा भाषसे इति वर्तमाननिर्देशोविरुद्ध इति शंकायां वर्तमानसामीप्ये वर्तमानवद्वा इत्यनुशासनाद्भूते लट् इति समाधेयम् ॥

अशोच्यशोकः प्रज्ञावादभाषणं इत्युक्तिद्वयेनार्जुनस्य मोहद्वयनिराकरणं प्रतिज्ञातमित्यादाय मधुसूदन आह । तथाहि । "अर्जुनस्य द्विविधो मोहो निराकरणीयः । तत्र मिथ्याभूतस्यापि संसारस्य सत्यत्वात्मधर्मत्वादिप्रतिभासरूप एकः सर्वप्राणिसाधारणः । अपरस्तु युद्धाख्ये स्वधर्मे हिंसादिबाहुल्येनाधर्मत्वप्रतिभासरूपोऽर्जुनस्यैव करुणादिदोषनिबन्धनोऽसाधारणः । इत्येतद्भ्रमद्वयं अशोच्यानन्वशोचः प्रज्ञावादान्भाषसे इत्युक्तिद्वयेन क्रमात्तथा नत्वेवाहमित्येकोनविंशतिश्लोकैराद्यं भ्रमं स्वधर्ममपि चावेक्ष्य इत्याद्यष्टभिर्द्वितीयं भ्रमं च निवारयति भगवान्" इति ॥ यदेवं मोहद्वयविभागपूर्वकं श्लोकार्धेऽवान्तरविभागप्रदर्शनेन व्याख्यातम् तच्छंकरभाष्योत्कर्षदीपिकायां प्रत्याख्यानं दृश्यते । यथा अशोच्ये शोच्यत्वबुद्धेः तथैव धर्मेऽधर्मत्वबुद्धेरपि सर्वप्राणिसाधारणत्वेनोपलभ्यमानत्वात् । अर्जुनं निमित्तीकृत्य सर्वेषामपि गीतोक्तानामुपदेशानां प्रसक्तेस्संभवात् साधरणत्वेनासाधारणत्वेन मोहभेदग्रहणं नोचितमिति दीपिकाशयः । युक्तियुक्तमिदं निरसनं भाति ॥ किञ्च सत्यत्वावभासरूपमोहकथनं असंगतं मूलेऽदर्शनात् । सत्यत्वावभासनिवृत्त्यर्थं मिथ्यात्वाकथनाच्च ॥

अशोच्यानुद्दिश्य शोकविधानं प्रज्ञावादानुद्दिश्य भाषणविधानञ्च कृतमिति यथाश्रुतवाक्यवृत्त्यावगम्यते । तदनुपपन्नम् । असिद्धस्यानुवादः सिद्धस्य बोधनमित्यापत्तेः । यानन्वशोचस्ते अशोच्याः यान् भाषसे ते प्रज्ञावादा इत्येवतात्पर्यम् । कथमिदं लभ्यतइति चेत् विशिष्टविषयौ

विधिनिषेधौ विशेषणमुपसंक्रामत इति न्यायेन त्वं अशोच्यकर्मकशोककर्ता इति विधाने शोककर्तृकत्वस्य सिद्धत्वात् शोकविषयाणां अशोच्यत्वे विधिपर्यवसानम् ॥ यथा लोहितोष्णीषाऋत्विजः प्रचरंतीत्यत्र ऋत्विक् प्रचरणस्य सिद्धत्वात् लोहितोष्णीवत्वे तात्पर्यम् । वस्तुतस्संक्षिप्तमिदं वाक्यम् । तस्य यथावद्व्यक्तिः कर्तव्या ब्रह्मजिज्ञासेति यथा । अतएव "इति यावत्" इति विवृतिः ॥

किञ्च न वयं वाक्यान्वये धात्वर्थमुख्यविशेष्यकबोधे वा आख्यातार्थमुख्यविशेष्यकबोधे वा प्रथमान्तमुख्यविशेष्यकबोधे वा तार्किकादिवत् साग्रहाः ॥ किन्तु "शक्तिश्चैवान्विते स्वार्थे शब्दानामनुभूयते" इत्यनुव्यख्यानोक्तेर्योग्येतरान्वितस्वार्थे शक्तिमंगीकुर्वाणाः ॥ एतदेव तत्वं, युक्तियुतं च । तस्माद्विवक्षानुसारेण योजनाकार्येति यावत् ॥

केचित् यथाश्रुतवाक्यवृत्तावनुपपत्तिं दृष्ट्वान्यथा समाधानमाहुः ॥ प्रथमार्धे चकारमवधारणार्थं व्याख्याय अग्निमानेव धूमवानित्यत्र यथा एवकारबलेन अग्निमत्वस्यैव विधानं वाक्यार्थः तथात्रापि अशोच्यानेवान्वशोचः प्रज्ञावादानेव भाषसे इति योजनया अशोच्यत्वस्य प्रज्ञावादत्वस्य च विधेयत्वं लभ्यत इति ॥ यद्वेत्यन्यथापि व्याचक्षते । यानशोचः ते 'ननु' अशोच्याः? यान् भाषसे ते स्वप्रज्ञा इति पदच्छेदपूर्वकं योजनामादाय प्रश्नेन काका वा अशोच्यत्वस्य स्वप्रज्ञामात्रमूलत्वस्य च विधेयत्वं लब्धमित्याहुः ।

प्रज्ञावादानिति ॥ प्रज्ञावतां बुद्धिमताम् वादा इति शंकरादयः । तदेतदनुपपन्नम् नह्यद्याप्यर्जुनवचसि किंचित्प्रज्ञामूलत्वं दृष्टं । न च वाच्यं देहात्मविवेकः प्रज्ञात्र विवक्षिता । परलोकादिकं पुण्यपापादिकमङ्गीकृत्य अर्जुनेन युक्तय उपन्यस्ता इत्यर्जुनवचोभिरवगम्यते । सा हि प्रज्ञा इति । तावन्मात्रेण प्रज्ञाया असिद्धेः । नापि धर्माधर्मगर्भितत्वात्प्राज्ञवादत्वं शंकनीयम् । सौगतादिग्रन्थानामपि तथात्वं स्यात् सदसत्पदार्थं विविच्य ये प्रकर्षेण

जानन्ति ते प्रज्ञाः ब्रह्मज्ञानिनः तेषां शास्त्रमभिव्याप्तावादाः आवादाः तानिति शंकरानन्दः। एतदपि मंदं। सदसद्विवेकस्य ब्रह्मज्ञानस्य शास्त्रसंमतेर्वा अदर्शनात्। तस्मात् प्रज्ञायावादाः प्रज्ञावादाः। (कार्यकारणभावे षष्ठी)॥ न हि वादोऽस्ति यः प्रज्ञापूर्वो न भवतीति सामर्थ्यात्स्वेति लभ्यते। सावधारणं चैतदब्भक्ष इति यथा। अन्यथा पुनर्वैयर्थ्यात् ॥(तथाच स्वप्रज्ञोत्था एव वादाः न तु शास्त्रसंमता इत्यर्थः) एतेन प्रज्ञावतां वादान् भाषसे परं न तु बुध्यसे इति मधुसूदनव्याख्यानं निरस्तं वेदितव्यम्। अस्मिन्नर्जुनवादे प्रज्ञाभ्युपगमायोगात्॥ यद्वा प्रकर्षेण जानन्तीति प्रज्ञाः॥ इगुपधज्ञाप्रीकिर. कः। तेषां अवादाः प्राज्ञविरुद्धवादा इति यावत्॥ अत्राह नीलकण्ठः। "प्रज्ञानां पण्डितानां अवादान् वक्तुमयोग्यान् भाषसे इति तार्किकव्याख्यानम्। तदर्हार्थे घञो दुर्लभत्वात् विशेष्याध्याहारसापेक्षत्वाच्चोपेक्ष्यं" इति। तन्न। प्रज्ञानामवादान् प्राज्ञैर्वक्तुमनुचितान् इति मधुसूदनोऽपि व्याचष्टे। तस्मादयं वादोऽज्ञवाद एव न सुज्ञवादः॥ अत एव भीष्मस्तुतौ। "व्यवसितपृतनामुखं निरीक्ष्य स्वजनवधाद्विमुखस्य दोषबुध्या। कुमतिमहरदात्मविद्यया-यश्चरणरजः परमस्य तस्य मेऽस्तु" इत्यर्जुनस्य दोषबुद्धिं कुमतिमाह॥

गतासून् मृतान् अगतासून् जीवतश्चेति शंकरानन्दः॥ गतासून्=आसन्नविनाशान् अगतासून्=जीवतः च=इव इति श्रीमध्वः। अत्र गतासूनिति भीष्मादय उच्यन्ते। तेषामद्याप्यमृतत्वात् गतासून्=आसन्नविनाशानिति भगवत्पादैर्व्याख्यातं। अनासन्नविनाशान् जीवतः प्रति शोकस्याप्रसक्तत्वात् 'च' शब्द इवार्थो ज्ञेयः। (यथा जीवतः प्रति नानुशोचन्ति तथा गतासून्नानुशोचन्तीत्यर्थः।)

शंकरानन्द आह। "त्रिविधामनुष्याः मूढाः शास्त्रज्ञाः पण्डिता इति॥ मूढाः ममैते पुत्रादयो मृता इति गतासूनेवानुशोचन्ति। नत्वगतासून्। शास्त्रज्ञास्तु ममैते पुत्रादयो मूढादुर्भगादुर्वृत्ताजाताइत्यगतासूनेवानुशोचन्ति न तु

गतासून् । पण्डितास्तु गतासूनगतासूंश्च पुत्रादीन्न शोचन्ति । गतास्वगतासूनामप्युभयेषामविद्याकार्यत्वेन स्वप्नार्थवदसत्वादुभयत्र ब्रह्मैव पश्यन्ति त एव पण्डिता" इति । दुर्ज्ञेयमिदमुपपादनं ॥ मूढामृतानेव शोचन्तीति कथंचित्संभवेऽपि शास्त्रज्ञा जीवत एव शोचन्तीत्यत्र मानाभावात् । शास्त्रज्ञाद्बहिः पण्डिता इत्यधिकारिविशेषस्वीकारेऽपि न किंचिन्मानम् ॥

"अगतासुशब्देन मृतानां ये बान्धवा जीवन्ति ते कथ्यंते । ते च बंधुविच्छेदे कथं जीविष्यन्तीत्येवं रूपः शोकएवात्र अगतासुशोक." इति मधुसूदनव्याख्यामनूद्य तच्चिंत्यमिति निराह वेंकटनाथः ॥ तथाहि । "दृष्ट्वेमं स्वजनमित्यादिना भीष्मादीन् स्वजनान् जीवतः प्रत्यर्जुनेन मन्निमित्तमेते मरिष्यन्तीति शोचितत्वेन तस्यैव शोकस्य कण्टरवेणोक्तस्य प्राधान्येन निरसनीयस्यात्र अगतासुशोकत्वेन ग्राह्यतया तद्विहाय युयुत्सुस्वजनसंबन्धिबन्धुविषयशोकस्याप्रस्तुतस्य ग्रहणानौचित्यात् । अन्यथार्जुनशोकस्य गतास्वगतासु शोकद्वयानन्तर्भूततया तस्यात्र निरासालाभेन तादवस्थ्यापातात् । यदि च गतासून्नानुशोचन्तीति मृतविषयशोकनिषेधेनैव मरिष्यच्छोक निषेधोऽपि सिद्ध्यति हेत्वविशेषात् अतस्तन्निषेधः पृथङ् नापेक्षित इत्युच्यते । तर्हि मृतसम्बन्धिबन्धुविषये शोकनिषेधोऽपि तत एव कैमुतिकन्यायेन सिद्ध इति तदर्थमगतासून्नानुशोचन्तीति न वक्तव्यमेव स्यात् । तथाच प्रस्तुतनिरासे सति अप्रस्तुतनिरासस्यार्थिकत्वादासन्नविनाशभीष्मादिशोचनमेवागतासु शोक इति व्याख्यानं युक्तम्" इति । अस्मिन्निरासे यद्यपि मरिष्यतां ये बान्धवास्तेषां ग्रहणे अनौचित्यं स्फुटीकृत्य मधुसूदनव्याख्यानं सुष्ठु निरस्तं भाति । परंतु अगतासुशब्देनैवासन्नविनाशा भीष्मादयो ग्राह्या इत्यत्र तु युक्तिर्न स्फुटा । गतासुशब्देन मृतानां ग्रहणं त्वनुचितं भाति । कस्यापि अद्यापि न मृतत्वात् । गतासूनित्यनेनासन्नविनाशान् गृहीत्वा अगतासुशब्देन जीवतस्संगृह्य याऽस्योपरि जीवतां अप्रस्तुतत्वशंकोदेति तां चकारस्यैवार्थत्वेन

परिहृत्य श्रीमध्वकृतं व्याख्यानं निर्दिष्टं गम्यते ॥ वेंकटनाथस्तु श्रीमध्वव्याख्यानं चास्मिन्नेवावसरे तिरस्करोति। यदाह। "अगतासून् जीवत इव गतासूनपि नानुशोचन्ति इति माध्वव्याख्यानमपि निरस्तम्। अगतासु शब्दस्योक्तरीत्या आसन्नमरणजीवद्वाचित्वावश्यंभावेन स्वस्थजीवद्वाचित्वायोगात्। इवकारादेराश्रयणेन समुच्चयवाचकचकारस्योक्तरीत्या मुख्यार्थे सम्भवत्यगतिकगतिकानैकार्थ्योपगमानौचित्येन दृष्टान्ततया व्याख्यानासंभवाच्च" इति। अत्रोच्यते। आसन्नमरणजीवद्वाचित्वं अगतासुशब्दस्यैवेति को निर्बन्धः? गतासु शब्देन तस्यार्थस्य सुलभत्वात्। मुख्यार्थे संभवति सतीति यदुक्तं तदसंगतम्। कस्याप्यद्यामृतत्वेन गतास्विति मृतानां ग्रहणमनुपपन्नमित्याक्षेपस्य को निवारयितेति ॥

गतासून् देहान् अगतासूंश्च आत्मनश्च उद्दिश्य न शोकइति रामानुजाचार्यः ॥ गतास्वगतासुशब्दौ निष्प्राणसप्राणवाचकौ। देहात्मवाचकत्वे व्युत्पत्तिविशेषेण भाव्यं। गौरवपक्षाश्रयणे न किञ्चित्कारणं दृश्यते। इदं रामानुजाचार्यव्याख्यानं वेङ्कटनाथो निराह, "गतासून् देहान् अगतासूनात्मनश्च नानुशोचन्तीति रामानुजव्याख्यानमपि निरस्तं। गतास्वगतासुशब्दयोर्मृतजीवद्वाचित्वेन प्रसिद्धयोस्तथैवार्थे संभवत्यप्रसिद्धार्थकल्पनायोगात्। न हि देहे आत्मनि च तयोः प्रसिद्धिरस्ति। न च गता असवो यस्मादिति योगाश्रयणेन देहोगतासुः आत्मा च अगतासुरिति युक्तं। तथासति गतास्वगतासु शब्दाभ्यां मृतजीवच्छरीरयोरेव प्राप्तेः ॥ न च गतासुरनित्यः अगतासुर्नित्यइति ताभ्यां देहात्मनोः प्रतिपत्तिरिति वाच्यं। अनित्ये घटादौ गतासुरिति नित्येचाकाशादौ अगतासुरित्यव्यवहारेण तयोर्नित्यानित्यवाचित्वासिद्धेः। लक्षणायां तस्याएव दोषत्वात्"। इति

'च' द्वयं ॥ अत्र आद्यश्च शब्दः तु इत्यर्थकः। द्वितीयस्समुच्चयार्थ इति केचित् ॥ आद्यस्समुच्चयवाची द्वितीयउपमानार्थक इति श्रीमध्वाशयः ॥

अर्जुनवचसि सुज्ञवादत्वं ये मन्यन्ते तन्त्र 'च' इत्यस्य 'तु' इत्यर्थं वदन्ति। शोकभाषणयोर्व्याहतिप्रदर्शनाय वैलक्षण्यबोधकः 'तु' शब्द इति तेषामाशयः॥ सुज्ञवादत्वं तु निरस्तं। अतस्समुच्चयवाची "प्रज्ञावादांश्चे"त्यत्र 'च' शब्दः॥ तत्स्वारस्यमपि ध्येयं। जनास्तावत्केचन शोचन्ति न तु भाषन्ते, भवांस्तु न केवलं अनुशोचति अपि तु स्वस्यशोकोन्याय्य इति भ्रांत्वा तद्दाढ्यार्थं युक्त्याभासयुतान् वादानपि भाषते। अतः परं किमनुचित-मस्तीति 'च' कारस्सूचयति॥

एवमत्र भाष्यकाराशयसंग्रहः॥

(श०) भीष्मादयो न शोच्याः सद्वृत्तत्वेन परमार्थस्वरूपेण च नित्य-त्वात्॥ भवद्वादस्तु बुद्धिमद्वचनं भवत्प्रज्ञां सूचयति। भवच्छोकस्तु मौढ्य-माविष्करोति॥ तथाच वचनं भवत्कार्यविरुद्धं। यतो मृतान् जीवत-श्चाद्वैतसाक्षात्कारवन्तो न शोचन्ति॥

(रा०) त्वद्वचनं देहात्मस्वभावज्ञानं सूचयति। तव शोकस्तु तादृश-ज्ञानेन व्याहतः। यतः पण्डिता देहमुद्दिश्य वा आत्मानमुद्दिश्य वा न शोचन्ति॥

(म०) भवद्भाषितं स्वमनीषामात्रोत्थवचनं न शास्त्रसंमतम्। भीष्मा-दयो न शोच्याः। यतो जीवतः पुरुषान्प्रति जना यथा नशोचन्ति तथा पण्डिता आसन्नविनाशान्नशोचन्ति॥ इति॥

**नत्वेवाहं जातुनासं नत्वं नेमे जनाधिपाः।**
**नचैव न भविष्यामः सर्वे वयमतः परं ॥ १२ ॥**

वि० ॥ ननु कुतो न शोचन्ति कुतश्च मदीया वादाः प्राज्ञमतविरुद्धा इति। दृष्ट्वेमं स्वजनं कृष्णेत्यादिनोपपत्तेरुक्तत्वादिति चेत् ॥ तत्किं तेषां जीवनाशात्तव शोक उत देहनाशात् अथ देहान्यात्मनोऽभावात्तद्देहनाश एव तन्नाश इति। नाद्यः। जीवानामनादिनित्यत्वादित्याह। नत्वेवेति। जातु कदापि अहं ननासं नासमिति न किंत्वासमेव। त्वं न नासीः विपरिणामेन क्रियान्वयः। अपि त्वासीरेव। इमे जनाधिपाश्च न नासन् आसन्नेव। अहं यूयं च वयं च सर्वे एव अतः परं अनन्तरकाले न न भविष्यामः। किन्तु भविष्याम एव। अत्र पूर्वोत्तराभ्यां कालद्वयसंबंधोक्त्याऽनादित्वं नित्यत्वं चोक्तं। वर्तमानकालसंबन्धस्तु स्फुटत्वान्नोक्तः। द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतइति न्यायेन नञ्द्वयप्रयोगादेवावधारणसिद्धौ पुनस्तदुक्तिः "नित्योनित्यानां" "स्वदेहयोगविगमौनामजन्ममृती पुरा। इष्येते ह्येव जीवस्य मुक्तेर्नतु हरेः क्वचि" दिति श्रुतिस्मृतिप्रसिद्धिद्योतनार्था। च शब्दोऽनादित्वेन सह नित्यत्वस्य समुच्चयार्थः। तु शब्दस्तु स्मृत्युक्तदिशा ईश्वरस्येतरेषामिव देहतोप्युत्पत्तिनाशौ नेति विशेषार्थः। तदाह। "ॐ असंभवस्तु सतोनुपपत्तेः" ॐ ॥ "ॐ नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः" ॐ

इति सूत्राभ्यां ॥ तत्राणुभाष्यमपि "सोनुत्पत्तिलय" इति । ये तु कृष्णस्येश्वरत्वमनादित्वं च न जानन्ति तान्प्रति यथाश्रुतैव योजना । ये तु तज्ज्ञात्वा जीवानादिनित्यतामेव न जानन्ति तान्प्रति तु यथैवं पदयोरध्याहारेण दृष्टान्तदार्ष्टान्तिकभावेन यथाहं न नासमनादितो वर्ते एवं त्वमेते च सर्वे यूयं न नासुः अनादितोवर्तध्वं इति योजना । अत्रैतौ प्रयोगावभिमतौ ॥ कृष्णत्वदादिचेतनाननाशवन्तः भावत्वे सत्यनादित्वात् नासत इति श्लोके वक्ष्यमाणप्रकृत्यादिवत् ॥ इति । द्वितीययोजनायां तु त्वदादयो जनाधिपा न नाशवन्तः चेतनत्वे सत्यनादित्वात् कृष्णवत् इति । स्वरूपासिद्धिस्तु देहिन इत्यत्र निराशिष्यते। न च साधनवैकल्यं । नित्योनित्यानामिति श्रुतेः । तत्रानादित्वस्याप्युपलक्षणात् । एवं चैवमनादिनित्याजीवाः कथं नाम शोच्याः अनादिनित्यजीवानां नाशभीत्या नयोत्स्ये इत्यादि त्वदीयावादाः कथं नाम प्राज्ञविरुद्धानभवेयुरिति भावः ॥

श० । कुतस्ते अशोच्याः। यतो नित्याः। कथं। नत्वेव जातु कदाचित् अहं नासं किंत्वासमेव। अतीतेषु देहोत्पत्तिविनाशेषु नित्य एवाहमासमित्यभिप्रायः । तथा न त्वं नासीः किंत्वासीरेव तथा नेमे जनाधिपा नासन् किंत्वासन्नेव। तथा नचैव न भविष्यामः किन्तु भविष्याम एव सर्वे

वयमतोऽस्माद्देहविनाशात्परं उत्तरकालेऽपि त्रिष्वपि कालेषु नित्याआत्मस्वरूपेणेत्यर्थः ॥ देहभेदानुवृत्याबहुवचनं नात्मभेदाभिप्रायेण ॥

रा० । प्रथमं तावदात्मनां स्वभावं शृणु । नत्विति । अहं सर्वेश्वरस्तावत् अतो वर्तमानात्पूर्वस्मिन् अनादौ काले न नासं अपि त्वासं। त्वन्मुखाश्चैते ईशितव्याः क्षेत्रज्ञाः ननासन् अपि त्वासन्। अहं च यूयं च वयं अतः परं अस्मादनन्तरे काले नचैव नभविष्यामः । अपि तु भविष्याम एव । यथाहं सर्वेश्वरः परमात्मा नित्यः इति नात्र संशयः। तथैव भवन्तः क्षेत्रज्ञा आत्मानोऽपि नित्या एवेति मन्तव्याः। एवं भगवतः सर्वेश्वरादात्मनां परस्परं च भेदः पारमार्थिक इति भगवतैवोक्तमिति प्रतीयते। अज्ञानमोहितं प्रति तन्निवृत्तये पारमार्थिकनित्यत्वोपदेशसमये अहं त्वं इमे सर्वे वयमिति व्यपदेशात् औपाधिकात्मभेदवादे आत्मभेदस्यातात्विकत्वेन तत्वोपदेशसमये भेदनिर्देशो संगच्छते। भगवदुक्तात्मभेदः स्वाभाविक

"नित्योनित्यानां चेतनश्चेतनानां। एकोबहूनां योविदधाति कामान्" इति॥ नित्यानां बहूनां चेतानां यएकोनित्यश्चेतनः स कामान् विदधातीत्यर्थः। अज्ञानकृतभेददृष्टिवादे तु [illegible] स्थनित्यचैतन्यात्मयाक्षात्कारान्निवृत्ताज्ञानतत्कार्यतया

दर्शनं तन्मूलोपदेशादिव्यवहाराश्च न संगच्छन्ते। अथ परमपुरुषस्याधिगताद्वैतस्य बाधितानुवृत्तिरूपमिदं भेदज्ञानं दग्धपटादिवन्न बन्धकमित्युच्यते नैतदुपपद्यते। मरीचिकाजलज्ञानादिकं हि बाधितमनुवर्तमानं नजलाहरणादिप्रवृत्तिहेतुः। एवमत्राप्यद्वैतज्ञानेन बाधितं भेदज्ञानमनुवर्तमानमपि मिथ्यार्थविषयत्वनिश्चयान्नोपदेशादिप्रवृत्तिहेतुर्भवति। नचेश्वरस्य पूर्वमज्ञस्य शास्त्राधिगततत्वज्ञानतया बाधितानुवृत्तिः शक्यते वक्तुं "यः सर्वज्ञः सर्ववित्" "परास्यशक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाच" "वेदाहं समतीतानि वर्तमानानि चार्जुन। भविष्याणि च भूतानि मां तु वेद न कश्चन"॥ (७-२६) इति श्रुतिस्मृतिविरोधात्। किंच परमपुरुषश्चेदानीन्तनगुरुपरंपरा च अद्वितीयात्मस्वरूपनिश्चये सति अनुवर्तमानेऽपि भेदज्ञाने स्वनिश्चयानुरूपमद्वितीयात्मज्ञानं कस्माउपदिशतीति वक्तव्यं। प्रतिबिंबवत्प्रतीयमानेभ्योऽर्जुनादिभ्य इति चेत् नैतदुपपद्यते। नह्यनुन्मत्तः कोऽपि मणिकृपाणदर्पणादिषु प्रतीयमानेषु स्वात्मप्रतिबिंबेषु तेषां स्वात्मनोऽनन्यत्वं जानन् तेभ्यः किमप्युपदिशति। बाधितानुवृत्तिरपि तैर्नशक्यते वक्तुं—बाधकेनाद्वितीयात्मज्ञानेनात्मव्यतिरिक्तभेदज्ञानकारणस्यानादेर्विनष्टत्वात्। द्विचन्द्रभानादौ तु चन्द्रैकत्वज्ञानेन पारमार्थिकतिमिरादिदोषस्य द्विचन्द्रज्ञानहेतोरविनष्टत्वात्

बाधितानुवृत्तिर्युक्ता; अनुवर्तमानमपि प्रबलप्रमाणबाधितत्वेनाकिंचित्करं। इह तु भेदज्ञानस्य सविषयस्य सकारणस्य पारमार्थिकत्वेन वस्तुयाथात्म्यज्ञानविनष्टत्वान्नकथंचिदपि बाधितानुवृत्तिः संभवति। अतः सर्वेश्वरस्येदानींतन गुरुपरंपरायाश्च तत्वज्ञानमस्तिचेत् भेददर्शनतत्कार्योपदेशाद्यसंभवः॥ नास्तिचेत् अज्ञानस्यतद्धेतोः स्थितत्वेनाज्ञत्वादेव सुतरामुपदेशो न संभवति। किंच गुरोरद्वितीयात्मविज्ञानादेव ब्रह्माज्ञानस्य सकार्यस्य विनष्टत्वात् शिष्यं प्रत्युपदेशो निष्प्रयोजनः। गुरुस्तज्ज्ञानं च कल्पितमिति चेत् शिष्यतज्ज्ञानयोरपि कल्पितत्वात्तदप्यनिवर्तकं। कल्पितत्वेपि पूर्वविरोधित्वेन निवर्तकमिति चेत्। तदाचार्यज्ञानेऽपि समानमिति तदेव निवर्तकं भवतीत्युपदेशानर्थक्यमेव। इति कृतमसमीचीनवादैर्निरस्तैः॥

विचारः

नत्वेवाहमित्यत्र तु शब्दः स्मृत्याद्युक्तदिशा ईश्वरस्येतरेषामिव देहतोप्युत्पत्तिविनाशौ न भवत इति विशेषार्थः। इदं विवृत्याचार्येण प्रदर्शितमनुसंधेयम्। नित्यत्वेन यत्किंचिद्भगवज्जीवयोस्साहश्येऽपि तयोस्तारतम्यं महदिति 'तु' शब्दभावः॥ केचिदिमं शब्दं देहात्मनोर्वैलक्षण्यद्योतनार्थत्वेन व्याकुर्वते। द्वितीयार्धे 'च' शब्दोऽनादित्वेन सह नित्यत्वस्य समुच्चयार्थ इति विवृतौ दर्शितम्। चोयस्मादित्यर्थे वा॥ यदनादि तन्नित्यमिति व्याप्तिसूचनपूर्वकं वक्ष्यमाणस्य नित्यत्वस्य हेतुरनादित्वमिति फलितं। अहं जातु

नासं इति नैव न चैव नभविष्याम इत्यवधारणद्वयस्यायं भावः । देहविवक्षयापीश्वरः अनादिरिति ॥

श्लोके नञ्घटितप्रयोगाणां प्रयोजनं एवं द्रष्टव्यम ॥ केवलं सर्वे वयं अभूम सर्वे वयं भविष्यामः इत्येतावन्मात्रोक्तौ सर्वेषामात्मनां सार्वकालीनत्वं न प्रतीयेत । अतः प्रागभावाप्रतियोगित्वध्वंसाप्रतियोगित्वसमर्थनार्थं जातु न नासं जातु न नासीः जातु न नासन जातु न न भविष्यामः इत्युक्तं ज्ञायते । द्वौ नञौ प्रकृतमर्थं सातिशयंगमयत इति न्यायस्तु प्रसिद्धः ।

श्लोके भूतभविष्यत्कालसंबन्धमात्रोक्तावपि कालत्रयवर्तित्वमेव विवक्षितं । वर्तमानकालसंबन्धः स्फुटत्वान्नोक्तः ॥

इदं गीताशास्त्रमर्जुनं निमित्तीकृत्य लोकोपकाराय प्रवृत्तमिति न विस्मरणीयं । एवं चेदर्जुनाद्यवगतप्रमेयाणां चोक्तिः प्रपंचनं वोपपद्यते अन्यथा तत्र तत्र शंकाबाहुल्यं दुष्परिहरं भवेत् ।

गीताशास्त्रे अधिकृताः केचनाज्ञानिनः केचन ज्ञानिनः । केषांचिदीश्वरविषये न सन्देहः जीवविषये तु स स्यात् । केचन श्रीकृष्णमीश्वरं मन्वानाः अपरे तत्रापि विप्रतिपद्यमानाः ।

अधिकारिभेदविवक्षया नत्वेवाहमिति श्लोको द्वेधा योजितो दृश्यते । ये न जानन्ति श्रीकृष्णमीश्वरं नित्यं च तद्विवक्षया यथाश्रुतैव योजना सर्वे चेतना अनादयः तस्मान्नित्या इति । ये श्रीकृष्णमीश्वरं नित्यं जानन्ति जीवनित्यत्वमात्रे विप्रतिपद्यन्ते तदपेक्षया तु योजनान्यथा द्रष्टव्या । अस्मिन्पक्षे श्रीकृष्णः दृष्टान्तः । अर्जुनभीष्मादयः नित्याः चेतनत्वेसति अनादित्वात् ईश्वरवत् इति प्रयोगः । पूर्वस्मिन्प्रयोगे दृष्टान्तोऽन्यत्रान्वेषणीयः ।

अत्र अनादित्वहेतुना नित्यत्वसाधने प्रागभावे व्यभिचारमाशङ्क्य हेतुशरीरे भावत्वे सतीति विशेषणं दद्से । प्रमितनिवर्तकशून्यत्वं भावत्वमिति

परिष्कारेण प्रागभावे भावरूपाज्ञाने च न व्यभिचार इति ज्ञेयं। भावत्वे सतीति विशेषणोपादानमभ्युपगमवादत्वेन स्वीकृतम्भाति। अनादित्व-नित्यत्वयोर्व्याप्तिः प्रमाणप्राप्तत्वात्। "अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः। उत्पाद्यश्चेन्नशेदपि" इति। प्रमितेतु व्याप्यव्यापकभावे व्यभिचारशंकाया एव नावकाशः।

प्रथमयोजनायां तथाच ईश्वरस्य दृष्टान्तत्वेन न विवक्षेतिपक्षे श्रीकृष्णा-नादित्वप्रदर्शनस्य तन्नित्यत्वप्रदर्शनस्य वा का संगतिरिति विचार्यं भवति। अत्राह कश्चित्। "यद्वाजयेम यदिवा नो जयेयु"रिति वदतार्जुनेन परेषामिव स्वेषामपि पराजयपक्षे मरणमाशंकितमिति तत्परिहारायार्जुननित्यत्वकृष्ण-नित्यत्वयोः प्रदर्शनमर्थवत्। तत्र च परमात्मापेक्षया स्वात्मनः प्रत्यासन्न-त्वादादौ स्वात्मनित्यत्वोक्तिः। तत्राप्यर्जुनस्य स्वात्मापेक्षया भगवदात्मा अधि-कतरप्रेमास्पदं अतो भगवद्विपत्यभाव एव प्रथमं तस्य बुभुत्सेति तद्विजानता भगवता प्रथमं नत्वेवाहमिति स्वनित्यत्वं प्रदर्शितं" इति। इदमुपपादनं क्लिष्टम्। यदुक्तं स्वात्मनः प्रत्यासन्नत्वं तदिहानुपयुक्तम्। यद्वा जयेम इत्यादौ पाण्डवयूथ्यानां पराजये शंकितेऽपि श्रीकृष्णस्य मरणं न कुत्राप्याशंकितवा-नर्जुनः॥

परे तावदर्जुनं पुनः पुनः परममूढं वदन्ति॥ तदानुगुण्येनैव पद्या-क्षराणि योजयन्ति च। जीवनित्यत्वं ईश्वरनित्यत्वं श्रीकृष्णस्येश्वरत्वं चाज्ञात्वा परममूढ अर्जुनइत्यादायोक्तां प्रथमां योजनामेवानुमोदन्ते। श्रीमध्वस्तु योजनाद्वयमपि लोकस्थनानाविधाधिकारिभेदविवक्षया युक्तं मन्यते।

द्वितीययोजनायां यथा तथेति दृष्टान्तज्ञापकशब्दयोरध्याहारेण वाक्य-भेदमंगीकृत्य व्याख्येयं॥ ईश्वरनित्यत्वस्यानाशंकितत्वात्तस्य दृष्टान्तत्वेनोपा-दानं सुरसं भाति॥

ब्रह्मानन्दगिर्याख्यव्याख्यायां वेंकटनाथस्त्विमं दृष्टान्तत्वपक्षं श्रीमध्वेनोभयोः पक्षयोर्योऽन्यतरपक्षत्वेनाभिमतः तं बहुधा दूषयति । यथा तथेत्यध्याहारपूर्वकमियं योजना नकेवलं श्रीमध्वोक्ता किंतु रामानुजाचार्याभिहिता च । एवमेव मधुसूदनीयेऽपि व्याख्यातं भाति । रामानुजमध्वाभ्यामेवायं पक्ष उक्त इति भ्रान्त्वेवायं दूषितवानिति भाति । अस्योक्तौ द्वौ दोषौ प्रतीयेते । प्रथमः । अर्जुनोवान्योवा यदि वेदान्तप्रसिद्धेरीश्वरं नित्यं जानाति तर्हि वेदान्तादेव जीवमपि नित्यं जानात्येव इत्येकः । द्वितीयः । अर्जुनोनविश्वरूपदर्शनात्पूर्वं कृष्णं परमात्मानं जज्ञौ । तत्पूर्वं परब्रह्मत्वाध्यवसायाभावस्य तदनन्तरं तत्सद्भावस्य च कण्ठत एवोक्तेरिति । अत्राद्यस्योत्तरं पूर्वपक्षानुवादपूर्वकं दत्तम् प्रमेयदीपिकायाम् ॥ "ननु वेदान्तैरीश्वरनित्यत्वं जानन्तस्तत्रैवोक्तं जीवनित्यत्वं कथं न जानन्ति । उच्यते । नित्योनित्यानां इति निर्धारणसामर्थ्याज्जीवानां नित्यत्वमीश्वरस्य परमनित्यत्वमवगम्य मन्दाः प्रतिपद्यन्ते, नित्यत्वं हि विनाशाभावः । नचाभावस्तारतम्यवान् । अत ईश्वर एव नित्यः जीवेषु तूपचार इति । तान्प्रत्यनुमानेन जीवनित्यत्वं ईश्वरदृष्टान्तेन साध्यते" । इति । एतदुपर्याह वेंकटनाथः । "जीवनित्यत्वोपपादनस्यापि "न जायते म्रियते वा विपश्चित्" "अविनाशी वा अरेऽयमात्मा" इत्यादिश्रुतिभिरेव कृतत्वात् । नित्यानां चेतनानां बहूनां नित्यश्चेतन एको यः कामान्विदधातीति संबन्धपष्ठ्यैवात्र श्रुत्यर्थाजस्येन निर्धारणषष्ठ्यसिद्धेश्च" । इति अत्रोच्यते । न जायते इत्यादि श्रुतिषु जीवनित्यत्वे उक्तेपि परमनित्यत्वनित्यत्वोक्तिपर्यालोचनया जीवनित्यत्वमौपचारिकं इति तत्रापि मन्दानां शंका स्यादेव ॥ नह्यत्र विवक्षितास्सुज्ञाः । ते हि समन्वयबलेन श्रुत्यर्थं सम्यगधिगच्छन्ति ईश्वरस्य देहनित्यत्वेनैव परमनित्यत्वं प्रतिपत्स्यन्ते च । मन्दास्तु पूर्वोत्तरापरिज्ञानात् आपातार्थमवलम्ब्य परमनित्यत्वोक्त्या भ्रान्ता भवन्ति । मन्दाशंकाया अप्यनुपेक्ष्यत्वेन परिहाराय प्रकृतोक्तिरिति युज्यत एव ।

नित्योनित्यानामित्यत्र संबन्धषष्ठ्या श्रुत्यर्थोऽजस्यं यदुक्तं तत्स्यात् । नित्यानां मध्ये यो नित्यः इति निर्धारणषष्ठ्या अपि संभावितत्वेन शंका न निर्मूला भाति ।

द्वितीयोदोषः । अर्जुनो न कृष्णं ईश्वरं विश्वरूपात्पूर्वं जज्ञाविति । अस्मिन्पक्षे श्रीमदाचार्येण तत्र तत्रार्जुनस्य ज्ञानित्वं यत्प्रतिपादितं तद्दृष्टव्यं । अर्जुनोहि नरांशइन्द्रः पार्थार्ष्टिषेणेति ध्रुवप्रह्लादनारदादिज्ञानिषु गणितश्च द्वितियस्कंधभागवते ॥ अपरोक्षज्ञानिनोपि मानुषान्नभोजनादिनिमित्तान्मोहस्तत्रोपपद्यतएव । नकोऽप्यपरोक्षज्ञानी भगवदतिशयं कृत्स्नतो जानातीति अर्जुनस्य स्वमौढ्यवचांसि च युज्यन्ते ( यच्चाहायं दूषकः, ( चतुर्थाध्याये "अपरंभवतो जन्म परं जन्म विवस्वतः। कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति" इत्याद्यर्जुनवाक्यादर्जुनस्याज्ञानं व्यक्तंभवतीति )( तदतीवमन्दं । कतिपयावताराज्ञानेप्यपरोक्षित्वाविरोधात् । विशेषज्ञानाय स्थापनाय वा पृच्छन्ति साधव इत्यपि समाधेयत्वात्। स्वस्य शंकाभावेऽपि लोकोपकाराय लोकशंकांगीकारेण प्रश्नसंभवाच्च ॥

यदि ईश्वरदृष्टान्तोक्तिपक्षस्सर्वथा दुष्टः तर्हि मधुसूदनश्रीधरौ न तं गृह्णीयातामित्येतदपि नालोचितं वेंकटनाथेनेत्यलं प्रपंचेन ।)

"अहंत्वमिमेजनाधिपा" इतिबहुवचनं अद्वैतविरोधीति स्फुटं । बहुवचनं नात्मभेदाभिप्रायेणेति शंकरभाष्यवचनं)(प्रत्याख्यातं रामानुजभाष्ये ।( इदं प्रत्याख्यानं दूषयति वेंकटनाथः । "भगवन्मताज्ञानविजृम्भितं सत्कूपमण्डूकन्यायावहं श्रुतिशतैर्दत्तोत्तरं" इति । प्रत्यक्षप्राप्तभेदानात्मनः, अहं त्वमिमे इत्यनूद्य तन्नित्यत्वमेवात्र प्रतिपाद्यमित्ययं बहुवचनस्योपपत्तिमाह ) इदमसारं । (यतः स्वायत्ते शब्दप्रयोगे भेदबोधकशब्दैरनुवादोऽपि न संगच्छते ।)

रामपरशुरामयोर्भेदाभावेऽपि यथा विवादः जयापजयव्यवहारश्च तथार्जुनकृष्णयोर्गुरुशिष्यभावइति पुनस्समाधत्ते ॥ अचिन्त्याद्भुतशक्तिमान्ना-

रायणो लीलयानेकरूपाणि विधाय व्याजहार इति रामयोर्व्यवहार उपपद्यते। तस्य प्रकृते कउपयोगः? ततः श्रीकृष्णस्याज्ञानित्वेऽउपदेष्टृत्वं नसेत्स्यति ज्ञानित्वेचोपदेशायोगः इति रामानुजदूषणं परिहर्तुं प्रयतते ॥ "न भगवान् निवृत्ताज्ञानः। सज्ञ सर्वज्ञत्वात् महामायावित्वात्। न च सर्वज्ञस्याज्ञानसंबंधविरोधः ॥ उपाधेः प्रतिबिंबपक्षपातित्वात्। न च ज्ञानाज्ञानयोः सामानाधिकरण्यानुपपत्तिः ॥ ज्ञानस्य स्वविषयावरकाज्ञानेनैव सह सामानाधिकरण्यविरोधात् ॥ तस्माद्भगवतस्तत्वज्ञानित्वेप्यैंद्रजालिकवत्स्वाधीनमायामूलकमिथ्याजगत्प्रतिभासोप्यस्तीति उपदेशव्यवहारस्संगच्छते" इति तस्याशयः॥ दुर्घटमिदं प्रकरणं। यद्दुर्घटत्वमविद्याया भूषणमित्युच्यते तन्मायामतस्यापि समं भाति ॥ भगवति ज्ञानाज्ञानयोस्सामानाधिकरण्यं यदुपपादितं तत्परमदुर्घटं दुर्गमं च। यदुक्तं ऐद्रजालिकदृष्टान्तेन भगवतोमिथ्याप्रपञ्चदर्शनादिकं तदसत्। वस्तुतऐंद्रजालिकस्य स्वकल्पितचूतादीनां दृष्टयगोचरत्वात्। मिथ्यावादे व्याघातापसिद्धान्तशास्त्रानारंभोपदेशायोगानिष्फलपरिश्रमादयोदोषाः संभवन्तीति दिक्। ग्रंथबाहुल्यभिया विरम्यते। देशिकटीकायां तात्पर्यचंद्रिकायां विस्तरतः प्रपञ्चितं जिज्ञासुभिः पटनीयामिति प्रार्थ्यते ॥

**देहिनोस्मिन्यथा देहे कौमारं यौवनं जरा।**
**तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति॥ १३ ॥**

वि० ॥ देहनाशभयादिति द्वितीयपक्षं निराह। देहिन इति। देहिनो देहवतो जीवस्यास्मिन्निदानीं वर्तमाने स्थूले देहे कौमारं यौवनं जरा च यथा प्राप्नोति तथा देहान्तरप्राप्तिः। अयं भावः। कौमारावस्थाविशिष्टदेहहाने

यौवनावस्थाविशिष्टदेहहाने च शोकस्तावन्नास्तीति प्रसिद्धं । तत्कुत इति वाच्यं । जरादिविशिष्टदेहान्तरलाभात् । समानलाभेन हानिर्हि समाधीयते इति चेत् मृतावपि शोको न कार्यः देहान्तरलाभादेव । यदा तु जीर्णदेहलाभेन समीचीनयौवनदेहहानेः प्रतिनिधिः । तदा सुतरां समीचीनदेहांतरलाभेन जीर्णदेहहानेरिति । अतो धीरो बुद्धिमान् तत्र देहनाशविषये नमुह्यति न मोहं प्राप्नोति । एतेषां देहाः नश्यन्तीति शोकं न प्राप्नोतीत्यर्थः । तत्रावस्थामात्रहानिः अत्रावस्थावतोपीति वैषम्यमनुपयुक्तं । निष्कदानेन पटग्रहणदृष्टेरिति । अत्र देहिन इत्युक्त्या देहवतो जीवस्यैव न तु देहदेहिभेदहीनस्य हरेर्जराद्यवस्था देहान्तरावाप्तिर्वेति सूचितं । देहान्यजीवएवनास्ति एवंच त्वदादयोजनाधिपा नित्याः अनादित्वात् इति प्रागुक्तप्रयोगे देहपक्षीकारे असिद्धिबाधौ जीवपक्षीकारेचाश्रयासिद्धिरिति तृतीयपक्षमाशंक्य परिहरति । देहिन इति । अत्र कौमारादिविषयेण तदनुभवो विषयी लक्ष्यते । देहिन इत्यस्य देहादन्यस्येत्यर्थः । देहोस्यास्तीत्यर्थे मतुबर्थेनिप्रत्ययविधानात् । एकवचनादेकस्येत्यपि लभ्यते । देहान्तरशब्दोत्रानेकदेहपरः । तथाचायमर्थः । अस्मिन्देहे कौमारं कौमारानुसंधानं यौवनं यौवनानुसंधानं जरा जरानुसंधानं । योहं कुमारशरीरानभूवं स इदानीं युवशरीरवान्वर्ते योहं युवशरीरवानभूवं स

इदानीं जीर्णशरीरवान्वर्ते इत्येवं रूपेण तावदस्ति । तच्च देहिनो देहवतो देहान्यस्येति यावत् । देहशब्दोत्र देहेन्द्रियान्तःकरणसंघातपरः। देहेन्द्रियान्तःकरणेभ्योन्यस्य चेतनस्य भवति । देहादेर्जडत्वेनानुसंधानकर्तृत्वायोगात् । एवंच देहेन्द्रियादितोऽतिरिक्तजीवसिद्धिः । तथाचैकवचनबलादेकस्यैव देहादन्यस्य कौमाराद्यनेकदेहानुसंधानं यथा तथा देहान्तरप्राप्तिरनेकदेहप्राप्तिर्देहिनो देहादन्यस्यैव भवतीति पूर्वार्धेन देहादन्यसिद्धिः । त्रिपाद्या चोक्तविधयानेकदेहप्राप्तिमान् सिद्ध इति । देहादन्यजीवपक्षीकारे नाश्रयासिद्धिः। प्रत्यग्रजातस्य शिशोराहाराद्यभिलाषेण पूर्वपूर्वतरदेहानुसंधानेन सिद्धानेकदेहानुगत्याऽनादित्वसिद्धेर्नहेतोः स्वरूपासिद्धिरितिभावः । ननु देहाद्यन्यतमस्यैवास्त्वनुसंधानं चार्वाकाद्युक्ततर्कबलादित्यत आह धीर इति । बुद्धिमांस्तत्र देहादन्यात्मविषये न मुह्यति । देहादीनां जडत्वकरणत्वादिना कर्तृत्वायोग इत्यादिरूपेण ते तर्का निरस्या इति भावः ।

शा० । तत्र कथमिव नित्य आत्मेति दृष्टान्तमाह देहिन इति । देहो अस्यास्तीति देही तस्य देहिनो देहवत आत्मनोऽस्मिन्वर्तमाने देहे यथा येन प्रकारेण कौमारं कुमारभावो बाल्यावस्था यौवनं यूनोभावोमध्यमावस्था जरा वयोहानिर्जीर्णावस्थेत्येतास्तिस्रोऽवस्था अन्योन्यविलक्ष-

णास्तासां प्रथमावस्थानाशे न नाशो द्वितीयावस्थोपजननेनोपजननमात्मनः किं तर्ह्यविक्रियस्यैव द्वितीयतृतीयावस्थाप्राप्तिरात्मनो दृष्टा यथा तथा तद्वदेव देहादन्योदेहान्तरं तस्यप्राप्तिरविक्रियस्यैवात्मन इत्यर्थः ॥ धीरो धीमांस्तत्रैवं सति न मुह्यति । नमोहमापद्यते ॥

रा० । एकस्मिन्देहे वर्तमानस्य देहिनः कौमारावस्थां विहाय यौवनाद्यवस्थाप्राप्तौ आत्मनः स्थिरत्वबुद्ध्या यथात्मा नष्ट इति न शोचति देहाद्देहान्तरप्राप्तावपि तथैव स्थिर आत्मेति बुद्धिमान् न शोचति । अत आत्मनां नित्यत्वादात्मानो न शोकस्थानम् । एतावदत्रकर्तव्यं । आत्मनां नित्यानामेवानादिकर्मवश्यतया तत्तत्कर्मोचितदेहसंसृष्टानां तैरेव देहैर्बन्धनिवृत्तये शास्त्रीयं स्ववर्णोचितं युद्धादिकमनभिसंहितफलं कर्म कुर्वतामवर्जनीयतया इन्द्रियैरिन्द्रियार्थस्पर्शाश्शीतोष्णादिप्रयुक्तसुखदुःखदाभवन्ति ॥ ते तु यावच्छास्त्रीयकर्मसमाप्ति क्षन्तव्या इति ॥

विचारः

अयं श्लोको द्वेधा व्याख्यातो विवृत्याचार्येण ॥ अशोच्यानित्युक्तप्रमेयस्य शोकाभावस्योपपादकतया एकं व्याख्यानं । नत्वेवाहमित्युक्तस्य जीवनित्यत्वस्य प्रपंचकतया द्वितीयं व्याख्यानम् ॥ तथाहि ॥ कुतो न शोकः कार्यः ? ॥ मृतेन पुनर्देहान्तरप्राप्तेरित्युत्तरम् । प्रतिनिधिलाभस्य निश्चितत्वेन किमिति शोक इति यावत ॥ जीर्णशरीरहान्या नूतनशरीरप्राप्तौ यो लब्धः

प्रतिनिधिः स प्रायशः उत्तमएव स्यात् । कचिदधमप्रतिनिधिलाभेऽपि न शोकः कार्यः ।

प्रतिनिधिः समो वा उत्तमो वा अधमो वा॥ समोत्तमयोर्लाभे तु न शोकः। अधमलाभेऽपि उत्तमापगमेन अधमोलब्धइति ज्ञानाभावेन न शोकः ॥ ज्ञानेऽपि तदा तदा तत्र तत्राभिमानस्य साम्याद्वा न शोकः ॥ पापक्षयहेतुत्वेन सप्रयोजनत्वाद्वा न शोकः ॥

द्वितीयव्याख्यानस्यायंभावः ॥

जीवाः नित्याः अनादित्वादित्यनुमानेन नित्यत्वं साधितमतीतश्लोकेन ॥ तत्र जीवसद्भावे मानाभावादाश्रयासिद्धिं वदन्ति चार्वाकादयः ॥ केचिज्जीवस्वरूपमंगीकुर्वाणा अपि अनादित्वमनभ्युपगच्छन्तः सन्तः स्वरूपासिद्धिमाहुः ॥

एवं दूषणद्वये प्राप्ते परिहारायाह भगवान्देहिन इति । अयमत्रश्लोकार्थः । द्वितीयार्धे प्राप्तिशब्दो ज्ञानपरः स्यात् । गत्यर्थानां ज्ञानार्थत्वप्रसिद्धेः । योहं कुमार शरीरवानभूवम् इदानीं युवशरीरवान्वर्ते इत्यादि सिद्धेक्षितृत्वहेतुना जडभिन्नोजीवः सिध्यति ॥ नहि जडस्येक्षितृत्वमुपपद्यते। तथाचेक्षितृत्वे सिद्धे जडभिन्नजीवसिध्या आश्रयासिद्धिर्विहन्यते ॥ देहात्मैक्यभ्रमस्तु नास्ति ॥ आविपालगोपालं मम देह इति भेदज्ञानस्यैव सत्वात् ॥ कृष्णोहमित्यादि व्यवहारस्तु यथा वस्त्रस्य कर्दमलेपने कृष्णं वस्त्रमित्यादिव्यवहारऔपचारिकस्तथौपचारिकः ॥ एतेन शरीरप्राणजाठरानलेन्द्रियमनोविषयसन्निधावेवेक्षणं भवतीत्येतेषामन्यतमस्यैवेक्षितृत्वं स्यादित्यपि न युक्तं । जडस्यानुसंधानायोगात् ।

देहीत्यत्र इनिप्रत्ययाद्देहदेहिभेदोवगम्यते । देहोस्यास्तीति देही । अस्यास्तीत्यनेन देहस्वामी देहभिन्न इत्युक्तं भवति ।

एवमीक्षितृत्वानुमानेन आश्रयासिद्धौ परिहृतायां स्वरूपासिद्धेः कागतिरित्यवशिष्यते । अत्रापि देहिन इति श्लोक एवोत्तरं ॥ जन्मान्तरसंस्कारस्य शिशुव्यापारेण सिद्धेरुत्तरोत्तरदेहेषु पूर्वपूर्वदेहानुसंधानादनादित्वस्य च सिद्धिः । यथा योऽहं कौमारशरीरवान् स एवाहं युवा इति प्रत्यभिज्ञानेनैकोजीवस्सिद्धः तथाजन्ममरणप्राप्तदेहभेदेपि अनेकेषु पूर्वोत्तरदेहेषु एकस्यैव जीवस्य संसारस्सिद्धः । एवं प्रतिनिधिलाभविवक्षया शोकाभावं जीवसद्भावे अनादित्वेच मानं देहिन इति पद्यं प्रतिपादयतीति श्रीमध्वाशयः ।

यद्यपि यथा कौमाराद्यवस्थानामुत्पत्तिविनाशावश्यंभाविनौ तथा जन्ममरणयोरप्यवश्यम्भावेनापरिहार्यत्वविवक्षया शोको न कार्य इति कथंचित् व्याख्यातुं शक्यते । अस्याः युक्तेः कण्ठोक्त्या 'तस्मादपरिहार्येर्थे' इति वक्ष्यमाणत्वेन पौनरुक्त्यशंकयेव नानुगृहीतःपक्षआचार्येणेत्यूह्यते ।

प्रत्यभिज्ञानप्रकारे विचार्यमाणे यद्यपि कौमारादिदृष्टान्ते स एवाहमिति प्रत्यभिज्ञानमस्ति पूर्वदेहविषये तु प्रत्याभिज्ञानं गजेन्द्रादीन्विना सामान्यानां नैतद्रूपं ॥ तथापि यथाकथंचित्पूर्वजन्मसंस्कारस्याभ्युपेयत्वेन ईक्षितृत्वानुमानं जीवसद्भावे जन्मान्तरसद्भावे च मानं भवितुमर्हति ।

धीरस्तत्र न मुह्यति इति ॥ धीरः धीमान् मत्वर्थे र प्रत्ययः । तत्र, कौमाराद्यपगमे यथा तथा देहापगमे प्रतिनिधिरूपनूतनोदेहः प्राप्यते अतो न शोक इत्यत्र, ईक्षितृत्वहेतुना देहभिन्नं जीवमनुमातुं, कर्मादिवशात्प्राप्तेष्वनेकेषु अभिमानिजीवैक्यं निश्चेतुं च, धीमान्नमुह्यतीति संग्रहः ।

रामानुजाचार्यव्याख्याने अशोच्यत्वप्रपञ्चकतयैव भावउपपादितः ॥ देहस्य नश्वरत्वेप्यात्मनः स्थिरत्वाच्छोकः सोढव्यइति तदाशयः ।

शाङ्करव्याख्यातृषु भावप्रकाशोऽनैकप्रकारो दृश्यते । आह नीलकण्ठः । "यथा एकमपिस्थूलं शरीरं कौमाराद्यवस्थाभेदादनेकरूपं एवं

नित्यमपि लिंगशरीरं प्राणिकर्मभेदात्सुरनरतिर्यगाद्यवस्थाभेदादनेकं भवति। ततश्चोक्तन्यायेन स्थूलादिवत्सूक्ष्मादपि शरीरादात्माविविक्तएव। एवं च शोकादिधर्मिणोलिङ्गादपि विभिन्नस्य तव इष्टवियोगतः शोकोऽपि नयुक्तः" इति। इदं "देहिनो यथाऽस्मिन्देहे कौमारादिकं तद्देहनिबन्धनमेव न तु स्वतः। तथैतद्देहनाशे देहान्तरप्राप्तिरपि लिङ्गशरीरनिबन्धना न तु स्वतः" इति श्रीधरादिव्याख्यानमनुधावति। अत्रोच्यते। यदुक्तं नीलकण्ठीये लिङ्गशरीरस्य नित्यत्वं तदसत्। लिङ्गभङ्गरूपमोक्षस्याभावप्रसङ्गात्॥ लिङ्गशरीरस्य देहान्तरप्राप्तिरित्यर्थः कथं श्लोकाक्षराल्लभ्यते इति चिन्त्यं। देहिनो हि देहान्तरप्राप्तिरुक्ता। नहि देहीत्र लिङ्गशरीरं भवितुमर्हति। यस्य कौमारादिकं तस्यैव हि देहान्तरमुच्यते॥ स्थूलस्य कौमारादिकं सूक्ष्मस्य भिन्नदेहप्राप्तिरितिभावकथनं श्लोकाक्षराप्राप्तं भाति। अस्मिन् श्लोके लिङ्गशरीरस्य समाकर्षणं निर्निमित्ताध्याहारकलुषितमिति वेंकटनाथोऽपि प्रत्याचष्टे। अतो नास्माकमस्ति तद्दूषणप्रपञ्चनभारः।

लोकायतिकवादं लक्षीकृत्य (१) देहान्यआत्मा कथं सिद्धः (२)जीवोस्तीत्यभ्युपगमेपि कथं तस्यानादित्वनित्यत्वे इति शङ्काद्वयपरिहाराय श्लोकइति मधुसूदनोप्याचष्टे।

श्लोकार्थोपपादनावसरे स आह। "तस्य देहिनएकस्यैव सतोऽस्मिन्वर्तमाने देहे यथा कौमारं यौवनं जरेत्यवस्थात्रयं परस्परं विरुद्धं भवति न तु तद्भेदेनात्मभेदः, य एवाहं बाल्ये पितरावन्वभूवं स एवाहं वार्धके प्रणप्तृननुभवामि इति दृढप्रत्यभिज्ञानात् अन्यनिष्ठसंस्कारस्य चान्यत्रानुसन्धानाजनकत्वात्, तथा तेनैव प्रकारेणाविकृतस्यैव सत आत्मनो देहान्तरप्राप्तिरेतस्माद्देहादत्यन्तविलक्षणदेहप्राप्तिः स्वप्ने योगैश्वर्ये च तद्देहभेदानुसन्धानेऽपि स एवाहमिति प्रत्यभिज्ञानात् * * * एतेन देहाद्यतिरिक्तो देहेन सहोत्पद्यते विनश्यति चेति पक्षोपि प्रत्युक्तः। तत्रावस्थाभेदे प्रत्यभिज्ञोप-

पत्तावपि धर्मिणो देहस्य प्रत्यभिज्ञानुपपत्तेः । अथवा यथा कौमाराद्यवस्था-प्राप्तिरविकृतस्यात्मन एकस्यैव तथा देहान्तरप्राप्तिरेतस्माद्देहादुत्क्रान्तौ ॥ तत्र स एवाहमिति प्रत्यभिज्ञानाभावेऽपि जातमात्रस्य हर्षशोकभयादिसंप्रतिपत्तेः पूर्वसंस्कारजन्याया दर्शनात् । अन्यथा स्तनपानादौ प्रवृत्तिर्न स्यात् । तथाच पूर्वापरदेहयोरात्मैक्यसिद्धिः" इति ॥

अस्मिन्नुपपादने कौमाराद्यनुसंधानं जन्मान्तरानुसन्धानं च स्पष्टतः प्रतिपाद्य पद्यशब्दानां यद्व्याख्यानं कृतं तदवधार्यमिति प्रार्थ्यते । यतः शंकरानुगमुख्योऽपि श्रीमध्वव्याख्यायाः पन्थानमनुसृत्य प्रत्यभिज्ञानमेव दृढं पुरस्कृत्य व्याख्यातवानिति ।

अत्र यदुक्तं वेंकटनाथेन तच्चिन्त्यते । स आह । "कौमारादिदेह-भेदेऽपि स एवाहमिति प्रत्यभिज्ञानाद्देहातिरिक्तात्मप्रतिपादनपरोयं श्लोकः इति माध्वव्याख्यानं निरस्तं । अस्मिन्देहे कौमारं यौवनं जरेति वदता कौमाराद्यवस्थाभेदमात्रं देहस्त्वेक एवेति कण्ठतएवोक्तत्वेन तथा व्याख्यानस्य मूलविरुद्धत्वात् । न च केवलदेहस्यैकत्वेऽपि कौमारादिविशिष्टत्वेन भेदो न विरुद्ध इति वाच्यम् । आत्मन्यपि तथा भेदस्य सुवचत्वेन ततो देहात्मवाद-निरासासिद्धेः । अत एव योहं कुमारदेहवानासं सोहमिदानीं युवदेहोस्मीति प्रत्यभिज्ञानाद्देहभेद इत्यपि निरस्तं । योहं कुमार आसं सोहं युवास्मीति प्रत्यभिज्ञानादात्मभेदस्यापि प्रसंगात् । तत्र कौमारयौवनयोर्भेदो नात्मनः स एवाहमिति प्रत्यभिज्ञानादिति चेत् सममत्रापि स एवायं देहः इति प्रत्यभि-ज्ञानात् ॥ तस्मात् 'न जायते म्रियते' इत्यत्रैव देहात्मवादनिरासः । अत्र तु आत्मनित्यत्वप्रतिपादनमिति शांकरभाष्यार्थ एव युक्तः" इति ॥

इदं मन्दं ॥ स्यादयं श्लोकआत्मनित्यत्वपरः यथाशङ्करभाष्याभिमतः । आत्मनो देहव्यतिरेकेण यावदसिद्धिः तावदाश्रयासिद्ध्या नित्यत्वं दूरोत्सारित-

मिति देहव्यतिरिक्तदेह्युपपादनं संगतमेव । लोकायतिकादिनास्तिकवादा-निरस्ताइति मधुसूदनाभिप्रायं च श्रीमध्वभाष्यसंवादत्वेनात्र बुधाः पश्यन्तु ॥ " कौमारादिशरीरभेदेपि " इति श्रीमध्ववचनं । " कौमारादिभेदेपि स एवाहमिति प्रत्यभिज्ञानाद्यथात्मा भिन्नः सिद्धः " इति मधुसूदनीये ॥ अनयोर्व्याख्यानयोरन्ततः आशयभेदो नस्फुटः ॥ कुमारशरीरस्य युवशरीराद्योभेद उक्तः आचार्यवचसा स मूलविरुद्ध इति दूषितं वेंकटनाथेन । आस्तान्तु विचारोऽवयवोपचयापचयप्राप्तपरिमाणादिभेदे द्रव्यभेदस्संभवति वा न वेति ॥ देहइत्येकवचनेन देहैक्यस्य कण्ठत एवोक्तत्वात् माध्वव्याख्यानं मूलविरुद्धमिति यदुक्तं तन्न ॥ समुदायैकवचनत्वग्रहणेन समाधानस्य सुलभत्वात् ॥ विशेषणभेदाद्विशिष्टभेदमादाय भेदेंगीकृतेपि विशेष्यैक्यस्यानपायाच्च ॥ कौमारादिशरीराणां तत्वतोभेदाभेदमङ्गीकुर्वता श्रीमदाचार्येणाभेदविवक्षया देहे इति मूलगतैकवचनं, भेदविवक्षया " कौमारादिशरीरभेदेपि " इति भाष्यवचनमित्युपपन्नं भवति ।

अत्रास्मत्प्रक्रियामजानता वेंकटनाथेन बहुशोऽनुक्तोपालम्भः कृतः । देहिन इतीनिप्रत्ययेन प्राप्तदेहात्मभेदस्य को निवारयिता । देहात्मानौ भिन्नावितिस्पष्टोक्तिस्तु न जायते म्रियत इत्यत्रापि नास्ति । अतस्तत्रैवदेहात्मवादनिरास इति को निर्बन्धः॥ शरीराणामनेकत्वमन्तरा शरीरैकत्वं न सेत्स्यति। शरीरानेकत्वं तु विशेषणभेदाद्विशिष्टभेद इति न्यायेनैव प्राप्यते । अनेनैव न्यायेन विशिष्टभूतानामात्मनां च भेदोप्यायास्यतीत्यात्मनां एकत्वं शरीराणामनेकत्वमिति वक्तुं न शक्यते इति हि तस्याशयः । कौमारादिशरीराणां विशिष्टभेदन्यायेन भेदेपि यथा प्रत्यभिज्ञानाद्विशेष्यैक्यसिद्धिः, तथा विशिष्टानामात्मनां उक्तन्यायमात्रेणानेकत्वेपि विशेष्यैक्यं प्रत्यभिज्ञानादेव लभ्यत इत्युक्तौ दोषाभावात् । आस्तान्तावदत्रविचारः कुमारशरीरस्य युवशरीराद्वस्तुतः भेदो वा अभेदो वा भेदाभेदोवेति ॥ अयं दूषकः प्रत्यभिज्ञानं जन्मान्तरसंस्कारं वा

हेतुत्वेनाभिप्रेतं न सहते। देहान्तरप्राप्तौ शिशुवृत्त्यादिक न प्रमाणयति । ये मधुसूदनश्रीधरश्रीमध्वादयस्तथा व्याचक्षते ते श्लोकार्थं न जानन्तीति च मन्यते ॥ कौमाराद्यवस्थाभेदे यद्यपि स एवायमिति प्रत्यभिज्ञानात् देहस्य एकत्वसिद्धिः, देहान्तरविषये तु प्रत्यभिज्ञानं नास्त्येव, अतो दृष्टान्तोविषम एव, तथापि, देहान्तरविषये श्रुतिरेव प्रमाणं श्रुत्येकसमधिगम्यात्मतत्वे लौकिक-प्रत्याभिज्ञानाभावस्याकिंचित्करत्वात् इति च मन्यते । अत्र जीवात्मतत्वस्याहं प्रत्ययवेद्यस्य श्रुत्येकसमधिगम्यत्वं दुर्ज्ञेयं । किंच अयं हि वेंकटनाथाभि-मतोऽर्थः श्लोकस्य ॥ यथा देहधर्मभूताः कौमाराद्यवस्थाः देहात्मैक्याध्यासा-दात्मनि प्रतीयन्ते न तु वस्तुतस्तद्धर्माः, तथैव देहधर्मभूतावुत्पत्तिविनाशा-वपि तदैक्याध्यासादात्मनि प्रतीयेते, देवदत्तो जातो मृत इति न वस्तुतस्त-द्धर्मौ इति । एतेन कौमारादयः जनिमृतीचात्मन्यध्यस्तधर्मा इति श्लोकार्थ उक्तोभवति । श्लोकाक्षरानुक्तं प्रत्यभिज्ञानादिकं किंचिदप्यसहमानोयं कुत्राक्षरेष्वध्यासं प्रवेशयतीति न ज्ञायते । देहिन इत्यत्र अस्यास्तीति व्युत्पत्त्या आध्यासिकसंबन्धो विवक्षितः न स्वामितेति कथं निश्चीयते । देहान्तरप्राप्तिश्च देहिनः कथ्यते ॥ वस्तुतः स्यातां जनिमृतीदेहधर्मौ । अयं त्वार्थिकार्थो न चोदनार्थो भाति । अध्यासस्यात्र संगतिर्दुर्ज्ञेयेत्यलं वेंकटनाथ-निरासायासेन ॥

उपरिष्टादनूदितप्रकारेण पूर्वोत्तरदेहेष्वात्मैक्यं वक्तीदं पद्यं इति व्याख्याय मधुसूदनः प्रकारान्तरेणापि व्याचष्टे ॥( "देहिन एकस्यैव तव यथा क्रमेण देहावस्थोत्पत्तिविनाशयोर्न भेदः, नित्यत्वात् । तथा युगपत्सर्व-देहान्तरप्राप्तिरपि तवैकस्यैव ॥ विभुत्वात् ॥ मध्यमपरिमाणत्वे सावयवत्वेन नित्यत्वायोगात् । अणुत्वे सकलदेहव्यापिसुखाद्यनुपलब्धिप्रसंगात् विभुत्वे निश्चिते सर्वत्र दृष्टकार्यत्वात्सर्वशरीरेष्वेक एवात्मा त्वमिति निश्चितोर्थः )

तथाच विवादगोचरापन्नाः सर्वेदेहाः एकभोक्तृकाः देहत्वात्स्वदेहवत् इति ॥ श्रुतिरपि एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतांतरात्मा इति ॥ एतेन यदाहुः देहमात्रमात्मा इति चार्वाकाः "इन्द्रियाणि मनः प्राणश्च इति तदेकदेशिनः, क्षणिकं विज्ञानमिति सौगताः देहातिरिक्तः स्थिरो देहपरिमाणः इति दिगंबराः, मध्यमपरिमाणस्य नित्यत्वानुपपत्तेः नित्योणुरित्येकदेशिनः, तत्सर्वमपाकृतंभवति नित्यत्वविभुत्वस्थापनात्" इति ।

अत्रोच्यते ॥ विवादगोचरत्वापन्नानि कळत्राणि व्यवहारतोऽनेकभोक्तृकानि कळत्रत्वात् देवदत्तकळत्रवत् इत्याभाससमानयोगक्षेमं देहत्वानुमानं । एकोदेवइति श्रुतिर्नजीवपरा किंत्वीश्वरपरा । गीताश्लोके देहीति प्रयोगादीश्वरो नाभिप्रेतः इति गम्यते । ईश्वरदेहस्येश्वरादत्यन्ताभिन्नत्वेन तद्विषये देहीति भेदनियतेनिप्रत्ययघटितप्रयोगस्यानुपपन्नत्वात् ।

दृष्टान्ततयोक्तकौमारादयः पौर्वापर्येण कालक्रमप्राप्ता इति देहान्तरप्राप्तिरपि तथाप्राप्तमरणजननपरेति वाक्यगत्यावगम्यते। तस्माद्यौगपद्यं नार्थः ।

नित्यत्वोपपादनाय हि श्लोकः ॥ अत्रविभुत्वस्थापनं न प्रकरणप्राप्तं दृश्यते। यायुक्तयः विभुत्वस्थापनायोपन्यस्ता. तास्तु दुष्टाः प्रमाणबाधात् ॥

जीवाणुत्वं खलु ब्रह्मसूत्रेषु साधितमिति श्रीमध्वरामानुजादिसिद्धान्तः । परे अपि हूणाः इममेव पक्षं बादरायणीयं मन्यन्ते । जीवाणुत्वे सकलदेहव्यापिसुखाद्यनुपलब्धिप्रसंगं यमाह मधुसूदनः सोपि न साधुः ॥ 'अविरोधश्चन्दनवत्' "गुणाद्वालोकवत्" इत्यादि ब्रह्मसूत्रैस्समाहितत्वात् । देहीत्येकवचनस्य विभुत्वेन सार्थक्यं यदुक्तं तन्न । अन्यथोपपत्तेरुक्तत्वात्— मधुसूदनव्याख्याने देहे इत्यस्य "युगपत्सर्वदेहे" इति व्याख्यानं अभिप्रेतं भाति । युगपत्सर्वदेहेत्याद्यशब्दार्थकल्पनं विभुत्वादिति हेत्वध्याहारक्लेशश्चेति वेंकटनाथेनैव मधुसूदननिरासः कृतो वेदितव्यः ॥ १३ ॥

मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।
आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत॥ १४

वि० । सत्यमेव तत्सर्वं भवदुक्तं । उक्तविधया जीवहानेरभावात् देहहानावपि समीचीनदेहान्तररूपप्रतिनिधिलाभात् बान्धवानां हानिर्भविष्यतीति धिया शोको न युक्त इति । तथापि तन्मृतौ ममैव सुखहानिर्दुःखप्राप्तिश्च स्यात् । तद्देहदर्शनस्पर्शनसंभाषणादेः सुखहेतोरभावात् । छेदभेदादिना विकृततद्देहदर्शनस्य दुःखहेतोर्भावादित्यत आह । मात्रेति । मीयन्त इति मात्राः । माङ्माने इत्यतः कर्मणि त्र प्रत्ययः । स्त्रीत्वं शब्दस्वाभाव्यात् । ज्ञानविषयाः गन्धरसरूपस्पर्शशब्दाः। तेषां स्पर्शाः संबन्धाः । शीतोष्णशब्दौ शीतस्पर्शोष्णस्पर्शवाचकौ ॥ लक्षणया गन्धरसरूपस्पर्शशब्दाख्यसर्वविषयपरौ भूत्वा तदनुभवलक्षकौ । लाक्षणिकोक्तिकृत्यमग्रे व्यक्तं । गन्धरसरूपस्पर्शशब्दाख्यविषयाणां घ्राणरसनचक्षुस्त्वक्श्रोत्ररूपेन्द्रियैर्यथाक्रमं ये सन्निकर्षाः ते मात्रास्पर्शाः शीतोष्णसुखदुःखदाः । सुगन्धसुरससुरूपसुस्पर्शसुशब्दविषयकसाक्षात्काररूपानुभवजननद्वारात्मनः सुखप्रदाः। अनिष्टगन्धरसादिविषयकसाक्षात्कारजननद्वारा दुःखप्रदाः । तेषां मृतौ च तन्निमित्तसुखदुःखहानिप्राप्तीभवत इति किल कौन्तेय तवाशय इति पार्थहार्दमनूद्य भगवान् कृष्णः

काकुस्वरशिरस्क 'तु' शब्देनावधारणार्थकेन निराचष्टे। हे कौन्तेय मात्रास्पर्शा एव गन्धादिविषयेन्द्रियसन्निकर्षा एव इष्टानिष्टस्वविषयसाक्षात्कारद्वारा सुखदुःखदाः किमिति काकुस्वरेणाक्षेपः। केवलं तन्मात्रा एव न भवन्ति। किन्तु विषयेषु शोभनाध्यासनिमित्तस्नेहरूपेण वा अरित्वादिभ्रमहेतुकद्वेषरूपेणवाऽभिमानसहिता एव तथेत्यर्थः॥ कुत एवं तन्मात्रा एव स्वस्वविषयानुभवद्वारा सुखदुःखहेतवो भवन्त्वित्यत आह। आगमेति। यत इति शेषो वा हेतुगर्भविशेषणं वा। एतच्चागमापायित्वं शीतोष्णसुखदुःखदाः मात्रास्पर्शाः आगमापायिन इत्येवं स्वस्वविषयकधीद्वारा सुखदुःखदत्वविशिष्टमात्रास्पर्शानां विशेषणं। सविशेषणे हि विधिनिषेधौ विशेष्ये बाधाद्विशेषणमुपसंक्रामत इति न्यायात् मात्रास्पर्शानां स्वस्वविषयकधीद्वारा यत्सुखदुःखदत्वं तस्यागमापायित्वादिति सुखादिदत्वरूपविशेषणमुपसंक्रामति। सुप्त्यादौ श्रीचन्दनाग्निकणादिशीतोष्णस्पर्शसंबंधे अविनाभूतमनस्संबंधात्मसन्निकृष्टत्वगिन्द्रियस्य सत्त्वेपि स्वविषयानुभवद्वारा सुखदुःखादिदत्वस्यादर्शनात्। जाग्रद्दशायामभिमानसत्वे एव तद्दर्शनात्। अन्वयव्यतिरेकाभ्याममभिमानसहिता एव मात्रास्पर्शाः स्वस्वविषयधीद्वारा सुखदुःखादिदाः न तु केवला इति भावः। सुप्तावन्येन्द्रियाणामुपरमेपि त्वगिंन्द्रियस्य नोपरमः। तस्य तदापि विषयसन्निकर्षोस्तीति ज्ञापनायै-

वेतरविषयलाक्षणिकशीतोष्णपदप्रयोगः॥ आगमापायित्वं चात्र गंगोदकस्येव प्रवाहतोनित्यत्वे व्यक्तिरूपेणानित्यत्वं न विवक्षितं। मात्रास्पर्शानां सुखादिदत्वेन तदयोगात्। तथात्वे सुप्त्यादौ सत्वेनाभिमानस्य प्रकृतान्वयव्यतिरेकोक्त्ययोगात्। अर्जुनस्याभिमाननिवर्तनबोधानुपयोगाच्च। किंतु किंशुककुसुमानामिव प्रवाहतोपि विच्छिद्यमानत्वं। सुप्तिमूर्च्छासंप्रज्ञातसमाधिषु छेदेन प्रवाहविच्छेदसंभवात्। तस्यप्रकृतोपयोगाच्चेतिभावेन आगमापायित्वं व्यनक्ति। अनित्याइति। शीतोष्णसुखदुःखदाः मात्रास्पर्शा अनित्याः प्रवाहतोप्यनित्याः तेषां सुखादिदत्वं प्रवाहतोप्यनित्यं यतोऽतोन्वयव्यतिरेकाभ्यां अभिमानयुताएव सुखादिदाइत्यर्थः। अतइतिशेषः। अभिमानहीनमात्रास्पर्शानां सुखादिदत्वाभावात् अभिमानत्यागेन तान्मात्रास्पर्शांस्तितिक्षस्व विफलीकुरु। सुखदुःखादिदा यथा न भवन्ति तथा कुरु। नह्यभिमानं विना कृतो मात्रास्पर्शरूपः सामग्र्येकदेशः सुखादिदाने शक्तोभवतीतिभावः॥

श० ॥ यद्यप्यात्मविनाशनिमित्तो मोहो न संभवति नित्य आत्मेति विजानतः। तथापि शीतोष्णसुखदुःखप्राप्तिनिमित्तो मोहो लौकिको दृश्यते। सुखवियोगनिमित्तोमोहः दुःखसंयोगादिनिमित्तश्चशोकइत्येतदर्जुनस्य वचनमाशंक्य भगवानाह। मात्रास्पर्शाइति। मात्राआभिर्मीयन्ते शब्दादय

इति श्रोत्रादींद्रियाणि ॥ मात्राणांस्पर्शामात्रास्पर्शाः शब्दादिभिः संयोगाः। ते शीतोष्णसुखदुःखदाः शीतमुष्णं सुखं दुःखं च प्रयच्छन्तीति । अथवा स्पृश्यन्तइतिस्पर्शाः विषयाः शब्दादयः । मात्राश्च स्पर्शाश्च मात्रास्पर्शाः शीतोष्णसुखदुःखदाः । शीतञ्च कदाचित्सुखदं भवति । कदाचिद्दुःखदं च । तथोष्णमप्यनियतरूपं । सुखदुःखे पुनर्नियतरूपतां न व्यभिचरतः। अतस्ताभ्यां पृथक् शीतोष्णयोर्ग्रहणं । यस्मात्ते मात्रास्पर्शादयः आगमापायिनः आगमापायशीलाः तस्मादनित्याः अतस्तान् शीतोष्णादींस्तितिक्षस्व प्रसहस्व । तेषु हर्षविषादं च माकार्षीरित्यर्थः ।

रा० ॥ इममर्थमनन्तरमेवाह । शब्दस्पर्शरूपरसगंधाः साश्रयास्तन्मात्राकार्यत्वाद्विषया इत्युच्यन्ते । श्रोत्रादिभिस्तेषां स्पर्शास्शीतोष्णमृदुपरुषादिरूपसुखदुःखदाभवन्ति। शीतोष्णशब्दः प्रदर्शनार्थः । तान् धैर्येण यावद्युद्धादि शास्त्रीयकर्मसमाप्ति तितिक्षस्व तेचागमापायित्वाद्धैर्यवतां क्षन्तुं योग्याः । अनित्याश्च ते बन्धहेतुभूतकर्मनाशे सत्यागमापायित्वेनापि निवर्तन्त इत्यर्थः ।

विचारः

मात्रास्पर्शाः=मात्राः विषयाः गंधरसरूपस्पर्शशब्दाः । तेषां स्पर्शाः संबन्धाः । घ्राणादीन्द्रियैर्यथाक्रमं सन्निकर्षाः । तु=एव। अयं काकुशिरस्कः एव कि? कौन्तेय हे अर्जुन शीतोष्णसुखदुःखदाः–विषयसाक्षात्कारद्वारा

सुखदुःखप्रदाः । शीतोष्णशब्दौ सकलविषयोपलक्षकौ । विषयोक्त्या विषयसाक्षात्कारो लक्ष्यते । लक्षितलक्षणा । सुप्तावन्येन्द्रियाणामुपरमेऽपि त्वगिन्द्रियस्य नोपरमः । तस्य तदापि विषयसन्निकर्षोऽस्तीति ज्ञापनायैवेतरविषयलक्षकशीतोष्णपदप्रयोगः ॥ आगमापायिनः कादाचित्काः । अनित्याः नाशवन्तः । आगमापायित्वोपपादकमिदं विशेषणं । आगमापायित्वमुभयथा संभवति । प्रवाहतो नित्यत्वे सर्वथा अनित्यत्वे च ॥ प्रकृतमागमापायित्वं द्वितीयप्रकारमिति द्योतनाय अनित्या इत्युक्तं ॥ तान् शीतोष्णादीन् तितिक्षस्व विफलीकुरु ॥ ननु आत्मनो नित्यत्वमस्तु । देहनाशे देहान्तरलाभोऽप्यस्तु । यद्यपि भीष्मादयो नित्याःआत्मापेक्षया । शरीरापेक्षया मृता अपि नूतनशरीराणि लभन्तएव । परन्तु मद्विवक्षयास्त्येव शोकावकाशः ॥ इष्टमित्रदर्शनस्पर्शसंभाषणादिविरहात् तेषां छेदभेदादिना विकृततद्देहदर्शनात् दुःखं भवतीति कथमशोक इत्याकांक्षायामुक्तं मात्रास्पर्शेति ॥ विषयेन्द्रियसन्निकर्षाः विषयानुभवद्वारा सुखं दुःखं वा ददत इत्यापातार्थः प्रतीयते । तन्न । अत्र 'तु' शब्दः एवार्थकः काकुशिरस्कश्च । विषयसन्निकर्षा एव केवलाः सुखदुःखदाः किं ? इत्यनेन नेत्युत्तरं लभ्यते । न चेत् कदा कथं सुखदुःखदा इत्याक्षेपे अभिमानसहकृता एवेति शास्त्रैरवगम्यते । अभिमानसहकृतामात्रास्पर्शाएव शीतोष्णसुखदुःखदा भवन्ति ॥ तथाच विषयसन्निकर्षाणां सुखदुःखदत्वं आगमापायित्वेनानित्यमिति भावः । अभिमानत्यागे सति सुखं दुःखं वा न संभवति । एतेनोपायेन भीष्मादिवियोगं विकृतिं च विफलीकुर्विति भावः ।

मात्रास्पर्शा इत्यत्र योगव्युत्पत्त्या मात्रा इन्द्रियाणीति शांकरव्याख्यानमसमीचीनं ॥ "बन्धवृक्षाश्रयाह्येषा प्रकृतिश्च गुणत्रयं । मूलं मात्राशिफास्तस्य" इति वायुपुराणप्रसिद्ध्या 'मात्रा' शब्दस्य विषये रूढत्वात् । मात्राश्च स्पर्शाश्चेति व्याख्यानमपि चिन्त्यम् ॥ इन्द्रियाणां विषयाणां वा पृथक् सुखदुःखहेतुत्वायोगात् ॥ तस्माद्विषयसंबन्धा इत्येवार्थः ॥ शीतोष्णसुखदुःख-

दा इति शीतोष्णशब्दौ विषयसामान्यलक्षकौ सन्तौ तत्साक्षात्कारं लक्षयत इति आचार्याशयः ॥ एवमेव शीतोष्णशब्दो दिक्प्रदर्शनार्थः । मृदुपरुषादि सुखदुःखहेतूनां सर्वेषां ग्रहणमिति रामानुजाचार्यः। "शीतोष्णवत्सुखदुःखदाः। शीतोष्णावनुकूलौ प्रतिकूलौ च सन्तौ यथासुखं दुःखं च ददाते तथैव शब्दादयोप्यनुकूलाः प्रतिकूलाश्च सन्तः सुखं दुःखं च ददत इत्यर्थः। अथवा शीतमुष्णं वा उत्पाद्य तद्द्वारा साक्षाद्वा सुखं दुःखं च ददते" इति (श० आ०) ॥

अत्र तावन्मात्रास्पर्शेति श्लोकस्य संगतिर्न स्फुटं ज्ञायते । नाप्यस्मिन् श्लोके अमुकः प्रमेयविशेष उच्यत इति ॥ का नाम शंका आक्षेपो वा ॥ किं समाधानमुच्यते—सोढव्यत्वोक्तौ निमित्तं युक्तयोवा भगवता कथितावा नेति न ज्ञायते ॥ व्याख्यातॄणां भावभेददर्शनेन मनश्चंचलं भवति ॥

अत्राह मधुसूदनः ॥ "देहिन इति श्लोकेनात्मनो विभुत्वमेकत्वं नित्यत्वं च समर्थितं । नित्यत्वे विभुत्वे न विवदामः । प्रतिदेहमेकत्वं तु न सहामहे । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाख्यनवविशेषगुणवन्तः प्रतिदेहं भिन्नाएव नित्या विभवश्चात्मान इति वैशेषिका मन्यन्ते ॥ इममेव च पक्षं तार्किकमीमांसकादयोऽपि प्रतिपन्नाः । सांख्यास्तु विप्रतिपद्यमाना अप्यात्मनोगुणवत्त्वे प्रतिदेहं भेदे न विप्रतिपद्यन्ते । अन्यथा सुखदुःखादिसंकरप्रसंगात् ॥ तथाच भीष्मादिभिन्नस्य मम नित्यत्वे विभुत्वेऽपि सुखदुःखादियोगित्वाद्भीष्मादिबन्धुदेहविच्छेदे सुखवियोगो दुःखसंयोगश्च स्यादिति शोकमोहौ नानुचिताविल्यर्जुनाभिप्रायः । समाधानं तु, सुखादिकं आगमापायशीलस्यान्तःकरणस्यैव न तु विभोरेकस्यात्मनः ॥ आगमापायिन इति षष्ठ्येकवचनं । सुखदुःखाद्याश्रयीभूतान्तःकरणभेदादेव सर्वव्यवस्थोपपत्तेर्ननिर्विकारस्य सर्वभासकस्यात्मनो भेदे मानमस्ति । सद्रूपेण स्फुरणरूपेण सर्वत्रानुगमात् ॥ अन्तःकरणं आगमापायि दृश्यं च । विषयसन्निकर्षाः अनियततया कदाचित्सुखं कदाचिद्दुःखं ददते । अत्यन्तास्थिरान् त्वद्भिन्नस्य

विकारिणस्सुखदुःखप्रदान् भीष्मादिसंयोगवियोगरूपान् मात्रास्पर्शान् त्वं तितिक्षस्व अकिंचित्करइत्युपेक्षस्व। दुःखितादात्म्याध्यासेनात्मानं दुःखिनं मा ज्ञासीः" इति ॥ तथाच भेदं पुरस्कृत्य दुःखित्वे शंकिते भेदं निरस्य दुःखित्वमन्तःकरणस्यैव नत्वर्जुनस्येति समाहितमित्युक्तं भवति ॥ इयं संगत्युक्तिः समाधानं चानुपपन्ने। सर्वदेहेषु जीवैक्यं नाद्यापि समर्थितं। देहिन इत्यत्रापव्याख्यानस्य निरस्तत्वात्। एकत्वमर्जुन आक्षिपतीति शंकाया नावकाशः। अप्रसक्तेः। स्वशोकं वियोगजं पुरस्कृत्य उपदिष्टाशोके आक्षिप्ते अध्यस्तत्वेन दुःखस्य मिथ्यात्वोपदेशः अनुपपन्नएव। प्रत्यक्षसिद्धस्य शोकस्यापन्हवायोगात्। सर्वमिथ्यात्वविवक्षया उपदेशस्तु परं पुनरुक्तः। वैशेषिकाद्यभ्युपगतं आत्मविभुत्वं सुखादीनामात्मसमवेतत्वं आत्मतादात्म्यं चातत्वमेव ॥ ज्ञानसुखादीनामन्तःकरणवृत्तित्वेऽपि विषयविषयिभावसंबन्धेन ईश्वराधीनस्वामितासंबन्धेन च साक्षिणा सह संबद्धत्वात्। अभिमानसहकृतामात्रास्पर्शा विषयसाक्षात्कारद्वारा आत्मानं विकारयन्त्येव। दुःखस्य कागतिरित्याक्षेपे दुःखस्य परिहारो वा दुःखानुत्पादकोपायो वा वक्तव्यः, न तु दुःखापलाप इत्यास्तां विस्तरः ॥

भीष्मादिविरहप्रसक्तं शोकं पुरस्कृत्याक्षेप इति शंकररामानुजादयस्सर्वेभ्युपगच्छन्ति। अस्याक्षेपस्य किमुत्तरं दत्तमिति विचारे त्वस्ति विवादः॥ आगमापायित्वात् मोक्षकाले विनाश्यत्वात् सुखादयो धैर्येण क्षन्तव्या इति प्रत्युक्तमिति रामानुजाचार्य. ॥ शोकस्यावर्जनीयत्वात्तितिक्षैव युक्तेति भावं वदति देशिकः। अस्थिरत्वात्सोढव्या इति शांकराः। दुःखी स्यामित्युक्ते दुःखमभ्युपगम्य तन्नश्वरमिति मात्रेण मनः समाधाय दुःखानुत्पत्त्युपायमनुपदिश्य गत्यन्तराभावात्सहस्वेति सांत्वनरूपमुत्तरं निस्सारमेव ॥ अतः सर्वज्ञाचार्यः 'तु' शब्दं तदुपरितनं काकुस्वरं चालक्ष्य नेह मात्रास्पर्शा सुखदुःखदत्वं स्वरूपकीर्तनत्वेन वर्णितं, परन्तु तेषां केवलानां सुखदुःखदत्व-

निषेधाभिप्रायेणाक्षिप्तमिति व्याचष्टे । सुखदुःखयोरभिमानः कारणमिति समर्थितं चाचार्येण ॥ अभिमानो नामाशोभनेषु विषयेषु शोभनाध्यासनिमित्तः स्नेहः अरित्वादिनिमित्तको द्वेषः शरीरेन्द्रियान्तःकरणेषु ममतातिशयहेतुकोऽविवेकः । अभिमानस्य कारकत्वमन्वयव्यतिरेकगम्यं । विषयसन्निधावपि सुप्तिमूर्छयोर्विषयसुखाद्यभावात् जाग्रत्स्वप्नयोरेव तस्यदृष्टत्वात् अभिमानशक्तिरवगम्यते । "अतो मनोभिमानेन दुःखी भवति नान्यथा" इति भारते। यतोऽभिमानसत्त्वदशायामेव सुखादिकं मात्रास्पर्शजं संभवति । अतः सुखदुःखदत्वमेवागमापायित्वेनानित्यत्वेन च विवक्षितं प्रतिपद्यते । विषयाणां वा इन्द्रियाणां वा तत्सन्निकर्षाणां वा प्राकृतत्वविवक्षया नश्वरत्वकथनमिहानुपयुक्तं पुनरुक्तं च । जीवद्दशायामिन्द्रियाणि विषया वा नागमापायिनः । त्वगिन्द्रियसन्निकर्षस्य सर्वदाऽवर्जनीयत्वात् । तस्मादिन्द्रियविषयतत्सन्निकर्षसद्भावेऽपि अभिमानावलम्बिनस्सुखादेरेवागमापायित्वं ॥ सविशेषणे विधिनिषेधौ विशेषणमुपसंक्रामत इति न्यायबलात् सुखदुःखदत्वं आगमापायि अनित्यमित्युक्तं भवति । एवं व्याख्याने तितिक्षस्वेति विधिरुपपद्यते । अभिमानं परित्यज्य विद्यमानानपि मात्रास्पर्शान् सुखाद्युत्पादनानर्हान् कुर्विति नियोगो युक्तः । दुःखस्य कागतिरित्याक्षेपे अभिमानत्यागे सति दुःखमेव न जायते इति समाधानमेवोचितं ॥ इति ॥ १४ ॥

न्त्येते पुरुषं पुरुषर्षभ ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥ १५

वि०॥ ननु दुःखाभावस्य युद्धाकरणे संभवात् किं तत्कृत्वा दुःखाभावायाभिमानत्यागेनेत्याशङ्क्य देहाद्यभिमान-

त्यागेन भवन् दुःखाभावः स्वयं फलरूपोऽपि परमपुमर्थहेतुभूतश्च भवतीत्याह यं हीति । हे पुरुषर्षभ पुरुषश्रेष्ठ पार्थ एते मात्रास्पर्शाः विषयेन्द्रियसन्निकर्षाः पुरुषं पुरं देहं सरति गच्छति । "सृ गतौ" । प्रत्यक्षतो जानाति । उपपदांतस्योकारः । सरतेर्डप्रत्ययः । षत्वं । शरीरदर्शनवन्तं ।। यद्वा पुरु ब्रह्म । तत्सरत्यवगच्छतीति ब्रह्मज्ञानी तं । धीरं सुखेदुःखे च प्राप्ते सति तत्कार्ययोरुत्सेकविषादयोः स्तंभकप्रयत्नवन्तं अतएव समदुःखसुखं । अनुपादेयत्वेन धर्मेण दुःखेन समं सुखं यस्य स तथा तं ।। दुःखं यथाऽपुमर्थत्वहेतुनानुपादेयं तथा वैषयिकं सुखमपि अमृतत्वविरोधित्वादनुपादेयं यस्य स समदुःखसुखः । दुःखसमसुखमिति यावत् । अतएव यं अभिमानहीनं जीवं स्त्रीजनं पुंजनं वा नव्यथयन्ति न चालयन्ति सुखदुःखकृतोच्चत्वनीचत्वलक्षणविकारं न प्रापयन्ति । सोधिकारी अमृतत्वाय मुक्तये कल्पते समर्थो भवति । अत्र धीरमिति समदुःखसुखत्वे हेतुः । तच्चाभिमानत्यागे हेतुः । समदुःखसुखो जीवः कथं सुखहेतुषु शोभनाध्यासलक्षणाभिमानवांस्तद्विरोधिषु द्वेषरूपाभिमानवांश्च भवेदिति ।। सुप्त्यादौ पामराणामपि अभिमानाभावेन व्यथाभावादमृतत्वप्रसक्तिरिति शंकाव्यावृत्तये पुरुषं शरीरदर्शनवन्तमित्युक्तं ।। तथा व्यथाभावमात्रेण कथममृतत्वं तमेवं विद्वानित्यादिश्रुतिविरोधादित्यपि शंकापनुत्तये पुरुषं ब्रह्मज्ञानिन

मित्युक्तं । " पुरुब्रह्मगुणाधिक्यात्तज्ज्ञानात्पुरुषः स्मृतः " इत्युक्तेः । अत्र नरहरितीर्थीये ब्रह्मा निरभिमानित्वादिति स्मृतिमुदाहृत्य चतुर्मुखादन्येषां अतिव्यथाराहित्यमेव लिंगभंगात्प्राक्देहाद्यभिमानाभाव इत्युक्तं ॥

श० ॥ शीतोष्णादीन् प्रसहतस्तव किंस्यादिति शृणु । यंहीति । यंहि पुरुषं समे सुखदुःखे यस्य तं समदुःखसुखं ॥ सुखदुःखप्राप्तौ हर्षविषादराहितं धीरं धीमन्तं न व्यथयन्ति न चालयन्ति नित्यात्मदर्शनात् । ऐते यथोक्ताः शीतोष्णादयः॥ स नित्यात्मस्वरूपदर्शननिष्ठो द्वंद्वसहिष्णुरमृतत्वायामृतभावाय मोक्षायेत्यर्थः कल्पते समर्थो भवति ॥

रा० ॥ तत्क्षमा किमर्थेत्यत आह । यं पुरुषमवर्जनीयदुःखं सुखवन्मन्यमानममृतत्वसाधनतया स्ववर्णोचितं युद्धादिकर्मानाभिसंहितफलं कुर्वाणं तदंतर्गताश्शस्त्रपातादिमृदुक्रूरस्पर्शा न व्यथयन्ति स एवामृतत्वं साधयति । नत्वादृशो दुःखासहिष्णुरित्यर्थः । आत्मनां नित्यत्वादेतावदत्र कर्तव्यमित्यर्थः ॥

विचारः

पुरुषर्षभेति ॥ पुरुषर्षभेत्यर्जुनसंबोधने विपरीतकाक्वा अर्जुनो हीनपुरुषइति ध्वनिमाह देशिकः। एतदसंगतं। अर्जुनोपालंभेऽत्र निमित्ताभावात्। वस्तुतस्तस्योत्कृष्टपुरुषत्वेनोपालंभस्यायुक्तत्वाच्च ।

ऋषज्ज्ञाने इति धातुव्युत्पत्त्या ऋषेण स्वरूपज्ञानेन भातीति ऋषभः । पुरुषः ऋषभो यस्य सपुरुषर्षभइति विग्रहेण यः पुरुषः आत्मानं ऋषभत्वेन स्वप्रकाशचैतन्यस्वरूपत्वेन जानातीति पुरुषर्षभ इति कैश्चिद्व्याख्यातं । अत्राद्वैतसाक्षात्कारवत्त्वेनार्जुनस्य प्रशंसायां प्रयोजनं न दृश्यते । परे हि तमतिमूढं मन्यन्ते ।

पुरुषमिति ॥ एतेन न स्त्रीव्यावृत्तिर्विवक्षितेत्यविवादं गम्यते । स्त्रीणां मैत्रेय्यादीनां ज्ञानित्वं श्रुत्यादिप्रसिद्धं ॥ 'स्त्रियो वैश्यास्तथा शूद्रास्तेपि यांति परां गतिं' इति गीतायामेव दृश्यते ॥

जीवसामन्यस्य पुरुषशब्देनेह निर्देशे निमित्तद्वयं ज्ञेयं । (१)(सुप्तिमूर्छादौ सुखदुःखविकारस्य प्राकृतानामप्यभावेन तेषामपि मोक्षप्रसंग इति शंकावारणाय जाग्रदवस्थासंभावितसुखदुःखानुभववतां पुरुषशब्दाभिहितशरीरदर्शनवतां यदि सुखदुःखविकारो नस्यात् तर्हि तेषाममृतत्वमिति कथनमेकं । अपरं चास्ति । नान्यः पन्था अयनायेत्यादिना मोक्षस्य ज्ञानैकसाध्यत्वप्रसिद्धेः, यं मात्रास्पर्शा नव्यथयंति तस्यामृतत्वं कथमित्याक्षेपे तत्समाधानाय पुरुषमित्युक्तं । पुरुषमित्यस्य ब्रह्मज्ञानिनमित्यर्थो विवृतावुपपादितो द्रष्टव्यः )।

(पुरुषशब्दप्रयोगे निमित्तं स्वारस्यं वा न प्रदर्शयति रामानुजाचार्यः । केचिच्छांकरास्तु निर्विकारचैतन्यबोधकतया योगव्युत्पत्तिमाश्रयन्ते। तथाहि । सर्वासु पूर्षु शरीरेषु शेते इति पुरुषः ॥ 'सवा अयं पुरुषः सर्वासु पूर्षु पुरिवा शयः' इति श्रुतेः । कर्मेन्द्रियज्ञानेन्द्रियमनःप्राणादिवियदादिकामकर्मतमांसि पूः, एतेषु शेते इति पुरुषः निष्क्रियात्मेति तदाशयः । आत्मनः परमार्थतो निष्क्रियत्वेन तत्कथनमिह निष्प्रयोजनं भाति । स्वरूपकथनस्येह व्यर्थत्वात् । यं पुरुषं न व्यथयन्तीत्यस्य मात्रास्पर्शानिष्क्रियमात्मानं न विका-

रयन्तीति यो जानाति स इत्यर्थेऽभिप्रेते सति किंचित्परीत्या सांगत्यं स्यात्॥ जानातेरिह शब्दारूढत्वं तु दुर्घटं। किंच यं पुरुषं सोऽमृतत्वायेति गीतोक्तौ यमिति शुद्धात्मविशेषणं अनुपपन्नं। यं न व्यथयन्ति सोमृतत्वाय कल्पते इति यत्तच्छब्दघटितवाक्यार्थपर्यालोचनायां कांश्चिव्द्यथयन्ति कांश्चिन्न व्यथयन्ति यान्न व्यथयन्ति ते अमृतत्वाय कल्पन्ते इत्यर्थस्तु स्फुटः। एकमविकृतमात्मानं प्रति अनेकत्वनियतयत्तच्छब्दघटितप्रयोगस्यानौचित्यात्। तस्मात्पुरुषशब्दस्य शरीरानुसन्धाता ब्रह्मज्ञानी च बोध्य इत्येव रमणीयम्॥

न व्यथयंतीति॥ न दुःखयंतीतीदं पदं कचिव्द्याख्यातं। तन्न। यत्पूर्वस्मिन् श्लोके तितिक्षस्वेत्युक्तं तस्यैव तितिक्षणस्य न व्यथयंतीत्यनेनानूदितत्वात्। व्यथाभावद्वारा मात्रास्पर्शानां विफलीकरणमेव तितिक्षणं विवक्षितमिति ज्ञायते।

किंच पूर्वश्लोके मात्रास्पर्शान् सुखदुःखाजनकान् कुर्विति वाक्यार्थो-गम्यते। न व्यथयन्ति न दुःखयन्तीति व्याख्याने तु यत्सुखाजनकत्वमुक्तं तस्यासंग्रह आपद्यते। न च वाच्यं तदसंग्रहो युक्त एवेति। वैषयिकसुखस्यापि मोक्षविरोधित्वेनानुपादेयत्वात् अमृतत्वसाधनकथनावसरे तदनुपादेयत्वस्यावश्यवक्तव्यत्वात्॥

धीरं इति॥ अत्र विवृतिर्द्रष्टव्या। स्तम्भकप्रयत्नवानिह धीरो विवक्षितः। धियमीरयति प्रेरयति चिदाभासद्वारा धीतादात्म्याध्यासेन धीप्रेरकं धीसाक्षिणमिति मधुसूदनीये व्याख्यातम्। अध्यासस्येह प्रवेशोदुर्निरूपः। पुरुषमित्यनेनैव बुध्यादिसर्वप्राकृततत्वेषु शयानस्य निष्क्रियस्यात्मनो गृहीतत्वात् पुनर्विशिष्याध्यासद्वारा धीप्रेरकत्वकथने प्रयोजनमन्वेषणीयं भवति॥

किंच जीवस्य सुखदुःखलेपाभावे मानं न विद्यते । "सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः । एकस्तथा सर्वभूतांतरात्मा न लिप्यते लोकदुःखेन बाह्यः" इति श्रुतिवाक्यं तु परब्रह्मपरं न तु जीवपरं ।

समदुःखसुखमिति ॥ इदं द्वेधाऽव्याख्यातुं शक्यते । दुःखसमं सुखं मन्वानो धीर इति वा सुखसमं दुःखं मन्वान इति वा । आद्यमस्मदभिमतं ॥ द्वितीयं रामानुजाभिमतं ॥ अत्रेदं वक्तव्यं । मूढोहि सांसारिकं दुःखं सुखत्वेन मनुते न तु धीमान् । अयं तु वैषयिकं सुखं दुःखसमत्वेन तिरस्करोति । तादृशसुखस्यापि मुक्तिविरोधित्वात् ।

किचात्र विवक्षितो धीरो मात्रास्पर्शैरव्यथमानः शीतोष्णसुखदुःखसहिष्णुः ॥ तादृशः कृत्स्नं सुखमनुभूय दुःखमपि सुखत्वेन भ्रान्त्वा तमप्यनुभवितुमुद्यतश्चेत् कथं स धीरो भूयादमृतत्वाय कल्पेत वा । अतः दुःखवद्वैषयिकं सुखं च य उपेक्षते स एव धीरो भवितुमर्हति ।

"समं ब्रह्म, समे समभावंगमिते दुःखसुखे यस्य" इति शंकरानन्दः ॥ अत्रापि क्लेशः स्फुटः । अयं अमृतत्वायेत्यस्यापि ब्रह्मत्वायेत्यर्थं वदति । यदि ब्रह्मैक्यं मोक्ष इत्युपदेशोऽत्र भगवदभिमतः तर्हि स्पष्टप्रतिभासानि पदान्तराणि विहायैतत्पदोपादाने निमित्तं न ज्ञायते । श्रीमदाचार्यव्याख्याने पुरुषः धीरः समदुःखसुखः मात्रास्पर्शैरव्यथमानः ब्रह्मज्ञानी भूत्वाऽमृतत्वाय कल्पते इति क्रमेण पर्वभेदप्रदर्शनपूर्वकं श्लोकस्थपदानां परस्परमन्वयः स्फुटीकृतः । तथाहि । पुरुषः शरीरदर्शनवान् न तु सुप्तः मूर्छितः समाधिस्थोवेति प्रथमावस्था ॥ धीरइत्युक्तं धैर्यं द्वितीयावस्था । हर्षविषादसाधनेषु सत्सु स्तंभकप्रयत्नवान् धीरोविवक्षितः । धैर्येण समदुःखसुखो भवतीति समदुःखसुखत्वं तृतीयावस्थोच्यते । दुःखं वैषयिकसुखं चोभयमनुपादेयं मोक्षविरोधीति हि मुमुक्षुर्मन्यते । अनन्तरं मात्रास्पर्शास्तं न व्यथयन्ति । अभिमानस्य परित्यक्तत्वात् । एवमधि-

कारी ब्रह्मज्ञानद्वारा (तन्त्रन्यायेन पुरुषशब्दस्यावृत्त्यार्थान्तरपरत्वेन व्याख्यानं) पुरुषोभूत्वा अमृतत्वमाप्नोतीत्यवस्थाक्रमो ज्ञेयः ॥

अयमत्र संग्रहः । अभिमानत्यागान्मात्रास्पर्शानां विफलीकरणेन मोक्षोभवतीति श्लोकतात्पर्यमुक्तं सर्वज्ञाचार्येण )। अवर्जनीयदुःखसहने अन्ततः सुखं भवतीति रामानुजाचार्यः । नित्यात्मदर्शने सति जीवब्रह्मैक्यसाक्षात्कारात्सुखादिकं नात्मानं विकारयति इति शाङ्कराः । अन्तःकरणस्यैव सुखादिकं । ज्ञानसुखादिशून्यतया निर्विकारत्वेनात्मानं एते सुखदुःखदामात्रास्पर्शाः हि यस्मान्न व्यथयन्ति यं परमार्थतो न विकारयन्ति सर्वथा विकारबाह्यत्वात् सः ब्रह्मात्मैक्यज्ञानी अमृतत्वाय कल्पते इति ।

एतेषु पक्षेषु तारतम्यपरीक्षां यत्किंचित्कृतां आलोच्य बुधास्समंजसं स्वीकुर्युः ।

---

**नासतो विद्यते भावो नाभावो विद्यते सतः ।**
**उभयोरपि दृष्टोन्तस्त्वनयोस्तत्वदर्शिभिः ॥ १६ ॥**

वि०॥ ननु पापमेवाश्रयेदस्मान्हत्वैतानाततायिन इत्यादिना बन्धुहननादिरूपयुद्धादि परलोकदुःखहेतुतयोक्तं । अतः शोकइत्यत आह । नासत इति । अत्र सदसच्छब्दौ साध्वसाधुकर्मपरौ । भावाभावशब्दौ सुखदुःखवाचकौ । “सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते । प्रशस्तेकर्मणि तथा” इत्यादेः । “सद्भाववाचिनः शब्दाः सर्वे ते सुखवाचिन” इत्यादेः । असतो दुष्कर्मणस्सकाशात् भावः सुखं नास्ति ।

यथेति दृष्टान्ततयाऽस्योपयोगः। सतः साधुकर्मणस्सकाशाद-भावो दुःखं नास्ति। एतच्च युद्धं नारायणद्विट्तदनुबन्धि-निग्रहरूपत्वेन सत्कर्मत्वान्न परलोकदुःखहेतुः। प्रत्युत सुख-हेतुरेवेतिभावः॥ किमत्र प्रमाणमित्यतआह। उभयोरपीति। अन्तो निर्णयः॥ पूर्वार्धोक्तार्थस्यावधारणं। अन्यदर्शन-स्यान्यान्प्रत्यप्रत्यायकत्वाद्दर्शनमूलः संप्रदायोऽत्र लक्ष्यते। उभयोरप्यनयोः सदसत्कर्मणोः दुःखसुखे यथाक्रमं न विद्येते इत्यर्थयोरपि तत्वदर्शिभिः अन्तस्तु संप्रदायस्तु प्रमाणतया दृष्ट इति वा दृष्टस्तु दृष्टएवेति वा 'तु' शब्दान्वयः। सत्कर्मणो दुःखं नास्ति। असत्कर्मणः सुखं वा नास्तीति अनयोरर्थयोर्निर्णायकोपदेशपरंपरारूपसंप्रदायो महात्मभि-र्दृष्टएवेत्यर्थः। नन्वनादित्वहेतुनाहमपि पक्षे निक्षिप्य नित्य-त्वेनानुमातव्य इति यदुक्तं त्वया सत्वयुक्तः पक्षः। दृष्टान्ता-भावेन व्याप्तिग्रहासंभवात्। अन्यस्यानादिनित्यस्य मानाभा-वेनाभावादित्यतोन्यदप्यस्त्यनादिनित्यमित्येतदप्यनेनोच्यते। नासत इति। असतः कारणस्य प्रकृतेरभावः प्रागभावः प्रध्वंसश्च न विद्यते नास्ति। तथा सतोब्रह्मणश्चाभावो द्विरूपोऽभावः न विद्यते। अत्रासतः सतश्चाभावो न विद्यत इत्येकवाक्ये संभवति वाक्यद्वयग्रहणं प्रागुक्तानादित्वानुमाने व्याप्तिसद्भावे आदरसूचनार्थं। अतएवाग्रेऽविनाशित्वित्या-दिना व्याप्तिग्रहणस्थलमनेकं दर्शयति। अत्रव्याप्तिस्थल-

प्रदर्शनार्थं नासतोविद्यतेभाव इत्येतावदेव वाच्यं । तथापि प्रागुक्ताद्वितीयप्रयोगे कृष्णोदृष्टान्तितः। तत्र साध्यसाधनानुगतिसूचनाय नाभावोविद्यते सत इत्यप्युक्तिः । तथाच ीयप्रयोगेपि व्याप्तिः सुदृढा ॥ ( नन्वन्यस्यानादिनित्यत्वे ानाभाव इत्युक्तमित्यत आह । उभयोरपीति । सदसतोरनादिनित्ययोरन्तस्तु निर्णयभूतपरंपरोपदेशलक्षणसंप्रदायस्त्वित्यर्थः । तत्वदर्शिभिर्दृष्ट इत्यर्थः । नरहरितीर्थास्तुतत्वदर्शिभिरपीत्यपि पदं भिन्नक्रममुपेत्य प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तमेत्यागमोत्रार्थे मानत्वेन समुच्चीयत इत्याहुः ॥

शं ॥ इतश्च शोकमोहावकृत्वा शीतोष्णादिसहनं युक्तं ॥ यस्मात् । नासत इति । असतः अविद्यमानस्य शीतोष्णादेस्सकारणस्य न विद्यते नास्ति भावो भवनमास्तिता। न हि शीतोष्णादि सकारणं प्रमाणैर्निरूप्यमाणं वस्तु सद्भवति । विकारो हि सः ॥ विकारश्च व्यभिचरति । यथा घटादिसंस्थानं चक्षुषा निरूप्यमाणं मृद्व्यतिरेकेणानुपलब्धेरसत् तथा सर्वोविकारः कारणव्यतिरेकेणानुपलब्धेरसन् । जन्मप्रध्वंसाभ्यां प्रागूर्ध्वं चानुपलब्धेः कार्यस्य घटादेः मृदादिकारणस्य च तत्कारणव्यतिरेकेणानुपलब्धेरसत्त्वं ॥ तदसत्त्वे सर्वाभाव प्रसंग इति चेन्न। सर्वत्रबुद्धिद्वयोपलब्धेः सद्बुद्धिरसद्बुद्धिरिति । यद्विषया बुद्धिर्न व्यभिचरति तत्सत् । यद्विषया व्यभिचरति तदसत् । इति सदसद्विभागे बुद्धितन्त्रे

स्थिते सर्वत्र द्वे बुद्धी सर्वैरुपलभ्येते समानाधिकरणेन नीलोत्पलवत् सन् घटः सन् पटः सन् हस्तीति। एवं सर्वत्र तयोर्बुद्ध्योर्घटादिबुद्धिर्व्यभिचरति। तथा च दर्शितं। न तु सद्बुद्धिः। तस्मात् घटादिर्बुद्धिविषयोऽसन् व्यभिचारात् न तु सद्बुद्धिविषयः। अव्यभिचारात्।

घटे विनष्टे घटबुद्धौ व्यभिचरंत्यां सद्बुद्धिरपि व्यभिचरतीतिचेन्न। पटादावपि सद्बुद्धिदर्शनात् विशेषणविषयैव सा सद्बुद्धिः॥

सद्बुद्धिवत् घटबुद्धिरपि घटान्तरे दृश्यतइतिचेन्न। पटादावदर्शनात्। सद्बुद्धिरपि नष्टे घटे नदृश्यतइतिचेन्न। विशेष्याभावात्। सद्बुद्धिर्विशेषणविषया सती विशेष्याभावे विशेषणानुपपत्तौ किं विषयास्यात्? न तु पुनस्सद्बुद्धेः विषयाभावात्॥ एकाधिकरणत्वं घटादिविशेष्याभावे न युक्तमितिचेन्न। इदमुदकमिति मरीच्यादौ अन्यतराभावेपि सामानाधिकरण्यदर्शनात्॥ तस्माद्देहादेर्द्वन्द्वस्य च सकारणस्यासतो न विद्यतेभावइति। तथा सतश्चात्मनः अभावः अविद्यमानता न विद्यते॥ सर्वत्राव्यभिचारादित्यवोचाम। एवमात्मानात्मनोस्सदसतोरुभयोरपि दृष्टउपलब्धोन्तः निर्णयः सत् सदेव असदसदेवेति। अनयोर्यथोक्तयोस्तत्वदर्शिभिः। तदिति सर्वनाम सर्वं च ब्रह्म तस्य नाम तदिति। तद्भावस्तत्त्वं ब्रह्मणोयाथात्म्यं। तत् द्रष्टुं शीलं येषान्ते

तत्त्वदर्शिनः तैस्तत्त्वदर्शिभिः। त्वमपि तत्त्वदर्शिनां दृष्टिमाश्रित्य शोकं मोहं च हित्वा शीतोष्णादीनि तितिक्षस्वेत्यभिप्रायः॥

रा०॥ यत्त्वात्मनां नित्यत्वं देहानां स्वाभाविकं नाशित्वं च शोकानिमित्तमुक्तंगतासूनगतासूंश्च नानुशोचन्ति पंडिताः इति तदुपपादयितुमारभते॥ असतो देहस्य सद्भावो न विद्यते। सतश्चात्मनो नासद्भावः। उभयोर्देहात्मनोरुपलभ्यमानयोर्यथोपलब्धि तत्वदर्शिभिरन्तोदृष्टः। निर्णयान्तत्वान्निरूपणस्य निर्णयइहान्तशब्देनोच्यते। देहस्याचिद्वस्तुनोऽसत्त्वमेव स्वरूपं। आत्मनश्चेतनस्य सत्त्वमेव स्वरूपमिति निर्णयो दृष्टइत्यर्थः॥ विनाशस्वभावोह्यसत्त्वं। अविनाशस्वभावश्च सत्त्वं। यथोक्तं भगवता पराशरेण। "तस्मान्नविज्ञानमृतेस्ति किंचित्क्वचित्कदाचिद्द्विजवस्तुजातं। सद्भावएवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत्। अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते। तत्तुनाशि न संदेहो नाशिद्रव्योपपादितं। यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै। परिणामादि संभूतां तद्वस्तु नृप तच्च किं" इति। अत्रापि अन्तवन्त इमेदेहाः अविनाशि तु तद्विद्धि इतिह्युच्यते। तदेव सत्त्वासत्त्वव्यपदेशहेतुरिति गम्यते। अत्रतु सत्कार्यवादस्यासंगतत्वान्न तत्परोयं श्लोकः। देहात्मस्वभावाज्ञानमोहितस्य तन्मोहशान्तये ह्युभयोर्नाशित्वाना-

शित्वरूपस्वभावविवेक एव वक्तव्यः। स एव गतासून-गतासून् इति च प्रस्तुतः। स एव च अविनाशि तु तद्विद्धि अन्तवन्तइमेदेहाः इत्यनन्तरमुपपाद्यते। अतोयथोक्त एवार्थः॥

विचारः

विवृतौ नासत इति प्रकृतश्लोकस्य संगतिर्द्विधा प्रदर्शिता द्रष्टव्या। पापमेवाश्रयेदिति पापे शंकिते तस्याः शंकायाः नावकाश इति प्रदर्शनपरतया संगतिरेका। नत्वेवाहमिति नित्यत्वसाधनायानादित्वे हेतुत्वेन निर्दिष्टे सति हेतुसाध्ययोर्व्याप्तिग्राहकदृष्टान्तः प्रकृतिरस्तीति संगतिरपरा। आद्ययोजनायां सदसच्छब्दौ सत्कर्मासत्कर्मपरौ॥ भावाभावशब्दौ सुखदुःखवाचकौ॥ द्वितीययोजनायां प्रथमपादेपि "अभाव" इति पदच्छेदः। अभावपदस्य द्विरुक्तेः प्रयोजनं च कथितमेव विवृतौ॥

आद्ययोजनां दूषयति वेंकटनाथः॥

"सद्भाववाचिनश्शब्दास्सर्वे ते सुखवाचकाः॥ अभाववाचिन-श्शब्दास्सर्वे ते दुःखवाचकाः" इति यदाचार्येण शब्दनिर्णयवाक्यं प्रमाणमुदाहृतं तत्कल्पितमाह। स्वादृष्टत्वमात्रेणोदाहृतस्य वचनस्य कल्पित-त्वकथनमाग्रहमूलमन्याय्यं च॥

पुण्यपापयोस्सुखदुःखहेतुत्वस्यार्जुनेन ज्ञातत्वेन सत्कर्मणस्सुखं दुष्कर्म-णोदुःखं इत्युपलभ्यमानोर्थोव्यर्थ इत्ययं दूषितवान्। सामान्याकारेण पुण्य-पापयोः सुखदुःखहेतुत्वार्थत्वेन कः श्लोकं व्याचष्टे? हरिद्विट्तदनुबन्धि-निग्रहं पुरस्कृत्य तस्य सत्कर्मत्वाभिप्रायेण सत्कर्मणस्सकाशान्नकदापि दुःखं पापं वा स्यादित्येव श्लोकाशयोदर्शितः॥ "पापमेवाश्रयेदस्मान् हत्वैतानात-तायिनः" इति भीष्मादिहननात्पापस्य पूर्वपक्षग्रन्थे प्रस्तुतत्वात् प्रतिवचन-

ग्रन्थे भीष्मादिहननस्य शब्दतोनुवादो नावश्यकोभूत् ॥ अतः भीष्मादिहननस्य सत्कर्मत्वं श्लोकाक्षरान्नलब्धमित्याक्षेपो न संगतः ॥ यथा असतः दुष्कर्मणस्सकाशात् न भावः न सुखं, एवं साधुकर्मणस्सकाशात् न दुःखमित्यर्थे दृष्टान्तदार्ष्टान्तिकतयार्थसौष्टवं स्फुटं ॥ इवादिदृष्टान्तवाचकशब्दाभावेपि शब्दानुपपत्तेस्सकाशादर्थानुपपत्तेर्बलवत्त्वेनोक्तं व्याख्यानं निर्दुष्टं ॥ इवाद्यश्रवणमात्रेण यद्दूषणं वेंकटनाथेन रचितं तदतिमन्दं भाति ॥

अनादित्वनित्यत्वरूपहेतुसाध्ययोर्दृष्टान्तोक्तिपरतया यद्द्वितीयं व्याख्यानं गीताभाष्यगतं तदपि तुच्छमित्याह वेंकटनाथः ॥ नत्वेवाहमित्यत्र यदि मंदाधिकारी वेदान्तैरधिगतं ईश्वरनित्यत्वमभ्युपगच्छति तस्य प्रकृतिः दृष्टान्तान्तरं भवति ॥ प्रसंगादनेकदृष्टान्तस्य संगतिर्ज्ञेया ॥ 'नाभावो विद्यतेसतः' इति द्वितियपादोक्तं ईश्वरनित्यत्वं च साध्यसाधनवैकल्याभावदार्ढ्यसंपादनायेत्याचार्याशयः ॥ भावं सम्यगजानानो वेंकटनाथ आह "अर्जुनशोकनिरासार्थं प्रवृत्तेस्मिन्प्रकरणे साक्षात्तन्निरासानुकूलार्थप्रतिपादकत्वे संभवति प्रसंगसंगत्या प्रकृतिनित्यत्वप्रतिपादनपरत्वस्यान्याय्यत्वात्" इति । अत्रेदं वक्तव्यम् ॥ ये चेतनाः नित्याः अनादित्वादिति प्रयोगे ईश्वरमपि पक्षे निक्षिप्य दृष्टान्तान्वेषिणः तान्प्रति प्रकृतेर्दृष्टान्तत्वेन कथनं साक्षादेव संगतं, न प्रसंगात् ॥ ये तु ईश्वरनित्यत्वं मत्वा जीवनित्यत्व एव विप्रतिपद्यन्ते तान्प्रत्येव प्रसंगात् प्रकृतिनित्यत्वप्रतिपादनं विवक्षितम् ॥

अनादित्वनित्यत्वोपदेशावसरे प्रकृतिकालाव्याकृताकाशादीनां प्रसक्तिस्तु न दूरतः प्रासंगिकी । कथंचित्प्रकरणप्राप्तत्वात् ॥ अर्जुनशोकशान्त्यै जीवनित्यत्वं हि प्रसाधनीयम् ॥ तदुपयुक्तप्रमेयजातं तादर्थ्येन संगतमेव भवति ॥

यदुक्तमनेन साक्षात्तन्निरासानुकूलार्थप्रतिपादकत्वे संभवतीति तत् हासं जनयति । जगतस्सदसद्विलक्षणत्वोपदेशेनार्जुनस्य शोकनिरासः

इत्यस्य दूषकस्याभिसन्धिः ॥ अयमनुपपन्नः ॥ असामंजस्यमनुपदं प्रकाश्यते ॥

किं चायं नासतो विद्यते भाव इत्यत्र यो गीताभाष्याभिमतः "अभाव" इति पदच्छेदः तं निराह ॥ तथाहि । "नाभावो विद्यते सतः इति द्वितीयपादगतसच्छब्दप्रतिद्वंद्वितया प्रथमपादे नासत इत्यसत्पदस्येव तत्रत्याभावशब्दप्रतिद्वन्द्वित्वेनात्र भावइत्येव छेत्तव्यतया तथैवचार्थस्याप्युपपन्नतया उभयत्राप्यभावइति पदच्छेदस्य आदरार्थं पृथगभावनिषेधइति तद्व्याख्यानस्यागतिकागतित्वेनास्वारस्याच्च" इति ॥

अत्रदूषणत्रयंगम्यते ॥ (१) भावाभावपदयोः प्रतिद्वन्द्वित्वेन शब्दसौष्टवेसति किमित्यन्यथाछेदः । (२) भावइतिछेदे अर्थोह्युपपद्यते ॥ (३) आदरार्थ द्विरुक्तिरिति पक्षो गौणः इति । अत्रोच्यते । पामरकाव्यवन्नरचितेयं गीता—दशावरार्थं सर्वत्र भारतं ॥ क्वचिदर्थे अभावः, क्वचिद्भावइति च छेदो युज्यते । अर्थपौष्कल्ये लभ्येसति शब्दरमणीयताया अन्वेषणं नीरसं ॥ को ब्रूते भावइति पदच्छेदे सर्वथार्थासाङ्गत्यं । एवमपि हि व्याख्यातं गीतातात्पर्ये । अभावपदस्य द्विरुक्तत्वे प्रयोजनं तु विवृतौ सम्यङ्निरूपितं । इति ।

किंचायं मन्यते । अर्जुनेन भगवन्माहात्म्यस्य ज्ञातत्वेन तं प्रति पुनर्भगवन्नित्यत्वकथनं अनुचितमिति । स्यादर्जुनो भगवन्नित्यत्वज्ञानी वा अन्यथा वा । अर्जुनं निमित्तीकृत्य लोकोपकाराय प्रवृत्तेऽस्मिन्नुपदेशे अधिकारिणां सार्वविध्यविवक्षया विकल्पबाहुल्यमादायोपदेशानां सार्थक्यात् ॥

ननु नित्यत्वेनेह विवक्षिता जडप्रकृतिर्वा चित्प्रकृतिर्वेति विकल्प्य आद्ये सा न नित्या, द्वितीये ब्रह्मभिन्ना वा अभिन्नावेति विकल्प्य सर्वं दूषितवानयम् ॥

अत्रोच्यते ॥ अव्यक्तादिशब्दितमूलप्रकृतेर्लक्ष्म्याऽभिमन्यमानायाः नित्यत्वे यो मानाभाव उक्तः सभ्रममूलएव ॥ अस्यार्थस्य शास्त्रसिद्धत्वात् । चित्प्रकृतिविवक्षायामपि न शंकितानुपपत्तिः ॥ ब्रह्माभिन्नायाः जीवभिन्नायाश्च रमायाश्शास्त्रप्रमितत्वात् । प्रसंगादिदमुक्तं । श्लोके विवक्षिता तु नित्या जड-प्रकृतिरव्यक्तसंज्ञिता इत्यास्तां वेंकटनाथनिरासनिरासः ॥

अथ किंचित्परीक्ष्यते वेंकटनाथाभिमतः श्लोकार्थः ॥

'असत्' शब्देनायं तुच्छं गृह्णाति ॥ सदित्यनेन ब्रह्म । भाव इत्यनेन उत्पत्तिं अर्थात् विनाशं च ॥ अभाव इत्यनेन नाशं अर्थादुत्पत्तिं च । तथाच तुच्छस्यनोत्पत्तिविनाशौ ब्रह्मणो न नाशोत्पत्ती इति प्रथमार्धार्थः ॥ "एतेन उत्पत्तिविनाशवतो जगतः तुच्छवैलक्षण्यात् सद्वैलक्षण्याच्च मिथ्यात्वं सिध्यति । मिथ्यात्वं नाम सत्त्वेनासत्त्वेनच विचारासहत्वं सदसद्वैलक्षण्यं। सति अतिव्याप्तिवारणाय सद्विलक्षणत्वविशेषणम् ॥ असति अतिव्याप्ति-वारणायासद्विलक्षणत्वविशेषणम् ॥ यद्यपि असति तुच्छे सद्विलक्षणत्व-धर्मसत्त्वे धर्मिसत्त्वावश्यंभावान्नातिव्याप्तिः । अतः असत्यतिव्याप्तिवारणाया-सद्वैलक्षण्यविशेषणं नावश्यकं । परंतु अभ्युपगमवादेनेदं विशेषणं दत्तं । वस्तुतस्तु सत्त्वानाधिकरणत्वमात्रं मिथ्यात्वलक्षणं । यद्यपि सतो निर्धर्मकत्वेन तत्र सद्विलक्षणत्वरूपधर्माभावेनैवानतिव्याप्तिः ॥ निर्धर्मके पारमार्थिकधर्मा-भावेपि व्यावहारिकधर्मसत्त्वेन तत्रातिव्याप्तेः" । इति ॥

अत्रोच्यते ॥ शंकरभाष्ये हि असत्पदेन प्रपंचो गृहीतः । न तुच्छं। प्रपंचस्य वस्तुत्वं नास्ति इति तदुक्तोर्थः । अयमनुगस्तु असदित्यनेन शश-विषाणादितुच्छं गृह्णाति ॥ "निरुपपदस्यासत्पदस्यात्यन्तासति स्वरसस्य कदाचिदविद्यमानदेहादिपरत्वोक्तेरनांजस्यात्" इति शंकरभाष्यासामंजस्य-मुक्तमनेन ॥ अहो शिष्यस्यभक्तिः ॥

२. किंचार्जुनशोकपरिहाराय प्रकरणप्रवृत्तिरित्ययं वदति ॥ व्यवहारभूमौ हि शोकः । तत्तितिक्षणं च व्यावहारिकं ॥ तितिक्षणप्रकारे निरूप्यमाणेसति व्यावहारिकोपायाः खलूपदेश्याः ॥ निर्धर्मकात्मनः कालत्रयाबाध्यत्वस्यात्र का संगतिः ॥ निस्स्वरूपस्य शशशृंगस्योत्पत्तिविनाशाभावोपदेशस्य वा का संगतिः ॥ एवं जगतः अनिर्वचनीयत्वनिरूपणेनापि न स्यादर्जुनस्याश्वासः ॥ स्वस्य कृष्णस्य शोकस्य तितिक्षणस्य तत्प्रकारस्य च सर्वस्य मिथ्यात्वे उपदिष्टे व्यवहारभूमौ हननं कथं सह्यं भवतीति दुर्ज्ञेयमद्वैतव्या-

३. किंच यथा न्यायमते संयोगतदभावयोः, भट्टमते भेदाभेदयोः, तथा प्रमितत्वमाह वेंकटनाथः सदसद्विलक्षणत्वस्य ॥ परमते आभासदृष्टान्तस्य विद्यमानत्वमात्रेण सदसद्वैलक्षण्यस्य वस्तुत्वसिद्धिर्नहि भवेत्—अन्यथा अनवस्थितेः । प्रत्यक्षादिमानं त्वद्वैतिपरिगृहीते सदसद्वैलक्षण्ये नास्तीति सुधादिग्रन्थेषु प्रतिपादितमवलोकनीयम् ॥

४. वेंकटनाथोपपादितरीत्या नासतइति श्लोकेन जगन्मिथ्यात्वसिद्धिर्नभवति । तुच्छस्य उत्पत्तिर्हि निषिध्यते गीतायां । तस्य विनाशस्तु कंटतो न प्रतिषिद्धः ॥ द्वितीयार्धगत 'अपि' शब्दाकर्षणनेन स्वाभिप्रेतमसौ प्रवेशयति । अयं नाक्षरार्थ इत्युपेक्ष्यः ॥ एवं ब्रह्मणो नाशः श्लोके कण्ठतो निषिद्धः । उत्पत्तिनिषेधकश्शब्दस्तु न दृश्यते ॥ इहापि उत्तरार्धगत 'अपि' शब्दस्य समाकर्षादेव स्वाभिप्रेतार्थ उक्तः ॥ अयमप्युपेक्षणीयः ॥

५. किंच तुच्छस्योत्पत्तिविनाशयोरप्रसक्तत्वेन तन्निषेधोऽनुचितः ॥ ब्रह्मणोपि विनाशोत्पत्ती अप्रसक्ते इति तन्निषेधस्यापि न विद्यते संगतिः ।

इतरे शांकरव्याख्यातारस्तु असत्पदेन जगद्गृहीत्वा तस्य प्रत्यक्षादिप्रमाणैर्निरूप्यमाणत्वेन पारमार्थिकत्वप्रतीतौ संभावितायां प्रसक्तिं रचयित्वा

तत्प्रतिषेधस्य संगतत्वं मन्यन्ते ॥ पश्यन्तु शंकरभाष्योत्कर्षदीपिकां । "असतो विचारेण बाध्यत्वात्पूर्वमप्यविद्यमानस्य शीतादेः सकारणस्य प्रत्यक्षादिप्रमाणैर्निरूप्यमाणस्यापि भावः परमार्थसत्ता न विद्यते। एतेनासतः शून्यस्य शशविषाणतुल्यस्यास्तित्वप्रसंगाभावादप्रसक्तप्रतिषेध इति प्रत्युक्तं"॥ इति ॥ एवमपि तद्रीत्या ब्रह्मणः पारमार्थिकसत्तानिरूपणस्य प्रासंगिकत्वं विना संगतिर्नज्ञायते ॥

६. अथोच्येत वेंकटनाथेन ॥ तुच्छब्रह्मणोरुत्पत्तिनाशनिषेधः जगतस्तदुभयवैलक्षण्यार्थत्वेन संगत इति । तदसत् । यदर्थं तुच्छब्रह्मणोरुत्पत्तिविनाशप्रतिषेधायासः तत् अवश्यवक्तव्यप्रमेयं जगतः उत्पत्तिविनाशदूषितत्वेन मिथ्याभूतत्वं किमिति भगवान् वक्तुं विसस्मार? श्लोके जगतः उत्पत्तिविनाशित्वस्य वा तस्मात्कारणान्मिथ्यात्वस्य वा ऽनुक्तेः ।

७. किंच तुच्छब्रह्मणोः प्रस्तावः पर्यवसितजगन्मिथ्यात्वोपदेशायेत्याशयोप्यसाधुः । तुच्छस्योत्पत्तिविनाशाभावेपि किमायातं प्रपञ्चस्य । यथा तुच्छमुत्पत्तिविनाशशून्यं यथा ब्रह्म नाशोत्पत्तिशून्यं तथा जगद्वा तदेकदेशो वा किमुत्पत्तिविनाशशून्यं न स्यात् । कृत्स्नं जगदुत्पत्तिविनाशवा त्वत्कल्पितो हि राद्धान्तः ॥ नैवं ह्याह भगवान् श्लोके जगत्तूत्पत्तिविनाशवदिति । द्वितीयार्धेपि तुच्छब्रह्मणी परामृश्योभयोः निर्णयमाह । नतु तद्विलक्षणत्वेन प्रपञ्चस्य ॥ इहह्यभूदुचितावसरस्तत्कथनाय यदिजगन्मिथ्यात्वं भगवदुद्दिष्टं स्यात् ॥

८. किंच सद्विलक्षणत्वं हि त्वद्रीत्या निर्धर्मके तुच्छे नास्ति । तस्मादसत्यतिव्याप्तेरप्रसक्तत्वेन तादृशदोषवारणायासद्विलक्षणत्वविशेषणं नावश्यकमिति त्वयैव प्रदर्शितं सद्विलक्षणत्वं मिथ्यात्वं इत्येव वस्तुतो वक्तव्यमिति च ॥ एवं चेत् "नासतो विद्यते भाव" इति किमर्थमाह भगवान् । यः कश्चिद्भ्रान्तः तुच्छं सधर्मं मन्वानो यद्यतिव्याप्तिं ब्रूयात्तत्प्रीत्यै "तुष्यतु

दुर्जन" इति न्यायेन भगवानाहेति हि त्वत्समाधानं। पाक्षिकत्वेन श्रीमद्वोक्तां प्रसंगसंगतिं अवज्ञाय तुष्यतुदुर्जनन्यायेन गीतोक्तेस्सार्थक्यं वदतस्तवाग्रहः स्फुटः।

९. किंच उत्पत्तिमत्त्वेन जगतो मिथ्यात्वं कथं सिध्यति। भावरूपाज्ञानं खलुत्वन्मतेप्यनादि। तथापि तज्जगदन्तर्भूतं मिथ्येति चाभ्युपगतं त्वया॥ तस्मात् "नासतो विद्यते भावः" इत्युत्पत्तिप्रस्तावो निष्प्रयोजनः॥

१०. नापि विनाशप्रस्तावस्सार्थकः॥ यत्त्वदभिप्रेतं ब्रह्मभिन्नं सर्वं विनाशीति तन्न॥ "प्रकृतिः पुरुषश्चैवनित्यौकालश्च" इति स्पष्टमुक्तेः॥ एवमन्यानिच बहूनिप्रमाणानि सन्ति॥

११. किंच स्यात्सद्विलक्षणत्वं जगतः॥ सच्छब्देन ब्रह्मणो विवक्षितत्वात् तद्वैलक्षण्यं नास्माकमनिष्टं। सत्त्वाधिकरणभेदानुयोगित्वं तु तवाप्यनभिमतं ब्रह्मणस्सत्वाधिकरणत्वाख्यधर्मशून्यत्वात्। इत्यलं दोषगुंफितव्याख्याननिरासायासेन॥

वेंकटनाथपथमनुसृत्य केचिदसच्छब्देन तुच्छमादाय, भावपदं भानार्थकं मन्वानाः, एवं व्याकुर्वते। तथाहि। असतः=शशशृंगादेः। भावः भानं न। सतः=ब्रह्मणः। अभावः बाधः न। जगतस्तु भानं बाधश्च विद्येते। तस्मादिदं सदसद्विलक्षणमिति॥ अनयादिशा अख्यातिवादिनोपि "साकारवादादसतो न भानात् संविद्विरोधादथहेत्वभावात्। धियामनाश्वासतया च नेष्टा यतोन्यथाख्यातिरतो यथार्थी" इत्युक्तरीत्या असतो भानाभावात् सर्वं ज्ञानं यथार्थं मत्वा भ्रमस्य ग्रहणस्मरणात्मकत्वेन ज्ञानद्वयात्मकत्वमाहुः॥ अख्यातिपक्षनिरासे यथा वयं तथा मायावादिनोपि धुरंधरास्स्युः। कथंतैरख्यातिपक्षो निरस्यते यद्यसतो भानं नाभ्युपेयते॥ यद्यपि मायावादिनो भ्रमस्य प्रातिभासिकविषयकत्वं मन्यन्ते। तथापि तत्प्रमाणाभावेन असदेवरजतं प्रत्यभादिति अनुभवविरोधेन चायुक्तं॥ असतो भानाभावं ये

मन्यन्ते ते भ्रान्ताः। भानाभावे असद्व्यवहारस्य मूलायोगात्। अन्यथा-ख्याति प्रकरणे सुधायां एतद्विस्तरतः प्रदिपादितं द्रष्टव्यम् ॥

शंकरभाष्ये उक्तरीत्या असच्छब्दः कादाचित्कघटादिप्रपंचपरः इति व्याख्यातं। जगतः पारमार्थिकताशून्यत्वनिरुपणावसरे युक्तयश्चोपन्यस्ताः ॥ अत्र चिन्त्यते। युक्तीनां चापारमार्थिकत्वेन ताभिः कथं अर्थसिद्धिरिति। मिथ्यापदार्थस्य साधकत्वं न भवेदिति सुधायां सम्यग्विचारितं द्रष्टव्यम् ॥ घटस्सन्नित्यादौ सामान्यविशेषयोः बुद्धौ विषयीकृतयोः घटस्य कल्पितत्वं सतस्तु वस्तुत्वं इति सिद्धान्तो शंकरभाष्ये वर्णितः ॥ सामान्यविशेषयोरुभयोः पारमार्थिकत्वे काऽनुपपत्तिः ॥

विमतमतात्विकं अप्रामाणिकत्वात् ॥ विशेषाः कल्पिताः व्यभिचारित्वात् ॥ विमतं मिथ्या सकारणत्वात् ॥ विमतं असत् विकारत्वात्। इत्यादयः प्रयोगाः मानत्वेन गृहीताः। प्रत्यक्षादिप्रमाणानां विद्यमानत्वेन अप्रामाणिकत्वाख्यो हेतुरसिद्धः ॥ क्वचिदक्षादिकं भ्रमं जनयतीतिमात्रेण प्रत्यक्षस्य अतत्वावेदकत्वं मन्वानः कथं यौक्तिको भवेत्। निर्दुष्टेन्द्रियं हि प्रत्यक्षं। दोषसदसद्भावाभ्यां भ्रमत्वाभ्रमत्वविवेकस्य सुवचत्वात् जगद्विषये प्रमाण-सामान्यस्य प्रतिक्षेपो न न्याय्यः। एवमेव कल्पितत्वसाधकं व्यभिचारित्वं दुष्टं ॥ हेतोरप्रयोजकत्वात्। दुष्टकरणजन्यज्ञानविषयत्वमुपाधिः। जातिव्यक्त्योस्सामानाधिकरण्यं अनुवृत्ते व्यावृत्तस्य कल्पितत्वेनैवोपपद्यते इति प्रक्रिया न प्रत्याययति ॥ द्वयोस्सतोरेव विशेषणविशेष्यत्वदर्शनात् घटसतोरपि विशेषणविशेष्यत्वे द्वयोस्सत्वध्रौव्यात् घटादिकल्पितत्वानुमानं सामानाधिकरण्यधीबाधितं। अस्य समाधाने मरीच्यादाविदमुदकमित्यादिप्रतीतेः उदकस्याभावेपि सामानाधिकरण्यदर्शनं दृष्टान्तितं। इदं सुकरनिरासं ॥ दोषसदसद्भावाभ्यां विवेकस्य सुवचत्वात्। विकारत्वानुमानं सकारणत्वानुमानं चाप्रयोजकं ॥

कार्यकारणयोरभेदोपि नाद्वैतसाधकः ।। परिणामवादस्य शंकरानन्देन कण्ठतस्तिरस्कृतत्वात् । विवर्तवादे कार्यकारणाभेदस्योपयोगश्चिन्त्यः । सत्कार्यवादं त्वनुपदं विचारयामः ।।

कथं तितिक्षा कथममृतत्वं उपपद्यते? जगतस्सत्यत्वे मुक्त्यभावप्रसंगः। कल्पितत्वे हि ज्ञानबाध्यत्वं संगच्छेत, इत्याक्षेपे जगतः कल्पितत्वं प्रसाध्य समाहितमिति मधुसूदनाशयः ।। "असतः परिच्छिन्नस्य भावः पारमार्थिकत्वं नास्तीति प्रथमपादार्थः ।। परिच्छिन्नत्वं देशतः कालतः वस्तुतो वा संभवति । अत्यन्ताभावाप्रतियोगित्वादात्मा देशतोऽपरिच्छिन्नः ।। ध्वंसप्रागभावाप्रतियोगित्वात् सः कालतोऽपरिच्छिन्नः । अन्योन्याभावाप्रतियोगित्वादसौ वस्तुतोऽपरिच्छिन्नः । व्यावहारिकत्वप्रातिभासिकत्वादिविशिष्ट विजातीयसत्तामादायातिव्याप्तिवारणाय स्वान्यूनसत्ताकपरिच्छेदशून्यत्वं विवक्षितं । ननु तुच्छभिन्नत्वेन ब्रह्मणोपि वस्तुपरिच्छेदो विद्यते इत्यतआह नाभावो विद्यते सतः इति । सतः अपरिच्छिन्नस्य अभावः देशकालवस्तुपरिच्छेदः न विद्यते—इति यावत् ।। सदधिकरणभेदप्रतियोगित्वं खलु वस्तु परिच्छिन्नत्वं ।। तुच्छस्य सदधिकरणत्वायोगात् तद्भेदरूपोवस्तुपरिच्छेदो न सिद्ध्यति" ।। इत्यादिपरिष्कारः प्रपंचितः ।

अत्रोच्यते ।। असतः इत्यनेन परिच्छिन्नस्येत्यर्थोदुर्गमः ।। परिच्छेदापरिच्छेदबोधकशब्दस्यादर्शनात्तन्निरूपको ग्रन्थो व्यर्थो भाति—एवं मधुसूदनीयं निराह वेंकटनाथोपि देशकालवस्तुपरिच्छेदवति घटादौ असत्पदाप्रयोगादशब्दार्थव्याख्यानमिति ।। उत्कर्षदीपिकाकारोपि मधुसूदनमेवं निराह । किंच सत्त्रैविध्यं पुरस्कृत्य मधुसूदनव्याख्या । सत्त्रैविध्यं त्वप्रामाणिकं । यद्व्यावहारिकं सत् प्रातिभासिकं सदित्युच्यते तत्र सत्ताया एवाभावात् । वस्तुतस्तु इदं रजतमित्यत्र रजतं शशविषाणवदसदेव ।। आह श्रीधरः 'अनात्मधर्मत्वादविद्यमानस्य शीतोष्णादेः आत्मनि भावः सत्ता न विद्यते । सतश्चा-

त्मनोऽभावः नाशो न विद्यते" इति। एतत्तिरस्कृतं स्वयूथ्येनैव वेंकटनाथेन॥ "असच्छब्देनानात्मधर्मोक्तावशब्दार्थकल्पनं, अनात्मधर्मत्वहेतुकस्य आत्मन्यविद्यमानत्वस्योक्तौ आत्मन्यविद्यमानस्यात्मनि भावः सत्ता न विद्यते इति साध्याविशिष्टो हेतुः। नाभाव इत्यभावशब्दस्य नाशार्थकत्वेन व्याख्याने तत्प्रतिद्वन्द्विभावशब्दस्योत्पत्त्यर्थकत्वमेव व्याख्यातुमुचितं च"॥ इति॥ एतेन श्रीधरमधुसूदनशंकराद्यभिमतासदादिव्याख्यानस्य अशब्दार्थत्वेन स्वयूथ्येनैव निराकृतत्वे सति उक्तरीत्या वेंकटनाथाभिमतमिथ्यात्वपरव्याख्यानस्याप्यसंगतत्वे सिद्धे अद्वैतव्याख्यानं सर्वतोनिरस्तं भवति॥

यदुक्तं रामानुजीये असतो देहस्य सद्भावो न विद्यते—इत्यादि तदपि चिन्त्यं—नश्वरस्वभावस्यानश्वरत्वं नास्तीत्युपदेशो व्यर्थो वा नीरसो वा॥ हेतोस्साध्याविशिष्टत्वेन सदसत्पदयोर्हेतुसमर्पकत्वायोगं दोषं प्रदर्शयति वेंकटनाथः॥ किंच देहनश्वरत्वमनुपदं वक्ष्यते॥ असत्पदेन देहस्योक्तौ गमकं न दृश्यते॥

इमं श्लोकं सत्कार्यवादिनस्स्वानुमतार्थत्वेन व्याचक्षते॥ असतः प्रागविद्यमानस्य भावः उत्पत्तिर्नविद्यते। सतः विद्यमानस्य अभावः नाशः न विद्यते इति॥ इयमपव्याख्या। घटादीनामुत्पत्तेः प्राक् नाशोत्तरं च विद्यमानत्वस्य प्रत्यक्षबाधितत्वात्॥ निरस्तमिदं मतं गीतातात्पर्ये॥ "यद्यसन्न-विशेषोत्र जायते कोऽत्र जायते॥ व्यक्तावपि समं ह्येतदनवस्थान्यथाभवेत्॥ एवं नाशेपि बोद्धव्यमतोऽसन्नेव जायते॥ तथाप्यभेदानुभवात्कार्यकारणयोस्सदा॥ भेदस्य चाविशेषेण देहोऽगाक्षिततामिति॥ व्यवहारो भवेद्यस्माद्धल्येवानुभवस्सदा" इति ब्रह्मतर्कवचनं॥ तथाच जायते इति वित्तिव्यवहारान्यथानुपपत्त्या घटाद्युत्पत्तौ पृथुबुध्नोदराकारादिविशेषः प्रागसन्नेव जायत इति भावः॥

यद्यपि असत्व, सदसत्व, सदसद्विलक्षणत्वबोधकाश्शब्दाः जगति वा ब्रह्मणि वा प्रयुक्ता दृश्यन्ते तत्र तत्र शास्त्रेषु ॥ तत्र उपक्रमाद्यालोचने तु नैकस्मिन्नपि प्रकरणे जगन्मिथ्यात्वं विवक्षितं । तथाहि गम्यते । "प्रकृति प्राकृतं प्रोक्तमसत्तदशुभत्वतः" इति व्याख्यातं । 'असतां बुद्धिगम्यत्वा-दसत्तदिति च' इत्यन्यत्र ॥

"मूर्तं सदिति संप्रोक्तममूर्तमसदुच्यते" इति ॥

"सदसद्ग्रथितं विश्वं विश्वांगे विश्वकर्मणि" इति ॥

नासदासीदित्यारभ्य 'नसत्तन्नासदुच्यते' इति सदसद्वैलक्षण्यं ब्रह्मणः उक्तं ॥ यतो वाचो निवर्तन्तइत्यनिर्वाच्यत्वं च तस्यैव ॥ अद्भुतत्वादनिर्वाच्य-मित्यन्यत्र निरुक्तमेतत् ॥

अयं संग्रहः ॥

१. शंकराचार्यः

असतः = विकारात्मनः सकारणस्य प्रपञ्चस्य

भावः = सत्ता न

सतः = परब्रह्मणः

अभावः = असत्ता न

२. मधुसूदनः ॥

असतः = परिच्छिन्नस्य

भावः = सत्ता

सतः = अपरिच्छिन्नस्य

अभावः = असत्ता

३. श्रीधरः ।

असतः = अनात्मधर्मस्य शीतादेः

भावः = आत्मनि भावः न

सतः = ब्रह्मणः

अभावः = नाशः न

४. वेंकटनाथः ।

असतः = तुच्छस्य शशशृंगादेः

भावः = उत्पत्तिः न

सतः = ब्रह्मणः

अभावः = नाशः न

५. केचिन्मायावादिनः ।

असतः = तुच्छस्य

भावः = भानं न

सतः = ब्रह्मणः

अभावः = बाधः न

६. रामानुजाचार्यः

असतः = नश्वरस्वभावस्य देहस्य

भावः = सत्ता

सतः = अनश्वरस्यात्मनः

अभावः = असत्ता न

७. सत्कार्यवादिनः ॥ कार्यस्य नित्यत्वं वदन्तः ।

असतः = अविद्यमानस्य

भावः = उत्पत्तिः न

सतः = विद्यमानस्य

अभावः = नाशः न

इमानि व्याख्यानान्युपेक्ष्याणीतिमत्वाह श्रीमध्वः ॥

असतः = असाधुकर्मणः

भावः = सुखं न

सतः = साधुकर्मणः। नारायणद्विट्तदनुबंधिनिग्रहादिरूपात्

अभावः = दुःखं न

'सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते। प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ उच्यते' ॥ इति गीतायाम् ॥

'अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च तत् ॥ असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह' ॥ इति च

"नहिकल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति" इति च।

'नासतोविद्यते भावः' इति प्रथमपादोक्तः द्वितीयपादार्थस्य दृष्टान्तः ॥ अथवा,

असतः कारणस्य अव्यक्तस्य प्रकृतेः साद्यते व्यक्तमवगम्यते यत् तत्सत् न सत् असत् ॥ अभावः = प्रागभावः प्रध्वंसश्च।

सतः = ब्रह्मणः

अभावः = प्रागभावप्रध्वंसौ न ॥

अस्यां योजनायां प्रथमपादे असत इत्यनन्तरं अभाव इति छेदो-द्रष्टव्यः। असच्छब्दस्य कारणपरत्वं, "असदव्यक्तरूपत्वात् कारणं चापि शब्दितं" इति प्रमाणासिद्धं ॥ अव्यक्तस्य प्रपंचकारणत्वं चानेनैव वाक्येन प्रमितं ॥

"सदसद्रूपयाचासौ गुणमय्यागुणोविभुः" इति भागवते ॥

प्रकृतेर्नित्यत्वं यद्वेंकटनाथेनाक्षिप्तं तदनेन गम्यते ॥ "प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तम" इति विष्णुपुराणे ॥ अत्रोक्तयोः श्रीमध्वव्याख्यानयोः प्रथमं किंचिद्यज्ञस्वाम्यप्यनुसरति—तथाहि ।

असतः असत् अशुभं सत्वभिन्नं रजस्तमः तत्कार्यं दुःखादिकं च—
तस्मात् भावः भूतिः अभ्युदयः न

सतः = सत्वगुणात्

अभावः = अनभ्युदयः न

अत्रेदमनुसंधेयं ॥ यथाश्रमितं वेंकटनाथेन सद्भाववाचिनश्शब्दाः सर्वे ते सुखवाचकाः इति शब्दनिर्णयस्य कल्पितत्वेपि भावाभावशब्दौ भूत्यभूतिपरतया परोपिव्याचष्ट इति आचार्यार्थस्य संवादोप्यस्तीति ॥

असतः इत्यत्र पंचमीं विहाय षष्ठीं गृहीत्वा असज्जनस्य भावः सुखं नेति व्याख्यानमप्युपपद्यते ॥ बहुभावगर्भितोयं श्लोकः । संभावितेष्वर्थेषु ये प्रमाणाविरुद्धास्त एव ग्राह्या इति प्रार्थ्यते ॥

---

**अविनाशि तु तद्विद्धि येन सर्वमिदं ततं ।**
**विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥१७**

वि० ननु प्रकृतिः पुरुषः कालइत्यादिवाक्यानामुपासनार्थत्वात्संप्रदायस्य मूलानिश्चयात् प्रकृतिपुरुषयोः स्वरूपस्यैवासिद्धेः पुनरनुमानस्य व्याप्त्यसिद्धिरित्याशंक्य भगवान् किमिदानीं प्रकृत्यादिस्वरूपसाधनेन किंचेदं नित्यं इदं

नित्यमिति प्रत्येकमुक्तेन च । यद्देशतोनन्तं तत्सर्वं नित्यमेवेत्येवं संग्राहकसंगृहीतं वर्णादि जीवादन्यदप्यस्ति तद्व्याप्तिग्रहणस्थलं भविष्यतीत्याह ॥ अविनाशित्विति । येनेदं सर्वं ततं व्याप्तं तदकारादिवर्णजातं अव्याकृताकाशश्चेत्येवमादिसर्वं अविनाशि तु नित्यमेवेति तुरेवेत्यर्थः। अनादि चेत्यपि ग्राह्यं ॥ ननु सुप्यजातौ णिनिः ताच्छील्ये इति सूत्रेण सोपसर्गत्वेपि च्छान्दसताच्छीलिकणिनिप्रत्ययान्ताविनाशिशब्देन स्वाभाविकविनाशाभावोक्तावपि शापेन वा बल्वत्प्रयत्नादिना किं नस्यादित्यत आह । विनाशमिति । अस्य व्याप्तस्य वस्तुनो विनाशं ध्वंसं कश्चिदपि कर्तुं नार्हति ॥ कुतइत्यत उक्तं अव्ययस्येति । ह्रासहीनस्येत्यर्थः । ह्रासएवनास्ति तादृशस्य नाशं न कोपि कर्तुमीष्ट इति किमुवाच्यमित्यर्थः ॥ यद्वा येन भगवता इदं जगत्कालो गुणजातं ततं व्याप्तं—कालतोगुणतो देशतश्च यद्विष्ण्वाख्यं ब्रह्माविनाशि तुर्विशेषे—अविनाशि चतुर्विधनाशहीनम् ॥१७

शं ॥ किं पुनस्तत् यत्सदेव सर्वथा इति? उच्यते—अविनाशीति । तद्विद्धि विजानीहि । किं ॥ येन सर्वमिदं जगत्ततं व्याप्तं सदाख्येन ब्रह्मणा साकाशं आकाशेनेव घटादयः ॥ विनाशमदर्शनमभावं । अव्ययस्य नैतत्सदाख्यं ब्रह्म स्वेन रूपेण व्येति निरवयत्वात् देहादिवत् । नाप्यात्मीयेन आत्मीयाभावात् यथा देवदत्तो धनहान्या व्येति ।

अतः अव्ययस्यास्य ब्रह्मणो विनाशं न कश्चित्कर्तुमर्हति न कश्चिदात्मानं विनाशयितुं शक्नोति ईश्वरोपि । आत्माहि ब्रह्म । स्वात्मनिच क्रियाविरोधात् ॥ यथा चक्षुर्गतरेखाश्चक्षुर्नपश्यति ॥ १७॥

रा० ॥ आत्मनस्त्वविनाशित्वं कथमवगम्यत इत्यत्राह ॥ अविनाशीति । तदात्मतत्वमविनाशीति विद्धि येनात्मतत्वेन चेतनेन तद्व्यतिरिक्तमिदमचेतनतत्वं सर्वं ततं व्याप्तं॥ व्यापकत्वेन निरतिशयसूक्ष्मत्वादात्मनो विनाशानर्हस्य तद्व्यतिरिक्तो न कश्चित्पदार्थो विनाशं कर्तुमर्हति ॥ तद्व्याप्यतया तस्मात्स्थूलत्वात् ॥ नाशकं हि शस्त्रजलाग्निवाय्वादिकं नाश्यं व्याप्यं शिथिलीकरोति । मुद्गरादयोऽपि हि वेगवत्संयोगेन वायुमुत्पाद्य तद्द्वारेण नाशयन्ति । अत आत्मतत्वमविनाशि ॥ १७ ॥

विचारः

ये वेदान्तेषु प्रसिद्धमीश्वरनित्यत्वमभ्युपगम्य जीवनित्यत्वमात्रे विवदन्ते तान्प्रतीश्वरं दृष्टान्तीकृत्य जीवाः नित्याः अनादित्वात् ईश्वरवदितिप्रयुक्तं ॥ येत्वीश्वरनित्यत्वेपि विप्रतिपद्यन्ते तान्प्रतीश्वरमपि पक्षीकृत्य चेतनाः नित्या अनादित्वादितिप्रयुज्य व्याप्तिग्राहकदृष्टान्त उत्तरत्रसूच्यते इतिदर्शितं नत्वेवाहं इति श्लोकव्याख्यावसरे ॥ एवमुद्बोधिता दृष्टान्तप्रतीक्षा 'नासतोविद्यते' इतिश्लोकेन अव्यक्ततत्वं प्रदर्श्य पूरिता ॥ प्रकृतिपुरुषस्वरूपे तावत् पुनरस्पष्टत्वेन विप्रतिपद्यमानान् प्रति अन्यान्यपि अनादिनित्यानि दृष्टान्तस्थलानि सन्तीति भावेन किं बहुना इदमनादिनित्यं इदमनादिनित्यमिति

शृङ्गग्राहिकया वचनेन यद्देशतोनन्तं तन्नित्यं इति प्रायशो नियमो दृश्यते इत्युक्तं । एतेन वर्णाव्याकृताकाशादयः परामृष्टाः । द्वितीयार्धे अव्ययस्येति नानुवादः । पूर्वमनुक्तस्यानुवादायोगात् । अव्ययं च तत् इति विधानार्थतया व्याख्येयं । यतो ह्रासोप्यशक्यः किं पुनर्नाशइति कैमुत्यं द्रष्टव्यं ।। यद्देशतोनन्तं तन्नित्यमिति संग्राहकसंग्रहेणोक्तावपि नियमस्य सर्वथा व्यभिचाराराहित्यं न विवक्षितं।। कालावयवानां क्षणादीनां देशतो व्याप्तानामपि नित्यत्वायोगात् ।। तथाच नत्वेवाहमित्यनेनोक्तमनुमानं व्याप्तिस्थलदर्शनेन दृढीकृतमिति भावो गीताभाष्ये उपपादितः ।

यद्वा यथोपपादितं तात्पर्ये । जीवनित्यत्वसाधकेप्यस्मिन्प्रकरणे ईश्वरमाहात्म्यं पुनः पुनः प्रसक्तं भवति । तथाहि । नत्वेवाहमित्यत्र दृष्टान्तत्वेन । नासतइतिश्लोके प्रकृतिनित्यत्वकथनावसरे ।। एवं जीवनित्यत्वे साधिते तन्नित्यत्वं ईश्वरनित्यत्वसमानयोग्यताकं इति भ्रमः प्रसज्यते । नित्योनित्यानां चेतनश्चेतनानां इति ईश्वरोत्कर्ष प्रतिपादयन्ती श्रुतिरनुपपन्नेति मन्दा भ्रमेयुः । तन्निवारयितुमविनाशित्विति श्लोकः प्रवृत्तः ।। 'तु' शब्देनेश्वरं विशेषयित्वा तस्य चतुर्विधनाशशून्यत्वेन जीवादतिशय उच्यते ।। "तुशब्दस्तु विशेषे स्यात्स्वसिद्धान्तेऽवधारणे" इति नाममहोदधौ ।। सर्वेषां कर्मणां ईश्वरप्रीत्यर्थं तत्पूजात्वेन कर्तव्यत्वस्य वक्ष्यमाणत्वात् ईश्वरोत्कर्षकथनं प्रकरणसंगतं ज्ञेयं।। नाशस्तावच्चतुर्विधः ।। "अनित्यत्वं देहहानिर्दुःखप्राप्तिरपूर्णता ।। नाशश्चतुर्विधः प्रोक्तस्तदभावोहरेस्सदा" इति महावाराहे ।। केचन पदार्थाः स्वरूपध्वंसवत्त्वेनानित्याः । यथा घटादयः । जीवास्तु कालतो नित्याअपि देहहान्यादिनाशवन्तः । भगवानेव सर्वथा नाशशून्यइति नित्योनित्यानामिति श्रुतिर्वक्ति। किंच भगवानेवात्यन्तिकततिमान् ।। "देशतः कालतश्चैव गुणतश्च त्रिधा ततिः ।। सासमस्ता हरेरेव नह्यन्ये पूर्णसद्गुणाः" इति परमश्रुतिः । जीवस्य कालतस्ततावपि न देशतः, अणुत्वात् ।। नापि गुणतः अपूर्णत्वात् ।। वर्णानां

प्रकृतेश्च देशतः कालतश्च ततावपि न गुणतो व्याप्तिः । तस्मान्निरवधिका ततिः निरवधिकनित्यत्वं च भगवतएव सिध्यति । इदमेवाव्ययत्वं । विविधेन प्रकारेण अयो गतिर्गमनं नाश इति यावत् यस्यास्ति तत् व्ययं । न व्ययं अव्ययं । केनापि प्रकारेण यस्य नाशो नास्ति इत्यव्ययं ॥ इति ॥

ततं इत्यनेन प्रमेयबाहुल्यं ज्ञापितं विद्यते ॥

(१) चराचरात्मकनिखिलप्रपंचस्यान्तर्यामी भगवानिति निरूपितं ॥ "एकोदेवस्सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा" इत्युक्तं चलाचल-प्रतिमास्वन्तर्यामित्वं स्मारितं ॥ ब्रह्माण्डे तद्बहिश्च देशतो व्याप्तिश्शास्त्रसिद्धा-स्मारिता ॥

(२) किंच न केवलं आकाशवद्देशतः कालतश्च व्याप्तिरपितु गुणत इत्यनेन सर्वान्तर्यामी सन् भगवान्कृत्स्नस्य जगतः प्रभवः प्रेरकश्चेति गम्यते ॥ "यद्वाचानभ्युदितं येन वागभ्युद्यते । यन्मनसा न मनुते येनाहुर्मनो मतं । यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यन्ति । यच्छ्रोत्रेण न श्रृणोति येन श्रोत्रमिदं श्रुतं ॥ यत्प्राणेन न प्राणिति येन प्राणः प्रणीयते" ——क्तं प्रेरकत्वं सूचितं ॥

यदुक्तमर्थद्वयं श्रीमदाचार्येण भाष्यतात्पर्ययोस्तन्निराकर्तुं यतते वेंकट-नाथः । आकाशकालयोर्नित्यत्वं नायमभ्युपगच्छति ॥ आकाशनित्यत्वे श्रुति-विरोधमाह ॥ "आत्मन आकासस्संभूतः" "व्योमाऽव्यक्ते प्रलीयते" ॥ "कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च" "अक्षरमंबरांतधृतेः" "येनावृतं खं च दिवं महीं च" इत्यादिभिराकाशस्यजन्मलयोक्तेः इति तदाशयः ॥ अयमनुपपन्नः ॥ अस्मत्सिद्धान्तोक्ताव्याकृताकाशभूताकाशभेदोनेन श्रुतपूर्वो नेत्येतेन ज्ञायते । उत्पत्तिलयप्रतिपादकानि वचनानि भूताकाशपराणि ॥ अव्याकृताकाशस्तु नित्यः ॥

"आकाशवत्सर्वगतश्चनित्य:" इति श्रुतिंत्वयं क्लेशपूर्वमन्यथा व्याख्याति । नित्यत्वे आकाशस्योपमात्वं न विवक्षितमिति श्रुतितात्पर्य आह ॥ सर्वगतत्वांशेपि न ब्रह्मण इवाकाशस्य देशापरिच्छिन्नत्वमस्तीति चाह। अव्याकृताकाशस्य देशकालापरिच्छिन्नत्वे भूताकाशस्य जनिलयवत्वेऽभिप्रेते सर्वं समंजसं भवति इति वेंकटनाथीयदूषणमसंगतं ॥ अव्याकृताकाशानंगीकारे वियदधिकरणानुव्याख्यानसुधयोः पुष्कलं दूषणान्युक्तानि ॥

कालस्यापि नित्यतामयं न सहते। "तस्याप्यात्मन्यध्यस्तत्वेनाधिष्ठानतत्वज्ञाननाश्यत्वात् । भूतभविष्यद्वर्तमानकालेष्वेकस्मिन्नन्याभावेन तत्त्रितयातिरिक्तस्य चाखण्डकालस्यासिध्या, सिद्धौ वा, अविद्यातत्संबन्धातिरिक्तकालस्यानभ्युपगेमन नित्यत्वायोगाच्च" इत्याह ॥ केवलस्वाभ्युपगतपरिभाषामनुसरतीदं दूषणं । कालस्य साक्षिवेद्यत्वेन प्रामाणिकत्वात् अध्यस्तत्वोक्तिरयुक्ता । एतेन तस्याधिष्ठानतत्वज्ञाननाश्यत्वं दूरोत्सारितं ॥

अयं श्रीमदाचार्यसिद्धान्तः ॥ अव्याकृताकाशकालविषये । सृष्टिप्रलययोर्विकारशून्यमव्याकृतं ॥ भूताकाशभिन्नं । एकं नित्यं स्वगतं व्याप्तंच। प्राच्यादि स्वाभाविकभागोपेतंच । तदभावे मूर्तनिबिडं च जगत्स्यात् । लक्ष्मीस्तदभिमानिनी ॥ आयुर्व्यवस्थापकः कालः ॥ सः नतार्किकाद्यंगीकृतकालवदखण्डः किन्तु लवक्षणाद्यनेकरूपः प्रत्येकं व्याप्तः । तार्किकास्तु कालस्य नित्यत्वमाहुः ॥ तन्न ॥ कालस्योपादानं प्रकृतिः । प्रकृतिसूक्ष्माणां अनन्तानां परस्परं भिन्नत्वेन प्रत्येकं कालोपादानत्वसंभवेन कार्याणां कालानां परस्परभिन्नत्वं उत्पत्तिविनाशौ प्रवाहस्यानादित्वं नित्यत्वं च घटन्ते । कालः स्वगतः सर्वाधारश्च इति॥ (भ-सि-सारः)

श्रीमदाचार्यव्याख्याने वर्णनित्यत्वं च प्रकृतश्लोके दृष्टान्तत्वेन प्रसक्तं। इदं तूष्णींभावेनावजानातीत्यूह्यते । वर्णानित्यत्वे तु युक्तयो नसन्त्येव ॥

गीतातात्पर्यप्रकाशितमर्थमपि वेंकटनाथस्तुच्छत्वेन तिरस्करोति ॥ "त्वन्मते गुणगुणिनोरभिन्नतया गुणिनो भगवत एकत्वेन तदभिन्नगुणानामप्यनेकत्वासिद्ध्या त्वदभिमतविशेषस्य च भेदव्यवहारमात्रनिर्वाहकत्वेन वास्तवभेदसमनियतसाकल्यानिर्वाहकतया त्वन्मते भगवतः सकलगुणपूर्तेरुपपत्त्ययोगस्य वज्रपञ्जरे प्रपञ्चितत्वात् देहहानेरपि रामकृष्णाद्यवतारेषु भारतभागवताद्युक्तत्वेन भगवतस्त्वत्परिभाषितसर्वप्रकाराविनाशित्वरूपातिशयासिद्धेश्च" इति। अत्रोच्यते ॥ अस्मन्मते नारायणस्य गुणपूर्तिर्नसिध्यतीति कचिद्वज्रपञ्जराख्ये ग्रन्थे स्वेनैव प्रतिपादितं इत्ययं वक्ति। असौ ग्रन्थविशेषो नास्माभिर्दृष्टपूर्वः। अवलोकनाय कुतुकं तु जायते ॥ तत्रत्या युक्तयो यदीहोदीरितसमाः स्युस्तर्हि न तदनवलोकनं शोचामः ॥ विशेषस्य भेदव्यवहारमात्रनिर्वाहकत्वं इत्यस्मन्मतमनुवदति। तदसत् ॥ विशेषस्य भेदकार्यनिर्वाहकत्वं यावद्द्रव्यभाविगुणानां गुणिभिरत्यन्ताभेदः इत्याद्यस्माभिरभ्युपगतं वास्तवं प्रमितं च ॥

भगवान्हि अचिन्त्याद्भुतगुणशक्त्यादिमान् ॥ तस्मिन्ननन्ताभिन्नगुणाः संभवन्त्येव ॥ त्वंखलु जगतस्सदसद्वैलक्षण्यप्रतिपादने भगवान् विरुद्धवाक्यान्याहेत्यादाय "स्वकीयमायावैभवस्यावितर्क्यत्वान्नकिंचिद्विरुद्धं" इति वदसि। स्पष्टं प्रतीतस्य व्याहत्याख्यविरोधस्य अवितर्क्यत्वाख्येन हेतुना परिहारस्त्वया कल्पितः ॥ अघटितघटनाशक्तिमति भगवति तु गुणानन्त्यं विशेषाभ्युपगमेपि न सिध्यतीति त्वद्वचनमाश्चर्यकरं ॥ यदिरामकृष्णादयः पांचभौतिकदेहवन्तः तेषामीश्वरत्वं दूरतोपास्तं भवति। अस्मदादिवज्जनिमृतिमतां पूजा न कर्तव्येति स्फुटं ॥ देहहानिबोधकभागवतभारतादिवचनानि तु भगवदद्दर्शनमात्रपराणीत्यलं पल्लवेन ॥

रामानुजाचार्यः ईश्वरस्यात्र प्रसक्तिं अदृष्ट्वा केवलं जीवपरतया व्याख्याति श्लोकान् ॥ "नाभावो विद्यतेसतः" इति वाक्यस्योपपादकं मन्यते

प्रकृतं पद्यं॥ तत्रसच्छब्देन जीवात्मा गृहीतइति प्रकृतश्लोकेपि सएव प्रतिपाद्यः। ततिर्नामातिशयितसूक्ष्मत्वं व्यापकत्वं ॥ इदं सर्वमित्युक्तेपि उचितसंकोचादचेतनप्रपञ्चस्यैव ताभ्यां ग्रहणं ॥ स्थूलमेवहि वस्तु व्याप्यत्वेन विनाशार्हं भवति । आत्मनामतिसूक्ष्मतरान्तर्भावात् नाशकवस्त्वभावादेव नाश्यत्वाभावस्सिद्धः ॥ समर्थोपीश्वरो नाशनसंकल्पाभावादेव नैतन्नाशयति ॥ आत्मा शस्त्राद्यधीनविनाशो न भवति तद्व्यापकत्वेन ततस्सूक्ष्मत्वात् यथाऽकाशः । यो यद्यधीनविनाशः सततस्सूक्ष्मो न भवति यथा वायुविनाश्यो दीपइति प्रयोगः ॥ (वे-दे) । अविनाशित्वित्यत्र जननमरणादेस्सर्वलोकसाक्षिकत्वात् "एतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति" इति बृहदारण्यके ॥ आत्मनो देहसमानयोगक्षेमत्वश्रवणाच्च कथमात्मनो देहाद्विशेषइति शङ्काया विशेषोऽस्तीति 'तु' शब्दाज्ज्ञायते ॥ चेतनसमुदायेनाचेतनसमुदायस्तिलतैलदारुवन्ह्यादिवद्यथांशं व्याप्त इति चेतनानामतिसूक्ष्मत्वं विशेष इति तदीयाशयः ॥

शंकरादयस्तु ब्रह्मव्यतिरिक्तात्मसद्भावमनङ्गीकुर्वाणाः केवलं ब्रह्मपरोयं श्लोक इति व्याचक्षते ॥ परिणामवादविवर्तवादोभयसाधारणवाक्यैस्ततिमुपपादयति शङ्कराचार्यः । तच्छिष्याः शङ्करानन्दादयस्तु विवर्तत्वपक्षपातिनो मरीच्यां जलप्रवाहवदिति दृष्टान्तमवलम्ब्य व्याकुर्वते ॥ ततिशब्दार्थत्वेन स्फुरणमेकमेवारोपाधिष्ठानतया तत्वमित्यद्वैतप्रक्रियां प्रपंचयन्ति ॥ "इदं, दृश्यजातं स्वतस्सत्तास्पूर्तिशून्यं, ततं व्याप्तं ॥ स्वसत्तास्पूर्त्यध्यासेन स्वस्मिन्समावेशितं ॥ तत् अविनाश्येव ॥ अव्ययस्य अपरिच्छिन्नस्य अस्य अपरोक्षस्य सर्वानुस्यूतस्य स्पुरणरूपस्य सतः कश्चित्कोपि आश्रयो वा विषयो वा इन्द्रियसन्निकर्षो वा विनाशं परिच्छेदं न कर्तुमर्हति । कल्पितस्याकल्पितपरिच्छेदकत्वायोगात् । घटादिज्ञाने ध्वन्यवच्छेदेन शब्दवत् घटावच्छेदेनाकाशवत् अहंकारवृत्तिः सर्वतोविप्रसृतस्य सतः स्फुरणस्य व्यंजिकासती

तादात्म्याध्यासबलाज्ज्ञानाश्रयतया भासते ॥ एवं घटादिविषयोपि तदज्ञातावस्थाभासके स्फुरणे कल्पितः ॥ य एव प्रागज्ञातस्स एवेदानीं मया ज्ञात इति प्रत्यभिज्ञानात्" इति मधुसूदनीये ॥

आत्मनाशनिषेधोपपादने, "स्वतो न नाशः निरवयवत्वात् । सावयवस्यैव हि स्वावयवापचयान्नाश उपपद्यते । परतो न नाशः स्वस्यैव कृतकर्मत्वायोगात् ॥ आश्रयनाशान्ननाशः । स्वातिरिक्ताश्रयाभावात् ॥ अस्य स्वमहिम्न्येव प्रतिष्ठितत्वात् । संबन्धिनाशान्ननाशः । निरवयवत्वेन संयोगाद्यभावात् । कारणनाशान्ननाशः । अस्य जनयितुरभावात् । कार्यनाशान्ननाशः ॥ 'न तस्य कार्यं करण च विद्यत' इत्युक्तेः ॥ तस्मादेतदविनाशि ॥ विनाशनक्रियाया विषयतां प्राप्तुमनर्हं शीलं स्वभावः सत्ता यस्येति संभावितसर्वविनाशप्रकाराणां निषेधः कृतः" इति शंकरानन्दः। इत्येषा दिक् ॥ तथाच ततं इत्यस्यारोपाधिष्ठानत्वेन सर्वत्र प्रसृतं इत्यर्थ उक्तः । नाभावो विद्यतेसत इत्यस्योपपादकतया श्लोको व्याख्यातः॥

अत्र वक्तव्यं ॥ ब्रह्मणस्सर्वव्यापित्वमिहोच्यत इत्यविवादं गम्यते ॥ आरोपाधिष्ठानत्वं क्वोच्यते ॥ 'अणोरणीयान्महतोमहीयान्' 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणःस्थितः' इति प्रमितस्य विष्णोः सर्वव्यापित्वे तदुत्कर्षः सर्वागमतात्पर्यविषयीभूतः सिध्यति । नैवं ज्ञानादिगुणरहितस्य स्फुरणरूपस्य जडतुल्यस्य निर्गुणब्रह्मणः उपदेशेन ॥ अधिष्टानस्येहानुक्तावपि राजगुह्याध्याये तस्य स्पष्टमुक्तेरध्यासं पुरोधाय व्याख्यानं सदिति वेंकटनाथाशयः । क्वराजगुह्याध्याये ब्रह्मणो जगदारोपाधिष्ठानत्वमुक्तमित्यन्वेषणीयं ॥ "मया ततमिदं सर्वं जगदव्यक्तमूर्तिना" "मत्स्थानि सर्वभूतानि नचाहं तेष्ववस्थितः"। "नच मत्स्थानि भूतानि पश्य मे योगमैश्वरं" इति वाक्यत्रयं जगतः अध्यास्तत्वे ब्रह्मणः अधिष्ठानत्वे मानमुदाहृतं वेंकटनाथीये ॥ कथमेतैः पराभिमतार्थलाभो भवतीति न ज्ञायते ॥ 'मत्स्थानी-

त्युक्त्वा न मत्स्थानीति भगवता उक्तत्वात् जगतः अवितर्क्यत्वं गम्यते अतो मिथ्यात्वं इति युक्तिर्या प्रदर्शिता सा न संगतेति स्फुटं ॥ अव्यक्तमूर्तिनेत्यनेन ब्रह्मणोऽधिष्ठानत्वमुपपादितमिति स मन्यते "सर्वथा प्रकाशमानेऽप्रकाशमाने वाऽधिष्ठानेऽध्यासासंभवेन सामान्यतो ज्ञातत्वे सति विशिष्याज्ञातत्वरूपस्य अध्यासाधिष्ठानत्वप्रयोजकस्य तेनोपदर्शनात्" इत्युक्तं ॥ स्यादिदमध्याहारगुंफितं व्याख्यानं समीचीनं यद्येवाध्यासो राजदण्डेनास्मिन्श्लोकार्थतया स्वीकरणीयः स्यात् । नह्यस्तीदृशं राजशासनं । किंच शंकरभाष्ये निरवयवत्वादात्मा अव्ययः इति प्रतिपादितं । एवं शंकरानन्देनापि ॥ शिष्यस्तु वेंकटनाथ आह ॥ "नात्र व्ययशब्दः अवयवापचयार्थकः । निरवयवस्यापि प्रागभावादेरिव नाशसंभवात्" इति । अहो शिष्यस्य भक्तिः॥ गुरुशिष्यवचनव्याहतिस्त्वर्थद्वयेपि संशयं जनयति ॥

यो मधुसूदनाभिमतः विनाशशब्दस्य परिच्छेदार्थमादाय स्वरूपोपपादनपूर्वं श्लोकार्थो वर्णितः सोऽपि स्वयूथ्येनोत्कर्षदीपिकाकृता निरस्तः । उपरि लिखितं ग्रन्थमधिकं चानुद्यायमाह ॥ "भाष्यकृद्भिः कुतो नव्याख्यातमिति चेत् मूलाक्षरैः उक्तशंकोत्तरस्य घटादिज्ञानस्य व्यावृत्यात्मकस्यात्मन्यध्यस्तत्वेपि तस्य स्वप्रकाशत्वान्न जडत्वं, व्यावृत्यादेरुत्पत्तिमत्वेपि तस्य नतत्वामित्येवमादिरूपस्याप्रतीतेः । उत्तरत्रान्तवन्त इमेदेहा इत्यस्य स्थानेन्तवत्य इमावृत्तयः इति वक्तव्यत्वापत्तेः............" इति ॥

नकश्चित्कर्तुमर्हतीत्यत्र शंकरभाष्ये ईश्वरोपि न समर्थ इत्युक्तं ॥ अहो ईश्वरावज्ञा? नाशकसंकल्पाभावादेव जीवानां नित्यत्वमुपपद्यते । ईश्वरस्य सामर्थ्यवैधुर्यकथनं तस्मिन्भक्तिन्यूनतामेव दर्शयति ॥

अत्रायमर्थसंक्षेपः ॥

श्रीमध्वः ॥ इहविवक्षिता ततिः देशतो व्याप्तिः वर्णादयो दृष्टान्ताः परामृष्टाः ॥ तेन जीवनित्यत्वे अनादित्वानुमानं व्याप्तिदार्ढ्यात्सुदृढं भवति ॥

यद्वा विष्णोर्देशतः कालतो गुणतश्च ततिरुक्ता । ईश्वरोहि चतुर्विधनाशहीनः अतोसौ सर्वपूज्यः । तत्पूजात्वेन कर्म कर्तव्यं इति ॥ शांकराः ॥ ब्रह्मणः जगदारोपाधिष्ठानत्वं गमयति पद्यं ॥ रामानुजाचार्यः ॥ जीवपरः श्लोकः अतिशयितसूक्ष्मत्वेन व्यापकत्वमविनाशित्वे प्रयोजकं इति ॥

**अन्तवन्तइमे देहानित्यस्योक्ताः शरीरिणः ।**
**अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥ १८**

वि० ॥ ननु रूपं रूपं प्रतिरूपो बभूवेति श्रुतेः जीवः प्रतिबिम्बः । प्रतिबिम्बश्चोपाधिकृतः । प्रतिमुखमिव दर्पणोपाधिकृतं । देह एवात्र जीवोपाधिर्नान्योस्ति । तथाच जीवचेतना न नित्याः । नाशवद्देहोपाधिकत्वात् । दर्पणोपाधिकप्रतिमुखवत् । नश्वरबिंबोपाधिसन्निधिकत्वात् । नश्वरमुखदर्पणसान्निधिकप्रतिमुखवदिति प्रतिपक्षग्रस्तमनादिनित्यत्वानुमानमित्यत आह । अन्तवन्त इति । एकवचनं बहुवचनार्थे । शरीरिणां नित्यानामिमे परिदृश्यमानाः भौतिकाः देहाः अन्तवन्तः विनाशिन इति योजना ॥ इमइति विशेषणादन्येन्तहीना अपि देहाः सन्तीति सूच्यते । तत एवोपाधयो जीवानां नान्तवद्भौतिकदेहा इत्याद्यप्रतिपक्षे हेतुरसिद्धः । अत एव नित्यस्येति साध्योक्तिः । जीवाः नित्याः नित्योपाधिकत्वात् ।

व्यतिरेकेण प्रतिमुखवदित्युक्तं भवति )। (नित्यस्येत्येवोक्ता- वीश्वरस्यापि देहोन्तवानिति प्राप्नोतीत्यतः शरीरिण इति विशेषणम् । द्वितीयहेतुरप्यसिद्ध इत्याह । अनाशिन इति । बिम्बोपाधिसन्निधिनाशकृतनाशहीनस्य शरीरिण इत्य- न्वयः)। ( जीवाः नित्याः नित्यबिम्बोपाधिसन्निधिकत्वात् । व्यतिरेकेण प्रतिमुखवदित्युक्तं भवति )। ( ननूपाधेर्नित्यत्वेपि परिच्छिन्नपरिमाणस्यैव वस्तुनो बिम्बत्वयोग्यत्वात् परिच्छिन्न- योश्च बिम्बोपाध्योः सन्निधेः दर्पणमुखसन्निधेरिव कादाचि- त्कत्वानियमात्कथं तस्य नित्यतेत्यतआह । अप्रमेयस्येति । प्रमा परिमितिः॥ अपरिच्छिन्नस्येत्यर्थः। सर्वगतस्येति यावत् । जीवेसर्वगतत्वस्याभावादतद्भावे सामानाधिकरण्यं सारूप्यं गमयतीति सिंहश्चैत्रइत्यादौ प्रसिद्धेः सर्वगतेश्वरसरूपस्ये- त्यर्थः। तत्प्रतिबिंबस्येति यावत्। सर्वगतेश्वरप्रतिबिम्बस्य कथं बिंबसन्निधिनाशेन नाशः स्यादिति भावः। नच सर्वगतस्य प्रतिबिंबत्वायोगः( तत्सारूप्यस्यैव प्रतिबिंबताशब्दार्थत्वात्॥) तदाह सूत्रकारः॥ ओं यावदात्मभावित्वाच्चनदोषस्तद्दर्शना- दिति )।( उपसंहरति । तस्मादिति । बिंबोपाधितत्सन्निधीनां नाशाभावेन तन्नाशप्रयुक्तनाशस्य जीवचेतने अनाशंक्यत्वेन प्रतिपक्षानुत्थानात् । नत्वेवाहमित्यत्रोक्तानादिनित्यत्वानुमा- नेन जीवस्य नित्यत्वात्। जीर्णदेहहानेपि समीचीनदेहांतर- लाभरूपप्रतिनिधिना समाधानसंभवात् । बंधुदेहस्पर्शना-

द्यभावनिमित्तशोकस्य च परमपुमर्थहेत्वभिमानत्यागेन निवर्तितुं शक्यत्वात् । भगवत्पूजार्थं हे भारत युध्यस्वेति । नन्वेतदयुक्तं । जीवेश्वरयोर्नित्यत्वाविशेषात् कुत ईश्वरस्य पूज्यतेत्यतो वा जीवाद्धरेर्विशेषं वक्तुं अविनाशित्वित्यादि-श्लोकद्वयं प्रवृत्तं । तथाहि येन भगवता इदं जगत् कालः गुणजातं ततं व्याप्तं कालतो गुणतो देशतश्च यद्विष्ण्वाख्यं ब्रह्म ततिमत्तद्विष्ण्वाख्यं ब्रह्माविनाशि । तुर्विशेषे । " अनित्यत्वं देहहानिः दुःखप्राप्तिरपूर्णता । नाशश्चतुर्विधः प्रोक्तः तदभावो हरेः सदा " इत्युक्तदिशा चतुर्विधनाशहीन-मिति विद्धि जानीहीत्यर्थः । विनाशमित्यादिप्राग्वद्व्याख्येयं । वर्णावकाशादेर्देशकालाभ्यां व्याप्तत्वेपि न गुणतः सास्ति । जीवस्य कालतस्ततत्वेपि न देशगुणाभ्यां ततिरस्तीति हरेस्ततत्वे विशेषः । अस्त्वेवं हरेः सर्वप्रकारेण विनाशा-भावः । तावता जीवादविनाशविषये को हरेर्विशेषइत्यत-आह । अन्तवन्तइति । शरीरिणां शीर्यमाणदेहवतां संसारिणामिति यावत् । स्वरूपतोनित्यानां जीवानामिमेदेहाः अन्तवन्तो विनाशवंतो जनिमंतश्चेत्यपि ग्राह्यं । संसारिदेहाः आद्यन्तवन्तइत्युक्त्या मुक्तदेहो नैवमिति लाभान्मुक्तेश्वरस्य हरेः कैमुत्यासिद्धो नित्यदेहः । एवं चोत्पत्तिविनाशवद्देहवतां च दुःखप्राप्तिः अवर्जनीयैव । गुणतोऽपूर्णता व्यक्तैवेति स्वरूप तोनित्यत्वेपि त्रिविधनाशवत्त्वाज्जीवस्य ततो हरेश्चतुर्विध-

नाशहीनस्यास्ति महान्विशेषइति तत्पूजा कार्येत्युपसंहरति । अनाशिनइति । तस्माज्जीवेभ्योऽतिशयवत्वात् । अनाशिनश्चतुर्विधनाशहीनस्याप्रमेयस्य देशकालगुणापरिच्छिन्नस्य हरेः पूजार्थं युध्यस्वेति ॥ किंच न केवलं सर्वप्रकारेणाविनाशित्वात् पूजा कार्येति । किंतु सर्वथैवाविनाशित्वात्स एव स्वतंत्रः । ततश्च तदधीनत्वान्मुक्तेः युद्धादिस्वकर्मणाराधितश्च मोक्षं ददातीत्यतस्तत्पूजा कार्येति भावेन चोक्तमनाशिनोप्रमेयस्येति ॥

श० किंपुनस्तदसत् यत्स्वात्मसत्तां व्यभिचरतीति ॥ उच्यते अन्तवन्तइति ॥ अन्तो विनाशो येषां तेऽन्तवन्तः। यथा मृगतृष्णिकादौ सद्बुद्धिरनुवृत्ता प्रमाणनिरूपणांते विच्छिद्यते स तस्यान्तः; तथा इमे देहास्स्वप्नमायादेहादिवच्चान्तवन्तः नित्यस्य शरीरिणः शरीरवतोऽनाशिनोप्रमेयस्याऽत्मनः अन्तवन्तइत्युक्ताः विवेकिभिरित्यर्थः । 'नित्यस्यानाशिनः' इति न पुनरुक्तं ; नित्यत्वस्य द्विविधत्वाल्लोके, नाशस्यच ॥ यथा देहोभस्मीभूतोऽदर्शनं गतो नष्ट उच्यते। विद्यमानोऽपि यथा अन्यथा परिणतो व्याध्यादियुक्तो जातो नष्टउच्यते । तत्र 'अनाशिनो नित्यस्य' इति द्विविधेनापि नाशेनासंबद्धस्येत्यर्थः । अन्यथा पृथिव्यादिवदपि नित्यत्वं स्यादात्मनः । तन्माभूदिति नित्यस्यानाशिनः इत्याह । अप्रमेयस्य न प्रमेयस्य प्रत्यक्षादिप्रमाणैरपरिच्छेद्यस्येत्यर्थः । नन्वागमेनाऽत्मा-

परिच्छिद्यते, प्रत्यक्षादिना च पूर्वं। न; आत्मनः स्वतस्सिद्धत्वात्। सिद्धेह्यात्मनि प्रमातरि प्रमित्सोः प्रमाणान्वेषणा भवति। नहि पूर्वं 'इत्थं अहं' इत्यात्मानमप्रमाय पश्चात्प्रमेयपरिच्छेदाय प्रवर्तते। नह्यात्मा नाम कस्यचिदप्रासिद्धो भवति। शास्त्रंत्वन्त्यं प्रमाणं। अतद्धर्माध्यारोपणमात्रनिवर्तकत्वेन प्रमाणत्वमात्मनःप्रतिपद्यते, नत्वज्ञातार्थज्ञापकत्वेन। तथाच श्रुतिः। 'यत्साक्षादपरोक्षाद्ब्रह्म य आत्मासर्वांतरः' इति॥ यस्मादेवं नित्योऽविक्रियश्चाऽत्मा तस्माद्युध्यस्व; युद्धादुपरमं माकर्षीरित्यर्थः॥ नह्यत्र युद्धकर्तव्यता विधीयते॥ युद्धे प्रवृत्त एव ह्यसौ शोकमोहप्रतिबद्धः तूष्णीमास्ते। अतः तस्य प्रतिबन्धापनयनमात्रं भगवता क्रियते। तस्मात् 'युध्यस्व' इत्यनुवादमात्रं, न विधिः॥ १८॥

रा० देहानां तु विनाशित्वमेव स्वभाव इत्याह अन्तवन्त इति। 'दिह उपचये' इत्युपचयरूपा इमे देहा अन्तवन्तः विनाशस्वभावाः। उपचयात्मकाहि घटादयोऽन्तवन्तो दृष्टाः। नित्यस्य शरीरिणः कर्मफलभोगार्थतया भूतसंघातरूपादेहाः 'पुण्यः पुण्येन' इत्यादिशास्त्रैरुक्ताः कर्मावसानविनाशिनः। आत्मात्वविनाशी॥ कुतः अप्रमेयत्वात्, नह्यात्माप्रमेयतयोपलभ्यते, अपितु प्रमातृतया। तथाच वक्ष्यते—'एतद्योवेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः' इति। नचानेकोपचयात्मक-आत्मोपलभ्यते, सर्वत्र देहे 'अहमिदं जानामि' इति।

देहस्य चान्यस्यच प्रमातृतयैकरूपेणोपलब्धेः। नच देहादेरिव प्रदेशभेदे प्रमातुराकारभेद उपलभ्यते। अतएकरूपत्वेन अनुपचयात्मकत्वात् प्रमातृत्वाद्व्यापकत्वाच्च आत्मा नित्यः। देहस्तु उपचयात्मकत्वात् शरीरिणः कर्मफलभोगार्थत्वात् अनेकरूपत्वात् व्याप्यत्वाच्च विनाशी। तस्माद्देहस्य विनाशस्वभावत्वादात्मनो नित्यस्वभावत्वाच्च उभावपि न शोकस्थानमिति शस्त्रपातादिपरुषस्पर्शानवर्जनीयान् स्वगतानन्यगतांश्च धैर्येण सोढ्वा अमृतत्वप्राप्तये अनभिसंहितफलं युद्धाख्यं कर्मारभस्व ॥ १८ ॥

विचारः

अत्र शरीरिणः इति ईश्वरव्यावृत्यर्थं ॥ अशरीरिणो देहाभावात् शरीरिणोदेह इति व्यर्थविशेषणत्वं न शङ्कनीयम् ॥ शरीरिशब्दोजीवे रूढः। जन्तुजन्युशरीरिण इत्यमरोक्तेः ॥ देहा अनित्याः तथाप्यात्मानित्य इति नित्यत्वं विधीयते। नित्यस्येति केवलमनुवादे प्रयोजनाभावात् ॥ नित्यस्य-शरीरिण इति जात्येकवचनं बहुवचनार्थे ॥ इमे इति पुरोवृत्तित्वावधारणेन जीवानां उपाधिर्द्विविधः बाह्यः आन्तरश्चेति तत्र बाह्योपाधिर्देहः अनित्यः आन्तरः स्वरूपदेहस्तु जीवस्यप्रतिबिंबत्वापादको नित्यः इत्यवगम्यते ॥ देहानित्यत्वस्य पूर्वमेवोक्तत्वात् तत्कथनाय न प्रवृत्तोयं श्लोकः ॥ जीवनित्यत्वस्याप्युक्तत्वात् अभ्यधिकाशङ्काविवक्षया न पौनरुक्त्यं। अभ्यधिकाशंकात्वियं। देहो जीवस्योपाधिरिति प्रसिद्धः ॥ अनित्य इत्यपि ॥ अनित्योपाधित्वे जीवस्यानित्यत्वं दुर्वारमिति ॥ समाधानं तु इमे अपरोक्षतो दृश्यमानाभौतिकादेहा एवानित्याः। आन्तरोपाधेर्नित्यत्वात् मुक्तावपि बाह्योपाधेरेव नाशसंभ-

वेन उपाधिनाशप्रयुक्तनाशो न शङ्कनीय इति । उपाधिनाशेन नाशासंभवेपि बिंबोपाधिसन्निधिनाशरूपनिमित्तान्नाशः स्यादित्याकांक्षां अनाशिन इति विशेषणं शमयति ॥ जीवस्य बिंबो न यः कश्चन अपित्वप्रमेयः सर्वगतः ॥ एतादृशबिंबादुपाधेरपसरणमशक्यं बिंबोपाधिसन्निधिनाशस्याशक्यत्वात् ॥ अतः अनाशिन इति नैमित्तिकनाशोनिषिद्धः ॥

नित्यस्य अनाशिन इति पुनरुक्तिभिया केचिद्विनाशिन इति पठन्ति एते अन्तवन्त इत्यनेन पौनुरुक्त्यतादवस्थ्यं नालोचितवन्तः ॥

ननु ज्ञानागोचरत्वार्थकं अप्रमेयत्वं जीवस्यानुपपन्नं व्यर्थंचेत्यतः अतद्भावे सामानाधिकरण्यं सारूप्यं गमयतीत्याशयेन प्रमेयसारूप्यं गमयतीति व्याख्यातं ॥ ईश्वरप्रतिबिम्बत्वं नाम तद्भिन्नत्वे सति यत्किंचित्सादृश्यमेव ॥ अप्रमेयस्येति सर्वगतत्वं बोध्यते नतु प्रमाऽगोचरत्वं ॥

यद्वा (गी०ता) नित्यस्यानाशिनइति पौनरुक्त्यमन्यथापि परिह्रियते। पूर्वस्मिन्पद्ये तथास्मिन्नपि जीवेश्वरयोर्विशेष उच्यते ॥ जीवास्वातन्त्र्यं भगवत्स्वातन्त्र्यं पुरस्कृत्य पूजकपूज्यभावदार्ढ्याय ईश्वरपूजात्वेन विहितं कर्मानुष्ठेयमित्युपदेशाय च श्रीहरिसर्वोत्तमत्वं प्रसक्तं ॥ "अविनाशि" "येन सर्वमिदं ततं" इति यदविनाशित्वं सर्वगतत्वं चोक्तं तदेव अनाशिनः अप्रमेयस्येति विशेषणाभ्यामनूद्य तत्प्रीत्यर्थं इत्यर्थो बोध्यते ॥ अनाशिनः चतुर्विधनाशहीनस्य सर्वगतस्य विष्णोः पूजात्वेन तत्प्रीतये युध्यस्वेत्यर्थः ॥ जीवास्तु नाशवन्तः तेषां देहानां अन्तवत्वात् इति ॥ अनिच्छया देहहान्या दुःखस्य प्रसक्तेः अपूर्णत्वस्यापि स्फुटत्वात् पूर्वार्धेन त्रिविधनाशवत्वं जीवस्योक्त्वा उत्तरार्धेनेश्वरस्य 'अनाशिन' इति सर्वथा नाशराहित्यं अप्रमेयस्येति देशतः कालतो गुणतश्च ततिं प्रसाध्य श्लोको विष्णोरुत्कर्षं प्रतिपादयति ॥ इमे इति भौतिकत्वविवक्षयोक्तिः जीवस्य मुक्तौ चिदानन्दात्मकस्वरूपदेहवत्वं सूचयति ॥

एतेन भगवतश्चिदानन्दनित्यदेहत्वे कः संशय इति कैमुत्यं सूचितम् ॥ अन्तवन्तः नाशवन्तः इमे भौतिकाः नतु मुक्तदेहाः ॥ नित्यस्य कालतः अपरिच्छिन्नस्य । शरीरिणः संसारिजीवस्य ॥ अनाशिनः चतुर्विधनाशहीनस्य अप्रमेयस्य देशतः कालतो गुणतश्चापरिच्छिन्नस्य विष्णोः पूजार्थं युध्यस्वेति संबन्धः ॥

देहानित्यत्वात्मनित्यत्वयोर्युक्तय उपन्यस्ताः पूर्वश्लोकेस्मिंश्चेति रामानुजाचार्यव्याख्या । तथाहि ॥ ततमित्यनेन व्यापकत्वमभिहितमात्मनः । व्याप्यत्वं देहादीनां ॥ इमे देहाः इति देहानां भूतसंघातरूपत्वं उपचयात्मकत्वं सावयवत्वं बहुरूपत्वं चोक्तं ॥ तद्भिन्नत्वेन अभूतसंघातरूपत्वं अनुपचयात्मकत्वं निरवयवत्वं चात्मन उक्तं भवति ॥ 'नित्यस्य' 'अनाशिनः' 'शरीरिणः' इत्येकवचनेनैकरूपत्वं च अप्रमेयस्येति देहानां प्रमेयत्वेन भोग्यत्वमात्मनः प्रमातृत्वेन भोक्तृत्वमुक्तं ॥ तथा च प्रयोगाः ॥ देहाः अनित्याः व्याप्यत्वात्, देहाः अनित्याः भूतसंघातरूपत्वात् उपचयात्मकत्वेन सावयवत्वात् ॥ देहाः अनित्याः बहुरूपत्वात् ॥ देहाः अनित्याः भोग्यत्वात् इति ॥ तथैव ॥ आत्मा नित्यः व्यापकत्वात् ॥ आत्मा नित्यः अभूतसंघातरूपत्वात् निरवयवत्वात् ॥ आत्मा नित्यः एकरूपत्वात् ॥ आत्मा नित्यः भोक्तृत्वादिति ॥ एतेषां बलमालभ्याष्टावपि हेतवोष्टजयिन इति देशिकाचार्यः ॥

अत्रोच्यते । व्यापकत्वहेतुरनुपपन्नः ॥ सर्वव्यापकत्वविवक्षायां स्वरूपासिद्धिः ॥ प्रत्येकं क्षेत्रज्ञानां अणूनां तदभावात् ईश्वरापेक्षया व्याप्यत्वाच्च ॥ यदि कतिपयव्यापकत्वं विवक्षितं शस्त्राकाशादिभिरनैकान्त्यं ॥ अतः शस्त्रादिव्यापकत्वमेव विवक्षितो हेतुरिति देशिकेन समाहितं ॥ असंघातरूपत्वनिरवयवत्वयोरूपरसादिभिर्महदादिभिश्चानैकान्त्यं ॥ तत्परिहाराय द्रव्यत्वे सतीति हेतुं विशिष्य साध्यशरीरे अर्जुनबुद्धौ घातकतया प्रस्तुतशस्त्राग्न्याद्य-

धीनविनाशनिवृत्तेरेव साध्यत्वं विवक्षितं इति परिष्कृतं ॥ एवं परीष्कारे व्यापकत्वहेतुर्निष्प्रयोजनः । वैवक्षिकव्यापकत्वहेतुना वैवक्षिकं नित्यत्वं साधितं भवति न तु "नाभावोविद्यतेसतः" इति प्रतिज्ञातकालत्रयसत्ता-सिध्यतीति ॥ दूषणान्तराण्यपि सन्ति ॥ यो यद्व्याप्यः स तदधीनविनाश इति व्याप्तेरीश्वरव्याप्यैः प्रकृतिपूरुषकालादिभिरनैकान्त्यात् ॥ योग्यत्वस्य विवक्षायामपि जीवाकाशादिव्याप्यैः तदधीननाशरहितैः शरीरादिभिर्व्य-भिचारः ॥ तेषां तन्नाशयोग्यत्वे न मानं ॥ इति दिक् ॥

अप्रमेयस्येति आत्मनो भोग्यभिन्नत्वमभिप्रेतमिति रामानुजा-चार्यः ॥ प्रत्यक्षादिप्रमाणैरपरिच्छेद्यत्वमुक्तमित्यद्वैतव्याख्यातारः ॥ सर्व-गतत्वमर्थ इति सर्वज्ञाचार्यः ॥

अद्वैतव्याख्यानेषु केचित्परमार्थविवक्षया ब्रह्मज्ञानबाध्यत्वमन्तवन्त इत्यनेनोक्तमिति मन्यन्ते ॥ "नासतोविद्यतेभाव" इत्यसतां देहानां काल-त्रयेपि सत्वं नास्तीति परमार्थदृष्ट्या उक्तत्वेन, पुनरुक्तिभिया, नीलकण्ठस्तु "परमार्थदृष्टिमप्रतिपद्यमानस्य नरकादिभयमनुरुध्यमानस्यार्जुनस्य व्यवहा-राभिप्रायेण नित्यानित्यविभागमभिप्रेत्य देहानामन्तवत्वमुच्यतेतो न दोषः" इति पौनरुक्त्यं परिहरति ॥

यद्यपि नीलकण्ठेन पौनरुक्त्यमात्रं परिहृतं ॥ व्यावहारिकपारमार्थिक-भेदज्ञापकपदाभावात् व्याख्यानमसमंजसं ॥ श्लोकस्य पूर्वार्धगतानि अन्त-वन्तः देहाः नित्यस्य शरीरिणः इति पदानि व्यावहारिकसत्तामपेक्ष्य व्याख्याय द्वितीयार्धगते "अनाशिनः अप्रमेयस्य" इति पदे पारमार्थिक-सत्तापेक्षया व्याख्याय—पुनर्युध्यस्वेति पदं व्यावहारिकत्वविवक्षया व्या-ख्यातं—एवं अर्धजरतीयानुसृतौ न काप्युपपत्तिरुक्ता ॥

युध्यस्वेति नियोगस्य स्पष्टत्वेप्यद्वैतव्याख्यातारस्तं केवलमभ्यनुज्ञात्वेन व्याकुर्वते। "युद्धादुपरमं माकार्षी" रिति शङ्करभाष्यं। "निवृत्तशोकमर्जुन-

मालक्ष्य स यस्मिन्नर्थे स्वयमेव पूर्वं प्रवृत्तस्तत्रैव तं प्रोत्साहयति भगवान् ॥ युद्धं कुर्वित्यनुजानीते ॥ बुभुक्षुशङ्कामपास्य भुंक्ष्वेतिवत् नतु युद्धं कुर्विति नियुंक्ते ॥ ज्ञानकाण्डे कर्मविधेरनुपयुक्तत्वात्" इति शंकरानन्दः ॥ इदमतीव-क्लिष्टम् ॥ वस्तुतस्तु कुर्विति भगवदाज्ञैव ॥ विहितसत्कर्मानुष्ठानं ज्ञानात्पूर्वं तत्साधनं ज्ञानानन्तरं मोक्षानंदवृध्यर्थमित्युपपादयिष्यते ॥

वेंकटनाथीये मधुसूदनव्याख्यानमनूदितं निरस्तं च । तथाहि । "मधुसूदनसरस्वत्यस्तु—'देहाइति बहुवचनात्स्थूलसूक्ष्मकारणरूपाः पञ्च-कोशात्मकास्सर्वेप्यत्र देहागृह्यन्ते, ते च सर्वेप्येकस्यैव देहिनो देहाः' इति व्याचख्युः । तच्चिन्त्यं । भीष्मादिदेहनाशनिमित्तकार्जुनीयशोकनिरासार्थे ऽस्मिन्श्लोके अर्जुनविनाश्यत्वेन प्रसक्तानां भीष्मादिस्थूलदेहरूपान्नमय-कोशानामेव ग्रहणमुचितं ॥ न तु यावन्मोक्षमनपायितया युद्धाविनाश्यानां तदीयसूक्ष्मदेहरूपाणां प्राणमयमनोमयविज्ञानमयकोशानां तदीयकारणदेह-रूपस्यानन्दमयकोशस्य वा ग्रहणं । तेषामविनाशित्वेनार्जुनस्य तन्नाशप्रयुक्त-शोकाप्रसक्तेः । नचायं श्लोको न भीष्मादिदेहशोकनिरासार्थः किंतु "नास तोविद्यते भावः" इत्येतद्विवरणार्थ इति वाच्यं । तथासति "नासत" इति श्लोकप्रथमपादविवरणरूपस्यास्य श्लोकस्य तच्छ्लोकीयद्वितीयपादवि-वरणरूपात् 'अविनाशितु' इति श्लोकात्पूर्वभावित्वौचित्येन तदनन्तर-भावित्वानुपपत्तेः । कथंचित्तदुपपत्तावपि "नासतो विद्यते भावः" इत्यत्र 'असतः त्रिविधपरिच्छेदवतः कृत्स्नस्यापि प्रपञ्चस्य भावः सत्ता न विद्यते इत्येवं भवद्भिर्व्याख्यातस्यार्थस्यास्मिन्श्लोकेऽनुपलंभेनास्य तद्विवरण-रूपत्वायोगाच्च । नचात्र अन्तवच्छब्दस्त्रिविधपरिच्छेदवद्वाचीत्यसच्छब्द-विवरणरूपत्वं कल्पयितुं शक्यं ॥ नित्यस्य शरीरिणः अन्तवन्तो देहा इति नित्यशब्दप्रतिद्वन्द्विनः अन्तवच्छब्दस्य कालपरिच्छेदरूपनाशमात्रवाचित्वात् । नच नित्यशब्दोपि त्रिविधपरिच्छेदराहित्यवाचीति युक्तं; अविनाशवाचित्वे

नैव तस्य प्रसिद्धेः ॥ 'आकाशवत्सर्वगतश्च नित्यः' 'नित्यं विभुं सर्वगतं सुसूक्ष्मं' इत्यादिषु सर्वगतवैयर्थ्यापाताच्च ॥ इति

एतत् श्लोकार्थविचारे, इमे संशयाः व्याख्यात्ताभिमतपरिहाराश्चानुसन्धेयाः—तथाहि ॥

१. 'नत्वेवाहं' 'देहिनोस्मिन्' इति श्लोकानुक्तः कः प्रमेयविशेषोस्मिन्नभिहितः ?

२. इमे इत्यस्य किं प्रयोजनं ?

३. शरीरिणो देहाः इति व्यर्थविशेषणघटितप्रयोगः कुतः ?

४. नित्यस्यानाशिनः इति स्फुटा पुनरुक्तिः ॥

५. आत्मनः कथमप्रमेयत्वम् ॥ इति संशयाः ॥

(१) पौनरुक्त्यं देहानित्यत्वं पूर्वमुक्तमिति नीलकण्ठः परमार्थदृष्टिव्यवहारदृष्टिभेदेन पौनरुक्त्यं समाधत्ते ॥ पूर्वमुक्तस्य युक्तिद्वारा प्रपंचनं सार्थक्यमिति रामानुजाचार्यस्य भावः ॥ जीवानित्यत्वविषये संभावितशंकायाश्शमनार्थं इति सर्वज्ञाचार्यः ॥ तथाहि । देहस्योपाधित्वं प्रसिद्धं ॥ तथा नाश्यत्वं च ॥ उपाधिनाशे प्रतिबिम्बस्य नाशो दुर्वारः इति शंकायां परिदृश्यमानाः भौतिकाएव देहा अनित्याः जीवस्येमे देहाः बाह्योपाधय एव । आन्तरस्तु स्वरूपदेहः नित्योपाधिर्विद्यते इत्यनुक्तोपदेशः प्रयोजनं इति ॥

(२) द्वितीया शंका ॥ इमे इत्यस्य प्रयोजनं ॥ अन्ये देहाः नित्यास्सन्ति ये मुक्तावपि न विनश्यन्तीति द्योतनायेति सर्वज्ञाचार्यो मन्यते ॥ भूतसंघातरूपत्वं प्रदर्शयितुं प्रयोग इति रामानुजाचार्यः ॥ शंकराचार्यादिभिर्न विशेषोत्रालक्षितः ॥

(३) तृतीया । शरीरिणो देहाः इत्युक्ते अशरीरिणां देहाभावात् शरीरिण इति विशेषणं व्यर्थमित्याकांक्षा ॥ शरीराणां कर्मफलभोगोपयुक्तत्वेन कर्मावसाने शीर्यमाणत्वं द्योतयितुं प्रयुक्तं शरीरत्वात् देहत्वात्, इति, आभ्यां अनित्यत्वसाधकौ हेतूनिर्दिष्टाविति रामानुजाचार्यः॥ विशेषणवैयर्थ्यमनालक्ष्य शरीरिशब्दोपर्येकवचनमवधार्य जगन्मण्डलवर्तिसर्वदेहेष्वेक एवात्मेति ज्ञापनार्थैकवचनं इति सार्थक्यं वदन्त्यद्वैतव्याख्यातारः । अयमेवार्थस्तै "देहिन" इत्यत्रापि प्रपञ्चितः॥ शरीरीति जीवे कोशप्रसिद्धिं प्रदर्श्य ईश्वरव्यावृत्यर्थ इति सार्थक्यमुक्तं आचार्येण ॥ यद्वा शरीरिणइत्यनेन संसारिदशोच्यते मुक्तव्यावृत्यर्थ इति ॥

(४) चतुर्थी ॥ नित्यानाशिशब्दयोर्भेदः ॥ नित्यस्येति नाशराहित्यं । अनाशिनइति नाशानर्हत्वं विवक्षितं इति रामानुजाचार्यः॥ "नित्यस्य, अनाशिन इति न पुनरुक्तं । नित्यत्वस्य द्विविधत्वाल्लोके नाशस्य च ॥ यथा देहो भस्मीभूतोऽदर्शनंगतो नष्ट इत्युच्यते। विद्यमानोऽपि यथा अन्यथा परिणतो व्याध्यादियुक्तो जातो नष्टउच्यते । तत्र अनाशिनो नित्यस्य इति द्विविधेनापि नाशेनासंबन्धोस्येत्यर्थः" इति शंकराचार्यः ॥ अनाशिनः परिपूर्णस्य अतः नित्यस्य—इति नित्यत्वे परिपूर्णत्वं हेतूकृतं ॥ अणोर्नित्यत्वं तु "योवै भूमा तदमृतं—यदल्पं तन्मर्त्यं" इत्यादिप्रमाणान्निरस्तमित्यादाय शंकरानन्दो व्याचष्टे । नित्यत्वं यावत्कालावस्थायित्वरूपं औपचारिकं देशतः कालतो वस्तुतः परिच्छिन्नस्याविद्यादेः कल्पितस्यापि व्यवहारेण संभवतीति आत्मनः परिच्छेदनशून्यस्याकल्पितस्य विनाशहेत्वभावान्मुख्यमेव कूटस्थनित्यत्वं न तु परिणामिनित्यत्वं यावत्कालस्थायित्वं वेत्यनयोर्भेद उपन्यस्तो मधुसूदनीये ॥

नित्यत्वं कालापरिच्छेद्यत्वं । तच्च व्यवहारे नभसोप्यस्तीत्यत उक्तं अनाशिनइति ॥ नाशः अदर्शनं । तद्वानाकाशः । नभ आत्मनि लीयतइति स्मृतेः

इति नीलकण्ठः ॥ सर्वज्ञाचार्यैस्तु कैश्चिदुपाधिनाशमाशंक्य प्रतिबिंबभूतजीवनाशे शङ्किते तन्निरासाय अनाशिन इत्युक्तं—अथवा अनाशिन इति शब्दः ईश्वरस्य चतुर्विधनाशप्रतिषेधपरः, नित्यस्येति तु जीवपरः इत्याह ॥

(५) पंचमी ॥ अप्रमेयत्वं कथं ॥ परब्रह्मपरतामादाय सर्वप्रमाणैरपरिच्छेद्यत्वमात्मनः प्रपंचितं अद्वैतव्याख्यातृभिः । एवं चेच्छास्त्रस्यानारंभणीयत्वे प्राप्ते तत्परिहाराय बहुप्रपंचनं कृतं । प्रस्तुतं दूषणं तु न किंचिदपि समाहितं दृश्यते ॥

१. औपनिषदः पुरुषः ।

२. एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते ॥

३. आत्मन्येवात्मानं पश्येत् ।

४. सर्ववेदा यत्पदमामनन्ति ॥

५. वेदैश्च सर्वैरहमेववेद्यः ।

६. नावेदविन्मनुतेतं बृहन्तं । इत्यादिषु भगवतः प्रमेयत्वमुच्यते ॥ ग्रन्थविस्तरभिया नाद्येह तदुपपादयिष्यते ॥

अप्रमेयस्येत्यनेन प्रमेयभिन्नत्वं विवक्षितं । आत्मनो भोक्तृत्वात् भोग्यभूतदेहादिप्रपंचव्यावृत्तिरभिहितेति रामानुजाचार्यः ॥ जीवपरत्वे अप्रमेयेश्वरसारूप्यं गम्यते, ईश्वरपरत्वे सर्वगतत्वमभिप्रेतं इति सर्वज्ञाचार्यः ॥

एतच्छ्लोकप्रतिपाद्यभगवत्पादाभिप्रेतप्रमेयसंग्रहः ॥ श्लोकसंबद्धत्वेनात्र संक्षेपादिमे अर्थाः न विस्मर्तव्याः । तथाहि ॥

(१) ईश्वरस्सर्वेषां बिंबभूतः । तथा उत्तमदेवादयोऽवराणां ॥

(२) देवदत्तमुखप्रतिफलने तावत्तन्मुखं दर्पणं प्रविशतीत्यद्वैतवादिनो मन्यन्ते । तर्हि तदा देवदत्तस्य निश्शिरस्कत्वमापद्येत । प्रतिफलनं भ्रममूलं इति

नैय्यायिकाः । तर्हि बाधदशायां मुखज्ञानाभावस्स्यात् ।। वस्तुतस्तु प्रतिमुखं दर्पणोपाधिकं ।। बिंबस्सन्निधिश्च निमित्तकारणे । न च शंकनीयं निमित्तकारणनाशेन कार्यनाशस्यादर्शनात्—दर्पणसन्निधिनाशे तु प्रतिमुखनाशस्य संभवान्न सन्निधेर्निमित्तत्वामिति ।। अपेक्षाबुद्धिजन्यद्वित्वनाशवत्क्वाचिन्निमित्तनाशात्कार्यनाशस्य दृष्टत्वात् । तद्भिन्नत्वं तदधीनाक्रियाकारादिमत्वं तत्साहश्यं इत्यादीनि प्रतिबिबत्वप्रापकाणि । तस्मान्नेश्वरस्य सर्वगतस्य बिंबत्वानुपपत्तिश्शंकनीया ।। नापि साम्यमैक्यं वोद्भावनीयं ।। सच्चिदानन्दस्वरूपत्वेन जीवेशयोर्यत्किंचित्साहश्यमवगन्तव्यं ।।

३. जीवोपाधिर्द्विविधः । आन्तरः नित्यः स्वरूपदेहः प्रतिबिंबत्वप्रापकएकः ।। द्वितीयो बाह्यदेहाः लिङ्गशरीरपर्यन्ताः ।। तन्निवृत्तावपि न प्रतिबिबत्वहानिः । मुक्तावपि स्वरूपोपाधिरवशिष्यते । (“ उपाधिर्द्विविधो ज्ञेयः स्वरूपं बाह्य एव च ।। बाह्योपाधिर्लयं याति मुक्तावन्यस्य तु स्थितिः ।। स्वरूपत्वादुपाधेश्च न भिन्नोपाधिकल्पना ।। प्रतिपत्तौ विमोक्षस्य नित्योपाध्यास्वरूपया । चिद्रूपया युतो जीवः केशवप्रतिबिबकः” ।। इत्युक्तेः ।)

४. नित्यस्य अनाशिन इति द्वाभ्यां पदाभ्यां क्रमेण जीवानित्याः स्वरूपदेहाख्यनित्योपाधिकत्वात् ।। जीवानित्याः नित्यबिंबोपाधिसन्निधिमत्वात् इति प्रयोगौ विवक्षितौ ।।

(५. स्वरूपदेहस्योपाधित्वेऽपि जीवात्तस्याभेदो ज्ञेयः)। इति ।।

**य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतं।**
**उभौ तौ न विजानीतो नायं हन्ति न हन्यते॥१९**

वि० ॥ ननु यदुक्तं जीवचैतन्यस्य नित्यत्वं। यच्चोक्तं सर्वथैकप्रकारेणाविनाशित्वादीश्वरः स्वतन्त्रः, अनिच्छया देहनाशात्तन्निमित्तदुःखवत्वाच्च जीवः परतन्त्र इति तज्जीवनित्यत्वपारतन्त्र्ये न युक्ते। हन्तायमस्य हतश्चायमिति हननादिक्रियायाः जीवे तत्र स्वातन्त्र्यस्य च प्रतीतेरित्यत आह। य इति। यः पुमानेनं जीवं हन्तारं जीवान्तरस्य स्वातन्त्र्येण घातकं वेत्ति। यश्चैनं केनाचित्स्वातन्त्र्येण हतं मन्यते (तावुभौ जीवस्याऽनित्यत्वज्ञानी हननादिक्रियायां जीवस्वातन्त्र्यज्ञानी चेत्युभौ न विजानीतः। जीवनित्यत्वभगवत्स्वातन्त्र्याज्ञानिनौ भ्रान्ताविति यावत्॥ (कुतोबाधकाद्भ्रान्तित्वकल्पनेत्यत आह। नायमिति। बिंबनित्यत्वोपाधिनित्यत्वबिंबसन्निधिनित्यत्वानादित्वरूपोक्तहेतुभ्यो नायं हन्ति जीवं। न हन्यते च जीवः। प्रतिबिंबत्वादेव हेतोर्न स्वतन्त्रः सन्कश्चन हन्तीत्यर्थः। अतो बाधकाद्भ्रान्तित्वमिति भावः। अत्र हननक्रियाजीवक्रियांतरोपलक्षणं। सर्वत्र तस्यास्वातन्त्र्यादिति। एनमीश्वरं जीवचेतनस्य हन्तारं यो मन्यते सोपि भ्रान्तएव। चेतनहननस्येश्वरेणाकरणादित्यपि योजना तात्पर्योक्ता॥ १९॥

शा० शोकमोहादिसंसारकारणनिवृत्त्यर्थं गीताशास्त्रं, न प्रवर्तकं, इत्येतस्य अर्थस्य साक्षिभूते ऋचौ आनिनाय भगवान् ॥ यत्तु मन्यसे 'युद्धे भीष्मादयो मया हन्यन्ते, अहमेव तेषां हन्ता' इति, एषा बुद्धिः मृषैव ते ॥ कथम्—य एनामिति ॥ य एनं प्रकृतं देहिनं वेत्ति विजानाति हन्तारं हननक्रियायाः कर्तारं, यश्च एनं अन्यो मन्यते हतं देहहननेन 'हतः अहम्' इति हननक्रियायाः कर्मभूतं, तौ उभौ न विजानीतः न ज्ञातवन्तौ अविवेकेन आत्मानं अहंप्रत्ययविषयं । 'हन्ता अहं हतोस्मि अहं' इति देहहननेन आत्मानं अहंप्रत्ययविषयं यौ विजानीतः तौ आत्मस्वरूपानभिज्ञौ इत्यर्थः। यस्मात् न अयं आत्मा हन्ति न हननक्रियायाः कर्ता भवति । न च हन्यते न च कर्मभवतीत्यर्थः । अविक्रियत्वात् ॥

रा० एनं उक्तस्वभावमात्मानं प्रति, हन्तारं हननहेतुं कमपि यो मन्यते; यश्चैनं केनापि हेतुना हतं मन्यते; तावुभौ न विजानीतः; उक्तैर्हेतुभिरस्य नित्यत्वादेवायं हननहेतुर्न भवति अतएव चायमात्मा न हन्यते। हन्तिधातुरप्यात्मकर्मकः शरीरवियोगकरणवाची । न हिंस्याद्भूतानि 'ब्राह्मणो न हन्तव्यः' इत्यादीन्यपि शास्त्राणि अविहितशरीरवियोगकरणविषयाणि ॥ १९ ॥

विचारः

इहाप्यात्मनित्यत्वमेव पुनरभिहितामिति प्रतीयते ॥ कुतएवं पुनरुक्तिः, का आकांक्षा यां शमयति पद्यार्थः, इत्याक्षेपः प्रथमं समाधेयो वर्तते ॥ अविनाशित्विति श्लोकेनोक्तम् नैनं छिन्दन्ति इति प्रपञ्चयिष्यमाणं शस्त्रादीनामात्मनश्च हन्तृत्वहन्तव्यत्वायोग्यत्वं तद्विपर्ययवेदिनिन्दया द्रढयतीति देशिकावतारिका ॥ एतेन दार्ढ्यार्थं पुनरुक्तमित्युक्तं भवति ॥ शंकरभाष्ये नेयं पुनरुक्तिरालक्षिता परिहृता वा ॥ "भीष्मादयो मया हन्यन्ते अहमेव तेषां हन्ता इति बुद्धिर्मृषैव" इति तत्रावतारिका ॥ सर्वमिथ्यात्वं वारं वारमुक्तमित्यतीतश्लोकैरद्वैतव्याख्यानैरवगम्यते ॥ मधुसूदनादयः किञ्चित्पुनरुक्तिपरिहाराय यतन्ते । तथाहि । अहं कर्ता त्वं प्रेरक इति द्वयोरपि हिंसानिमित्तपातकापत्तेरयुक्तमिदम् युध्यस्व भारतेति वचनमित्याशङ्क्य काटकपठितयर्चा परिहरति भगवान् इति मधुसूदनः ॥ पापमेवाश्रयेदस्मान् सङ्करो नरकायैवेत्यात्मनः पापक्रियाविषयत्वं तत्फलभोक्तृत्वं तत्क्रियाकर्तृत्वंच मन्यसे तदात्मस्वरूपाज्ञानकृतमेव भवतीति मन्त्रावर्थतः पठतीति शंकरानन्दः ॥

अनेन, आत्मनो निष्क्रियत्वात् कस्य हननात् कस्य पापमिति समाधानाभिप्राय उक्तो भवति ॥

अत्रैतद्वक्तव्यम् । श्रीकृष्णस्य हिंसाप्रेरकत्वेन पापापत्तिशंका निर्बीजा । अर्जुनेनानुक्तेः । आत्मनिष्क्रियत्वेन पापभीतेरपोहे लोके सर्वथा विधिनिषेधोच्छेदप्रसङ्गः ॥ कस्याप्यधर्मभीतिः कदापि कस्माच्चित्कर्मणोपि नास्तीत्युपदेशो भयंकरः प्रतीयते ॥ धर्माधर्मसीम्नाम् अतिक्रमणेन मूले कुठारोयमुपदेशः ॥ किञ्च आत्मनो निष्क्रियत्वं अप्रामाणिकम् । तस्मादिदं सङ्गत्युपपादनम् समाधानं चानुपपन्ने ॥

अतः, व्यवहारस्तु भ्रान्त इत्याहेति सर्वज्ञाचार्योऽवतारयति॥ यद्यपि जीवनित्यत्वं अनादित्वहेतुना साधितम्। 'नासतः' 'अविनाशि तु' इति द्वाभ्यां व्याप्तिग्राहकदृष्टान्ताः सूचिताः॥ उपाधिनाशप्रयुक्तनाशः स्यात् इति बाह्यदेहमेवोपाधित्वेन भ्रान्त्वा पूर्वपक्षे कृते नित्योपाधिसद्भावसमर्थनेन उपाधिसन्निधिनित्यत्वकथनेन च पूर्वपक्षस्समाहितः॥ एवं अनादित्वहेतोराशङ्कितदोषाणां क्रमात्परिहारेण दार्ढ्यं संपादितेपि देवदत्तो यज्ञदत्तं हन्ति अनेनायं हत इति व्यवहारस्य कागतिरित्याक्षेपोऽवशिष्यते॥ व्यवहारस्य तन्मूलभूतज्ञानस्यचानुपेक्ष्यत्वादाह यएनमिति॥ तस्मान्न पौनरुक्त्यं शंकनीयमिति भगवत्पादाशयः॥

श्लोके नायं हन्ति न हन्यत इति हेतुरुक्त इत्यविवादं गम्यते॥ यतः नायं हन्ति न हन्यते अतः उभौ भ्रान्ताविति योजना सर्वसम्मता॥ अनया न हन्ति न हन्यते इत्यात्मनित्यत्वस्य विधेयत्वं नाभिप्रेतमिति ज्ञायते॥

अत्रेमे संशयाः निरूपणसौकर्याय विभज्यन्ताम्। तथाहि॥

१. इह विवक्षितं हननं किं स्वरूपध्वंसमात्रम्।

२. उत मरणमिति प्रसिद्धं देहवियोगाख्यंच॥

३. उपलक्षणया हन्तिरिह क्रियासामान्यपरः किं न स्यात्।

४. तृतीयस्याभ्युपगमे निष्क्रियत्वमात्मनस्सिद्धं हि भवति॥ तत्र काऽनुपपत्तिः कास्सिद्धान्तः?॥

५. उभौतौ न विजानीत इति विवक्षितौ द्वौ पुरुषौ कौ इति॥

(१) रामानुजपक्षे एनं हन्तारमिति प्रतीतसामानाधिकरण्यपरित्यागः, 'प्रति' शब्दाध्याहारः, कर्तृवाचकप्रत्ययस्य हेतुपरत्वं, हन्तारमित्यस्य कमपीति विशेष्याध्याहारः, श्रौतहन्तृशब्दाननुगमश्चेत्येतेदोषाः॥ श्रुतौ हन्तृशब्दस्य हननकर्तृपरत्वात् कर्तृनिषेधेनैव तदधीनहेत्वन्तरनिषेधसिद्धेश्च। हननं

नामस्वरूपध्वंसः । स निषिध्यते इति रामानुजाचार्यैः ॥ तेन आत्मध्वंसकशस्त्राद्यस्तित्वं यो जानाति स भ्रान्तः इति निन्दा प्रपञ्चिता । आत्मानित्यत्वं यो जानाति स भ्रान्त इति यो व्याख्यानफलितार्थस्सनास्माकमनिष्टः । हननशब्दः स्वरूपध्वंसमात्रपर इत्यवधारणे तु उभावित्यनुपपन्नं भवति । एतदग्रेप्रपंचयिष्यते ॥ तस्माद्धन्ति हन्ता इति पदाभ्यां अन्योप्यर्थस्सूचित इति सर्वज्ञाचार्याशयः ॥

(२) हननं नाम मरणम् देहवियोगाख्यं इत्यङ्गीकारेपि न दोषः। देहवियोगाभिप्रायेण देवदत्तो यज्ञदत्तं हन्तीति व्यवहारे क्व भ्रान्तिरित्याकांक्षायां तु उत्तरं अयं भ्रमएवेति ॥ हननक्रियां प्रति देवदत्तस्य स्वतन्त्रकर्तृत्वम् यज्ञदत्तस्य स्वतन्त्रकर्मत्वम् यो वेत्ति स भ्रान्त इत्युपपत्तेः ॥ तस्मात् हननं स्वरूपध्वंसः देहवियोगाख्यमरणं चेति प्रथमद्वितयिप्रश्नयोरुत्तरम् ।

(३) हननमित्यनेनाजहल्लक्षणया सर्वासां क्रियाणां संग्रह इत्यद्वैतव्याख्यातारः । अनेनात्मनो निष्क्रियत्वं फलितम् । 'नतदश्नाति किंचन नतदश्नाति कश्चन'। 'निष्कलं,' 'निष्क्रियं,' 'शान्तं'। इत्यादिप्रमाणेभ्यः देहेन्द्रियादिषु व्याप्तेषु सत्सु अयमात्मा चलितेपि वृक्षे तदन्तस्थाकाशइव कूटस्थासङ्गचिद्रूपेण सर्वत्रोदासीनतया तूष्णीमास्ते ॥ यः स्वं कर्तारं भोक्तारं सुखिनं दुःखिनं च मनुते स भ्रान्त इति तेषामाशयः। अत्रोच्यते॥ आत्मनो निष्क्रियत्वं श्रुतिस्मृतिविरुद्धम्॥ निष्क्रियमित्यादीनि प्रमाणानि परमात्मपराणि प्राकृतगुणक्रियादिनिषेधकानि न तु जीवात्मपराणि ॥

कर्ता शास्त्रार्थवत्वादिति ब्रह्मसूत्रे ह्यात्मनः कर्तृत्वं समर्थितम् । 'उपादानात्' इति सूत्रेण मोक्षार्थं साधनाद्युपादानमुक्तम् । कर्तृत्वाभावे क्वानुष्ठानम् क्व भक्तिः ॥ मयाहतांस्त्वं जहीत्यधीनकर्तृत्वमुक्तम् ॥ अतो जीवस्य भगवदधीनकर्तृत्वमवश्यमभ्युपगन्तव्यम्॥ 'यथाच तक्षोभयथा'। इति सूत्रम्।

यथा तक्ष्णः कारयितृनियतत्वं कर्तृत्वंच विद्यते एवं जीवस्यापीत्यर्थः ॥ 'परात्तु तच्छ्रुतेः' । 'कर्तृत्वं करणत्वं च स्वभावश्चेतना धृतिः । यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षया' ॥ इति भगवतः स्वतन्त्रकर्तृत्वं तदधीनकर्तृत्वं जीवस्येति स्थितम् ॥

एतच्छ्लोके हन्तारं हन्ति इत्युपलक्षणया सर्वक्रियासंग्रहे नास्माकमनिष्टम् ॥ निष्क्रियत्वस्य फलितार्थत्वे त्वस्ति विप्रतिपत्तिः ॥ जीवस्य स्वातन्त्र्येण सर्वक्रियाकर्तृत्वकर्मत्वादिनिषेध एव तात्पर्य इति भगवत्पादाचार्यैः ॥ जीवो बिम्बक्रियाधीनक्रियावानेव ॥

५. उभाविति विवक्षितौ पुरुषौ काविति नापातप्रतीतौ स्फुटं विज्ञायते । आत्मघातकशस्त्रादिसत्ताभ्रमवान् एकः, आत्मनो हन्तव्यत्वभ्रमवान् अपरः, इति रामानुजाचार्यप्रपञ्चनम् । विवक्षितायामेकस्यां हननक्रियायां हननकरणास्तित्वभ्रमवान् एकः जीवस्य हननकर्मत्वभ्रमवान् अपरः इत्युक्ते कारकान्तराणां अधिकरणादीनां संभावितानां विद्यमानत्वेन तदुपेक्षया कारकद्वयमात्रग्रहणे को हेतुः? ।

देवदत्तो यज्ञदत्तं हन्ति इत्यत्र देवदत्तं कर्तारं यो जानाति स एकः यज्ञदत्तं कर्मत्वेन यो जानाति स अपरः । कर्तृत्वभ्रमवान् कर्मत्वभ्रमवानित्युभौ विवक्षितावित्यद्वैतव्याख्यातारः ॥ यथोक्तं कठवल्ल्याम् । "हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् । उभौ तौ न विजानीतो नायं हन्ति न हन्यते" इति ॥ श्रुतौ हि हन्ता एकः हतः अन्यः । तावेव ह्युभाविति निर्दिष्टौ ॥ एवमत्रापीति श्रुतिगीतयोस्सर्वथा समानार्थकत्वं वदन्ति ॥ इदं चानुपपन्नम् । हननक्रियायां एकस्यां कर्तृत्वकर्मत्वापेक्षया यदि द्वित्वविधानम् तर्हि करणाधिकरणयोश्च प्रसक्तिसंभवात् भ्रान्तबहुत्वमपि वक्तव्यमापद्येत । मधुसूदनस्त्विमं दोषं किञ्चिदालक्ष्य समाधत्ते । "य एनं वेत्ति हन्तारं

हतश्चेत्येतावति वक्तव्ये पदानामावृत्तिर्वाक्यालंकारार्था" इति ॥ उभाविलस्य प्रयोजनमनेनोक्तं नीरसम्। या तु श्रुतिरुदाहृता संवादत्वेन तत्र वक्तव्यम् ॥ न ऋचा गीतोक्तं द्वित्वमधिगतं भवतीति॥ श्रुतिगीतयोः प्रथमार्धे पाठभेदेनार्थभेदस्य स्फुटत्वात्। श्रुतौ हि हन्तृहतयोः परामर्शः स्यान्नाम। गीतायान्तु 'योवेत्ति' 'योमन्यते' इति हन्तृहतोभयभिन्नयोः पुरुषयोः परामर्शः कृतः। एवं क्रियैक्यविवक्षायां उभाविलस्यानुपपत्तिं पश्यन्दन्यथापि योजयति मधुसूदनः॥

"आत्मनः कर्तृत्वं यो जानाति स एकस्तार्किकः आत्मनो विनाश्यत्वं यो जानाति चार्वाक अपरः" इति॥ तार्किकाभ्युपगतस्वतन्त्रकर्तृता ज्ञानस्यैव भ्रमत्वात् कर्तृत्वं इति स्थाने स्वतन्त्रकर्तृत्वं इति पठितं चेत् व्याख्यानं निर्दुष्टम्भवति॥

देवदत्तो यज्ञदत्तं हन्तीत्यत्र एनं देवदत्तं हन्तारं स्वातन्त्र्येण हननादिकर्तारं यज्ञदत्तं हतम् स्वातन्त्र्येण हननकर्मीभूतश्च यो जानाति सः जीवस्वातन्त्र्यधीमान् चैत्र एकः। एवं हननेन देवदत्तं यज्ञदत्तात्मघातकं यज्ञदत्तस्य आत्मानं ध्वस्तं च यो जानाति सः जीवानित्यत्वभ्रमवान् विष्णुमित्रः अपरः। तथाच चैत्रविष्णुमित्रावुभावित्याचार्याशयः। एवं भ्रमद्वित्वपरिष्कारे ईश्वरस्वातन्त्र्यम् जीवपारतन्त्र्यञ्च निरूपिते भवतः॥ ईश्वरस्य प्रसक्तिं संगतिं वा नात्र पश्याम इति परे वदेयुः॥ वस्तुतस्तु नैतच्छङ्कावकाशः। अविनाशी'ति चतुर्विधनाशरहितईश्वरः प्रसक्तएव॥ 'येन सर्वं ततम्'। अविनाशी' 'अप्रमेय' इति विशेषणैः विष्णोः प्रसक्तत्वात्॥ अन्तवद्देहवत्वाद्दुःखवत्वाच्च जीवः परतन्त्र इत्युक्तम्। ईश्वरपूजात्वेन मुक्त्यर्थं योद्धव्यमित्यपि सूचितम्। जीवस्वातन्त्र्यं भ्रान्तिविषयभूतम् 'यावदेतान्निरीक्षेऽहम्' कैर्मया सह योद्धव्यं' इत्याद्यर्जुनवाक्यैः प्रतीतमभूत्। अर्जुनस्य स्वातन्त्र्येण

हन्तृत्वं भीष्मादीनां तथा हतत्वं नास्तीति बोधनाय ईश्वरस्वातन्त्र्यं निरूपयितव्यमभवत् ॥ अत्रार्थे भागवते एकादशस्कन्धे षोडशाध्यायः पठनीयः ॥ अनेन ज्ञायते य एनमिति श्लोकस्य प्रपञ्चनरूपो गीतायां विभूत्यध्याय इति ख्यातो दशमाध्याय इति ॥ भागवते एकादशस्कन्धे षोडशाध्याये भगवद्विभूतिं निरूपयति भगवान् ॥ अर्थतः बहुशश्शब्दतश्च साम्यं दृश्यते ॥ भागवते षोडशे सप्तमादि श्लोकाः—

"ज्ञात्वा ज्ञातिवधं गर्ह्यमधर्मं राज्यहेतुकम् । ततो निवृत्तो हन्ताहं हतोयमिति लौकिकः । स तदा पुरुषव्याघ्रो युक्त्या मे प्रतिबोधितः" इति। कया युक्त्या प्रतिबोधितः इति युक्तिप्रकारनिरूपणावसरे उद्धवाय स्वविभूतिरूपाण्युपदिष्टानि भगवता ॥ यथा—"ब्रह्मण्यानां बलिरहं वीराणामहमर्जुन" इत्यादिभिः श्लोकैः ॥ अत्र लौकिकः पुरुषव्याघ्र इत्यर्जुनस्य परामर्शः । हन्तायं हतोयं इति गीताप्रथमाध्यायोक्तार्जुनवचांसि स्वातन्त्र्यभ्रमप्रतिपादकानि परामृष्टानि । गीतायां दशमाध्यायेन स्वविभूतिप्रपञ्चकेन प्रतिबोधनं कृतमित्युक्त्वा तमेव पुनरुद्धवाय विभूत्युपदेशं कृतवान् ॥ एतेन हन्ता हत इति भ्रमः भगवत्सर्वोत्तमत्वज्ञानेन बाध्यते इति ज्ञायते ॥ गीतायां प्रकृतश्लोकदशमाध्याययोः प्रपंच्यप्रपञ्चकभावो व्यवहितत्वेन हेतुना न स्फुटं भायात् । भागवतेत्वेकस्मिन्नेवाध्याये हन्तृत्वहन्तव्यत्वभ्रमनिरासो विभूतिनिरूपणेन कृत इत्युक्त्वा तदेव निरूपणं पुनः कृतवानित्यतो न विद्यते शंकावकाशः । तस्माज्जीवस्वातन्त्र्यज्ञानी एकः जीवानित्यत्वज्ञानी अपर इति भगवत्पादीयद्वित्वपरिष्कार एव साधुः ॥

श्रीमध्वव्याख्यानमनूद्य वेंकटनाथस्तु तन्निराह । "स्वातन्त्र्येणेतिप्रतीतिश्चाप्रामाणिकी अध्याहारक्लेशदुष्टत्वात् । नायं हन्ति न हन्यते इति वाक्यशेषे इदं शब्देन प्रकृतमात्मानं परामृश्य तस्यैव हन्तृत्वहन्तव्यत्वनिषेधाच्च ॥ हन्तृताया इव हन्तव्यताया अपि जीवपरमेश्वराधीनत्वेन न हन्तीतिवन्न हन्यते

इत्यपि स्वातन्त्र्येण हन्तव्यत्वनिषेधपरं वस्तुतस्तु हन्तव्य एवेत्यपि सुवचत्वाच्च"। इति।

इदं दूषणमनुपपन्नम्॥ उपपत्तीनामुक्तत्वेन किञ्चिदध्याहारस्याभ्युपगमेपि न बाधकम्॥ अन्यथा उभावित्यस्य सार्थक्यं दुर्गमं भवति॥ हन्तव्यत्वेपि जीवो न स्वतन्त्र एव॥ नायं हन्ति न हन्यते इत्यनेन न केवलं हन्तृत्वे पारतन्त्र्यम् गम्यते अपि तु हन्तव्यत्वेपि॥ वस्तुतस्तु ईश्वराधीनस्सन् जीवः हन्ता हन्तव्यश्च॥ हननं नामात्र न स्वरूपध्वंसः किन्तु देहवियोगः॥ न हन्ति न हन्यते इत्यत्र हननशब्देन यदा स्वरूपध्वंसो विवक्षितः तदा आत्मानित्यत्वं प्रतिषिद्धं इति ज्ञेयम्॥ अतो वेंकटनाथोक्तं दूषणं न लग्नं भवति॥ अथ स्वाभिमतत्वेन यद्वेंकटनाथीये व्याख्यातं तद्विचार्यते॥ प्रकृतं गीतापद्यं देहात्मवादभूतं चार्वाकमतं निरस्यतीति तस्याशयः। जीवात्मनः प्रत्यक्षानुमानागोचरत्वेन श्रुत्येकगम्यत्वात् काटकोपनिषदि देहात्मवादं पुरोधाय नचिकेतसः तृतीयप्रश्नस्य 'हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतं' इत्यादयो मन्त्राः आत्मास्तित्वप्रसाधनाय प्रवृत्ता इत्यादाय गीतापद्यं च काटकमन्त्रसमानार्थकमित्ययं व्याख्यातवान्॥ अत्रोच्यते॥ अस्मिन्व्याख्याने भ्रमत्रयं सुगमम्॥

जीवस्य प्रत्यक्षावेद्यत्वं प्रथमो भ्रमः॥ वस्तुतस्त्वस्याहमिति प्रत्यक्षवेद्यत्वात्। अहं इति प्रत्यक्षे अध्यासाधिष्ठानत्वेनात्मा भासते इत्यद्वैतसिद्धान्तश्चावगम्यते। 'चेष्टालिंगत्वेन सात्मत्वे' इत्युक्तरीत्याऽनुमेयश्च जीवः। अतः क्लेशाद्यदात्मनः प्रत्यक्षाद्यवेद्यत्वमुपपादयत्ययं तन्न प्रत्याययति॥

उपनिषदि आत्मास्तित्वविषयो नचिकेतसस्तृतीयः प्रश्नः इति द्वितीयोस्य भ्रमः। वस्तुतस्तु मृत्युनचिकेतस्संवादे मुक्तस्थितो भगवान् विषयः प्रश्नस्य॥ अनेन हि यमं प्रति स्वपितृप्रसादः प्रथमं वृतः, अग्निविशेषविद्या द्वितीयं वृता॥

"येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके॥ एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेषवरस्तृतीयः" इति हि तृतीयः प्रश्नः॥ अस्य भावो न ज्ञातः परैः॥ नचिकेतानाम श्रद्धालुर्ज्ञायते॥ श्रद्धाविवेशेति श्रुत्युक्तेः॥ "पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः। अनन्दानाम ते लोकास्तान् स गच्छति ताददत्" इत्यस्य वचनेनायमनुपयुक्तगोदानेन नरकप्राप्तिं व्यजानादिति ज्ञायते॥ "सस्यमिव मर्त्यः पच्यते सस्यमिवाजायते पुनः" इत्यस्य वचसापि पुनर्जन्म मर्त्यस्य ज्ञातवानित्यवगम्यते॥ भूमौ देहं त्यक्त्वा यमसदनं प्राप्य यमेन सह विचारे क्रियमाणे सति जीवस्य देहेन सहध्वंसोवोतास्तित्वं वेति सन्देहः स्वानुभूतिविरुद्धः॥ अतआह श्रीमदाचार्यः। "नचमृत्वा यमं प्राप्तस्य नचिकेतसो मृतोऽस्ति वा न वा इति संशयोऽस्ति" इति॥ किञ्च स्वर्गप्रशंसापूर्वं द्वितीयं वरं नचिकेता वृणुते। स्वर्गप्राप्तिज्ञानवतः कुतस्सम्भवति चार्वाकालंबि प्रश्नः॥

किंच मृत्युनचिकेतस्संवादकथा कृष्णयजुर्वेदगततैत्तरीयब्राह्मणेप्यस्ति। तत्रेत्थं दृश्यते। "तृतीय वृणीष्वेति॥ पुनर्मृत्योर्मेऽपचितिं ब्रूहीतिहोवाच"। इति॥ एतेन प्रश्नः जन्ममरणातितरणात्मकमोक्षविषय इति स्फुटं ज्ञायते॥ ब्रह्ममीमांसायां (१-४-७) "त्रयाणामेव चैवमुपन्यासः प्रश्नश्च"। इत्यनेन कटवल्ली प्रश्नोत्तरभावो निर्णीतः। तृतीयेन प्रश्नेन मोक्षे पृष्टे सति तदुपदेशयोग्यतां परीक्ष्य यम उपदिदेश "तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। आध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" इति॥ तस्मात्तृतीयप्रश्नस्यार्थानवगममूलं हन्ताचेन्मन्यते हन्तुमित्यादि मन्त्रापव्याख्यानम्॥ हन्ताचेदिति कटवल्लीमन्त्रः श्रीकृष्णेनेहार्थतोऽनूदित इत्यपि भ्रमएव॥ पाठभेदस्य प्रदर्शितत्वात्। उभौ इत्यनेनोपनिषदि ययोः परामर्शः न तयोर्गीतायामिति प्रतिपादितं द्रष्टव्यम्॥ शंकरभाष्येपि देहात्मवादस्य निराकरणमिह गीताश्लोके कृतमिति न व्याख्यातम्॥ वेंकटनाथस्तु स्वाचार्यभाष्यं

'पण्डितैरविनयः क्षन्तव्यः' इति पीटिकां आरचय्य निराह ॥ "तथापि 'विनाशमव्ययस्यास्य न कश्चित् कर्तुमर्हति' इति पूर्वश्लोकएवात्मनो हन्तृहन्तव्यत्वाभावोक्तेः, 'कथं स पुरुषः पार्थ कं घातयति हन्ति कम्' इत्युत्तरश्लोके च, षड्भावविकारराहित्यहेतुकस्यात्मनो हन्तृहन्तव्यभावाभावस्य स्पष्टमुक्तत्वेनात्रापि प्रतिपादने प्रयोजनाभावात्" इति स्वाचार्यभाष्यमप्युपेक्ष्य स्वोत्प्रेक्षामूलं यच्चार्वाकमतनिरासपरतया व्याख्यातं तदसङ्गतं भाति ॥

मधुसूदनव्याख्याने किञ्चिद्वक्तव्यमवशिष्टमस्ति ॥ मधुसूदनीयमनूद्य तन्निराहोत्कर्षदीपिकाकारः ॥ सौकर्याय किञ्चित्पठ्यते ॥ "यत्तु 'नन्वेवमशोच्यानित्यादिना बन्धुविच्छेदनिबन्धने शोके अपनीतेपि तद्वधकर्तृत्वनिबन्धनपापस्य नास्ति प्रतीकारः। शोकाविषयेपि द्वेष्यब्राह्मणवधे पापस्य सत्वात्॥ अतः कर्तुर्मम प्रेरकस्य तव च हिंसानिमित्तपापापत्तेरित्ययुक्तमिदं वचनं तस्मादित्यादि इत्याशंकां काटकपठितयर्चा परिहरति। य इति' इति तद्विचार्यम्। ऋचि हन्त्रादेः पापं न जायते इति परिहारस्यानुक्तेः वधनिबन्धनबन्धुविच्छेदस्यात्मनित्यत्वप्रतिपादकपूर्वग्रन्थेन नाशाभावोक्त्या प्रतिषिद्धत्वेन तन्निबन्धनपापस्यापि निवारितत्वाच्छंकाया अनुत्थानात्" ॥ इति ॥ अन्येपि दोषास्सूचिताः ॥ विस्तरस्तु तत्रैव द्रष्टव्यः ॥

न जायते म्रियते वा कदाचिन्नायं
भूत्वा भविता वा न भूयः।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥ २० ॥

वि० यदुक्तं जीवेश्वरयोरुत्पत्तिविनाशराहित्यं ईश्वरस्य देहतोप्युत्पत्त्यभावेन स्वातन्त्र्यं जीवस्य स्वरूपतो जन्मादिशून्यस्यापि देहोत्पत्त्यादिनाऽस्वातन्त्र्यं, तेष्वर्थेषु प्रमाणत्वेन मन्त्रवर्णमुदाहरति। न जायते इति। तथाहि जीवविषये तावदियं योजना। अयं जीवः स्वरूपेण न जायते न म्रियते न नश्यति च। वा शब्दश्चशब्दार्थः। अग्रेतननत्रोनुकर्षः। जीवो न जायते चेत्तर्हि यथेश्वरज्ञानं वृद्धिह्रासविवर्जितं भूत्वैव कयाचिदचिन्त्यशक्त्याभूतमिव व्यवहारावलंबनं भवति। तदैक्षतेत्यादिश्रुतेः। तथा जीवेपि किं जननव्यवहारस्तन्निमित्त इत्यतो नेत्युच्यते ॥ अयं जीवः स्वरूपेण भूत्वा कयाचिद्विवक्षया ईश्वरज्ञानवद्भविता न भवति। कुतो न जायते न म्रियतेवेति स्वरूपोत्पत्तिविनाशाभावो जीवस्येत्यत उक्तं अजोनित्यः शाश्वत इति। स्वरूपोत्पत्तिविनाशशून्यसदैकरूपभगवत्सरूपत्वादित्यर्थः। अतद्भावे सामानाधिकरण्यस्य सारूप्यगमकत्वात् अजनित्यपदाभ्यां बिंबोत्पत्तिविनाशाभावः शाश्वतपदेन बिंबोपाधिसन्निधि-

जन्मनाशाभावश्च हेतुरुक्तो भवति । ईश्वरज्ञानवद्भूत्वा भवितापि चेन्नजीवः तर्हि किन्निमित्तो जननव्यवहारो जीव इत्यत उक्तं । पुराण इति । पुराणिदेहानणानि । अणपणगतौ । गच्छति देहाद्देहान्तरं प्राप्नोतीति देहयोगनिमित्त इत्यर्थः । एवन्तर्ह्युपाधिभूतदेहनाशे नाशः स्यादित्यत आह । न हन्यत इति । अन्तवन्त इमे देहा इत्यत्रोक्तदिशा नित्योपाधेरन्यस्य भावात् एतच्छरीरनाशेपि न जीवनाश इति भावः ॥ ईश्वर-विषये तु पूर्वोत्तरार्धे ईश्वरजीवरूपविषयभेदेन योज्ये ॥ तथा हि । वा शब्दादेव पूर्वनञो म्रियतेवेत्यत्रानुकर्षस्य सिद्धेः नञन्तरवैयर्थ्यात् नायं भूत्वेत्यत्र श्रुतो नशब्दो ननञ् किंतु नृ शब्दः । तथा चायं ना परमपुरुषः न जायते न म्रियते देहयोगवियोगवान्न भवति, नित्यदेह एवेत्यर्थः । अत एव स्वरूपानाशः कैमुत्यसिद्धः ॥ देहोत्पत्तिविनाशयो-रप्यभावेन स्वातन्त्र्यमपि सिद्धमेवेति भावः । एवं चेत्कथं तर्हि रामकृष्णादिरूपेण जननव्यवहार इत्यतो भूत्वा राम-कृष्णादि रूपेण सर्वदा भूत्वैव कदाचिज्जनदृग्विषयत्वादि-रूपेण भूयः पुनर्भविता । न तु देहयोगेनापि भविता । (' किंतु निर्दोषचैतन्यसुखां नित्यां स्वकां तनुं प्रदर्शयति लोकस्य जनिरित्युच्यते हरे' रिति तत्वनिर्णयोक्तेः ।) अयं जीवोप्यजो नित्यश्च ॥ ईश्वरस्येव जीवस्याप्यनादिनित्यत्वे स्वातन्त्र्यस्यापि प्राप्तेः ईश्वरादविशेषः स्यादित्यत उक्तं ।

शाश्वतइति । सदैकरूपः अनाद्यनन्तकालमन्यत्वागन्तुकत्वा-
दिस्वभावइत्यर्थः । कुतस्तदित्यत उक्तं । पुराणइति ॥
अनिच्छयापि देहाद्देहान्तरप्राप्तिमत्त्वादिति हेतुगर्भविशेषण-
मिदं ॥ न हि तादृशस्य स्वातन्त्र्यसंभावनापीति भावः ।
एतावान्गुण इत्याह । न हन्यते हन्यमाने शरीरइति ॥

शं० कथं अविक्रियः आत्मेति ? द्वितीयो मन्त्रः । न
जायते न उत्पद्यते जनिलक्षणावस्तुविक्रिया न आत्मनो
विद्यते इत्यर्थः । तथा न म्रियते वा । वाशब्दः चार्थे । न म्रि-
यते च इति अन्त्या विनाशलक्षणा विक्रिया प्रतिषिध्यते ।
कदाचिच्छब्दः सर्वविक्रियाप्रतिषेधैः संबध्यते न कदाचि-
ज्जायते, नकदाचिन्म्रियते. इत्येवम । यस्मात् अयं आत्मा
भूत्वा भवनक्रियां अनुभूय पश्चात अभविता अभावं गन्ता न
भूयः पुनः तस्मात् न म्रियते ॥ यो हि भूत्वा न भवति स
म्रियते इति उच्यते लोके । वाशब्दात् नशब्दाच्च अयं आत्मा
अभूत्वावा भविता देहवत न भूयः । तस्मात् न जायते ।
यो हि अभूत्वाभविता स जायते इति उच्यते । नैवं आत्मा ।
अतो न जायते । यस्मात् एवं तस्मात् अजः । यस्मात न
म्रियते तस्मात् नित्यश्च । यद्यपि आद्यन्त्ययोः विक्रिययोः
प्रतिषेधे सर्वाविक्रियाः प्रतिषिद्धाः भवन्ति, तथापि मध्य-
भाविनीनां विक्रियाणां स्वशब्दैरेव प्रतिषेधः कर्तव्यः
इत्याह । शाश्वत इति । अनुक्तानामपि गमनादिसमस्त-

विक्रियाणां प्रतिषेधो यथा स्यात् इति । शाश्वतइति अपक्षयलक्षणा विक्रिया प्रतिषिध्यते । शश्वद्भवः शाश्वतः । न अपक्षीयते स्वरूपेण निरवयवत्वात् । निर्गुणत्वाच्च नापि गुणक्षयेण अपक्षयः । अपक्षयविपरीतापि वृद्धिलक्षणा विक्रिया प्रतिषिध्यते पुराणः इति । यो हि अवयवागमेन उपचीयते स वर्धते, अभिनवइति च उच्यते ॥ अयं तु आत्मा निरवयवत्वात् पुरापि नव एवेति पुराणः; न वर्धते इत्यर्थः ॥ तथा न हन्यते न विपरिणम्यते हन्यमाने विपरिणम्यमानेऽपि शरीरे । हन्तिः अत्र विपरिणामार्थे द्रष्टव्यः अपुनरुक्ततायै । न विपरिणम्यत इत्यर्थः । अस्मिन्मन्त्रे षड्भावविकाराः लौकिकवस्तुविक्रियाआत्मानि प्रतिषिध्यन्ते। सर्वप्रकारविक्रियारहितः आत्माइति वाक्यार्थः ॥ यस्मादेवं तस्मात् 'उभौ तौ न विजानीतः' इति पूर्वेण मन्त्रेण अस्य संबन्धः ॥ २० ॥

रा० उक्तैरेवहेतुभिर्नित्यत्वेनापरिणामित्वादात्मनोजनन-मरणादयः सर्वएवाचेतनदेहधर्मा न सन्तीत्युच्यते । तत्र 'न जायते म्रियते' इति वर्तमानतया सर्वेषु सर्वैरनुभूय-माने जननमरणे कदाचिदप्यात्मानं न स्पृशतः। 'नायं भूत्वा भविता वा न भूयः'। अयं कल्पादौ भूत्वा भूयः कल्पान्ते च न न भविता । केषुचित्प्रजापतिप्रभृतिदेहेष्वागमेनो-पलभ्यमानं कल्पादौ जननं कल्पान्ते च मरणमात्मानं न

२. अयं भूत्वा न भविता न। नाशो निषिद्धः ॥ (शं).

३. अयं कल्पादौ भूत्वा भूयः कल्पान्ते न भविता विनष्टः न॥ कल्पाद्यन्तयोः कालयोरपि विद्यमानत्वमुच्यते॥ इति (रा०).

४. प्रथमनञः म्रियत इत्यनेन योगमुक्त्वा अयम् भूत्वा भूयः पुनः भविता अस्तित्ववान् न इति शंकरानन्दः॥ भूत्वा भवनं निषिध्यते इति॥

५. सर्वाज्ञाचार्यस्तु भूत्वा भवनं निषिध्यते इत्यंगीकृत्य व्याचष्टे॥ यथा भूत्वैव विद्यमानमेव कयाचिदचिन्त्यशक्त्या भूतमिव व्यवहारालम्बनं भवति ईश्वरज्ञानं वृद्धिह्रासहीनं न तथा जीव इति। (ईश्वरज्ञानस्य सदैकरूपत्वेपि तदैक्षतेति व्यवहारः अचिन्त्याद्भुतशक्तिनिर्वाह्यः॥ जीवस्य उत्पत्तिविनाशव्यवहारस्तु न तथा निर्वाह्यः, किन्तु देहयोगवियोगाख्यापूर्वदर्शननिर्वाह्यः। इति॥)

ननु शंकररामानुजार्थं विहायान्यथा व्याख्याने किं प्रयोजनं इति चेन्न। यद्रामानुजाचार्यव्याख्यानं कल्पविवक्षया प्रवृत्तमिदं वाक्यमिति तच्चिन्त्यम्॥ न जायते म्रियते कदाचिदिति पदैः लटः सार्वकालीनत्वग्रहणेन च कल्पाद्यन्तकालयोरपि संग्रहस्य संभवात्। प्रत्येकं निषेधे हेतुर्न ज्ञायते॥ केषुचित्प्रजापतिप्रभृतिदेहेष्वागमेनोपलभ्यमानं कल्पादौ जननं कल्पान्ते मरणं आत्मानं न स्पृशतीति रामानुजवाक्यम्॥

"तत्तत्कालीनैः पुरुषैस्तेषु तेषु देहेषु जायते म्रियते इति वर्तमानतयैव हि जननमरणयोरनुभवः॥ अतस्तदपेक्षया वर्तमाननिर्देशोपपत्तिः। तेन कल्पाद्यन्तव्यतिरिक्तस्समस्तकालः कदाचिदिति सङ्गृहीतः" इति देशिकः। कदाचिदित्यस्य संकुचितार्थत्वे को हेतुः?॥

कल्पविवक्षामप्यनुक्त्वा यच्छाङ्करैर्व्याख्यातं जनिमृतिनिषेधपरमिदं वाक्यमिति तत्र पुनरुक्तिः स्फुटा। तैर्न जायते म्रियते इत्यस्य उपपादनमिदं

नायं भूत्वाभवितेति वाक्यमित्युक्तम् ॥ अभूत्वाभवनं हि जनिः भूत्वा अभवनं हि मृतिः इति सारस्वतोपपादनाय श्रुतिपर्यन्तमनुधावन वृथाश्रमो भाति ॥ न जायते म्रियते इति प्रतिज्ञा नायं भूत्वाभवितात्मत्वम् इत्युपपादनम् । अजोनित्य इत्युपसंहारः इति विभाग इत्याह मधुसूदनः ॥ अस्मिन्नस्वरसादेतद्व्याख्यानमनृत्य स्वयमन्यथा व्याख्याय केचिदिदमनङ्गीकार-माह नीलकण्ठः ॥

तस्मादिदं नायं भूत्वेति वाक्यं न जायते म्रियते इत्यनेन यथा न गतार्थं स्यात्तथा व्याख्येयम् । गतार्थतां परिहृत्य व्याख्यातं उभतौ शंकरानन्दनीलकण्ठौ ॥ नेति शब्दं म्रियते इत्यनेन योजयित्वा भूत्वाभविता-नेति योजनामङ्गीकृत्य षड्भावविकारेष्वस्तित्वविकारमात्मनो निषेधतीति शङ्करानन्दः । अयम् निषेधोऽप्रामाणिकः ॥

इमामेव योजनां स्वीकृत्य नीलकण्ठो ब्रूते । "क्षणिकविज्ञानवादि-नोहि विज्ञानधारामनादिनित्यामङ्गीकृत्य विज्ञानप्रपञ्चस्य प्रतिक्षणं भूत्वैव भवनं वदन्ति । आर्हताः शरीरपरिमाणमात्मानमभ्युपगच्छन्तो नित्यस्यैवा-त्मनः क्रमेण व्युत्क्रमेणवा मशकमनुजमतङ्गजशरीरप्राप्तौ परिमाणभेदं मन्य-माना भूतस्यैवात्मनो विशेषणीभूतपरिमाणभवनादौपचारिकं भवनमभ्युप-गच्छन्ति ॥ तदुभयनिषेधाय भूत्वाभविता नेत्युक्तम् । अनेनैव सुखदुःखादि-धर्मान्तरोत्पत्त्यात्मनो भाक्तं भूत्वाभवनं प्रत्याख्येयं" इति ।

विज्ञानवाद्यार्हतादिनिराकरणे नास्माकमनिष्टम् । देहयोगवियोगादिभिः सुखदुःखप्राप्तिर्यदि निषिध्यते तदप्रामाणिकमित्याचार्यः ॥ यद्यपि जीवो न जायते न म्रियते । एवंचेदीश्वरवत् स्वातन्त्र्यं प्राप्तम् इत्युत्थिताकांक्षानि-वृत्त्यर्थं 'अयं भूत्वा भविता न' इति वाक्यं प्रवृत्तम् ॥ जीवः ईश्वरज्ञानवत्स । परन्तु देहविवक्षया वृद्धिह्रासास्कन्दितएवेति बोधयितुमित्याचार्याशयः ।

तथाच ॥ केवलं जीवपरः श्लोक इति रामानुजाचार्यः ॥ अचेतनधर्माणामात्मन्यभावं वक्तीति मन्यते। परब्रह्मपरः श्लोक इत्यद्वैतव्याख्यातारः। जायतेऽस्ति वर्धते विपरिणमतेऽपक्षीयते विनश्यतीति यास्कपठिताष्षड्भावविकाराः आत्मनि निषिध्यन्तइति वदन्ति॥ अत्र केन पदेन को विकारो निषिध्यते, प्रसक्तेषु षट्सु सर्वेऽपि विकाराः प्रत्येकं कण्ठोक्त्या निषिद्धा वा, इत्यत्र व्याख्यातृष्वस्ति भावभेदः। तथापि समान्याकारेण तेषामाशयएवं ज्ञायते। न जायते अज इति जनिनिषेधः कृतः॥ न म्रियते नित्यः इत्यान्तिमस्य नाशाख्यस्य॥ पुराणः पुरापि नवः इति तृतीयो वृद्ध्याख्यो निषिद्धः। न हन्यते इत्युपलक्षणया परिणामसामान्यस्य निषेधः। शाश्वत इति निरवयवत्वेन निर्गुणत्वेन च स्वरूपतो गुणतश्चापक्षयो निषिद्धः। अस्तित्वनिषेध एतेष्वन्तर्भूत इति मधुसूदनः॥

भूत्वा जनिं प्राप्य भूयः पुनः भविता न अस्तित्ववान्न भवति इति अस्तित्वाख्य.द्वितीयो विकारो निषिद्ध इति शङ्करानन्दः॥ एवं षड्भावविकाराः न सन्त्यात्मनीत्याविक्रियत्वं पूर्वश्लोकोक्तं प्रपश्चितं प्रकृतमन्त्रेणेत्याहुः॥ आत्मा न जायते अभूत्वा भवनस्याभावात्। ततः अजः। न म्रियते भूत्वा अभवनस्याभावात्। ततः नित्यः। इति क्रमेण प्रतिज्ञा उपपादनम् उपसंहार इति विभज्य सार्थक्यमाहुः॥ एतेषां त्रयाणां परस्परं भेदो न ज्ञायते। पर्यायशब्दास्तावत् कुतस्त्रिधा प्रत्युक्ता इति निरूपणं न कृतं भाति॥ अजो नित्य इति निगमनमनङ्गीकृत्याजत्वनित्यत्वयोर्हेतुत्वमुक्तं नीलकण्ठेन॥ अजत्वान्न जायते नित्यत्वान्न म्रियते इति॥ अत्रापि साध्याविशिष्टता दुष्परिहरा॥

प्रकृतश्लोकपूर्वश्लोकाभ्यां षड्भावविकारराहित्यं निरूपितमात्मनः इति यच्छङ्करभाष्यं तत्प्रत्याख्यातं वेंकटनाथेन॥ गीतायां 'विनाशमव्ययस्य' 'कथं स पुरुषः' इति पूर्वोत्तरप्रकरणयोष्षड्भावविकारराहित्यस्य स्पष्टमुक्-

त्वेनेह तन्निरूपणे प्रयोजनं नास्तीत्युक्तत्वात् । आह "कठवल्लीषु च देहात्मवादनिरासार्थत्वेनैव न जायते इति मन्त्रस्य प्रवृत्तत्वात् । 'त्रयाणामेव चैवमुपन्यासः प्रश्नश्च' इति ब्रह्ममीमांसासूत्रभाष्ये न जायते इति मन्त्रस्य देहातिरिक्तात्मप्रतिपादकत्वेन भगवत्पादैर्निरूपणात् अत्रापि तथैवाऽस्योक्तरीत्या सामंजस्यात् न जायते म्रियते वा इत्यादावन्तविकारनिषेधेनैव षड्भावविकारराहित्यपरत्वव्याख्यानस्य नातिप्रयोजनत्वावगतेश्च देहातिरिक्तात्मप्रतिपादनस्वरसएवायं मन्त्रः इति स एवार्थोऽस्माभिर्व्याख्यात इति पण्डितैरविनयः क्षन्तव्यः" इति ॥

एतेन गीताशाङ्करभाष्यस्य शाङ्करकाठकशाङ्करशारीरकमीमांसाभाष्याभ्यां विरोधस्सम्यङ्निरूपितः । एवं शाङ्करव्याख्यानमनादृत्य यदनेन सर्वार्वाचीनत्वभ्रमेण स्वोत्प्रेक्षया व्याख्यानं तदपि मन्दम् । इदमनन्तरश्लोकव्याख्याने निरूपितं द्रष्टव्यम् ॥

श्रीमदाचार्यस्तु श्लोकौ जीवपरस्तथा ईश्वरपरौ इति व्याचष्टे ॥ जीवपरत्वे अयमर्थः । तथाहि ॥ न जायते न म्रियते इति द्वाभ्यां अनादित्वं नित्यत्वं चोक्ते ॥ ईश्वरसाम्यभ्रमं निवार्य ईश्वरज्ञानबद्धत्वेनैवाचिन्त्यशक्त्या भविता नेति स्वातन्त्र्यं प्रतिषिद्धम् ॥ द्वितीयार्धे अजनित्यशाश्वतशब्दाः पूर्वार्धोक्तप्रमेयाणां उपपत्तयः ॥ अजत्वात् नित्यत्वात् शाश्वतत्वात् इति ॥ अतद्भावे सामानाधिकरण्यं सारूप्यं गमयतीति न्यायात् अजनित्यशाश्वतेश्वरसरूपत्वात् इत्यर्थो लभ्यते ॥ सारूप्यहेतुकरणेन साध्याविशिष्टता परिहृता ॥ अज इत्यनेन बिंबोत्पत्तेरभावस्सूचितः ॥ नित्यइत्यनेन बिंबनाशराहित्यं सूचितम् ॥ शाश्वत इत्यनेन बिंबोपाधिसन्निधेरेकरूपत्वं सूचितम् । इति ज्ञेयम् ॥ एवमुक्ते सारूप्ये पुनरीश्वरसाम्यं शङ्क्यते ॥ तत्परिहाराय पुराण इति विशेषितम् ॥ देहाद्देहान्तरसञ्चारितया अनिच्छतो देहयोगः देहवियोगः दुःखप्राप्तिः इत्याद्यपूर्णता स्मारिता ॥ एवं जीवस्वरूपे

समर्थितं गुणदोषकथनावसरे न हन्यते हन्यमाने शरीरे इत्येतावानेव गुणः जीवे इत्युपसंहृतम् इति ॥

अथवा प्रथमार्धमीश्वरपरः ॥ भगवान्न जायते स्वरूपतो वा देहविवक्षया वा ॥ न म्रियते देहवियोगविवक्षया । मरणशब्दस्य देहवियोगे रूढत्वात् । किमुत स्वरूपतः ॥ जीववद्भूत्वैव पुनर्देहसंबन्धेन भवितृत्वं अस्य नास्तीत्ययं स्वतन्त्रः ॥ अस्मिन्नर्थे द्वितीयार्धो जीवपरः ॥ अयं जीवोऽपि अजः नित्यः ॥ परमात्मसाम्यभ्रमनिवारणाय शाश्वत इत्युक्तम् । सदा परतन्त्रः । कुतः पुराणत्वात् । अनिच्छया देहाद्देहान्तरं गन्तेत्यतः ॥ किंतर्ह्यवशिष्टम । हन्यमानेपि शरीरे न हन्यते इत्येतावन्मात्रं नित्यत्वम । तथाच भगवतः परमनित्यत्वम् । जीवस्यामुख्यनित्यत्वं चोक्तं भवतः ॥ शाश्वतशब्दार्थनिश्चयाय पश्यन्तु महाविष्णुपुराणे ॥ ('अल्पशक्तिरसार्वज्ञं पारतन्त्र्यमपूर्णता । उपजीवकत्वं जीवत्वं ईशत्वं तद्विपर्ययः । स्वाभाविकं तयोरेतन्नान्यथा स्यात् कथंचन ॥ वदन्ति शाश्वतावेतावत एव महाजनाः)" इति ॥

एवं प्रथमार्धे भगवान् प्रतिपाद्यः द्वितीयार्धे जीवः इति व्याख्यानात् पौनरुक्त्यं स्फुटं परिहृतं भवति । इति ॥

किंच गीताश्रुत्योस्संवादो द्रष्टव्यः ॥ तथाहि ॥ काटकेहि मन्त्रास्तु ।

II एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम ।
एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥ १६ ॥

एतदालंबनं श्रेष्ठमेतदालंबनं परम् ।
एतदालंबनं ज्ञात्वा ब्रह्मलोके महीयते ॥ १७ ॥

न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् ।
अजो नित्यः शाश्वतोयं पुराणो न हन्यते हन्यमाने शरीरे ॥१८॥

हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम्।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ १९॥

अणोरणीयान्महतोमहीयानात्मास्य जन्तोर्निहितो गुहायाम्।
तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः" इति॥२०॥)

अत्र प्रतिपाद्याः ब्रह्ममुक्तजीवसंसारिजीवाः ॥ अष्टादशे मन्त्रे नायं कुतश्चिदिति ब्रह्मणो देहाविवक्षया स्वरूपतश्च जनिमृती नस्तइत्युक्तम् ॥ विपश्चिन्न जायते म्रियत इति ज्ञानिनो मुक्तस्य देहतः स्वरूपतश्च जनिमृतिराहित्यमुक्तम्। 'कश्चित', 'पुराणः', इत्याभ्यां संसारिजीवस्य ग्रहणम्। तस्य पुराणत्वेऽपि देहोत्पत्तिनाशेऽपि अजत्वं नित्यत्वं शाश्वतत्वं चोक्तानि ॥ इदं स्वरूपापेक्षया ॥ निष्टंकितप्रतीत्यर्थं भगवत्पादाचार्यः प्रमाणमुदाहरति ॥ "(देहोत्पत्तिविनाशाभ्यां ज्ञानिनो युक्तवाभवौ। न कुतश्चिद्यतो विष्णुर्जायतेऽनस्तदीक्षणात् ॥ भावाभावौ न विदुषो यस्माज्जीवो न कश्चन ॥ जायते म्रियते वापि स्वरूपेण कथञ्चन ॥ अजो नित्योऽविकारश्च जीवः पुरमणन्नपि") इति ॥ तस्माद्ब्रह्मोत्कर्षं तदूनत्वेन मुक्तोत्कर्षम् तदूनत्वेन संसारिस्वभावं प्रतिपादयति श्रुतिः)( गीतायां मुक्तस्य न संगतिः)। अतो 'विपश्चिन्नाय कुतश्चिन्न बभूव कश्चित्' इति श्रुतिवाक्यं विहाय 'कदाचिन्नायंभूत्वा भविता वा नभूयः' इति तत्स्थाने पठितं गीतायाम् ॥ यथा श्रुतौ तथा गीतायां पूर्वार्धे ब्रह्मणः स्वरूपतो देहस्य च जनिमृतिराहित्यमुक्तम् ॥ द्वितीयार्धे संसारिजीवानां देहयोगवियोगयोः संभवेऽपि स्वरूपतः अजत्वं नित्यत्वं शाश्वतत्वं चोक्तानि ॥ एवं श्रुतिगीतयोर्यथासंभवं समानार्थकत्वं प्राप्तम्। ईश्वरस्य जीवस्य च जनिमृती एव प्रसक्ते इति देहापेक्षयापि नित्यत्वेन तस्य स्वातन्त्र्यं अस्य तु देहोत्पत्तिनाशसिद्धमस्वातन्त्र्यञ्च समर्थितं भवतः)( षड्भावविकाराणां तु न संगतिः श्रुतौ नापि गीतायां दृश्यते। श्लोकार्धेन ब्रह्मस्वरूपं उत्तरार्धेन

जीवस्वरूपं प्रतिपाद्यते इति व्याख्याने न केवलं श्रुतिसंवादस्संपादितः अपि तु अर्धयोः परस्परं गतार्थत्वं स्फुटं परिहृतं भवति ॥ पुराण इत्यस्य पुरं देहमणति गच्छतीत्याचार्यव्याख्यानम् । पुरापि नव इति परे । पुरापि नव इति व्याख्याने णत्वं वकारलोपश्च कथमिति चिन्त्यम् ॥ पुरापि नव इति व्याख्यानं [illegible] नित्यशाश्वतपदैरप्राप्तं कमर्थं प्रकाशयतीति न ज्ञायते ॥ तस्माद्गीतायामतीतैःश्लोकैर्ये प्रमेयविशेषाः प्रतिपादिताः जीवनित्यत्वजीवास्वातन्त्र्यईश्वरस्वातन्त्र्यादयः तेषामेव प्रमाणत्वेन मन्त्रवर्ण उदाहृत इति सिद्धम् ॥

---

**वेदाविनाशिनं नित्यं य एनमजमव्ययं ।**
**कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥ २१**

वि० य एनमिति श्लोके जीवचैतन्यस्य हननं वा हननक्रियास्वातन्त्र्यं वा मन्यमानो न जानातीत्यत्र जीवचितो बिंबोपाधिसन्निध्यनाशहेतुनित्यत्वप्रतिबिंबत्वहेतुकास्वातन्त्र्यरूपहेतू उक्तौ । यस्तु जीवचितोनित्यत्वं हरेः स्वातन्त्र्यं च जानाति स ज्ञानी । स्वातन्त्र्याभिमानाभावात् । हन्ताहमिति वा अस्यायं हन्तेति वा न जानातीत्यज्ञानेऽभिमानाभावोऽपरो हेतुरुच्यते ॥ वेदेति ॥ अविनाशिनं बिंबनाशादि- [illegible] भक्तनाशहान । मात्रास्पर्शाइत्यत्रोक्तदिशाऽभिमानकृत [illegible] स्वरागद्वेषसुखादिदा [illegible] नतु स्वत इति स्वतो दोषः [illegible] [illegible] दप्रयागानाशोऽत्र दोषो ध्येयः ।

नित्यं स्वाभाविकनाशहीनं। अजमुत्पत्तिहीनं। अव्ययं स्वरूपविकारशून्यं। एनं जीवं।

यद्वा अविनाशिनं नित्यं स्वरूपतो नाशहीनं अजं जन्म-हीनं अव्ययं निर्विकारं। अतएव सर्वस्वतन्त्रमेनमीश्वरं यो वेद जानाति स पुरुषो ज्ञानी कथं केन प्रकारेण कं घातयति कं वा हन्ति॥ घातयाम्येनमिति वा हन्म्येनमिति वा भावं न करोतीत्यर्थः॥ २१॥

श० 'य एनं वेत्ति हन्तारं' इत्यनेन मन्त्रेण हननक्रियायाः कर्ता कर्म च न भवति इति प्रतिज्ञाय 'न जायते' इत्यनेन अविक्रियत्वं हेतुं उक्त्वा प्रतिज्ञातार्थं उपसंहरति वेदाविनाशिनमिति। वेद विजानाति अविनाशिनं अन्त्य-भावविकाररहितं नित्यं विपरिणामरहितं यो वेद इति संबन्धः॥ एनं पूर्वेण मन्त्रेण उक्तलक्षणं अजं जन्मरहितं अव्ययं अपक्षयरहितं कथं केन प्रकारेण स विद्वान् पुरुषः अधिकृतः हन्ति हननक्रियां करोति। कथं वा घातयति हन्तारं प्रयोजयति। न कथंचित् कंचिद्धन्ति, न कथंचित्कंचिद्घातयति इति उभयत्र आक्षेप एवार्थः। प्रश्नार्थासंभवात्। हेत्वर्थस्य च तुल्यत्वात्। विदुषः सर्वकर्मप्रतिषेध एव प्रकरणार्थोऽभिप्रेतो भगवता॥ हन्तेस्तु आक्षेपः उदाहरणार्थत्वेन कथितः॥ विदुषः कं कर्मासंभवहेतुविशेषं

पश्यन् कर्माण्याक्षिपति भगवान् 'कथं स पुरुषः' इति । ननूक्तं आत्मनोऽविक्रियत्वं सर्वकर्मासंभवकारणविशेषः । सत्यम् उक्तं । न तु सः कारणविशेषः, अन्यत्वात् विदुषः अविक्रियादात्मनः इति । नहि अविक्रियं स्थाणुं विदितवतः कर्म न संभवति इति चेत्—न, विदुषः आत्मत्वात् ॥ न देहादिसंघातस्य विद्वत्ता । अतः पारिशेष्यात असंहतः आत्मा विद्वान् अविक्रियः इति तस्य विदुषः कर्मासंभवात् आक्षेपो युक्तः 'कथं स पुरुष' इति । यथा बुद्ध्याद्याहृतस्य शब्दाद्यर्थस्य अविक्रियएव सनबुद्धिवृत्त्यविवेकज्ञानेनाविद्ययोपलब्धात्मा कल्प्यते—एवमेवात्मानात्मविवेकज्ञानेन बुद्धिवृत्त्याऽविद्यया असत्यरूपयैव परमार्थतः अविक्रिय एव आत्मा विद्वानुच्यते । विदुषः कर्मासंभववचनात यानि कर्माणि शास्त्रेण विधीयन्ते तानि अविदुषो विहितानि इति भगवतो निश्चयोऽवगम्यते ॥ ननु विद्यापि अविदुष एव विधीयते । विदितविद्यस्य पिष्टपेषणवत् विद्याविधानानर्थक्यात् । तत्र अविदुषः कर्माणि विधीयन्ते न विदुषः इति विशेषो नोपपद्यते इति चेत् न ॥ अनुष्ठेयस्य भावाभावविशेषोपपत्तेः । अग्निहोत्रादिविध्यर्थज्ञानोत्तरकालं अग्निहोत्रादिकर्म अनेकसाधनोपसंहारपूर्वकं अनुष्ठेयं ॥ 'कर्ता अहं मम कर्तव्यं,' इत्येवंप्रकारविज्ञानवतः अविदुषः यथानुष्ठेयं भवति, न तु तथा 'न जायते' इत्याद्यात्मस्वरूपविध्यर्थज्ञानोत्तरकाल-

भावि किञ्चिदनुष्ठेयं भवति । किन्तु 'नाहं कर्ता, नाहं भोक्ता' इत्याद्यात्मैकत्वाकर्तृत्वादिविषयज्ञानात् नान्यदुत्पद्यते इति एष विशेष उपपद्यते। यः पुनः 'कर्ता अहं' इति वेत्ति आत्मानं तस्य मम 'इदं कर्तव्यं' इति अवश्यंभाविनी बुद्धिः स्यात् ॥ तदपेक्षया सः अधिक्रियते इति तं प्रति कर्माणि । स च अविद्वान् । 'उभौ तौ न विजानीतः' इति वचनात् । विशेषितस्य च विदुषः कर्माक्षेपवचनाच्च 'कथं स पुरुष' इति । तस्मात् विदुषः मुमुक्षोश्च सर्वकर्मसंन्यासएव अधिकारः । अतएव भगवान्बादरायणः सांख्यान्विदुषः अविदुषश्च कर्मिणः प्रविभज्य द्वे निष्ठे ग्राहयति 'ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनां' इति ॥ तथाच पुत्रायाह भगवान् व्यासः ॥ "द्वाविमावथपन्थानौ" इत्यादि ॥ तथाच क्रियापथश्चैव पुरस्तात्पश्चात् संन्यासश्चेति । एतमेव विभागं पुनः पुनः दर्शयिष्यति भगवान् 'अतत्ववित् अहंकारविमूढात्मा कर्ताहमिति मन्यते' ॥ 'तत्ववित्तु' 'नाहंकरोमि' इति । तथाच 'सर्वकर्माणि मनसा संन्यस्यास्ते' । इत्यादि ॥ तत्र केचित्पण्डितंमन्या वदन्ति । 'जन्मादिभावविक्रियारहितः अविक्रियः अकर्ता, एकः अहं आत्मा' इति न कस्यचित् ज्ञानं उत्पद्यते, यस्मिन्सति सर्वकर्मसंन्यासः उपदिश्यते इति । तन्न ॥ 'न जायते' इत्यादिशास्त्राचार्योपदेशानर्थक्यप्रसंगात् ।

यथाच शास्त्रोपदेशसामर्थ्यात् धर्माधर्मास्तित्वविज्ञानं कर्तुश्च देहान्तरसंबन्धविज्ञानं उत्पद्यते, तथा शास्त्रात् तस्यैवात्मनः अविक्रियाकर्तृत्वैकत्वादिविज्ञानं कस्मान्नो उपपद्यते इति प्रष्टव्यास्ते॥ करणागोचरत्वात् इति चेन्न॥ 'मनसैवानुद्रष्टव्यं' इति श्रुतेः॥ शास्त्राचार्योपदेशजनितशमदमादिसंस्कृतं मनः आत्मदर्शने करणम्। तथाच तदधिगमाय अनुमाने आगमे च सति ज्ञानं नोत्पद्यते इति साहसं एतत्॥ ज्ञानं च उत्पद्यमानं तद्विपरीतं अज्ञानं अवश्यं बाधते इति अभ्युपगन्तव्यं॥ तच्चाज्ञानं दर्शितं॥ 'हन्ता अहं हतः अस्मि' इति, 'उभौ तौ न विजानीतः' इति॥ अत्र च आत्मनः हननक्रियायाः कर्तृत्वं कर्मत्वं च अज्ञानकृतं दर्शितं। तच्च सर्वक्रियास्वपि समानं कर्तृत्वादेः अविद्याकृतत्वं॥ अविक्रियत्वादात्मनः। विक्रियावान् हि कर्ता आत्मनः कर्मभूतं अन्यं प्रयोजयति 'कुरु' इति। तदेतदविशेषेण विदुषः सर्वक्रियासु कर्तृत्वं हेतुकर्तृत्वं च प्रतिषेधति भगवान् वासुदेवः विदुषः कर्माधिकाराभावप्रदर्शनार्थं 'वेदाविनाशिनं—कथं स पुरुषः' इत्यादिना॥ क पुनः विदुषः अधिकार इत्येतदुक्तं पूर्वमेव 'ज्ञानयोगेन सांख्यानां' इति॥ तथाच सर्वकर्मसंन्यासं वक्ष्यति 'सर्वकर्माणि मनसा' इत्यादिना॥ ननु 'मनसा' इति वचनात् न वाचिकानां कायिकानां च संन्यास इतिचेन्न। सर्वकर्माणि इति विशेषि-

नत्वात। मानसानामेव सर्वकर्मणामिति चेन्न। मनोव्यापारपूर्वकत्वात् वाक्कायव्यापाराणां मनोव्यापाराभावे भावानुपपत्तेः॥ शास्त्रीयाणां वाक्कायकर्मणां कारणानि मानसानि कर्माणि वर्जयित्वा अन्यानि सर्वकर्माणि मनसा संन्यस्य आस्ते इति चेत्—न॥ "नैवकुर्वन्नकारयन्" इति विशेषणात्॥ सर्वकर्मसंन्यासः अयं भगवता उक्तः मरिष्यतः न जीवतः इति चेत् न—"नवद्वारेपुरेदेह आस्ते" इति विशेषणानुपपत्तेः॥ नहि सर्वकर्मसंन्यासेन मृतस्य तद्देहे आसनं संभवति। अकुर्वतः अकारयितुश्च देहे संन्यस्य इति संबन्धः। न देहे आस्ते इति चेत्—न॥ सर्वत्र आत्मनः अविक्रियत्वावधारणात्॥ आसनक्रियायाश्च अधिकरणापेक्षत्वात्। तदनपेक्षत्वाच्च संन्यासस्य॥ संपूर्वस्तु न्यासशब्दः अत्रत्यागार्थः। ननिक्षेपार्थः॥ तस्माद्गीताशास्त्रे आत्मज्ञानवतः संन्यासएव अधिकारः न कर्माणि इति तत्र तत्र उपरिष्टात् आत्मज्ञानप्रकरणे दर्शयिष्यामः॥

ग० एवमविनाशित्वेनाजत्वेन व्ययानर्हत्वेन च नित्यमेनमात्मानं यः पुरुषो वेद स पुरुषो देवमनुष्यातिर्यक्स्थावरशरीरावस्थितेष्वात्मसु कमप्यात्मानं कथं घातयति कं वा, कथं हन्ति कथं नाशयति॥ कथं वा तत्प्रयोजको भवतीत्यर्थः॥ एतानात्मनो घातयामि हन्मीत्यनुशोचनमात्मस्वरूपयाथात्म्याज्ञानमूलमेवेत्यभिप्रायः॥ २१॥

विचारः

अत्रानन्तर्यसंगतिः प्रथममालोच्या ॥ आत्मनित्यत्वं नेहानुक्तप्रमेय-तया विधीयते । किंतु नित्यत्वादिज्ञानवन्तमुद्दिश्य तस्यानुमन्ध्यानाविशेषः कथ्यते इति ज्ञेयम् ॥ य एनं वेत्तीति श्लोकेनोभयोरज्ञत्वमुक्तम् । जीवा-नित्यत्वज्ञानी एकः जीवस्वातन्त्र्यज्ञानी अपरः इति द्वौ प्रदर्शितौ । भ्रम-प्रकारमुक्त्वा प्रमाप्रकारं वदति वेदाविनाशिनमिति । भ्रमप्रकारमात्रं निरूप्य प्रमाप्रकारानिरूपणे उपदेशस्यापूर्तेः प्रमानिरूपणपूर्वकं ज्ञानिनो विशेष उच्यते ।

य एनं इत्यात्मनः कर्तृत्वं कर्मत्वं प्रतिषिध्य न जायते इत्यनेन तस्मिन्नर्थे षड्भावविकारराहित्यं हेतूकृत्य वेदाविनाशिनमित्युपसंहारः कृतः इति शङ्कराचार्यः ॥ नायं हन्ति न हन्यते इति प्रथमं प्रतिज्ञाय न जायते म्रियते इत्यनेन न हन्यते इत्युक्तहन्तव्यत्ववैधुर्यमुपपाद्य नायं हन्तीत्युक्तहन्तृत्वप्रतिषेध-मुपपादयति वेदाविनाशिनमित्यनेनेति मधुसूदनादयः ॥ अत्रेमे प्रष्टव्याः । किं न जायते इत्यत्रात्मनो हननक्रियाकर्मत्वमात्रं निरस्तम् । उत सर्वोऽपि विकारः ॥ जननास्तित्ववृद्धिपरिणामापक्षयनाशानामयोग्यत्वेन सर्वोऽपि विकारा न सं-भवन्तीति हि तैर्व्याख्यातम् । एतेन तोयाभ्यवहारासमर्थस्य शष्कुलीभक्षण-प्रार्थनावत् सर्वथा क्रियानर्हत्वप्रतिपादनेन हननकर्तृत्वं दूरोत्सारितं भवति । तस्मान्न हन्यते इति तावन्मात्रमुपपादितं न हन्तीति भागः शिष्टोभदुपपादना-पेक्षितयेति भावकल्पनं चिन्त्यम् ॥

कथं स पुरुषः पार्थ कं घातयति हन्ति कं इति ॥ अत्र सूरिभिः काठिन्यमालोच्यताम् । अयं ह्याक्षेपो न प्रश्न इत्यत्र न विवादः । प्रतिवचन-स्यादर्शनात् । कथं इति साधनं प्रकारश्चाक्षिप्येते । कं इति विषयः घात-यतीति प्रयोज्यश्चाक्षिप्तौ ॥ आक्षेपमहिम्ना न घातयति न हन्तीत्युत्तरं लभ्यते ॥ ज्ञानी न घातयति न हन्तीत्युक्त्या ज्ञानिनोऽज्ञात्कश्चिद्विशेषो विवक्षितः ॥

कोऽयं विशेषः। जीवस्य नित्यत्वात्तदुद्देश्यकघातयितृत्वं हननं वा न शक्यमितिभावः। यथा नित्यत्वाद्धेतोः ज्ञानिकर्तृकं हननादिकं अशक्यम्। तथा तत एव हेतोरज्ञानिकर्तृकमपि हननादिकं न शक्यमेव। तस्माज्ज्ञानी न घातयति न हन्ति अज्ञस्तु घातयति हन्ति इत्यर्थः कथमुपपद्यते इति। भाष्यकारास्तावदुपपत्ति बहुधा वदन्ति। अत्र रामानुजाचार्याशयः। घातयामि हन्मीति ज्ञानी न शोचति अज्ञस्तु शोचति। न घातयतीत्यनेन घातयामीति न शोचतीत्यर्थो बोध्यते तथा न हन्तीत्यनेन॥ हननं नामस्वरूपध्वंसो विवक्षितः इति॥

आहुरद्वैतव्याख्यातारः॥ नात्र हननक्रियाप्रतिषेधमात्रे तात्पर्यम्। प्रतिषेधहेतोस्तुल्यत्वात्कर्मान्तराभ्यनुज्ञानुपपत्तेः विदुषः सर्वकर्मप्रतिषेधएव प्रकरणार्थोऽभिप्रेतो भगवता॥ हन्तेस्त्वाक्षेपउदाहरणार्थत्वेन कथितः॥ विदुषः कर्मासंभववचनाद्यानि कर्माणि शास्त्रेण विधीयन्ते तान्यविदुषो विहितानि इति भगवतो निश्चयोऽवगम्यते। विदुषो मुमुक्षोश्च सर्वकर्मसंन्यासएवाधिकारः। सर्वाणि शास्त्राण्यविद्वदधिकारिकाणि॥ विद्वांस्तु समूलाध्यासबाधात्नात्मनि कर्तृत्वादिकमभिमन्यते। 'यत्रत्वस्य सर्वमात्मैवाभूत्तत्केनकं पश्येत्' इत्यादिश्रुतयः सर्वकारकव्यापारं विद्यावस्थायां निषेधन्ति। 'यत्रहि द्वैतमिव भवति तदितरइतरं पश्यति" इत्यादयोऽविद्यावस्थायां सर्वकारकव्यवहारं दर्शयन्ति। एतेन सर्वकारकोपमर्दिन्याः विद्यायास्सर्वकर्मसापेक्षैस्सह समुच्चयो निरस्तः। परस्परविरुद्धस्वभावत्वेन शीतोष्णयोरिव द्वयोरेककार्यकारित्वस्य रथाश्वन्यायेनासंभवात् इति॥

"घातयतीति कारयितृत्वबोधकप्रयोगस्यैवं भावः। अर्जुनो हि स्वस्मिन् कर्तृत्वं भगवति श्रीकृष्णे कारयितृत्वमध्यस्य हिंसानिमित्तदोषमुभयत्राप्याशशङ्के। भगवानपि विदिताभिप्रायो हन्ति घातयतीति तदुभय-

माचिक्षेप । स्वस्मिन् कर्तृत्वं मयि कारयितृत्वमारोप्य शङ्कां माकार्षीरित्यभिप्रायः" इति मधुसूदनः ॥

"मादृशानां व्युत्थानकाले अविद्यालेशानुवृत्त्या घातयितृत्वादेः प्रसक्तावपि विद्यया तस्य बाधितत्वादागामिकर्मणामश्लेषान्न दोषः" इति नीलकण्ठः ॥

अत्र हि ज्ञानकर्मणोर्विरुद्धस्वभावत्वं पुरस्कृत्य शास्त्रमज्ञाधिकारिकं अविद्वान् शास्त्रमनुरुध्य कर्माचरति विद्वांस्तु विरमति इति विद्वदविदुषोविशेष उक्तः ॥ इदमुपपादनमसंगतम् । ज्ञानकर्मणोः कुतो विरोधः ॥ किं अहिमूषिकवद्वध्यघातुकभावेन, किं वा परस्परविरहरूपत्वेन, आहोस्विद्विरहव्याप्त्यादिना ॥ इमे पक्षाः अनुपपन्नाः । निर्भयं ज्ञानिभिरपि सत्कर्मणामनुष्ठानात् । इतिहासेषु नारदशुकादिषु सदाचारस्य दर्शनात् । शास्त्रमज्ञाधिकारिकमिति मोघैवोक्तिः । यतोऽतिसाहस वचनमेतत् । मुमुक्षवस्सर्वेऽपि वेदशास्त्राध्ययनादविलंबं विरमेयुः । ज्ञानिभिस्सत्कर्म निष्काममपि नानुष्ठेयमिति कोच्यते । ज्ञानात्पूर्वमनुष्ठितमन्तःकरणशुद्धिमुत्पाद्य ज्ञानसाधनं भवति । ज्ञानानन्तरमनुष्ठितं मुक्तावानन्दमभिवर्धयतीति शास्त्रादवगम्यते हि ॥ अर्जुनस्याज्ञत्व असुमुक्षुत्वं वा न संगच्छते ॥ 'तस्माद्युद्ध्यस्व भारत' (II 18). 'नियतं कुरु कर्म त्वं' (III 8). 'कर्मणैव संसिद्धिमास्थिता जनकादयः' (III 20). 'कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम्' (IV 15) 'यज्ञदानतपः कर्म न त्याज्यं कार्यमेवतत्' ॥ "एतान्यपि तु कर्माणि संगं त्यक्त्वा फलानि च । कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम्" ॥ इत्याद्युक्तयो दिङ्मात्रप्रदर्शकतया स्मर्तव्याः ॥

गीतातात्पर्ये उपोद्घातप्रकरणे भगवत्पादाचार्येणास्मिन्विषये भगवदाशयस्सम्यगाविष्कृतः । तत्र तत्र विद्यमानानि गीतावचनानि क्रोडीकृत्य विदुषो मुमुक्षोश्च सर्वकर्मसंन्यासएवाधिकारइति पक्षो निराकृतः ॥ यत्तु

भ्युदाहरणं कृतं परैः, तत्तदर्थभ्रममूलम् । यत्तूक्तं मधुसूदनेन घातयतीति प्रयोगस्य प्रयोजनं तदीश्वरगवज्ज्ञानजन्यं भाति । युध्यस्वेत्यादिविधिवचनैः प्रेरकत्वेन भगवतः प्रत्यवायमङ्गीकृत्य दोषसंसर्गाद्भगवन्तं मोचयितुं मधुसूदननीलकण्ठौ श्राम्यतः । व्युत्थानकाले अविद्यालेशानुवृत्त्या घातयितृत्वादिः प्रसक्तावपि विद्यया तस्य बाधाद्भगवानदोषीति नीलकण्ठः । हिंसाप्रयोजकत्वेन दोषे संभावित सति आत्मनिष्क्रियत्वोपदेशेन नाहं कारयितेत्युक्त्वा युध्यस्वेत्यादिस्वकृतादुपदेशादपगच्छन् शंकितदोषात्स्वमुत्तारयतीति मधुसूदनः ॥ इयं दोषशंका इदं दोषोत्तारणं च विष्णुमाहात्म्यापरिज्ञानकल्पितं ॥ अर्जुनेनाद्यावधि न श्रीकृष्णस्य दोषसंसर्गशंकितः । घातयतीति स्वविवक्षया भगवानुवाचेति नावगम्यते । कल्याणगुणवारिधिर्दोषगन्धविधुरः श्रीहरिः पापाद्भीतस्सन् नाहंकारयितेति स्वोपदिष्टात्पलायनं चकारेति हृदयकल्पनं अप्रामाणिकमेव ॥

"मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः" ॥

'ब्रह्मण्याधाय कर्माणि' 'मयाहतांस्त्वं जहि' । इत्यादिभिर्वक्ष्यमाणैः स्वतन्त्रकर्ता कारयिता च श्रीकृष्ण एवेत्यवगम्यते । आत्मनो निष्क्रियत्वस्याप्रामाणिकत्वात् नैतद्भगवानुपदिशेत् । सर्वव्यापारकारयितृत्वात् नित्यक्रियादिगुणवान्नारायणः स्वस्याकारयितृत्वं न कदाप्यङ्गीकुर्यात् ॥

एवं श्लोकस्याद्वैतव्याख्यातृक्तरीत्या निष्क्रियत्वे यदि न तात्पर्यं तर्हि कोऽर्थो न घातयति हन्तीत्यस्य ॥ ज्ञानिनोऽज्ञानिनः सकाशात् को विशेष उच्यते । इत्यविशिष्यते ॥

उच्यते ॥ जीवस्य नित्यत्वात्तज्ज्ञानी स्वरूपध्वंसं कारयामि करोमि इति नानुसन्धत्ते । अथवा ईश्वरस्यैव स्वतन्त्रकर्तृत्वात् स्वं घातयितारं हन्तारं ब्रह्मज्ञानी नानुसन्धत्ते इति सर्वज्ञाचार्याशयः ॥ हननस्यात्र सर्वक्रियोपलक्षकत्वेपि

नास्माकमनिष्टम्। यतः सर्वासु क्रियासु भगवन्नमेव स्वतन्त्रं स्वमस्वतन्त्रं च हि ज्ञानी जानाति ॥ इति ॥

आत्मनो निष्क्रियत्वसमर्थनावसरे निष्क्रियत्वज्ञानं विदुषस्संभावितं नेति स्वव्यूह्य पूर्वपक्षं परिकल्प्य समाहितं शङ्करानन्देन ॥ तथाहि ॥ "ननु ब्रह्म निर्विकारं। आत्मा तु विद्वान् विकारी। उभयोर्निर्विकारत्वसविकारत्वधर्माभ्यां परस्परभिन्नत्वाद्विकारिणो विदुषस्त्वविक्रियत्वज्ञानासंभवात्संन्यासो नोपपद्यते ॥ नह्यचलः पर्वतः इति ज्ञानं क्रियानिवृत्तिकारणं भवति। तद्वत्स्वस्य विकारित्वेन विदुषस्त्वक्रियोऽहमिन्यविक्रियात्मत्वज्ञानासंभवात् कर्मसंन्यासोऽनुपपन्न इति चेन्न। इदमहं जानामीत्यत्र इदमर्थस्य ज्ञाताहंप्रत्ययार्थो न देहः न प्राणः नेन्द्रियाणि न मनः नाहंकारः नापि विश्वतैजसप्राज्ञाः ॥ अतः पारिशेष्यादात्मैव ज्ञाता। बुद्ध्यादिभिराध्यासिकसंबन्धस्य संभवाद्विक्रियस्याप्यात्मनो ज्ञातृत्वं सिध्यति" इति। अत्रतावत्पूर्वपक्षो द्रढिष्ठः। समाधानंतु दुर्बलं भाति ॥ रज्जुसर्पयोश्शुक्तिरजतयोराध्यासिकसंबन्धइत्युच्यते। किमनेन संबन्धेन लब्धम्। कीदृशोयं संबन्धः, कस्तन्माहिमा इति न ज्ञायते। आध्यासिकसंबन्धमवलंब्यात्मनो ज्ञातृत्वे साधिते आत्मनो वाङ्मात्रेण ज्ञातृत्वं वस्तुतो न ज्ञातृत्वमेवेति पर्यवसितं भवति। तस्मात्सक्रियस्याक्रियत्वज्ञानमसंभवि ॥ अक्रियत्वे ज्ञातेपि स्वस्य सक्रियस्य कर्मोपरमः अनुपपन्नः। कर्मोपरमस्य शक्यत्वेपि न तथा शास्त्रे विधीयते इत्यास्तां विस्तरः।

वेदाविनाशिनमिति पूर्वार्धगतानां 'अविनाशिनं' 'नित्यं' 'अजं' 'अव्ययं' इति चतुर्णां विशेषणानां परस्परंगतार्थता यथा नस्यात्तथा सार्थक्यं विवक्षाभेदेन व्याख्यातृभिस्स्वस्वराद्धान्तानुसारेण समर्थितम्।

(a) 'वेद' इत्यादिनाहंब्रह्मास्मीत्यैक्यसाक्षात्कारो विवक्षित इति शाङ्कराः। ऐक्यस्याप्रामाणिकत्वात् तत्साक्षात्कारोऽनुपपन्नः, ईश्वरपरयोज-

नायां परोक्षापरोक्षसाधारणं ब्रह्मज्ञानं जीवस्वानन्त्यभ्रमं वारयति, जीवपरयो-जनायां जीवनित्यत्वज्ञानं हन्तृत्वादिभ्रमं परिहरति, इत्याचार्याशयः ॥

(b) 'अविनाशिनं' इत्यनेन मृतिराहित्य सामान्यतो गम्यते ॥ अबाध्यं परमार्थसत्यमुच्यते इति नीलकण्ठादयः ॥ परिपूर्णं ब्रह्म देशका-लगुणाद्यपरिच्छिन्नमुक्तं इति शङ्करानन्दः । वस्तुतस्तु, जीवपरयोजनायां नैमित्तिकनाशराहित्यं वक्ति । अथवा नाशशब्देनाभिमानिकदोषा गृह्यन्ते ॥ जीवस्य स्वतस्तादृशदोषासंभवेन तथोक्तिः। "क्रियावाचित्वमाख्यातुमेकैकोऽर्थः प्रदर्श्यते । प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातवः" इति वचनाद्दर्शन-वद्दोषयोगोपि 'णश' धात्वर्थ इति भावः ॥ ईश्वरपरयोजनायां शरीरापाय-राहित्यमनेनोच्यते ॥ ईश्वरदेहस्यापि चिदानन्दस्वरूपत्वादेवमुक्तिः ॥

(c) 'नित्यं' इति ॥ सदा विद्यमानं सर्वव्यापकं इति मधुसूदनादयः । विपरिणामहीनं इति शङ्कराचार्यः ॥ स्वाभाविकनाशशून्यं इति सर्वज्ञाचार्यः ॥

(d) 'अजं' इति ॥ अनेन जीवपरयोजनायां स्वरूपतो जनिराहित्य-मुक्तम् । ईश्वरपक्षे स्वरूपतो देहतश्च जनिराहित्यम् ॥

(e) 'अव्ययं' इति ॥ आह नीलकण्ठः। "नव्येति पूर्वावस्थां त्यजती-त्यव्ययम् । अपरिणामीति यावत् । प्रधानं तु चलं गुणवृत्तमिति न्यायेन गुण-साम्यावस्थायामपि परिणममाणमेव सर्वदास्तीति सांख्यैः प्रधानस्य नित्यत्वा-जत्वाभ्युपगमात् तद्व्युदासायाव्ययमित्युक्तम्" । इति ॥ व्ययशब्देन जनिनाशव्यातिरिक्ताः विकारागृह्यन्ते । अथवा अपक्षयमात्रं छेद्यायोग्यत्वं वा, इति रामानुजाचार्यतच्छिष्याः ॥

जीवपरयोजनायां स्वरूपविकारशून्यत्वं वक्ति, ईश्वरपक्षे स्वातन्त्र्यं, इत्याचार्याशयः ।

"कर्तृत्वन्तु स्वतन्त्रत्वं तदेकस्य हरेर्भवेत्। तस्यास्यं तस्य जानन् कथं कर्ता स्वयं भवेत्" इति परमश्रुतिं उदाहरन्ति॥ अव्ययमिति विशिष्ट-विशेषणं स्वतन्त्रत्वविशेषणमपसंक्रामति॥

(1) नित्यः, अविनाशित्वात् अजत्वात् व्ययानर्हत्वात्, इति हेतुहेतु-मद्भावं अभिप्रैति रामानुजाचार्य.॥ अजत्वादव्ययः अविनाशित्वान्नित्यः इति शङ्करानन्दः॥ नित्यत्वादज. अव्ययत्वादविनाशी अविनाशित्वान्नित्यः इति मधुसूदनः॥ विवक्षाभेदेन हेतुहेतुमद्भावं वदन्तीति ज्ञायते॥

वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि।
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही॥२२॥

वि० पूर्वत्र पुराणपदेन जीवस्य देहाद्देहान्तरप्राप्ति-रुक्ता। सा तु देहान्यनित्यजीवसत्त्व एव युक्ता॥ कौमारं यौवनं जरेत्यत्र देहात्मविवेकोक्तावपि कौमारादिदेहानामति-भिन्नत्वाभावान्नतेन देहात्मनोर्विनाशित्वाविनाशित्वलक्षणो-विवेकः स्फुटमनुभवारूढो भवतीत्यतो दृष्टान्तान्तरेण तमुपपादयति॥ वासांसीति॥ यद्वा, ईश्वरस्य देहतः स्वरूपतश्च नित्यत्वेन तद्विषये शोकाभावेपि जीवविषये तु स भविष्यति॥ जीवो नित्यस्तद्देहयोगवियोगौ कौमारादि-

देहवद्देवेत्युक्तावपि सर्वलोकप्रसिद्धजनिमृतिमत्त्वात् युद्धे च तत्प्रासेस्तन्निमित्तः शोकइत्यत आह ॥ वासांसीति ॥ शरीरयोगवियोगयोः कौमारादिवच्छोककारणत्वाभावोंगी-कृतश्चेत्तर्हि जनिमृती अपि न शोककारणं ॥ देहयोगवियो-गयोरेव जनिमृतिशब्दार्थत्वादिति भावः ॥ यद्वा वाससो जरवत्स्वशरीरे जगदावस्त्रानन्त्यदर्शनात्सर्वत्रास्त्रानन्त्यं जीवस्य ज्ञेयमित्यनेनोच्यते ॥ श्लोकार्थस्तु व्यक्तः ॥ २२ ॥

शं० प्रकृतं तु वक्ष्यामः। अत्र आत्मनः अविनाशित्वं प्रतिज्ञातं। तत किमिव इति॥ उच्यते। वासांसि इति॥ वासांसि वस्त्राणि जीर्णानि दुर्बलतांगतानि यथा लोके विहाय परित्यज्य नवानि अभिनवानि गृह्णाति उपादत्ते नरः पुरुषः अपराणि अन्यानि तथा तद्वदेव शरीराणि विहाय जीर्णानि अन्यानि संयाति संगच्छति नवानि देही आत्मा पुरुषवत् अविक्रियएवेत्यर्थः॥ २२ ॥

रा० यद्यपि नित्यानामात्मनां शरीरविश्लेषमात्रं क्रियते ॥ तथापि रमणीयभोगसाधनेषु शरीरेषु नश्यत्सु तद्वियोगरूपं शोकनिमित्तं अस्त्येवेत्यत्राह — वासांसीति ॥ धर्मयुद्धे शरीरं त्यजतां त्यक्तशरीरादधिकतरकल्याणशरीरग्रहणं शा-स्त्रादवगम्यत इति जीर्णानि वासांसि विहाय नवानि कल्याणानि वासांसि गृह्णतामिव हर्षनिमित्तमेवात्रो-पलभ्यते ॥ २२ ॥

विचारः

यद्यपि पुराणइति देहाद्देहान्तरसञ्चारः स्मारितः। देहिनोऽस्मिन्निति श्लोके कौमारादिदृष्टान्तनिरूपणपूर्वकं जन्मान्तरप्राप्तिः प्रतिपादिता॥ तथापि स्फुटतरदृष्टान्तस्याभूदवसरः। देहकौमारयोरभेदस्यापि विद्यमानत्वात् कौमारादिदृष्टान्तैर्भेदप्रतीतिर्नितरां दृढतरं दृढ़ताभवति॥ कौमारयौवनोपगमापगमौ सूक्ष्मगतिकत्वेन न प्रकाशं दृश्येते। अनुभवारोहार्थमेव पुनर्दृष्टान्तकथनं वासांसीति। अस्मादपि स्थूलं स्फुटतमं अपेक्षितं चेत्पश्यन्तु शान्तिपर्वणि॥ "यथाहि पुरुषः शालां पुनः संप्रविशेन्नवाम्। एवं जीवश्शरीराणि तानि तानि प्रपद्यते॥ देहान्पुराणानुत्सृज्य नवान्संप्रतिपद्यते" ॥ इति॥ देहवाससोस्संसर्गितया एतमपि दृष्टान्तं ये दुर्बोधं मन्येरन् तेषां सुबोधाय गेहगेहिदृष्टान्तस्समर्पकस्यात्। दृष्टान्तदार्ष्टान्तिकसामंजस्यपर्यालोचनायां यथा वस्त्रजीर्णतायां नरोऽस्वतन्त्रः एवमेव शरीरजीर्णतायां जीवोऽस्वतन्त्रः इत्यनुसन्धेयम्। किञ्च नववस्त्रस्पृहायां वरणे क्रीणनादौ यथास्ति पुरुषस्य किञ्चित्स्वातन्त्र्यं तथा नूतनजन्मप्राप्तौ॥ अस्मिन्नर्थे यथा क्रतुन्यायोऽनुसन्धेयः। "काम एवायं पुरुष इति स यथाकामो भवति तत्क्रतुर्भवति यथा क्रतुर्भवति तत्कर्मकुरुते तदभिसंपद्यते" इति बृहदारण्यके॥ IV 4.5 "यथा खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति॥ छान्दो III 14-1॥ "यथा यथा कर्मगुणं फलार्थी करोत्ययं कर्मफले निविष्टः। तथा तथाऽयं गुणसंप्रयुक्तश्शुभाशुभं कर्मफल भुनक्ति" इति शान्तिपर्वणि॥ "यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेबरम्। तन्तमेवैति कौन्तेय सदा तद्भावभावितः" इति गीता॥ "व्रजंस्तिष्ठन्पदैकेन यथैवैकेन गच्छति। यथातृणजलूकैवं देही-कर्मगतिंगतः" इति भागवते दशमे 1-40.

एतैः प्रमाणैरवगम्यते यद्यज्जन्म लभ्यते तत्स्वज्ञानेच्छाक्रियादिभिरपेक्षितमभूदिति॥ यदेव जन्मप्राप्यप्रयोजनं ईशक्लृप्तमनुभूतं लब्धं वा

भवति योग्यसाधनविशेषश्च पूर्तिः, यस्मै जातोऽयं यदा च शरीरमुद्दिष्टव्यापारं समाप्य नालं भवत्यधिकप्रयोजनाय तदास्य देहः स्फुटति। तस्मात्केचित्कुमाराः केचिद्युवानः केचिद्वृद्धाः म्रियन्ते। यथाक्रतुन्यायतृणजलूकान्यायेभ्यो योग्यां योनिं प्रतीक्ष्यात्मीनं शरीरं प्रक्षिपन्तीति गीताश्लोके जीर्णानि शरीराणि विहायेत्युक्तावपि शैशवादौ मरणं उपपद्यतएव॥ ईश्वरेण तथा स्वकर्मभिर्नियमितप्रयोजनावसानस्य जीर्णशब्देन विवक्षितत्वात्। किञ्च॥ यथा नूतनवस्त्रं प्रायशः पुराणादुत्कृष्टं वस्त्रलभ्यं प्रयोजनं सम्यक्तरं निष्पादयति तथा नूतनशरीरं प्रायशो जीर्णादुत्कृष्टं सत् जन्मसाफल्यं निष्पादयेत्। जन्मनो जन्मान्तरगमने प्रायश आरोह इष्टः। क्वचित् अवरोहोऽपि स्यात्। "तद्यथा पेशस्कारी पेशसो मात्रामुपादायान्यन्नवतरं कल्याणतरं रूपं तनुते। एवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वान्यन्नवतरं कल्याणतरं रूपं कुरुते" इति काठके॥

प्रतिनिधिलाभेन जीर्णहानिर्न दुःखायेति पुरस्तादेव सूचितम्। वासांसीत्यनेन श्लोकेन हर्षनिमित्तमप्यस्तीति गम्यते॥ जीर्णवस्त्रप्रतिनिधित्वेन नववस्त्रलाभे हृष्यत्येव जनः॥ यदि नूतनशरीरलाभस्संदिग्धः तदा स्यान्न हर्षः॥ किञ्चिच्छोकश्च भवेत्। नास्ति तादृशसंदेहस्यावकाशः। तृणजलूकान्यायस्योक्तत्वात्। 'जीर्णानि' 'जीर्णानि' इति पूर्वार्धे उत्तरार्धेचावधारणाद्धर्मप्रयोजनत्वविवक्षया दुःखाभावएव युक्त इति सूचितम्॥ 'नवानि' 'नवानि' इत्यवधारणेन नूतनत्वं हर्षनिमित्तमिति सूचितं भवति॥

अत्र देशिको रामानुजाचार्यभावमभिव्यञ्ज्याह। "ननु नूतनत्वमात्रं न सुखाय। चिरन्तननरपतिगृहपरित्यागेनापि नूतनकारागृहप्रवेशादेः जीर्णाशुकप्रहाणेन नूतनगोणीग्रहणादेश्च दुःखरूपत्वात्। न च वयमिह मानुषादिशरीरविलयसमनन्तरमाभिनववसनपरिधानवदनिमिषदेहादिसंग्रहमुपक्रमा-

महे" इत्याशङ्क्य "धर्मयुद्धे मृतानां कल्याणतरजन्मनोऽवश्यंभावात्" इति॥ इममेव पूर्वपक्षं प्रकारान्तरेण समाधत्ते मधुसूदनः । श्लोके तावत्संयातीति प्रयुक्तं॥ तेन गम्यते कल्याणतरजन्मप्राप्तिरभिप्रेतेति॥ भीष्मादयोऽत्र प्रसक्ताः वयसा तपसा च कृशानि शरीराणि विहाय चिरोपार्जितधर्मफलभोगाय सम्यक् गर्भवासादिक्लेशव्यतिरेकेणोत्कृष्टशरीराणि प्राप्नुवन्तीति अर्जुनस्त्वेवमुपकारकत्वेन हृष्येन्न शोचेत् इति॥ अत्र चिन्त्यते॥ किमयं श्लोको धर्मयुद्धप्रवृत्तान् भाव्युत्कृष्टजन्मनिश्चयवतः पाण्डवादीन् सात्विकानेवोद्दिश्य प्रवृत्तः उत मुक्तेतरसर्वजनान् इति॥ 'नरः गृह्णाति' 'देही संयाति' इति सामान्यवचनस्य संकोचे समीचीनं गमकं न दृश्यते। संकोचश्चागतिकागतिः। श्लोके नवानीत्येवोक्तं । नियमेनोत्कृष्टानीति नोक्तम् । संयातीत्यत्र समित्यस्यान्यथोपपत्तिस्सुलभा॥ हर्षोपि शरीरस्य नूतनत्वादेवोपपद्यते। यतो नूतनं भवितव्यसाधनाय समर्थतरम्॥ स्वकामकर्मभिरपेक्षितमित्यपेक्षितत्वादेव वा हर्षस्स्यात्। प्रायशो नवशरीरमारोहरूपत्वेनोत्कृष्टमेव भूयादिति विवक्षया स्यात् संयातीति 'सं' शब्दप्रयोगः ।

पू० ननु नवानि इत्युक्त्वा वाससां अपराणि इति, शरीराणां अन्यानि इति च, विशेषणे दत्ते । नवानीत्यनेनैवापेक्षितार्थलाभसंभवे विशेषणान्तरस्य किं कृत्यम्॥

स० ॥ उत्कर्षातिशयख्यापनार्थमिति मधुसूदनः । नामरूपजातिगुणविशेषैः पूर्ववैपरीत्यं वैलक्षण्यं वा बोध्यते इति शङ्करानन्दः । नवत्वेपि सादृश्यं साजात्यादिकं वा नियमेन स्यादिति भ्रमनिरासायापरत्वकथनमित्युक्तं भवतीति तदाशयः ॥ देहात्मविवेकानुभवार्थ इत्याचार्यभाष्यनिरूपणावसरे प्रमेयदीपिकायां "कौमारादिदेहानामनतिभिन्नत्वान्नतेन देहात्मनोर्विवेकः स्पष्टमनुभवारूढो भवतीति भावः" इत्युक्तम् । कौमाराद्यवच्छिन्नयोरपगतागतयोर्देहयोरप्रतीतदेहत्वेपि यथा वासांसि पूर्वेभ्यः स्पष्टं भिन्नानि प्रतीयन्ते

तथैव मृत्यनन्तरं लभ्यानि शरीराणि नवानि स्पष्टमन्यानि च इति बोधाय 'अपराणि' 'अन्यानि' इत्यनेन भेदः कण्ठतउक्त इति भाति ॥

## नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
## नचैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥२३॥

वि० ननु जीवचितः कालकृतस्य बिंबनाशादिनिमित्तकृतस्य च नाशस्याभावेपि दक्षशिरश्छेदइव शस्त्रादिप्रबलहेतुना नाशोस्ति किमित्यत आह ॥ नैनमिति । एनं देहीति प्रकृतं जीवं ॥ न क्लेदयन्ति । मृदुकरणेन शिथिलं न कुर्वन्तीत्यर्थः ॥

शं० कस्मात् अविक्रियएवेति ? आह—नैनं छिन्दन्ति इति । एनं प्रकृतं देहिनं न छिन्दन्ति शस्त्राणि, निरवयवत्वात् न अवयवविभागं कुर्वन्ति शस्त्राणि अस्त्रादीनि। तथा एनं न दहति पावकः अग्निरपि न भस्मीकरोति। तथा न च एनं क्लेदयन्ति आपः । अपांहि सावयवस्य वस्तुनः आर्द्रीभावकरणेन अवयवविश्लेषापादने सामर्थ्यं ॥ तत् न निरवयवे आत्मनि संभवति ॥ तथा स्नेहवद्द्रव्यं स्नेहशोषणेन नाशयति वायुः, एनं तु आत्मानं न शोषयति मारुतः अपि ॥ २३ ॥

रा० पुनरपि "अविनाशि तु तद्विद्धि येन सर्वमिदं ततं" इति पूर्वोक्तमविनाशित्वं सुखग्रहणाय व्यंजयन् द्रढयति । शस्त्राग्न्यंबुवायवः छेदनदहनक्लेदनशोषणान्यात्मानं प्रति कर्तुं न शक्नुवन्ति ॥

विचारः

जीवस्य स्वतो न नाश इत्युक्तम् । बिंबोपाधिसन्निधिनाशानामसंभवेन तत्प्रयुक्तो नाशो नेत्यप्युक्तम् । नाशकारणानां बहुतरं निषेधेपि कैश्चिद्विशेषकारणैस्स्यान्नाशः इत्याकांक्षां वारयितुं श्लोकः । असंभावितशङ्कायाः न पर्यवसानमिति नेयमुपेक्ष्या ॥ दक्षशिरश्छेदस्याशक्यत्वेपि यज्ञपशुभावनाख्याविशेषनिमित्तेनाभूत् स शक्यः ॥ यथा चतुर्थस्कन्धे भागवते । "शस्त्रैरस्त्रान्वितैरेनमविभिन्नत्वचं हरः । विस्मयं परमापन्नो दध्यौ पशुपतिश्चिरम् ॥ दृष्ट्वा संज्ञपनं योगं पशूनां स पतिर्मखे ॥ यजमानपशोः कस्य कायात्तेनाहरच्छिरः" इति ॥

अयं गीताश्लोकोपि भगवत्परतयापि ज्ञेयः । एनं भगवन्तं ॥ शस्त्रादिसर्वकारणानां प्रसिद्धानां भगवन्नाशेऽसामर्थ्यं प्रतिपादयति पद्यं ॥ इति ॥

एनं इति त्रिशः प्रयुक्तम् । श्लोकोच्चारणवेलायां भगवान् जीवपरत्वे बोध्ये सत्यर्जुनशरीर स्पृष्ट्वाङ्गाभिनयविशेषेण सह एनं इति पौनःपुन्येनाम्रनीदित्यूह्यते ॥ इद अनाश्यत्वे दार्ढ्यं दर्शयति ॥ ईश्वरपरत्वे स्वशरीरं स्पृष्टवान् स्यात् । यतस्स्वशरीरस्याप्यच्छेद्यत्वादिकं उपदिदेश ॥ "मम निशितशरैर्विभिद्यमानत्वचि" इति भीष्मवचनं तु व्यामोहकम् ॥ चिदानन्दस्वरूपस्य भगवद्देहस्याच्छेद्यत्वात् ॥ अत्र एनमित्यभ्यासाद्रामकृष्णादिसर्वरूपेषु भेदो वा तारतम्यं वा किञ्चिदपि नास्तीति ध्वन्यते ॥ तथाहि वाराहे "मत्स्यकूर्मादिरूपाणां गुणानां कर्मणामपि ॥ तथैवावयवानां च भेदं पश्यति यः

काचित् ॥ भेदाभेदौ च यः पश्यन् स याति नमग्र तु । पश्येद्भेदमेवैषां बुभूषुः पुरुषस्ततः" इति ॥

शस्त्राप्पावकमारुतानां ग्रहणेन पार्थिवाप्यतैजसवायवीयानां सर्वेषां पदार्थानां नाशकत्वनिषेधः कृतः । आकाशस्य नाशकत्वेन प्रसिद्ध्यभावान्न तदुक्तिः ॥

येन सर्वमिदं ततं इत्यत्र ततिर्नाम सूक्ष्मत्वं इति रामानुजाचार्यव्याख्यानं स्मर्तव्यम् ॥ सूक्ष्मत्वार्थस्य सुखग्रहणाय प्रकृतश्लोकइति तदवतारिका ॥ ततस्सूक्ष्मत्वार्थकत्वेऽनुपपत्तिः पूर्वमेवोक्ता ॥

शाङ्करास्त्वविक्रियत्वोपपादकतया श्लोकस्य सार्थक्यमाहुः । "घटगतजलनाशात्तत्रत्यप्रतिबिंबस्येव शस्त्रादिना देहविनाशेसत्यात्मनोपि तत्रोपलभ्यमानस्य चरमविकारः स्यादित्यस्योत्तरं दीयते नैनमिति" ॥ इति ॥

निरवयवत्वादेव छेददाहक्लेदनशोषणानामगोचरत्वमिति तेषामाशयः ॥

नीलकण्ठआह ॥ आत्मा "अस्थूलत्वादच्छेद्यः ॥ अनणुत्वात्पार्थिवपरमाणुवत्पाकजरूपाद्याश्रयो न भवतीत्यदाह्यः ॥ अस्पर्शत्वादक्लेद्यः ॥ अस्नेहत्वादशोष्यः ॥ तथाच "अदीर्घमस्थूलमनणु" "अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्" इति श्रुतिप्रसिद्धानां संग्रहः" इति ॥ श्लोकस्य भगवत्परत्वेऽङ्गीकृतेऽपि जीवपरत्वस्य निषेधायोगात् जीवस्य चाणुत्वेन वेदान्तप्रसिद्धेःप्रकृतश्लोकसंवादितया श्रुतिसांगत्यं चिन्त्यम् । श्लोकस्य परमात्मपरत्वेपि अवध्यत्वोपपादकतयैवार्थो ज्ञायते ॥ उदाहृता श्रुतिस्तु भगवतः अचिन्त्याद्भुतशक्तित्वं प्रतिपादयति ॥

**अच्छेद्योयमदाह्योयमक्लेद्योऽशोष्य एव च।**
**नित्यस्सर्वगतस्थाणुरचलोयं सनातनः ॥ २४॥**

वि० ननु न छिन्दन्तीत्यादिलट्प्रयोगेन वर्तमानस्यैव छेदादेर्निषेधादिदानीं दृश्यमानत्वेनात्मनः प्राग्विनाशाभावेप्युत्तरत्र शस्त्रादिना विनाशः स्यादित्यतः छेदादियोग्यतैवात्मनो नास्तीत्याह। अच्छेद्योयमिति । अयं जीवः । कृत्याः प्राङ् ण्वुल इति सूत्रेणोक्तकृत्यसंज्ञकस्य यत्प्रत्ययस्य अर्हे कृत्यतृचश्चेत्यर्हार्थे छिदिदहेत्यादेर्धातोर्विधानाच्छेदनाद्यर्हो न भवतीत्यर्थः ॥ अयमयामिति पृथग्वचनं यो यो जीवः स सर्वोप्येवं रूप इति प्रदर्शनाय । कुतोनार्हतेत्यत उक्तम् नित्यइत्यादि॥ सर्वगतः स्थाणुरिति पदविभागः॥ नित्यइति सर्वगतइत्यस्य विशेषणम् । सर्वगतपदेन सर्वगतत्वविशिष्ट उच्यते ॥ नित्यः सर्वगतत्वविशिष्टइत्युक्ते सविशेषणेहीति न्यायेन नित्यत्वं सर्वगतत्वरूपविशेषणमुपसंक्रामति॥ नित्यं यत्सर्वगतत्वमिति। तद्वान्सर्वगतइत्यर्थः।स्थाणुरिति यत्किञ्चिन्निमित्तकृतविकारहीनः॥ अजो नित्यः शाश्वतइत्यत्र शाश्वतपदेन सामान्यतोविकाराभावोक्तावपीह नैमित्तिकानिषेधप्रकरणान्नैमित्तिकविकाराभावोक्त्यर्थं स्थाणुरित्युक्तम्। अतो न पुनरुक्तता ॥ अचलः प्राकृतचलनहीनः ॥ सनातनः वक्ष्यमाणदिशा सशब्दइत्यर्थः ॥ "त्वयीश्वरे ब्रह्मणि नोवि-

रुध्यते" "विज्ञानशक्तिरहमासमनन्तशक्तेः" "परास्य-शक्तिर्विविधैव श्रूयते" इत्यादिश्रुतिस्मृतिरूपशब्दसाहितः। तत्प्रतिपाद्यइति यावत्। तथाच स्थाणुत्वेपि हरेः तदैक्षते-त्याद्युक्तकर्तृत्वमचिन्त्यशक्त्यैव युक्तम्॥ न तु पररीत्या मायावशादित्युक्तं भवति॥ ननु नित्यइत्यादिविशेषणवि-शिष्टस्येश्वरत्वादयं जीवो नित्यः सर्वगतः स्थाणुरिति भगव-दभेदोक्तिरयुक्तेति चेत्सत्यम्। उक्तानुपपत्तेरेव भेदोक्ति-परत्वादतद्भावे सामानाधिकरण्यं सारूप्यं गमयतीतिन्या-याद्गौणी नेया॥ नित्यसर्वगतत्वादियुक्तभगवत्सरूपोयं जीव इति। उक्तगुणकेश्वरप्रतिबिंबोजीव इति यावत्॥ तावता-कथं छेदनाद्यनर्हो जीव इति शंकानिरास इति चेत्, यो यत्प्रतिबिंबः सोऽसति विरोधे तत्समानधर्मकइति व्याप्ति-बलेन जीवस्य स्थाणुत्वादीश्वरधर्मसमानधर्मप्राप्तेरिति तात्प-र्यात्। "अनाशिनोऽप्रमेयस्ये" त्यत्र, "अजो नित्यः शाश्वत" इत्यत्र, "नित्य" इति प्रकृतार्थे च, जीवस्येश्वर-प्रतिबिंबत्वोक्तावपि न पुनरुक्तता शंक्या॥ तत्तच्छंका-निवर्तकभिन्नगुणविशिष्टेश्वरप्रतिबिंबत्वस्य तत्र तत्र कथ-नादिति ज्ञेयम्॥ ननु सयुक्तिकमच्छेद्यत्वाद्युक्त्यैव नै-मित्तिकनाशशंकानिरासान्नैनमितिव्यर्थमिति चेत् "प्रवृत्ते शस्त्रसंपाते" इत्युक्तेः प्रसक्तौसत्यामपि वर्तमानस्य छेदा-देरदृष्टेरात्मनः छेदाद्ययोग्यत्वं युक्तमिति प्रदर्शनार्थत्वात्।

यद्वा नैनमित्यादिश्लोक ईश्वरविषयः । तथाहि । वेदाविनाशिनमित्यत्रेश्वरस्य स्वतो नाशाभावोक्त्या तन्निमित्तशोकाभावेपि युद्धगतशस्त्रादिकरणविशेषेण छेदादिप्रसक्तेस्तन्निमित्तशोको ममेत्यत आह ॥ नैनमिति ॥ यएनं वेत्तीति श्लोके प्रकृतमीश्वरं । शिष्टं व्यक्तं ॥ एतेनेश्वरस्य देहतोपि छेदाद्यभावात् स्वातन्त्र्यमित्युक्तं भवति । एनमेनमिति पृथक् पृथग्वचनं सर्वरूपाणामेवंभावप्रदर्शनाय ॥ एवं "अव्यक्तोय" मित्यत्रापि )( ननु जीवस्य स्वतो नाशाभावेपि युद्धगतशस्त्रादिकरणविशेषेण छेदादि स्यादित्यत आह ॥ अच्छेद्योयामिति ॥ अयं जीवः । ननु जीवस्यापीश्वरवदच्छेद्यत्वादिसत्त्वे सर्वसाम्यं स्यात् , तथाच किं तत्पूजयेत्यतो जीवस्य नित्यमीशाधीनतामाह नित्य इति । सर्वगतस्थाणुरित्येकं पदम् । नित्य इति योग्यतया स्थितिरूपक्रियाविशेषणम् । क्रियाव्ययविशेषणानां च नपुंसकत्वमेकवचनान्तत्वं च वाच्यमित्येतन्नाश्रितम् । अयं जीवः नित्यं सर्वगते हरौ तिष्ठतीति नित्यसर्वगतस्थः । तदधीनतया सदा स्थित इति यावत् । सचासावणुश्च सर्वगतस्थाणुरित्यर्थः । ईशजीवयोः सर्वगतत्वाणुत्वरूपवैषम्यान्नसर्वसाम्यमिति भावेन सर्वगतेति अणुरिति चोक्तम् )( ननु जीवस्येशाधीनत्वं यदा न स्यात्तदास्यात्सर्वसाम्यम् । तथाच न तत्पूजाकार्येत्यत आह ॥ अचलइति । सर्वगतस्थपदं

बुद्धिविविक्तमाकृष्यते । भावप्रधानम् । सर्वगतस्थत्वान्न-
कदाचिच्चलतीत्यचलः । नित्यं सर्वगतस्थ इत्युक्त्यैवास्या-
र्थस्य लाभेऽपि केनचिद्दूरादिनिमित्तेनापि न तदधीनत्वस्य
नाशइति नैमित्तिकनाशाभावोक्त्यर्थमचल इत्युक्तिः ॥ कुतः
सदा हर्यधीनत्वं जीवस्येत्यत उक्तम् । सनातन इति ॥
नादेन विधिनिषेधरूपशब्देन सह वर्तत इति सनादः ।
सनाद एव सनातनः । दशब्दस्य छांदसस्तनादेशः । विधि-
निषेधबद्धत्वात्सदा तदधीन इति भावः । तदुक्तं विष्णु-
पुराणे "नित्यं सर्वगते विष्णावणुर्जीवो व्यवस्थितः" ॥
इत्यादि ॥

शं० ॥ यतएवं तस्मात् अच्छेद्योऽयमिति । यस्मात्
अन्योन्यनाशहेतूनि भूतानि एनं आत्मानं नाशयितुं न
उत्सहन्ते तस्मात् नित्यः । नित्यत्वात्सर्वगतः । सर्वगतत्वात्
स्थाणुरिव स्थिर इत्येतत् । स्थिरत्वादचलः । अयं आत्मा अतः
सनातनः चिरन्तनः । न कारणात् कुतश्चिन्निष्पन्नः
अभिनव इत्यर्थः । न एतेषां श्लोकानां पौनरुक्त्यं चोद-
नीयम् । यतः एकेनैव श्लोकेन आत्मनः नित्यत्वं अविक्रि-
यत्वं चोक्तं "न जायते म्रियते वा" इत्यादिना । तत्र यदे-
वाऽऽत्मविषयं किंचित् उच्यते तत् एतस्मात् श्लोकार्थात्
नातिरिच्यते किंचित् शब्दतः पुनरुक्तं, किंचित् अर्थत इति ॥
दुर्बोधत्वात् आत्मवस्तुनः पुनः पुनः प्रसंगं आपाद्य शब्दान्त-

रेण तदेव वस्तु निरूपयति भगवान् वासुदेवः। कथं नु नाम संसारिणां अव्यक्तं तत्त्वं बुद्धिगोचरतामापन्नं सत् संसारनिवृत्तये स्यात् इति ॥

रा० ॥ सर्वगतत्वादात्मनस्सर्वतत्वव्यापनस्वभावतया सर्वेभ्यस्तत्वेभ्यस्सूक्ष्मत्वादस्य तैर्व्याप्त्यनर्हत्वात् ॥ व्याप्य कर्तव्यत्वाच्च छेदनदहनक्लेदनशोषणानाम् । अतः आत्मा नित्यः स्थाणुरचलोऽयं सनातनः स्थिरस्वभावोऽप्रकम्प्यः पुरातनश्च ॥

विचारः

पूर्वश्लोके वर्तमानार्थकलकारप्रयोगेण छेदादिराहित्यमुक्त्वा छेदाद्ययोग्यत्वमाह अच्छेद्योऽयमिति । पूर्वश्लोकस्य भगवत्परत्वे जीवोऽप्यच्छेद्य इत्यतिदेशार्थकतयाऽयं श्लोकः अवतार्यः ॥ अयं अयं इत्यभ्यासेन यो यो जीवस्ससर्वोऽप्येवं इति सूचितम् ॥ द्वितीयार्धगतविशेषणानां प्रथमप्रतीतौ भगवद्वाचकानां गौण्या सारूप्यबोधकत्वेन जीवपरत्वं उपपद्यते । नित्यत्वस्य जीवेशयोः बहुधा कथितत्वात् सर्वगतत्वविशेषणमिहेति व्याख्यातं भाष्ये ॥ सारूप्यबोधकगौण्याश्रयणं विनापि गीतातात्पर्ये जीवपरतया क्रियाविशेषणत्वाश्रयणेन व्याख्यातम् । क्रियाविशेषणानां नपुंसकत्वनियमो नाभ्युपगतः । नित्यं सर्वगतस्थो जीवः अणुश्चेत्यर्थः ॥ हेतुतोऽपि तत्स्थत्वान्न चलतीति अचलः । सनातनपदमनादित्वं नित्यत्वं वा न बोधयति । भगवद्विषये आगमैकविज्ञेयत्वं जीवविषये विधिनिषेधशब्दबद्धत्वं च बोधयति ॥

१. नित्यः २. सर्वगतः ३. स्थाणुः ४. अचलः ५. सनातनः इ पञ्चविशेषणानीति कृत्वा आपातार्थस्य वा शांकराद्यर्थस्य वा स्वीकारे सन्ति

बहूनि बाधकानि । तथाहि ॥ नित्यः इति आत्मनित्यत्वं पुनरनेन विधीयते इत्यङ्गीकारे पुनरुक्तेः प्रयोजनं दुर्निरूपं ॥ क्वचिच्छब्दतः क्वचिदर्थतश्च नित्यत्व-मुक्तमेव ॥ अष्टादशे पद्ये "नित्यस्ये" ति विंशतितमपद्ये "नित्यः" इति एकविंशे "नित्यं" इति च शब्दतः पुनरुक्तिः ॥ सप्तदशे "अविनाशि" इति अष्टादशे "अनाशिन" इति एकविंशे "अविनाशिनं" इत्यर्थतः। द्वादशे "न चैव न भविष्यामः" इति षोडशे "नाभावो विद्यते सतः" इति विंशे "न म्रियते भूत्वा न भविता न" इति च पौनःपुन्येन नित्यत्वं कथितं इति परे अभ्युपगच्छन्ति ॥ अस्य शङ्कराचार्यतदनुगव्याख्याने परिहारोद्यमो न कृतः। "दुर्बोधत्वात्पुनः पुनः प्रसंगमापाद्य शब्दान्तरेण तदेव वस्तु निरूपयति" इति शाङ्करसमाधानम् ॥

आचार्यव्याख्याने तु नायं दोषो लग्नः ॥ अष्टादशे "नित्यस्य" इत्युक्तेरभूदवसरः। देहानामन्तवत्वमुक्त्वा तथापि जीवो नित्यः नित्योपाधि-कत्वादिति तत्र प्रसक्तिः ॥ विंशे वेदानुवादत्वेन नित्येत्याद्यर्थानां न पौनरुक्त्यशंकावकाशः ॥ एकविंशे नित्यत्वं विधेयतया नाभिप्रेतम् । नित्यत्वज्ञानिनोऽनुसन्धानमेव विधीयते । नैवं शब्दतः पुनरुक्तता ॥

नाप्यर्थतः। सप्तदशे पद्ये अविनाशीति चतुर्विधनाशरहितो भगवानुच्यते॥ अष्टादशे "अनाशिनः" इत्यत्र भगवान मुख्यप्रतिपाद्यः । गौण्या तत्प्रति-बिंबो जीवः ॥ एकविंशे "अविनाशिन" मिति ज्ञानिनोऽनुसन्धानमेवोक्तम् । नत्वविनाशित्वं विधेयतयाऽभिप्रेतम् । स्वाभाविकनैमित्तिकनाशयोर्विवक्षयाऽर्थ-भेदोऽप्युपपन्नः ॥ द्वादशे "न नभविष्यामः" इति प्रकरणारंभे साध्यनिर्देशः कृतः ॥ षोडशे "सतः" इति ब्रह्मणो वा साधुकर्मणो वा ग्रहणं ॥ जीवनित्यत्वं "नाभावो विद्यते सतः" इत्यनेन नोक्तम् । परोक्तार्थोऽस्या-प्रामाणिकः ॥ विंशे "न म्रियते" इति वेदवचनानुवादतया न गतार्थ-ताशङ्का ॥ भगवतो देहवियोगरूपमृतिनिषेधः क्रियते इत्यपि समाधानं

ध्येयम् ॥ भूत्वा न भविता नेति नाशराहित्यपरत्वेन परव्याख्यानमसमंजसम्। भगवत्पादैरन्यथाकृतं व्याख्यान द्रष्टव्यम् । अत्रेदमवशिष्यते ॥ द्वादशे "न नभविष्यामः" इति प्रतिज्ञातं॥ अष्टादशे "नित्यस्ये" त्यनेन तथापि नित्यइति दृढीकृतं, किं पुनरिह चतुर्विंशे "नित्यः" इत्यनेनोच्यतइति । उच्यते ॥ नात्र नित्यत्वं जीवविशेषणम किंतु सर्वगतत्वस्य वा क्रियाविशेषणतया स्था इति धात्वर्थस्य वा विशेषणमिति न पुनरुक्तिः ॥ तस्मात्पुनरुक्तिमङ्गीकृत्य यत्समाधनमभिहितं परैः तच्चिन्त्यम। एवमितराणि विशेषणान्यपि सार्थकानि ज्ञेयानि ॥

अथालोच्यतां सर्वगतः इत्यस्य प्रयोजनम् । "येन सर्वमिदं ततं" इति सप्तदशेऽपि ततेरुक्तत्वात्परेषां गतार्थता । रामानुजाचार्यस्ततेस्सूक्ष्मत्वार्थं परिकल्प्य समाधत्ते । शाङ्करास्तु न परिहारायोद्यताः ।

प्रकृतश्लोके पचानां विशेषणानां उत्तरोत्तरं विशेषणं पूर्वपूर्वविशेषण-व्यापकतयाऽनुमेयमिति सार्थक्यं शाङ्करा वदन्ति। नित्यत्वसर्वगतत्वयोस्सम-व्याप्तिं ब्रुवते ॥ अणुत्वेऽपि नित्यत्वं स्यादित्यस्यानुपपत्तिर्नोपपादिता ॥ अणुत्वमेव जीवस्य प्रामाणिकमित्यन्यत्र विचारितम् । "ततं" इत्यत्र भगवान् विवक्षित इति सर्वज्ञाचार्यः । प्रकृतश्लोके सर्वगतोऽपि भगवानेव ॥ सर्वगतत्वस्य नित्यत्वविशेषणेन पुनरुक्तता नास्ति ॥ गौण्या सारूप्याभिप्रायेण जीवपरत्वं ज्ञेयम् । सर्वगतस्थाणुरित्येकमेव पदं इति व्याख्याने तु न काचि-च्छंका । विष्णुपुराणवाक्यसंवादो व्याख्यानं द्रढयति ॥

सर्वगतत्वविशेषणस्य परिपूर्णार्थकत्वं नाममात्रेणोक्त्वा स्थाण्वचलसना-तनपदैर्नैर्गुण्यनिष्क्रियत्वादिसाधने भगवन्तमुत्कृष्यापकर्षति शंकरानन्दः । सर्वागमानां भगवदुत्कर्षएव हि महातात्पर्यम् । सर्वं गतं ज्ञातं येनेति भगवतस्सर्वज्ञत्वं सिद्ध्यति । सर्वं गतं प्राप्तं यस्मात् इति भगवान् सृष्टि-

स्थितिहेतुः। सर्वं गतं समाप्तं इति संहर्ता भगवान्। सर्वस्य गतं गमनं यस्मादिति नियमनाज्ञानबन्धानां संग्रहः। सर्वस्य गतं ज्ञानं यस्मात् इति ज्ञानदाता भगवान्। सर्वस्य गतं गमनं यं प्रतीति गम्यो मोक्षप्रदो हरिः। एवं सृष्ट्याद्यष्टकर्तारं श्रीहरिं निर्गुणत्वेन निष्क्रियत्वेन परिस्पन्दमात्रशून्यतया स्थाणुं जानन्ति परं स्थाणुरचल इति)। (अत्र मधुसूदननीलकण्ठव्याख्यानं॥ "स्थाणुरित्यनेन विक्रिया निषिध्यते॥ अचल इति क्रियासामान्यं निषिध्यते। पूर्वावस्थापरित्यागेनावस्थान्तरापत्तिर्विक्रिया॥ अवस्थैक्येऽपि चलनमात्रं क्रियेति विशेषः। उत्पत्त्याप्तिविकृतिसंस्कृतिरूपं चतुर्विधमपि क्रियाफलं नात्मनि संभवति। तत्र हेतुः सनातन इत्युक्तः। सनाइत्यव्ययं। नैरन्तर्येणेत्यर्थः। देशतः कालतो वस्तुतः परिच्छेदराहित्येन नैरन्तर्येण भवति अस्तीति सनातनः अखण्डैकरसः॥ वस्तुतः परिच्छेदः सजातीयविजातीयस्वगतभेदरूपः। एवं सनातनत्वादात्मा नित्यः सर्वगतः स्थाणुः अचलश्च। विशेषणचतुष्टयेनोत्पत्त्याप्तिविकृतिसंस्कृतयो निषिध्यन्ते॥ नित्यत्वान्नोत्पाद्यः। सर्वगतत्वान्न प्राप्यः॥ परिच्छिन्नस्यैव पय आदेः प्राप्यत्वात्। स्थाणुत्वादविकार्यः। विक्रियावतो घृतादेरेव विकार्यत्वात्। अचलत्वादसंस्कार्यः। यथा दर्पणः स्वतस्स्वच्छत्वादप्रच्युतोऽपि मलरूपेणाऽऽवरणेन स्वच्छत्वात्प्रच्याव्यते एवं स्वयं स्थाणुरपि अन्यसंयोगाच्चाञ्चल्यमभुवीत॥ स च दोषापकर्षणलक्षणं संस्कारमपेक्षेत॥ तच्छून्यत्वादचलः" इति॥ तथाच अखण्डैकरसत्वात्कस्या अपि क्रियायाः कर्मरूपः आश्रयो वा नायमात्मा इति तयोराशयः)॥

(सनातनत्वेन निर्विकारत्वं नित्यत्वेन प्रमाणान्तराबाध्यत्वं स्थाणुत्वाचलत्वाभ्यां क्रियाया अनाश्रयत्वं अविषयत्वं सर्वगतत्वात्पूर्णत्वमद्वितीयत्वं नित्यशुद्धत्व आनन्दैकरसत्वं इति शंकरानन्दः॥

(पदव्युत्पत्तौ किंचिन्मार्गभेदेऽपि निष्क्रियत्वे तात्पर्यमित्यत्र तेष्वैकमत्यं दृश्यते॥

(सप्तदशे श्लोके 'अव्ययस्ये' ति, एकोनविंशे सर्वक्रियाकारकोपलक्षकेन "न हन्ति" इत्यनेन विंशे 'शाश्वतः' इति च, निष्क्रियत्वमुक्त्वा "वेदाविनाशिन" मित्येकविंशे षड्भावविकारान्निषिध्य क्वास्ति पुनः क्रियाविक्रिययोर्निषेधस्यावसर इति न ज्ञायते । दुर्बोधत्वात्पुनरुक्तिस्सोढव्येति परिहारं विना नान्यदुत्तरं दृश्यतेऽद्वैतव्याख्यानेषु)।

('अप्रहर्षमनानन्दमदुःखमसुखमप्रज्ञं' इति प्रयोगेषु यथा प्राकृतानन्दादिनिषेधो विवक्षित. तथा समानन्यायेन 'अचलः' इति प्राकृतचलनशून्यत्वविवक्षायां नानुपपत्तिः ॥ अचलत्वं दर्पणवत्संस्कार्यत्वं निषेधतीत्यत्र किं नियामकम् । भगवन्निष्ठत्वरूपपारतन्त्र्यान्न कदापि चलनहीनो जीवः अचलः इति व्याख्यानं प्रमितम् । "नचास्य तदधीनत्वं हेतुतोऽपि विचाल्यते" । इत्युक्तेः)। (भगवतः कर्तृत्वाद्यभावे कुतो जगत्सर्जनादिकं संभवति ॥ "तपो मे हृदयं साक्षात्तनुर्विद्याक्रियाकृतिः" । "परास्य शक्तिर्विविधैव श्रूयते स्वाभावकी ज्ञानबलक्रिया च" ॥ इत्याद्यनेकप्रमाणबलात्कर्ता भगवानिति स्पष्टमवगम्यते)। (कर्तृत्वं मायिकं स्थाणुत्वमेव तत्त्वमिति परेषामाशयो निर्मूलः ॥ अचिन्त्याद्भुतशक्तिमत्त्वादापाततो विरुद्धा अपि धर्मास्सर्वे भगवत्युपपद्यन्ते । प्रमाणानि भाष्ये उदाहृतानि । यथा नित्यत्वानाशित्वयोः स्वाभाविकनैमित्तिकनाशविवक्षयाऽर्थविशेष उच्यते एवं शाश्वतस्थाणुपदयोरपि विशेषो वक्तव्यः शाश्वत इत्येकरूपत्वमुक्तं स्थाणुशब्देन नैमित्तिकमन्यथात्वं निवारितं इति)।

('सनातनः' इति ॥ पुरातन इति देशिकः । अनादिरिति शंकरानन्दः । द्वादशे "नत्वेवाहं जातु नासं नत्वं नेमे जनाधिपाः" इति विंशे "अजः" "पुराणः" इति एकविंशे "अजं" इत्यनादित्वमुक्तपूर्वम्)।

श्रीमदाचार्यव्याख्याने पुराणि देहान् अणति गच्छतीति पुराणशब्देन गतार्थत्वानवकाशः । मन्त्रवर्णावतारितवाक्यस्वात्र शङ्कानवसरः)। ("नत्वे-

वाहं" इति प्रतिज्ञा । "अजं" इत्येकविंशो ज्ञान्यनुसन्धानविधानपरः श्लोकः । प्रकृतश्लोके (24) सनातनपदं वेदप्रतिपाद्यत्वं भगवतः, विधिनिषेध-शब्दबद्धत्वं जीवस्य, बोधयति इति गतार्थतोद्धारसंभवात्सर्वमवदातम् ॥)

ब्रह्मानन्दगिर्याख्ये व्याख्याने कश्चिद्वेंकटनाथस्तात्पर्यगतं व्याख्यानं निराचष्टे, माध्वव्याख्यानं तुच्छमिति ॥ सर्वगतस्थश्चामात्रणुश्चेति विग्रहं नायं सहते । पराधीनत्वान्नचलतीत्यचलः विधिबद्धत्वात्सनातनः इति यदुक्तमाचार्येण तदपि तुच्छं मन्यते । जीवाणुत्वं स्वरचिते वज्रपञ्जरे निरस्तमिति चाह । शारीरकभाष्यं शंकराचार्यप्रणीतं आङ्गलभाषया सर्वं विपरिणम्य भूमिकायां भाषान्तरकृत् तीवेति ख्यातश्शंकराभ्युपगतं विभुत्वपक्षं निरस्य जीवाणुत्वमेव बादरायणहृदयं इति समर्थितवान् ॥ तदपि पश्यन्त्वांगलभाषाचतुराः ॥

अच्छेद्यत्वादौ नित्यत्वादयः अष्टौ हेतवइत्याद्यन्यथाव्याख्याने उत्तरार्धस्य पूर्वार्धसंबन्धराहित्येनासंबद्धप्रलापःस्यादिति दूषितवान वेंकटनाथः॥ उत्तरार्धं पूर्वार्धस्य हेतुकथनरूपतयैव व्याख्येयमिति नास्ति निर्बन्धः । किमेवं राजशासनं ॥ तर्हि किमिति शंकराचार्यो वैपरीत्येन व्याचष्ट इति नालोचितमनेन ॥ पूर्वार्धोत्तरार्धयोस्संबन्धस्तु सुगमः यतो नैनमिति भगवद्देहस्य छेदनाद्यगोचरत्वमुक्त्वा जीवोप्यच्छेद्यत्वादिगुणक इत्युक्तम् । एतदुपरि ईश्वरसाम्ये शङ्किते सदा भगवदधीनत्वं प्रसाध्य साम्यशंकामपनुद्य जीवाहंकारखण्डनं कृतम् । एवं संगतिमजानानः अनिर्लज्जं दूषणमाह । अत्र कस्यवचनमसंबद्धप्रलाप इत्यूह्यतां नाम ॥ यत्तूक्तमनेन दूषकेण जीवास्वातन्त्र्यं शोकपरिहारायानुपयुक्तमिति, तन्मन्दम् । अपरिहार्यार्थे न शोकः कार्य इति वक्ष्यमाणन्यायस्यात्राप्यनुसन्धेयत्वात् ॥ जीवस्य भगवदधीनत्वात्सर्वव्यापारस्य तन्नियम्यत्वेन युद्धकरणे न शोकः कार्य इत्याशये काऽनुपपत्तिः ? ॥ जीवः परतन्त्रः,भगवानेव स्वतन्त्रः तत्पूजाजन्यप्रसादद्वाराऽपरोक्षज्ञानं मोक्षश्च भवति,

आत्यन्तिकशोकनिवृत्तिसुखावाप्तिरूपो मोक्षः जीवास्वातन्त्र्यभगवत्स्वातन्त्र्यज्ञानफलं, इति प्रकरणाशयः। "नानुशोचितुमर्हसि" इति प्रसक्तानुशोको हि सांसारिकदुःखं न केवलं युद्धजन्यम्।

किंचायं पृच्छति। सप्तदशे श्लोके "येन ततं" इति ब्रह्मपरतया व्याख्यायेह जीवपरतया व्याख्याने को हेतुः इति ॥ प्रकरणे भगवतो जीवस्य चोभयोः प्रसक्तत्वं गीतातात्पर्ये विस्तरतः प्रतिपादितं द्रष्टव्यम्। एतेषां पदानां स्वरसतः प्राप्तोऽर्थः कुतस्त्यज्यते इति प्रश्नश्चानेन कृतः॥ अयमत्र प्रष्टव्यः "नित्यत्वं सर्वदैकरूपत्वं नत्वविनाशित्वम। तस्यैव परमसाध्यत्वेन हेतोस्साध्याविशेषात्" ॥ इति वेंकटनाथोक्तेर्नित्यशब्दस्य स्वरसत. प्राप्तोऽर्थः किमिति परित्यक्तः? ॥ अतीतेषु श्लोकेषु बहुधा शब्दतोऽर्थतश्च नित्यत्वमुक्त्वा पुनः नित्य इत्युक्तेरसामंजस्यादर्थान्तरवचनं युक्तमेवेति समाधाने समं प्रकृतेपि 'नित्यस्सर्वगतस्स्थाणुः' 'अचलः' 'सनातन इति त्रयाणामपि विशेषणानां विष्णुपुराणवचनमनुसृत्यार्थो वर्णितः। प्रमाणवचनं चोदाहृतम्। अनेन छिद्रान्वेषिणा तन्न दृष्टं इति भाति। अचलपदस्य संकोचः सनातनशब्दस्याशंकिताशब्दार्थश्च, प्रमाणवाक्य एव दृश्यते। अवयवव्युत्पत्तेः प्राप्तमर्थमशब्दार्थमपण्डित एव मन्यते इत्यास्तां विस्तरः॥

**अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते।**
**तस्मादेनं विदित्वैवं नानुशोचितुमर्हसि ॥ २५॥**

वि० ॥ नन्वणोर्जीवस्याधारः परमात्मा सर्वगतश्चेत्कुतस्तथा न दृश्यते इत्यत आह॥ अव्यक्तोऽयमिति। अयं सर्व-

गतपदेन प्रकृतो हरिः ॥ ननु नैनमिति श्लोके देहतोऽपि छेदाद्यभावात्स्वतन्त्रो हरिरित्युक्तम् ॥ देहवान् सर्वगतश्चेत्कथमव्यक्त इत्यतोऽचिन्त्योऽयमिति ॥ अचिन्त्यशक्तिक इत्यर्थः । एतेन हरेरव्यक्तत्वे तद्दर्शनश्रुत्यप्रामाण्यमिति निरस्तम् ॥ तदाह सूत्रे ॥ ॐ "अतोऽनन्तेन तथाहि लिङ्गं" इति ॥ अचिन्त्यशक्तेः प्रतिबन्धे नाशे वा तस्य प्रतीतिप्रसङ्ग इत्यत उक्तं अविकार्योऽयमिति । सा शक्तिर्नैकदाप्यन्यथा भवतीत्यर्थः । कुत एतदच्छेद्यदेहत्वादीत्यत उक्तं उच्यत इति ॥ सदेहः सुखगन्धश्चेत्यादितात्पर्योदाहृतश्रुतिष्वेतत्सर्वं हरेरुच्यत इत्यर्थः ।

अयमयमिति पृथग्वचनं सर्वरूपाणामेवंभावप्रदर्शनार्थं ॥ तेन अयमयमव्यक्तोऽयमयमचिन्त्योऽयमयमविकार्यः इति इदंशब्दो वीप्सारूपेणानेकरूपपरामर्शीति सूचितम् ॥ नैनमित्यत्रापि पूर्वश्लोके एनमेनमिति बहुशब्दयोगेन बहुरूपपरामर्श इत्युक्तं भवति ॥ अन्यथा नञः एनामित्यस्य च पुनः पुनरुक्तिरयुक्ता स्यादिति भावः । एवं सर्वशंकोद्धारेणात्मनित्यत्वं प्रतिपाद्योपसंहरति । तस्मादिति ॥ बिंबोपाधितत्सन्निधिनाशनिमित्तस्य शापादिनिमित्तस्य शस्त्रास्त्रादिनिमित्तस्य च नाशस्याभावेनात्मनो नित्यत्वादेनं जीवं एवं नित्यत्वादिना विदित्वा शोचितुं नार्हसीति ॥ अथवा अस्त्वेवं भगवानेव नित्यः सर्वगतस्थाणुरित्यादावुक्तदिशा

स्वतन्त्रः ॥ ततश्च किमित्यत आह । तस्मादिति । हरेरेव सर्वस्वतन्त्रत्वेनाखिलदुःखनिवृत्तिविशिष्टपुमर्थप्रदातृत्वात् एवं युद्धादिकर्मणाऽव्यक्तत्वादिरूपेणैनं भगवन्तं ज्ञात्वा शोचितुं संसारदुःखमनुभवितुं नार्हसि मुक्तो भविष्यसीत्यर्थः। अत उक्तरूपेण तं ज्ञात्वा युद्धादिस्वकर्मणा तमाराध्याशेषदुःखं परिहरेति भावः ॥ २५ ॥

शं ॥ किञ्च अव्यक्तोऽयमिति ॥ अव्यक्तः सर्वकरणाविषयत्वान्न व्यज्यते इति अव्यक्तोऽयमात्मा । अत एवाचिन्त्योऽयं। यद्धीन्द्रियागोचरं वस्तु तच्चिन्ताविषयत्वमापद्यते। अयन्त्वात्माऽनिन्द्रियगोचरत्वादचिन्त्यः । अत एवाविकार्यः । यथा क्षीरं दध्यादिना विकारि न तथाऽयमात्मा निरवयवत्वाच्चाविक्रियः। न हि निरवयवं किञ्चिद्विक्रियात्मकं दृष्टं ॥ अविक्रियत्वादविकार्योऽयमात्मोच्यते तस्मादेवं यथोक्तप्रकारेणैनमात्मानं विदित्वा त्वं नानुशोचितुमर्हसि ॥ २५ ॥

रा० ॥ छेदनादियोग्यानि वस्तूनि यैः प्रमाणैर्व्यज्यन्ते तैरयमात्मा न व्यज्यते इत्यव्यक्तः । अतः छेदादिविजातीयः अचिन्त्यश्च । सर्ववस्तुविजातीयत्वेनेतरस्वभावयुक्ततया चिन्तयितुमपि नार्हः॥ अतश्चाविकार्यः ॥ विकारानर्हः तस्मादुक्तलक्षणमेनमात्मानं विदित्वा तत्कृते नानुशोचितुमर्हसि ॥ २५ ॥

विचारः

अच्छेद्यत्वादाद्यत्वाक्लेद्यत्वाशोष्यत्वोपपादकतयैव नित्यत्वाद्यष्टौ हेतवः प्रसक्ता इति संगतिं भावयित्वा छेद्यत्वादिप्रतिपादकमानाभावनिरूपणेन वा छेद्यभूतस्थूलसूक्ष्मकारणशरीरवैलक्षण्यनिरूपणेन वा अव्यक्तत्वादिहेतुत्रयं स्थापयत्यच्छेद्यत्वादिकं इति परे मन्यन्ते ॥ तत्राद्यः छेद्यत्वादौ मानाभावपक्षो रामानुजाचार्यमधुसूदनादिभिरवलंबितः । द्वितीयस्तु प्राकृतशरीरवैलक्ष्यण्यपुरस्कृतः पक्षः शङ्करानन्दनीलकण्ठादिभिराश्रितः ॥ आद्यो यथा ॥ अव्यक्तशब्देन छेदनादिव्यंजकप्रमाणैरव्यज्यत्वं बोध्यते । अचिन्त्यशब्देन सर्ववस्तुविजातीयतया तत्तत्स्वभावयुक्ततया चिन्तयितुमप्यनर्हत्वम् । अविकार्य इति विकारानर्हत्वं । इति रामानुजाचार्यः ॥ अस्मिन्नेव पक्षे "अव्यक्त इति प्रत्यक्षागोचरत्वं अचिन्त्यइत्यनुमानबाह्यत्वं निरूपितं, अप्रत्यक्षस्यापीन्द्रियादेस्सामान्यतोदृष्टानुमानविषयत्वं दृष्टम् ॥ तद्व्यावृत्त्यर्थमुक्तम् अविकार्योऽयमिति ॥ यद्विक्रियावच्चक्षुरादिकं तत्स्वकार्यान्यथानुपपन्त्या कल्प्यमानर्थापत्तेस्सामान्यतोदृष्टानुमानस्य च विषयो भवति ॥ अयं तु न विकार्यः ार्थापत्तेः सामान्यतोदृष्टानुमानस्य च विषयः ॥ लौकिकशब्दस्यापि प्रत्यक्षादिपूर्वकत्वात्तन्निषेधेनैव निषेधः ॥ तस्मात्प्रत्यक्षानुमानार्थापत्तिपौरुषेयागमानां छेद्यत्वादावप्रवृत्तेरच्छेद्यत्वादिकं पर्यवसितं भवति" इति मधुसूदनादयः ॥

द्वितीयःपक्ष एवमुपपादितः ॥ "व्यक्तं स्थूलशरीरं तदन्योऽयं प्रत्यगात्मा अव्यक्तः । रूपादिप्रकाशकार्येणानुमेयं चिन्तायोग्यम् । चक्षुरादिसमुदायात्मकं लिङ्गशरीरं अप्रत्यक्षं अचिन्त्यं । स्थूलसूक्ष्मकार्यभावेनावस्थानं यदर्हति तद्विकार्यं त्रिगुणात्मकं मूलाज्ञानं कारणशरीरं सुप्तोत्थितस्य न किंचिदवेदिषमिति परामर्शदर्शनादहं न जानामि इत्यनुभवाच्च साक्ष्येकगम्यम् ॥ ततोऽप्यन्यः अविकार्यः" इति नीलकण्ठः । "अहंकारममकारादिभिर्व्यज्यते

इति व्यक्तं लिङ्गशरीरं तद्धर्मनदत्वस्थामाक्षित्वेन ततो भिन्नोऽव्यक्तः ॥ अदृष्टादिवत् कार्येण शोकमोहादिना चिन्त्यते अनुमीयते इति चिन्त्यमव्याकृतं अज्ञानं कारणशरीरं । तद्भिन्नोऽचिन्त्यः । निरवयवत्वादात्माऽयं विकृतेरविषयत्वेनाविकार्यः" इति शंकरानन्दः ॥ अत्रोच्यते ॥ मानाभावपक्षः अनुपपन्नः ॥ अप्रमेयस्येति पूर्वमेवात्मनः प्रमाणागोचरत्वस्य तद्रीत्योक्तत्वात् । अथोच्येत अप्रमेयस्येत्यात्मनस्सर्वथा मानग्राह्यत्वमुक्तं इह तु छेदनादौ मानाभाव उच्यते इति । तन्मन्दम् । सर्वथा प्रमाणागोचरत्वनिषेधेनैव चारितार्थ्यात् विशेषनिषेधस्य निष्प्रयोजनत्वात् । ब्रह्मसूत्रेषु जन्माधिकरणे जगज्जन्मादिकर्तृत्वमभिधाय शास्त्रकर्तृत्वमभिहितं शास्त्रयोनित्वाधिकरणे इति वदतामद्वैतव्याख्यातॄणामियं सामान्यविशेषविवक्षा नसमीचीना भायात् । नत्वाग्रहहीनानाम । अर्थापत्तेरनुमानान्तर्भूतत्वेन अचिन्त्य इत्यनुमानसामान्यनिषेधानन्तरं अविकार्य इत्यर्थापत्तिनिषेधश्चानुपपन्नः ॥ प्राकृतग्राहिप्रमाणाग्राह्यतया अव्यक्तत्वादिकं संभवतीति रामानुजाचार्यव्याख्यानमपि चिन्त्यं ॥ "अहं जानामि इत्यादिरूपेणैव ह्यात्मन उपलंभः ॥ प्राकृतवस्तूनां त्वन्यथा" इति देशिकेनोपपादितम् । आत्मप्राकृतयोर्विजातीयप्रमाणवेद्यत्वमात्रेण कथमात्मनोऽव्यक्तत्वादिकं संभवतीति ज्ञायते ॥ नहि घटवन्ह्योः प्रत्यक्षानुमानरूपविजातीयप्रमाणगोचरतयाऽन्यतरस्याव्यक्तत्वं युज्यते इति ॥

द्वितीयोऽपि प्राकृतशरीरवैलक्षण्यपुरस्कृतः पक्षः चिन्त्यः ॥ अव्यक्त इत्यनेन स्थूलव्यावृत्तिरिति नीलकण्ठः ॥ लिङ्गशरीरव्यावृत्तिरिति शङ्करानन्दः ॥ पक्षद्वयमपि निर्बीजं प्रमाणानुदाहरणात् ॥ एवं अचिन्त्य इत्यनेन लिङ्गशरीर व्यावृत्तमिति नीलकण्ठः । कारणशरीरमिति शङ्करानन्दः । नियामकं प्रमा न स्फुटम् । स्वव्यूह एवायमभिप्रायभेदस्संशयापादक एव स्यात् प्राकृताव लक्षणत्वस्य संगतिरपि न स्फुटा ॥ "देहिनोऽस्मिन्" "वासांसि जीर्णानि

इति देहात्मनोर्विवेकस्य समर्थितत्वेन व्यक्तचिन्त्यविकार्यभूतप्राकृतवैलक्षण्यं किमिति पुनरुपदिश्यते ॥ अथोच्येत अच्छेद्यत्वाद्युपपादनाय तदवसरे पुनरुक्तिस्सार्थिकेति तदपि चिन्त्यम् । अच्छेद्यत्वाद्युपपादकतयैवायं श्लोको व्याख्येय इति को निर्बन्धः । अन्यथाऽपि व्याख्याने बाधकाभावात् ।

किंचात्मनस्सर्वथा प्रमाणागोचरतां ये वदन्ति तेषां "उच्यते" "विदित्वा" इति पदे गलग्राहिणी ॥ "अव्यक्तादिनिषेधमुखेन न तु शृङ्गग्राहिकयाऽयमेवंविध इति विधिमुखेन श्रुतिर्वक्ति" इति व्याख्याति नीलकण्ठः । तन्न ॥ नह्यव्यक्तादिनञ्घटितविशेषणैरेव परमात्मा श्रुतिषु प्रतिपादितः । सत्यं ज्ञानमनन्तं ब्रह्मेति सत्यत्वादिविशेषणैरपि बोधितत्वात् । न च वाच्यं काकवद्देवदत्तगृह इतिवत् सत्यत्वादिकं तटस्थलक्षणं इति । लाक्षणिकपक्षस्य सुधायां जन्माधिकरणे विस्तरतो निरस्तत्वान्नात्रानूद्यते ॥ वस्तुतस्तु ब्रह्मणः ईक्षणीयत्वाद्वाच्यत्वं "ईक्षतेर्नाशब्दं" इति सूत्रेण समर्थितम् ॥ अवाच्यत्वं अज्ञेयत्वं च यत्क्वचिदागमेषूक्तं दृश्यते तदपि पराभिमतारुंधतीदृष्टान्तनिरूपितलक्षणायाः साधकं न भवति । "(अप्रसिद्धेरवाच्यं तद्वाच्यं सर्वागमोक्तितः ॥ अतर्क्यं तर्क्यमज्ञेयं ज्ञेयमेवं परं स्मृतं" इति गारुडे उक्तत्वात् ।)

प्रकृतः अव्यक्तत्वादिगुणविशिष्टो न जीवः ॥ किंतु विष्णुरेव ॥ अयं इति सर्वगतत्वेन विवक्षितो हरिः ॥ अणोर्जीवस्याधारः परमात्मा सर्वगतश्चेत्कुतस्तथा न दृश्यते इत्याकाङ्क्षां वारयति अव्यक्तोऽयमिति ॥ नैनमिति श्लोके देहतोऽपि छेदाद्यभावात्स्वतन्त्रो हरिरित्युक्तम् ॥ देहवान् सर्वगतश्चेत् कथमव्यक्त इत्याकाङ्क्षां वारयति अचिन्त्योऽयमिति ॥ अचिन्त्यशक्तेः प्रतिबंधे नाशे वा तस्य व्यक्तत्वप्रसंग इत्याकाङ्क्षां वारयति अविकार्योऽयमिति ॥ तथाच भगवान् अदृष्टः अचिन्त्यशक्तिकः ॥ सा शक्तिर्नकदाप्यन्यथा ।

भगवन्महिमा वर्णितः ॥ "सदेहस्सुखगन्धश्च ज्ञानभास्सत्पराक्रमः" इत्यादीनि अविकार्यत्वे प्रमाणानि ज्ञेयानि ॥

ननु हरिरव्यक्तश्चेत् कथं तस्य दर्शनं उपपद्यते ॥ कामे शिवे प्रधाने नामरूपाभ्यामव्याकृते अज्ञाने सूक्ष्मशरीरे अस्पष्टे अव्यक्तशब्दस्य रूढत्वादिति चेत् विष्णावेव महायोगेन विद्वद्रूढ्या च तस्य परममुख्यवृत्तिरित्यभ्युपगन्तव्यम ॥ "अनेकमूर्तिरव्यक्तः शतमूर्तिश्शताननः" इति विष्णुसहस्रनामसु पाठात् ॥ तथैव ब्रह्मसूत्रेषु ॥ III 2, 23, 24, 25, 26, 27, ॥ "तदव्यक्तमाह हि" इति सूत्रेणाव्यक्तत्वं प्रतिपादितम् । "अरूपमक्षरं ब्रह्म मदाऽव्यक्तं च निष्कलं" इति प्रमाणचात्रार्थे ॥ पूजाद्युत्सवसंभ्रमेण व्यक्तो भवतीति चेन्नेत्याह । "अपि संराधने प्रत्यक्षानुमानाभ्यां" इति ॥ डाम्भिकाराधनेन नायं प्रसन्नः । "न तमाराधयित्वापि कश्चिद्व्यक्तीकरिष्यति । नित्याव्यक्तो यतो देवः परमात्मा सनातनः" ॥ इति ब्रह्मवैवर्तोक्ते । (इन्धनगताग्निवदप्रकाशः प्रकाशश्च स्यादिति चेन्नेत्याह "प्रकाशवच्चावैशेष्यम्" इति । "स्थूलसूक्ष्मविशेषोऽत्र न क्वचित्परमेश्वरे । सर्वत्रैकप्रकारोऽसौ सर्वरूपेष्वजो यतः" इति गारुडे ॥ "अव्यक्तव्यक्तभावो वा न कचित्परमेश्वरे । सर्वत्राव्यक्तरूपोऽयं यतएव जनार्दनः" ॥ इति कौर्मे ।) (एवं नित्याव्यक्तत्वे सिद्धे भगवदपरोक्षज्ञानमसंभवीति प्राप्तम् )। अत्र वक्तव्यम् । अव्यक्तत्वेऽपि भगवान् भक्तिवशगो भवति । तदा व्यक्तश्च स्यादेवेति ॥ यथोक्तम् "प्रकाशश्च कर्मण्यभ्यासात्" इति )। एवं यद्यप्रत्यक्षः प्रत्यक्षश्च कथं तर्हि व्याहतिपरिहार इति चेदुक्तम् ॥ "अतोऽनन्तेन तथाहि लिङ्गम्" इति । अतः व्यक्तत्वे अव्यक्तत्वे च प्रमाणभावात् अनन्तेनैव व्यक्तत्वं पुरुषप्रयत्नेनाव्यक्तत्वं च ज्ञायते । अचिन्त्यशक्तिमत्त्वात् ॥ इति सर्वमवदातम् ॥ अतएव गीतायां "अव्यक्तः" "अचिन्त्यः" इति विशेषणाभ्यां उदाहृतसूत्रार्थानुरूपतमवोचमाह ॥

**अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।**
**तथापि त्वं महाबाहो नैनं शोचितुमर्हसि ॥२६**

वि० ॥ अस्त्वेवमात्मनो नित्यत्वं ॥ अथापि देहयोगवियोगरूपजनिमृती स्त एव । युद्धे च मृतिर्नियता । अतस्तन्निमित्तं च दुःखं मदीयानां भविष्यतीति मे शोक इत्यत आह अथचेति ॥ नित्यशब्दोऽत्रावधारणे ॥ एनं जीवं नित्यजातं देहयोगरूपजनिमन्तमेव, नित्यं मृतं देहवियोगरूपमृतिमन्तमेव त्वं मन्यसे चेत्तथापि हे महाबाहो एनं जीवं शोचितुं नार्हसीत्यर्थः ॥ २६ ॥

श०॥ आत्मनः अनित्यत्वमभ्युपगम्येदमुच्यते अथचैनमिति ॥ अथचेत्यभ्युपगमार्थः । एनं प्रकृतमात्मानं नित्यजातं लोकप्रसिद्ध्या प्रति अनेकशरीरोत्पत्तिं जातो जात इति वा मन्यसे तथा प्रतीततद्विनाशं नित्यं वा मन्यसे मृतं मृतो मृत इति तथापि भाविन्यपि आत्मनि त्वं महाबाहो नैवं शोचितुमर्हसि । जन्मवतो नाशो नाशवतो जन्मचेत्येताववश्यं भाविनाविति ॥

रा० ॥ अथ नित्यजातं नित्यमृतं देहमेवैनमात्मानं मन्यसे न देहातिरिक्तमुक्तलक्षणम् । तथापि एवमतिमाव शोचितुं नार्हसि ॥ परिणामस्वभावस्य देहस्योत्पत्तिविनाशयोरवर्जनीयत्वात् ॥

## विचारः

### श्रीमध्वव्याख्यानाशयः ।

अथशब्दस्य पक्षान्तरारंभप्रश्नाभ्युपगमार्थेषु संभावितेषु पक्षान्तरा-त्र विवक्षितः ॥ चेत्यप्यर्थे ॥ अस्तु आत्मनित्यत्वं । तथापि देह-योगवियोगाख्यजनिमृती स्त एव ॥ तस्माद्दुःखमवर्जनीयम् ॥ युद्धे च मृति-र्नियता । एवं अङ्गीकृत्याऽऽत्मानित्यत्वं प्रकारान्तरेण शोकशङ्कायां कृतायां तत्परिहाराय श्लोकत्रय प्रवृत्तम् । नित्यशब्दो नियमार्थकः । "नित्यं सना-तनं प्रोक्तं नित्यं नियतमेव च" इति शब्दनिर्णये ॥ नित्यशब्दार्थ एव "ध्रुवं" इत्यनेनोत्तरश्लोके अनूदितः इति ॥

### ॥ परव्याख्याशयः ॥

१. दुर्बोधत्वादात्मवस्तुनोऽसकृच्छ्रवणेऽप्यवधारणासामर्थ्यात्पक्षान्तर-मवलम्बमानमर्जुनमालक्ष्य वा आत्मयाथात्म्यविज्ञानस्यात्मप्रसादेन विना लब्धुमशक्यत्वादर्जुने तदनुदयमालक्ष्य वा भगवान् प्रकारान्तरेण तच्छोकमपा-कर्तुमिदमाहेति मधुसूदनशङ्करानन्दयोरवतारिका ॥ परे अथशब्दमभ्युप-गमार्थमादाय अभ्युपगतानि मतानि सौगतादीनि स्युरिति मन्यन्ते ॥ तथाहि ॥ नित्यजातं इत्यत्र नित्यं सर्वदा जातं इति व्युत्पत्त्या क्षणिकविज्ञानवादोऽ-भ्युपगतः ॥

२. नित्यं नियमेन जातं इति देहात्मैक्यपक्षो लोकायतवादोऽभ्युपगतः।

३ नित्यश्चाभावपूर्वदेहेंद्रियसंबन्धाज्जातश्चेति तार्किकवादः स्वीकृतः ।

४. देहातिरिक्तोऽपि देहेन सह जायते तेन सह नश्यतीति केचित् । तदभ्युपगमः

५. सर्गाद्यकालएवाकाशवज्जायते देहभेदेप्यनुवर्तमानएवाऽऽकल्प स्थायी नश्यति प्रलये इत्यन्ये । अयमपि स्वीकृतः ।

एषु पक्षेषु प्रकृतश्लोकेऽभ्युपगतः पक्षः चतुर्थएवेति श्रीधरशङ्करानन्दौ ॥ प्रथमः चार्वाकपक्ष एवेति रामानुजाचार्यः ॥ प्रथमद्वितीयतृतीया इति नीलकण्ठः । पञ्चानामपि ग्रहणमिति मधुसूदनः ॥

तथाच वेदान्तविरुद्धं आत्मानित्यत्वं अभ्युपगतं इत्येतेषां सर्वेषां हृदयं अवगम्यते । अत्रार्थे दार्ढ्यार्थं वेङ्कटनाथः "वा" इत्युपरि काकुं कल्पयति । काका वेदवाह्याभिमतं प्राङ्निरस्तं पक्षं वस्तुतो न मन्यस इत्यर्थो लभ्यत इत्याह । अन्ये "महाबाहो" इत्यत्रापहासध्वनिं कल्पयित्वा कुमताभ्युपगमे निन्दां ध्वन्यमानां पश्यन्ति ॥ एतत्सर्वमनुपपन्नम् । धारणाद्यसमर्थमधिकारिणमर्जुनमधिकृत्य किमिति भगवानुपदिदेश ॥ उपदिष्टमर्थं न जग्राहार्जुन इति कथं ज्ञायते ॥ ज्ञानस्यात्मप्रसादसाध्यत्वेन तादृशप्रसादस्याविषयमर्जुनमालक्ष्य पक्षान्तरमाह भगवानिति शङ्करानन्दस्यावतारिकाशयः सर्वथानुपपन्नः । निर्धर्मकोह्यात्मा स कदा कं प्रति प्रसादोन्मुखो भवति ॥ आत्मशब्देन सगुणब्रह्मणो ग्रहणेऽपि श्रीकृष्णेन सगुणब्रह्मणा स्वचेलं प्रति कुतो न प्रसाद्येत ॥ अर्जुनस्य कुतः प्रसादानर्हत्वम् । यदि जातस्य ध्रुवो मृत्युरित्यादियुक्तिनिरूपणवाक्यानि कुमताभ्युपगमपक्षेण विना नोपपद्येरन् तर्ह्यगतिकगतित्वादभ्युपगमवादोऽयमवश्यमाश्रयणीयः स्यात् ॥ नित्यत्वेऽप्यात्मनो देहयोगवियोगावादाय शोकशंकेत्युक्तौ का हानिः । एवमन्यथोपपत्तौ सत्यां उपदिष्टं सर्वं विस्मृत्यावज्ञाय वा कुमतान्यवलंब्याऽऽचिक्षेपेति कुतः कल्प्यते ? । न केवलं न्यायनिरूपणवाक्यानि "जातस्य ही" त्यादीनि सौगतादिपक्षगर्भितां शङ्कां नापेक्षन्ते किं तु तद्विरुद्धानि नामेति ज्ञायते ॥ आत्मनः अनित्यत्वे "ध्रुवञ्जन्म मृतस्य च" "अव्यक्तादीनि" "व्यक्तमध्यानि" "अव्यक्तनिधनानि" इति वाक्यान्यनुपपन्नानि स्युः ॥ (क्षणिकविज्ञानवादे चार्वाकसमये देहेन सहात्मनो जनिमृतिवादे च कथं

मृतस्य जन्म ॥ शङ्करभाष्ये "जन्मवतो नाशः नाशवतो जन्म चेत्यवश्यं-भाविनौ" इति शोकस्याकार्यत्वे उपपादनं सूचितम्। नाशवतो जन्म केन कुमतेनाङ्गीकृतम्। न तावत्सौगतेन चार्वाकेण वा। नापि देहव्यतिरिक्तोऽप्यात्मा देहेन सह जायते तेन सह म्रियते इति वादिना। आकल्पस्थाय्यात्मेति वादा-भ्युपगमे को लाभः। आत्मनित्यत्वमेवाङ्गीकृत्य शङ्कत्युक्तौ किमपराद्धम्? ॥ तस्मादात्मानित्यत्वपक्षमाश्रित्य शङ्कासमाधाने इति रामानुजीयशङ्करादि व्याख्यानान्यनुपयुक्तान्ययुक्तानि च ॥

वेदबाह्योत्प्रेक्षितदेहात्मवादावलंबनेनात्मनाशं मन्यमानं प्रति वेद-प्रसाध्यं "ध्रुवं जन्म मृतस्य च" इति मृतस्य पुनर्जन्मवर्णनमयुक्तमित्यालो-च्याऽऽत्यन्तिकापलापभीरुणा वेङ्कटनाथेन मतद्वयावलंबनेन शोकशङ्का उपपा-दिता (Page 106) ॥ "देहस्यैवात्मत्वादात्मनो जन्ममरणे स्त इत्येकं मतं ॥ देहातिरिक्तो नित्य एवचात्मा, श्रुतिप्रामाण्यात्। तस्यैव तु देहसंयोगवियो-गात्मके जन्ममरणे अपि स्तः इत्यपरं मतम् ॥ आद्यमते नित्यजातं मृतं इत्यस्यावश्यजातमवश्यं मृतं इत्यर्थः ॥ द्वितीयमते नित्यश्चासौ जातश्च स्वरूपेण नित्यमपि देहयोगरूपजन्मवन्तं तद्वियोगरूपमरणवन्तं चेत्यर्थः। तत्र चाद्यमते भीष्माद्यात्ममरणप्रयुक्त एवार्जुनस्य शोकः। द्वितीयमते तु मृतस्य श्रुतिबलात्पूर्वदेहकृतकर्मफलभोगार्थं देहान्तरसंबन्धरूपं गर्भवासादि-क्लेशास्पदं च पुनर्जन्मावश्यंभावीति भीष्माद्यात्मनामपि तथाविधे मरण-जन्मनी मन्यमानस्यार्जुनस्य तदुभयप्रयुक्तः शोकः" इति ॥ पञ्चकुमता-लंबिपूर्वपक्षत्वेन प्रथमं व्याख्याय मधुसूदनोऽप्यनयैव दिशा पुनरालोच्योक्त-द्वयपक्षपातं निरूप्यास्वरसादन्ततो देहयोगवियोगपक्षमेव दृढं जग्राहेति ज्ञायते ॥ यथोक्तम् "अथवा आत्मनित्यत्वपक्ष एव श्लोकद्वयम्। अर्जुनस्य [illegible]मासम्भवात् ॥ (अक्षरयोजना तु नित्यश्चासं

देहेन्द्रियादिसंबन्धवशाज्जातश्चेति नित्यजातः । तमेनमात्मानं नित्यमपि सन्तं जातं मन्यसे, तथा मृतमपि सन्तं मृतं चेन्मन्यसे तथापि" इति ॥ मूढइति प्रसादागोचर इति चार्जुनोपालंभो यः कृतः तस्यायुक्तत्वमनेन स्पष्टम् ॥ आत्मनित्यत्वं ज्ञात्वा तदुपरिशङ्केति श्रीमदाचार्यः ॥ आत्मानित्यत्वमभ्युपगम्येति शङ्करचार्यरामानुजाचार्यौ ॥ "ध्रुवं जन्म" "अव्यक्तादीनि" इति वाक्यानि प्रदर्श्य जयार्येणैतत्प्रत्याख्यातम् ॥ प्रत्याख्यानवलं स्वाचार्यभाष्यतिरस्कारंचासहमानैः मध्यस्थमार्गतया मतद्वयावलंबनेन शङ्कति मधुसूदनादिभिस्समाहितं दृश्यते ॥ अत्र तावद्देहात्मैक्यवादस्य स्वीकारे उत्तरश्लोकयोः विरोधो दुष्परिहर इति तदभ्युपगमस्सर्वथाऽनुपपन्न एव ॥

प्रकृतश्लोके द्वितीयार्धे "नैनं शोचितुमर्हसि" इतिपाठं विहाय "नैवं शोचितुमर्हसि" इति केचित्पठन्ति ॥ नैनमित्येव पाठो विवृतिसम्मतः। श्रीधरटीकापुस्तकेषु हस्तलिखितेषु नैनमिति पाठो दृश्यते ॥ नैवं शोचितुमिति पठितारः एवंशब्दाशयं वहुधा कल्पयन्ति ॥ "एवमतिमात्रं नशोचितुमर्हसि" इति रामानुजाचार्यः ॥ "धनुर्बाणत्यागपूर्वकरथोपरिनिपातसाश्रुनेत्रत्वादिरूपेणानेन प्रकारेण शोचितुं नार्हसि ॥ अनेन प्रकारेणेत्युक्त्या प्रकारान्तरेण शोकोऽभ्यनुज्ञायते ॥ तेन सकलप्रकारकसमूलशोकनिर्मूलने पूर्वोऽपदिष्टनिर्विकारात्मतत्त्वाद्वैतज्ञानमेवोऽपायः ॥ अयन्तु तस्मादपरिहार्ये इत्यादिर्न तादृश इति ध्वन्यते" ॥ इति वेंकटनाथः ।

मधुसूदनस्त्वाह "त्वमपि नश्वर एव सन्नार्हस्येवंप्रकारमनुशोकं कर्तुम् ॥ क्षणिकत्वपक्षे, देहात्मवादपक्षे, देहेनसह जन्मविनाशपक्षे च, जन्मान्तराभावेन पापभयासंभवः ॥ क्षणिकत्वपक्षे च दृष्टमपि दुःखं न संभवति बन्धुविनाशदर्शित्वाभावादित्यधिकम् । पक्षान्तरे दृष्टदुःखनिमित्तं शोकमभ्यनुज्ञातुं एवंकारः" इति ॥ तथाच शोकमतिक्रान्तसीमानं दृष्ट्वा

ईषच्छोकमभ्यनुज्ञाय अधिकं न्यवारयद्भगवानिति परभावोऽवगम्यते ॥ श्लोके "एवं" इति पठनात्कथंचिद्गूढार्थप्रकाशस्यावकाशसंभवेऽपि उत्तरश्लोके तदुत्तरे च नैवमवकाशोऽस्ति ॥ तत्राहि "नत्वं शोचितुमर्हसि" "तत्र का परिवेदना" इत्यसंकुचिततया शोकस्याकर्तव्यत्वमुक्तम् ॥ उपक्रमापेक्षया उपपत्तिनिरूपकवाक्यस्य प्राबल्येन तात्पर्यव्यञ्जकत्वं प्रसिद्धम् ।

किंचिच्छोकस्याभ्यनुज्ञाप्रदाने को हेतुः । सीमानमतिक्रम्य शोकनिमज्जनं अयुक्तमिति कुतः स्पष्टमवगम्यते ॥ सर्वथा शोकनिवृत्तिर्हि प्रसक्ता प्रकृतोचिता च ॥ अपरिहार्यत्वन्यायेन सर्वथा शोकनिषेधोपदेशस्य संगतत्वे उचितत्वे च सति तं विहाय किमिति भगवान् किंचिच्छोकमनुजज्ञे ॥ तस्मात् "एनं" इत्येव पाठः साधुः॥ एवं इति पाठेऽपि किञ्चिच्छोकाभ्यनुज्ञां विनैवार्थो वर्णनीयः ॥

## जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
## तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥२७॥

वि० ॥ पूर्वार्धेनार्जुनशङ्कामनूद्योत्तरार्धेन तथापि त्वं शोचितुमर्हसीत्येवोक्तम् ॥ न तु तत्र हेतुरुक्तः । अतः ोकाभावे हेत्वाकाङ्क्षायां जन्ममरणयोर्यावन्मोक्षं नियतत्वादिति हेतूक्तिपूर्वकं साध्यमाह ॥ जातस्येति ॥ ध्रुवो नियत इत्यर्थः । मृत्युः मृतिः तस्मात् जन्ममृत्योर्नियतत्वादित्यर्थः ॥

शा० ॥ तथाच सति जातस्येति ॥ जातस्य हि लब्धजन्मनः ध्रुवः अव्यभिचारी मृत्युः मरणं, ध्रुवं जन्म मृतस्य च ॥ तस्मात् अपरिहार्योऽयं जन्ममरणलक्षणः अर्थः यस्मात् तस्मात् अपरिहार्ये अर्थे न त्वं शोचितुमर्हसि ॥ जन्मवतो नाशः नाशवतो जन्म इति च स्वाभाविकश्चेत् अपरिहार्यः सः अर्थः तस्मिन्नपरिहार्ये अर्थे न त्वं शोचितुमर्हसि ॥

रा० ॥ उत्पन्नस्य विनाशो ध्रुवः अवर्जनीयः उपलभ्यते । तथा विनष्टस्यापि जन्म अवर्जनीयम् ॥ कथमिदमुपपद्यते । विनष्टस्योत्पत्तिरिति ॥ सत एवोत्पत्त्युपलब्धेः । असतश्चानुलब्धेः ॥ उत्पत्तिविनाशादयः सतो द्रव्यस्यावस्थाविशेषाः॥ तन्तुप्रभृतीनि हि द्रव्याणि सन्त्येव रचनाविशेषयुक्तानि पटादीन्युच्यन्ते ॥ असत्कार्यवादिनाप्येतावदेवोपलभ्यते ॥ न हि तत्र तंतुसंस्थानविशेषातिरेकेण द्रव्यान्तरं प्रतीयते ॥ कारकव्यापारनामान्तरभजनव्यवहारविशेषाणामेतावतैवोपपत्तेः न द्रव्यान्तरकल्पना युक्ता ॥ अतः उत्पत्तिविनाशादयः सतो द्रव्यस्यावस्थाविशेषाः । उत्पत्याख्यामवस्थामुपयातस्य द्रव्यस्य तद्विरोध्यवस्थान्तरप्राप्तिर्नाश इत्युच्यते ॥ मृद्द्रव्यस्य पिण्डत्वघटत्वकपालत्वचूर्णत्वादिवत् परिणामिद्रव्यस्य परिणामपरंपरा अवर्जनीया ॥ तत्र पूर्वावस्थस्य द्रव्यस्योत्तरावस्थाप्राप्तिः विनाशः ॥ सैव तदवस्थ-

स्य चोत्पत्तिः ॥ एवमुत्पत्तिविनाशाख्यपरिणामपरंपरा परिणामिनो द्रव्यस्यापरिहार्येति न तत्र शोचितुमर्हसि ॥

विचारः

अतीतपद्यव्याख्याने वेङ्कटनाथमधुसूदनयोराशयनिरूपणावसरे शाङ्कराणान्तावद्देहात्मैक्याभ्युगमपक्षे कुतूहलं न विद्यते इति प्रदर्शितम्। रामानुजाचार्यैस्तु चार्वाकालंबनपक्षमविहायैव चार्वाकमतं तदुपर्यसत्कार्यवादं चाश्रित्य पूर्वपक्षं रचयित्वा अनयोर्द्वितयमेव सत्कार्यराद्धान्तेन प्रत्याख्याति भगवान् जातस्येत्यनेनेति मन्यते ॥ तथाहि ॥ असत्कार्यवादिनो वदन्ति। सदेव नष्टं भवति ॥ असदेवोत्पन्नम्। देहात्मनोरभेदाद्भीष्मध्वंसे तस्य सर्वथा नाशस्सिद्धः। नष्टस्य न कदाप्युत्पत्तिस्संभवेत्। असत एवोत्पत्त्युपलब्धेः। मृतंमृतमेवेति शोको अवर्जनीय इत्येवं प्राप्ते, जातस्यहीति सत्कार्यवादोपदेशेन निरासः ॥ यदुक्तं ध्वंसस्य शोककारणत्वं तन्न ॥ अभावस्य पदार्थान्तरत्वेनानभ्युपगतेः। नास्तित्व्यवहारादिनाप्यभावाख्यस्य पदार्थान्तरत्वेन कल्पनमयुक्तम्। उभयसंप्रतिपन्नविरोध्यवस्थापरंपरैव प्रागभावप्रध्वंसावित्यनेनैव नास्तित्व्यवहारवित्त्योर्निर्वाहात्। विरोध्युत्तरावस्था प्रध्वंसः विरोधिपूर्वावस्था प्रागभावः वस्त्वन्तरगताऽसाधारणविरोधिधर्मएव समानाधिकरणव्यधिकरणनिषेधभेदेनान्योन्याभावोत्यन्ताभावश्च ॥ देशकालसंभेदविशेषस्तत्कृतावस्थाविशेषो वा संसर्गाभावः ॥ प्रतियोग्यादिभेदाच्च पितृत्वपुत्रत्वादिव्यवहारवत् नास्तीत्यादिव्यवहारवैचित्र्यम्। द्रव्यत्वेन भीष्मादीनां न नाशः। किन्तु देहित्वेनावस्थाविशेषस्यैव ॥ अवस्थाभेदरूपपरिणामस्यापरिहार्यत्वेन शोकोऽनुपपन्न इति ॥

अत्रोच्यते ॥ सत्कार्यराद्धान्तनिरूपणस्यात्र का संगतिः। शोकनिवारकतया सार्थक्यायोगात् ॥ द्रव्यत्वेन भीष्मदेहस्य नित्यत्वेऽपि अवस्था-

विशेषाणामुत्पत्तिविनाशयोरङ्गीकृतत्वेन तदपेक्षया शोकस्तदवस्थ एव ॥ स्यादेतत्कथंचिद्यदि साङ्ख्याभिमतं द्रव्यस्य अवस्थाभेदानाञ्च सर्वेषामप्यनागन्तुकत्वं तत्त्वम्। यथाह्यात्मनित्यत्ववर्णनाच्छोको निवारितः तथा देहादिप्राकृतानाञ्च नित्यत्ववर्णनेनेति॥ नैतादृशस्सत्कार्यवादो रामानुजाचार्यसम्मतः॥ अपितु कारकव्यापरादिनैरर्थक्योक्त्या निरस्तश्च॥ अतोऽभिनवोऽयं सत्कार्यराद्धान्तश्शोकशान्तयेऽनुपयुक्तः। अयमाचार्यो "नासतो विद्यते" इति श्लोकव्याख्याने सत्कार्यवादस्य शोकशान्त्यनुपयुक्तत्वेन तत्र प्रकरणासंगतत्वं स्वयमङ्गीकृतवान्॥ तत्पश्यत (पुट ७०)॥ नच वाच्यमस्ति वैषम्यं तत्प्रकरणेऽसंगतत्वेऽपीह संगतं स्यादिति॥ देहात्मविवेकोपपादनद्वाराऽऽत्मनित्यत्वं प्रसाध्य शोकशान्तिस्तत्र प्रसक्ता॥ इह देहात्माऽभेदेऽपि परिणामध्रौव्यविवक्षया अपरिहार्यत्वन्यायेन शोकशान्तिस्संगता॥ ध्रौव्यस्य सत्कार्यवादं विनापि सम्भवेन कुतस्तस्य प्रकरणापेक्षितत्वम्। अथोच्येत, परिणामध्रौव्यमात्रस्य साक्षात्संगतत्वेऽपि प्रसंगप्राप्तं सत्कार्यवादं तत्त्वत्वेन निरूपयतीति तन्न॥ असत्कार्यवादस्य दुष्टत्वाभावात्। "यद्यसन्न विशेषोऽत्र जायते कोऽत्र जायते। व्यक्तावपि समं ह्येतदनवस्थाऽन्यथा भवेत्"॥ इत्यादिब्रह्मतर्कबलात्तस्य दूष्यत्वं निरस्यत्वञ्चासिद्धम्। किं च निरुक्तसत्कार्यप्रक्रियाऽप्रामाणिकी॥ न च प्रकृतश्लोकारूढा भवति॥ अभावस्य पदार्थत्वानिषेधायोगात्। नास्तीति वित्तिव्यवहारयोर्दुरपन्हवत्वात्। घटो नास्तीतिप्रतीतेर्भूतलमात्रविषयत्वादिपक्षाणां तत्त्वसंख्यानादिषु निरस्तत्वात्। विरोध्यवस्थावैचित्र्यालम्बनेन वित्तिव्यवहाराणां नैवोपपत्तिस्स्यात्। अन्यथा अस्तिनास्तीतिव्यवस्थाभङ्गः प्रसज्येत॥ प्रथमोपलब्धौ यः नास्तीति प्रतीयते स अभावः पदार्थविशेष इत्येव तत्त्वम्॥

अस्तु वा मास्त्वभावः॥ ध्रुवं जन्म मृतस्येति सत्कार्यवादस्य कथमक्षरारोहः॥ उत्पन्नस्य भीष्मदेहस्य मृतिः प्रत्यक्षसिद्धा॥ मृतस्य तद्देहस्य

कथमुत्पत्तिः ॥ भस्मावस्थायां भस्मन उत्पत्तावपि न देहत्वेन भीष्मस्योत्पत्तिः परैरप्युच्यते । मृतस्य जन्मेत्यनेन यदवस्थस्य द्रव्यस्य विनाशः तदवस्थस्यैव हि पुनरुत्पत्तिरुक्ताऽवगम्यते ॥ तस्माद्देहभिन्नं देहिनं पुरस्कृत्य तस्यैव नित्यस्य देहाऽपेक्षया जननं मरणं पुनर्जननं इति श्लोकार्थ एवोपपद्यते ॥ जनिमृत्यपरिहार्यत्वन्यायेनैव शोकनिषेधो विवक्षितः । अत्रार्थे अभावः पदार्थो वा न वा सत्कार्यवादस्तत्वं वा असत्कर्यवादस्तत्वं वेत्यादि विचारोऽनुपयुक्तो भाति । सर्वस्य नश्वरत्वमनित्यत्वमादाय वैराग्यबोधकोऽयं श्लोकः। यथोक्तं मोक्षधर्मे (१०४) कोसलाधिपतेः क्षेमदर्शिनः कालकवृक्षीयेण सह संवादे ।

"अनित्यं सर्वमेवैतदहंच मम चास्ति यत् ।
यत्किञ्चिन्मन्यसेऽस्तीति सर्वं नास्तीति विद्धि तत् ॥
एवं न व्यथते प्राज्ञः कृच्छ्रामप्यापदं गतः ॥ १३ ॥

भूत्वाच न भवत्येतत्तथा भूत्वा भविष्यति ।
क नु तेऽद्य पिता राजन् क नु तेऽद्य पितामहः ॥
नत्वं पश्यसि तानद्य न त्वां पश्यन्ति तेऽद्यच ॥ १७ ॥

आत्मनोऽध्रुवतां पश्यस्त्वांस्त्वं किमनुशोचसि ।
बुद्ध्या चैवानुबुध्यस्व ध्रुवं हि न भविष्यसि ॥ १८ ॥

अहं च त्वञ्च नृपते सुहृदः शत्रवश्च ते ।
अवश्यं न भविष्यामः सर्वं च न भविष्यति" ॥ १९ ॥ इति ।

तस्माज्जातस्य ध्रुवो मृत्युरित्यनित्यत्वप्रदर्शने तात्पर्यम् । न तु द्रव्याणां द्रव्यत्वेन नित्यत्वस्थापने इत्यास्तां विस्तरः ॥

अपरिहार्येऽर्थे इति सामान्यवचनेनैतावदुक्तं भवति ॥

(१) देहिनां जन्ममरणयोरपरिहार्यत्वेन न तत्र शोक उचितः ॥

(२) युद्धाकरणे यदि भीष्मादयः कदापि न म्रियेरन् तर्हि युद्धादुपरम उचितस्स्यात् ॥ जातस्य हि ध्रुवो मृत्युः इति मृत्योरपरिहार्यतया न शोक उचितः ॥

३. यदि वा भवान् मृतिरहितस्तदा भीष्मादिविरहेण कथमनन्तं कालं जीवेयामिति शोकस्स्यात् ॥ जातमात्रस्य मरणं ध्रुवमिति भवानपि मृतिमानेव। अतो न शोकः।

४. युद्धे तावन्मृतिर्नियता। तद्विहाय कार्यान्तरे उद्यतो भवामि इति वक्तुं न शक्यते ॥ युद्धस्य स्वधर्मत्वेनावर्जनीयत्वात् ॥ अग्निहोत्रादिवन्नित्यकर्मरूपस्याप्यननुष्ठानं प्रत्यवायापादकमित्यपरिहार्यम् ॥

५. भीष्मादीनां मरणस्य कालक्रमेण संभवेऽपि मन्निमित्तं मृतिर्नेस्यात्। युद्धादुपरमेण तन्मरणस्य मन्निमित्ततां निवारयामीति चेन्न ॥ कर्तुमकर्तुमन्यथाकर्तुं भगवान्स्वतन्त्रः ॥ "यदहंकारमाश्रित्य न योत्स्यइति मन्यसे। मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ कर्तुं नेच्छासि यन्मोहात्करिष्यस्यवशोऽपि तत्"। इति वक्ष्यमाणरीत्या त्वन्निमित्तमपि भीष्मादिमरणमपरिहार्यमेव ॥

६. अपरिहार्ये इत्यत्र अकारवाच्यो भगवान् विष्णुः ॥ तत्प्रसादेनैव जनिमृतिपरिहारो भवेत्। भगवदेकनियम्येऽर्थे न शोक उचितः इति ॥

शङ्करानन्दीये "तस्मादपरिहार्ये ब्रह्मणाऽपि परिहर्तुमशक्ये" इति ब्रह्मणोऽप्यशक्तिरुक्ता ॥ सा ईश्वरावज्ञामूलिका भाति ॥ ब्रह्मणस्सत्यसङ्कल्पत्वेन नियमानामपरिहार्यत्वस्योपपत्तेः तस्य शक्त्यभावकल्पनं व्यर्थम् ॥ एवमेव शङ्कराचार्येण (१७ श्लोके ॥) "न कश्चित्कर्तुमर्हति" इत्यत्र

"ईश्वरोऽपि नार्हति" इत्युक्तम् ॥ "कं घातयति" इत्यत्र श्रीकृष्णस्य युद्धप्रेरकत्वेन पापलेपे शङ्किते नाहं प्रेरकः आत्मनो निर्धर्मकत्वादिति युक्तिं प्रदर्श्य स्वं पापान्मोचयामास भगवानिति मधुसूदननीलकण्ठौ भावं कल्पयतः। एवमीश्वरापकर्षो नोचित इति स्फुटम्।

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत।
अव्यक्तनिधनान्येव तत्र का परिवेदना ॥२८॥

वि० ॥ एतदेव जनिमृतिस्वरूपोक्त्या स्पष्टयति ॥ अव्यक्तेति ॥ अव्यक्तं प्रधानं आदिः उत्पत्तिकारणं येषां तानि भूतानि जीवशरीराणि। व्यक्तमध्यानि व्यक्तं कार्यतापत्त्याऽवस्थानं मध्यं जन्मनिधनान्तरालं येषां तानि व्यक्तमध्यानि। अव्यक्ते प्रधाने निधनं लयो येषां तानि अव्यक्तनिधनान्येव ॥ तत्र तेषु एवंरूपेषु भूतेषु का परिवेदना कः शोकइति ॥ यद्वा कृष्णेनैवं स्वयं युक्तीरुक्त्वा शोको न कार्य इत्युक्तम्। तत्र देहनाशस्यावश्यंभावित्वं यदुक्तं तन्नास्माभिः साध्यम् भवतोऽपि सिद्धं ॥ तेनैव शोको न कार्य इत्याह ॥ अथचेति ॥ अत्र नित्यशब्दो नियतवाची। नित्यं नियतमेव चेति वचनात्। अथेत्यस्य तिष्ठतु तावदयं प्राचीनो विस्तर इत्यर्थः ॥ एनं जीवं नित्यजातं नियतजनिमन्तं मृतं वा नियतमृतिमन्तं त्वं मन्यसे चेत् यदि यावन्मोक्षं जीवस्य जन्ममरणे नियते इति स्वयमेव मन्यसे

तथापि तावन्मात्रज्ञानेनापि एनं जीवं शोचितुं नार्हसि ॥ जन्ममरणयोरवर्जनीयतया नियमेन प्राप्नुवतोस्त्वयैव ज्ञातत्वात् अवर्जनीये कथं शोक इति भावः ॥ एवं चास्मिन्नेव श्लोके शोकाभावे जनिमृतिनियमरूपो हेतुः स्पष्टमेवावगम्यते इति पुनस्तत्र हेत्वाकांक्षाभावादेतद्विवरणपरे जातस्येत्यादिश्लोकद्वये जीवस्य जनिमृतिनैयत्यानुवादः प्रागभिप्रेतजीवास्वातन्त्र्ये च हेतुत्वेनेति का तव परिवेदनेत्यनन्तरं तस्माज्जीवस्य जनिमृतिनियमवत्त्वाज्जीवे शोको यथा न कार्यः तथा स्वातन्त्र्यबुद्धिश्च न कार्येति श्लोकद्वयतात्पर्यार्थो ज्ञेयः ।

शं० ॥ कार्यकारणसंघातात्मकान्यपि भूतानि उद्दिश्य शोको न युक्तः कर्तुम् । यतः, अव्यक्तादीनीति ॥ अव्यक्तादीनि अव्यक्तं अदर्शनं अनुपलब्धिः आदिः येषां भूतानां पुत्रमित्रादिकार्यकारणसंघातात्मकानां तानि अव्यक्तादीनि भूतानि प्राक् उत्पत्तेः । उत्पन्नानि च प्राक् मरणात् व्यक्तमध्यानि ॥ अव्यक्तनिधनानि एव, पुनः अव्यक्तं अदर्शनं निधनं मरणं येषां तानि अव्यक्तनिधनानि ॥ मरणात् ऊर्ध्वं अव्यक्ततामेव प्रतिपद्यन्ते इत्यर्थः । तथा चोक्तम् "अदर्शनादापतितः पुनश्चादर्शनं गतः" इति । तत्र का परिदेवना को वा प्रलापः अदृष्टदृष्टप्रनष्टभ्रान्तिभूतेषु इत्यर्थः ॥

रा० ॥ सतो द्रव्यस्य पूर्वावस्थाविरोध्यवस्थान्तरप्राप्तिदर्शनेन योऽल्पीयान् शोकः सोऽपि मनुष्यादिभूतेषु न संभवतीत्याह । मनुष्यादिभूतानि सन्त्येव द्रव्याण्यनुपलब्धपूर्वावस्थान्युपलब्धमनुष्यत्वादिमध्यमावस्थान्यनुपलब्धोत्तराव - स्थानि स्वेषु स्वभावेषु वर्तन्त इति न तत्र परिदेवनानिमित्तमस्ति ॥

विचारः ।

"तत्र का परिवेदना" इति विवृत्यभिमतः पाठः ॥ "तत्र का परिदेवना" इत्यन्येषां पाठः ॥ नानुशोचितुमर्हसीत्यभ्यासानुगुण्यमाद्यपाठे सम्यग्दृश्यते ॥ भूतानीतिपदं आकाशादिपरं इति केचित् ॥ मनुष्यशरीरपरं इत्यन्ये ॥ आकाशादीनां लयोदयस्वरूपनिरूपणं न प्रकरणसंगतं भाति ॥ मनुष्यजन्ममरणयोर्शौच्यमुक्त्वा तदुपपादनाय तयोरेव प्रपञ्चनं संगतं ज्ञायते । तस्मा 'द्भूतानि' इत्यस्य शरीरपरत्वमेवोपयुक्तं युक्तं च ॥

व्यक्ताव्यक्तशब्दयोरर्थे वक्ष्यमाणरीत्या व्याख्यातारो विप्रतिपद्यन्ते ॥ तथाहि ॥

I. "प्रमाणैस्सर्वैर्न व्यज्यते व्यक्तीकर्तुं न शक्यते इत्यव्यक्तं परं ब्रह्म । तदग्रहणादादिर्जन्म येषां तानि अव्यक्तादीनि भूतानि ॥ शुक्त्यग्रहणाद्रजतवदात्माग्रहणाल्लब्धजन्मानि ॥ तथा 'व्यक्तमध्यानि' सर्वं व्यञ्जयति इति व्यक्तमन्तःकरणं मध्ये स्थितिकाले येषां तानि देवतिर्यङ्मनुष्यादिभेदं स्त्रीपुंसादिभेदं पितृपुत्रादिभेदं अहंममायामित्यादिसंबन्धं च कल्पयित्वाऽन्तःकरणमेव प्रपञ्चनिर्वाहं करोति । तेन व्यक्तमध्यानि ॥ यावदधिष्ठानादर्शनं तावत्तेषां सत्तास्फूर्त्यादीनि सवासनान्तःकरणबलादेव ।

तस्माद्व्यक्तमध्यानीत्युच्यन्ते ।। अव्यक्तनिधनानि स्वाधिष्ठाने ब्रह्मणि निधनं येषां । सर्वं ब्रह्मैवेति पश्यतो विदुषः का परिदेवना" इति शङ्करानन्दः ।। तथाच अव्यक्तशब्दो ब्रह्मपरः, व्यक्तमन्तःकरणं, अधिष्ठानयाथात्म्याज्ञानेन संसारः, तज्ज्ञाने ब्रह्मत्वप्राप्तिः, ब्रह्मातिरिक्तं सर्वं मिथ्येत्युक्तं भवति ।। शिष्यश्शङ्कते । अव्यक्तशब्दोऽभावपरो भाति न तु ब्रह्मपरः ।। तथाहि भारते स्त्रीपर्वणि II. 6 "अभावादीनि भूतानि भावमध्यानि भारत । अभावनिधनान्येव तत्र का परिदेवना" इति । इयं शङ्काऽनुपपन्नेति नीलकण्ठो भारतव्याख्याने समाधत्ते "अत्र अभावशब्दो ब्रह्मपरः । भावान्तरं अभावः ।। कृत्स्नप्रपञ्चस्याभावो ब्रह्म ।। भावो नानारूपात्मकता" इति ।। अत्रोच्यते ।

१. नासतइति श्लोकेनान्यत्रच पूर्वं विवर्तवादमनुरुध्य ब्रह्ममात्रस्य सत्यत्वमन्यस्य कृत्स्नस्यासत्यत्वं समर्थितमिति पुनस्तत्प्रमेयस्येह का सङ्गतिः ।।

२. अथचेति सौगतचार्वाकाभिमतात्मानित्यत्वावलंबनेन पूर्वपक्षे कृते अभ्युगमं विस्मृत्य अद्वैतोपदेशेन शोकप्रतिषेधः कथमुपपद्यते ।।

३. अस्मिन् प्रकरणे ये ये प्रसक्ताः युद्धं, मरणं, भीष्मादियोद्धारः, पुण्यपापादयः, स्वर्गादयः शोकश्चेति तेषां सर्वेषां व्यावहारिकत्वेन व्यावहारिकतलमाश्रित्य शङ्कायां कृतायां व्यावहारिकस्य शोकस्य व्यावहारिकः परिहार एवापेक्षितः । एतं विहाय पारमार्थिकपथोद्बयनं अयुक्तम् ।

४. न केनचिदपि प्रमाणेन व्यज्यतइत्यव्यक्तत्वं ब्रह्मणो न सिद्धम् । शास्त्रयोनित्वाद्ब्रह्मणः । व्यक्तशब्दस्यान्तःकरणपरत्वञ्च क्लिष्टम् ।।

५. स्त्रीपर्वश्लोके अभावशब्दस्यापि ब्रह्मपरत्वकल्पनं क्लिष्टम् । अनेनैते शून्यसमयपक्षपातिन इत्यर्थः स्मारितो भवति ।।

६. 'अव्यक्तादीनि' 'अव्यक्तनिधनानि' इति विशेषणाभ्यां ब्रह्मसृज्यत्वं ब्रह्मसंहार्यत्वं च उच्येते इत्याशयकल्पनं व्यक्तमध्यानि इत्युक्त्या बाधितं भवति ॥ 'यतो वा इमानि' 'जन्माद्यस्य यतः' इत्यादिप्रमाणेषु ब्रह्मणः सकाशात् सृष्टिस्थितिसंहारा उक्ताः ॥ न कचिदपि सृष्टिसंहारौ ब्रह्मणः, स्थितिस्त्वन्तःकरणात् इत्युक्तं दृश्यते। प्रकृते व्यक्तमध्यानि इति पदं जगत्स्थितेः व्यक्तशब्दोक्तान्तःकरणहेतुकत्वपरतया व्याख्यातम्। तदेतत्प्रमाणानामेकवाक्यताभङ्गं करोतीत्यव्यक्तशब्दस्येह ब्रह्मपरत्वं तद्रीत्याऽपि चिन्त्यम्।

पारमार्थिकं परंब्रह्म सृष्टिसंहारयोःस्थानमित्यङ्गीकारे अपसिद्धान्तोऽपि स्यात्। न हि कूटस्थस्य मृद्वत्कार्यप्रविलयोदयस्थानत्वं संभवति ॥ अज्ञानाश्रयत्वाद्ब्रह्मणि लयोदयस्थानत्वव्यपदेशो न वस्तुगत्येति नीलकण्ठो ब्रूते ॥ तथाच अव्यक्तस्य आदित्वं निधनत्वं च यद्यौपचारिकं गौणं तदा अक्षरप्राप्तोऽर्थः परित्यक्तो भवति। तस्माद्धीदं पद्यं नीलकण्ठादिभिरन्यथा व्याख्यातं भाति ॥

शङ्करानन्दीयतुल्यार्थकं मधुसूदनीयमपि ॥ "अव्यक्तं अविद्योपहितं चैतन्यं व्यक्तं नामरूपाभ्यामेवाविद्यकाभ्यां प्रकटीभूतं न तु स्वेन परमार्थसदात्मना ॥ भूतानि वियदादीनि" इति। दूषणानि यथासंभवं पूर्वोक्तानि ज्ञेयानि ॥

II. पू० ननु मास्तु ब्रह्मपरत्वं उपहितचैतन्यपरत्वं वा अव्यक्त शब्दस्य। नामरूपगुणादिभिर्नव्यज्यते इत्यव्यक्तं माया स्यात् ॥ रज्जूरगादिकारणमज्ञानं न रज्जुवदु्रगवद्वा व्यक्तमस्ति ॥ परीक्ष्यमाणं च न दृष्टिपथमवतरतीत्यव्यक्तमज्ञानं ॥ तत उत्पन्नस्सर्पस्तत्रैव लीयते न रज्वाम् ॥ एवमात्मनि कल्पितानां भूतानामादिरन्तश्चाव्यक्तमेव ॥ व्यक्तं व्यक्तता (भावे

निष्ठा) मध्ये येषां देवास्तिर्यङ्मनुष्यो ब्राह्मण इत्याभासतो लब्धस्वरूपाणि व्यक्तमध्यानीत्युच्यन्ते इति चेत् ॥ (उत्तरं) ॥ न ॥ भ्रान्तिनिरूपकरज्ज्वादि-दृष्टान्तान् परित्यज्याव्यक्तशब्देन प्रधानपरिग्रहे को दोषः ॥ मायामाश्रित्य जगतः प्रातिभासिकत्वप्रक्रिया तु नाभ्युपगम्यते ॥ यदुक्तं सर्पस्योत्पत्ति-र्लयश्च भ्रान्ताविति तदसङ्गतं ॥ यतो भ्रान्तौ सर्पस्य नोत्पत्तिर्नापि लयः। सर्पस्य प्रतीतस्यासत्त्वात् ॥ असतः प्रतीतिर्दोषवशादुपपन्ना सुधायामुप-पादिता अन्यथाख्यातिवादे।

III. नन्वनुलपब्धिपरोऽयमव्यक्तब्दः स्यात् ॥ तथैव हि शङ्कराचार्य-रामानुजाचार्यौ वदतः। प्रकृतिप्रत्ययव्युत्पत्तिरप्यस्यातीवानुकूला ॥ तथाहि भारतवाक्यं "अदर्शनादिहायातः पुनश्चादर्शनं गतः ॥ त्वं चाहं चापि राजेन्द्र ततः किमनुशोचसि" इति। अनुपलब्धिकथनस्य प्रकरणोप-युक्तत्वन्तु उक्तं रामानुजाचार्येण ॥ "सतो द्रव्यस्य पूर्वावस्थाविरोध्य-वस्थान्तरप्राप्तिदर्शनेन योऽल्पीयान् शोकः सोऽपि मनुष्यादिभूतेषु न संभवति" इति ॥ इतिचेत्। (उ) न। स्याद्वादिनो हि वेदबाह्याः जन्मान्तर-मनभ्युपगम्यानुपलब्धिहेतुनाऽतींद्रियविषये मौढ्यं तूष्णींभावं चाश्रयन्ते ॥ पूर्वोक्तव्याख्यानेनेदं ह्युक्तं भवति। घटपटादेर्ध्वंसे तावदुत्तरावस्था दृष्टा या शोकस्थानं भवति। मनुष्यस्तु कुत आयातः कुत्र लीनइति न ज्ञातः ॥ पूर्वावस्था उत्तरावस्था च न ज्ञातेति नाल्पीयसोऽपि शोकस्यावकाशः इति ॥ इदमनुपपन्नं ॥ देहात्मैक्यमभ्युपगम्य "अथचे" त्यारभ्य श्लोकत्रयं प्रवृत्त-मिति परव्याख्यानं नात्र विस्मर्तव्यम्। तथा घटस्योत्तरावस्था दृष्टिगोचरा तस्मात्सा शोकस्थानं। एवमेव भूतशब्दोक्तस्य मनुष्यशरीरस्योत्तरावस्था दृष्टिगोचरा सती शोकस्थानंच ॥ यद्युच्यते देहात्मैक्यवादमालंब्य न प्रकृत-श्लोकः प्रवृत्त इति तदा भीष्मादिचेतनानां पूर्वावस्था उत्तरावस्था च भगवता कृष्णेन न ज्ञाता इत्युक्तं भवति ॥ योगिप्रत्यक्षविषयभूतायाः

पूर्वोत्तरावस्थायाः सर्वज्ञस्य भगवतोऽप्यनुपलब्धिः कथं घटते ॥ मनुष्यः कुत आयाति कुत्र गच्छति इति नाहं जानामीति भगवान् न कदाप्यङ्गीकुर्यात् ॥

एवं अव्यक्तशब्दस्य ब्रह्मपरत्वे अज्ञानपरत्वे अनुपलब्धिपरत्वे चानुपपत्तौ सत्यां प्रधानपरत्वमाश्रितं विवृतिकारेण ॥ प्रधानादुत्पन्नं प्रधाने लीयते इति जनिमृतिस्वरूपनिरूपणेन "जातस्य ही" त्युक्तस्य स्पष्टनं कृतं इति भावः ॥ प्रधानपरत्वं परेषु श्रीधरस्याप्यभिमतम् ॥

आश्चर्यवत्पश्यति कश्चिदेनम्
आश्चर्यवद्वदति तथैव चान्यः ।
आश्चर्यवच्चैनमन्यः शृणोति
श्रुत्वाप्येनं वेद नचैव कश्चित् ॥ २९ ॥

वि० ॥ तर्हि कुत्र सा कार्या ॥ नैनमित्यादौ सा बुद्धिर्भगवति कार्येत्युक्तावपि सा किं भगवत्येव कार्या अथ ततोऽन्यत्रापि क्वचिदित्याशंकां वतिप्रत्ययप्रयोगबलेन परिहरन् भगवत्स्वातन्त्र्यं प्रागुक्तमुपसंहराति ॥ आश्चर्यवदिति । कश्चित्सात्विकप्रकृतिः एनं अव्यक्तइत्यत्र प्रकृतमीश्वरं आश्चर्यवत्पश्यति आश्चर्यत्वेन सर्वस्वतन्त्रत्वेन सन्तमेव तमाश्चर्यवत्स्वतन्त्रो यथाभवतितथापश्यतीति क्रियाविशेषणं ।

गगनं गगनाकारमित्यादिवत्। आश्चर्यभूतस्य हरेरेवाश्चर्यवदिति स्वोपमामुखेन हरेरितरस्य स्वातन्त्र्याभावज्ञापनायाश्चर्यवदिति वत्यन्तोक्तिः ॥ अन्यश्च तथैव द्रष्टृवदेव आश्चर्यत्वेन सन्तमेनमाश्चर्यवद्यथाभवति तथा वदति। सागरं सागरोपममितिवदन्यदाश्चर्यवस्तु नेति ज्ञापनाय स्वोपमत्वेन वक्तीत्यर्थः। अन्यश्च सात्विकः आश्चर्यत्वेन सन्तमेनं हरिं आश्चर्यवद्यथाभवति तथा रामरावणयोर्युद्धं रामरावणयोरिवेतिवत् अन्यदाश्चर्यतया श्रोतव्यं वस्तु नेति ज्ञापनाय स्वोपमत्वेन शृणोति । कश्चिच्च सात्विकएनमाश्चर्यतया सन्तं हरिं श्रुत्वापि नैव वेद । अत्यद्भुतवस्तुत्वादिति भावः । ईश्वरस्य सर्वान्प्रत्याश्चर्यत्वेऽपि विपरीतदर्शिनामसुरादीनां बहूनां भावात् यथावद्दर्शी यथावद्वादी च कश्चित्कश्चिदेवेति ज्ञापनाय कश्चिदित्याद्युक्तिः ॥ २९ ॥

शं ॥ दुर्विज्ञेयः अयं प्रकृतः आत्मा, किं त्वामेव एकं उपालभे साधारणे भ्रान्तिनिमित्ते, कथं दुर्विज्ञेयः अयमात्मा इति आह ॥ आश्चर्यवदिति। आश्चर्यवत् आश्चर्यं अदृष्टं अद्भुतं अकस्मात् दृश्यमानं तेन तुल्यं आश्चर्यमिव एनमात्मानं पश्यति कश्चित् । आश्चर्यवत् एनं वदति तथैव चान्यः आश्चर्यवच्चैनमन्यः शृणोति ॥ श्रुत्वा दृष्ट्वा उक्त्वा अपि आत्मानं वेद न चैव कश्चित् ॥ अथवा यः आत्मानं पश्यति सः आश्चर्यतुल्यः यो वदति यश्च शृणोति सः

अनेकसहस्रेषु कश्चिदेव भवति ॥ अतः दुर्बोधः आत्मा इत्यभिप्रायः ॥

रा० ॥ एवं शरीरात्मवादेऽपि नातिशोकनिमित्तमित्युक्त्वा शरीरातिरिक्ते आश्चर्यस्वरूपे आत्मनि द्रष्टा श्रोता वक्ता श्रवणायत्तात्मनिश्चयश्च दुर्लभइत्याह ॥ एममुक्तस्वभावं स्वेतरसमस्तवस्तुविसजातीयतया आश्चर्यवदवस्थितमनन्तेषु जंतुषु महता तपसा क्षीणपापः उपचितपुण्यः कश्चित्पश्यति ॥ तथाविधः कश्चित्परस्मै वदति ॥ एवं कश्चिदेव शृणोति श्रुत्वाप्येनं यथावदवस्थितं तत्त्वतो न कश्चिद्वेद ॥ चकारात् द्रष्टृवक्तृष्वपि तत्त्वतो दर्शनं तत्त्वतो वचनं तत्त्वतः श्रवणं दुर्लभमित्युक्तं भवति ॥

विचारः

अत्र एनमित्यत्र परामर्शः कस्येति व्याख्यातारो विप्रतिपद्यन्ते ॥ प्रपञ्चस्येति केचित् ॥ जीवस्यैवेति रामानुजाशयः ॥ परब्रह्मणएवेति शाङ्कराः ॥ जीवस्य परब्रह्मणश्चेति श्रीमध्वः ॥ प्रपञ्चपरामर्शपक्षमाश्रित्य नीलकण्ठो ब्रूते ॥ "कश्चिन् ज्ञातात्मतत्त्वः एनं भूतग्रामं आश्चर्यवत् आश्चर्यं अद्भुतं स्वप्नमायेन्द्रजालादिकं तेन तुल्यं आश्चर्यवत् तथाभूतं पश्यति ॥ तथा कश्चिदेनं आश्चर्यवद्वदति सत्त्वेनासत्त्वेन निर्वक्तुमशक्यमपि अनिर्वचनीयेन लोकाप्रसिद्धेन रूपेणोपपादयति, सच्चेन्न बाध्येत असच्चेन्न प्रतीयेत इत्यादियुक्तिजातेन ॥ तदिदं सर्वव्यवहारास्पदस्यापि प्रपञ्चस्य मिथ्यात्वोपपादनमत्याश्चर्यं ॥ अनात्मतया उपलभ्यमानस्यापि प्रपञ्चस्य यत्प्रत्यगभिन्नत्वेन श्रवणं तदत्यन्तमाश्चर्यं ॥ एनं प्रपञ्चं प्रत्यगनन्यत्वेन श्रुत्वापि शब्दा-

दुक्त्वापि स्वप्नादिदृष्टान्तैरुपपाद्य दृष्ट्वा ध्यानेन च साक्षात्कृत्वापि, तत्त्वतो न वेद" इति ॥ अस्मिन् व्याख्याने आश्चर्यवदिति पदं द्वेधा व्याख्यातं दृश्यते ॥ स्वार्थे वतिः आश्चर्यवत् आश्चर्य इत्येकोऽर्थः ॥ ज्ञानवचनश्रवण-कर्मोच्यते ॥ आश्चर्यवत् आश्चर्यं यथा भवति तथा इति ज्ञानवचनश्रवण-क्रियाविशेषणतया द्वितीयोऽर्थः सूचितः ॥ तन्त्रन्यायेन आश्चर्यवदित्यस्या-वृत्तिः ॥ आश्चर्यं आश्चर्यतया पश्यति वदति शृणोति इति फलितार्थः ॥ अत्र प्रष्टव्यं ॥ अप्रस्तुतस्य प्रपंचस्य परामर्शः कथमिह घटते । प्रकरणं ह्यात्मस्वरूपनिरूपणपूर्वकं शोकनिवृत्तेः । आत्मनित्यत्वं प्रसाध्य अनन्तरं देहात्मवादेऽप्यपरिहार्यत्वन्यायेन शोको निवारितः ॥ अत्र प्रपंचस्याश्चर्यत्ववर्णने किं प्रयोजनम् ॥

(किंच प्रपंचस्य कथमद्भुतत्वं विवक्षितं । नहि तावदश्रुतदृष्टपूर्वाणां विचित्रविचित्रपदार्थानां जगति सत्त्वात् जगतः अद्भुतत्वमभिप्रेतं किंतु केवलं मिथ्येत्यद्भुतत्वं विवक्षितं नाम ॥ मिथ्यात्वस्याद्भुतत्वापादकत्वं नोपपन्नं ॥ नहि स्वप्नो वा ऐन्द्रजालिकं वा मिथ्यात्वमात्रेणाश्चर्यं जनयति ॥ तस्मादाश्चर्यवदिति पदं कर्मबोधकतया व्याख्याय तस्य मिथ्यात्वेनाऽऽश्चर्यत्व-निरूपणं चिन्त्यं ॥ किंच क्रियाविशेषणत्वेन व्याख्याने सदसद्विलक्षणत्वेन ज्ञानं उपदेशः श्रवणं चाश्चर्यमित्यभिप्रायो वर्णितः ॥ सदसद्वैलक्षण्यज्ञाने उपदेशे श्रवणे च नकिंचिदाश्चर्यं दृश्यते ॥ किंतु वैयात्यमेव ॥ सदसद्-विलक्षणप्रपंचज्ञाने वचने श्रवणे किं प्रयोजनं । नतावत्पुरुषार्थो मोक्षः । तस्याद्वैतज्ञानमात्रफलत्वात् ॥ अयं प्रपंचपरामर्शपक्षो न शङ्कराचार्यादि-भिराश्रितः ॥ रामानुजाचार्यैस्त्विह प्रकरणे सर्वान् श्लोकान् जीवात्मपरत्वेनैव व्याचष्टे ॥ इहापि तथैव परामर्शमभिप्रैति ॥ एनं जीवात्मानं आश्चर्यवत् स्वेतरसमस्तवस्तुविसजातीयतया आश्चर्यवदवस्थितं पश्यति वदति शृणो-तीति कर्मतयैवाशयो वर्णितः ॥ यः पश्यति स आश्चर्यः दुर्लभः इति

कर्तृबोधकतया, यत्पश्यति तद्दर्शनादिकं आश्चर्यं इति क्रियाविशेषणत्वेन वा व्याख्यानं भ्रममूलं इति च प्रत्याख्यातं तात्पर्यचन्द्रिकायां ॥ तथाच जीवः आश्चर्यरूपः । तं कश्चिदेव पश्यति वदति शृणोति । अन्ये न तत्त्वतः पश्यन्ति वदन्ति शृण्वन्ति ॥ अन्यवस्तुवैलक्षण्यमेवाश्चर्यत्वापादकं इति व्याख्यानहृदयं अवगम्यते ॥

(एनं इत्यत्र जीवो ग्राह्य इति नास्माकमनिष्टं ॥ अवधारणे तु न नियामकं विद्यते ॥ अन्यवस्तुविलक्षणं जीवं कश्चिदेव पश्यति न सर्वे पश्यन्तिं इत्यर्थस्तु सर्वेषां मामहं जानामीत्यहंप्रत्ययेनात्मनो वेद्यत्वात्परात्मनोऽपि चेष्टादिलिंगैरवगतत्वादप्रामाणिकः ॥ देहादिविलक्षणत्वेन ज्ञानं विवक्षितं इति वक्तुं न शक्यते ॥ देशिकेन क्रियाविशेषणत्वस्य दूषितत्वात् ॥ श्रीमदाचार्यस्तु एनं इत्यनेन जीवं परामृश्य यो जीवं ईश्वरप्रतिबिंबत्वेन ईश्वराधीनत्वेन अणुत्वेनापूर्णत्वादिना जानाति स आश्चर्यो दुर्लभः इति व्याचष्टे ॥ कर्तृविशेषणतया क्रियाविशेषणतया चाश्चर्यवच्छब्दो व्याख्यातो भवति ॥ जीवे आश्चर्यत्वापादकस्य गुणविशेषस्याभावेन कर्मपरतायां न कुतूहलं ॥ रामानुजाचार्योक्तरीत्या देहादिवैलक्षण्यमात्रं नाद्भुतत्वसंपादकं भवेत् ॥)

"एनं" इत्यात्मनः परामर्श इति शाङ्कराः ॥ आश्चर्यवदिति नः क्रियाविशेषणं । आश्चर्य यथा भवति तथा ज्ञानवान् वक्ता श्रोता च कश्चिदेव ॥ आश्चर्यभूतं हरिं कश्चिदेव पश्यति वक्ति शृणोतीति कर्मवाचित्वेनापि योजनाऽभिमता ॥ अत्र आश्चर्यत्वेन अद्भुतत्वेन (स्वतन्त्रत्वेन) यः कश्चित्पश्यति वक्ति शृणोति सोप्याश्चर्यो दुर्लभएवेति कर्तृबोधकतया व्याख्यानं निर्दुष्टं ॥ एकवारं द्विर्वा आश्चर्यवदित्यस्यावृत्त्या क्रियाविशेषणत्वकर्मत्वकर्तृत्वबोधानां लाभो भवति । सागरं सागरोपममितिवत् अन्यदाश्चर्यवस्तु नेति ज्ञापनाय स्वोपमत्वेन वक्तीति भावः ॥ तथाहि ब्रह्मतर्के "आश्चर्यो

भगवान्विष्णुर्यस्मान्नैतादृशः कश्चित् । तस्मात्तद्गोचरं ज्ञानं तद्गोचरवदेव तु" इति ॥

आत्मनस्सर्वथा दुर्विज्ञेयत्वादज्ञत्वेनार्जुनमात्रोपालंभः अनुचितइति सूचनायाऽऽत्मनो दुर्बोधत्वं श्लोको वक्तीति पराशयः॥ ऐश्वरसामर्थ्यप्रपंचनाय प्रवृत्तइत्याचार्यः ॥

(इदं दुर्बोधत्वं वक्ष्यमाणदिशा शाङ्करैरुपपादितं ॥ उक्तं मधुसूदनीये "(एनं देहिनमाश्चर्येणाद्भुतेन तुल्यतया वर्तमानमाविद्यकनानाविधविरुद्ध-धर्मवत्तया सन्तमप्यसन्तमिव स्वप्रकाशचैतन्यरूपमपि जडमिव आनन्द-घनमपि दुःखितमिव निर्विकारमपि सविकारमिव नित्यमप्यनित्यमिव प्रकाशमानमप्यप्रकाशमानमिव ब्रह्माभिन्नमपि तद्भिन्नमिव मुक्तमपि बद्धमिव अद्वितीयमपि सद्वितीयमिव संभावितविचित्रानेकाकारप्रतीतिविषयं पश्यति॥ शास्त्राचार्योपदेशाभ्यामाविद्यकसर्वद्वैतनिषेधेन परमात्मस्वरूपमात्राकारायां वे-दान्तमहावाक्यजन्यायां सर्वसुकृतफलभूतायामन्तःकरणवृत्तौ प्रतिफलितं समाधिपरिपाकेन साक्षात्करोति कश्चिदेव । तथा कश्चिदेनं यत्पश्यति तदाश्चर्यवत् इति क्रियाविशेषणं ॥ आत्मदर्शनमप्याश्चर्यवदेव यत्स्वरूपतो मिथ्याभूतमपि सत्यस्य व्यंजकमाविद्यकमप्यविद्याया विघातकं अविद्यामुपघ्न-त्तत्कार्यतया स्वात्मानमप्युपहन्तीति ॥ तथा यः कश्चिदेनं पश्यति स आश्चर्य-वदिति कर्तृविशेषणं ॥(तदेतत्त्रयं आश्चर्यं आत्मा तज्ज्ञानं तज्ज्ञाता चेति परम-दुर्विज्ञेयमात्मानं त्वं कथमनायासेन जानीयाइत्यभिप्रायः" इति ॥ "आश्चर्यवद्वदति" इत्यत्रापि वचनस्य आश्चर्यत्वमेवं उपपादितं ॥ "सर्व-शब्दावाच्यस्य शुद्धस्यात्मनो यद्वचनं तदाश्चर्यवत् । केनापि शब्देनावाच्यस्य शुद्धस्यात्मनो विशिष्टशक्तेन पदेन जहदजहत्स्वार्थलक्षणया कल्पितसंबन्धेन लक्ष्यतावच्छेदकमन्तरेणैव प्रतिपादनं तदपि निर्विकल्पकसाक्षात्काररूपमत्या-

श्चर्य ॥ अथवा विना शक्तिं विना लक्षणां विना संबन्धान्तरं सुषुप्तोत्थापक-वाक्यवत्तत्त्वमस्यादिवाक्येन यदात्मतत्त्वप्रतिपादनं तदाश्चर्यवत् शब्दशक्तेर-चिन्त्यत्वात् । "आश्चर्यवच्चैनमन्यः शृणोति" । अन्यो द्रष्टुर्वक्तुश्च मुक्ता-द्विलक्षणो मुमुक्षुः वक्तारं ब्रह्मविदं विधिवदुपसृत्यैनं शृणोति ॥ वेदान्तवाक्यतात्पर्यनिश्चयेनावधारयतीति यावत्" । इति ॥ इममेव पन्थानमर्थतः कश्चिच्छब्दतश्चानुगच्छन्त्यन्ये ॥ अत्र प्रष्टव्यम् ॥ किमनेनोक्तं भवति । अद्वैतं दुर्घटं तद्बोधकवाक्यं दुर्घटतरं तद्गम्यं ब्रह्म दुर्घटतममित्युक्तं गम्यते ॥ यद्यपि परराद्धान्तो दुर्ज्ञेयः इति प्रसिद्धं । तथापि तन्मतमत्यन्त-मेव दुर्निरूपमिति न विदितपूर्वमस्माभिः । अद्वैततिरस्काराय यायायुक्तयः प्रयोज्यास्तास्तास्सर्वा अप्यभ्युपगता दृश्यन्ते ॥ परंतु युक्तिपराहतत्वेपि दुर्घटत्वं भूषणमिति मन्यमानाः दुर्निरूपत्वं दृढतरमाश्लिषन्ति ॥ अहो आश्चर्यं ॥

अघटितघटनाशक्तिमत्त्वेन स्वतंत्रत्वेनामितकल्याणगुणाकरत्वादिनैव भगवानत्याश्चर्यः न तु सर्वशब्दावाच्यत्वेन निर्विकल्पकत्वादिना ॥ अमित-त्वादेवायं संपूर्णं दुर्ज्ञेयः ॥ इदमेव प्रमेयजातं कठवल्यां प्रतिपादितं ॥ "श्रवणायाऽपि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः । आश्चर्यो वक्ता कुशलोऽस्य लब्धाऽऽश्चर्यो ज्ञाता कुशलानुशिष्टः" II 1 7 इति ।

यथा गीतायां तथा मन्त्रवर्णे वक्तुः ज्ञातुश्च दौर्लभ्यमुक्तं ॥ श्रवणादौ सत्यपि प्रसादं विना परमात्मज्ञानाभावश्चोक्तः ॥ एवं ज्ञानिनः आचार्यस्य च दौर्लभ्यं भगवतो दुर्ज्ञेयत्वं च प्रतिज्ञाय तमेवार्थं कतिपयमन्त्रवर्णैः श्रुतिः प्रपंचयति ॥ तथाहि ।

"अणोरणीयान्महतो महीयानात्माऽस्य जन्तोर्निहितो गुहायां ।
तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः ॥ २० ॥

आसीनो दूरं व्रजति शयानो याति सर्वतः ।
कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हसि ॥ २२ ॥

अशरीरं शरीरेष्वनवस्थेष्ववस्थितं
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वां ॥

इति ॥ तथा "कः छन्दसां योगमावेद धीरः को धिष्ण्यां प्रतिवाचं पपाद" इति श्रुत्यन्तरमपि ॥ इत्यादिभिरघटितघटनाशक्तिमत्त्वेन भगवान् सर्वोत्तमः, तज्ज्ञानं प्रसादैकलभ्यं, अतस्तद्द्रष्टा दुर्लभः आश्चर्यः, इत्युक्तम् ॥

निर्विकल्पकत्वेन जगदभिन्नत्वेन सर्वशब्दावाच्यत्वादिना वा जानातेर्वदतेः शृणोतेश्च कर्मत्वेन क्रियात्वेन कर्तृत्वेनवा दुर्निरूपत्वेनात्मनोऽज्ञेयत्वं न प्रतिपादितं श्रुतावित्यास्तां प्रपञ्चः ॥

श्रुत्वापीति । बहुशो जना न श्रवणादिकं कुर्वन्तीत्यपेरर्थः ॥ कश्चित् न वेद इत्युक्तेस्सार्थक्यमधिगन्तव्यं ॥ प्रायशो जनास्तावद्धरिपदविमुखाः श्रवणादीनि न कुर्वन्ति ॥ सहस्रेषु केचित्कुर्वन्ति । योग्यताभावाद्वा प्रतिबन्धकबलाद्वा साधनवैगुण्येन वा भगवद्वान्तरप्रसादवैधुर्येण वा सुज्ञानं न लभन्ते ॥ अन्ये कतिपयाएव ज्ञानिनो भवन्ति इति भावः ॥

उद्योगपर्वणि सभायां श्रीकृष्णेन विश्वरूपे प्रदर्शिते सति दुर्योधनादयः स्वनेत्राणि न्यमीलयन्त ॥

"ऋते द्रोणं च भीष्मं च विदुरं च महामतिं ।
सञ्जयं च महाभागं ऋषींश्चैव तपोधनान् ॥

प्रादात्तेषां स भगवान दिव्यं चक्षुर्जनार्दनः"

इत्युक्तेः मनुष्याणां सहस्रेषु कश्चिदेव सिद्धये यततइति गम्यते ॥

यद्यपि श्रीकृष्णं दुर्योधनः प्रतिदिनमपश्यत् नत्वाश्चर्यवत्तया सर्वोत्तमस्वोपमाद्भुतवस्तुत्वेन ॥ श्रूयते छान्दोग्ये इन्द्रविरोचनयोरुपाख्यानं ॥ यथा तौ ब्रह्माणं विधिवदुपसद्य कृतश्रवणावभवतां । तयोर्विरोचनोऽनधिगतात्मतत्त्वज्ञान एव स्वपुरं जगाम ॥ इन्द्रस्त्वेकशतं वर्षाणि तत्र ब्रह्मचर्यमुषित्वा ज्ञान्यभूदिति ॥ फलस्य योग्यतासापेक्षत्वमनेन गम्यते ॥ वामदेवः जडभरतश्च प्रारब्धादिप्रतिबन्धे निवृत्ते सत्युत्तीर्णावभवतां ॥ योग्यतातारतम्यं कालकर्मादिप्रतिबद्धभगवत्प्रसादंचादाय "नचैव कश्चिद्वेद" इत्युक्तं गीतायां॥ यद्यपि सर्वोऽपि जनः जीवमहंप्रत्ययेन जानाति ॥ अथवा सुषुप्तौ स्वरूपसुखानुभववेलायामात्मानमनुभवति ॥ अवताररूपं पश्यन्तः नाना जनाः तत्कथां वदन्ति शृण्वन्ति च । एतादृशं ज्ञानं वचनं श्रवणं चानुपयुक्तं ॥ जीवास्वातन्त्र्यज्ञानी दुर्लभः भगवत्स्वातन्त्र्यज्ञानी दुर्लभः इत्येव श्लोकाशयः॥ तथाच कठवल्यां "शृण्वन्तोऽपि बहवो यं न विद्युः" इति॥ अन्यत्र श्रुतौ "तद्यथा हिरण्यं निधिनिहितं क्षेत्रज्ञा उपर्युपरि संचरन्तो नविन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः इति" ॥

देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।
तमात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ ३०

वि० ॥ यदेतज्जीवस्य नत्वं नेमे इत्यादिना नित्यत्वमुक्तं तत्स्वाभाविकत्वान्नेशाधीनं, तथाच सर्वं परमेश्वराधीनं

सएव सर्वस्वतन्त्रइत्युक्तं । अतस्तद्विरोधइत्यतः तदपि द्रव्यं कर्मचेत्यादेरीश्वरायत्तमित्याह ॥ देहीति ॥ सर्वस्य देहिनो देहे स्थूलदेहे सूक्ष्मलिङ्गदेहे चिद्रूपस्वरूपदेहे च अयं पूर्वप्रकृतो हरिः रक्षकत्वेन तिष्ठति ॥ अतो देही जीवो नित्यमवध्यः । हे भारत तस्माद्रक्षकतया स्थितत्वेन नित्यमवध्यत्वात् सर्वाणि भूतानि त्वं शोचितुं नार्हसीति ॥ यद्वा उपसंहारपरोत्तरश्लोकोपयुक्तत्वेनाप्रमेयस्येत्यादिना प्राङ्महिमोक्तावपि पुनर्महिमान्तरमाह॥ आश्चर्यवदिति॥ वतिरत्र एवकारार्थः । एनं पूर्वत्र प्रकृतं जीवं यः कश्चिद्जादिलक्षणेश्वरसरूपत्वतदधीनत्वादिना पश्यति, स पुमानाश्चर्यवत् आश्चर्य एव । उक्तरूपेणैनं जीवं वदन् शृण्वंश्चाऽऽश्चर्य एव दुर्लभ एवेत्यर्थः ॥ सर्वेषामप्यहमित्यात्मदर्शनादिभावात् दर्शनादिमान्कथं दुर्लभइत्यत उक्तमुपपादयति ॥ श्रुत्वेति ॥ दृष्ट्वा उक्त्वा इत्यपि ग्राह्यं ॥ सामान्यतो दर्शनादौ सत्यप्युक्तरूपेण सम्यक् न वेदेति सम्यग्ज्ञानी दुर्लभ इत्यर्थः ॥ प्रतिबिम्बभूतजीवस्यापि सम्यग्ज्ञानी दुर्लभः किमीश्वरसामर्थ्यं वर्णनीयमिति ईश्वरसामर्थ्योक्तिर्ध्येया ॥ देहयोगवियोगयोर्नियतत्वादात्मनश्चेश्वरसरूपत्वाद्बिम्बनाशादिनिमित्तनाशाभावान्न शोकः कार्य इत्युपसंहरति ॥ देहीति ॥ प्राग्वदेव पूर्वार्धस्यार्थः ॥ तस्मादित्यस्य तु देहयोगवियोगयोरवर्जनीयत्वादात्मनश्चेश्वरसरूपत्वेन सर्वथैवानाशादित्य-

र्थः ॥ भगवत्सरूपत्वेऽप्यनाशः कुत इत्यतोऽतिसमर्थो भगवानिति तत्सामर्थ्यं प्रागुक्तमिति तस्य तदुपसंहारोपयुक्तता ध्येयेति ॥

श० ॥ अथेदानीं प्रकरणार्थमुपसंहरति। देहीति। सर्वस्य प्राणिजातस्य देहे वध्यमानेऽपि अयं देही न वध्यः यस्मात् तस्मात् भीष्मादीनि सर्वाणि भूतानि उद्दिश्य न त्वं शोचितुमर्हसि ॥

रा० ॥ सर्वस्य देवादिदेहिनो देहे वध्यमानेऽप्ययं देही नित्यमवध्यो मन्तव्यः॥ तस्मात्सर्वाणि देवादिस्थावरान्तानि भूतानि विषमाकाराण्यप्युक्तेन स्वभावेन स्वरूपतस्समानानि नित्यानि च ॥ देहगतं तु वैषम्यमनित्यत्वं च ॥ ततो देवादीनि सर्वाणि भूतान्युद्दिश्य नशोचितुमर्हसि न केवलं भीष्मादीन्प्रति ॥

विचारः

यत् भगवतोऽपि प्रकरणप्राप्तत्वं बहुधोपपादितं तदत्रानुसंधेयं । नित्यत्वेन जीवस्य भगवत्साम्ये शङ्किते जीवाणुत्वाल्पत्वास्वातन्त्र्यादिप्रतिपादनं भगवदुत्कर्षं प्रसाध्य शङ्कोद्धारस्तत्र तत्र कृतः ॥ एवमेवास्मिन्नपि पद्ये सूक्ष्मे चिद्देहे च यतो हरीरक्षकतया स्थितोऽतो देह्यवध्य इति जीवावध्यत्वे युक्तिरभिहिता वेदितव्या । (“तत्र तत्र स्थितो विष्णुर्नित्यं रक्षति सर्वदा । अनित्यदैवानित्यं च नित्यानित्ये ततस्ततः ॥ भावाभावनियन्ता हि तदेकः पुरुषोत्तमः” इति गीतातात्पर्ये पाद्मवचनं)॥ (“द्रव्यं कर्म च

कालश्च स्वभावो जीव एव च। यदनुग्रहतस्सन्ति न सन्ति यदुपेक्षया" इति भागवते ।(स्थूलशरीरं परीक्षितो ररक्ष भगवान्)। "जुगोप कुक्षिङ्गत आत्तचक्रः" "स रक्षिता रक्षति यो हि गर्भे" इति भागवते । नित्योपाधेश्चिच्छरीरस्य बिम्बो भगवानेव ॥ रक्षकत्वेन भगवान् सर्वत्र जागरूक इत्येव जीवस्यावध्यत्वं इत्यवध्यत्वे युक्तिकथनेन भगवन्माहात्म्यं आश्चर्यवदित्यनेनोक्तमाविष्कृतं भवति । अनेनानन्तर्यसङ्गतिरपि सूचिता ज्ञेया ॥ अयं देहीति योजनाप्यस्माकं संमता ॥ उपसंहारश्लोकत्वात्पूर्वोक्तानां प्रमेयाणां संग्रहो भूषणायैव ॥ तथाहि जीवनित्यत्वं जीवपारतन्त्र्यं देहनश्वरत्वं संसारस्याभिमानिकत्वं चेत्यादीनि प्रपञ्चितानि पुरस्तात् ॥ यत् नत्वेवाहमित्यादिना जीवनित्यत्वं वर्णितं तदेव देही नित्यमवध्यः इत्युक्तं ॥ देहे सर्वस्येत्यपि देहे वध्यमाने सतीति सतिसप्तमीग्रहणे देहनाशध्रौव्यस्य संग्रहः ॥ जीवपारतन्त्र्यं ईश्वरस्वातन्त्र्यं च अयं हरिः रक्षकतया तिष्ठतीति योजनयोक्तं भवति ॥

(अवध्यः अभिमानं विना स्वतोऽवध्यः बन्धानर्हः इति व्युत्पत्त्या मात्रास्पर्शा इत्युक्तं प्रमेयं दृढीकृतम् ॥

(अत्रेदं शङ्करानन्दोक्तं स्मर्तव्यं । गतासून् मूढा अनुशोचन्ति अगतासून् ज्ञानिनः उभयविधांस्तु पण्डिता नानुशोचन्ति गतासूनामगतासूनां च ब्रह्माभिन्नत्वादिति प्रकरणारम्भे यदि जीवजगद्ब्रह्मैक्यं शोकाभावे हेतुतया विवक्षितं तर्हि उपसंहारेऽपि तदेव वक्तव्यं ॥ ( जातस्य हि ध्रुवो मृत्युः' "अव्यक्तादीनि भूतानि" "देही नित्यमवध्यः" इत्युपसंहारपद्येषु ऐक्यगन्धवैधुर्यात् उपक्रमोपसंहारयोरेकवाक्यता न सेत्स्यति ॥ तस्माद्गतासूनित्यत्र यत्तेन व्याख्यातं तन्मन्दमेव ॥

यदुक्तं रामानुजाचार्येण प्रकृतश्लोकव्याख्याने देहभेदेनैव देवादिस्थावरान्तानां वैषम्यं, स्वरूपतस्तु ते समा इति ॥ तदप्रामाणिकं। आब्रह्म-

स्तम्बान्तानां तारतम्यस्यैव प्रमितत्वात् ॥ देहे इति स्थूलसूक्ष्मचिद्देहानां ग्रहणं इति श्रीमदाचार्यः ॥ देहे इत्यनन्तरं वध्यमाने इत्यध्याहृत्य प्रतिसप्तम्यर्थकतयैव परे व्याकुर्वते ॥ श्रीमदाचार्यव्याख्यानेन भगवदुत्कर्षः प्रकाशित इति स्वारस्यमवगन्तव्यम् ॥

देहीत्यात्मवाचकत्वे शङ्करानन्दादयोऽपसिद्धान्तभीतिमाविष्कुर्वन्तः क्लेशेनार्थं व्युत्पादयन्ति ॥ जगन्मण्डलवर्तिनस्सर्वे देहाः भूतभविष्यद्वर्तमानाः अस्य सन्तीति इनिप्रत्ययार्थं विवृण्वते ॥ एकस्यैवात्मनो विभुत्वेन सर्वदेहयोगित्वाल्लिङ्गदेहोपाधिरात्मेत्युपलब्धिस्थानत्वेन सर्वे देहा अस्य सन्तीति वा ॥ अत्रार्थे देहीत्येकवचनं तन्त्रं इति सूचितं ॥ इदमनुपपन्नं ॥ "अहं त्वं जनाधिपाः" इति बहुवचनेन जीवबाहुल्यस्यैवोक्तेः । बहुषु देहेषु कौमारादिवद्वस्त्रादिवद्वा प्राप्तेषु देहस्वामी एक एवेति ज्ञापनायैकवचनप्रयोगउपपद्यते । ममदेह इति स्वामिताध्यासेन वा गौरोऽहं कृष्णोऽहं इति देहतादात्म्याध्यासेन वा देहित्वमुपपद्यते इति परेषामाशयः ॥ तत्त्वत एव स्थूलसूक्ष्मचिद्देहैर्यथायोग्यं बद्धत्वेन देहस्वामित्वस्योपपत्तेरध्यासपर्यन्तधावनं क्लिष्ट भवति ॥

स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते॥३१

॥ वि० ॥ यदुक्तंप्राक् वेपथुश्च शरीरे मे रोमहर्षश्च जायते इति तत्राह ॥ स्वधर्ममिति ॥ यद्वा न केवलं आत्मनित्यत्वादशोकः किंतर्हीत्यत आह॥ स्वधर्ममिति॥ न केवलमात्मनो

विनाशाभावादेवाविकम्पः । स्वधर्ममप्यपेक्ष्य कम्पितुं शरीरे कंपं सर्वावयवचेष्टां कर्तुं नार्हसीत्यर्थः । यच्चोक्तं 'नच श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे' इति तत्राह ॥ धर्म्यादिति॥ परलोकसुखहेतुर्धर्मः । तत्संबन्धि तज्जनकमिति यावत् ॥ यद्वा धारकत्वाद्धर्मो हरिः तत्पूजारूपं यत् तद्धर्म्यं तस्माद्युद्धादन्यच्छ्रेयः क्षत्रियस्य न विद्यते हि प्रसिद्धमेतत् ॥

शं ॥ इह परमार्थतत्त्वापेक्षायां शोको वा मोहो वा न संभवतीत्युक्तं ॥ न केवलं परमार्थतत्त्वापेक्षायामेव ॥ स्वधर्ममिति ॥ स्वधर्मोऽपि स्वो धर्मः क्षत्रियस्य धर्मः युद्धं तमपि अवेक्ष्य त्वं न विकंपितुं प्रचलितुं नार्हसि । क्षत्रियस्य स्वाभाविकात् धर्मात् । आत्मस्वाभाव्यादित्यभिप्रायः॥ तच्च युद्धं पृथिवीजयद्वारेण धर्मार्थं प्रजारक्षणार्थं चेति परमं धर्म्यं, धर्मादनपेतं धर्म्यं । तस्मात् धर्म्यात् युद्धात् श्रेयः अन्यत् क्षत्रियस्य न विद्यते ॥ हि यस्मात् ॥

रा० ॥ अपि चेदं प्रारब्धं युद्धं प्राणिमारणमपि अग्नीषोमीयादिवत् स्वधर्ममवेक्ष्य न विकंपितुमर्हसि ॥ धर्म्यात् न्यायतः प्रवृत्ताद्युद्धादन्यन्न हि क्षत्रियस्य श्रेयो विद्यते ॥ "शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनं । दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजं" इति वक्ष्यते ॥ अग्नीषोमीयादिषु च न हिंसा पशोः । निहीनतरच्छागादिदेहपरित्यागपूर्वककल्याणतरदेहस्वर्गादिप्रापकत्वश्रुतेः संज्ञपन-

स्य "नवा उ वेतन्म्रियसे नरिष्यासि देवाँ इदेषि पथिभिः सुगेभिः। यत्र यन्ति सुकृतो नापि दुष्कृतः तत्र त्वा देवः सविता दधातु" इति श्रूयते॥ इह च युद्धे मृतानां कल्याणतरदेहादिप्राप्तिरुक्ता "वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति" इत्यादिना॥ अतश्चिकित्सकशल्यादिकर्म आतुरस्येवास्य रक्षणमेवाग्नीषोमीयादिषु संज्ञपनम्॥

विचारः

"वेपथुश्च शरीरे मे रोमहर्षश्च जायते।
गाण्डीवं स्रंसते हस्तात् त्वक्चैव परिदह्यते"॥

इत्युक्तस्य धर्ममवेक्ष्य न विकंपितुमर्हसीत्युत्तरं॥ "न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे" इत्यस्य 'धर्म्याद्धि ऽयुद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते' इति॥

केचित्तु प्रकरणारंभे "अशोच्यानन्वशोचः" इत्यशोकउक्तः तस्य प्रपञ्चनं विंशत्या श्लोकैः कृतं 'प्रज्ञावादांश्च भाषसे' इति ये प्रज्ञावादाः पूर्वाध्याये "दृष्ट्वेम" मित्यारभ्याध्यायान्तमुक्ताः द्वितीयाध्यायेऽपि "कथं भीष्म" मित्यारभ्य पंचश्लोक्या उक्ताश्च तेषां सर्वेषां स्वधर्ममित्यारभ्याष्टश्लोक्या समाधानं इत्याहुः॥

धर्मशब्दस्य बह्वर्थत्वादिह यथा योग्यमर्थाः योज्याः॥ "धर्मोऽस्त्री पुण्यआचारे स्वभावोपमयोः क्रतौ। अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे" इति मेदिनी॥ ध्रियते लोकोऽनेनेति व्युत्पत्त्या धर्मशब्दः न्यायपरः॥ वेदप्रणिहितो धर्मः। वेदैकप्रमाणगम्योऽर्थः पुण्यनामाऽदृष्टविशेषो धर्मउच्यते॥

"यमार्याः क्रियमाणं हि शंसन्त्यागमवेदिनः। स धर्मो यं विगर्हन्ति तमधर्मं प्रचक्षते" इति च धर्मलक्षणं प्रसिद्धं ॥ क्षत्रियत्वात् नृपवंश्यत्वात् युद्धमर्जुनस्य स्वधर्मः ॥ स्ववर्णधर्मत्वादवश्यकर्तव्यः। अकरणे प्रत्यवायात् ॥ मूर्धाभिषिक्तस्य प्रजानां परिपालनं गुणधर्मः ॥ नृपवंश्यत्वादर्जुनस्य गुणधर्मश्च युद्धं ज्ञातव्यं ॥ कंपं विहाय युद्धमर्जुनस्य स्वभावप्राप्तं ॥ स्वोधर्मः स्वधर्मः स्वभावभूतः ॥ कंपएवाऽऽगन्तुकस्स्वभावविरुद्धः। "शौर्यं तेजो धृतिर्दाक्ष्यं युद्धेचाप्यपलायनं। दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजं" इति वक्ष्यमाणत्वात् ॥

यद्वा धर्मशब्दश्चापपरः ॥ गाण्डीवं कामक्रोधलोभमोहमदमानमात्सर्याहंकृत्यपरपर्यायकाकदूकाद्यष्टशस्त्रोपेतं (पश्यत I अ—२९ श्लोक व्याख्यानं) महान्तं चापं रथस्याधस्तात्परित्यक्तमालक्ष्य तन्माहात्म्यं तत्प्राप्तिपुरावृत्तं च पुरस्कृत्योक्तं स्वधर्ममपि चावेक्ष्येति ॥ धर्मः धनुः ॥ यथोक्तं मेदिन्यां "नाधनुर्यमसोमपे" इति ॥ यद्वा स्वधर्मः स्वीयो युधिष्ठिरः ॥ भीमार्जुनपराक्रमविस्रम्भेण हि प्रवृत्तो धर्मराजस्समरे ॥ अर्जुनोऽपि तमेवमाश्वासयामास ॥ "हन्यामेकरथेनैव वासुदेवसहायवान्। सामरानपि लोकांस्त्रीन् सर्वान् स्थावरजङ्गमान्" इति युधिष्ठिरं प्रति धनंजयवचनं उद्योगपर्वणि ॥ तादृशं ज्येष्ठभ्रातारं संधिसंकटे परित्यज्य युद्धादुपरम अनुचित इति भावः ॥ यद्वा धारकत्वाद्धर्मो भगवान् विष्णुः ॥ स्वधर्मः श्रीकृष्णः ॥ धर्म्यं भगवत्पूजारूपं युद्धं अकामनया शुद्धानुसन्धानेन भगवत्पूजात्वेन कृतं चेत् परमपुमर्थो भवतीति भावः ॥

"युध्यध्वमनहंकारायतो धर्मस्ततो जयः।
अनन्ततेजा गोविन्दः शत्रुपूगेषु निर्व्यथः ॥
पुरुषस्सनातनमयो यतः कृष्णस्ततो जयः" इति भारते ॥ किंचेदं युद्धं धर्म्यं धर्मादनपेतं न्यायप्राप्तं ॥ युद्धहेतुषु न्यायस्य भवत्पक्षमात्रस्थत्वात् ॥

निरायुधनिवृत्तशरणागतादिषु शस्त्रप्रयोगो न कर्तव्य इति समयबन्धपूर्वकं धर्मयुद्धत्वेनारब्धत्वाच्च ॥ तथाह्युक्तम् ।

" निष्क्रान्ताः पृतनामध्यान्न हन्तव्याः कदाचन ।
रथीच रथिना योध्यो गजेन गजधूर्यतः ॥
अश्वेनाश्वो पदातिश्च पदातेनैव भारत ।
यथायोग्यं यथाकामं यथोत्साहं यथाबलं ॥
समाभाष्य प्रहर्तव्यं न विश्वस्ते न विह्वले ।
एकेन सह संयुक्तः प्रपन्नो विमुखस्तथा ॥
क्षीणशस्त्रो विवर्मा च न हन्तव्यः कदाचन ।
न सूतेषु न धुर्येषु नच शस्त्रोपजीविषु ॥
नभेरीशङ्खवादेषु प्रहर्तव्यं कदाचन ।
एवं च समयं कृत्वा कुरुपाण्डवसोमकाः " इति ॥ धर्म्यात् समयबन्धपूर्वकं धर्मतः प्रवृत्तादित्यर्थः ॥

स्वधर्ममितिनूतनप्रकरणारंभसङ्गतिप्रपंचनावसरे शङ्करानन्दआह ॥ " वेदाविनाशिनमित्यत्रायमर्थः स्फुटं निरूपितः सर्वमिदमहं च ब्रह्मैव इति । सर्वस्य ब्रह्ममात्रत्वविज्ञानमात्मप्रसादजं यस्य तस्य न किंचित्कर्तव्यमस्ति ॥ तदन्यस्याहंममेत्याद्यभिमानवतो मुमुक्षोश्चित्तशुद्ध्यर्थं विधिदृष्टः स्वधर्मः पूर्वोक्तज्ञानसिद्ध्यर्थं कर्तव्य एवेति बोधयितुमिदं प्रकरणमारभते ॥ तत्रादावर्जुनस्यात्मज्ञानाभावमालक्ष्य तं स्वभक्तं मुमुक्षुं कर्तव्ये स्वधर्मे प्रवर्तयितुमिदमाह " इति॥ युद्धस्य श्रेयस्साधनत्वनिरूपणावसरे " जयलब्धधनैकसाध्यैर्यागैर्दानैर्व्रतादिभिश्चित्तशुद्धिस्तया ज्ञानं तेन मोक्ष इति युद्धस्य श्रेयः साधनता युक्ता ततो युद्धं कर्तव्यमेवे"ति च ।

अत्रोच्यते ॥ ब्रह्मज्ञानिनो न कर्तव्यो धर्मोऽस्ति अज्ञानिन एव धर्माचरणं विहितमित्येको भ्रमः ॥ अर्जुन आत्मज्ञानाभाववान् लक्षितः इति द्वितीयो भ्रमः ॥ जयलब्धधनैकसाध्यैर्योगैर्दानैर्व्रतादिभिश्चित्तशुद्धिरिति युद्धस्य निष्कामनया स्वयं भगवत्पूजात्वेनाननुष्ठेयत्वं सूचितं तन् तृतीयो भ्रमः इति ॥

समरस्य अध्वररूपत्वेन वा तत्समानतया वा कर्तव्यत्वनिरूपणावसरे युद्धान्तर्गतछेदभेदहननादीनां हिंसात्वेऽपि विहितत्वान्न प्रत्यवायापादकत्वं इति केचित् ॥ हिंसात्वमेव नाभ्युपगच्छति रामानुजाचार्यः ॥ यथोक्तं तात्पर्यचन्द्रिकायां "दुःखजननमात्रं न हिंसा । रक्षणरूपेषु चिकित्सकशल्यप्रयोगादिष्वपि प्रसंगात् ॥ नापि प्राणवियोजनमात्रं ॥ अतद्रूपेषु सर्वस्वहरणनरकपीडादिषु हिंसाशब्दप्रयोगदर्शनात् ॥ अतोऽनर्थपर्यवसितस्तादात्विकदुःखजनको व्यापारो हिंसेत्येव तत्त्वं ॥ पिष्टपश्वादिविधिस्तु कार्तयुगधर्मनिष्ठाधिकारिविशेषनियतः" इति । हिंसालक्षणमादाय यागे युद्धे वा वधो न वध एव, छागस्य पशोः तथा मृतस्य योद्धुश्चोत्तमलोकस्य कल्याणतरदेहस्य च प्राप्तेरिति सिद्धान्तितं ॥ एतन्नसमीचीनं भाति ॥ यद्यपि बीजैरेव यष्टव्यमिति ऋषयः, अजेनैवेति देवा ऊचुरिति विवादे मध्यस्थो वसुनामा उपरिचरः पक्षपातेन देवानुकूलमुत्तरं दत्तवान् ॥ अयं संवादः कृतयुगेऽभूदिति ज्ञायते । यथा भारते शान्तिपर्वणि (३३८) "अजेन यष्टव्यमिति प्राहुर्देवा द्विजोत्तमान् । स च छागोप्यजो ज्ञेयो नान्यः पशुरिति स्मृतः ॥ ३ ॥ ऋषय ऊचुः ॥ अजसंज्ञानि बीजानि छागं नो हन्तुमर्हथ । नैषधर्मः सतां देवा यत्र वध्येत वै पशुः ॥ इदं कृतयुगं श्रेष्ठं कथं वध्येत वै पशुः । धान्यैर्यष्टव्यमित्येव पक्षोऽस्माकं नराधिप ॥ देवानां तु पशुः पक्षो मतो राजन्वदस्व नः। देवानां तु मतं ज्ञात्वा वसुना पक्षसंश्रयात् ॥ छागेनाजेन यष्टव्यमेवमुक्तं वचस्तदा" इति ॥ अनन्तरं ऋषिशापाद्वसोः विवरपतनं

तच्छान्त्यै देववरप्रसादेन यागेषु वसुधाराख्याहुतिविशेषलाभश्चोपाख्याने कथ्यते ॥ अनेन अजमारणं कृतयुगमात्रनिषिद्धं इति न स्फुटं ॥ किंतु पशुवधः कदाप्यप्रशस्तोऽवगम्यते ॥ अद्यापि पिष्टपशुविधिरेवानुष्ठेय इति श्रीमध्वराद्धान्तः ।

युगविचारं त्यक्त्वा पशुवधस्य हिंसारूपत्वं वा तद्विपर्ययो वेत्याकाङ्क्षायां तात्पर्यचन्द्रिकोक्तयुक्तिजातं न प्रत्याययति ॥ हिंसात्वादेव हि कृतयुगेऽपि तन्निषेधः कृतः ॥ " अहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः " इति भारतवचनादग्नीषोमीयादौ हिंसा न निषिद्धा, अन्यत्र तु निषिद्धेत्यवगम्यते ॥ वधस्य हिंसात्वासिद्धौ अन्यत्रेति व्यवच्छेदानुपपत्तिप्रसंगः ॥ पामरदृष्टयोक्तमेतदित्येव समाहितं देशिकाचार्येण ॥ यागीयहिंसाया हिंसात्वाभावे " न हिंस्यात्सर्वा भूतानि, अग्नीषोमीयं पशुमालभेत " इत्यनयोरुत्सर्गापवादत्वे सर्वसंप्रतिपन्ने न स्यातां ॥ किंच भगवान् दुर्योधनहितार्थं तदभ्युदयद्वारा तमुद्धर्तुं रक्षितुं वा तद्वधं उपदिदेशेति न गम्यते । अनर्थप्रापकव्यापाररूपत्वं हिंसात्वं इति तु क्लिष्टं । दुःखजननं हिंसेत्युक्ते बाधकाभावात् ॥ यागीयवधस्य हिंसात्वे " न हिंस्यादिति " शास्त्रेण प्रतिरोधप्रसंग इति न भेतव्यं ॥ यागीयहिंसायाः विशेषविध्यनुगृहीतत्वात् ॥ चिकित्सकशल्यव्यापारोऽपि हिंसैव अन्ततस्सुखहेतुत्वेन सोढव्या भवति ॥ तस्मात् यागे पशुर्नैव हिंसितः युद्धेऽपि शत्रुर्नहिंसितः हिंसाव्यवहारो भ्रममूलकः उभयत्र वधो रक्षणरूपः इति यत्सिद्धान्तितं परैः तत्प्रमाणपराहतं भाति ॥

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतं ।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम्॥३२॥

वि० ॥ किंच स्वयमेव महति श्रेयसि प्राप्ते विकम्पोऽनुचित इत्याह ॥ यदृच्छयेति ॥ यदृच्छया अप्रयत्नेन उपपन्नं प्राप्तं ॥ यदृच्छा हि तदिच्छा स्यादित्युक्तेरीश्वरेच्छाप्राप्तमिति वा । अपावृतमपगतावरणं स्वर्गद्वारं च पारत्रिकसुखसाधनमिति यावत् ॥ ईदृशं भगवत्पूजात्वेन स्वधर्मत्वेन स्थितं युद्धं सुखिनः सुखहेतुपुण्यवन्तः क्षत्रियाः हे पार्थ लभन्ते प्राप्नुवन्ति ॥ यद्वा ईदृशं युद्धं ये क्षत्रियाः लभन्ते ते सुखिनः इत्यर्थः । तेन स्वजनं हि कथं हत्वा सुखिनः स्यामेति निरस्तं ॥

शं ॥ कुतश्च तत् युद्धं कर्तव्यमिति ॥ उच्यते ॥ यदृच्छयेति ॥ यदृच्छया च अप्रार्थितं आगतं उपपन्नं स्वर्गद्वारं अपावृतं उद्घाटितं, ये एतत् ईदृशं युद्धं लभन्ते क्षत्रियाः हे पार्थ किं न सुखिनस्ते ॥

रा० ॥ अयत्नोपनतामिदं निरतिशयसुखोपायभूतं निर्विघ्नमीदृशं युद्धं सुखिनः पुण्यवन्तः क्षत्रिया लभन्ते ॥

विचारः ।

स्वयमेव महति श्रेयसि प्राप्ते विकम्पोऽनुचित इत्याह ॥ यदृच्छयेति॥ युद्धं विवर्जयितुं महान् हि प्रयत्नः कृतः ॥ समाधानार्थं साक्षाद्भगवान्

स्वर्गप्रवेशो भवतीति युद्धस्यापावृतस्वर्गद्वारत्वं सेत्स्यतीत्याशयमाहुः ॥ स्वर्गप्राप्तेः क्षिप्रत्वं अव्यवधानत्वं वाऽऽदायापावृतत्वोपपादनं नावश्यकं प्रतीयते ॥ अद्यैव वा कालान्तरे वा स्वर्गप्रवेशो नियतः अप्रतिरुद्धश्चेति भावमादाय प्रतिबन्धवैधुर्यमात्रं द्योतयतीत्युक्तौ बाधकाभावात् ॥ अपावृतमित्यनेन समरहिंसायाः प्रत्यवायानापादकत्वं बोध्यते इत्यर्थस्तु निर्दुष्टः ॥

द्रोणादिगुरुजनवधो निषिद्धो वाऽनिषिद्धो वेति जिज्ञासायां "ब्राह्मणं न हन्यात्" इति शास्त्रेण निषेधः, "जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत्" इति शास्त्रेणाततायिवधत्वेनानिषिद्धत्वं चावगम्यते ॥ बलाबलचिन्तायां "अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः" इति याज्ञवल्क्यवचनं स्मृत्वाऽनयोः समबलत्वं वाऽन्यद्वेति विचार्यते ॥ "दृष्टप्रयोजनानपेक्षं धर्मशास्त्रं" इति न्यायेन जिघांसन्तमिति वचनं स्वजीवनार्थत्वादर्थशास्त्रं ॥ इतरत्तु दृष्टप्रयोजनानपेक्षत्वेन धर्मशास्त्रं प्रबलं चेति युद्धादुपरमे प्राप्ते सत्याह ॥ अपावृतमिति ॥ द्रोणादिवधो न प्रत्यवायापादक इत्यर्थः ॥ ननूपपादितः प्रत्यवायइति चेन्न ॥ जिघांसन्तं जिघांसीयादित्यस्यापि धर्मशास्त्रत्वात् ॥ स्वजीवनार्थं राज्यार्थं वा न योद्धव्यं अपितु सुखदुःखे समे कृत्वेति वक्ष्यमाणदिशा निष्कामं भगवत्पूजात्वेन स्वकीयकर्तव्यतया युद्धस्य विहितत्वात् ॥ उभयोर्धर्मशास्त्रत्वे सामान्यविशेषभावमाश्रित्य विरोधः परिहरणीयो भवति ॥ युद्धादन्यत्र हिंसा निषिद्धेति फलितोऽर्थः । अतो युद्धस्यापावृतत्वमुपपन्नं। अपगतं आवृतं आवरणं प्रत्यवायः यस्मात् इति अपावृतं अनिषिद्धहिंसारूपं इत्यर्थः ॥

द्वितीयार्धं "स्वजनं हि कथं हत्वा सुखिनः स्याम माधव" इत्यस्योत्तरं ज्ञेयं ॥ प्रश्नगतं "सुखिनः" इत्येतदत्रानुकृष्टं द्रष्टव्यम् ॥

सुखिन इति ॥ "पुण्यवन्तः" इति विवृत्याचार्येण रामानुजाचार्येण च व्याख्यातं ॥ सुखशब्देन सुखसाधनं पुण्यं लक्ष्यते ॥ यद्वा यथोक्तं देशिकेन ॥ "सुखशब्दः सुखयोग्यत्वलक्षणसंबन्धपरः । 'तदस्यास्ति' इत्यर्थे विधीयमानमत्वर्थीयप्रत्ययस्य संबन्धसामान्यवाचिषष्ठ्यर्थगर्भत्वात् पुत्री धनी इत्यादौ पितृपुत्रभावस्वस्वामिभावादिरूपसंबन्धबोधकत्ववत् प्रकृते सुखयोग्यतारूपसंबन्धबोधकत्वं प्रत्ययस्य संभवति ॥ सुखयोग्यत्वं पुण्यवत्त्वमेव ॥ तथाच लक्षणां विनापि सुखिनः पुण्यवन्त इत्यर्थो लभ्यते ॥ सुखशब्दस्य पुण्यपरत्वाभावे सुखस्य युद्धलाभहेतुत्वं नोपपद्यते ॥ उद्देश्यविधेयभावस्थले उद्देश्यतावच्छेदकप्रयोज्यताया वा प्रयोजकताया वा भानस्य विधेये दृष्टत्वेन प्रकृते सुखस्य युद्धलाभजनकतया जन्यतया वा बोधोऽङ्गीकार्यः ॥ युद्धानन्तरभाविसुखमादाय प्रयोज्यप्रयोजकभावपरिष्कारस्तु "स्वर्गद्वारं युद्धं" इत्यनेन गतार्थत्वान्न स्वीकृतः ॥ तस्मात् विवक्षितं सुखं युद्धलाभस्य प्रयोजकतया तत्पूर्वभाव्येवाङ्गीकर्तव्यं ॥ अतस्सुखशब्दस्तत्साधनं लक्षयति ॥ अथवा तद्योग्यत्वसंबन्धद्वारा पुण्यवाचको भवति" इति ॥ अत्र सुखशब्दस्य यत्पुण्यार्थकत्वमुपपादितं तदिष्टमेवास्माकं ॥ यत्तु युद्धानन्तरभाविनस्सुखस्य ग्रहणानवकाश उक्तस्स चिन्त्यः । ये लभन्ते ते सुखिनः इति योजना न केवलं विवृत्याचार्येणोक्ता । अपितु शङ्करमधुसूदनादिभिरप्युक्ता ज्ञायते ॥ उद्देश्यविधेयविनिमयेन वा यथायोग्यं प्रयोज्यप्रयोजकभावाश्रयणेन वा युद्धानन्तरं सुखिनो भवन्तीत्यर्थे बाधकाभावात् ॥ 'स्वर्गद्वारं' इत्यनेन गतार्थता तु सुपरिहारा ॥ युद्धप्रयोज्यं सुखं ऐहिकं मोक्षपर्यन्तं प्राप्यं पारत्रिकं च ॥ स्वर्गद्वारं इति विवक्षितं तु स्वर्गसुखमात्रं इति सामान्यविशेषविवक्षया पौनरुक्त्यं न दोषो भवतीति सुवचत्वात् । "सुखिन एव सन्तो नतु त्वमिव शोचन्तः क्षत्रिया भीष्ममरुत्तादयः ईदृशं विशेषणत्रयविशिष्टं यदृच्छोपपन्नत्वस्वर्गद्वारत्वअपावृतत्वयुक्तं

युद्धं लभन्ते इत्याचारः प्रदर्शितः श्लोकेन" इति वेङ्कटनाथव्याख्या ॥ आचारप्रदर्शने भूतार्थलकारस्यैवोचितत्वेन वर्तमानलकारानुपपत्तिं स्वयमेव प्रदर्शितवान् ॥ पुरोवर्तिनं भीष्ममुद्दिश्य प्रोत्साहार्थं वर्तमानव्यपदेश इति समाधानं तु न प्रत्याययति ॥

ईदृशामिति ॥ धर्म्यं इति पूर्वश्लोकोक्तस्य धर्मादनपेतत्वस्य भगवत्पूजारूपत्वस्य परामर्शः ॥ यद्वा ईः लक्ष्मीः तस्याः कटाक्षगोचरं इत्यर्थः ॥ लक्ष्म्यपाङ्गानुगृहीतं इति दीर्घदृष्ट्या जयोऽपि सूचितो भवति ॥

**अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ॥**
**ततस्स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि॥३३॥**

वि० ॥ युद्धाकरणेऽनर्थप्राप्त्युक्त्याच तत्कर्तव्यतामाह ॥ अथचेत्यादिचतुर्भिः ॥ अथ चेत् यदृच्छया पारत्रिकसुखहेतुत्वेन च प्राप्तमपि धर्म्यं प्राग्वत् इमं संग्रामं युद्धं न करिष्यसि न कुर्याः, तर्हि ततः स्वधर्मभूतयुद्धाकरणात् न केवलं धर्मकीर्त्योर्हानिः, स्वविहितधर्मत्यागात्पापं चावाप्स्यसि ॥

शं ॥ एवं कर्तव्यताप्राप्तमपि ॥ अथेति ॥ अथ त्वमिमं धर्म्यं धर्मादनपेतं विहितं युद्धं न करिष्यसि चेत् ततस्तदकरणात् स्वधर्मं कीर्तिं च महादेवादिसमागमनिमित्तां हित्वा केवलं पापमवाप्स्यसि ॥

रा० ॥ अथ क्षत्रियस्य स्वधर्मभूतमिमारब्धं मोहादव-ज्ञानान्न करिष्यसि चेत् ततः प्रारब्धस्य धर्मस्याकरणात् स्वधर्मफलं निरतिशयसुखं विजयेन निरतिशयां कीर्तिं च हित्वा पापं निरतिशयमवाप्स्यसि ॥

विचारः

युद्धाकरणेऽनर्थप्राप्त्युक्त्या च तत्कर्तव्यतामाह ॥ अथचेदिति ॥ विपक्षे बाधकप्रदर्शनाय पक्षान्तरद्योतकोऽथशब्दः। आनन्तर्यार्थोऽपि युज्यते । युद्ध-सन्नाहसमनन्तरं इति यावत् ॥

त्वं इमं इति पदयोः किंचित्स्वारस्यं रामानुजाचार्यभाष्येणावगम्यते ॥ करिष्यसीति मध्यमपुरुषप्रयोगादेव त्वं शब्दार्थलाभेऽपि त्वं इति पुनर्ग्रहणात् क्षत्रियत्वेन तव युद्धकरणं धर्मः अन्यथा नस्यादिति सूचितमिति ॥ इममित्यनेनेदमुक्तं भवति ॥ युद्धस्याकरणमात्रं क्षत्रियस्यापि न प्रत्यवाय-हेतुः अन्यथा सर्वदा युद्धकरणप्रसङ्गः स्यात् , किंत्वारब्धे सति युद्धे तत्त्यागोऽनुचित इति ॥

आरब्धतयैव तत्त्यागोऽनुचित इति प्रमेयं न समंजसं भाति॥ नारायण-द्विट्तदनुबन्धिनिग्रहरूपस्यास्य युद्धस्यानारब्धत्वेऽप्यवश्यारभ्यत्वात् ॥ इम-मितिपदं पूर्वपद्योक्तेदृशपदसमानार्थकमित्युक्ते बाधकं न किंचिदस्ति ।

" पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः " इत्यर्जुनवचसः " पापम-वाप्स्यसि " इत्युत्तरं ॥ हित्वेति हेतुगर्भमव्ययं ॥ धर्महानात्पापं कीर्ति-हानाच्च पापमिति यावत् ॥ धर्मशब्दस्य नानार्थकत्वेन क्षात्रधर्म-राजधर्म-स्वभावधर्म-वेदविधि-गाण्डीव-युधिष्ठिर-श्रीहर्याद्यर्थाः पूर्वपद्यव्याख्याने सूचि-ताः स्मर्तव्याः ॥ तेषां त्यागेन यथायथं पापप्राप्तिरवगन्तव्या ॥

स्वधर्मपरिपालने महच्छ्रेयउक्तं शास्त्रे ॥ धर्मव्याधकथाऽत्रार्थेऽनुसन्धेया ॥ व्याधत्वेन गर्हितचर्यत्वेऽपि महाजनसम्मानितोऽयं कथ्यते भारते ॥ तथा परस्वापहरणजीवनः कायव्योऽपि लुण्टाको वृद्धान् बालानातुरान्दुर्बलान् स्त्रीजनान् ज्ञानिनश्च पालयित्वा यं स्वधर्ममन्यत तमेव शुद्धमनसाऽनुष्ठाय गौरवं लेभे इति गम्यते ॥ यथोक्तं शान्तिपर्वणि ॥ "ये पुनर्धर्मशास्त्रेण वर्तेरन्निह दस्यवः । अपि ते दस्यवो भूत्वा क्षिप्रं सिद्धिमवाप्नुयुः" इति । अहो स्वधर्मानुष्ठानमाहात्म्यम् ॥

धर्मशब्देन धर्मावबोधकं शास्त्रं वेदादिलक्षणमपि गृह्यते इत्याह शंकरानन्दः ॥ तथाच वेदोक्तकर्मत्यागी भवसीति पापप्राप्तिरुपपादिता भवति ॥ धर्म्यं इत्यत्र स्वार्थे ष्यञाश्रयणेन धर्म्यं धर्मभूतं इत्युक्त्वा पौनरुक्त्यभयाद्धर्ममित्यस्य धर्मफलार्थत्वमुक्तं रामानुजाचार्येण ॥ धर्म्यं धर्मादनपेतं विध्युक्तं इति व्याख्याय 'ततः स्वधर्मं' इत्यत्र धर्मशब्देन यथाश्रुतार्थग्रहणे बाधकं नावगम्यते ॥ धर्म्यं संग्रामं इत्यस्यार्थविचारे यत्पूर्वमेव निरूपितं धर्मयुद्धलक्षणं निवृत्तशरणागतादिषु शस्त्रप्रयोगोऽनुचित इत्यादि समयबन्धपूर्वकत्वं च धर्म्यत्वमिति तत्स्मर्तव्यं ॥ यथा भारते तथा मनुनाऽपि दर्शितोऽयमर्थः ॥ केचनाधुनिकास्तावज्जल्पन्ति पुरातना दारुणाः क्रूरकर्माणो धर्मयुद्धं न विदुरधुनैव (ऐरोप्पा) भूपतयः परस्परमालोच्य धर्मयुद्धसमयान् व्यवस्थापितवन्तो योग्यसौजन्यकारुण्यधिया युद्धादिकं निर्वहन्तीति । तदेतद्भ्रमशान्त्यै मनुवचनान्यपि लिख्यन्ते ॥

"न कूटैरायुधैर्हन्याद्युध्यमाने रणे रिपून् ।
न कर्णिभिर्नापिदिग्धैर्नाग्निज्वलिततेजनैः ॥
नच हन्यात्स्थलारूढं न क्लीबं न कृतांजलिम् ।
न मुक्तकेशं नासीनं न तवास्मीति वादिनम् ॥

न सुप्तं न विसन्नाहं न नग्नं न निरायुधम्।
नायुध्यमानं पश्यन्तं न परेण समागतम् ॥

नायुधव्यसनप्राप्तं नार्तं नातिपरिक्षतम्।
न भीतं न परावृत्तं सतां धर्ममनुस्मरन्" । इति ॥ एवं योद्धा यः परावृत्तः पलायते स पापमाप्नोति इति मानवे दृष्टम् ॥

"यस्तु भीतः परावृत्तः संग्रामे हन्यते परैः।
भर्तुर्यद्दुष्कृतं किंचित् तत्सर्वं प्रतिपद्यते ॥

यच्चास्य सुकृतं किंचिदमुत्रार्थमुपार्जितम्।
भर्ता तत्सर्वमादत्ते परावृत्तहतस्य तु" इति ॥ स्वसुकृतनाशपरदुष्कृतप्राप्तिरूपदलद्वयानिष्टं पापमवाप्स्यसीति भावः ॥

ननु युद्धस्य नियमेन काम्यतया कथं तदकरणे प्रत्यवाय इत्याशंक्य वेङ्कटनाथस्समाधत्ते ॥ "यद्यपीदं नियतकाम्यं तथापि 'प्रारब्धं काम्यं नित्यायते' इति न्यायेन काम्यस्याप्यारंभादूर्ध्वमकरणे प्रत्यवायो भवत्येव" इति ॥ इदं समाधानं चिन्त्यम् ॥ युद्धस्य नियतकाम्यत्वभ्रमारूढः प्रश्नः ॥ युद्धमप्यकाम्यत्वेनानुष्ठानमर्हतीति तस्मिन् भ्रमे निरसनीये, भ्रमं तावदभ्युपगम्य मार्गान्तरेण समाधानमनुचितं ॥ यथा धर्मत्यागेन पापं तथा कीर्तित्यागेन च पापं प्राप्यते । कीर्तिहानिरपि धर्मत्यागानुबन्धा ॥ अयं स्वधर्मं परिपालितवान् स्वधर्मं न कदापि तत्याजेति कीर्तिः परमोत्कृष्टा । ऐहिकधनादिलाभात् राज्यकोशसंपादनात् स्वपराक्रमादिप्रकाशनाद्वा या कीर्तिः प्रसक्ता तस्या अपि बहुवारं उत्कृष्टा या लभ्यते 'अयं स्वधर्मं न त्यजति। तं सर्वदा रक्षति' इत्यनेन॥ कीर्त्यर्थं कर्म कर्तव्यमिति तु अनेन न भ्रमितव्यं ॥ अनुष्ठिते स्वधर्मे कीर्तिः स्वयमेवायास्यति ॥ कीर्त्यर्थं कृते कर्मणि कूटाचारतया तद्धानिकं स्यात् ॥ विहितत्यागेनाकीर्तिर्न प्रार्थनीया ॥

"निन्दनस्तवसत्कारन्यक्कारार्थं कलेबरं । प्रधानपरयोराजन्नविवेकेन कल्पितं" इति भागवतोक्तिर्विहितानुष्ठाने या अज्ञनिन्दा अननुष्ठाने यस्तवस्तावुभावगणयितव्याविति सूचयति ॥ उचितकीर्तित्यागोऽपि पापहेतुः । यथोक्तमुत्तररामायणे ॥

"अकीर्तिर्यस्य गीयेत लोके भूतस्य कस्य चित् ।
पतत्येवाधमान्लोकान् यावच्छब्दस्स कीर्त्यते" ॥ इति ॥

**अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययां ।**
**संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥ ३४॥**

वि ॥ अपकीर्तिं चावाप्स्यसीत्याह । अकीर्तिं चेति ॥ अपि चाकीर्ति अपकीर्तिं अव्ययां शाश्वतीं ॥ अस्तु को दोष इत्यत आह ॥ संभावितस्येति ॥ लोके बहुमतस्य । अतिरिच्यते अधिका भवति ॥

शं ॥ न केवलं स्वधर्मकीर्तिपरित्यागः । अकीर्तिमिति । अकीर्तिं चापि भूतानि कथयिष्यन्ति ॥ ते तव अव्ययां दीर्घकालां ॥ धर्मात्मा शूरः इत्येवमादिभिः गुणैः संभावितस्य चाकीर्तिः मरणात् अतिरिच्यते ॥ संभावितस्य चाकीर्तेर्मरणं वरमित्यर्थः ॥

रा० ॥ न ते केवलं निरतिशयसुखकीर्तिहानिः । "पार्थः युद्धे प्रारब्धे पलायितः" इत्यव्ययां सर्वदेशकालव्यापिनी

अकीर्तिं च समर्थान्यसमर्थान्यपि भूतानि कथयिष्यन्ति ॥ ततः किमिति चेत् शौर्यवीर्यपराक्रमादिभिस्सर्वसंभावितस्य तद्विपर्ययजा ह्यकीर्तिर्मरणादतिरिच्यते ॥ एवंविधायाः अकीर्तेर्मरणमेव तव श्रेयइत्यर्थः ॥

विचारः

"पापाख्यमनिष्टं व्यवधानेन दुःखफलदं आमुत्रिकत्वात् ॥ शिष्टगर्हालक्षणं त्वनिष्टमासन्नफलदमत्यसह्यं" इति मधुसूदनः ।

अकीर्तिरिति कीर्त्यभावो नोक्तः ॥ अत्र नञो विरोधार्थकत्वेन दुष्कीर्तिरुच्यते ॥ अयं न शूरः धर्मं त्यक्तवान् इत्यादिरूपा ॥

भूतानीति जना विवक्षिताः ॥ विशेषाशयगर्भिततया रामानुजाचार्यो व्याख्याति॥ यदि समर्था जना दूषयेयुस्तत्किञ्चित्सह्यं स्यात्, स्वयमसमर्था अपि जना निन्दां कुर्युरित्यतिदुःखावहत्वं प्राणिसाधारणबोधकशब्दप्रयोगाल्लभ्यते इति तदाशयः ॥ देवमनुष्यादिसर्वसंग्रहाय साधारणशब्दः प्रयुक्त इति मधुसूदनो मन्यते ॥ देवाः खल्विमं गर्हितं कृतवानित्युपालभन्ते ॥ अस्य पुत्रपौत्रादीन् गर्हितस्यायं सन्तान इति मानवा उपालभन्ते । तस्माद्भूतानि कथयिष्यन्ति तवाकीर्तिं इति ॥ अव्ययां इत्यनेनाकीर्तेः कालतोऽभिवर्धमानता सूचिता ॥ मुखान्मुखं प्राप्य शश्वदेव हि सा संवर्धते ॥ इयमपकीर्तिर्देशतः कालतो व्यापिनीत्यव्ययत्वमुपपादितं रामानुजीये ॥ देशतो व्याप्तिर्न सुकरमक्षरलब्धा भवतीति या कालतो व्यापिनी सा देशतोऽपीति व्याप्तिबलाद्व्याख्यानस्योपपत्तिरुक्ता तात्पर्यचन्द्रिकायां ॥ असंभावितानल्पान्दुश्श्रेष्टानपकीर्तिर्नदुःखयति । संभावितानां तु मरणमकीर्तेर्वरमिति द्वितीयार्धस्य भावः ॥

असंभाविता नाम "जीवन्भद्राणि पश्यति" "आत्मार्थे पृथिवीं त्यजेत्" इत्यादिवचनान्यवलम्ब्याकीर्तिं तिरस्कृत्य ये उदरंभरयस्सन्तो युद्धाभिमुख्यं न स्वप्नेऽपि स्मरन्ति तेषां कदापि मानितत्वाभावेन तन्नाशायोगः॥ यदि विवक्षितः संभावितस्तस्याकीर्तिरत्यसह्या मरणादप्यधिकतरा॥ मृतिर्हि तात्कालिकं क्षणिकं दुःखं जनयति अकीर्तिस्तु दीर्घकालीनामिति॥ ननु सामदानभेदैरुपायैस्स्वरक्षणं धर्मशास्त्रे वर्णितं॥ 'शरीरमाद्यं खलु धर्मसाधनं' इत्यभियुक्तोक्तिः प्रसिद्धा॥ तथाचोक्तं शान्तिपर्वणि (मधुसूदनोदाहृतं) "साम्ना दानेन भेदेन समस्तैरुत वा पृथक्। विजेतुं प्रयतेतारीन्न युध्येत कदाचन॥ अनित्यो विजयो यस्माद्दृश्यते युध्यमानयोः। पराजयश्च संग्रामे तस्माद्युद्धं विवर्जयेत्" इति। तस्मान्मरणं वरं नेत्यत आह॥ संभावितस्य चेति॥ स्यादेतदसंभावितस्य॥ बहुमतस्य तु मरणमेवापकीर्तेर्वरम्॥ शरीरपोषणवचनस्य सामाद्युपायान्वेषणवचनानां चार्थशास्त्रत्वात् "न निवर्तेत संग्रामात्" इति धर्मशास्त्राद्दौर्बल्यं ज्ञेयं॥

**भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः।**
**येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवं॥३५**

वि०॥ दयालुत्वान्निवृत्तोऽयमिति कीर्तिमेव कथयिष्यंतीत्यतआह। भयादिति॥ मंस्यन्ते ज्ञास्यन्ते॥ महारथस्वरूपमुक्तं पूर्वाध्याये॥ मन्यन्तां ते ततः का हानिः इत्यत आह। येषामिति॥ येषां महारथानां त्वं बहुमतः भूत्वाऽऽसीः तेषां पुरतएव लाघवं यास्यसीत्यर्थः॥

शं ॥ किंच भयादिति ॥ भयात् कर्णादिभ्यो रणाद्युद्धात् उपरतं निवृत्तं मंस्यन्ते चिंतयिष्यन्ति ॥ न कृपयेति त्वां महारथाः दुर्योधनप्रभृतयः मंस्यन्ते इत्याह ॥ येषां च त्वं दुर्योधनादीनां बहुमतो बहुभिर्गुणैर्युक्तइत्येवं बहुमतो भूत्वा पुनस्त्वं यास्यसि लाघवं लघुभावं ॥

रा० ॥ बन्धुस्नेहात्कारुण्याच्च युद्धान्निवृत्तस्य शूरस्य ममाकीर्तिः कथमागमिष्यतीत्यत आह । येषां कर्णदुर्योधनादीनां महारथानां इतः पूर्वं त्वं शूरो वैरीति बहुमतो भूत्वा इदानीं युद्धे समुपस्थिते निवृत्तव्यापारतया लाघवं सुग्रहतां यास्यसि ॥ ते महारथास्त्वां भयाद्युद्धात् उपरतं मन्यन्ते ॥ शूराणां वैरिणां शत्रुभयादृते बन्धुस्नेहादिना युद्धादुपरतिर्नोपपद्यते ॥

विचारः

बन्धुस्नेहान्निवृत्तोऽयं कारुण्याच्चेति दुष्कीर्तेर्नावकाश इत्यत आह भयादिति ॥ न केवलं पामराः कातर्यात्पलायित इति मन्येरन् अपितु महारथाश्च ॥ द्वितीयार्धगत 'च'शब्दो महारथा इत्यनेन योज्यः ॥ यतश्शूराणां प्रवृत्ते शस्त्रसंपाते युद्धादुपरतिः सुतरां नोपपद्यते अतस्तद्विदो महारथाः भयमेव कल्पयेयुः । न तु बन्धुस्नेहाद्यन्यथोपपत्तिं ॥ महारथशब्देनाहिताः दुर्योधनप्रभृतय एव विवक्षिताः यतो भीष्मादयो याथार्थ्यं जानीयुरिति केचित् ॥ स्वव्यूहपरव्यूहाखिलमहारथानां ग्रहणे बाधकं न दृश्यते ॥ अयुक्तया कृपया न्यवर्तत इति पक्षादपि भयात्पलायित इत्यस्य सयुक्ति-

कत्वान् ॥ कर्णदुर्योधनादयस्तु विशेषाकारेण लाघवं वदेयुः ॥ यथोक्तं दुर्योधनेनोद्योगपर्वणि ५५. अ.

"युधिष्ठिरः पुरं हित्वा पंचग्रामान्स याचते ।

भीतो हि मामकात्सैन्यात्प्रभावाच्चैव मे विभो" इति ।

पूर्वं दयया पंचग्रामप्रार्थनायां भयेनैवं प्रार्थयामासेति यथा दुर्योधनोऽमन्यत तथाऽद्य कारुण्यादर्जुने निवृत्तेऽपि स्वाशयं दृढीकृतं दुर्योधन प्रतिपद्यते ॥ प्रवृत्त्यनन्तरनिवृत्तिबोधकेनोपरतशब्देन स्नेहाद्यन्यथोपपत्ते व्यावृत्तिस्सूचिता ॥ यदि कृपालुस्तर्हि समरसमारम्भमेव न कुर्यात् प्रवृत्त्यनन्तरं शस्त्रास्त्रप्रयोगसमये परावृत्त इति कम्पएव स्यात्कारणमिति शत्रुरनुमिनोतीति ॥

लोके तावत् "समानानामुत्तमश्लोकोऽस्तु" इत्याशिषो हृद्याः ॥ यशस्कामानामुच्चपदेच्छाऽप्येवमेव दृश्यते ॥ यथा भूपस्य भूपेष्वाधिक्यं वाञ्छितं ब्राह्मणस्य स्वव्यूहे ज्ञानोत्कर्षः अभिलषितः, तथा महावीरस्यार्जुनस्य महारथिकेषून्नतत्वमाकाङ्क्षायोग्यं ॥ तथैव महारथश्रेष्ठतया तेषु स बहुमतोऽप्यभूत् । तेषां मध्ये तद्गणनायां च लाघवं कष्टतममित्याह येषां च त्वमिति ॥ पूर्वं बहुमतस्य तैरेवापमानो बहु नैच्यावहोऽतिकष्ट इत्यर्थः ॥

अवाच्यवादांश्च बहून्वदिष्यन्ति तवाहिताः ।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किं ॥ ३६

वि०॥ न केवलं लाघवप्राप्तिः ॥ तवाहिताः शत्रवः अवाच्यवादान् वचनानर्हशब्दान् बहून् वदिष्यन्ति ॥ तत

शत्रुकृतनिन्दादिश्रवणात् दुःखतरं अतिशायितदुःखं किं नु न किमपीत्यर्थः ॥

शं ॥ किंच । अवाच्यवादानिति ॥ अवक्तव्यवादान् च बहूननेकप्रकारान् वदिष्यन्ति तवाहिताः शत्रवः, निन्दन्तः कुत्सयंतः तव त्वदीयं सामर्थ्यं निवात (निभृत) कवचादियुद्धनिमित्तं ॥ तस्मात्ततो निंदाप्राप्तेः दुःखात् दुःखतरं नु किं ततः कष्टतरं दुःखं नास्तीत्यर्थः ॥

रा० ॥ किंच शूराणामस्माकं सन्निधौ कथमयं पार्थः क्षणमपि स्थातुं शक्नुयात् अस्मत्सन्निधानादन्यत्रह्यस्य सामर्थ्यं इति तव सामर्थ्यं निन्दन्तः शूराणामग्रे अवाच्यवादांश्च बहून्वादिष्यनति तव शत्रवो धार्तराष्ट्राः। ततोऽधिकतरं दुःखं किं तव ॥ एवंविधावाच्यश्रवणात् मरणमेव श्रेय इति त्वमेव मन्यसे ॥

विचारः

उदासीना महारथाः कातरमर्जुनं मन्यन्तां ममापगमेनोपकृताः शत्रवस्तु कृतज्ञा भवेयुरित्यत आह । अवाच्यवादानिति ॥ नार्जुन ते स्यादयं भ्रमः त्वां शत्रवः स्तोष्यन्तीति ॥ यतस्तव पौरुषं कुत्सयन्तश्छिद्रान्वेषिणस्सन्तः कर्णकठोरान् मर्मघातुकान् नानाप्रकारान् धिक्पूर्वकान् शब्दानेव वदिष्यन्ति ॥

अस्मिन् विशेषतः प्रज्ञावादनिरासप्रकरणे पारत्रिकानिष्टसाधनं पापमुक्त्वा ऐहिकानर्थेषु दुष्कीर्तिः लाघवप्राप्तिः अवाच्यनिन्दा इत्युत्तरोत्तरं

वलीयांममनर्थं निरूप्य कष्टं कष्टतरं कष्टतमं दुःखमुपपादितं दृश्यते। "स्तवसामर्थ्य" स्तुतियोग्यतां निन्दन्तः इति व्युत्पत्तिं पाक्षिकतयाऽङ्गीकरोति ॥

ननु दुःखतरं इति तरप् प्रत्ययोऽयुक्तः ॥ तस्य गुणविशिष्टवाचिशब्देभ्य एव विहितत्वात् जात्यादिशब्देभ्योऽविधानात् । नहि घटतर इति प्रयोगो युज्यते, इत्याशंक्य दुःखशब्दः प्रातिकूल्यविशिष्टवाचीति समाहितं तात्पर्यचन्द्रिकायां ॥ ततो दुःखतरं नु किं? ॥ न किमपि । अति दुःखावहत्वनिरूपकत्वेनेदं चिन्त्यतां नाम ॥ अवाच्यवादे सत्यर्जुनं कान्दिशीकं अवीरं वद्भिर्नानाप्रकारैरर्जुनस्य निन्दा संभाविता ॥ तत्र तावद्गाण्डीवधनुरपि निन्दितं भवेत् । तदा अर्जुनप्रतिज्ञाया दूषकस्सर्वथा वध्यो भविष्यति ॥ युद्धादुपरतस्स्वप्रतिज्ञाभङ्गं वा सहेत अथवा पुनरागत्य युध्येत इति महद्दुःखं स्यादिति ॥

**हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीं ।**
**तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥३७**

वि० ॥ यच्चोक्तं "न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः" इति जयः संदिग्ध इति, पक्षद्वयेऽप्यहानिरित्याह, हतो वेति॥ जित्वा वा भोक्ष्यसे महीमित्यत्र स्वर्गं च पश्चात्प्राप्स्यसीत्यपि ध्येयं ॥ "ये युध्यन्ते प्रधनेषु शूरासो ये तनुत्यजः । ये वा सहस्रदक्षिणास्तांश्चिदेवापि गच्छतात्"इति श्रुतौ ये शूराः प्रधनेषु युद्धेषु युध्यन्ति

ये च तत्र म्रियन्ते ये च सहस्रसंख्याकदक्षिणादातारः तानेवायं प्रेतोऽपि गच्छतादिति यमं प्रति प्रेतस्य स्वर्गप्रार्थनात्॥ तत्र च ये युध्यन्ते तान्प्रेतो गच्छतादिति युद्धे शूराणां जयेऽपि स्वर्गप्राप्तेरत्र श्रुतावत्रगमात्॥ तस्मात्पक्षद्वयेऽपि फलभावाद्युद्धाय कृतनिश्चयः सन्नुत्तिष्ठ सन्नद्धो भवेत्यर्थः॥

शं॥ युद्धे पुनः क्रियमाणे कर्णादिभिः॥ हतो वेति॥ हतो वा प्राप्स्यसि स्वर्गं हतः सन् स्वर्गं प्राप्स्यसि॥ जित्वा कर्णादीन् शूरान् भोक्ष्यसे महीं॥ उभयथाऽपि तव लाभएवेत्यभिप्रायः॥ यत एवं तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः जेष्यामि शत्रून् मरिष्यामि वेति निश्चयं कृत्वेत्यर्थः॥

रा०॥ अतश्शूरस्यात्मना परेषां हननं आत्मनो वा परैर्हननमुभयमपि श्रेयसे भवतीत्याह—हतो वेति॥ धर्मयुद्धे परैर्हतश्चेत्ततएव परमनिःश्रेयसं प्राप्स्यसि॥ परान्वा हत्वा अकण्टकं राज्यं भोक्ष्यसे॥ अनभिसंहितफलस्य युद्धाख्यस्य धर्मस्य परमनिःश्रेयसोपायत्वात् तच्च परमनिःश्रेयसं प्राप्स्यसि॥ तस्माद्युद्धायोद्योगः परमपुरुषार्थलक्षणमोक्षसाधनमिति निश्चित्य तदर्थमुत्तिष्ठ॥ कुन्तीपुत्रस्य तवैतदेव युक्तमित्यभिप्रायः॥

### विचारः

केचिदिमं श्लोकं काम्यफलविवक्षयैव प्रवृत्तं मन्यन्ते। स्वर्गशब्दोऽत्रामृतत्वप्रकरणात्परमनिश्रेयसपरस्तत्स्थानपरो वेति देशिकः। अनभिसंहित-

फलतयाऽनुष्ठानेऽपवर्गस्यापि संभवेन तत्संग्रहार्थमेवं व्याख्यातं ॥ अत्र हते सति स्वर्गः जये राज्यमित्युक्त्या केचिदवधारणं पठित्वा हननादेव स्वर्गप्राप्तिर्नतु जये सतीति व्याचक्षते ॥ एतदनुपपन्नं ॥ यदि जैत्राणां नैव स्वर्गः किंत्वैहिकमात्रं फलं युद्धे सर्वैः पराजय एवाभ्यर्थनीयो भवेत् ॥ शतायुषाऽपि पुरुषेण यो भोगयोग्यः कालः सत्वल्पएवेति तदपेक्षया स्वर्गभोगस्य सान्तत्वेऽपि स्थिरतरत्वात् जयेन स्वर्गहानात्पराजयेन तल्लाभस्य स्पृहणीयत्वात् ॥ वस्तुतस्तु जये सति पश्चात्स्वर्गं प्राप्स्यसीत्येवाशयः "ये युध्यन्ते प्रधनेषु शूरासो ये तनुत्यजः । ये वा सहस्रदक्षिणास्तांश्चिदेवापि गच्छतात्" इति श्रुतौ ये युध्यन्ते तान् प्रेतो गच्छतादिति शूराणां जयेऽपि स्वर्गप्राप्तेरवगमात् । (पश्यत श्रीमध्वगीतातात्पर्ये)

प्रकृतश्लोकेनैतदध्यायगतषष्ठसप्तमाष्टमश्लोकस्थानां संशयानामुत्तरं ज्ञेयम् ॥ तथाहि षष्ठे श्लोके जयो वाऽपजयो वा भवेदित्यन्यतरो निश्चयेन न ज्ञायते इति प्राप्ते उभयथापि नहानिरित्युत्तरं ॥ सप्तमे "यच्छ्रेयस्यान्निश्चितं ब्रूहि तन्मे" इति शङ्कायाः युद्धाय कृतनिश्चय इति समाधानम् ॥ "शोकं यदपनुद्यात् तन्न पश्यामि" "अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यं" इत्यष्टमे पद्ये यदुक्तं तस्यापि समाधानं प्रकृते दृश्यते॥ शोकाभावस्य हेतवउक्ताः जीवनित्यत्वं जीवपारतन्त्र्यं ईश्वरस्वातन्त्र्यं जन्ममरणध्रौव्यं धर्मत्यागे प्रत्यवायः इत्यादिकं उक्तजातं शोकापनोदि भवति ॥ एवमपनोदिप्रदर्शनेन राज्यलाभो नाहितरूपः इति भावस्सूचितस्तस्मादित्यनेन ॥ अव्यवहितपूर्वप्रकृतः उभयथा लाभस्तस्मादित्यनेन परामृश्यते। अथवा पूर्वोक्तं कृत्स्नमपि युक्तिजातम् ॥

"कृतनिश्चयः" इत्यत्र निश्चयाकारनिरूपणावसरे जेष्यामि शत्रून् मरिष्यामि वा इति निश्चयं कृत्वेति शङ्कराचार्यः । परमपुरुषार्थलक्षणमोक्ष-

साधनमिति निश्चित्य तदर्थमुक्तिरित्याशय उक्तो रामानुजाचार्येण ॥ अनयो-र्भेदः स्फुटः ।

मत्पितृष्वसृकुन्तीपुत्रस्य तव मदनुबन्धमहिम्ना जयएव भविता नतु पराजय इति सूचनाय "कौन्तेय" इति संबोधनार्थं उपपादयति वेङ्कटनाथः॥ "युध्यस्व जेताऽसि रणे सपत्नान्" इति वक्ष्यमाणमत्र संवादयति च॥ कौन्तेयेत्यनेनैवंभावकल्पनं तु क्लिष्टव्याख्याविषये या भीतिः तद्वर्जन-प्रतिज्ञा चानेन प्रदर्शिता तां बाधते ॥

अत्र राज्यस्य स्वर्गस्य वा फलत्वेन स्मरणे किमाकूतमिति संदेहो जायते ॥ किं फलकामनापूर्वकयुद्धकरणं उपदिष्टं अथवा स्वर्गादिफलकीर्तन-मानुषंगिकफलोक्तिमात्रं वेति ॥ केचिदाहुः ॥ कामनां विना स्वर्गस्यानु-षंगिकत्वायोगात् "यद्वा जयेम यदि वा नो जयेयुः" इत्यर्जुनवचसा "मया हतांस्त्वं जहि मा व्यथिष्ठा युध्यस्व जेताऽसि रणे सपत्नान्" इति भगवद्वचसाऽर्जुनस्य जयाभिसन्धेः स्फुटत्वाच्च हतो वेति प्रकृतेन श्लोकेन स्वर्ग-राज्ययोरुद्देशोऽनुज्ञातः । तस्मादिह पाक्षिकत्वेन काम्यं स्वीकृत्य तदनुष्ठान-प्रकारो वर्णितः इति ॥ अत्रोच्यते ॥ श्लोकस्य काम्यपरत्वे स्वधर्ममित्यारभ्य धर्माधर्मबोधकाष्टश्लोक्यामन्तर्भावोऽस्यानुपपन्नस्स्यात् । काम्यत्यागे प्रत्यवाया-योगात् । राज्याय विहितं युद्धं अर्थशास्त्रीयं दृष्टफलकत्वात् ॥ तस्य पूज्य-वधनिषेधकाद्धर्मशास्त्राद्दौर्बल्यं सिद्धमेव ॥ हित्वा पापमवप्स्यसीत्युक्तिरपि काम्यपरत्वे न संगच्छते । 'अहो बत महत्पापं कर्तुं व्यवसिता वयं । यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः' इत्यर्जुनोऽपि लोभाद्युद्धं पापकरं जज्ञावेव ॥ तं प्रति राज्यस्वर्गान्यतरलाभं पुरस्कृत्य युद्धं न विधेयं ॥ तस्य पापभीरुत्वेन राज्यस्वर्गोभयोदासीनत्वात् ॥ काम्यत्वेऽपि आरब्धत्वेन समापनीयत्वादकरणे प्रत्यवायः इति यदुत्तरं दत्तं तन्न प्रत्याययति ॥ युद्धं नाद्याप्यारब्धं । आरंभात्पूर्वं विना पापं परावृत्तिसंभवे किमितीमां भगवान्ना-

नुजज्ञौ ॥ तस्माद्धर्मशास्त्रत्वयोगशास्त्रत्वान्यथानुपपत्त्या प्रकृतश्लोकोऽपि निष्कामयुद्धमेव विदधाति, स्मारितं तु फलमानुषङ्गिकमित्येव पक्षः श्रेयान् प्रतिभाति ॥ एवमभिप्रेत्य मधुसूदननीलकण्ठावापस्तम्बश्रुतिमुदाहरतः ॥ "तद्यथाऽऽम्रे फलार्थे निर्मिते छायागन्ध इत्यनूत्पद्यते। एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते। नाधर्मेहानिर्भवति" इति ॥ यत्तु अर्जुनस्य फलाभिमन्धिरभूदिति प्रदर्शितं तदपि काम्याभ्यनुज्ञां न बोधयति ॥ "यद्वा जयेम" इति वाक्येनार्जुने फलापेक्षायां सत्यामपि योगशास्त्रेण तन्निवारणस्यैव कर्तव्यत्वात् ॥ अतः हतो वेत्यत्र युद्धस्य काम्यत्वेनानुष्ठानप्रकारो वर्णित इति भावकीर्तनं प्रकरणविरुद्धं भाति ॥ यत्तूक्तं कामनां विना स्वर्गस्य सर्वथाऽऽनुषङ्गिकफलत्वायोग इति तद्भ्रममूलं ॥ काम्यकर्मणां इष्टिविशेषाणां सर्वेषामपि निष्काममनुष्ठानस्य शास्त्रीयत्वात् भावनाभेदेनैव फलभेद उक्तः ॥

**सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ।**
**ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि॥ ३८**

वि ॥ यच्चोक्तं पापमेवाश्रयेदस्मानिति तत्राह ॥ सुखेति ॥ यथा दुःखमनुपादेयं तथा वैषयिकसुखमप्यनुपादेयमित्यनुपादेयत्वेन दुःखसमं सुखं कृत्वेत्यर्थः । लाभालाभावित्यादावपि समावित्यनुषङ्गः। अनुपादेयत्वेनालाभसमं लाभं कृत्वेत्यर्थः॥ जयाजयावित्यत्राप्येवमर्थो ध्येयः॥ सुखाद्यभिलाषं हित्वा भगवत्पूजारूपोऽयं स्वधर्मइति बुद्ध्येति यावत् ॥ युद्धाय युज्यस्व युंक्ष्व ॥ ततो भगवद्भक्तिपूर्वकं स्वधर्म-

तयाऽनुष्ठानात् पापं नैवाप्स्यसि ॥ प्रत्युत पुण्यमेवाप्स्यसीत्यर्थः ॥

शं ॥ तत्र स्वधर्मः इत्येवं युद्ध्यमानस्य उपदेशमिमं शृणु ॥ सुखदुःखेइति ॥ सुखदुःखे समे तुल्ये कृत्वा रागद्वेषावकृत्वेति यावत् ॥ तथाच लाभालाभौ जयाजयौ च समौ कृत्वा ततो युद्धाय युज्यस्व घटस्व ॥ न एवं युद्धं कुर्वन् पापं अवाप्स्यसि एष उपदेशः प्रासङ्गिकः ।

रा० ॥ मुमुक्षोर्युद्धानुष्ठानप्रकारमाह ॥ एवं देहातिरिक्तमसंस्पृष्टसमस्तदेहस्वभावं नित्यमात्मानं ज्ञात्वा युद्धे चावर्जनीयशस्त्रपातादिनिमित्तसुखदुःखार्थलाभालाभजयपराजयेष्वविकृतबुद्धिः स्वर्गादिफलाभिसंधिरहितः केवलकार्यबुद्ध्या युद्धमारभस्व ॥ एवं कुर्वाणो न पापमवाप्स्यसि ॥ पापं दुःखस्वरूपं संसारं नावाप्स्यसि ॥ संसारबन्ध क्ष्यसइत्यर्थः ॥

विचारः

अत्र समत्वकरणं नाम वैषयिकसुखस्य दुःखवदनुपादेयत्वनिश्चयेन उभयौदासीन्यमेव ॥ हर्षविषादरूपविलक्षणकार्यजनकत्वाभावरूपं इति केचिद्व्याचक्षते ॥

सुखादिद्वन्द्वत्रिके उत्तरोत्तरस्य पूर्वपूर्वप्रयोजकत्वं संबन्धो ज्ञेयः ॥ जयापजययोर्लाभालाभौ भवतः । तयोः सुखदुःखे इति ॥ सुखदुःखे इत्यनेनैव तल्लाभालाभसंग्रहे पौनरुक्त्यं इति भ्रमव्युदासाय सामान्याकारेण लाभालाभौ नात्र विवक्षितौ किंत्वर्थलाभालाभाविति रामानुजदेशिकव्याख्या॥

"ततः" इत्यानन्तर्यार्थको वा हेत्वर्थको वा ॥ आनन्तर्यार्थकत्वं तु अनुपयुक्तत्वेन निराह देशिकः ॥ सुखादिद्वन्द्वत्रिकौदासीन्यसङ्कल्पानन्तरं भगवत्पूजात्वेन अयं स्वधर्मः तस्मादेव कर्तव्य इति बुद्ध्या अधिकारसम्पत्त्यनन्तरं इत्यर्थे दोषो न ज्ञायते ॥

"नैवं पापमवाप्स्यमी"त्यत्र एवंशब्दार्थोऽवधार्यः ॥ विना समदर्शनं पापं स्यादेव इत्यनेन गम्यते ॥ यद्यप्यैहिकामुष्मिकेष्टानिष्टानि वर्णितानि। तथापि तत्कामनायां न मे हृदयं। तत्प्राप्तिपरिहारावुद्दिश्य सकामं न योद्धव्यं। अपितु प्रकृतश्लोकोक्तानुसन्धानविशेषेणैवेति भगवतो भावः ॥

पापशब्देन युद्धजन्यगुर्वादिवधप्रयुक्तपापस्य ग्रहणे अनुपपत्तिं मन्यमानो रामानुजाचार्योऽन्यथा व्याचष्टे॥ पुण्यपापकर्मपरत्वमादाय तज्जन्यत्वरूपशक्यसंबन्धाल्लक्षणया संसारपर इति ॥ परम्परया संसारमुक्तिरप्युक्तेति भावश्च सूचितः॥ अत्र गुरुब्राह्मणादिवधप्रसक्तपापग्रहणेऽपि दोषो न ज्ञायते॥ दोषस्त्वेवमुपपादितस्तात्पर्यचन्द्रिकायां ॥ "पापशब्दोऽत्र न गुरुवधादिशङ्कितपापपरः। युद्धस्य स्वधर्मतामात्रेण तन्निवृत्तौ सुखदुःखसाम्यादिबुद्धिविशेषस्यैवमित्यनूदितस्य नैरर्थक्यप्रसङ्गात् ॥ न च कृतपापपरः, नावाप्स्यसीत्यनन्वयात् ॥ करिष्यमाणे च न प्रायश्चित्तम् ॥ न च विद्याव्यतिरिक्तेषूत्तराघाश्लेषः॥ अतोऽत्रामृतत्वप्रकरणान्मुमुक्ष्वपेक्षयाऽनिष्टफलत्वाविशेषेण पुण्यपापरूपसकलसांसारिककर्मपरः, ततश्च तत्फलभूतस्संसारोऽत्र लक्ष्यते" इति ॥ यद्यपि युद्धस्य कृतपापध्वंसकत्वं वा प्रायश्चित्तरूपत्वं वा उत्तराघाश्लेषप्रयोजकत्वं वा न घटते ॥ सुखदुःखसमीकरणपूर्वकं स्वधर्मत्वेन निष्काममनुष्ठितमिदं युद्धं गुर्वादिवधात्स्वरसतो जनिष्यमाणमघं प्रतिबध्नातीत्युक्ते को दोषः? ॥ स्वधर्मतोपदेशेनैव पापशङ्कायाः प्रशमितत्वेनेह तस्याः पुनरनुदयादेवमित्यनूदितस्य नैरर्थक्यमप्रसक्तप्रतिषेधो वेति दूषणमेवावशिष्यते॥ तत्रोच्यते ॥ यद्यपि स्वधर्मस्यानुष्ठेयत्वोपदेशः कृत एव ॥ कथंकारमनुष्ठेयः

इत्यनुष्ठानप्रकारस्तु नाद्यापि वर्णितः ॥ इहैव हि स्वधर्मस्य स्वधर्मत्वेन केवलं फलौदासीन्येन कार्यत्वबुद्ध्याऽनुष्ठानं वर्ण्यते ॥ अनुपदं योगप्रकरणैः प्रपञ्च्यते च ॥ किंचास्त्यन्योऽप्यवसरः ॥ हतोवेत्यत्र फलस्मरणेन यस्संभावितो भ्रमः स्वर्गराज्यादिकामनाऽभ्यनुज्ञातेति तं निवारयितुमनुष्ठानाङ्गभूतानुसन्धानप्रकारनिरूपणमपेक्षितं भवति, स्वर्गादिकमानुषङ्गिकमेव प्रोक्तं तत्कामना तु नाभिप्रेता द्वन्द्वसमीकरणेन योद्धव्यमिति ॥ अतः पापशब्दस्य संसारलक्षकत्वे दोषाभावेऽपि गुर्वादिवधप्रसक्तपापपरत्वेऽपि न दोषोऽवगम्यते ॥

समीकरणे तावत्सुखमनुपादेयमिति यद्विवक्षितं तद्वैषयिकसुखमात्रं ॥ तज्जनकं वैषयिकं पुण्यमपि तिरस्कार्यं ॥ अवच्छेदकावच्छेदेन पुण्यस्य वा सुखस्य वा न त्यागो विवक्षितः ॥ पुण्येषु इष्टत्वानिष्टत्वनिरूपणपूर्वकं सिद्धान्तो विवरिष्यते "उभे सुकृतदुष्कृते" इत्यस्योत्तरत्र व्याख्याने ॥

प्रकृतश्लोकपूर्वश्लोकयोः सङ्गतिजिज्ञासायां शाङ्करव्याख्यातृष्वभिप्रायभेदो दृश्यते ॥ "प्रकृतश्लोको मुमुक्ष्वनुष्ठानप्रकारप्रतिपादकः पूर्वस्तु काम्यनुष्ठानप्रकारनिरूपकः" इति पक्षं वेङ्कटनाथोऽवलंबते ॥ अयमेव पक्षश्शङ्कराचार्याभिमतः इत्यसौ मन्यते ॥ शङ्करभाष्ये च "स्वधर्मे इत्येवं युध्यमानस्य उपदेशमिमं शृणु" इत्यवतारिका वर्तते ॥ एतद्बलेन स्वाचार्योक्तानुसारि स्वव्याख्यानमित्याशयः ॥

मधुसूदननीलकण्ठौ तूभावपि श्लोकौ निष्कामनापरौ स्वर्गादिकं त्वानुषङ्गिकं फलं पूर्वश्लोकेन काम्याभ्यनुज्ञा नैव विवक्षिता इति मन्येते ॥ पूर्वश्लोकव्याख्यानेऽस्मिन्विषये प्रपञ्चितं द्रष्टव्यं इति प्रार्थ्यते ॥ तस्माद्युद्धादिकं फलौदासीन्येनैव कर्तव्यं भगवत्पूजात्वेन स्वधर्मत्वेन चेति पक्षएव श्रेयान् भाति ॥ हतो वेत्यनेन न कोऽपि विरोधः शङ्कनीयः ।

"युद्धाय युज्यस्व" इति मूलं विवक्षित्वा "एष उपदेशः प्रासङ्गिकः" इत्युक्तं शङ्करभाष्ये ॥ गीतायां युद्धं कर्तव्यं इति बहुवारं विधानेऽपि परमार्थ-हृदयं तु न युद्धे । अपितु संन्यासइति पुनःपुनरद्वैतवादिनो निर्बन्धेनाहुः ॥ युद्धाय युज्यस्वेत्यस्य प्रासङ्गिकत्वे नियामकं तु नोपपादितम् ॥

समीकरणप्रकारचिन्तायां "समदुःखसुखं धीरं" इत्यत्रोक्तं प्रमेयं स्मर्तव्यं भवति ॥ सुखत्वेन दुःखस्य मननं समताकरणं इति रामानुजाचार्याकूतं ॥ यथा आरोग्यकामः औपधादिक्लेशं सुखसाधनत्वात्सुखवन्मत्वा प्रवर्तते यथाचार्थार्थी समुद्रतरणादिक्लेशं, तथा तापत्रयनिवृत्तिं निरतिशयानन्दं च लिप्सुः तदुपायान्तरीयकदुःखं सुखवदेव मन्यते इत्यसावेवं सुखदुःखे समे करोतीति तदाशयः ॥ अस्मिन्व्याख्याने सुखोत्सेकस्तम्भनं वा सुखस्य हेयत्वं वा न ज्ञापितं । अपितु दुःखस्य सुखस्थानीयत्वमेव ॥ वस्तुतस्तु दुःखस्य सुखत्वेन मननं न मोक्षसाधनं भवेत् ॥ वैषयिकस्यापि सुखस्य परमपुरुषार्थप्रतिबन्धकत्वेनानुपादेयत्वात् ॥

भारते मोक्षधर्मे समदर्शिलक्षणमेवं पठ्यते (१५८—अ)

"न धनार्थं यशोऽर्थं वा धर्मस्तेषां युधिष्ठिर ॥

अवश्यं कार्यं इत्येव शरीरस्य क्रियास्तथा ।

ये न हृष्यन्ति लाभेषु नालाभेषु व्यथन्ति च ॥

निर्ममा निरहंकारास्सत्त्वस्थास्समदर्शिनः ॥

लाभालाभौ सुखदुःखे च तात प्रियाप्रियं मरणं जीवितं च ।

समानि येषां स्थिरविक्रमाणां बुभुत्सतां सत्त्वपथस्थितानां" ॥३२॥ इति

"सुखदुःखे समे कृत्वा" इत्यत्र मया सह वर्तत इति समः श्रीरमणः इति व्युत्पत्त्या वा विद्वद्रूढ्या समं ब्रह्मेति गृहीत्वा वा तस्मिन् समे हरौ

सुखादिकं तदधीनत्वबुद्ध्या कृत्वा शोधयित्वा, इत्यर्थोऽपि निर्दुष्टो भाति ॥ विवृत्यां यदुक्तं "सुखाद्यभिलाषं हित्वा भगवत्पूजारूपोऽयं स्वधर्म इति बुद्ध्वेति यावत्" इति तदनेन दार्ढ्यं लभते ॥

अयमत्र भावसंक्षेपः ॥ गुर्वादिवधः पापावह इति शास्त्रप्रसिद्धम् ॥ तथा संसारबन्धोऽपि पापफलरूपः कामादिजन्योऽनर्थः 'कर्मणा बध्यते जन्तु'-रित्यादिप्रमाणसिद्धः ॥ हिंसानिमित्तकप्रत्यवायं सांसारिकपापं वा परिहर्तु-मन्तःकरणशुद्ध्या मुमुक्षुरलंकर्मीणो भवेत् ॥ अधिकारप्राप्तौ सुखादिद्वन्द्वेषु समताकरणसंकल्पपूर्वकं कर्मसु प्रवर्तेत ॥ कर्मानुष्ठानवेलायां च फलौदासी-न्येन विषमान्यपि सुखदुःखादीन्यनुपादेयत्वबुद्ध्या समानि कृत्वा धैर्येणोत्सेक-विषादौ निरुध्य गुर्वादिवधपापं वर्जयेत् ॥ सांसारिकं पापं सत्कर्माचरण-प्राप्तज्ञानद्वारा निर्बीजं कुर्यात् । अन्यथा पापं स्यादेव ॥ योऽयमर्थः प्रागपि मात्रास्पर्शेत्यभिमानत्यागोपदेशेन, यं हि नव्यथयन्तीति समदुःख-सुखस्य धीरस्यामृतत्वकथनेन सूचितस्स एवात्र प्रकृते श्लोकेऽवधारितः ॥ यत्पारत्रिकसुखं स्वर्गादिकं ऐहिकं राज्यादिकं ऐहिकानिष्टान्यकीर्तिलाघव-निन्दादीन्यतीतैः पद्यैः प्रदर्शितानि तत्रापि नश्वरफलकामना न विहिता । अपितु आनुषङ्गिकफलान्येव प्रोक्तानि ॥ तस्माद्भवान् योगयुक्तस्सन् भगव-त्पूजात्वेन स्वधर्म इत्येवेदं युद्धमाचरेत् इति ॥

**एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु।**
**बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि॥ ३९**

वि ॥ नत्वेवेत्यादिग्रन्थोक्तार्थोपसंहारपूर्वकं तत्संगतत्वे-नोत्तरप्रकरणारम्भं प्रतिजानीते॥ एषेति॥ अत्र सांख्यशब्दो

जीवेश्वरज्ञानपरः । नत्वं नेमइत्यादिना जीवस्य प्राधान्येन तादर्थ्येन नत्वेवाहमित्यादिनेश्वरस्येति द्वयोरपि प्रकृतत्वात् ॥ बुद्धिशब्दश्च बुध्यतेऽनयेति व्युत्पत्त्या बोधजनकवाक्यपरः॥ योगशब्दश्च युज्यते प्राप्यते फलमनेनेति करणव्युत्पत्त्योपायपरः ॥ अयमर्थः ॥ हे पार्थ सांख्ये जीवेश्वरस्वरूपज्ञानविषये तज्जननार्थमिति यावत् । एषा नत्वेवाहमित्यारभ्य देही नित्यमवध्य इत्यन्ता बुद्धिः तदुभयस्वरूपबोधजनिका वाक् वाक्यानीति यावत् ॥ ते तुभ्यं अभिहिता उक्ता। योगे तत्त्वज्ञानहेतूपायज्ञानार्थमिति यावत्। इमां त्रैगुण्यविषया इत्यादिनाऽऽषष्ठसमाप्ति वक्ष्यमाणां बुद्धिं उपायबोधजनिकां वाचं वाक्यानीति यावत्। शृणु। श्रवणमात्रस्य विधिना विनापि संभवाच्छ्रुत्वा तत्र निष्ठां कुर्वित्यर्थः॥ अत्र वागभिहितेति यौगिकबुद्धिपदेन तदुक्तिर्नाविशदं वाङ्मात्रमुक्तं किंतु तदवबोधो यथोत्पद्येत तथोक्तमिति ज्ञापनायेति ध्येयं ॥ आदरजननाय योगं प्रशंसति बुद्ध्येत्यादिसार्धश्लोकेन ॥ यया मद्वाग्जन्यया बुद्ध्या ज्ञानोपायबुद्ध्या युक्तः सन् तदनुष्ठानद्वारा ब्रह्मसाक्षात्कारातिशयं प्राप्य कर्मबन्धं संसारं निःशेषतःप्रहास्यसि मुक्तो भविष्यसि ॥

श० ॥ शोकमोहापनये लौकिको न्यायः “स्वधर्ममपि चावेक्ष्य” इत्याद्यैः श्लोकैरुक्तः न तु तात्पर्येण ॥ परमार्थ-

दर्शनंत्विह प्रकृतं ॥ तच्चोक्तमुपसंह्रियते 'एषा तेऽभिहिता' इति शास्त्रविषयविभागप्रदर्शनाय ॥ इह हि प्रदर्शिते पुनः शास्त्रविषयविभागे उपरिष्टात् "ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनां" इति निष्ठाद्वयविषयं शास्त्रं प्रवर्तिष्यते श्रोतारश्च विषयविभागेन सुखं ग्रहीष्यन्तीति । अत आह । एषा ते अभिहिता इति ॥ एषा ते तुभ्यं अभिहिता उक्ता साङ्ख्ये परमार्थवस्तुविवेकविषये बुद्धिः ज्ञानं साक्षाच्छोकमोहादिसंसारहेतुदोषनिवृत्तिकारणम् ॥ योगे तु तत्प्राप्त्युपाये निस्सङ्गतया द्वन्द्वप्रहाणपूर्वकं ईश्वराराधनार्थे कर्मयोगे कर्मानुष्ठाने समाधियोगे च इमां अनन्तरमेव उच्यमानां बुद्धिं शृणु ॥ तां बुद्धिं स्तौति प्ररोचनार्थं ॥ बुद्ध्या यया योगविषयया युक्तो हे पार्थ कर्मबन्धं कर्म एव धर्माधर्माख्यो बन्धः तं प्रहास्यसि ॥ ईश्वरप्रसादनिमित्तज्ञानप्राप्त्या एव इत्यभिप्रायः ॥

रा० ॥ एवमात्मयाथात्म्यज्ञानमुपदिश्य तत्पूर्वकं मोक्षसाधनभूतं कर्मयोगं वक्तुमारभते ॥ सङ्ख्या बुद्धिः । बुद्ध्याऽवधारणीयमात्मतत्त्वं साङ्ख्यं ॥ ज्ञातव्ये आत्मतत्त्वे तज्ज्ञानाय या बुद्धिरभिधेया नत्वेवाहमित्यारभ्य तस्मात्सर्वाणि भूतानीत्यन्तेन सैषाऽभिहिता ॥ आत्मज्ञानपूर्वकमोक्षसाधनभूतकर्मानुष्ठाने यो बुद्धियोगो वक्तव्यः स इह योगशब्देनोच्यते ॥ दूरेणह्यवरं कर्म बुद्धियोगादिति हि वक्ष्यते ॥

तत्र योगे या बुद्धिर्वक्तव्या तामिमामभिधीयमानां शृणु ॥ यथा बुद्ध्या युक्तः कर्मबन्धं प्रहास्यसि कर्मणा बन्धः संसारबन्धइत्यर्थः ॥

विचारः

"एषा" इत्यनेन नत्वेवाहमित्यारभ्य देही नित्यमवध्योऽयं इत्यन्तेन ग्रन्थेनोपदिष्टस्य प्रमेयजातस्य संग्रह इत्यविवादं गम्यते ॥ तस्मिन् ग्रन्थे जीवतत्त्वमात्रं विषयतया प्रसक्तं इति रामानुजाचार्यः ॥ परब्रह्ममात्रमिति शाङ्कराः ॥ प्राधान्येन जीवतत्त्वं तादर्थ्येन श्रीहरिरपीति श्रीपूर्णबोधाचार्यः ॥ स्वस्वव्याख्यानानुगुणतया भाष्यकारैः "अभिहिता" इत्यत्र विषयः प्रदर्शितः॥ जीवेश्वरयोरुभयोरपि प्रसक्तिरेव न्याय्येति तत्र तत्र निरूपितं अनुसंधेयम् ॥

"इमां" इति वक्ष्यमाणस्यैव प्रतीक्षा विवक्षितेति प्रायशस्सर्वसंमतं॥ "स्वधर्ममपि चावेक्ष्येत्यादिनाऽनन्तरग्रन्थेनोक्तां विस्तरेणाभिधीयमानां" इति नीलकण्ठो व्याचष्टे ॥ स्वधर्ममित्यष्टश्लोक्या लौकिको न्याय उपदिष्टो न तु कर्मयोग इति शङ्कराचार्यस्य तदनुयायिनां प्रायशस्सर्वेषामाशयः ॥ अनयोः पक्षयोर्नीलकण्ठोक्तः सयुक्तिको भाति ॥ लौकिकन्यायपक्षस्त्वगतिकगतित्वेन जघन्यः यस्मिन् स्वधर्ममित्यष्टश्लोक्याः योगशास्त्रबहिर्भावश्चापद्यते । तस्याः प्रकरणान्तर्भावसंगतिं, युद्धस्य भगवत्पूजात्वेनैव कर्तव्यत्वे सयुक्तिकं यन्निरूपणं कृतं तच्चालोच्य 'इमां' इत्यनेनाष्टश्लोक्या अपि देहलीदीपन्यायेन परामर्शो नास्माकमनिष्टो भाति ॥

प्रथमार्धे "एषा बुद्धिः" "इमां बुद्धिं" इत्यत्र बुद्धिशब्दो ज्ञानपर इति परे व्याकुर्वते ॥ नानेनान्तःकरणमुक्तमिति तु स्फुटं ॥ ज्ञानपरत्वेऽप्यनुपपत्तिः परैर्नालोचिता ॥ ज्ञानस्याभिधानायोगात् । शृण्विति श्राव्यत्वानुपपत्तेश्च ॥ बुध्यते अनयेति करणव्युत्पत्तिमाश्रित्य वाक्परो बुद्धिशब्दो ज्ञेयः ।

अन्यथाऽनुपपत्त्या यौगिकत्वं सह्यं ॥ नाविशदं वाङ्मात्रमुक्तं किंतु तव बोधो यथोत्पद्यते तथोक्तमित्यप्रसिद्धपदोपादाने प्रयोजनं मन्तव्यम् । अनुपपत्तिमीषदालोच्यानुष्ठानप्रकारविषयबुद्धिजनकमभिधानं शृण्विति वाक्यार्थमाह देशिकः ॥

योगस्यानेकाध्यायप्रतिपाद्यत्वाच्छ्रोतृमनस्समाधानाय पूर्वसंगतत्वेन योगे त्विमां शृणु इति प्रतिज्ञाकरणसार्थक्यं ज्ञेयं ॥ (वि)

सांख्ययोगाविह कापिलपातंजलशास्त्रवाचकाविति नैव भ्रमितव्यं ॥ सर्वैर्भाष्यकारैः प्रसिद्धव्याख्यातृभिश्चेदमङ्गीकृतम् ॥ प्रसिद्धसांख्ययोगसमयौ निन्द्यावित्यनेनैवालं विस्तरतः प्रपञ्चनेन ॥

"सांख्यं योगः पाशुपतं वेदारण्यकमेव च ।
ज्ञानान्येतानि भिन्नानि नात्र कार्या विचारणा ॥
पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ।
ज्ञानेष्वेतेषु राजेन्द्र सर्वेष्वेतद्विशिष्यते" । इति मोक्षधर्मे ॥

"ब्रह्मतर्कस्तर्कशास्त्रं विष्णुना यत्समीरितम् ।
अक्षपादकणादौ च सांख्ययोगौ च हैतुकाः ॥
बौद्धपाशुपताद्यास्तु पाषण्डा इति कीर्तिताः ।
मीमांसा त्रिविधा प्रोक्ता ब्राह्मी दैवी च कार्मिकी ॥
ब्रह्मतर्कं च मीमांसां सेवेत ज्ञानसिद्धये ।
वैदिकज्ञानवैरूप्याज्ज्ञान्यत्सेवेत पण्डितः"॥

इति नारदीये ॥ विरुद्धानामेकस्तुतिः परनिन्दां गमयतीति न्यायेन मोक्षधर्मे पञ्चरात्रस्तुतिस्सांख्यादिभिन्नमतानामनुपादेयत्वं गमयति । वेदाविरुद्धत्वं च कण्ठरवेणोक्तं नारदीये ॥ किंच सांख्याः प्रायशो निरीश्वराः ॥

नत्वेवाहमित्यारभ्य ग्रन्थे जीवेश्वरप्रतिपादके नास्ति साङ्ख्यराद्धान्तस्यावसरः॥ नापि वस्तुतः साङ्ख्यसमयप्रमेयं वर्णितमधिगम्यते॥ ते हि चतुर्विंशतितत्त्वादिसङ्ख्याने निरताः॥ अतएव हि तेषां साङ्ख्या इति नाम॥ नह्यत्र तादृशानि तत्त्वानि कथितानि दृश्यन्ते॥

( किंच यदि साङ्ख्योक्तस्य विवक्षाऽभिप्रेता स्यात् तर्हि साङ्ख्योक्तिरित्यवक्ष्यत् नतु 'साङ्ख्ये' इति॥ यदि च पातञ्जलस्य विवक्षा अत्रैव प्रकरणे कर्मयोग इति प्रयोगो विरुध्येत।

( किंच साङ्ख्ययोगसमयौ वैदिकहिंसां दूषयतः॥ गीतायां तु युद्धं पौनःपुन्येन विधीयते॥ अतः प्रसिद्धतत्रपरत्वमनुपपन्नमिति स्फुटं ज्ञायते॥ (बेसान्दपुस्तके त्वेवं व्याख्यातं पश्यत)॥

( सांख्ये योगे इति विषयसप्तमी॥ अनयोरर्थे तु भावभेदो दृश्यते॥ तथाहि॥ "संख्या बुद्धिः, बुद्ध्याऽवधारणीयमात्मतत्त्वं सांख्यं" इति रामानुजाचार्यः॥ ' "बुद्धिर्मतिश्च मेधा संख्या संवित्तिरुपलब्धिः" इति नैघण्टुकाः॥ 'पुरुषं निर्गुणं सांख्यं' इत्याद्यौपनिषदप्रसिद्ध्या परमात्मवदात्मन्यपि सांख्यशब्द उपपन्नः' इति देशिकोपपादनं )( "सम्यक् ख्यायते पठ्यते प्रतिपाद्यते प्रकाश्यते परमात्मतत्त्वं सर्वोपाधिशून्यतया अनया इति संख्या उपनिषत् पराविद्या॥ संख्यया तात्पर्यपरिसमाप्त्या प्रतिपाद्यते प्रकाश्यमानो वाऽर्थः स सांख्यः औपनिषदः पुरुषः परंब्रह्म तस्मिन्" इति शाङ्कराः)॥ (सांख्यं ज्ञानं। "शुद्धात्मतत्त्वविज्ञानं सांख्यमित्यभिधीयते" इति भगवद्वचनाद्व्यासस्मृतौ॥ सम्यक् ख्यातिर्ज्ञानं सांख्यं॥ "सम्यक् तत्त्वदृशिः सांख्यं योगस्तत्साधनं स्मृतं" इति शब्दनिर्णये इति सर्वज्ञाचार्यः॥ तथाच जीवपर इति रामानुजाचार्यः ब्रह्मपर इति शाङ्कराः जीवब्रह्मज्ञानपरः इति श्रीमदाचार्यः)॥( तत्त्वपरः तत्त्वज्ञानपरः इत्यर्थभेदो बुद्धिशब्दार्थभेदनिबन्धनो भाति॥

योगः उपायः ॥ ज्ञानस्य फलत्वेन विवक्षायां योगः कर्मयोगः ॥ मोक्षस्य फलत्वे कर्मयोग-ज्ञानयोग-भक्तियोगानां ग्रहणं उपपद्यते )( योगो बुद्धियोगः इति रामानुजाचार्यः ।

"आत्मयाथात्म्यज्ञानोपदेशानन्तरं तच्चिन्तनरूपज्ञानयोगाभिधानस्यौचित्येऽपि तस्य कर्मयोगसाध्यत्वात्प्रथमं कर्मयोग उच्यते पश्चात्तु तत्फलतया 'प्रजहाति यदा कामान्' इत्यादिना ज्ञानयोगोऽपि वक्ष्यते" इति देशिकोपपादनं )( 'योगे कर्मयोगे कर्मानुष्ठाने समाधियोगे च' इति शङ्करभाष्यं ॥ कर्मयोगएव विवक्षित इतीतरशाङ्करव्याख्यातारः )( युज्यते प्राप्यते फलं अनेनेति करणव्युत्पत्त्या उपायपरइत्यस्मद्विवृतिकारः )( सामान्यतो योगत्रयाणां संग्रहसंभवेऽपि विशेषतः कर्मयोगस्यैव विवक्षा अभिप्रेतेति भाति ॥ "दृष्टा योगाः प्रयुक्ताश्च पुंसां श्रेयःप्रसिद्धये" इति चतुर्थस्कन्धभागवतप्रयोगादुपायपरत्वं सिद्धं ॥

(योगे त्विमां शृणु इत्यत्र "तु" शब्दः पूर्वबुद्धेर्योगत्वव्यतिरेकसूचनार्थः इति व्याख्याय शुद्धान्तःकरणं प्रति ज्ञानोपदेशः अशुद्धान्तःकरणं प्रति कर्मोपदेशः इत्युपपाद्य अर्जुनमत्यन्तमलिनान्तःकरणं मत्वा तेन बहिरङ्गसाधनं कर्मैवानुष्ठेयं नाधुना तस्य श्रवणादियोग्यताऽपि जाता दूरे तु ज्ञानयोग्यता इति "तु" शब्दस्य प्रयोजनमाह मधुसूदनः )( अयुक्तोऽयं कलुषितान्तःकरणत्वेनानधिकारित्वेन चार्जुनस्योपालम्भः ॥ तस्य वस्तुतो महाज्ञानित्वात् )

अनधिकारित्वभ्रमं निराह स्वव्यूहगतोऽपि वेङ्कटनाथः ॥ "श्रवणानधिकारिणमेवार्जुनं प्रति भगवता ज्ञानमुपदिष्टं इति तस्याविवेकिगुरुत्वं स्यात् । नह्येतद्युक्तं । इदं ते नातपस्काय इत्यादिनाऽनधिकारिणे गीताशास्त्रं नोपदेष्टव्यमिति वदन् भगवान् स्वयमर्जुनाय मलिनान्तःकरणतया श्रवणा-

नधिकारिणएव ज्ञानमुपदिदेशेति ॥ किंच दैवासुरसंपद्विभागाध्याये "अभयं सत्त्वसंशुद्धिः" इत्यादिना दैवसंपदं प्रस्तुत्य दैवी संपद्विमोक्षाय इति तस्यास्तत्त्वज्ञानाधिकारिविशेषणत्वमुक्त्वा "मा शुचस्संपदं दैवीमभिजातोऽसि पाण्डव" इत्यर्जुनस्य ज्ञानाधिकारित्वं प्रदर्शयद्भगवद्वचनं तस्यानधिकारित्वे विरुध्येत" इति ॥ न केवलमयमेव भ्रमो मधुसूदनस्य ॥ कर्मबन्धं प्रहास्यसीत्यत्रान्यावपि भ्रमौ दृश्येते ॥ तथाहि ॥ "कर्मबन्ध" पदं संसारपरं इत्यन्यैस्सर्वैः व्याख्यातं ज्ञायते ॥ एतद्दूषितं मधुसूदनेन ॥ (१) कर्मयोगेन साक्षात्संसारप्रहाणायोगात् ज्ञानद्वारेत्यभिप्राये तु अध्याहारदोषप्राप्तेः (२) बन्धशब्देनैव संसार इत्यर्थलाभसंभवे कर्मपदवैयर्थ्याच्चेति संसारपरत्वं अनुपपन्नमिति तस्याशयः ॥ इमौ भ्रमौ शङ्करभाष्यदूषणरूपाविति स्वव्यूहएव भाष्योत्कर्षदीपिकायां वेङ्कटनाथीये च प्रत्याख्यातौ ॥ ज्ञानद्वारा कर्मणो मोक्षहेतुत्वे काध्याहारः ॥ ज्ञानद्वारेति वस्तुगतिकथनमेवेति तत्राध्याहारदोषोद्भावनमसंगतं ॥ कर्मपदवैयर्थ्यं तु न संगच्छते ॥ "जन्मबन्धविनिर्मुक्ताः" इत्यत्र जन्मपदवत्कर्मपदस्यापि बन्धनिमित्तबोधनपरत्वेन सार्थक्यात् ॥ प्रथममर्जुनमनधिकारिणं भ्रान्त्वा अनन्तरं संसारपरत्वेऽनुपपत्तिं मन्वानो मधुसूदनोऽन्यथा "कर्मबन्ध" पदं व्याचष्टे बन्धशब्दः प्रतिबन्धपरः श्रवणादीनामनधिकारावहमाशयाशुद्धिलक्षणं चित्तदोषं बोधयतीति ॥ उपपादनग्रन्थे अस्याशय एवमधिगम्यते ॥ ज्ञानप्रतिबन्धो द्विविधः । कर्मनिमित्तः चित्तकालुष्यहेतु पापादिरेकः । असंभावनादिरपरः ॥ तत्राद्यः कर्मणैव धर्माख्येनापनेयः । चित्तदोषाणामप्यपगमे सत्येव श्रवणादावधिकारः स्यात् ॥ श्रवणादिना द्वितीयस्य प्रतिबन्धस्यासंभावनादेः निवृत्तिः ॥ अधमोऽधिकार्यर्जुनवन्मनःकालुष्यवान् ॥ मध्यमस्तु शुद्धान्तःकरणः असंभावनादिना ज्ञानात्प्रतिरुद्धः ।

ज्ञानीत

(इयं प्रक्रिया अनुपपन्ना ॥ श्रवणादिभिन्नेन धर्माख्येन कर्मणैव पापापगमश्चित्तशुद्धिश्च लभ्यतइति कुतः प्रमाणादवगम्यते ॥ उदाहृतायां "धर्मेण पापमपनुदति" इति श्रुतौ श्रवणादेः पापपरिहारासामर्थ्यं नोक्तं नाप्यभिप्रेतं ॥ वेदान्तश्रवणजेन पुण्येन पापनिवृत्तिस्संभवतीति सर्वसम्मतं किमिति त्यज्यते ॥ बन्धशब्दः प्रतिबन्धपर इत्यपि क्लिष्टः)।

कर्मबन्धइत्यत्र कर्मैव बन्धः कर्मबन्ध इति वा कर्मणा बन्धः कर्मबन्ध इति वा विग्रह आश्रयणीयः ॥ कर्मणो बन्ध इति षष्ठीतत्पुरुषाश्रयणे विशेषाभावात् कर्मैव बन्धइति शाङ्करैराश्रितं ॥ "बन्धो धर्माधर्माख्यः" इति शाङ्करभाष्यं ॥ सत्कर्मणो बन्धस्वरूपत्वं वा बन्धनिमित्तत्वं वा न युक्तं भाति ॥

कर्मणा बन्धः इति तृतीयाश्रयणे कर्माधीनप्रकृतिबन्धरूपोऽर्थो लभ्यते ॥ अतिशयार्थलाभेन षष्ठीसमासादस्योपादेयत्वं दृश्यते ॥ "तृतीया तत्कृतार्थेन गुणवचनेन" इति सूत्रं ॥ अष्टाध्यायी (२-१-३०) ॥

अथ कर्मयोगेन संसारप्रहाणं कथं भविष्यतीति जिज्ञास्यम् ॥

(प्रकाशतमसोरिव ज्ञानकर्मणोर्ज्ञानयोगकर्मयोगयोश्चारित्वात् गीतायामर्जुनं प्रति विरुद्धद्वयोपदेशस्यायोगं मन्वाना विद्वदविद्वदधिकारिभेदेन कं घातयतीतिज्ञानं युध्यस्वेति कर्मचोपदिदेशेति शाङ्करा व्याकुर्वते ॥( "लोकेऽस्मिन् द्विविधा निष्ठा" "ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनां" इति वक्ष्यमाणानि वाक्यानि संवादत्वेन चाहुः ॥ कर्मयोगि-ज्ञानयोगि-भक्तियोगि-लक्षणा परिज्ञानमूलेयं शङ्का समाधानं चेति तत्रोपपादयिष्यते ॥ कर्मबन्धप्रहाणं कर्मणा कर्मयोगाद्वा न सर्वथा संभवेत् इति केचित् ॥ कर्मयोगः कर्मबन्धं दृढीकुर्यात् कथं तं हन्यादिति तेषामाशयः ॥ शाङ्करानितरव्याख्याकारान्विहाय नीलकण्ठस्तु ईशावास्यसंमतिबलात् कनककार्ष्णायसादिवत्केनचि-

द्विशेषरूपेणोपेतं कर्मैव सजातीयोच्छेदनिमित्तं भविष्यतीति युक्तमुक्तं कर्मबन्धं प्रहास्यसीति वचनमित्याह ॥

ज्ञानद्वारैव कर्मणो बन्धनिवर्तकत्वमिति तु प्रायशः सर्वसंमतं ॥ ज्ञानं तु ईश्वरसर्वोत्तमत्वादिविषयकं ॥ ज्ञानानन्तरं प्रसादश्चापेक्षितः इत्याचार्यः ॥ यदुक्तं "ईश्वरप्रसादनिमित्तज्ञानप्राप्त्यैवेत्यभिप्रायः" इति शङ्करभाष्ये तदपि तच्छिष्येभ्यो न रोचते ॥ तथाहि शङ्करानन्दः किमीश्वरार्पणमात्रेण मोक्षो वा ईश्वर एव कर्ता इत्युक्तिमात्रेण मोक्षोवेति विकल्प्य उभयथापि नेतीश्वरं तूर्णीकृत्य दूषितवान् ॥ यत्किंचिदेतत् । दूषणाभिधानमीश्वरावज्ञामूलमित्युपेक्ष्यते ॥

(उपरमात्पूर्वं वेङ्कटनाथीये या पाञ्चरात्रनिन्दा कृता तत्र किञ्चिदुच्यते प्रसङ्गेन ॥ अनेन व्याख्यात्रा मोक्षधर्मवचनं वैपरीत्येन पठितं दृश्यते॥

"साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।
ज्ञानान्येतानि राजर्षे विद्धि नाना मतानि वै" इति ।

अत्र प्रथमार्धे "साङ्ख्यं योगः पाशुपतं वेदारण्यकमेवच" इति सर्वज्ञाचार्यपाठः ॥ उक्तरीत्या वैपरीत्येन पठित्वा "पाञ्चरात्रादेरिव साङ्ख्ययोगशास्त्रयोर्वैदिकमतान्मतान्तरत्वस्य भगवतैवोक्तेः" इति पञ्चरात्रदूषणमभिहितं ॥

"पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणस्स्वयं ।
ज्ञानेष्वेतेषु राजेन्द्र सर्वेष्वेतद्विशिष्यते" ॥ इति वचनं तु नानेनावलोकितं ज्ञायते ॥

किंच वैखानससंहितोपक्रमे पंचरात्रं चित्रशिखण्डिशास्त्रमूलं इति प्रसिद्धं ॥ मोक्षधर्मे तावत् "ये हि ते यतयः ख्यातास्सप्तचित्रशिखण्डिनः। तैरेकमतिभिर्भूत्वा यत्प्रोक्तं शास्त्रमुत्तमं । वेदैश्चतुर्भिस्समितं कृतं मेरौ महा-

गिरौ" इति चित्रशिखण्डिशास्त्रस्य वेदेन प्रतिपाद्यैक्यं ज्ञायते ॥ अतस्तन्मूलभूतस्य पंचरात्रस्यापि वैदिकत्वमुपादेयत्वं च सिद्धमेव ॥

**नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।**
**स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥४०**

वि ॥ किंच इह वक्ष्यमाणे योगशब्दितज्ञानोपायभूतनिष्कामविष्ण्वाराधनरूपकर्मविषये अभिक्रमस्योपक्रमस्य नाशो नास्ति ॥ उपक्रममात्रस्यापि निष्फलता नास्तीत्यर्थः ॥ प्रारंभमात्रमिच्छावेत्यादेः उपक्रान्तविष्णुधर्मविच्छेदे वा विष्णुधर्मवतोऽन्यधर्माकरणे वा प्रत्यवायो न विद्यते ॥ अस्य धर्मस्य विष्णुपूजात्मकनिष्कामकर्मणः स्वल्पमपि एकांशोऽपि महतो भयात् संसारभयात् त्रायते रक्षति ॥ तस्मात्तत्र निष्ठां कुर्विति भावः ॥ ननु ज्ञानं हि जैवमुक्तमिति भाष्योक्तेः जीवतत्त्वं प्रागुक्तं॥ ब्रह्मज्ञानोपायश्च वक्ष्यते॥ न हि निवृत्तकर्मानुष्ठानादिरूपो योगो जीवज्ञानहेतुः ॥ अतः कथं पूर्वोत्तरप्रकरणयोस्साध्यसाधनविषयतया सङ्गतत्वं ॥ मैवं ॥ श्रुत्वाप्येनमित्यत्र भगवत्प्रतिबिंबत्वादिना जीवचैतन्यवेदी दुर्लभइत्युक्त्या तादृशत्वेन तज्ज्ञानोपायस्याप्याकाङ्क्षितत्वेन, वक्ष्यमाणनिवृत्तकर्मानुष्ठानाराधितभगवत्प्रीतेरेवेश्वरतत्त्वज्ञानं प्रत्युपायत्वात्, तादर्थ्येन प्रकृतस्यापि ईश्वरस्य तस्मादेवं विदित्वैनमित्यत्र स्वातन्त्र्यादिना

ज्ञानस्य साक्षादसर्वपुमर्थहेतुत्वोक्त्या तज्ज्ञानोपायस्याप्याकाङ्क्षितत्वात्, वक्ष्यमाणसाधनस्य यथावत्तया परापरतत्त्वज्ञानोपायत्वान्न पूर्वोत्तरप्रकरणयोरसङ्गतिः ॥ अत्र योगस्यानेकाध्यायप्रतिपाद्यत्वाच्छ्रोतृमनःसमाधानाय पूर्वसङ्गतत्वेन प्रतिज्ञाकरणसार्थक्यं ज्ञेयम् ॥

शं ॥ किंचान्यत् ॥ नेह इति ॥ न इह मोक्षमार्गे कर्मयोगे अभिक्रमनाशः अभिक्रमणं अभिक्रमः प्रारम्भः तस्य नाशो नास्ति यथा कृष्यादेः । योगविषये प्रारम्भस्य नानैकान्तिकफलत्वं इत्यर्थः ॥ किंच नापि चिकित्सावत्प्रत्यवायो विद्यते ॥ किंतु स्वल्पमपि अस्य धर्मस्य योगस्य अनुष्ठितं त्रायते रक्षति महतो भयात्संसारभयात् जन्ममरणादिलक्षणात् ॥

रा ॥ वक्ष्यमाणबुद्धियुक्तस्य कर्मणो माहात्म्यमाह ॥ इह कर्मयोगे नाभिक्रमनाशोऽस्ति ॥ अभिक्रमआरंभः नाशः फलसाधनभावनाशः ॥ आरब्धस्यासमाप्तस्यापि न निष्फलत्वं ॥ आरब्धस्य विच्छेदे प्रत्यवायोऽपि न विद्यते ॥ अस्य कर्मयोगाख्यस्य धर्मस्य स्वल्पांशोऽपि महतो भयात् संसारभयात् त्रायते ॥ अयमर्थः "पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते" इत्युत्तरत्र प्रपञ्चयिष्यते ॥ अन्यानि हि लौकिकानि वैदिकानि च साधनानि विच्छिन्नानि न फलाय भवन्ति प्रत्यवायाय च भवन्ति ॥

विचारः

अत्रेमे प्रमेयविशेषा ज्ञेयाः ॥ ज्ञानोपायत्वात्कर्मयोग काम्यानुष्ठानाद्विशिष्यते ॥ वैष्णवो धर्मो निवृत्तकर्मापरपर्यायः कर्मयोग इत्युच्यते ॥ यो हि सात्त्विकप्रकृतिर्भागवतो विष्णुमेव सर्वोत्तमं स्वतन्त्रं ज्ञात्वा देवतातारतम्यादिकं च मत्वा श्रीहरिप्रीत्यर्थं यज्ञादिकं आरभते, फलान्तरमुद्दिश्य कस्मैचित्किंचिदपि न दद्यात् स एव शुद्धवैष्णवः ॥ तेनैवमनुष्ठितो वैष्णवो धर्मः ॥ अयं धर्मः श्रेयान् सर्वस्मात्काम्यात् ॥ अन्यत्कर्म तु कृष्यादि कालदेशप्रयत्नविशेषोपेतमेव सफलं भवति ॥ क्वचित्सर्वथाफलव्यभिचारि च ॥ क्वचित् प्रतीक्षितं न ददाति ॥ कानिचिच्छ्रौतस्मार्तकाम्यान्यारब्धान्यसमापने निष्फलानि ब्रह्मरक्षस्त्वाद्यनर्थप्रापकाणि च स्मर्यन्ते ॥ केवलमारम्भस्य तेषां फलं न विहितं ॥ वैष्णवधर्मस्य त्वयं विशेषः यदुपक्रममात्रस्यापि फलं निश्चितं इति तदनुष्ठातॄणां देशकालमन्त्रतन्त्रनियमादिलोपविच्छेदादिना वा अवैष्णवधर्मत्यागादिना वा नानर्थप्राप्तिर्भवति । अनुष्ठानेऽपीयत्तासंख्येतिकर्तव्यताद्युपेतता मुख्यतया न विहिता । केवलं भगवद्भक्तिरेव प्रधाना । स्वल्पमपि निष्कामतया भगवत्पूजात्वेन कृतं पुमर्थसाधनं भवतीति ॥ तथाहि गीतातात्पर्योदाहृतानि प्रमाणानि ॥

“ प्रारम्भमात्रमिच्छा वा विष्णुधर्मे न निष्फला ।
नचान्यधर्माकरणाद्दोषवान् विष्णुधर्मकृत् ॥ इत्याग्नेये ॥

“ स्वोचितेनैव धर्मेण विष्णुपूजामृते क्वचित् ।
नाप्रवृत्तिः प्रवृत्तिर्वा यत्र धर्मः स वैष्णवः ॥
एतं धर्मं च देवाद्या वर्तन्ते सात्त्विका जनाः ।
एष कार्तयुगो धर्मः पांचरात्रश्च वैदिकः ॥
तत्प्रीत्यर्थं विनाऽन्यस्मै नोदबिन्दुं न तण्डुलम् ।
दद्यान्निराशीश्च सदा भवेद्भक्तश्च केशवे ॥

नैतत्समेऽधिके वापि कुर्याच्छंकामपि क्वचित्।
जानीयात्तदधीनं च सर्वं तत्तत्त्ववित्सदा ॥
यथाक्रमन्तु देवानां तारतम्यविदेव च।
एषभागवतो मुख्यस्त्रेतादिषु विशेषतः ॥
एषधर्मोऽतिफलदो विशेषेण पुन. कलौ।
एवं भागवतो यस्तु सएव हि विमुच्यते" ॥ इत्यादि ब्रह्मतर्के ॥

गीतायां स्वल्पमपीत्युक्तिः भागवतोक्ताजामिलोपाख्यानं स्मारयति ॥ अल्पोपलनिविडान् पृथुकतण्डुलान् स्वीकृत्य सुधाम्ने प्रससाद भगवानिति श्रूयते ॥ "पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति। तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः" ॥ इति वक्ष्यते ॥ विष्णुधर्मे प्रत्यवायाभावश्च "पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते। नहि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति" ॥ इति प्रपंचयिष्यते ॥

"सर्वपापप्रसक्तोऽपि ध्यायन्निमिषमच्युतम्।
यतिस्तपस्वी भवति पङ्क्तिपावनपावनः" इति च स्मृतिराह ॥

कर्मयोगे अभिक्रमनाशाभावः प्रत्यवायाभावश्च बहुधोपपादितो व्याख्यानेषु ॥ अभिक्रमणं उपक्रमः तन्मात्रात् नाशः फलाभावो नास्तीति विष्णुधर्मत्वेनास्यायं महिमाविशेषः प्रारंभमात्रमिच्छावेति प्रमाणाद्गम्यते ॥ विष्णुधर्मस्य नित्यकर्मण्यन्तर्भावो वा काम्यकर्मणि वेति विचारो नावश्यकः ॥ संभाविताविपर्यासप्रत्यवायानां परिहारो यथा परिमितेन श्रीखण्डकणेन ज्वालायमानोऽपि तैलकटाहः सद्यः शीतो भवति तथा उपपद्यते ॥ अयं विष्णुमहिमा ॥ तस्याघटितघटकमहिमानं पुरस्कृत्य फलाभावप्रत्यवायशङ्कयोस्समाधानमेव सात्त्विकं दृश्यते ॥ ईश्वरोद्देशेनैव विघ्नवैगुण्याद्यसंभवो

वाच्यः ॥ एवमेव श्रीधरः, व्यवसायेतिश्लोकव्याख्याने "ईश्वराराधनार्थं हि नित्यनैमित्तिकं कर्म किंचिदङ्गवैगुण्येऽपि न नश्यति । यथा शक्नुयात्तथाकुर्यात् इति हि तद्विधीयते ॥ नच वैगुण्यं ॥ ईश्वरोद्देशेनैव वैगुण्योपरमात् ॥ न तु तथा काम्यं कर्म । अतो महद्वैषम्यं" इति ॥

केचित् अभिक्रमः कर्मैवेति व्याख्याय "कर्मयोगे कर्मणो न नाशः इष्टफलस्याजननात् अन्यत्कर्मतु नश्यति उत्तरोत्तरसंस्काराधानद्वारा स्वसजातीयवृद्धेर्निमित्तं सत् कामादिदोषक्षपणद्वारा महतो भयात्संसारात् त्रायते" इत्याहुः ॥ (नीलकण्ठीये) ॥ इदं चिन्त्यं ॥ नाशप्रतियोगित्वाप्रतियोगित्वाभ्यां काम्याकाम्यकर्मणोर्विशेषः कथं संगच्छते ॥ यथा काम्यं अदृष्टादिकं जनयित्वा नश्यति तथैवाकाम्यं चित्तशुद्धिमुत्पाद्य नश्येत् ॥ उत्तरोत्तरसंस्काराधानद्वारा स्थायित्वंतूभयसमम् ॥

अन्येतु अभिक्रम्यते कर्मणा प्रारभ्यते यत्फलं सोऽभिक्रम इति व्युत्पत्त्या कर्मफलं अभिक्रमशब्दार्थमाहुः ॥ इदमस्योपपादनं मधुसूदनीये ॥ "ननु 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति श्रुत्या विविदिषां ज्ञानं चोद्दिश्य संयोगपृथक्त्वन्यायेन सर्वकर्मणां विनियोगात्तत्रचान्तःकरणशुद्धेर्द्वारत्वात्तां प्रति कर्मानुष्ठानं विधीयते ॥ तत्र "तद्यथेह कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयते" इति श्रुतिबोधितस्य फलनाशस्य संभवात् ज्ञानं विविदिषां चोद्दिश्य क्रियमाणस्य यज्ञादेः काम्यत्वात्सर्वाङ्गोपसंहारेणानुष्ठेयस्य यत्किंचिदङ्गासंपत्तावपि वैगुण्यापत्तेः यज्ञेनेत्यादिवाक्यविहितानां च सर्वेषां कर्मणामेकेन पुरुषायुषपर्यवसानेऽपि कर्तुमशक्यत्वात्कुतः कर्मबन्धं प्रहास्यसीति फलं प्रत्याशेत्यत आह भगवान् नेहेति ॥ अभिक्रम्यते कर्मणा प्रारभ्यते यत्फलं सोऽभिक्रमः तस्य नाशस्तद्यथेहेत्यादिना प्रतिपादितः इह निष्कामकर्मयोगे नास्ति ॥ एतत्फलस्य

शुद्धेः पापक्षयरूपत्वेन लोकशब्दवाच्यभोग्यत्वाभावेन च क्षयासंभवात् ॥ वेदनपर्यन्ताया एव विविदिषायाः कर्मफलत्वात् । वेदनस्य चाव्यवधानेनाज्ञाननिवृत्तिफलजनकस्य फलमजनयित्वा नाशासंभवादिह फलनाशो नास्तीति साधूक्तं ॥ तदुक्तं ॥ "तद्यथेहेति या निन्दा सा फले न तु कर्मणि॥ फलेच्छां तु परित्यज्य कृतं कर्म विशुद्धिकृत्" इति ॥ तथा प्रत्यवायोऽङ्गवैगुण्यनिबन्धनः ॥ वैगुण्यमिह न विद्यते ॥ तमितिवाक्येन नित्यानामेवोपात्तदुरितक्षयद्वारेण विविदिषायां विनियोगात् ॥ तत्र च सर्वांगोपसंहारनियमाभावात् ॥ काम्यानामपि संयोगपृथक्त्वन्यायेन विनियोग इति पक्षेऽपि फलाभिसन्धिराहित्येन तेषां नित्यतुल्यत्वात् ॥ नहि काम्यनित्याग्निहोत्रयोः स्वतः कश्चिद्विशेषोऽस्ति ॥ फलाभिसन्धितदभावाभ्यामेव तु काम्यत्वनित्यत्वव्यपदेशः ॥ इदं च पक्षद्वयमुक्तं वार्तिके" ॥ इति ॥

अत्रोच्यते ॥ अभिक्रमनाशः इत्यत्र अभिक्रमशब्देन योगव्युत्पत्त्या फलस्य ग्रहणे उपक्रमार्थस्य चाविवक्षायां आरम्भमात्रस्य सफलत्वरूपो वैष्णवधर्ममहिमातिशयः प्रमाणानुगुणो न लभ्यते ॥ किंच उत्पत्त्यनन्तरं दुरितक्षयाख्यं फलं विनश्येदिति वा ज्ञानाख्यं फलं अज्ञानमहत्वा विनश्येदिति वा शङ्का दुर्बला भाति॥ यस्तु ध्वंसनित्यत्वं ज्ञानेनाज्ञाननिवृत्तिं च न जानाति तस्य मन्दस्याशंकां शमयितुं अभिक्रम इति फलबोधकाप्रसिद्धपदोपादाने प्रयोजनं वाच्यं ॥ यो वा भ्रान्तः कर्मयोगस्य ऐहिकं वा आमुष्मिकं वा क्षयि फलं मन्यते, तस्य भ्रमः अभिक्रमनाशो नास्तीति परमगूढार्थप्रयोगेण ननिवर्तेत ॥ तथात्वे तं प्रति दुरितक्षयः अज्ञाननिवृत्तिश्च कर्मयोगफलं न तु नाशप्रतियोगीत्येवावक्ष्यत् ॥

प्रत्यवायाभावनिरूपणावसरे यस्तु विनियोगविचारः कृतः सनावश्यको भाति ॥ फलाभिसंध्यभावे यज्ञादीनां नित्यतुल्यत्वेन अङ्गवैकल्यदोषासंभव

उक्तः ॥ नित्यकर्मस्वपि शक्तौ सत्यां अङ्गवैकल्यदोषोऽस्त्येव ॥ शक्त्यभावे तु नास्ति ॥ वैकल्पिककाम्येषु तु यज्ञादिषु कामनां विनाऽनुष्ठीयमानेषु अङ्ग-वैकल्यदोषोऽस्त्येव ॥ साङ्गानुष्ठानाशक्तौ तु तदननुष्ठानमेव युक्तं ॥ अत एवोक्तं भागवते "यद्यात्मनोऽधिकारोऽस्ति सर्वाःस्युर्यज्ञसंपदः । वैतानिकेन विधिना यजेद्देवमतन्द्रितः" इति ॥ यज्ञसाधनपूर्तावेव यज्ञादिकं कार्यमित्याशयः ॥ नित्यानां नित्यतुल्यानां कर्मणां अङ्गवैकल्यदोषासंभवेऽपि अन्यप्रकारकविपर्यासानां संभावितत्वेन तत्प्रयुक्तः प्रत्यवायस्तदवस्थ एव ॥ यज्ञादीनां प्रत्यवायानापादकत्वसमर्थनार्थं नित्यतुल्यत्वं प्रयासेन समर्थितं ॥ अयं प्रयासो व्यर्थो भाति ॥ तस्मादारम्भमात्रस्य सफलत्वं वैगुण्येऽपि अन्यधर्माकरणेऽपि विष्णुधर्मनिरतस्य न प्रत्यवाय इति यत्पूर्णबोधाशयमनुसृत्य श्रीमद्राघवेन्द्र-स्वामिभिर्निरूपितं तदेव साध्वित्यवगम्यते ॥

एवमभिक्रमशब्दार्थे पक्षत्रयं निरूपितं ॥ आरम्भवाचक इति सर्वे व्याख्यातारो मन्यन्ते ॥ अभिक्रम्यते व्याप्यते इति कर्मैवोच्यते इति नीलकण्ठः ॥ अभिक्रम्यते कर्मणा प्रारभ्यते यत्फलं सोऽभिक्रमः कर्मफलं इति मधुसूदनः ॥ द्वितीयतृतीयपक्षयोरुपपत्त्यनुपपत्ती च विचारिते उपरिष्टात् ॥

अत्र पक्षान्तराण्यपि संभावितानि ॥ भारतस्य सर्वत्र दशावरार्थत्वे-नैषद्यथामति दिक् प्रदर्श्यते ॥ न ईहाभिक्रमनाशः इति पदच्छेदे ईहा इच्छा च अभिक्रमः प्रारंभश्च तयोर्नाशः नैष्फल्यं नास्तीत्यर्थः । "प्रारम्भमात्र-मिच्छावा विष्णुधर्मे न निष्फला" इति प्रमाणे इच्छाया अपि साफल्य-मुक्तं ॥ अनेन गीताप्रमाणयोरेकवाक्यता सेत्स्यति ॥ यद्वा अभिक्रमः आरोहणं तन्नाशः तस्माद्भ्रंशः नास्ति ॥ कर्मयोगे आरोहणमेव नियतं ॥ "नहि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति" इति वक्ष्यते ॥ यद्वा अभिक्रमः अभितः पुरतः क्रमणं गतिः तस्य नाशो न संभवति ॥ यथा वीरश्शत्रुजयाय

पद्यमानो न कदाप्यपक्रमते तथा कर्मयोगी नैव श्रीहरिपदविमुखो भवति ॥ यद्वा अभिक्रमः संग्रामः तस्य नाशः ॥ तस्मादुपरमइति यावत् ॥ तथा च कर्मयोगाश्रयणे युद्धादुपरमो नावश्यकः ॥ यत्कैश्चिद्युद्धस्य नियमेन काम्यत्वमभिप्रेतं तन्न ॥ तस्य निष्कामनयाऽपि कर्तुं शक्यत्वेन योद्धुरपि कर्मयोगित्वोपपत्तेः इति ॥

द्वितीयार्धे धर्मशब्दस्य यमवाचकत्वं उपपद्यते ॥ अस्य कर्मयोगस्य स्वल्पमपि धर्मस्य यमस्य । यमनिमित्तकादिति यावत् । महतो भयात् त्रायत इति ॥ तथाह्यजामिलोपाख्याने सकृदुच्चरिते नारायणशब्दे यमदूता नारायणदूतैर्निवारिता इति ज्ञायते ॥

द्वितीयार्धे "अस्य" इति शब्दस्य विष्णोः इति व्याख्यानेन कर्मयोगस्य विष्णुधर्मत्वं श्रीमदाचार्योदाहृतप्रमाणवाक्ये प्रपंचितं कण्ठरवेणोक्तं भवति ॥ अकारस्य विष्णुवाचकत्वं प्रसिद्धं एकाक्षरकोशे । "अकारो ब्रह्मविष्णवीशकमठेष्वङ्गणे रणे" इत्यकारस्य तन्नामसु पाठात् ॥

**व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।**
**बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनां॥४१**

वि० ॥ ननु ज्ञानोपायविषया वाचोऽन्योन्यविरुद्धा बह्व्यो मतभेदेन सन्ति ॥ अतः कथमेकत्र त्वदीयायामेवोपायविषयवाचि निष्ठाशब्दितं विश्वासं करोमीत्यत आह । व्यवसायेति ॥ व्यवसायात्मिका प्रमाणनिर्णीतार्थनिश्चया-

त्मिका निश्चयजनिका बुद्धिः करणव्युत्पत्त्या वाक् एकैव एकोपायविषयैव इह लोके वेदे च ॥ न तत्र विप्रतिपत्तिरस्ति ॥ सएव वैष्णवधर्मानुष्ठानहेतुः ॥ अव्यवसायिनां प्रमाणनिर्णीतार्थनिश्चयहीनानां बुद्धयः उपायविषयाः वाचः बहुशाखाः बहुमुखाः विरुद्धनानार्थविषयाः अनन्ताश्च ॥ तथाच कथमप्रामाणिकमतविवादेन प्रामाणिकेऽर्थे अविश्वासः ॥ मया वक्ष्यमाणोपायस्तु प्रामाणिक इति तत्र तत्र व्यक्तीभविष्यतीतिभावः ॥

श० ॥ येयं साङ्ख्ये बुद्धिरुक्ता योगेच वक्ष्यमाणलक्षणा सा व्यवसायेति ॥ व्यवसायात्मिका निश्चयस्वभावा एका एव बुद्धिः इतरविपरीतबुद्धिशाखाभेदस्य बाधिका सम्यक् प्रमाणजनितत्वात् ॥ इह श्रेयोमार्गे हे कुरुनन्दन ॥ याः पुनः इतरा विपरीतबुद्धयः यासां शाखाभेदप्रचारवशात् अनन्तः अपारः अनुपरतः संसारः नित्यप्रततः विस्तीर्णो भवति, प्रमाणजनितविवेकबुद्धिनिमित्तवशाच्च उपरतासु अनन्तभेदबुद्धिषु संसारोऽपि उपरमते ता बुद्धयः बहुशाखाः बह्व्यः शाखाः यासां ताः बहुशाखाः बहुभेदा इत्येतत् प्रतिशाखाभेदेन हि ॥ अनन्ताश्च ॥ बुद्धयः केषां ? अव्यवसायिनां प्रमाणजनितविवेकबुद्धिरहितानां इत्यर्थः ॥

रा० ॥ काम्यकर्मविषयाया बुद्धेर्मोक्षसाधनभूतकर्मविषयां बुद्धिं विशिनष्टि ॥ इह शास्त्रीये सर्वस्मिन् कर्मणि

व्यवसायात्मिका बुद्धिरेका ॥ मुमुक्षुणाऽनुष्ठेये कर्मणि बुद्धिर्व्यवसायात्मिका बुद्धिः ॥ व्यवसायो निश्चयः ॥ साहि बुद्धिरात्मयाथात्म्यनिश्चयपूर्विका ॥ काम्यकर्मविषयातु बुद्धिरव्यवसायात्मिका ॥ तत्र हि कामाधिकारे देहातिरिक्तात्मास्तित्वज्ञानमात्रमपेक्षितं नात्मस्वरूपयाथात्म्यनिश्चयः ॥ स्वरूपयाथात्म्यनिश्चयेऽपि स्वर्गादिफलार्थित्वतत्साधनानुष्ठानतत्फलानुभवानां संभवादविरोधाच्च ॥ सेयं व्यवसायात्मिका बुद्धिः एकफलसाधनविषयतयैका ॥ एकस्मै मोक्षाख्यफलाय हि मुमुक्षोस्सर्वाणि कर्माणि विधीयन्ते ॥ अतश्शास्त्रार्थस्यैकत्वात् सर्वकर्मविषया बुद्धिरेकैव ॥ यथैकफलसाधनतया आग्नेयादीनां षण्णां सेतिकर्तव्यताकानामेकशब्दार्थतया तद्विषया बुद्धिरेका तद्वदित्यर्थः ॥ अव्यवसायिनां तु स्वर्गपुत्रपश्वन्नादिफलसाधनकर्माधिकृतानां बुद्धयः फलानन्त्यादनन्ताः ॥ तत्रापि बहुशाखाः ॥ एकस्मै फलाय चोदितेऽपि दर्शपूर्णमासादौ कर्मणि "आयुराशास्ते" इत्याद्यवगतावान्तरफलभेदेन बहुशाखत्वं च विद्यते ॥ अतोऽव्यवसायिनां बुद्धयोऽनन्ता बहुशाखाश्च ॥ एतदुक्तंभवति ॥ नित्येषु नैमित्तिकेषु कर्मसु प्रधानफलान्यवान्तरफलानि च यानि श्रूयमाणानि तानि सर्वाणि परित्यज्य मोक्षैकफलतया सर्वाणि कर्माण्येकशास्त्रार्थतयाऽनुष्ठेयानि, काम्यानि च स्ववर्णाश्रमोचितानि तत्तत्फलानि

परित्यज्य मोक्षसाधनतया नित्यनैमित्तिकैरेकीकृत्य यथाबलमनुष्ठेयानि इति ॥

विचारः

अत्रायं श्रीपूर्णबोधव्याख्यानाशयः ॥ अभिक्रमनाशप्रत्यवाययोरभावेनाल्पस्यापि महाफलाधायकत्वेन च योगस्योत्कर्षे कथितेऽप्यस्ति संशयस्यावसरः ॥ तारकज्ञानसाधनत्वेन नानासमयिभिरुपदिष्टा उपायविशेषा भिद्यन्ते ॥ विप्रतिपत्त्यभावे हि स्यात्क्वचिदाश्वासः ॥ विप्रतिपत्तौ चित्तं भ्राम्यति ॥ अतो गीतोक्तकर्मयोगएव विश्वासः कर्तव्य इति कुतो निर्वन्ध इति मतेष्वन्योन्यभेदं पुरस्कृत्याक्षेपः संभावितः ॥ अयं व्यवसायात्मिकेत्यनेन प्रत्युक्तः ॥ अत्र सामान्यतो लोके वेदे चानुगतो न्यायः प्रदर्शितः ॥ विशेषतः कर्मयोगस्य व्यवसायात्मकत्वं चाभिप्रेतं भगवता प्रमाणप्रमितानां मतानां प्रतिपाद्यव्याहतिर्नकदापि भवेत् इति ॥ ये समयिनः प्रमाणं विहाय स्वबुद्ध्युत्प्रेक्षितां वाचं ब्रूयुस्त एवान्योन्यव्याहतिद्वारा विरुद्धान् विपरीतान्वा मार्गान् प्रदर्शयेयुः ॥ वैदिके लौकिके वा व्यवहारे केवलं मतभूयिष्ठत्वपर्यालोचनयैव न भ्रमितव्यं ॥ अन्यथा सर्वव्यवहारोच्छेदप्रसङ्गः ॥ यथार्थं वस्तु एकप्रकारमेव स्यात् ॥ प्रमाणमेव सर्वत्रोपादेयत्वे शरणमिति तदेवान्वेषणीयं ॥ ये प्रमाणान्यवलोक्य निर्णीततत्त्वार्थाः तेषां मतान्येकप्रकाराण्येव ॥ किंच मयोपदिश्यमानो योगः प्रामाणिकः वेदोक्तविष्णुधर्मत्वात् ॥ अवैदिकेष्वेव मतेषु बहुमुखत्वमनन्तत्वं दृश्यते ॥ वेदस्यापौरुषेयत्वेन तदुक्तेस्तदनुयायिनां स्मृत्यादीनां च प्रामाण्यं सिद्धं ॥ समन्वयादागमवेद्यो विष्णुरेव ॥ एवं समन्वयो ज्ञेयः, यः परिष्कृतसुधायां "युक्त्यादीनामुपक्रमादीनां सन्निकर्षविप्रकर्षाभ्यां सावकाशत्वनिरवकाशत्वादिना बलाबलविनिश्चयपुरस्सरं प्रबलविरोधे दुर्बलबाधया

वाक्यार्थविमर्शलक्षणोपक्रमादिसिद्धशक्तितात्पर्यसंबन्धः” इति ॥ एतादृश-समन्वयजनितो विशेषनिश्चयोऽत्र व्यवसाय इत्युच्यते ॥ अवसायो निश्चयः॥ वीत्यनेन विशेषो बोध्यते ॥ समन्वितेषु वैदिकेषु मतेषु न विवादस्य कदाप्यव-काशः ॥ यतस्तैस्सर्वैर्विष्णुरेव परायणतया जोघुष्यते ॥ मयोच्यमानो यो-गोऽपि विष्ण्वाराधनरूपः ॥ अतः सर्वैरुपादेयः ॥ तथोक्तं ब्रह्मकैवर्ते “बुद्धि-र्निर्णीततत्त्वानामेका विष्णुपरायणा। बहुशाखाह्यनन्ताश्च बुद्धयोऽव्यवसायिनां” इति ॥ योगस्य प्रामाणिकत्वं तत्र तत्र स्फुटीकरिष्यामि ॥ तस्मादिमं शृणु श्रुत्वा निष्ठां कुरु ॥ इति ॥

(नत्वेवाहमित्यादिना सांख्यप्रपंचने यदुक्तं जीवयाथात्म्यं तन्निश्चयो व्यवसाय इति रामानुजाचार्यव्याख्या)॥ “जीवनित्यत्वस्वयंप्रकाशत्वा-नन्दत्वभगवत्प्रकारत्वस्वाभाविकापहतपाप्मत्वादिरूपेण याथात्म्यं अभिप्रेतं” इति देशिकः॥ विना आत्मयाथात्म्यनिश्चयं न कस्यचिन्मोक्षमार्गे अधिकारः॥ याथात्म्यनिश्चये सति मुमुक्षुर्भूत्वा नित्यनैमित्तिककाम्यानि कुर्वन्नपि फलाभिसंधिं परित्यज्य मोक्षमेवोद्दिश्य एकाग्रचित्तो भवति ॥ प्रवृत्तिहेतोः फलस्य चैक्येन तस्य बुद्धिरेकेत्यभिहिता गीतायां ॥ अस्य मुमुक्षोर्यथा कथंचिज्जीवज्ञानं नाधिकारं संपादयति ॥ अपितूक्तक्रमेणाऽऽत्यन्तिकमेव याथा-त्म्यज्ञानं ॥ स्वर्गाद्यर्थी तु जीवास्तित्वज्ञानमात्रेणाधिकारी भवति ॥ न तस्य प्रवृत्तिर्याथात्म्यनिश्चयपूर्विका नियमेन ॥ एवं सोऽव्यवसायीत्युच्यते ॥ प्रवृत्तिहेतूनां फलानामानन्त्येन अव्यवसायिनां बुद्धयोऽनन्ता बहुशाखाः इति रामानुजाचार्याशयः ॥

अत्र जीवस्वरूपोपपादने यदुक्तं भगवत्प्रकारत्वं तत्रैवास्माकं विप्रति-पत्तिः। आनन्दसाम्यवादिनो हि विशिष्टाद्वैतिनः॥ स्वमतानुसृत्या व्याख्यात-वन्तइति न तत्साधुत्वासाधुत्वविचारस्येह संदर्भः।

शाङ्करास्तु जीवब्रह्माभेदनिश्चयं व्यवसायमाहुः ॥ तस्य तन्मते सर्वभेदध्वंसकतया भेदात्मकं संसारं निरस्य ज्ञानिनमद्वैतसाक्षात्कारमार्गे स्थापयतीति व्यवसायात्मकबुद्धेरेकत्वं सिध्यतीति तेषां हृदयम् ॥

निश्चयाकारजैवज्ञानं व्यवसायः इति नास्माकमनिष्टं ॥ जीवपारतन्त्र्यप्रतिबिम्बत्वादिदृढज्ञप्तिपूर्विका विष्णुशरणागतिरेव निश्चयाकारो ज्ञेयः ॥

रामानुजशङ्करयोरियान्भावविशेषो दृश्यः । साङ्ख्यगर्भितं योगं काम्यादिविशिनष्टीत्याद्यः । योगसाङ्ख्ययोस्साध्यसाधनतया ऐक्याभिप्रायेण योगगर्भितं सांख्यं काम्यादिविशिनष्टीति द्वितीयः ॥ प्रकरणौचित्येन योगस्य प्राधान्येन सांख्योपसर्जनतया परामर्श आद्येन सूचितः ॥ एकेत्यनेनाद्वैतस्यैव विवक्षां भावयन्स्वमतानुसारेण कर्मण उपसर्जनत्वमभिप्रेत्य सांख्यस्य प्रधानत्वतो विवक्षा उद्भाविता द्वितीयेनेति ॥

प्रथमार्धे कस्याश्चित्स्तुतिः अन्यासां द्वितीयार्धे निन्दा कृतेत्यविवादं गम्यते ॥ केयं स्तुता काः निन्दिताः इत्यर्थो विचार्यः ॥ शब्दतः स्तुतिविषयत्वेन सांख्यस्य योगस्य वोभयस्य वा ग्रहणे व्यवसायशब्दार्थस्यैव संकोचो वाच्यः ॥ प्रमाणजनिततत्त्वार्थनिश्चयो हि शब्दार्थः ॥ श्लोके तावद्वाक्यगतिस्सामान्यावबोधं पत्र्यते ॥ संकोचे प्रयोजनमन्वेषणीयं ॥ योगस्तुतिप्रकरणत्वेन संकोचस्सह्यते इतित्वगतिकगतित्वेन दुर्बलं ॥ किंचात्र क आक्षेपस्समाधीयते भगवतेति विचार्यं ॥ यद्यपि आक्षेपविशेषमनपेक्ष्य योगमुत्कर्षयतीति व्याख्यानं नासांगत्यदुष्टं भवेत् । तथापि स्वशब्दं विहाय व्यवसायेति सामान्यघटितवाक्यार्थजिज्ञासायां आक्षेपविशेषोऽधिगम्यते यः प्रदर्शितः पूर्णबोधाचार्यभाष्ये ॥ तत्रोक्तं ॥ "योग इमां शृण्वित्युक्तं ॥ बहुधो हि बुद्धयो मतभेदात् ॥ तत्कथमेकत्र निष्ठां करोमीत्यत आह व्यवसायात्मिकेति ॥ [illegible]

मेवेत्यर्थः" इति ॥ बुद्धिशब्दस्य वाक्परत्वं तु "एषा" इत्यास्मिन् श्लोके प्रदर्शितं ॥ मतभेदमादायाक्षेपस्तु न मन्दाशंका नाप्युपेक्षणीया ॥ अत एव हि शास्त्रयोनित्वाधिकरणानन्तरं समन्वयाधिकरण प्रवृत्तं ब्रह्मसूत्रेषु ॥ एवं लोके वेदे च मतवैचित्र्यमवेक्ष्य प्रश्नस्तस्य प्रतिवचनं इति व्याख्याने पद्यगतसामान्यप्रयोगाणामौचित्यं स्फुट्यते ॥ यत्र यत्र विरोधस्तत्रोभयोस्सम्यङ्निर्णीतत्वं नोपपद्यते इति सामान्याकारकोपदेशेनाक्षेपमुपशाम्य तस्य विनियोगत्वेन कर्मयोगमादाय तस्य वैदिकत्वादितरस्यावैदिकत्वात्तयोः क्रमेणोपादेयत्वानुपादेयत्वे इत्यभिप्रायकथने वाक्यगत्यानुगुण्यं प्रकरणौचित्यं च लभ्येते ॥ तस्मादाह विवृतिकारः॥ "इह लोके वेदे एका एकोपायविषया बुद्धिर्निश्चयज्ञानजनिका वाक्" इति ॥ बुद्धिशब्दस्य वाक्परत्वे एकेत्यनेन एकार्थप्रतिपादकता सूच्यते ॥ तस्य मतिपरत्वे एकविषयकत्वं बोध्यते इति भेदः ।

गीतातात्पर्ये सामान्यतः प्रदर्शितस्य कर्मयोगे विनियोगः प्रमाणवाक्यद्वारा सूचितः ॥ "बुद्धिर्निर्णीततत्त्वानामेका विष्णुपरायणा" इति ॥ अत्र बुद्धिशब्दो मतिपर इत्यङ्गीकारे न दोषः ॥ येषां कर्मयोगस्वरूपे निश्चयज्ञानं तेषां मतिर्विष्णुपरायणेत्यर्थः ॥ अन्यपूजां अन्यलाभं चोपेक्ष्य ये विष्णुपरायणास्त एव निर्णीततत्त्वार्थाः कर्मयोगिनः इति सामान्यन्यायस्य प्रकृतसंगतावुपयोगो द्रष्टव्यः ॥

(इह बुद्धिरेकेत्युक्तं ॥ बुद्धिशब्दो जात्येकवचनत्वेन बह्वीर्वक्ति ॥ एकेत्यनेनापाततो बह्वीनामपि तत्त्वत ऐक्यमेवेति ज्ञायते ॥ कानि तानि बहुत्वेन विवक्षितानि? कां विवक्षामधिकृत्य एकत्वमभिहितं? ॥ बहुत्वेन बुद्धिस्थानि सम्यङ्निर्णीततत्त्वानि मतानि इति सर्वज्ञाचार्यः ॥ वैदिकानि सर्वाणि मतानि ज्ञानोपायं विष्णुधर्ममेव प्रतिपादयंतीति प्रतिपाद्यैक्यविवक्षया ऐक्यं युज्यते इत्याशयः ॥ रामानुजाचार्यस्तु बहुत्वेनाभिप्रेतानि नित्यनैमित्तिककाम्यकर्माणि

शास्त्रीयाणि सर्वाणि इत्यादाय मुमुक्षुणा कर्मयोगिनाऽनुष्ठीयमानेषु उद्देश्य-फलस्य मोक्षस्य साम्यादेकत्वाभिधानं इत्यभिप्रैति ॥ शङ्कराचार्यस्तु बुद्धि-शब्देनाद्वैतज्ञानं गृह्णाति ॥ तस्मिन् कर्मयोगमन्तर्भावयति ॥ तस्य ज्ञानस्य ब्रह्ममात्रविषयत्वेनेतरविपरीतबुद्धिशाखाभेदस्य बाधकत्वेनैकत्वं मन्यते ॥ अत्र मधुसूदनवेङ्कटनाथौ मन्येते ॥ साङ्ख्ययोगयोरन्योन्यभेदमाशङ्क्या-त्यन्तिकफलसामान्यमादायैकत्वमुक्तं इति ॥ इदं चिन्त्यं ॥ यद्यपि 'साङ्ख्य-योगौ पृथक्बालाः प्रवदन्ति न पण्डिताः' इति वक्ष्यते ॥ तथाप्यत्र तयो-र्भिन्नत्वाभिन्नत्वविचारो न सङ्गतो भाति ॥ किंचैवंसति प्रथमद्वितीयार्धयोः पठितस्य बुद्धिशब्दस्यार्थवैचित्र्यकल्पनं आपद्येत ॥ बुद्धिशब्दप्रतिपाद्यानां व्यवसायत्वाव्यवसायत्वभेदेनैकत्वं बहुत्वं च खलु पद्याशयोऽधिगम्यते ॥ यदि प्रथमार्धे साङ्ख्ययोगयोरैक्यमुक्तं तयोरेव बहुत्वं द्वितीयार्धेऽप्युचितं दृश्यते ॥ यथा श्रीमध्वव्याख्याने मतानामुभयत्र ग्रहणेनैकत्वं रामानुजीयेऽपि मतीनां ग्रहणेन व्यवसाय्यव्यवसायिभेदेनैकत्वं बहुत्वं च व्यवस्थितं, शङ्कराचार्यव्याख्यानेऽप्युभयत्र बुद्धिरित्यनेन ज्ञानं विवक्षित्वा तस्यैव यथोक्तं एकत्वं बहुत्वं च उपपादितं ॥ तस्मान्मधुसूदनाद्युक्तोपपादनं साङ्ख्ययोगयोः परस्परं भेद आशङ्कितो निरस्तश्च इति तत्र प्रत्याययति ॥

बहुशाखत्वेनानन्तत्वेन च या दूषिता बुद्धयः ता अव्यवसायिनां काम्यबुद्धय इत्यत्र प्रायशस्सर्वे संप्रतिपन्नाः ॥ अयं भावश्शङ्करभाष्येणाऽपि ज्ञायते ॥ अवैष्णवधर्मरता इत्थं दूषिता इति नास्माकमपीदं व्याख्यान-

नीलकण्ठस्तु स्वाचार्यमपि हित्वा क्लिष्टमाशयं कल्पयति ॥ तथाहि "ननु साङ्ख्ययोगयोर्महाभयत्राणहेतुत्वं तुल्यं चेत् कोऽनयोर्विशेषः इत्याशङ्क्य साङ्ख्यानां पातशङ्का नास्ति योगिनस्तु यावद्विदेहकैवल्यं पात-शङ्काऽस्तीत्याह व्यवसायात्मिकेति ॥ ... ... कृतकृत्यत्वाद्ब्रह्मविदः पातशङ्का नास्ति ॥ अव्यवसायिनां अज्ञानिनां तु बुद्धयोऽनन्ताः ताश्च

प्रत्येकं बहुशाखा इति इदमेव मम श्रेय इति निश्चयस्य दुर्लभत्वात् कदाचिदश्रेयस्यापि श्रेयोबुद्धौ सत्यां पातशङ्काऽस्तीति महांस्तयोर्विशेषः” इति । तथाच प्रथमार्धे सांख्यं स्तुतं द्वितीये योगो निन्दित इति भाव उक्तः ॥ योगस्तवनपरस्य ग्रन्थस्य तन्निन्दापरत्वेनोत्थापनस्यानुचितत्वादिदं चिन्त्यं इति शङ्करभाष्योत्कर्षदीपिकायां नीलकण्ठः स्फुटं प्रत्याख्यातः ॥ “कर्मबन्धं प्रहास्यसि” “त्रायते महतोभयात्” इति च योगस्तवनेनात्र सांख्यमात्रं तारकं योगस्तु संभावितपातत्वेन वर्ज्यं इत्याशयकल्पनमनुपपन्नमेव ॥

व्यवसायशब्दस्य विष्णुवाचकत्वेन विष्णुसहस्रनामसु पाठात् विष्णुः आत्मा स्वरूपं विषय इति यावत् यस्या इत्यनेन वैष्णवानां बुद्धिर्विष्णुपरायणा अव्यवसायिनां अवैष्णवानां बुद्धयः बहुशाखा अनन्ताश्चेत्यपि श्लोकार्थो लभ्यते ॥

**यामिमां पुष्पितां वाचं प्रवदंत्यविपश्चितः ।**
**वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥४२॥**
**कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदां ।**
**क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३ ॥**
**भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसां ।**
**व्यवसायात्मिका बुद्धिः समाधौ न विधीयते॥४४**

वि ॥ नन्ववैदिकमतानामप्रमाणिकत्वेन तत्राविश्वासेऽपि वैदिकेष्वपि केचित्कर्माणि स्वर्गफलान्येवाहुः ॥ त्वया

तु काम्यार्थान्येव स्वर्गादिफलानि निष्कामानीश्वरार्पण-बुद्ध्याऽनुष्ठितानि तु ज्ञानार्थानीत्यभिप्रेयते ॥ तथाच कथं त्वद्वचने निष्ठा स्यादित्यतस्तेषां वैदिकाभासताप्रदर्शनाय निन्दामाह । यामित्यादित्रयेण ॥ वेदवादरताः वेदैर्यदापातत उच्यते कर्मादि तत्रैव रताः वेदोक्तविष्णुमहिमविवादपूर्वकं वेदपाठका वा निरर्थकवेदपाठका वा ॥ अत एवाविपश्चितः वेदतात्पर्यार्थापरिज्ञानिनः। अन्यत् मोक्षाख्यफलं वा ब्रह्म-स्वरूपं वा नास्तीति वादिनः । कामात्मानः काम्यफल-मनस्काः भोगचित्ता इति वा ॥ स्वर्गपराः स्वर्गतात्पर्यकाः स्वर्गमेव परमपुमर्थं मन्यमाना इति यावत् ॥ जन्म कर्म च तत्फलं च प्रददातीति तथाविधां क्रियाविशेषबहुलां बहु-कर्मविशेषप्रतिपादिकां यामिमां वाचं पुष्पितां सञ्जातपुष्पां मोक्षफलमपेक्ष्य पुष्पस्थानीयस्वर्गादिफलकां भोगैश्वर्यप्राप्तिं प्रति प्रवदन्ति तया वाचाऽपहृतचेतसां भोगैश्वर्ययोरासक्त-चित्तानां व्यवसायात्मिका सम्यक्प्रमाणनिर्णीतार्थनिश्चय-रूपा बुद्धिः समाधौ भगवति मनःसमाधानार्थं न विधीयते । तस्यैव परमपुमर्थहेतुत्वादितिभावः। यद्वा अव्यवसायबुद्धिः केन कारणेन भवति यत्परित्यागात्सा बुद्धिर्नभवति इत्यतोऽ-व्यवसायबुद्धेः कारणमाह ॥ यामिति ॥ योजना तु पूर्वव-देव ॥ वेदतात्पर्यविषयीभूतभगवत्स्वरूपमोक्षस्वरूपयोर-ज्ञानिनामापातप्रतीतार्थमादाय स्वर्गादिफलका वेदा इति

वादिनां भोगैश्वर्यसक्तानामसद्वादिनां वाक्यान्यव्यवसायबुद्धिकारणं । तत्त्यागे च सा बुद्धिर्नभवतीति भावः ॥ अत्र पक्षे समाधावित्यस्य तत्त्वविषयतया दार्ढ्यार्थमित्यर्थः। तस्यैव विष्णुधर्मानुष्ठानहेतुत्वादिति ॥

शा० ॥ येषां व्यवसायात्मिका बुद्धिः नास्ति ते ॥ यामिमां इति ॥ यां इमां वक्ष्यमाणां पुष्पितां पुष्पितवृक्षइव शोभमानां श्रूयमाणरमणीयां वाचं वाक्यलक्षणां प्रवदन्ति ॥ के अविपश्चितः अमेधसः अविवेकिनः इत्यर्थः ॥ वेदवादरताः बह्वर्थवादफलसाधनप्रकाशकेषु वेदवाक्येषु रताः। हे पार्थ न अन्यत् स्वर्गपश्वादिफलसाधनेभ्यः कर्मभ्यः अस्ति इति एवं वादिनः वदनशीलाः (४२)

तेच ॥ कामात्मान इति ॥ कामात्मानः कामस्वभावाः कामपरा इत्यर्थः ॥ स्वर्गः परः पुरुषार्थः येषां ते स्वर्गपराः स्वर्गप्रधानाः। जन्मकर्मफलप्रदां कर्मणः फलं कर्मफलं जन्मैव कर्मणः फलं जन्मकर्मफलं तत् प्रददातीति जन्मकर्मफलप्रदा तां वाचं प्रवदन्ति इति अनुषज्यते ॥ क्रियाविशेषबहुलां क्रियाणां विशेषाः क्रियाविशेषाः ते बहुला यस्यां वाचि तां स्वर्गपशुपुत्राद्यर्थाः यया वाचा बाहुल्येन प्रकाश्यन्ते ॥ भोगैश्वर्यगतिं प्रति भोगश्च ऐश्वर्यं च भोगैश्वर्ये तयोः गतिः प्राप्तिः भोगैश्वर्यगतिः तां प्रति साधनभूताः ते

क्रियाविशेषाः तद्बहुलां तां वाचं प्रवदन्तः मूढाः संसारे परिवर्तन्ते इत्यभिप्रायः ॥ ४३ ॥

तेषां च भोगेति ॥ भोगैश्वर्यप्रसक्तानां भोगः कर्तव्य ऐश्वर्यं च इति भोगैश्वर्ययोरेव प्रणयवतां तदात्मभूतानां॥ तया क्रियाविशेषबहुलया वाचा अपहृतचेतसां आच्छादितविवेकप्रज्ञानां व्यवसायात्मिका साङ्ख्ये योगे वा बुद्धिः समाधौ समाधीयते अस्मिन् पुरुषोपभोगाय सर्वं इति समाधिः अन्तःकरणं बुद्धिः तस्मिन् समाधौ न विधीयते न भवति इत्यर्थः ॥ ४४ ॥

रा० ॥ अथ काम्यकर्माधिकृतान्निन्दति ॥ यामिमां पुष्पितां पुष्पमात्रफलां आपातरमणीयां वाचमविपश्चितोऽल्पज्ञाः भोगैश्वर्यगतिं प्रति वर्तमानां प्रवदन्ति ॥ वेदवादरताः वेदेषु ये स्वर्गादिफलवादाः तेषु सक्ताः नान्यदस्तीति वादिनः तत्संगातिरेकेण स्वर्गादेरधिकं फलं नान्यदस्तीति वदन्तः कामात्मानः कामप्रवणमनसः स्वर्गपराः स्वर्गपरायणाः स्वर्गादिफलावसाने पुनर्जन्मकर्माख्यफलप्रदां क्रियाविशेषबहुलां तत्त्वज्ञानरहिततया क्रियाविशेषप्रचुरां भोगैश्वर्यगतिं प्रति वर्तमानां यामिमां पुष्पितां वाचं ये प्रवदन्तीति सम्बन्धः ॥ तेषां भोगैश्वर्यप्रसक्तानां तया वाचा भोगैश्वर्यविषयया अपहृतज्ञानानां यथोदितव्यवसायात्मिका बुद्धिस्समाधौ मनसि न विधीयते नोत्पद्यते ॥ समाधीयतेऽ-

स्मिन्नात्मज्ञानमिति समाधिर्मनः ॥ तेषां मनस्यात्मयाथात्म्यनिश्चयपूर्वकमोक्षसाधनभूतकर्मविषया बुद्धिः कदाचिदपि नोत्पद्यते इत्यर्थः ॥ अतः काम्येषु कर्मसु मुमुक्षुणा न सङ्गः कर्तव्यः ॥ ४२ ॥ ४३ ॥ ४४ ॥

विचारः

श्लोकत्रयमेकान्वयं । अविपश्चितो वेदवादरताः नान्यदस्तीति वादिनः कामात्मानः स्वर्गपराः यामिमां पुष्पितां वाचं जन्मकर्मफलप्रदां क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति प्रवदन्ति ॥ तया वाचा अपहृतचेतसां तेषां भोगैश्वर्यप्रसक्तानां व्यवसायात्मिका बुद्धिस्समाधौ न विधीयते इति योजना ॥

पुष्पितां वाचं श्रूयमाणरमणीयां इति शंकरभाष्यं । पुष्पमात्रफलां आपातरमणीयां इति रामानुजाचार्यः ॥ 'सर्वं वाक्यं सावधारणं' इति न्यायेन मात्रशब्दार्थगर्भित इति देशिकोपपादनं ॥ "पुष्पितविषलतावदापातरमणीयां यद्वा केवलं जातपुष्पां नतु फलवतीं ॥ अथवा मोक्षफलमपेक्ष्य स्वर्गादिपुष्पयुक्तां ॥ स्वर्गादेर्मोक्षात्पूर्वमेवोल्लासइति फलपूर्वकालोल्लासित्वात्पुष्पत्वेन निरूपणं ॥ तथाच पुष्पस्थानीयस्य न फलत्वं" इति वेङ्कटनाथः ॥ पुष्पितद्रुमवद्दूरतो रमणीयां इति नीलकण्ठः ॥

"स्वर्गादिपुष्पवाद्येव वचनं यदचेतसां ।
न मन्यन्ते फलं मोक्षं विष्णुसामीप्यरूपकं ॥
फलदं च न मन्यन्ते त विष्णुं जगतः पतिं ।
भोगैश्वर्यानुगत्यर्थं क्रियाबाहुल्यसंततां ॥
बहुसंसारफलदामन्ते तमसि पातिनीं ।
यां वदन्ति दुरात्मानो वेदवाक्यविवादिनः इति ब्र० वै ॥

इष्ट्वैव देवतायज्ञैर्गत्वा रंस्यामहे दिवि ।

तस्यान्त इह भूयास्म महाशाला महाकुलाः ॥

एवं पुष्पितया वाचा व्याक्षिप्तमनसां नृणां ।

मानिनां चातिस्तब्धानां मद्वार्तापि न रोचते" ॥ इति भाग XI-अ० २१-श्लो ३३-३४.

"फलश्रुतिं कुसुमितामवेदज्ञा वदन्ति हि ।

कामिनः कृपणा लुब्धाः पुष्पेषु फलबुद्धयः ॥

अग्निमुग्धा धूमितान्ताः स्वलोकं न विदन्ति ते ॥ भाग० XI अ० २१ श्लो० २६-२७.

अविपश्चितः इति ॥ विद्वान्विपश्चिद्दोषज्ञः इत्यभिधानं ॥ काम्ये दोषं पश्यन् विद्वान् तदन्योऽविपश्चिन् विविधं पश्यच्चित्वं इति बहुलज्ञत्वं उच्यते इति देशिकः ॥ वेदतात्पर्यार्थापरिज्ञानिनो विवक्ष्यन्ते । "सर्वे वेदा यत्पदमामनन्ती" ति निखिलनिगमततीनां श्रीहरिप्रतिपादकत्वं प्रसिद्धं ॥ आपातार्थमेव पुरस्कृत्य कर्मकाण्डादिप्रभेदेन वेदवाक्येषु प्रतिपाद्यवैचित्र्यं मन्यमानाः काम्ये ये प्रवर्तन्ते तेऽपण्डिता एव ॥

वेदवादरताः इति ॥ "अपाम सोममममृता अभूम" इत्यर्थवादाः स्तुत्यर्था ये वेदेषु सन्ति तेषु रताः इति शांकराणां व्याख्यानं ॥ वेदशब्दः कर्मभागपरः यथा "वेदेषु वेदान्तेषु च गीयते" इति प्रयोगे दृष्टः । कर्मकाण्डदेवकाण्डोपासनाकाण्डब्रह्मकाण्डेषु मध्ये कर्मकाण्डमात्ररताः इति रामानुजाचार्याशयः ॥ वेदैर्यन्मुखत उच्यते तत्रैव रताः इति श्रीमध्वः ॥ वादशब्देन मुखतो वचनमुच्यते ॥ "वादो विषयकत्वं च मुखतो वचनं स्मृतं" इत्यभिधानं । अब्भक्षः वायुभक्षः इत्यादाविव सावधारणश्शब्दः ॥ वादरताः वादमात्ररता इत्यर्थः ॥ आपातप्रतीतार्थमेव प्रधानार्थं मन्यमानाः

सर्वेषु वेदेषु स्वरवर्णपदवाक्यमहावाक्येषु प्रतिपाद्यो विष्णुरेवेति ज्ञानहीनाः विवक्षिताः ॥ वेदे केवलं स्तुत्यर्थानि वाक्यानि न सन्ति ॥ नापि ब्रह्मा-प्रतिपादककर्मपराणि वाक्यानि वा ॥ अयमर्थस्समन्वयाध्याये ब्रह्ममीमांसायां प्रतिपादितः ॥ "वेदा ब्रह्मात्मविषयास्त्रिकाण्डविषया अपि । परोक्षवादो वेदोऽयं परोक्षं मम च प्रियं" इत्येकादशस्कन्धे भागवते २१—३३ "किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत् । इत्यस्या हृदयं लोके नान्यो मद्वेद कश्चन ॥ (४२) मां विधत्तेऽभिधत्ते मां विकल्प्योऽपोह्य इत्यहं" इत्यादयः प्रमाणं ॥ "विधिभागो हरेः पूजैवाभिधाने च तद्गुणाः । विकल्पे तद्बहुत्वं चाप्यपोहे तु तदप्रियं ॥ उच्यते सर्ववेदेषु तच्च वेद सएव हि ॥ सुरा हरेर्गुणाः प्रोक्तास्तेमे स्युरितिचिन्तनं ॥ सुरापानमिति प्रोक्तं तन्नकुर्यात्कथंचन ॥ ब्राह्मणो विष्णुरुद्दिष्टः स नास्तीत्यभिचिन्तनं ॥ ब्रह्महत्या समुद्दिष्टा तां न कुर्यात्कथंचन" इत्यादि प्रमाणानुगुण्येन 'नसुरां पिबेत्' 'ब्राह्मणो न हन्तव्यः' इत्यादिवाक्यान्यपि ब्रह्मणि समन्वेतव्यानि इति ॥

यद्वा वेदवादरताः इत्यत्र वादो विवादः विष्णुमाहात्म्यप्रतिपादक-वेदवाक्ये विवादिनः ॥ यद्वा निरर्थकवेदपाठकाः वेदवादरता उच्यन्ते (श्री-म.) "वादो विवादः संप्रोक्तो वादो वचनमेव च । वेदोक्ते विष्णुमाहात्म्ये विवा-दात्पठनादपि ॥ अथवा निरर्थकात्पाठाद्वेदवादी स उच्यते । वेदवादरतो नस्यान्नपाषण्डी नहैतुकी । तेभ्यो याति तमो घोरमन्धं यस्मान्नचोत्थितिः"॥ ब्रह्म वै. ॥ "यो हि वेदे च शास्त्रे च ग्रन्थधारणतत्परः । न च ग्रन्थार्थ-तत्त्वज्ञस्तस्य तद्धारणं वृथा ॥ भारं स वहते तस्य ग्रन्थस्यार्थं नवेत्ति यः" इति शान्तिपर्वणि ३०६-१३-१४ । अनेन वेदवादरता इति त्रिविधा अधि-कारिणः संगृहीता भवन्ति ॥

१. विष्णुप्रतिपादकवेदाप्रामाण्यवादिनः तामसाः ॥
२. निरर्थकवेदपाठाः मध्यमा राजसाः ॥

३. आपातार्थमात्रनिरताः ईषत्सत्त्वबुद्धयः परन्तु मुख्यार्थाज्ञानिन इति ॥

३. नान्यदस्तीतिवादिनः इति॥ अन्यदिति स्वर्गादेराधिकं विवक्ष्यते इति रामानुजाचार्यः॥स्वर्गपश्वादिफलसाधनेभ्यःकर्मभ्योऽन्यत् ज्ञानं निषेधगोचरमिति शङ्कराचार्याशयः ॥ तमुपपादयति वेंकटनाथः ॥ "स्वर्गपशुपुत्राद्यन्यन्नित्यनिरतिशयमोक्षाख्यं फलं तत्परं वेदवाक्यं वा किंचिन्नास्ति। सर्वस्य वेदस्य कार्यपरत्वेन सिद्धरूपे ब्रह्मणि तस्याप्रमाणत्वात्॥ व्यवस्थापितं हि कर्ममीमांसायां "आम्नायस्य क्रियार्थत्वात्" इत्यादिसूत्रेण वेदस्य क्रियार्थत्वादक्रियार्थानामप्रामाण्यमाशङ्क्य "विधिना त्वेकवाक्यत्वात्" इति सूत्रेण अक्रियार्थानामपि सिद्धार्थविषयवेदवाक्यानां विध्येकवाक्यत्वेन क्रियार्थत्वमुपपाद्य प्रामाण्यं इति सिद्धान्तयता जैमिनिना वेदस्य क्रियापरत्वं ॥ अतः कर्मविध्यपेक्षितकर्त्रात्मस्तावकमेवोपनिषत्काण्डं न स्वार्थपरं इत्यादिभिर्दुर्मीमांसकवादैर्ब्रह्मकाण्डमेवोपालभन्त इत्यर्थः" इति ॥ न केवलमुपनिषत्काण्डं अपितु कर्मकाण्डाद्यशेषोऽप्याम्नायो ब्रह्मपरः इत्याचार्यराद्धान्तः ॥ इष्टसाधनत्वं हि कार्यत्वं ॥ कार्यं न क्रियाव्याप्यं ॥ भगवानेवेष्टसाधनं इति स एव निखिलनिगमगोचर इति॥

"नान्यदस्तीति वादिनः" इति ॥ अन्यत् मोक्षाख्यं फलं अथवा ब्रह्मस्वरूपं विष्णुः नास्तीति वदनशीलाः मोक्षस्वरूपनिषेधकाः ईश्वरनिषेधकाश्च विवक्षिता इत्याचार्यः ॥ "न मन्यन्ते फलं मोक्षं विष्णुसामीप्यरूपकं। फलदं च न मन्यन्ते तं विष्णुं जगतः पतिं" इति—ब्र. वै. ॥ "इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ॥ नाकस्य पृष्ठे सुकृते तेनु भूत्वा इमं लोकं हीनतरं वा विशन्ति" इत्याथर्वणश्रुतिः ॥

४. "कामात्मानः" "स्वर्गपराः" इत्यन्यतरस्य चारितार्थ्यमाशंक्य सामान्यविशेषतया दृष्टादृष्टविषयतया हेतुसाध्यविशेषतया कामौन्मुख्यान्यवैमुख्यपरतयाच सार्थक्यमाह देशिकः ॥

५. 'जन्मकर्मफलप्रदां इति ॥ जन्मप्रदां तस्मिन्कर्मप्रदां तस्य फलप्रदां इति वा जन्मकर्मणीच ते प्रददातीति वा जन्माख्यं कर्मफलं तत्प्रदां इति वा जन्मसाधनं कर्म तत्फलं दुःखादि तत्प्रदां इति वा अर्थः ॥ जन्मशब्देन तदविनाभूतं मरणमप्युपलक्ष्यते ॥ "जन्म अपूर्वशरीरेन्द्रियादिसंबन्धलक्षणं तदधीनं च कर्म तत्तद्वर्णाश्रमाभिमाननिमित्तं तदधीनं च फलं विनश्वरं" इति मधुसूदनीये ॥ अत्र वर्णाश्रमाभिमाननिमित्तं इत्युपपादनस्य प्रयोजनं चिन्त्यं ॥ कर्मशब्देन काम्यं विवक्षितमिति स्फुटं ॥ जन्मच तत्र कर्म च तत्फलं च प्रददाति इति व्याख्यां विहाय जन्माख्यं कर्मफलं इति शंकरभाष्योक्तमेव साधूक्तमिति तदुत्कर्षदीपिकायां दर्शितं ॥ "वेदवाचा कर्मणि प्रवृत्तिः कर्मणा जन्मलाभः न तु वेदवाचः स्वतन्त्रं जन्मादिप्रदातृत्वमस्ति" इत्यभिप्रेत्य स्वाचार्येण यथोक्तं व्याख्यातमिति ॥

६. 'भोगैश्वर्यगति प्रति' इति ॥ अत्र गतिशब्दः प्राप्त्यर्थ इति सर्वे भाष्यकाराः ॥ तथैव मधुसूदननीलकण्ठश्रीधरशंकरानन्दादयश्च मन्यन्ते ॥ "गम्यते इति व्युत्पत्त्या गतिर्विशेषः ॥ प्राप्त्यर्थकत्वे भोगैश्वर्ये प्रतीत्येव चारिताध्योद्गतिशब्दवैयर्थ्यं ॥ विशेषार्थकत्वे क्रियाविशेषशब्दोक्तसाधनविशेषानुगुणसाध्यविशेषलाभात्सार्थकत्वं" इति वेंकटनाथेन प्राप्त्यर्थकत्वे अस्वारस्यं सूचितं ॥ एतच्चिन्त्यं ॥ अन्यैः सर्वैः प्राप्त्यर्थस्य कण्ठरवेणांगीकृतत्वात् ॥ "भोगैश्वर्यानुगत्यर्थं क्रियाबाहुल्यसंततां । बहुसंसारफलदामन्ते तमसि पातिनीं" इति ब्र. वै. वाक्यं श्रीमदाचार्योदाहृतं प्राप्त्यर्थं संवादयति ॥ यत्तु भोगैश्वर्ये प्रति इति चारिताध्यात् गतिशब्दस्य वैयर्थ्यं शङ्कितं तस्य सुकरं समाधानं ॥ प्रतीत्यनेन प्राप्तेरेव ग्रहणनियमाभावात् ॥ यस्तु क्रियाविशेषेत्यनेनार्थानुगुण्यलाभस्संपादितस्सनातिशयापूर्वार्थो दृश्यते॥ क्रियाविशेषाणां भोगैश्वर्याणां च परस्परं साध्यसाधनभावस्य "प्रती" त्यनेनैव सम्यग्गम्यत्वात् ॥ भोगाश्च ऐश्वर्याणिच भोगैश्वर्याणि तेषां गतिः प्राप्तिः इति

बहुवचनघटितसमासाश्रयणेनैवानेकक्रियाणां नानाविधभोगविशेषाणां ऐश्वर्य-विशेषाणां च प्राप्ति प्रति साधनत्वं लभ्यतएव ॥

७. समाधौ इति ॥ समाधौ मनसि अन्तःकरणे इति प्रायशः परे सर्वेऽपि व्याकुर्वते ॥ समाधीयतेऽस्मिन्नात्मज्ञानं इति समाधिर्मनः इति रामानुजाचार्यः ॥ बुद्धिविशेषविवक्षायामनन्वयादेवं व्याख्यातमिति देशिकः॥ समाधीयतेऽस्मिन् पुरुषोपभोगाय सर्वं इत्यन्तःकरणं उक्तं इति शङ्कराचार्यः ॥ इदमुपपादितं शङ्करानन्देन ॥ समाधीयते पुरुषो विषयेष्वनेनेति वा वासनात्मना जगत्सर्वं समाधीयते पुरुषेणास्मिन्निति वा अन्तःकरणमिति ॥ भगवति मनःसमाधानार्थं तत्त्वविषयतादाढ्यार्थं वा इति भगवत्पादीयव्याख्यानानुसृत्या विवृतिकार आह ॥ सप्तम्याश्चतुर्थ्यर्थत्वं न क्लिष्टं॥ "समाध्यनुष्ठानार्थं" इति नीलकण्ठोऽप्याह ॥ समाधिर्नाम चित्तैकाग्र्यं परमेश्वरैकाग्र्याभिमुखत्वं इति श्रीधरः ॥ प्रकृते अष्टाङ्गयोगान्तर्भूतसमाधिपरत्वं न विवक्षितं भाति ॥ समं यथार्थज्ञानं समाधानं दृढनिश्चयो वा शब्दार्थो ज्ञेयः ॥ तथाहि प्रमाणं ॥ "यथावस्तु यथाज्ञानं तत्साम्यात्सममीरितं । विषमं त्वन्यथाज्ञानं समाधानं समस्थितिः । न तद्भवत्यसद्वाक्यैर्विषमीकृतचेतसां । यां वदन्ति दुरात्मानो वेदवाक्यविवादिनः । तया संमोहिताधियां कथं तत्त्वज्ञता भवेत्" इति. ब्र. वै.

८. बुद्धिर्न विधीयते इति ॥ बुद्धिशब्दस्य बुध्यते अनयेति वाक्परत्वे विधीयते इत्यस्य प्रभवतीत्यर्थः ॥ भगवति मनःसामाधानार्थं वेदादिसदागमवाचो न प्रभवन्तीत्यर्थः ॥ "न तस्य तत्वग्रहणाय साक्षाद्वरीयसीरपि वाचस्समासन् ॥ स्वप्ने निरुक्त्या गृहमेधिसौख्यं न यस्य हेयानुमितं स्वयं स्यात्" इति भागवते ॥ वरीयस्यो वाचस्तत्त्वग्रहणाय न समासन् इत्युक्तएवार्थो 'बुद्धिर्न विधीयत' इत्यनेनोक्तो ज्ञेयः। बुद्धिशब्दस्य मतिपरत्वे 'न विधीयते' इत्यस्य न भवति इत्यर्थो बोध्यते ॥ नोत्पद्यते नोत्पादयितुं

शक्यते नस्थिरीभवति इत्यर्थो अप्युक्ताः व्याख्यानेषु ॥ अयं कर्मकर्तरि लकारप्रयोगः ॥ विपूर्वको धाञ् करोतिसमानार्थकः॥ घटो विधीयते इत्यत्र करोत्यर्थकस्य तस्य कर्म घटः ॥ तस्यैव सौकर्यद्योतनाय कर्तृत्वेन विवक्षायां कर्मव्यापारएव धातुतात्पर्यविषयः पर्यवस्यति ॥ सच भवनमेव ॥ तदाश्रयत्वं कर्तृत्वं इति घटो विधीयते इत्यस्य स्वयमेव घटो भवतीत्यर्थः पर्यवसितः ॥ तथैवात्र बुद्धिर्विधीयते इत्यस्य बुद्धिर्भवतीत्यर्थः ।

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।
निर्द्वंद्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ ४५॥

वि० ॥ एवं योगे त्विमां शृण्विति योगोक्तिं प्रतिज्ञाय तत्रादरजननाय सार्धश्लोकेन तं प्रशस्य स्वोक्तौ निष्ठाभावे कारणीभूतमतान्तरविधानं च श्लोकत्रयेण तन्निंदोक्त्या निरस्येदानीं प्रतिज्ञातं योगं प्राधान्येनाह त्रैगुण्येत्यादिना आषष्ठाध्यायसमाप्ति ॥ बहूनि मे व्यतीतानीत्यादेः प्रासङ्गिकत्वेनाप्रधानत्वात् ॥ त्रैगुण्यविषयाः त्रयाणां सत्वरजस्तमसां इदं त्रैगुण्यं ॥ त्रिगुणसम्बन्धार्थे “विचित्रा हि तद्धितगति”रितिष्यञ्प्रत्ययः ॥ त्रिगुणजन्यं यत्स्वर्गादि तद्विषयाः आपाततः स्वर्गादिफलककर्मादिप्रतिपादकाः वेदाः प्रतीयन्ते ॥ वादो विषयकत्वं च मुखतो वचनं

तथेत्येके ॥ हे अर्जुन त्वं तु निस्त्रैगुण्यः निष्क्रान्तस्त्रैगुण्यात् त्रिगुणसंबन्धिस्वर्गादितो निस्त्रैगुण्यः त्रैगुण्यबुद्धितो निर्गतो भव ॥ आपातप्रतीतार्थे भ्रान्तिं माकार्षीरित्यर्थः ॥ यद्वा त्रैगुण्यविषयाः त्रिगुणसंबन्धिस्वर्गाद्यस्थिरफलं संसारबन्धनं वा ॥ तदेव विषं त्रैगुण्यविषं यापयन्ति अपगमयन्ति इति त्रैगुण्यविषयाः ॥ यातेरन्तर्णीतण्यर्थात् "आतोऽनुपसर्गेकः" इति कः॥ नित्यपुमर्थहेतुभगवत्स्वरूपविषया इति यावत् ॥ तानाश्रित्येति शेषः ॥ निस्त्रैगुण्यो भव । प्राग्वदेवार्थः ॥ वेदतात्पर्यविषयीभूतार्थं बुद्ध्वा क्षुद्रफलकर्मादिरूपापातप्रतीतार्थे भ्रान्तिं मा कार्षीरिति भावः॥ किंच निर्द्वन्द्वः सुखदुःखे समेकृत्वेत्यत्रोक्तदिशा समदुःखसुखादिरिति वा सुखदुःखादिप्राप्तावुत्सेकानुत्सेकहीन इति वार्थः ॥ नित्यसत्वस्थः ॥ नित्यं सत्वे साधुगुणोपेते हरौ तिष्ठतीति नित्यसत्वस्थः ॥ नित्यं हरिस्मृतिमान् । भवेति सर्वत्रान्वेति ॥ कथं नित्यं हरिस्मृतिरित्यत आत्मवान् परमात्मवान् तथास्मृतिमानिति ॥ "आत्मेतितूपगच्छन्ति ग्राहयंतिचे"ति सूत्रोक्तदिशा "मम स्वामी हरि"रिति स्मृतिमानिति यावत् ॥ निर्योगक्षेमवान् ॥ अप्राप्तप्राप्तिर्योगः प्राप्तपरिरक्षणं क्षेमः ॥ शास्त्रविरुद्धविषये योगक्षेमाभ्यां निष्क्रान्तो निर्योगक्षेमः ॥ शास्त्रविरुद्धविषये योगक्षेमहीनो भवेत्यर्थः॥ उपलक्षणमेतत् ॥ तादृशयोगक्षेमेच्छाहीनोऽपि भवेत्यर्थः ॥

निर्द्वन्द्वत्वादिविशेषणयुक्तस्सन्नित्यपुमर्थहेतुर्भगवानेव वेदतात्पर्यविषयो न काम्यकर्मेतिज्ञात्वा काम्यकर्मत्यागेन सन्ततः साधुगुणो हरिर्ममस्वामीति नित्यस्मरणमेव ज्ञानोपायो नत्वैक्यस्मृतिरित्युक्तं भवति ॥

शं ॥ ये एवं विवेकबुद्धिरहिताः तेषां कामात्मनां यत्फलं तदाह ॥ त्रैगुण्येति ॥ त्रैगुण्यविषयाः त्रैगुण्यं संसारः विषयः प्रकाशयितव्यः येषां ते वेदाः त्रैगुण्यविषयाः ॥ त्वं तु निस्त्रैगुण्यो भव अर्जुन निष्कामो भवेत्यर्थः ॥ निर्द्वन्द्वः सुखदुःखहेतू सत्प्रतिपक्षौ पदार्थौ द्वंद्वशब्दवाच्यौ ततो निर्गतः निर्द्वंद्वो भव ॥ त्वं नित्यसत्त्वस्थः सदा सत्त्वगुणाश्रितो भव ॥ तथा निर्योगक्षेमः अनुपात्तस्योपादानं योगः उपात्तस्य रक्षणं क्षेमः ॥ योगक्षेमप्रधानस्य श्रेयसि प्रवृत्तिर्दुष्करा इत्यतो निर्योगक्षेमो भव ॥ आत्मवान् अप्रमत्तश्च भव ॥ एष तवोपदेशस्स्वधर्ममनुतिष्ठतः ॥

रा० ॥ एवमत्यल्पफलानि पुनर्जन्मप्रसवानि कर्माणि मातापितृसहस्रेभ्योऽपि वत्सलतरतया आत्मोज्जीवने प्रवृत्ता वेदाः किमर्थं वदन्ति कथं वा वेदोदितं त्याज्यतयोच्यते इत्यत आह ॥ (श्लोकद्वयं) ॥ त्रयो गुणास्त्रैगुण्यं सत्वरजस्तमांसि ॥ सत्वरजस्तमःप्रचुराः पुरुषास्त्रैगुण्यशब्देनोच्यन्ते ॥ तद्विषयाः वेदाः तमःप्रचुराणां रजःप्रचुराणां सत्वप्रचुराणां च वत्सलतरतयैव हितमवबोधयन्ति ॥ वेदाः यद्येषां स्वस्व-

गुणानुगुण्येन स्वर्गादिसाधनमेव हितं नावबोधयन्ति तदैते रजस्तमःप्रचुरतया सात्विकफलमोक्षविमुखाः स्वापेक्षितफल-साधनमजानन्तः कामप्रावण्यविवशा अनुपादेयेपूपादेय-भ्रान्त्या प्रविष्टाःप्रनष्टा भवेयुः॥ अतस्त्रैगुण्यविषया वेदाः ॥ त्वं तु निस्त्रैगुण्यो भव ॥ इदानीं सत्वप्रचुरस्त्वं तदेव वर्धय ॥ नान्योन्यसंकीर्णगुणत्रयप्रचुरो भव॥ न तत्प्राचुर्यं वर्धयेत्यर्थः ॥ निर्द्वन्द्वः निर्गतसकलसांसारिकस्वभावः ॥ नित्यसत्वस्थः गुणद्वयरहितनित्यप्रवृद्धसत्वस्थो भव ॥ कथ-मितिचेत् निर्योगक्षेमः आत्मस्वरूपतत्प्राप्त्युपायबहिर्भूता-नामर्थानां योगं प्राप्तानां च क्षेमं परित्यज्य आत्मवान् भव ॥ आत्मस्वरूपान्वेषणपरो भव॥ अप्राप्तस्य प्राप्तिर्योगः प्राप्तस्य परिरक्षणं क्षेमः ॥ एवं वर्तमानस्य ते रजस्तमप्रचु-रता नश्यति ॥ सत्वं च वर्धते ॥

विचारः

संगतिभावे वा अभावे वा अद्वैतं बलात्प्रवेशयन्ति श्लोकेषु केचिच्छा-ङ्कराः ॥ प्रकृते श्लोके ब्रह्मात्मैक्यबुद्धिपूर्वकसर्वकर्मसंन्यास उपदिश्यते इति शङ्करानन्दो व्याचष्टे ॥ इयमस्यावतारिका ॥ "'न जायते म्रियते वा कदाचित्' इति 'वेदाविनाशिनं' इत्यादिवाक्यैः प्रतिपादिता सांख्यविषया बुद्धिर्यदि तवास्ति दृढा तदा त्वयैवं स्थातव्यमिति ज्ञानिनः कर्तव्यं सूच्यते" इति ॥ अत्र प्रष्टव्यं। सांख्यप्रकरणं समाप्य योगमारभ्य पुनस्सांख्योपदेशे किं निमित्तं इति ॥ एषा तइति श्लोकव्याख्याने अर्जुनस्य सांख्यानधिका-

रित्वं मत्वा भगवान् योगोपदेशमारब्धवानिति हि शाङ्कराणामाशयो दृश्यते॥ केवलमारुरुक्षुर्नत्वारूढ इत्यर्जुनस्यानाधिकारित्वं शङ्करानन्देनाप्यभिप्रेतं ॥ एवं सति स्तुतिपूर्वकं कर्मानुष्ठानं सकृदुपदिश्य झटिति तद्विहाय सर्वकर्मसंन्यासोपदेशस्य को वाऽवसर इति न ज्ञायते ॥ उक्तामवतारिकामादाय तदानुगुण्येन पद्यस्थशब्दाः व्याख्याताः शङ्करानन्देन ॥ तदसामंजस्यं तत्र तत्र प्रदर्शयिष्यते ॥

अस्मिन् श्लोके वेदास्त्रैगुण्यविषयाः त्वं तु निस्त्रैगुण्यो भवेति वेदोक्तत्यागोपदेशः प्रतीयते ॥ वेदस्यानुपादेयत्वमुक्तमिव भाति ॥ इदमेकं दौर्घट्यं ॥ निस्त्रैगुण्यो भवेत्युक्त्वा नित्यसत्वस्थ इति व्याहृतिरपरं दौर्घट्यं इति संकटद्वयं परिहरणीयं ॥ आद्ये इदं चिन्त्यं । कथं नाम वैदिकैर्वेदस्यानुपादेयत्वं सह्यं स्यादिति ॥ यद्यनुपादेयत्वं नाभिप्रेतं कथमक्षरार्थ उपपद्यते इति च ॥ वेदस्य कात्स्न्र्येन भागशो वा परित्याज्यत्वं शाङ्कराणां संमतं दृश्यते ॥ "साध्यसाधनसाधकफलदेवतात्मकजगत्प्रकाशनपरास्सर्वे वेदाः ॥ वेदतत्कर्मतत्फलेषु प्रवृत्तस्य द्वैतज्ञानबाधं विना अद्वैतज्ञानं तन्निष्ठा तत्फलमपि न सिध्यति ॥ अतस्तन्निष्क्रमो विदुषा कर्तव्यः ॥ 'वेदानिमं लोकममुंच परित्यज्यात्मानमन्विच्छेत्' इति स्मरणात्" इत्यादिशङ्करानन्दव्याख्यानेन कृत्स्नोऽपि वेदस्त्याज्य इत्याशयोऽवगम्यते ॥

(वेदशब्दः कर्मकाण्डमात्रपरः इत्यन्येषां शाङ्कराणामाशयः ॥ काश्चिच्छ्रुतयोऽर्थवादाः स्तुत्यर्थाः प्ररोचनार्थाः इत्यपि ते मन्यन्ते॥ (कर्मकाण्डे वाऽन्यत्र वा योऽर्थः वेदमुख्यार्थतया प्रतिपादितः तस्य त्यागः कथं नामोपपद्यते इति चिन्तनीयं॥ अपौरुषेयो वेदो न कचिदप्यप्रमाणं अनुपादेयो वा भवितुमर्हति ॥ यदि काम्यकर्मप्रतिपादका वेदाः स्युः तर्हि वैदिकैः काम्यकर्मो-

वश्यमभ्युपेयं स्यात् ॥ अस्य सङ्कटस्य कः प्रतीकारः ॥ त्रैगुण्यशब्देन सत्त्वरजस्तमोगुणप्रचुराः पुरुषाः बोध्यन्ते इत्यादाय तादृशपुरुषान् वेदाः बोधयन्तीति रामानुजाचार्यो व्याचष्टे ॥ निस्त्रैगुण्यइत्यनेन राजसतामसाधिकारिणः प्रति ये उपदेशा वेदेषु दृश्यन्ते ते अनुपादेया मुमुक्षुभिरिति चाभिप्रेतं॥ (एवं सति वेदैकदेशस्य राजसतामसाधिकारिकभागस्य तिरस्कारः कथं नाम वैदिकैस्सह्यते )॥

(त्रैगुण्यविषयाइत्यत्र विषयशब्दार्थो न परैरालोचितः ॥ प्रतिपाद्यार्थत्वे प्रमाणप्रतिपाद्यस्यानुपादेयत्वं सङ्कटं ॥ किंच कर्मकाण्डेऽपि कामनाविहितेत्येतद-प्रामाणिकं । राजसान् तामसान् प्रति कतिचिद्वेदभागाः सात्त्विकानुपादेयाः प्रवृत्ताइत्यपि प्रमाणविरुद्धं )॥ 'सर्वे वेदा यत्पदमामनन्ति' 'वेदैश्च सर्वैरहमेव वेद्यः' 'परोक्षवादो वेदोऽयं' 'मां विधत्तेऽभिधत्ते मा' 'वेदे रामायणे चैव पुराणे भारते तथा। आदावन्ते च मध्ये च विष्णुस्सर्वत्र गीयते' इत्यादि प्रमाणबाहुल्यबलात्कृत्स्नाम्नायमुख्यप्रतिपाद्यो भगवानेव ॥ तस्मान्मुख्यप्रतिपाद्यापातप्रतिपाद्यविवक्षया गीताक्षराणि योज्यानि ॥ 'वादो विषयकत्वं च मुखतो वचनं स्मृतं' इत्यभिधानात् । 'त्रैगुण्यविषया इत्यत्र विषयशब्देनापाततः प्रतिपाद्यत्वं बोध्यते ॥ वेदवादरता इति पूर्वत्रापि वादशब्दस्यायमेवार्थः ॥ अत्रार्थे न कस्यापि वेदभागस्य प्रतिपाद्यभेदेन वा अधिकारिभेदेन वा तिरस्कार आपद्यते ॥ तस्मात्साधूक्तमाचार्येण विषयशब्दार्थव्याख्यानेन ॥ किंच विषं यापयन्ति अपगमयन्ति इति व्युत्पत्तौ तु न काप्यनुपपत्तिरस्ति ॥ "आश्रित्य वेदांस्तु पुमांस्त्रैगुण्यविषहारिणः । निस्त्रैगुण्यो भवेन्नित्यं वासुदेवैकसंश्रयः" इति प्रमाणं उदाहृतं गीतातात्पर्ये)॥

(त्रैगुण्यशब्दो बहुधा व्याख्यातो दृश्यते ॥ त्रिगुणं जगद्बीजमव्याकृतं तदुत्पन्नं त्रैगुण्यं जगदिति शङ्करानन्दः ॥ त्रिगुणफलं संसारउच्यते इति

शङ्कराचार्यः ॥ त्रैगुण्यं स्वर्गादि वेदैरापाततः प्रतिपाद्यं इति श्रीमध्वः ॥ संसारपरत्वमपि तस्य नासंमतं ॥ संसाराख्यं विषं यापयन्ति अपगमयन्तीति व्याख्यानं च प्रदर्शिन पुरस्तात् ॥ त्रैगुण्यमित्यत्र प्रत्ययार्थस्य फलत्वे अस्वारस्यं देशिको मन्यते ॥ असौ फलार्थकत्वोक्तिर्मन्दा इति तिरस्कृत्य अधिकारव्यवस्थापनस्यैव प्रकरणौचित्यमाह ॥ तथाच सत्त्वरजस्तमःप्रचुराः पुरुषास्त्रैगुण्यशब्देनोच्यन्त इति रामानुजाचार्यव्याख्या ॥ ननु कथं वेदाः सात्विकराजसतामसपुरुषान् बोधयन्तीत्याकांक्षायां देशिकः उपपादयति ॥ "यथा वातपित्तकफोपात्तशुद्धसमसंकीर्णप्रकृतीन्पुरुषानालोच्य हितोपदेशिनो वैद्यास्तत्प्रकृत्यनुकूलं भोजनभेषजादि विदधति अपथ्यानि च निषेधन्ति ॥ तदभावे च यथा दुरुपदेशादिमूढचेतसः प्राणिनोऽपथ्यगरलादिसेवया प्रणश्यन्ति ॥ यथाच ताम्बूलार्थिनः पुत्राः पित्रादिभिस्तत्प्रदानाभावे चौर्यादिना प्रणश्यन्ति तथा अत्रापीति भावः" इति ॥ इदं चिन्त्यं ॥ न तावद्देशिकः स्वरूपतः सात्त्विकादिभेदेन जीवत्रैविध्यं अभ्युपगच्छति । तन्मते हि प्राप्यः पुरुषार्थो मोक्षः ॥ एवं सति हितैषिणो वेदाः कमप्यधिकृत्य कामनां मोक्षप्रतिरोधिनीं कथमुपदिशेयुः ॥ उदाहृतौ लौकिकदृष्टान्तौ तु न प्रत्याययतः ॥ वैद्यो न रोग्ययोग्यबुभुक्षामनुजानाति ॥ यदि कश्चिद्दुर्वृत्तः पुत्रो वेश्यागमनमपेक्षते नासौ पित्राऽनुज्ञेयः ॥ कामनातु भवरोगं शश्वदभिवर्धयेत् न कदापि शमयेत् ॥ अतः कामनाविधिर्वेदेष्वनुपपन्नः ॥ स्वर्गकामो यजेत इत्यत्र कामी यजेत इत्येवार्थः नतुकामी भूत्वा यजेतेति ॥ यदि काम्योपदेशस्यापि हिततमत्वं तस्मात्कामनापूर्वकमनुष्ठेयत्वं च विहितं तर्हि निस्त्रैगुण्यो भवेति नियोगो व्याहतः ॥ अर्जुनस्य गुणित्रये कुत्र वा स्यादन्तर्भावः ॥ अधिकारानुगुणं हितमार्गस्यैव वेदैरुपदिष्टत्वात्किमिति वैदिकः पंथाः 'निस्त्रैगुण्यो भव' इति वर्ज्यो भवेत् ॥ गुणत्रयसहवासस्यातिक्रान्त्युपदेशे तदन्तर्भूतसत्वगुणस्यापि त्याज्यत्वं आपद्यते ॥ तथासति कर्मयोगः सुतरां दुष्कर-

स्यात् ॥ इमामनुपपत्तिं पश्यन्तौ गुरुशिष्यौ रामानुजाचार्यदेशिकौ निस्त्रैगुण्यशब्दं रजस्तमोमात्रपरतया संकोचयतः ॥ गुणद्वयविवक्षायां तु निर्द्वैगुण्य इति वाच्ये गुणत्रयबोधकासाधारणशब्दप्रयोगे प्रयोजनं न प्रदर्शितं ॥ किंच निस्त्रैगुण्य इत्यत्र गुणद्वयोपादाने त्रैगुण्यविषया इत्यत्र गुणत्रयग्रहणं कुतः ॥ वेदविषयत्वेन योऽर्थो विवक्षितस्स एव निस्त्रैगुण्य इत्यनेन निषेधविषयः इति पदाभ्यासेन वाक्यगत्या प्रकरणसामर्थ्येन चावगम्यते। एकस्यैव द्विरुच्चारितस्य शब्दस्य नियामकं विना अर्थवैचित्र्यकल्पनमनुचितं भाति ॥

काम्याकाम्यात्मककर्माणि सर्वाणि संन्यस्य सांख्येऽवतिष्ठेत्यर्थमाह शङ्करानन्दः ॥ यद्यपि "ऊर्ध्वं गच्छन्ति सत्त्वस्था" इति सत्वगुणस्य महिमा वर्ण्यते ॥ प्रकृते ऊर्ध्वगतावपि विरक्तो भवेत्यर्थः इति नीलकण्ठः ॥ गुणत्रयकार्येषु कामस्यैव प्राधान्येन संसारबीजत्वात् कामत्यागएवात्र निस्त्रैगुण्यशब्देन विहितइति शङ्कराचार्यः ॥ द्विरुक्तस्य त्रैगुण्यशब्दस्यार्थैक्यं उचितं इत्यभिप्रायेण कामनाया निंद्यत्वात्तस्याः वेदतात्पर्यगोचरत्वं न स्यादित्यतश्च श्रीमदाचार्येणान्यथा व्याख्यातं ॥ काम्यफलानि तु वेदा आपाततो बोधयन्ति ॥ आपातप्रतीतार्थे भ्रान्तिं माकार्षीरिति यावत् इति ॥ नित्यसत्वस्थ इत्यत्र सत्वशब्दो गुणवाचीति रामानुजवेङ्कटनाथौ ॥ धर्मवाचीति मधुसूदननीलकण्ठौ ॥ सतो भावः सत्त्वं ब्रह्मस्वरूपं इति शङ्करानन्दः ॥ श्रीहरिवाचीत्याचार्यः ॥ "सत्वं साधुगुणाद्विष्णुरात्मा सन्ततिहेतुतः" इति वचनमत्र प्रमाणं ॥ अब्भक्ष इतिवत्सावधारणोऽयं शब्दः रजस्तमोविधुरं सत्वं बोधयतीति देशिकोपपादनं ॥ निस्त्रैगुण्य इत्यत्र रजस्तमसोरेव विवक्षेति सङ्कोचमहिम्ना नित्यसत्वस्थ इत्युक्तौ व्याहतिर्नास्तीत्यभिप्रैति रामानुजाचार्यः ॥ निस्त्रैगुण्यो भव निष्कामो भव इति कामपरत्वेन शङ्कराचार्येण ॥

(निर्द्वन्द्व इति । "द्वन्द्वे नामरूपे ॥ सर्वत्र तयोर्ग्रहणान्निर्गतो भव ॥ नामरूपयोर्ग्रहणं मा कुर्वित्यर्थः" इति शङ्करानन्दः)॥ इदं क्लिष्टं ॥ कर्मयोगोपदेशे कर्मसंन्यासोपदेशस्य वा नामरूपाग्रहणपूर्वकाद्वैततूष्णींभावोपदेशस्य वा अनौचित्यात् ॥ वस्तुतस्तु यथा दुःखमनुपादेयं तथा वैषयिकसुखमप्यनुपादेयं इति योगबीजमेव विवक्षितम् ॥

निर्योगक्षेमः इति । अनेन चित्तविक्षेपकारिपरिग्रहमात्रस्य निषेधः इति मधुसूदनीये ॥ योगक्षेमाख्यं द्वयमपि प्रारब्धकर्माधीनं इति ततो निर्गतो भवेत्याशयमाह नीलकण्ठः ॥ "स्थितस्यैव देहस्याहिकण्टकादिभ्यः तात्पर्येण पालनं क्षेमः, तस्यानुकूलद्रव्यसाधनं योगः, तदुभयस्यापि प्रारब्धाधीनत्वात्स्वदृष्टया देहाभावाच्च अधिष्ठानज्ञानबलेन तयोर्निर्गमं कृत्वा निर्योगक्षेमो भव" इति शङ्करानन्दव्याख्या ॥ स्वस्यातिप्रेमास्पदं जगन्मिथ्यात्वं येन केनापि प्रकारेण पद्ये प्रवेश्यं इति सङ्कल्पानुगुणं व्याख्यानमेतत् ॥

(योगक्षेमपदाभ्यामप्राप्तप्राप्तसर्वविषयकव्यापारनिषेधे गमनागमनोत्थानादिसर्वव्यापारायोगात् शरीरयात्रापि नसेत्स्यति ॥ युद्धं कुरु कर्मयोगमातिष्ठोत्तिष्ठेत्यादिविधयोऽनुपपन्ना भवेयुः ॥ तस्मादात्मस्वरूपतत्प्राप्त्युपायबहिर्भूतानामर्थानां योगक्षेमं परित्यजेत्याशयं रामानुजाचार्य आह )॥ शास्त्रविरुद्धयोगक्षेमहीनो भवेति श्रीमध्वः ॥

आत्मवान् इति ॥ आत्मशब्दस्यानेकानर्थानाहुर्नैघण्टुकाः ॥ शाङ्करास्तावन्मनोवाचकत्वं स्वीकृत्य आत्मवान् अप्रमत्तः निश्चलचित्तः इति व्याकुर्वते )॥ आत्मवान् भव आत्मान्वेषणपरो भवेति रामानुजाचार्यः )॥ (आत्मा ब्रह्माकारा बुद्धिः सदा सैवास्यास्तीति आत्मवान्, यद्वा अहंबुद्धेर्विषय आत्मैव सदास्तु न कचित्प्रमादेनाप्यनात्मेति शङ्करानन्दः )॥ परमात्मा

स्वामीति ज्ञानमात्मवत्त्वं इति श्रीमध्वः ॥ इममर्थं मधुसूदनोऽप्यनुसरति ॥ "आत्मा परमात्मा ध्येयत्वेन योगक्षेमादिनिर्वाहकत्वेन च वर्तते यस्य सः)। सर्वकामनापरित्यागेन परमेश्वरमाराधयतो मम स एव देहयात्रामात्रमपेक्षितं संपादयिष्यतीति निश्चित्य निश्चिन्तो भव" इति तद्वाक्यं)।

(एतच्छ्लोकव्याख्यानावसरे वेङ्कटनाथः श्रीमध्वाचार्यव्याख्यानं सरोषं प्रत्याख्यातुमुद्यम्य श्रीमध्वनिन्दयोपसंहृतवान्)( विषं यापयन्ति अपगमयन्ति इति विषयाः इति गीतातात्पर्यगतं व्याख्यानमवलोक्य जातामर्षोऽभूदिति ज्ञायते ॥ अस्य विग्रहस्य मूलभूतं तात्पर्योदाहृतं प्रमाणवचनं चावलोक्य पुनरतिक्रोधपरवशो बभूवेति भाति ॥ इमां व्युत्पत्तिमेव पुरस्कृत्य खंडनद्वाराऽस्मान्निन्दितुमवकाशो नाभूदिति प्रतीयते॥ अतः कैमुत्यव्याजेन वृकमेषाभाणकमनुसृत्य 'वसन्ते वसन्ते ज्योतिषा यजेत' इतिवाक्यव्याख्यानं न्यायसुधास्थं स्थालीपुलाकन्यायेनोदाहृत्य हीहीकृतवान् ॥ स्यान्नामानेन श्रुतं यदस्मदीयैः क्वचिदुक्तं परकीयमिथ्यात्ववादमुद्दिश्य "बिभेत्यल्पश्रुताद्वेदो मामयं प्रचलिष्यति" इति ॥ तदेव स्मृत्वा प्रतीक्षितप्रतीकारसमयः श्रीमध्वहस्तप्राप्तयोः श्रुतिगीतयोः प्रारब्धमनुशोचतिस्म ॥ ततस्तावत् गीतातात्पर्योदाहृतप्रमाणं दृष्ट्वा आश्चर्यमाविष्करोति ॥ पुनरात्मानं समाश्वास्य आश्चर्यं स्तभ्नाति ॥ एवमादिभावप्रकटनस्यावसरस्तु न ज्ञायते ॥ आस्तां वेदव्याकुलीकरणगीताव्याकुलीकरणप्रारब्धानुशोचनादिपामरमनोरंजकं नटनं॥ वस्तुतः अस्मिन् वाग्विलासे को दोषः श्रीमध्वव्याख्याने प्रदर्शित इति चिन्त्यताम् ॥

(अयं पृच्छति ॥ कथं नाम प्रतिवसन्तं यागानुष्ठानं केवलभ्रममात्रमिति वैदिको ब्रूयात् इति ॥ अयं प्रश्नो भ्रममूलः ॥ यागानुष्ठानं वेदेषु न विहितमेवेति को ब्रूते ॥ क्रियाकारकयोजनाप्राप्तमर्थं भ्रमं श्रीमध्वः कुत्राह ॥

वसन्तादिशब्दानां ऋत्वाद्यर्थकत्वं को निषेधति ॥ 'कल्पनोपदेशादि'ति सूत्रोक्तदिशा मुख्यवृत्त्या कर्मादिपरत्वमुपेत्यैव परममुख्यवृत्या वैदिकसर्वशब्दानां भगवत्परतया समन्वये कृते अभिप्रायमजानानो वा हीहीकरणावसरे बुद्धिपूर्वकाच्छादनेन वा वैदिकानां वैदिकं अवैदिकत्वेन परिहसति ॥ एकमप्यक्षरं मिथ्यात्वेन नास्मदाचार्यो ब्रूयात् ॥ इयं वेदावज्ञा वेदोक्तसकलमिथ्यात्ववादिमायावादिभिरेवादृता नैवास्माभिरनुसृता ॥

पुनरयं पृच्छति ॥ कथं वा निस्त्रैगुण्यो भवेति प्रतीयमानकर्मकाण्डार्थपरित्यागमुपदिशता भगवता कर्मण्येवाधिकारस्ते इति पुनः कर्म कर्तव्यतयोपदिष्टं इति ॥ वेदे कर्मविधानं न कृतं इति को ब्रूते ॥ आपाततः प्रतीयमानां कामनां परित्यजेति हि निस्त्रैगुण्यो भवेत्यनेनोपदिष्टं ॥ परममुख्यार्थो भगवानेव तमाश्रय इत्युपदेशः कर्मानुष्ठानोपदेशेन कथं विरुद्धः ॥ भगवत्पूजात्वेन न तु नश्वरफलार्थं कर्म कर्तव्यं इति पौनःपुन्येन श्रीमदाचार्यो दर्शयति ॥ वर्णाश्रमधर्मकर्मणां वेदा एवहि नश्शरणं ॥ यदि नित्यनैमित्तिकादिकं नाङ्गीकुर्मस्तर्हि वेदापौरुषेयत्वं स्थापयित्वा वेदस्य निखिलधर्ममूलत्वेन निरतिशयप्रामाण्यस्वीकारे किं निमित्तं प्रयोजनं वा ॥ "वेदोऽखिलो धर्ममूलं" इति प्रकृतश्लोकभाष्य एवोदाहृतं पश्यत ॥

(यत्तु "माठरकौरव्यमाण्डव्यभाल्लवेयादिश्रुतीः ब्रह्मतन्त्रपुरुषोत्तमतन्त्रब्रह्मतर्कादिस्मृतीश्च क्वचिदपि प्रसिद्धस्मृतीतिहासपुराणेष्वनाघ्रातनामगन्धास्त्वत्सयूथ्यैरामानुजादिभिः क्वचिदप्यनुदाहृताः कल्पयतो विषयोदपानव्याख्यावचनकल्पनस्यानाश्चर्यत्वात्" इति दूषितं। तदाग्रहमूलं॥ आधुनिका एव केचिदनवलोकनकलुषिताः प्राचीनपुस्तकानभिज्ञाः दुराग्रहेणैवं दूषयन्ति॥ विद्यारण्यादयस्तु प्राचीनाः नैवं सर्वदर्शनसंग्रहादौ श्रीमध्वोदाहृतश्रुतिस्मृतिसद्भावे विप्रतिपद्यन्ते ॥ नायं वेंकटनाथस्सर्वज्ञः इत्यलं निन्दाप्रतिवचन-

प्रपंचन ॥ श्रीमध्वोक्तं 'विषय' शब्दव्याख्यानं विहाय निस्त्रैगुण्यशब्दार्थं च हीहीकृत्यात्र व्याख्याना कथंकारं परमोत्कृष्टं निर्दुष्टं अर्थमाहत्यवलोकने तु अद्वैतावलम्ब्यपि अत्र शङ्कराचार्यभाष्यं उल्लंघ्य स्वयूथ्यान मधुसूदनादीनवगणय्य रामानुजभाष्यवाक्यानि पठितवानिति दृश्यते ॥ त्रैगुण्यशब्देन गुणत्रयप्रचुरान पुरुषान् जग्राह ॥ निस्त्रैगुण्यशब्दः रजस्तमोमात्रपर इति संकोचश्चाश्रितवान ॥ विषयशब्दस्याधिकारिपरत्वे प्रमाण नोक्तं ॥ युक्तिर्वा न लिखिता ॥ राजसतामसाधिकारिककामनाविधात्री श्रुतिः सात्विकैरनुपादेयेति वदता वैदिकशिरोमणित्वं कथं नाम सेत्स्यति ॥ अस्तु तावद्रामानुजाचार्यार्थे सामंजस्यभ्रमेण पक्षपातः ॥ रामानुजभाष्यपंक्तीरीषदपि व्यत्यासवैधुर्येण लिखता शब्दचौर्यं कुर्वतानेन "इदं रामानुजवाक्य" इति गन्धमात्रं नाविष्कृतं नापि तस्य कृतज्ञता प्रथिता ॥ किंतु स्वबुद्धिस्फुरितमर्थजातमेव स्वरचितैः स्वतन्त्रवाक्यैरुपपादितमित्यज्ञभ्रान्तिं च जनयति ॥ आर्जवं ॥

**यावानर्थ उदपाने सर्वतस्संप्लुतोदके ।**
**तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ४६॥**

वि० ॥ ननु यामिमामितित्रयेण काम्यकर्मिणां समाध्यभावेन ज्ञानाभावान्न मोक्षः इति निन्दां कृत्वा निस्त्रैगुण्यो भवेति काम्यकर्मत्यागेन योगानुष्ठाननियम उक्तः ॥ स त्वयुक्तः ॥ ज्ञानफलं कर्मिणामिव कर्मिफलं स्वर्गादिकं ज्ञानिनां नास्तीति ज्ञानकर्ममार्गयोः साम्यादित्यत आह ॥ यावा-

निति ॥ सामर्थ्याद्यथैवंपदयोरध्याहारः ॥ यावान् तावा-
नित्यनयोरावृत्तिः ॥ अयमर्थः ॥ यथा यावानर्थः प्रयोजनं
उदपाने उदकं पीयते अस्मिन्निति व्युत्पत्त्या कूपे भवति ॥
तावान् स्नानपानादिरूपोऽर्थः सर्वतः संप्लुतोदके महा-
समुद्रेऽन्तर्भवति ॥ एवं सर्वेषु वेदेषु सर्ववेदोक्तकाम्य-
कर्मिणां यावानर्थः स्वर्गादिरूपं फलं तावानर्थः तावत्फलं
विजानतः परोक्षतो भगवन्तं जानतः ब्राह्मणस्य ब्रह्मापरोक्ष-
ज्ञानिनः भवत्येवेत्यर्थः ॥ ज्ञानिकर्मिणोरन्योन्यफलाभावेऽपि
ज्ञानिफलं महासमुद्रोदकमिव महत् ॥ कर्मिफलं तु कूपो-
दकमिवात्यल्पं । अतः कुतस्तयोस्साम्यं ॥ तथाचाल्पास्थिर-
फलककर्मनिन्दया महानन्तफलज्ञानसाधने योगे प्रेरणं पूर्व-
श्लोकोक्तं युक्तमिति भावः ॥ अत्र विजानत इति परोक्ष-
ज्ञानस्य ब्राह्मणपदोक्तापरोक्षज्ञानस्य च हेतुहेतुमद्भावेन
द्वयोरुक्तिः पूर्वत्र स्वामित्वेन हरिस्मरणस्य योगशब्दित-
ज्ञानोपायत्वप्रकटनाय ॥ स्वरूपकथनमिति टीकोक्तिस्त्व-
भ्युपगमवादेनेति ज्ञेयं ॥ यद्वा पूर्वत्र निस्त्रैगुण्यो भवेति
स्वर्गादिक्षयिष्णुफलककाम्यकर्मरूपे आपाततः प्रतीते वेदार्थे
भ्रान्तिं माकार्षीरित्युक्तकाम्यकर्मनिवृत्तौ त्रैगुण्यविषहारि-
वेदाश्रयणं कार्यमित्युक्तेऽर्थे वेदतात्पर्यार्थं निवृत्तकर्माराध्यं
विष्णुं सम्यग्जानतोऽतिशयितफलावाप्तिरूपयुक्तिमाह ॥
यावानिति ॥ सर्वतः संप्लुतोदके प्रकृत्यात्मके महाप्रलयो-

दके ॥ अधिकरणसप्तमी तत्र स्थितइत्यर्थः ॥ उद्... परमात्मनि ॥ उत्, उद्रेकात् अपः पालकराहित्यात्, अनः चेष्टकत्वाद्धेतोः उच्छ्वासावपश्वानश्चेत्युदपानः ॥ तस्मिन् प्रलये अत्युद्रिक्तगुणतया पालकवर्जिततया कालादिचेष्टकतया स्थिते हरौ प्रसन्ने सति यावानर्थः धर्ममोक्षादिर्भवति तावान्सर्वेषु वेदेषु विजानतो विशेषज्ञस्य, कर्माणि भगवज्ज्ञानार्थानि ॥ भगवानेव वेदमुख्यार्थः, स्वर्गादिफलश्रवणं रुच्यर्थमित्यादि जानतो ब्राह्मणस्य तावानर्थो भवति ॥ अतः प्रतीतार्थे त्रैगुण्ये भ्रान्तिं माकार्षीरिति ॥

शं० ॥ सर्ववेदोक्तेषु कर्मसु यान्युक्तानि अनन्तानि फलानि तानि नापेक्ष्यन्ते चेत् किमर्थं तानि ईश्वरायेत्यनुष्ठीयन्ते इति ॥ उच्यते शृणु ॥ यावानिति ॥ यथा लोके कूपतटाकाद्यनेकस्मिन्नुदपाने परिच्छिन्नोदके यावान् यावत्परिमाणः स्नानपानादिरर्थः फलं प्रयोजनं स सर्वः अर्थः सर्वतस्संप्लुतोदके यः अर्थः तावानेव संपद्यते तत्र अन्तर्भवति इत्यर्थः ॥ एवं तावान् तावत्परिमाणएव संपद्यते सर्वेषु वेदेषु वेदोक्तेषु कर्मसु यः अर्थः यत्कर्मफलं सः अर्थः ब्राह्मणस्य संन्यासिनः परमार्थतत्वं विजानतः यः अर्थः यद्विज्ञानफलं सर्वतस्संप्लुतोदकस्थानीयं तस्मिन् तावानेव संपद्यते ॥ "यथा कृताय विजितायाधरेयाः संयंत्येवमेनं सर्वं तदभिसमेति यत्किञ्चित्प्रजाः साधुकुर्वन्ति यस्तद्वेद

यत्स वेद" इति श्रुतेः ॥ 'सर्वं कर्माखिलमि' ति च वक्ष्यति ॥ तस्मात्प्राक् ज्ञाननिष्ठाधिकारप्राप्तेः कर्मणि अधिकृतेन कूपतटाकाद्यर्थस्थानीयमपि कर्म कर्तव्यं ॥

रा० ॥ न च वेदोदितं सर्वं सर्वस्योपादेयं ॥ यथा सर्वार्थपरिकल्पिते सर्वतस्संप्लुतोदके उदपाने पिपासोर्यावानर्थः यावदेव प्रयोजनं तावदेव तेनोपादीयते न सर्वं एवं सर्वेषु च वेदेषु ब्राह्मणस्य विजानतः वैदिकस्य मुमुक्षोः यदेव मोक्षसाधनं तदेवोपादेयं नान्यत् ॥

विचारः

('यथा' 'तथा' 'यावान्' 'तावान्' 'अर्थः' 'भवति' इति पदानां अध्याहारेण पूर्णोऽयं श्लोकः ॥ यथा यावानर्थः उदपाने भवति तावानर्थः सर्वतस्संप्लुतोदके भवति ॥ तथा यावानर्थस्सर्वेषु वेदेषु भवति तावानर्थो विजानतो ब्राह्मणस्य भवति इति योजना ॥ वेदेष्वित्यत्र कामिनः काम्यफलावहा वेदाः विवक्षिताः उदपानाख्यालपजलाशयैरुपमिताः ॥ त एव सर्वे वेदाः ईश्वराराधनबुद्धिपूर्वकं निष्कामनया सेविताः समुद्रस्थानीया उच्यन्ते ॥ काम्यफलं स्वर्गादि उदपानफलेनोपमितं ॥ कर्मयोगलभ्यज्ञानफलं (मोक्षः) समुद्रफलेनोपमितं ॥ दृष्टान्तशरीरे उदपानसमुद्रप्रयोजनयोर्यावान् तावान् इति पदाभ्यां यत्परिमाणैक्यरूपं साम्यं प्रतीयते तथा दार्ष्टान्तिकेऽपि काम्यफलमोक्षयोश्च साम्यं तदन्तर्भावाभिप्रायेणैव नतु प्रकारान्तरेणेति ज्ञातव्यं ॥ अन्यथा वाप्यादेः समुद्रसाम्यस्यानौचित्यात् ॥ स्वर्गादेरल्पास्थिरसुखरूपस्य महानन्दरूपमोक्षतुल्यत्वायोगात् ॥ 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतिमुदाहृत्य ब्रह्मानन्दे क्षुद्रानन्दानामन्त-

भाववविवक्षया प्रायशस्सर्वे शाङ्करा व्याचख्युः ॥ शते पंचाशन्न्यायेन 'सर्व पदं हस्तिपदे निमग्नं' इति न्यायेन वा उपपत्तिरिति शङ्करानन्दो दर्शयति ॥

(केचिदध्याहारबाहुल्यभीरवस्तत्संकोचाय यतमाना अन्यथा व्याकुर्वते ॥ तथाहि रामानुजाचार्यः ॥ पश्यन्तु उपरि लिखितं रामानुजभाष्यं ॥ तदनुसरति नीलकण्ठः ॥ तथाहि ॥ "नन्वात्मवत्त्वं चित्तशुद्धौ सत्यामेव भवति ॥ साच सकलवेदोक्तकर्मानुष्ठानसाध्या ॥ अतो निस्त्रैगुण्यत्वं दुर्लभं इत्यत आह) यावानिति। सर्वतस्संप्लुतोदके महति उदपाने जलाशये पुरुषस्य यावानर्थः यावत्स्नानपानादिकं प्रयोजनं घटमात्रनिर्वर्त्यं भवति न कृत्स्नजलाशयनिर्वर्त्यं तावानेवार्थो विजानतः व्युत्पन्नचित्तस्य ब्राह्मणस्य ब्रह्मबुभूषोः सर्वेषु वेदेषु वेदैकदेशोपनिषच्छ्रवणमात्रनिर्वर्त्यो भवति ॥ न कृत्स्नवेदार्थानुष्ठानं स्वसिद्ध्यर्थमपेक्षते ॥ एकेन जन्मना कृत्स्नवेदार्थानुष्ठानासंभवात् ऐहिकेन जन्मान्तरीयेण वा जपादिना चित्तशुद्धौ सत्यामुपनिषच्छ्रवणान्निस्त्रैगुण्यता संभवतीति भावः" इति व्याख्याय शङ्करभाष्योक्तं व्याख्यानं लिखित्वा 'अस्मिन् पक्षे अनेकस्मिन् यथा तथा भवतीति पदचतुष्टयाध्याहारः यावान् तावान् पदयोरनुषङ्गश्च दार्ष्टान्तिके द्रष्टव्यः' इति स्वाचार्यव्याख्याने अस्वारस्यं च प्रदर्शितवान् ॥ एवमेव वेङ्कटनाथः ॥ अयं तु व्याख्यानद्वयमप्यनुगृह्णाति रामानुजीयं शाङ्करंच ॥ उदपानशब्दस्य यच्छ्रीमध्वेन विष्णुपरत्वमुक्तं पक्षान्तरव्याख्याने तत्रैवास्य क्रोधः ॥

(यदुक्तं रामानुजभाष्ये न वेदोदितं सर्व सर्वस्योपादेय इति तच्चिन्त्यं ॥ यद्यपि देशिक उपपादयति । "वेदोदितमपि न मोक्षसाधनव्यतिरिक्तमुपादेयं । अनधिकृतत्वात् ॥ नह्यन्यवर्णाश्रमान्यफलकामुकादिधर्मोऽन्यस्योपादेय." इति ॥ एवं नीलकण्ठोऽपि क्षिप्रं निस्त्रैगुण्यत्वसंपादनार्थं उपनिषन्मात्रेणालं इत्याह ॥ तथापि अत्र वैदिकास्तावत् कथं नाम वेदान् भागशोऽपि परित्यजे-

युरिति संकटस्य न सम्यगुत्तरं दृश्यते ॥ नहि मुमुक्षोस्सर्ववेदोक्तेषु सर्वकर्मस्वनधिकारः ॥ फलाभिसन्ध्यनभिसन्धिपूर्वकत्वस्यैवामुमुक्षुमुमुक्षुवैचित्र्यापादकत्वमुचितं भाति ॥ शक्तस्य सर्वत्राधिकारः ॥ अशक्तौ तु नेति विवेकः ॥

"सर्वकर्मकृतौ यस्मादशक्तास्सर्वजंतवः ।
शाखाभेदं कर्मभेदं व्यासस्तस्मादचीक्लपत्" ॥ इत्युक्तेः ॥

(यद्यपि यत्कर्मसमुच्चितं ज्ञानं मोक्षसाधनं तत्कर्मपर एव वेदभागोऽधिगन्तव्यः नतु समस्तवेदाभ्यासेनायुस्समापनीयं इति रामानुजाशयो लौकिकमौकर्यमनुसरति ॥ तथापि मोक्षस्य समुच्चयसाध्यत्वं "सहि धर्मः सुपर्याप्तः" इत्यादिपूर्वभाष्योक्तन्यायेन निरस्त ॥ "अपरोक्षेशदृष्टिस्तु मुक्तौ किंचिन्न मार्गतः" इति वक्ष्यमाणन्यायेन निरस्यते च ॥ "एतान्यपि तु कर्माणि संगं त्यक्त्वा फलानि च ॥ कर्तव्यानीति मे पार्थ" इत्यादिवक्ष्यमाणन्यायेन गीतायामेव कर्मसंकोचो निरस्तः )॥

ब्राह्मणशब्देन संन्यास्युच्यते इति व्याकुर्वता शङ्कराचार्येण अस्य श्लोकस्य कर्ममात्रत्यागे तात्पर्यमभिप्रेयतइत्यवगम्यते ॥ इदं व्याख्यानं गीतायामेव ज्ञानिनमर्जुनं प्रति तस्माद्युध्यस्वेत्याद्युक्तन्यायेन कर्मण्येवाधिकारस्ते तस्मात्कर्म समाचरेत्यादिवक्ष्यमाणन्यायेन च निरस्तं )॥

(अयमत्र भावसंक्षेपः ॥ वेदेष्वनुपयुक्तभागस्य त्यागः कर्तव्य इति रामानुजाचार्यः ॥ ज्ञानिभिस्सपूर्ण वेदास्त्याज्या इति शाङ्कराः ॥ कृत्स्नस्यापि वेदस्योपादेयत्वमेव । न कस्यापि त्याज्यत्वं उचितं । त्यागस्तु फलकामनामात्रस्य । यतो न क्वापि वेदभागे कामनाविधिर्दृश्यते अतस्सर्ववेदोक्तकर्मणां निष्कामनयाऽनुष्ठानमेव वैष्णवधर्म इति श्रीमध्वः ॥

(विजानतो ब्राह्मणस्येत्यत्र किञ्चिद्दौर्घट्यं दृश्यते ॥ विशेषणविशेष्यभावे अज्ञानिब्राह्मणव्यावृत्तिः प्रतीयते ॥ ब्राह्मणस्येत्यन्यवर्णव्यावृत्तिश्च

बोध्यते ॥ एतद्भ्रमव्युदासाय भाष्यकाराअन्यथा व्याकुर्वते ॥ ब्राह्मणशब्द-स्संन्यासिपरः ॥ विजानत इति परमार्थतत्वज्ञान्यद्वैतसाक्षात्कारवान् विवक्षित इति शाङ्कराणामाशयः )( तस्यैव हि कर्मत्यागो विहितस्तद्राद्धान्ते नत्वज्ञानिसंन्यासिनः ॥ ब्राह्मणस्येत्यनेनान्यवर्णव्यावृत्तिर्नविवक्षितेत्यविवादं गम्यते ॥ उपदिष्टार्थे त्रैवर्णिकानामधिकारात् ॥ अन्यथा क्षत्रियमर्जुनमुद्दिश्यैतदुपदेशायोगात् )( ब्रह्म अणतीति निरुक्त्या ब्राह्मणो वैदिकः इति देशिकः ॥ ब्रह्मशब्दो वेदपरः 'शकन्ध्वादिषु पररूप वक्तव्यं' इति पररूपे कृते प्रज्ञादित्वादण्प्रत्यये रूपनिष्पत्ति वदति ॥ तथाच ब्राह्मणो वैदिक इति यावत् ॥ विजानत इत्यनेन मुमुक्षुरुच्यते यो वैदिको मुमुक्षुरसावेव वेदसारमात्रनिषेवया कर्मसंकोचेन क्षिप्रमुत्तीर्णो भवतीति तदाशयः ॥ विजानत इत्येतत् ब्राह्मणं विशिनष्टीति शंकररामानुजयोर्व्याख्यानं )। (श्रीमध्वस्तु (प्रसादद्वारा) मोक्षस्य साक्षात्साधनमपरोक्षज्ञानं परम्परा साधनं परोक्षज्ञानं इति बोधनाय ब्राह्मणस्य विजानत इति द्वयस्य क्रमादुक्तिरित्यभिप्रैति ॥ ब्रह्म अणतीति व्युत्पत्त्या ब्राह्मणशब्देन परब्रह्मापरोक्षज्ञान्युच्यते ॥ सवर्णदीर्घे ब्रह्माण इति स्यादिति न शंकनीयं ॥ निरुक्तत्वाध्ह्रस्वदीर्घविपर्ययो द्रष्टव्यः ॥ "वर्णागमो वर्णविपर्ययश्च तथापरौ वर्णविकारनाशौ ॥ धातोस्तदर्थातिशयेन योगस्तदुच्यते पंचविधं निरुक्तं" इति ॥ "भवेद्वर्णागमाद्धंसस्सिंहो वर्णविपर्ययात् ॥ गूडोत्मा वर्णविकृतेर्वर्णनाशात्पृषोदरं" इत्युदाहरणानि ॥

(परोक्षापरोक्षोभयविवक्षायां प्रयोजनं तु परोक्षज्ञानद्वारा अपरोक्षज्ञानं भवतीति स्वरूपकथनमिति प्रमेयदीपिकायां ॥ "इयमुक्तिरभ्युपगमवादेन । वस्तुतस्तु पूर्वत्र स्वामित्वेन हरिस्मरणस्य योगशब्दितज्ञानोपायत्वप्रकटनाय" इति विवृत्याचार्यो मन्यते ॥

(विवृत्याचार्येण यद्वेत्याश्रितं पक्षान्तरं व्याख्यानं गीतातात्पर्योक्तं यावानित्याद्यध्याहारबाहुल्यभीरूणां किंचित्तर्पकं स्यात् ॥ अत्र सर्वतस्संप्लुतो-

दकं प्रलयजलं ॥ उदपानं परमात्मा विष्णुः । तथैव तात्पर्योदाहृतानि प्रमाणानि ॥ ( "उद्रेकात्पालराहित्यादनत्वाच्चाखिलस्य च । प्रलयेऽप्युदपानोऽसौ भगवान्हरिरीश्वरः । प्रकृतिर्बुदरूपेण सर्वमावृत्य तिष्ठति । प्रलयेऽतो लयं प्राहुः सर्वतः संप्लुतोदकं" इति ॥ "यावत्प्रयोजनं विष्णोस्सकाशात्साधकस्य च । धर्ममोक्षादिकं तावत् सर्ववेदविदो भवेत् ॥ वेदार्थनिर्णयो यस्माद्विष्णोर्ज्ञानं प्रकीर्तितं । ज्ञानात्प्रसन्नश्च हरियैतोऽखिलफलप्रदः" इति च )॥

**कर्मण्येवाऽधिकारस्ते मा फलेषु कदाचन ।**
**मा कर्मफलहेतुर्भूः मा ते संगोऽस्त्वकर्मणि॥४७**

वि० ॥ ननु सकामनया कर्म कुर्वतां यामिमादित्यादिनोक्ता निन्दा न युक्ता स्वर्गकामो यजेतेत्यादौ कामनाया अपि विधानात् । न हि विहितकृतां निन्दा युक्ता न च यागकामनयोर्द्वयोरपि विधौ वाक्यभेदः ॥ स्वर्गकामनाविशिष्टयागविध्यभ्युपगमादित्यत आह ॥ कर्मण्येवेति ॥ अत्र त इति ज्ञानिभूतसर्ववर्णाश्रमोपलक्षणं ॥ फलेष्विति पदं फलकामोपलक्षणं ॥ अयमर्थः ॥ हे पार्थ ते तव त्वादृशस्यान्यस्य ज्ञानिनोऽपि कर्मण्येवाधिकारो योग्यता ॥ फलेषु स्वर्गादिफलकामनासु मा नाधिकारः ॥ अतः कर्मैव कार्यं विधिविषय इति यावत् ॥ न तु कामना कार्या ॥ कुतः कुर्वन्नेवेति श्रुतौ एवं त्वयीत्युत्तरार्धे

त्यवायइव कामनाया अकरणे प्रत्यवायाश्रवणात् ॥ तथाच कामनानुवादेन यागविधिरेवायं ॥ न तु विशिष्टविधिरिति भावः ॥ अतः कामनायाः विध्यविषयत्वात् कर्मकृतौ फलं हेतुर्यस्य स कर्मफलहेतुः माभूरित्यर्थः ॥ शाकपार्थवादिवत् कृतिपदलोपोऽत्र ध्येयः ॥ तर्हि स्वयं क्लेशरूपत्वात् कर्म न कार्यं इत्यत आह ॥ मा तइति ॥ ते तव त्वादृशस्य सर्वस्यापि ज्ञानिनः अकर्मणि कर्माकरणे संगः स्नेहः माभूत् ॥ स्वर्गादिरूपाल्पास्थिरफलाभावेऽपि अनल्प-स्थिरमोक्षरूपमहापुमर्थहेतुभगवज्ज्ञानभक्तिप्रसादानां भावा-त्तत्कामनया कर्मकरणोपपत्तेर्ज्ञानभक्त्यादिकामनायाश्च नि-न्दाभावात् प्रत्युत 'वृणीमहे ते परितोषणाये'त्यादिना चतुर्थस्कन्धे प्रचेतसां महतामाचाराच्च ॥ तथाच सूत्रं ॥ "बहिस्तूभयथापि स्मृतेराचाराच्च" इति । नच ज्ञानिनः "अनियमःसर्वेषां" इत्युक्तदिशा मोक्षस्य सिद्धतया किं कर्मकरणेन साध्यमिति चेन्न ॥ ज्ञाने मोक्षेचातिशयार्थत्वात् ॥ यथोक्तं "भावं तु बादरायणोऽस्ति हि" इति ॥

यद्वा पूर्वमात्मवानित्यनेनैक्यभावनं न कार्यमित्युक्तं ॥ तत्कुत इत्यतो जीवब्रह्मैक्यस्यैवाभावादित्यैक्याभावरूपं हेतुमाह ॥ कर्मण्येवेति ॥ तइत्युपलक्षणं ॥ त्वदादिसर्व-जीवानां कर्मण्येवाधिकारः कर्मसंपादनएव सामर्थ्यमित्यर्थः ॥ एवकारव्यवच्छेद्यमाह ॥ माफलेष्विति ॥ फलेषु कदाचनाधि-

कारा नास्ति फलसंपादने सामर्थ्यं नास्ति ॥ किंत्वीश्वर-एव फलदाने समर्थ इति भावः ॥ तदाह सूत्रे "ओं फल-मतउपपत्तेः" इति ॥ एवं च फलसंपादने शक्तत्वाशक्त-त्वाभ्यां सर्वजीवानां ईश्वरेणैक्याभावादिति युक्तिरुक्ता [illegible] ॥ [illegible]फलहेतुर्भूरिति ॥ उक्त-दिशा कर्मफलहेतुरीश्वरः मनसा स माभूः ॥ तदैक्यभावना नकार्येति यावत्॥मिथ्योपासनायाः "ओं न प्रतीकेन हि सः" इति व्याससूत्रे "अचेतनासत्यायोग्यान्यनुपास्यान्यफलत्व-विपर्ययाभ्यां" इति साङ्कर्षणसूत्रे च निषेधात् ॥ तर्हि सत्वस्थ इत्युक्तदिशा नित्यं स्वामित्वेन हरिस्मृत्यैवालं किं-कर्मकरणेनेत्यत आह ॥ मातइति ॥ त्वदादेः सर्वस्य अ-कर्मणि कर्माकरणे सङ्गः स्नेहः माभूत् ॥ तदकरणे प्रत्य-वायश्रवणादिति भावः ॥

शा० ॥ तवच ॥ कर्मणि इति ॥ कर्मण्येवाधिकारः न ज्ञाननिष्ठायां ते तव ॥ तत्रच कर्म कुर्वतः माफलेष्वधिकारः अस्तु, कर्मफलतृष्णा माभूत् । कदाचन कस्याञ्चिदवस्थायां इत्यर्थः ॥ यदा कर्मफले तृष्णा ते स्यात् तदा कर्मफलप्राप्तेः हेतुः स्याः ॥ एवं माकर्मफलहेतुर्भूः यदा हि कर्मफलतृष्णा-प्रयुक्तः कर्मणि प्रवर्तते तदा कर्मफलस्यैव जन्मनः हेतुः भवेत् ॥ यदि कर्मफलं नेष्यते किं कर्मणा दुःखरूपेणेति ते तव अकर्मणि अकरणे मासङ्गोऽस्तु प्रीतिर्माभूत् ॥

रा० ॥ अतस्सत्त्वस्थस्य मुमुक्षोरेतावदेवोपादेयमित्याह ॥ नित्ये नैमित्तिके काम्ये च केनचित्फलविशेषेण संबन्धितया श्रूयमाणे कर्मणि नित्यसत्त्वस्थस्य मुमुक्षोस्ते कर्ममात्रेऽधिकारः ॥ तत्संबन्धितयाऽवगतेषु न कदाचिदप्यधिकारः ॥ सफलस्य बन्धरूपत्वात् फलरहितस्य केवलस्य मदाराधनरूपस्य मोक्षहेतुत्वाच्च मा कर्मफलयोर्हेतुर्भूः॥ त्वयाऽनुष्ठीयमानेऽपि कर्मणि नित्यसत्त्वस्थस्य मुमुक्षोस्तवाकर्तृत्वमप्यनुसन्धेयं ॥ फलस्यापि क्षुन्निवृत्त्यादेर्न त्वं हेतुरित्यनुसन्धेयं ॥ तदुभयं गुणेषु वा सर्वेश्वरे मयिवाऽनुसन्धेयमित्युत्तरत्र वक्ष्यते ॥ एवमनुसन्धाय कर्म कुरु ॥ अकर्मणि अननुष्ठाने न योत्स्यामि इति यत्त्वयाऽभिहितं न तत्र ते सङ्गोऽस्तु ॥ उक्तेन प्रकारेण युद्धादिकर्मण्येव सङ्गोऽस्त्वित्यर्थः ।

विचारः

अत्र परे अर्जुनमज्ञानिनं मन्वानाः प्रकृतश्लोकोक्तं कर्माधिकारं फलानधिकारमज्ञमात्रविषयकमाहुः ॥ ज्ञानिनः कर्माभावमुक्त्वा अज्ञानिनः कर्मोच्यते इति शाङ्कराणामाशयः ॥ ते इत्यस्य व्याख्यानावसरे "अशुद्धान्तःकरणस्य तात्त्विकज्ञानोत्पत्त्ययोग्यस्य तव" इति मधुसूदन आह ॥ "शोकमोहाविष्टत्वादिधर्मैर्विचार्यमाणे नैतल्लक्षणं (ज्ञानिलक्षणं) त्वयि दृश्यते ॥ ततस्तव कर्मण्येवाधिकारः न तु ज्ञाने नापि संन्यासे" इति शंकरानन्दव्याख्यायामुक्तं ॥ स्यादेतदेवं यद्यर्जुनस्याज्ञानित्वं तत्त्वं ॥ मैवं॥ अर्जुनो हि नरांश इन्द्रः । "विष्णोर्वीर्योरनन्तस्य त्रिभिरंशैर्नरः स्मृतः" इति प्रमाणानुसारेण तस्य महाज्ञानित्वेनैव भवितव्यं ॥ देवास्तावच्छुद्धसत्त्वाः ॥ सत्त्वं

हि ज्ञानप्रदं तदभिवर्धकं च ॥ शुद्धसत्त्वानां ज्ञानाभावेऽन्येषां ज्ञानं कथं संभावितं स्यात् । इन्द्रः प्रजापतौ ब्रह्मचर्यमुषित्वा ज्ञानमवापेति श्रुत्याऽवगम्यते ॥ तदभिन्नांशोऽर्जुनः कथं नामाज्ञानी स्यात् ॥ अथोच्येत ॥ मोहस्यार्जुने दृष्टत्वात्तत्कृतप्रश्नानामज्ञानज्ञापकत्वान्न ज्ञान्यर्जुन इति तन्न ॥ बलवद्भिः प्रारब्धकर्मभूसंबन्धमानवान्नोपभोगादिभिः ज्ञानस्य किंचिदभिभवान्मोहादीनामुपपत्तेः ॥ क्वचिदप्राप्तविशेषज्ञानप्राप्तज्ञानास्थिरीकरणाद्युद्देशेनापि ज्ञानिनोऽपि साधवः पृच्छन्तीत्यर्जुनस्य प्रश्ना अप्युपपन्नाः ॥ किंच पश्यत पार्थस्य ज्ञानिषु गणनं भागवते द्वितीयस्कन्धे ब्रह्मणा नारद प्रत्युपदेशप्रकरणे ॥

"वेदाहमंग परमस्य हि योगमायां
यूयं भवश्च भगवानथ दैत्यवर्यः ।
पत्नी मनोः सच मनुश्च तदात्मजाश्च
प्राचीनबर्हिर्ऋभुरंग उत ध्रुवश्च ॥ VII—४३ ॥

इक्ष्वाकुरैलमुचुकुन्दविदेहगाधि-
पृथ्वंबरीषसगरागयनाहुषाद्याः ।
मान्धात्रलर्कशतधन्वनरन्तिदेव-
देवव्रताबलिरमूर्तिरयोदिलीपः ॥ ४४ ॥

सौभर्युदंकशिबिदेवलपिप्पलाद्याः
सारस्वतोद्धवपराशरभूरिषेणाः ।
येऽन्ये विभीषणहनूमदुपेन्द्रदत्ताः
पार्थार्ष्टिषेणविदुरश्रुतदेवभूपाः ॥ ४५ ॥
ते वै विदन्त्यतितरन्ति च देवमायां"

इति ॥ तस्मादज्ञानिपरोऽयं श्लोक इत्याशयकथनं असंगतं ॥ अर्जुनस्य कुत्राधिकारः इति निर्णयार्थं न प्रवृत्तमिदं पद्यं ॥ संन्यासिनो

ब्रह्मानन्दस्यापरिमितत्वात्तस्य कर्माभावेन स्यामहमपि संन्यासीत्यर्जुनाकांक्षां वारयितुं नात्रोद्यमः ॥ परंतु या कामात्मनां निन्दा कृता तस्या अनुपपन्नत्वे शंकिते तां शंकां वारयितुं श्लोकस्य प्रवृत्तिः ॥ कामनायाः वेदादिविधिविषयत्वे कर्तव्यत्वमवर्जनीयं स्यात् ॥ विहिताचारस्य तु निन्दा न युक्ता इति पूर्वःपक्षः ॥ कामस्य विधिविषयत्वं कर्तव्यत्वं च निषिध्यते समाधानेन ॥ स्वर्गकामो यजेतेत्यस्य कामी यजेतेति वाक्यार्थः ॥ नतु कामीभूत्वा यजेतेति ॥ कामानुवादेन यजनं विधीयते इति यावत् ॥ प्रत्यवायभावाभावाभ्यां करणाकरणयोर्नियमनं क्रियते ॥ 'कुर्वन्नेवेह कर्माणि' इत्यादौ कर्माकरणे प्रत्यवायोऽवगम्यते ॥ कामनाऽकरणे न प्रत्यवाय उक्तः ॥ ते इत्यर्जुनसंबोधनेऽपि सर्ववर्णाश्रमोपलक्षकस्स शब्दो ज्ञेयः ॥ ते ज्ञानिनोऽपि तव कर्मण्येवाधिकारः ॥ न तु फलकामनायां ॥ किमुतान्येषां इति कैमुत्यन्यायेन सर्वेषां कामना निवार्यते ॥ उपलक्षणबीजमेवमुपपादितं प्रमेयदीपिकायां ॥ "कृतोऽपि फलकामो ज्ञानिनो नात्यन्तबाधकः ॥ तत्प्रतिबन्धनीयस्य ज्ञानस्याप्तत्वात् ॥ मोक्षस्य नियतत्वात् ॥ तथापि मोक्षविलम्बहेतुत्वात्तस्यापि न कर्तव्यः ॥ किम्वन्येषामज्ञानिनामिति प्रदर्शनायोपलक्षकपदप्रयोगः" इति ॥

मा फलेषु इत्यत्र फलशब्दोऽप्युपलक्षणेन फलकामबोधकः॥ फलानि ह्यस्वातन्त्र्येण भवन्ति ॥ कामनायामेव हि जीवस्य किंचिद्दत्तस्वातन्त्र्यमस्ति ॥ अतो मास्तु फलेष्वधिकारः इति नियोगस्य विषयः काम एव भवितुमर्हति॥ फलकामकर्तव्यतानिषेधस्यैवात्र प्राधान्यात्कर्मण्येवाधिकारः इति तदनुवादः॥ एव इत्यनेनान्ययोगव्यवच्छेदमादाय व्यवच्छेद्यान्वेषणे ज्ञाननिष्ठां संन्यासं च व्यवच्छेद्यतया शांकरा आहुः ॥ मा फलेष्विति श्लोकएव व्यवच्छेद्यस्य स्पष्टमुक्तत्वेन श्लोकानुक्तज्ञाननिष्ठापरिग्रहे गौरवं आपद्यते ॥ अतः कर्मण्यधिकारः न तु फलकामनायां इत्येव श्लोकार्थः संपद्यते ॥ अत्र भावसंग्रहः

प्रमेयदीपिकायां स्फुटमुक्तः ॥ तथाहि ॥ "स्वर्गकामो यजेतेत्यत्र विशिष्ट-विधानशंकायां नेदं विशिष्टविधानं किन्तु कामानुवादेन यजनस्यैवेति परम-साध्यमध्याहार्यं ॥ तत्कुत इत्यपेक्षायां कर्मण एव कार्यत्वात्कामस्य तदभावा-दिति वा हेतुवचनमुपस्कर्तव्यं ॥ तदपि कुत इत्यपेक्षायां कर्मण्येवाधिकारो न फलकामे इति गीतोक्तयोर्हेत्वोरुपस्थानं ॥ तदपि कुत इत्यपेक्षायां कर्मकामकरणाकरणयोः प्रत्यवायभावाभावयोर्हेत्वोरध्याहारः ॥ एतदुपपादनाय लाक्षणिकफलशब्दोपादानं" इति ॥ कण्ठोक्त्या लक्षणामनङ्गीकृत्यापि प्रायश-स्सर्वे व्याख्यातारो माफलेष्वधिकार इत्यनेन फलकामो निषिध्यते इति व्याकुर्वते। तथाहि मधुसूदनः ॥ "फलेषु माधिकारः मयेदं भोक्तव्यं इति बोधो मास्तु" इति ॥ श्रीधरः ॥ "तत्फलेषु बन्धहेतुषु अधिकारः कामो मास्तु" इति ॥ देशिकः ॥ "फलयोग्यतानिषेधात्तत्संगनिषेधोऽपि फलितः"॥ इति ॥

केचिन्निष्कामनयाऽनुष्ठेयानि नित्यनैमित्तिकान्येव न तु कामाधिकारे विहितानि ज्योतिष्टोमादीनि इति मन्यन्ते ॥ तन्न ॥ सर्वेषां वैदिककर्मणां निष्कामनयाऽनुष्ठानस्य संभवात् ॥ "निष्कामं ज्ञानपूर्वंच" इति मनुराह। ज्ञानिनां कर्माभावपक्षः "भावन्तु बादरायणोऽस्ति हि" (I 3-33) इति ब्रह्ममीमांसायां देवताधिकरणे निरस्तः ॥ प्राप्तपदानामपि देवानां सर्वविद्या-स्वधिकारसद्भावं बादरायणस्तु मन्यते इति सूत्रार्थः ॥

"यावत्सेवा परे तत्त्वे तावत्सुखविशेषता।
संभवाच्च प्रकाशस्य परमेकमृते हरिं ॥
तेषां सामर्थ्ययोगाच्च देवानामप्युपासनं।
सर्व विधीयते नित्यं सर्वयज्ञादिकर्म च" ॥ इति स्कन्दवचन-

मुदाहृतमाचार्येण ॥

"अज्ञस्य कर्म लिप्येत कृष्णोपास्तिमकुर्वतः ।
ज्ञानिनोऽपि यतो ह्रास आनन्दस्य भवेद्ध्रुव ॥
अतोऽलेपेऽपि लेपःस्यादतः कार्यैव सा सदा' ॥

इति नारदीयवचनं ईशावास्यभाष्ये उदाहृतं ॥ निष्काममनुष्ठेयत्वे का गतिः फलश्रुतीनां इत्याकांक्षायां रोचनार्थ इति समाधेयं ॥ तथाहि भा. XI 121—11 "फलश्रुतिरियं नृणां न श्रेयो रोचनं परं । श्रोतुर्विवक्षया प्रोक्तं यथा भैषज्यरोचनं ॥ फलश्रुतिं कुसुमितामवेदज्ञा वदन्ति हि । कामिनः कृपणा लुब्धाः पुष्पेषु फलबुद्धयः ॥ अग्निमुग्धा धूमतान्ताः स्वलोकं न विदन्ति ते" इति ॥ (27) नित्यानन्दहरेर्भक्तिज्ञानाद्याः स्वर्गशब्दिताः । पुत्रभार्याप्तवित्ताद्यास्सर्वे मोक्षगतं फलं ॥ उद्दिश्य स्वर्गकामस्य यजनं श्रुतिचोदितं । तदविज्ञाय पुष्पाख्यमनित्यं स्वर्गमिच्छवः ॥ यजन्ति मन्द-मतयः वेदवादपरायणाः" ॥ इति गी. ता. ॥

द्वितीयार्धेऽपि ते इत्यनेनार्जुनस्याज्ञत्वं विवक्षितमिति शांकरा मन्यन्ते ॥ तत्रापि उपलक्षणेन ज्ञान्यज्ञानिसर्वसंग्रह इति श्रीमध्वः ॥ यतः कर्मण्यधि-कारः अतःअकर्मणि ते संगो मास्त्विति संबन्धः । संगः स्नेहः ॥ अकर्मणि कर्माकरणे इति व्याख्यानं सर्वसंमतं ॥ कर्मशब्दः क्रियावाचीत्युक्तौ च न बाधकं ॥ यतः फलेषु फलकामनासु माधिकारः अतः माकर्मफलहेतुर्भूः इति संबन्धः ॥

कर्मफले हेतुर्माभूः फलतृष्णया कर्मफलोत्पादको माभूरिति शांकर-व्याख्यानं ॥ "फलकामनया हि कर्म कुर्वन् फलस्य हेतुरुत्पादको भवति । त्वं तु निष्कामस्सन् कर्मफलहेतुर्माभूः ॥ नहि निष्कामेन भगवदर्पणबुद्ध्या कृतं कर्म फलाय कल्पते" इति मधुसूदनः ॥ "कर्मफलं स्वर्गपश्वादि हेतुः कर्मसु प्रवर्तकं यस्य तादृशो माभूः" इति नीलकण्ठश्रीधरौ । बहुव्रीह्य-

पेक्षया तत्पुरुषस्य लाघवात् शंकराचार्याभिप्रेतं तत्पुरुषाश्रयणं वरमिति तद्भाष्योत्कर्षदीपिकायां सूचितं ॥ समासप्राबल्येऽपि अर्थसौष्ठवं नसिध्यति तत्पुरुषग्रहणे ॥ यतोऽतिपरतन्त्रस्य मनुजस्य कर्मफलोत्पादकत्वं विना दुर्बलोपचारेण न संभवति । बहुव्रीहिग्रहणमेवाश्रितवान् श्रीमध्वः ॥ शाकप्रियः पार्थिवः शाकपार्थिवः इतिवत् ॥ कर्मफलं तत्कृतौ हेतुर्यस्येति तत्कृतिपदलोपिसमासः ॥ यतः कर्मण्यधिकारस्ततो मा ते संगोऽस्त्वकर्मणि ॥ यतः फलेषु माधिकारः अतः फलं प्रवृत्तिहेतुर्नस्यात् इति क्रमेण हेतुद्वयस्य साध्यद्वयं निष्पन्न भवति ॥ कर्मफलहेतुरित्यत्र अन्यपदार्थप्रधानं बहुव्रीहिं विहाय कर्मफलेत्यत्र पुनरुक्तिप्रसंजकषष्ठीसमासं च तिरस्कृत्य तत्र उभयपदार्थप्रधानो द्वंद्व एवोचित इत्याह देशिकः । तथाच कर्मणश्च फलस्य च हेतुर्माभूः इत्युक्तं भवति । नात्र वस्तुतः अर्जुनादेर्हेतुत्वं निषिध्यते अपितु हेतुत्वानुसन्धानं इत्यर्थश्चोक्तः ॥ अहं कर्मणः कर्ता क्षुन्निवृत्त्यादिफलस्य चाहं हेतुरिति मुमुक्षुणा नानुसन्धेयं किंतु गुणेषु वा भगवति सर्वेश्वरे वा कर्म तथा फलं चानुसन्धेयं इति तदाशयः ॥

कर्मफलं तत्कृतौ हेतुर्यस्य स माभूः इति व्याख्यानेन कर्मफलव्यतिरिक्तस्य भक्तिज्ञानभगवत्प्रसादमोक्षादेः कर्मकरणे हेतुत्वेनोपादानमनुज्ञातं भवति ॥ भक्तिज्ञानादेरिच्छा तु युक्ता ॥ न कुत्रापि सा निषिद्धा ॥ "वृणीमहे ते परितोषणाय" । "भक्तिमन्विच्छन्तः" । इति भागवते महतां भक्तिज्ञानादीच्छा अभिहिता ॥ "अथातो ब्रह्मजिज्ञासा" इत्यत्र ज्ञानेच्छान्तर्भावेन चारलक्षकत्वात् जिज्ञासापदस्य ब्रह्मज्ञानेच्छा विहितेति सूचिता भवति ॥

"बहिस्तूभयथापि स्मृतेराचाराच्च" इति ब्र. सूत्रं III 4—43 बहिस्तु ऐश्वर्यचतुष्टयादन्यत्र ज्ञानभक्त्यादिविषये तु उभयथा आकांक्षायामनाकांक्षायामपि न पतनं । स्मृतेः। "देवर्षिगन्धर्वाणां पदाकांक्षी पतेद्ध्रुवं ॥

"अन्यत्र शुभमाकांक्षन्नपतेदविरोधतः" इति स्मृतेः। "नानात्वमेव कामानां नाकामः क्वच दृश्यते। अतोऽविरुद्धकामः स्यादकामस्तेन भण्यते॥ इत्याचाराच्च" इति श्रीमध्वभाष्ये॥ परमवैष्णवशिखामणिः श्रीमध्वः श्रीहर्युत्कर्षे सर्वागममहातात्पर्यं मन्वानः 'फलप्रदो वासुदेवोऽखिलस्य' इत्यर्थं हृदि निधाय प्रकृतश्लोकं पक्षान्तरेणापि योजयति॥ ते इत्यर्जुनादिसर्वजीवसंग्रहः। तेषां कर्मण्येवाधिकारः। फलं तु भगवदायत्तं सर्वकर्मणां॥ कर्मफलहेतुर्भगवानेव स माभूः इत्यनेन जीवब्रह्मैक्यभावं माकुर्वित्यर्थः॥ "एष उ एव शुभाशुभयोः कर्मफलैरेनं संयोजयति। न स्वयं संयुक्तो भवति। यदेनं कर्मफलैस्संयोजयाति तस्मादन्यएवासौ भगवान्वेदितव्यः"॥ इति पैङ्गिश्रुतिरुदाहृता गीतातात्पर्ये।

"फलमत उपपत्तेः" इति सूत्रं। ब्रह्मसूत्र (III 2-39)। "फलं कर्मैकजन्यत्वेनाभिमतं स्वर्गादिफलं अतश्च ईश्वरादेव भवति॥ न कर्मतः॥ उपपत्ते.॥ परमात्मनश्चेतनत्वेन फलप्रदत्वस्योपपन्नत्वात् इत्यर्थः" इति॥ अनेन माफलेष्विति भगवद्वचनं साधूक्तं भवति॥ प्रथमयोजनायां फलशब्दः फलकामोपलक्षकः॥ अत्र अस्त्वित्यध्याहारः कार्यः। माऽस्त्विति फलकामनिषेधविधिरभिप्रेतः। अद्योक्तद्वितीययोजनायां तु फलशब्दस्य शक्यार्थ एव॥ अस्तीत्यध्याहारो विवक्षितः॥ मेति न निषेधविधिः किंत्वभावमात्रबोधक॥ कदाचनेति सर्वदा जीवानां पारतन्त्र्यमवधारितं॥

अयमाशयः॥ यामिमां इत्यादिना कामनिन्दा कृता॥ 'स्वर्गकामो यजेते'ति कामःविधिः श्रूयते॥ अतो निन्दा नोचिता इति शंकायां श्रुत्यर्थभ्रममूलेयं शंकेति समाहितं॥ श्रुतौ न कुत्रापि कामो विधीयते॥ अतः कामो न कर्तव्य एव॥ कामतिरस्कारेऽपि न कर्म तिरस्करणीयं॥ कर्माकरणे प्रत्यवायप्राप्तेः इति॥

यद्वा आत्मवानित्यत्र भगवद्दास्यमुपदिष्टं ॥ ऐक्यभावनं निन्दितं च ॥ तत्कुत इत्याकांक्षायां जीवस्य कर्ममात्राधिकारित्वेनाल्पत्वात् ॥ ईश्वरस्य नि-साति फलप्रदत्वेन महत्त्वान्नतयोः कदापि साम्यं भवेदिति ॥

**योगस्थः कुरु कर्माणि संगं त्यक्त्वा धनंजय।**
**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योगउच्यते**
**॥ ४८ ॥**

वि॥ मा ते संगोऽस्त्वकमणीत्युक्तं॥ तर्हि किं कार्यमित्यत आह ॥ योगस्थ इति। योगो ज्ञानोपायः तत्र तिष्ठतीति योगस्थः ॥ ज्ञानोपायमनुतिष्ठन् सङ्गं फलस्नेहं त्यक्त्वा तत एव फलरागत्यागादेव सिद्ध्यसिद्ध्योस्समो भूत्वा कर्माणि कुरु ईश्वरप्रसत्तौ कर्माणि कुर्वित्यर्थः॥ योगस्थइत्युक्तयोगः क इत्यतः सङ्गं त्यक्त्वेत्यादिना योगशब्दार्थो व्याख्यातः। तत्र त्यागसमत्वयोः प्रत्येकं योगत्वभ्रान्तिनिरासायाह ॥ समत्वमिति ॥ सङ्गत्यागस्याप्युपलक्षणं ॥ त्यागोपेतं समत्वं योगइत्यर्थः ॥

शं ॥ यदि कर्मफलप्रयुक्तेन न कर्तव्यं कर्म कथं कर्तव्यं इति। उच्यते ॥ योगस्थः सन् कुरु कर्माणि । केवलं ईश्वरार्थं॥ तत्रापि ईश्वरो मे तुष्यतु इति सङ्गं त्यक्त्वा धनं-जय ॥ फलतृष्णाशून्येन क्रियमाणे कर्मणि सत्वशुद्धिजा

ज्ञानप्राप्तिलक्षणा सिद्धिः तद्विपर्ययजा असिद्धिः तयोः सिद्ध्यसिद्ध्योः अपि समः तुल्यः भूत्वा कुरु कर्माणि ॥ कोऽसौ योगः यत्रस्थः कुर्वित्युक्तं । इदमेव तत् । सिद्ध्यसिद्ध्योः समत्वं योग उच्यते ॥

रा० ॥ एतदेव स्फुटीकरोति राज्यबन्धुप्रभृतिषु सङ्गं त्यक्त्वा युद्धादीनि कर्माणि योगस्थः कुरु ॥ तदन्तर्भूतविजयादिसिद्ध्यसिद्ध्योस्समो भूत्वा कुरु ॥ तदिदं सिद्ध्यसिद्ध्योस्समत्वं 'योगस्थ' इत्यत्र योगशब्देनोच्यते ॥ योगसिद्ध्यसिद्ध्योस्समत्वरूपं चित्तसमाधानं ॥

विचारः

योगस्थस्सन् कर्म कुरु इति प्रथममन्वयः ॥ सङ्गं त्यक्त्वेत्यारभ्य आश्लोकान्तं योगस्थ इत्यस्य व्याख्यानमवगन्तव्यं ॥ केयं योगस्थता, को योग इति प्रश्नद्वयं संभावितं ॥ संगत्यागजन्यं सिद्ध्यसिद्ध्योस्समभवनं योगस्थतेति प्रथमस्योत्तरं ॥ समत्वं योग उच्यते, इति द्वितीयस्योत्तरं ॥ समत्वमित्यनेन संगत्यागकार्यसिद्ध्यसिद्धिसमभवनविशिष्टकर्मकरणं गृह्यते ॥ समत्वं योग इति योगैकदेशे योगशब्दप्रयोगः कृतः ॥ संगत्यागसमभवनयोर्हेतुहेतुमद्भावस्सम्बन्धः ॥ योगस्थ इत्यत्र योगशब्दस्य निवृत्तकर्मपरत्वे कर्मणि स्थितस्सन् कर्म कुर्वित्यनुचितं स्यात् ॥ अतस्स ज्ञानोपायपर इति व्याख्येयं ॥ संगराहित्यपूर्वकसमभवनविशिष्टकर्माचरणमेव ज्ञानोपायो विवक्षित इति श्लोके द्वावपि योगशब्दौ समानार्थकौ भवतः ॥

संगशब्दस्य संबन्धवाचित्वे कर्मसंबन्धबोधकत्वे वाऽसांगत्यात्फलस्नेहपरत्वमभ्युपेयं ॥ 'समदुःखसुखं धीरं' 'सुखदुःखे समे कृत्वा' इत्यत्र

यत्समत्वमभिप्रेतं तदेवेहापि सिद्ध्यसिद्ध्योस्समत्वं ग्राह्यं ॥ कर्मफलप्राप्ताव-प्राप्तौ च हर्षविषादराहित्येन उभयौदासीन्यमाश्रयणीयामिति यावत् ॥

अत्राह शंकरानन्दः ॥ "'निर्दोषं हि समं ब्रह्म" इति वक्ष्यमाणं ब्रह्मात्र समशब्देनोच्यते ॥ समस्य भावस्समत्वं ॥ तदेव ज्ञानेन युज्यते प्राप्यते इति योग उच्यते ॥ तस्मिन् योगे ब्रह्मणि स्वस्य तद्भावापत्त्यै तदेकत्वापेक्षया तिष्ठतीति योगस्थः मोक्षैककामस्सन् कर्म कुरु" इति ॥ इदं व्याख्यानं क्लिष्टं दुष्टं च ॥ प्रकृते समशब्दस्य ब्रह्मपरत्वं न घटते ॥ समो भूत्वेत्यत्र योऽर्थस्तस्य विवक्षा समत्वं इत्यत्राप्युचिता ॥ तत्र तुल्यार्थस्यौचित्येऽत्रापि स एव भवितुमर्हति ॥ द्वितीयस्य प्रथमानुवादरूपत्वात् ॥ किंच योग इति परब्रह्मग्रहणे सांख्यमेव पुनः प्रतिपादितं भवति ॥ एषा त इति कर्मयोगमारभ्य ब्रह्मत्वं योग उच्यते इत्यैक्यस्योपदेशे निमित्तं न ज्ञायते ॥ अद्वैतसाक्षात्कारस्यानधिकारिणं मत्वा तत्कृते कर्मयोगोपदेश-मारभ्य श्रीकृष्णो यावानर्थ इति श्लोकेऽर्जुनायोग्यत्वं विस्मृतवानेकवारमिव भाति ॥ पुनस्तस्याज्ञत्वं स्मृत्वा कर्मण्येवाधिकारस्ते इति कर्मोपदिदेश ॥ पुनरपि तदेव विस्मृत्य सांख्यमेव योगशब्दार्थत्वेनोपदिशतीति शंकरा-नन्दोक्तपूर्वोत्तरव्याख्यानैरवगम्यते ॥ समत्वं ब्रह्मत्वं इति विना शंकरा-नन्दं न कोऽप्यद्वैतव्याख्याता व्याचष्टे इतीदमुपेक्षणीयमेव ॥

केचित्पातंजलपक्षपातिनस्समत्वं चित्तनिरोध इत्याहुः ॥ एवं रामानु-जाचार्यस्याप्याकूतं ॥ संगशब्दार्थोपपादने बन्धुप्रभृतिषु स्नेहत्यागश्चाभिप्रेत इति रामानुजाचार्य आह ॥ यथा राज्यप्रभृतिषु संगः फलद्वारा बाधकस्तथा बन्धुप्रभृतिषु संगो युद्धाद्यननुष्ठानद्वारा बाधक इति तदुभयमपि त्याज्यत्वादत्र संगशब्देन संगृहीतमिति देशिकः ॥ इदमात्रानुसन्धेयं ॥ 'सुखदुःखे समे कृत्वे'त्यत्र संगत्याग उपदिष्टः । तदपेक्षया पौनरुक्त्यपरिहाराय वक्तव्यं, तत्र

युद्धाख्यं कर्म प्राधान्येन विवक्षितमिह तु कर्मसामान्यमिति ॥ बन्धुस्नेहपरामर्शस्य युद्धविवक्षायामेवोचितत्वात् प्रकृते संगशब्दः फलस्नेहपरो वाच्यः इति ॥

संगशब्दव्याख्यानावसरे ईश्वरो मे तुष्यतु इति सङ्गं त्यक्त्वेति शाङ्करव्याख्यानं ॥ सिद्धिरित्यनेन भगवत्तत्त्वज्ञानं परामृष्टं शंकराचार्येण॥ तथाच मुमुक्षुर्भगवत्तत्त्वज्ञानोदासीनस्सन् भगवत्प्रसादमपि नेच्छेदित्युक्तं भवति ॥ एतैर्मम दुरितक्षयोऽस्त्विति वा प्रतिबन्धनिवृत्तिरस्त्विति वा प्रसीदत्वीश्वरो मह्यमिति वा कर्मजन्यं फलं मे भूयादिति वा सङ्गः कामः ॥ तं त्यक्त्वा, इति शङ्करानन्दः ॥ किमिति भगवत्प्रसादो भगवद्ज्ञानं च तिरस्क्रियतइति न ज्ञायते॥ कुत एवमवज्ञा भगवति। अमुकप्रमाणे ईदृश्यपीच्छा मोक्षविरोधिनीति वा निद्येति वा दूषितेति न ज्ञायते ॥ "वृणीमहे ते परितोषणाय" इत्यादि प्रमाणानि पूर्वश्लोकव्याख्याने पठितानीदृश्या इच्छायाः कर्तव्यत्वं बोधयन्ति ॥ सिद्ध्यसिद्ध्योरित्यत्रापि सिद्धिः ईश्वरप्रसादप्राप्तिः चित्तप्रसत्तिः इत्यादीन्यभिप्रेतानीति शङ्करानन्दो ब्रूते ॥ को हि भागवताशिखामणिः स्वस्थात्मा भगवद्ज्ञानं प्रसादं चौदासीन्यगोचरतयाऽवमन्येत ॥ अहो आश्चर्य ॥ तस्माच्छ्रीमध्वहृदयमनुसृत्य यद्विवृत्याचार्येणोक्तं तदेव मान्यं दृश्यते ॥

अविरुद्धानेकार्थगर्भितत्वेन गीतायाः वृद्धैः स्फुटमसूचितोऽपि कश्चिदर्थो लिख्यते ॥ तथाहि ॥ हे धनंजयेति साभिप्रायं सम्बोधनं ॥ अर्जुनो हि धनप्राधान्यवादी ॥ तथाहि दृष्टं शान्तिपर्वणि अष्टमाध्याये—

"पतितश्शोच्यते राजन्निर्धनश्चापि शोच्यते। विशेषं नाधिगच्छामि पतितस्याधनस्य च ॥ यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः। यस्यार्थास्सपुमाँल्लोके यस्यार्थास्स च पण्डितः ॥ धनात्कुलं प्रभवति धनाद्धर्मः प्रवर्धते। नाधनः स्यात्स्वयं लोके न परः पुरुषोत्तम" ॥ इत्यादीनि

युधिष्ठिरं प्रति धनंजयवचनानि ॥ विराटपर्वणि स्वयमेव स्वनाम उत्तरं प्रति निरुक्तवान्—"सर्वान् जनपदान् जित्वा वित्तमादाय केवलं ॥ मध्ये धनस्य तिष्ठामि तेनाहुर्मां धनंजयं" इति. भा. वि. ४४. धनं जयति संपादयतीति व्युत्पत्त्या धनार्जकोऽर्जुन इति ज्ञायते ॥ भीमसेनमतं त्वन्यत् ॥ कर्मणः प्राधान्यमुपपाद्य कर्तव्यत्वमाह भीमः ॥ तथाहि शान्तिपर्वणि ॥ "यदि संन्यासतस्सिद्धिं राजन् कश्चिदवाप्नुयात् । पर्वताश्च द्रुमाश्चैव क्षिप्रं सिद्धिमवाप्नुयुः ॥ एते हि नित्यसंन्यासाः दृश्यन्ते निरुपद्रवाः । अपरिग्रहवन्तश्च सततं ब्रह्मचारिणः ॥ तस्मात्कर्मैव कर्तव्यं नास्ति सिद्धिरकर्मणः" ॥ इति ॥ गीताश्लोके धनंजयेति संबोधनेन पार्थस्य धनप्राधान्यवादं स्मारयित्वा भीमसेनमतं कर्मकर्तव्यताप्रसाधकमनुजग्राह भगवानिति ध्वन्यते ॥

कुरुकर्माणि संगं च त्यक्त्वा धनं त्वं जय इति वा योजना ॥ कुरुकर्माणि ओदनकर्माणि ॥ "कुरुस्यादोदने भूपभेदे श्रीकंठजांगले" इति हैमः ॥ ओदनसंबंधिकर्माणि उदरंभरिव्यापारान्हित्वा धनतृष्णां च त्यक्त्वा आनुषंगिकफलत्वेन राज्यादिसंपत्तिं समाहरेत्यर्थः ॥

**दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय ।**
**बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥४९॥**

वि० ॥ किंच कर्मफलस्य ज्ञानफलादल्पत्वाज्ज्ञानोपायानुष्ठानाय प्रयतस्वेति यावानर्थ इत्यत्रोक्तेऽर्थे कर्मरूपपुमर्थोपायस्य ज्ञानरूपोपायादधमत्वरूपं हेत्वन्तरमुच्यते दूरेणेति ॥ बुद्धियोगात् ज्ञानलक्षणपुमर्थसाधनात् कर्म

दूरेणातीवावरमधमं ॥ अतो बुद्धौ ज्ञाने शरणमन्विच्छ ज्ञानस्योपायभूतयोगानुष्ठानलक्षणां ज्ञाने स्थितिं अन्विच्छेत्यर्थः ॥ कथं कर्म ज्ञानादवरमित्यत आह ॥ कृपणा इति । फलं कर्मकृतौ हेतुर्येषां ते फलहेतवः ॥ ते कृपणाः दीनाः इमं लोकं हीनतरं लोकं वा विशन्तीत्यर्थः ॥ यद्वोत्तरार्धस्यैवमर्थः ॥ ज्ञानस्य कर्मतः उत्तमत्वे सति उत्तमायां ज्ञानावस्थायां ईश्वरैक्यभावनं युक्तमित्यत आह ॥ बुद्धाविति । बुद्धौ ज्ञाने जातेऽपि विष्णुमेव शरणमन्विच्छ ॥ कुतः फलहेतवः फलहेतुरीश्वरः फलहेतवः ईश्वरैक्यभाविनो ये ते कृपणाः कृपाविषयाः॥ तमः प्राप्तिमन्त इत्यर्थः ॥

शं ॥ यत्पुनः समत्वबुद्धियुक्तं ईश्वराराधनार्थं कर्म एतस्मात्कर्मणः। दूरेण इति ॥ दूरेण अतिविप्रकर्षेण अत्यन्तमेव हि अवरं अधमं निकृष्टं कर्म फलार्थिना क्रियमाणं बुद्धियोगात् समत्वबुद्धियुक्तात् कर्मणः जन्ममरणादिहेतुत्वात् ॥ हे धनंजय यतएवं ततः योगविषयायां बुद्धौ तत्परिपाकजायां वा सांख्यबुद्धौ शरणं आश्रयं अभयप्राप्तिकारणं अन्विच्छ प्रार्थयस्व ॥ परमार्थज्ञानशरणो भवेत्यर्थः ॥ यतः अवरं कर्म कुर्वाणाः कृपणाः दीनाः फलहेतवः फलतृष्णाप्रयुक्तास्सन्तः "यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणः" इति श्रुतेः ॥

रा० ॥ किमर्थमसकृदुच्यते इत्यत आह ॥ योऽयं प्रधानफलत्यागविषयोऽवान्तरफलसिद्ध्यसिद्ध्योस्समत्वविषयश्च बुद्धियोगः तद्युक्तात्कर्मण इतरत् कर्म दूरेणावरं ॥ महदिदं द्वयोरुत्कर्षापकर्षरूपं वैरूप्यं ॥ उक्तबुद्धियोगयुक्तं कर्म निखिलसांसारिकदुःखं विनिवर्त्य परमपुरुषार्थलक्षणं च मोक्षं प्रापयति ॥ इतरदपरिमितदुःखरूपं संसारमिति ॥ अतः कर्मणि क्रियमाणे उक्तायां बुद्धौ शरणमन्विच्छ ॥ शरणं त्रासस्थानं तस्यामेव बुद्धौ वर्तस्वेत्यर्थः ॥ कृपणाः फलहेतवः फलसंगादिना कर्म कुर्वाणाः कृपणा संसारिणो भवेयुः ॥

विचारः

दूरशब्दस्य प्रायशो देशविप्रकर्षवाचित्वेऽपि नेह देशविवक्षा संगच्छते ॥ अपितु तारतम्यातिशयोऽनेन बोध्यते ॥ कर्मेति काम्यं कर्म गृह्यते ॥ बुद्धिश्चासौ योगश्चेति विग्रहेण मोक्षाख्यपुरुषार्थोपायभूतं ज्ञानं उच्यते ॥ यावानर्थ इति श्लोके कूपोपमस्य कर्मफलस्य स्वर्गादेः समुद्रस्थानीये ज्ञानफले मोक्षेऽन्तर्भाव उक्तः ॥ तस्माद्योगाय युज्यस्वेति वक्ष्यमाणानुशासनहेतुत्वेन सदृष्टान्तं एका युक्तिरभिहिता ॥ तत्रैव युक्त्यन्तरकथनाय प्रकृत श्लोकः प्रवृत्तः ॥ तत्र फलयोः तारतम्यं कथितं ॥ इह तु पुरुषार्थत्वेन प्रसिद्धस्वर्गमोक्षयोस्साधनभूतयोः काम्यकर्मज्ञानयोस्तारतम्यप्रदर्शनेन योगाश्रयणे युक्त्यन्तरमुच्यते ॥ यद्यपि बुद्धेर्योगः बुद्धियोगः इति षष्ठीसमासाश्रयणेन ज्ञानोपायः कर्मयोग इति फलितार्थसिद्धिर्भवेत् तथापि कर्मधारयमाश्रित्य ज्ञानस्यैव बुद्धियोगादित्यनेन विवक्षायां त्वस्ति विशेषः ॥ यथोपपादितं श्रीनिवासतीर्थीये— "स्वर्गमोक्षौ द्वावेव पुरुषार्थौ प्रसिद्धौ ॥

तत्रावरं कर्म बुद्धियोगादिति सह निर्देशात् । स्वर्गरूपपुरुषार्थसाधनकर्मापेक्षया मोक्षरूपपुरुषार्थसाधनस्य ज्ञानस्यैव कथनं संगतं ॥ उभयोः पुरुषार्थसाधनत्वसाम्यात् ॥ इदं च कर्मधारयसमास एव घटते, न षष्ठीसमासे ॥ यदि च स्वर्गमोक्षाविव ज्ञानमपि स्वतः पुरुषार्थः स्यात् तदोक्तरीत्या षष्ठीसमासमङ्गीकुर्मः" इति ॥

शरणं आवासस्थानमभिप्रेतं ॥ "उपाये गृहरक्षित्रोश्शब्दः शरणमित्ययं" इत्यहिर्बुध्न्यसंहितायां ॥ 'कर्तुमिच्छ' 'आश्रय' 'अनुतिष्ठ' 'प्रार्थयस्व' इत्याद्यर्था अपि अन्विच्छेत्यस्य निर्दिष्टाः ॥ मा कर्मफलहेतुर्भूरित्यत्र बहुव्रीहिग्रहणेन कर्मकृतौ फलमेव येषां हेतुः इति सकामाः उक्ताः ॥ तथैव प्रकृते श्लोके फलहेतव इत्यत्र समासः ॥ तेन फलकारणानां न कृपणत्वं किंतु सकामानां पुरुषाणां तथात्वं इत्युक्तं भवति ॥ माकर्मफलहेतुर्भूरित्यत्र फलस्य हेतुः फलहेतुः इति प्राक् ये व्याख्यातवन्तः तैः शंकराचार्यादिभिरपि प्रकृतश्लोके षष्ठीसमासो नोक्तः ॥ फलं प्रवृत्तिहेतुर्येषामिति नीलकण्ठोऽपि व्याचष्टे । तथाऽन्येऽपि ॥

कृपणाः दीनाः कृपाविषया वा ॥ "जन्ममरणादिघटीयंत्रभ्रमणेन परवशाः" इति मधुसूदनीये ॥ तत्रैवोपपादनं च ॥ "यथाहि कृपणा जना अपि दुःखेन धनमार्जयन्तो यत्किंचिद्दृष्टसुखमात्रलोभेन दानादिजनितं महत्सुखमनुभवितुं न शक्नुवन्ति इत्यात्मानमेव वंचयन्ति ॥ तथा महता दुःखेन कर्माणि कुर्वाणाः क्षुद्रफलमात्रलोभेन परमानन्दानुभवेन वंचिताः इत्यहो दौर्भाग्यं मौढ्यंच तेषामिति कृपणपदेन ध्वनितं" इति ॥ "यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति सकृपणः" इति बृहदारण्यके कृपणशब्दः श्रुतः ॥

कर्मेति सर्वकर्म संगृहीतं इति शङ्करानन्दः. "अवरत्वादसाधनत्वादनात्मन्यात्मताधीहेतुत्वाच्च न क्वचित्कर्मणि तिष्ठेत्यर्थः ॥ एतेन यावच्चित्त-

प्रसादस्तावदेव कर्म साधनं मुमुक्षोरतःपरं ज्ञानयोगएव इति सूचितं ॥ तेन यावज्जीवमग्निहोत्रमपक्वबुद्धेरेवेति सिद्धं" इत्याह ॥ अत्रेदं चिन्त्यं ॥ प्रकरणं हि काम्यकर्मनिन्दां करोति ॥ नतु सर्वकर्मणां ॥ तस्माद्योगाय युज्यस्वेत्युत्तरश्लोकगतनियमनस्य हेतूपन्यासपरतयैव प्रकृतश्लोकव्याख्यानमुचितं भाति ॥ ज्ञानिनः कर्म नास्तीत्ययुक्तं अनुपयुक्तंचेति ॥ तस्मात् काम्यकर्मण एव विवक्षेत्यन्ये व्याख्यातारः ॥

बुद्धियोगात्कर्मावरं इति तारतम्यमुक्तं अत्र कयोरुत्कर्षापकर्षौ विवक्षिताविति सन्दिह्यते ॥ निष्कामकर्मापरपर्यायकर्मयोगस्य उत्कर्षः काम्यकर्मणोऽपकर्षः इति शङ्करादयः ॥ बुद्धिः पूर्वोक्तसमत्वबुद्धिरित्यादाय बुद्धियोगादित्यस्य समत्वबुद्धियुक्तात्कर्मणः इति तेषां व्याख्यानं ॥ तथैव रामानुजाचार्योऽपि वक्ति ॥ श्रीधरस्तु बुद्धिशब्देन भगवत्तत्त्वज्ञानं गृहीत्वा बुद्धेर्योगः बुद्धियोगः इति व्याचष्टे ॥ तथाच कर्मयोगपरोऽयंशब्द इत्युक्तं भवति ॥ बुद्धियोगः ज्ञानयोगः इति शङ्करानन्दः ॥ तथाचात्र भावसंग्रहः ॥ कर्मयोगकाम्यकर्मणोस्तारतम्यमुच्यते इति शङ्कररामानुजादयः ॥ कर्मसामान्यज्ञानयोगयोरिति शङ्करानन्दः ॥ काम्यकर्मज्ञानयोः पुरुषार्थसाधनत्वेन प्रसिद्धयोः यावानर्थ इत्यत्रोक्तदिशैव तारतम्यं उच्यते इति श्रीमध्व. ॥ तथाच ज्ञानकाम्यकर्मणोरुत्कर्षापकर्षावुच्येते इति यावत् ॥ एतत्पक्षे युक्तिस्सूचिता प्रमेयदीपिकायाम् ॥ "पुरुपार्थसम्बन्धिना कर्मणा सह निर्देशे तथाभूतस्य ज्ञानस्यैव ग्रहणं युक्तं" इति ॥

बुद्धौ शरणमन्विच्छेत्यनेन सांख्यं वा अनुतिष्ठ इति शंकराचार्यनीलकण्ठौ ॥ सांख्यावलंबने तन्मतरीत्या कर्मसंन्यास एव विहितः ॥ प्रकरणं तु कर्मयोगं स्तौति ॥ यदुक्तं श्रीधरेण "यद्वा बुद्धौ शरणं त्रातारं ईश्वरं आश्रय" इति तत्सुष्टु भाषितं दृश्यते ॥ एवमेव तत्र तत्रानेन भागवतव्याख्यात्रा स्वव्यूहव्याख्यानातिलंघनपूर्वकं भगवद्भक्त्यनुकूलं भावकथनं क्वचि-

क्रियते ॥ एतदितरेभ्यः स्वयूथ्येभ्यो न रोचते ॥ तथाहि । अयमर्थः शङ्करभाष्योत्कर्षदीपिकायां दूषितः ॥ "'बुद्धौ शरणं त्रातारं ईश्वरं' इत्यर्थस्तु अप्रक्रान्तार्थकल्पनया विशेषाध्याहारेण च ग्रस्तः" इति ॥ उच्यते ॥ शरण-शब्दस्य हि रक्षिता अर्थः ॥ विना भगवदाश्रयणं न ज्ञानं लभ्यते ॥ कर्मयोगे भगवदाराधनमन्तर्भूतमेव ॥ तस्मादप्रक्रान्तार्थकल्पनाभीतेः क्कावसरः ॥ ईश्वर-मिति नाध्याहारः । त्रातारमन्विच्छेत्यनेनैव पूर्तेः । किंतु त्राता स एवेति ज्ञापयितुं तदुक्तिः । अतो नाध्याहारभीतिरपि । बुद्धौ इति चतु-र्थ्यर्थकत्वे बुद्ध्यर्थं ईश्वरमाराधयेत्यर्थ उपपद्यते ॥ बुद्धौ इति सति-सप्तमी वा ॥ बुद्धौ जातायामपि सर्वशरण्यं भगवन्तमन्विच्छेति व्याख्यानं गीतातात्पर्योक्तं ॥

"अज्ञानां ज्ञानिनां चैव मुक्तानां शरणं हरिः ।
तं ये स्वैक्येन मन्यन्ते सर्वभिन्नं गुणोच्छ्रयात् ॥

कृपणास्ते तमस्यन्धे निपतन्ति न संशयः" । इति नारदीयवचन-मुदाहृतं ॥

'कृपणाः फलहेतवः' इत्युक्त्या इमे भावा अपि ध्वनिताः ॥ कृपणशब्दः कृमिवाचकः ॥ मनुष्यावरकृम्यादितिर्यग्जन्तवो हि केवलं कर्मेन्द्रियव्यापारेषु संचरन्तः आहाराद्यभिलाषमात्रप्रचोदिता बुद्धिव्यापारं प्रायशो न प्रदर्शयन्ति ॥ फलैकप्रवृत्तिमान् काम्यकर्मी च तथैव स्वचेष्टायां कृपणायते ॥ अथवा कृपणो मन्दः अल्पबुद्धिमान् ॥ अथवा कृपणः दासः ॥ कृतः पणो यस्येति व्युत्पत्त्या कृतपणे पणक्रीते दासे कृपणशब्दः प्रयुज्यते ॥ ये धनादिकमनुद्दिश्य पादन्यासमपि न कुर्वन्ति ते पणक्रीता इव धनदासा इति ध्वनिः ॥ "यस्त आशिष आशास्ते न स भृत्यः सवै वणिक् । सवै स्वामी सवै भृत्यो गुणलुब्धौ न कामुकौ" इति भागवते सप्तमे ॥

अथवा कृपणो लुब्धः अदाता ॥ यथा लुब्धः पेटिकायां निधिनिचयं निक्षिप्य तदवलोकनसंख्यानादिकं पुनःपुनः कुर्वन्नानन्दमग्नो न रूप्यैकमपि स्वार्थं परार्थं वा विगमयति तथा सकामोऽल्पफलं स्वर्गादिकं न जहाति उत्कृष्टफलं मोक्षं नावेक्षते इति ॥

बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलं॥५०

वि० ॥ ज्ञानात्कर्मावरमित्येतत्काम्यकार्मिणां कृपणत्वोक्त्योपपाद्येदानीं कर्मफलाज्ज्ञानफलस्य विलक्षणत्वोक्त्याप्युपपादयति ॥ बुद्धियुक्त इति ॥ बुद्धियुक्तः भगवज्ज्ञानयुक्तः उभे सुकृतदुष्कृते पुण्यपापे जहाति त्यजति ॥ पुण्यमध्ये यदनिष्टं मानुष्यादिफलं तज्जहाति ॥ यत्तूपासनादिजन्यं ज्ञानवृद्धिकरं मुक्तावानन्दकरं च तत्पुण्यं नैव जहाति ॥ दुष्कृतं तु सर्वात्मना जहाति । तस्माज्ज्ञानस्य सर्वानिष्टनिवृत्तिविशिष्टोभयवृद्धिरूपमहाफलत्वात् योगाय ज्ञानोपायाय युज्यस्व सन्नद्धो भव प्रयतस्वेति वा ॥ योगं स्तौति । योग इति । योगो ज्ञानोपायः कर्मसु कौशलं श्रेष्ठमित्यर्थः । यद्वा अस्तु ज्ञानोपायाय प्रयत्नः । किंफलस्नेहरहितकर्मणेत्यत आह । योगइति । कर्मसु मध्ये भगवज्ज्ञानपूर्वं फलस्नेहरहितं भगवदर्थत्वेन क्रियमाणं कर्म कौशलमुच्यते।

सएवच योगो नाम । अतःफलस्नेहहीनं कर्मैव ज्ञानोपाय इत्यर्थः ॥

शं ॥ समत्वबुद्धियुक्तस्सन् स्वधर्ममनुतिष्ठन् यत्फलं प्राप्नोति तच्छृणु । बुद्धीति ॥ बुद्धियुक्तः कर्मसमत्वविषयया बुत्ध्या युक्तः बुद्धियुक्तः सन् जहाति परित्यजाति, इह अस्मिन् लोके उभे सुकृतदुष्कृते पुण्यपापे सत्त्वशुद्धिज्ञानप्राप्तिद्वारेण यतस्तस्मात् समत्वबुद्धियोगाय युज्यस्व घटस्व ॥ योगो हि कर्मसु कौशलं । स्वधर्माख्येषु कर्मसु वर्तमानस्य या सित्ध्यसित्ध्योस्समत्वबुद्धिरीश्वरार्पितचेतस्तया तत्कौशलं कुशलभावः ॥ तद्धि कौशलं यद्बंधनस्वभावान्यपि कर्माणि समत्वबुत्ध्या स्वभावान्निवर्तन्ते ॥ तस्मात्समत्वबुद्धियुक्तो भव त्वं ॥

रा ॥बुद्धियोगयुक्तस्तु कर्म कुर्वाणः उभे सुकृतदुष्कृते अनादिकालसंचिते अनन्ते बन्धुहेतुभूते जहाति ॥ तस्मादुक्ताय बुद्धियोगाय युज्यस्व ॥ योगः कर्मसु कौशलं कर्मसु क्रियमाणेष्वयं बुद्धियोगः कौशलं अतिसामर्थ्यं ॥ अतिसामर्थ्यसाध्यइत्यर्थः ॥

विचारः

"इह उभे" इति गुणाभावः छान्दसः ॥ सकामानां कृपणत्वात् ज्ञानस्य सुकृतदुष्कृतहानरूपमहाफलकत्वादिति तस्मादित्यनेन परामृश्यते ॥ योगाय युज्यस्वेति नियमनं प्राधान्येन विधेयं । योगाय ज्ञानोपायाय कर्मयो-

गाय प्रयतस्वेत्यर्थः ॥ "योगस्संनहनोपायध्यानसङ्गतियुक्तिषु" इत्यभिधानं। कुतो ज्ञानोपायाय प्रयत्न इत्याकांक्षायां सत्कर्मजन्यस्य भगवत्तत्त्वज्ञानस्य महाफलकत्वादिति प्रथमार्धेन हेतुरभिहितः ॥ सुकृतदुष्कृतहानं महाफलं विवक्षितं ॥ बुद्धियुक्तो भगवदपरोक्षज्ञान्याभिप्रेतः ॥ तस्यैव हि सुकृतदुष्कृतहानं युज्यते । "तथा विद्वान् पुण्यपापे विधूय" इति श्रुतिर्विदुषः पुण्यपापध्वंसं वक्ति ॥ योगः कर्मसु कौशलं इति योगस्तवनं कृतं ॥ योगः कर्मयोगः ॥.

योगःकर्मसु कौशलमित्यत्र योगशब्देन कर्मयोगविवक्षां प्रायशस्सर्वे व्याख्यातार आहुः ॥ कर्मसु मध्ये यानि यानि कर्माणि ज्ञानोपायभूतानि तानि कौशलं श्रेष्ठानीति यावत् । कुशलमेव कौशलं कर्मयोग इत्युच्यते ॥ यद्वा कर्म सुकौशलं इति पदविभागः ॥ सुकौशलं कर्मयोगः इति योजना। अथवा "विज्ञाय सेवितश्चोरो मैत्रीमेति न चोरतां ।" इति योगवासिष्ठोक्तन्यायेन बंधकस्वभावापन्नानि कर्माणि यद्बंधनिवर्तकानि भवेयुः तदिह कौशलं इति स्तुतं ॥ तथाच सर्वासु क्रियासु भगवदर्पणानुसंधानोपायेन बंधकत्वं परिहृत्य ज्ञानजनकत्वसामर्थ्यं योगः इति यावत् ॥

अत्र योगशब्देन ज्ञानयोगो गृह्यते इति शङ्करानन्दः । योगाय युज्यस्वेत्यत्रापि ज्ञानयोग एवाभिप्रेत इत्याह । "कर्मसु पापपुण्योभयात्मकेषु निवर्तनीयेषु सत्सु योगो ज्ञानयोग एव कौशलं कुशलमेव कौशलं निपुणं" इति तस्य व्याख्यानं॥ अत्र कर्मस्वित्यनेन यः पूर्वोक्तसुकृतदुष्कृतयोः परामर्शः कृतः स क्लिष्टः ॥ 'निवर्तनीयेषु सत्सु' इत्यध्याहारगौरवं च । ज्ञानयोगस्यानुष्ठेयत्वाभिप्राये कर्मसंन्यास उक्तो भवति ॥ स च प्रक्रान्तविरुद्धः ॥

योगः कर्मसु कौशलमिति यो योगः स्तुतः स एव योगाय युज्यस्वेत्यत्रापि विवक्षितः । विना शङ्करानन्दमन्ये सर्वेऽपि कर्मयोगाय युज्य-

स्वेति व्याकुर्वते )(समत्वं योग उच्यते इति पूर्वश्लोकगतं लक्षणमनुकृष्य प्रकृतश्लोके बुद्धिः समत्वबुद्धिः योगः समत्वबुद्धियोगः तस्मै युज्यस्वेति सर्वे परकीया व्याख्यातारः ॥ योगाय ज्ञानोपायायेति विवृत्याचार्यः । तथाच कर्मयोगानुष्ठानार्थं घटस्वेति प्रायशस्सर्वसंमतं ॥

अथ प्रथमार्धे बुद्धियुक्त इति विवक्षितः कः ? सच किं जहाति ? कथं हानं संभवति ? इति विचार्यं ॥

"बुद्धियुक्तो जहाति" "योगः कर्मसु कौशलं" इति वाक्यद्वये-नार्जुननिन्दाध्वनितेत्याह मधुसूदनः ॥ "समत्वबुद्धियुक्तः कर्मयोगः कर्मा-त्मापि सन् दुष्कर्मक्षयं करोतीति महाकुशलः ॥ त्वं तु न कुशलो यतश्चेतनोऽपि सन् सजातीयदुष्टक्षयं न करोषीति व्यतिरेको ध्वनितः" इति । इदमसंगतं ॥ (यतो बुद्धियुक्त इति चेतन एव गृह्यते नत्वचेतनः कर्मयोगः ॥ व्यवहारे यदचेतनस्य पुण्यपापहन्तृत्वमुच्यते तदौपचारिकं । भगवान्हि धर्मेण पापमपनु-दति ॥ सत्कर्मणः पापक्षये करणत्वमेव न तु कर्तृत्वं शास्त्रसंमतं । विरुद्धयोर्वा प्रसक्तयोर्वा द्वयोरेकस्तुतिरपरनिन्दां गमयेत् ॥ प्रकृते अर्जुनस्तुतेर्निन्दाया वा नेषदपि प्रसक्तिः ॥ नयोत्स्य इत्यर्जुनवाक्यं व्याजीकृत्यासंबद्धं तद्दूषणं न व्याख्यातृकौशलं गमयति )( तथाच बुद्धियुक्तः कर्मयोगः इत्यचेतनपरतया मधुसूदनोक्तं मन्दं ॥ कर्मयोगो जहाति इत्युक्तौ अचेतनस्य बुद्धिपूर्वकं यद्धानं न तद्युक्तं ॥ औपचारिकप्रयोगे तु प्रयोजनं वाच्यं इत्यास्तां ॥

बुद्धियुक्तः कर्मयोगी पुरुष उच्यत इत्यन्ये । सांख्ययुक्तपरमात्मसाक्षा-त्कारवानिति शङ्करानन्दः ॥ अपरोक्षज्ञान्युच्यते इति श्रीमध्वः ॥ ज्ञानस्य महाफलकत्वात्तदुपायाय युज्यस्वेति पूर्वोत्तरसङ्गतिः ॥

पूर्वप्रकृतसमत्वस्यानुषङ्गेण बुद्ध्यर्थस्य सङ्कोचेतु समत्वबुद्धिमान् कर्म-योगी न सुकृतदुष्कृते साक्षाज्जहातीति शास्त्रविरोध आपद्यते । अपरोक्ष-

ज्ञानेनैव हि तयोर्हानं सर्वसंमतं ॥ तस्माच्छांकरा बुद्धिरित्यत्र समत्वविशेषणेन तदर्थस्य सङ्कोचमाश्रित्य प्रमेयासाङ्गत्यपरिहाराय सत्वशुद्धिज्ञानप्राप्तिद्वारेत्यध्याहारं कुर्वन्ति ॥ अनयोस्सङ्कोचाध्याहारयोर्निर्बधे कारणं न ज्ञायते । बुद्धिरित्यनेन समत्वबुद्धिग्रहणे को निर्बन्धः ॥

ननु कर्मयोगी सुकृतं कथं जहाति ॥ कर्मभिर्दुष्कृति त्यजतु "धर्मेणपापमपनुदति" इति श्रुतेः ॥ सुकृतन्तु सजातीयत्वात्तैः दुष्परिहरं इति, कथं उभे सुकृतदुष्कृते जहातीति पूर्वपक्षमुत्थाप्य सत्वशुद्धिज्ञानोत्पत्तिद्वारेणेति यच्छङ्कराचार्यसमाधानं तत्प्राचीनमित्युपेक्ष्य "अर्वाचस्तु फलत्यागात्सुकृतत्यागोऽपि कर्मयोगिनो भवति, दुष्कृतफलवन्मोक्षप्रतिबन्धकतत्फलस्यानुत्पादात् ॥ तस्मात्फलद्वारा मोक्षप्रतिबंधके क्रियमाणे एव सुकृतदुष्कृते कर्मयोगी जहाति ॥ ज्ञानीतु संचिते अपि जहातीति तयोर्विशेषः इत्याहुः" इत्यर्वाक्तनानां समाधानं उपपादितवान्नीलकण्ठः ॥ बुद्धियुक्त इति पदेन कर्मयोगी गृह्यते इत्यादायाध्याहारात् भीत्वा संचितसुकृतहानोक्तावसाङ्गत्यं पश्यन् फलाकामनया आगामिफलानुत्पादएवात्र हानशब्देन विवक्षितः इति व्याचष्टे ॥

अत्र वक्तव्यं ॥ माकर्मफलहेतुर्भूरित्यादिना फलकामनया तदनुत्पादो हि वाक्यार्थ उक्तो नीलकण्ठादिभिः ॥ किं पुनस्तस्यैवार्थस्योक्तौ प्रयोजनं इति ॥ अत्रेमे क्लेशाः परपक्षे । (१) बुद्धिस्समत्वबुद्धिरिति संकोचः (२) जहातीत्यत्र हानं दुष्कृतविषये परित्यागः सुकृतविषये फलानुत्पादः ॥ (३) सुकृतदुष्कृते इत्यत्र सुकृतानि न संचितानि किंतु क्रियमाणानि इति प्रांचः । अर्वाञ्चश्च शाङ्करा बुद्धियुक्त इति पदं कर्मयोगिपरतया व्याख्याय जहाति सुकृतदुष्कृते इत्यत्र परस्परं विप्रतिपद्यन्ते ॥ एवं दौर्घट्यं पश्यन्नाह शङ्करानन्दः "बुद्धिः सांख्यविषया निरुक्ता ॥ तया युक्तः ज्ञानयोगेन युक्तो ब्रह्मविदारूढः स्वस्य कूटस्थासङ्गचिदात्मत्वविज्ञानबलेनैव इह लोके जन्मान्तरशतसहस्रेष्वधुना ज्ञानोत्पत्तेः प्रागूर्ध्वं च कृते नानायोनिसहस्रप्रापके उभे

सुकृतदुष्कृते जहाति ॥ ज्ञानाग्निना निर्मूल्य जीवन्नेव मुक्तो भवति यस्मात्तस्मात्त्वं ज्ञानयोगाय युज्यस्व यतस्व" इति )( यदत्र व्याख्याने ज्ञानिप्रहाणविषयं सुकृतं दुष्कृतं च ज्ञानफलतया पद्ये उच्येते इति समर्थितं तत्साधु ॥ अन्यात्वद्वैतप्रक्रिया ॥

शङ्कराचार्योऽपि 'बुद्धियुक्त' इति पदस्य कर्मयोगिपरत्वेऽस्वारस्यं पश्यन् "कर्मजं बुद्धियुक्ता हि" इत्युत्तरश्लोकव्याख्यां "अथवा परमार्थदर्शनलक्षणा सर्वतस्संप्लुतोदकस्थानीया कर्मयोगजसत्वशुद्धिजनिता बुद्धिर्दर्शिता" इत्याह ॥ एवं मधुसूदनोऽपि पक्षान्तरेण व्याचष्टे ॥ तथाहि ॥ "इह समत्वबुद्धियुक्ते कर्मणि कृते सति सत्त्वशुद्धिद्वारेण बुद्धियुक्तः परमात्मसाक्षात्कारवान् जहाति" इति । तस्माज्ज्ञानित्वपक्ष एव संवादबाहुल्यं दृश्यते । सुकृतदुष्कृते जहातीत्यपरोक्षज्ञानफलं पुण्यपापनिवृत्तिरिति ज्ञायते । मुक्तौ सर्वपापक्षयो भवतीत्यत्र न कोऽपि विवादः । सर्वपुण्यानामपि ध्वंस इत्यत्रत्वस्ति विप्रतिपत्तिः ॥ यत्पुण्यं मोक्षविरोधि काम्यफलात्मकं स्वर्गादिकं तत्त्याज्यमेव ॥ "न हि कांचनकालायसशृंखलयोर्बन्धहेतुत्वे कश्चिद्विशेषः । मुमुक्ष्वपेक्षया स्वर्गादिकारणं सुकृतमपि दुष्कृतमेव । अलौकिकत्वे सत्यनिष्टत्वात्" इति देशिकोक्तं साधूक्तमेव ॥

पुण्यानि द्विविधानि इष्टानिष्टभेदेन । यानीष्टानि न केवलं मोक्षाविरोधीनि अपितु अनुकूलानि तेषां हाने मानं न दृश्यते ॥ सर्वपुण्यानां नाशं तु वदन्ति शाङ्कराः ॥ स्यादेतदेवं यदि तैरभ्युपगतं मोक्षस्वरूपं प्रमितं॥ मैवं ॥ तेहि "परेऽव्यये सर्व एकीभवन्ती"ति श्रुतिबलान्नदीनां सागरे यथा एकीभावः तथा मुक्तानां इति वदन्ति ॥ नदीसागरदृष्टान्तेनाद्वैत्यभिमतमैक्यं तु न सिध्यति ॥ जले जलसंगमेन यतो वृद्धिः दृश्यते अतो भेदोऽभ्युपेयः । एकीभावे तु वृद्धिर्नस्यात् )( मुक्तानां तावत्पूर्वस्मरणं वा देहादियुतत्वं वा लीलाविग्रहग्रहणादिकं वा गमनागमनादिव्यापारो वा स्वेच्छया विषयभोगो वा

अद्भुतातिशयसुखानुभवो वा आनन्दह्रासवृद्धी वा भगवदधीनता वा मुक्तेश्वरभेदनिबन्धना धर्मा न विद्यन्ते इति पराशयः ॥ अयमनुपपन्नः ॥ श्रुतिस्मृतिविरुद्धश्च ॥

"प्रकृतिं चाप्यतिक्रम्य गच्छत्यात्मानमव्ययम् ।
परं नारायणात्मानं निर्द्वंद्वं प्रकृतेः परम् ॥
विमुक्तः पुण्यपापेभ्यः प्रविष्टस्तमनामयम् ।
परमात्मानमगुणं न निवर्तन्ति भारत ॥" इति मोक्षधर्मे (३०१ अ०) ॥ तत्र विचारः कृतः ॥

प्रश्नः ॥ "आजन्ममरणं वा ते स्मरन्त्युत नवाऽनघ ॥
मोक्षे दोषो महानेषः प्राप्यसिद्धिं गतान् ऋषीन् ॥
यदि तत्रैव विज्ञाने वर्तन्ते यतयः परे ॥
मग्नस्य हि परेऽज्ञाने किंन्न दुःखतरं भवेत् ॥

उत्तरं ॥ "इन्द्रियाण्यवबुध्यन्ते स्वदेहं देहिनो नृप । करणान्यात्मनस्तानि सूक्ष्मःपश्यति तैस्तु सः" इति अनेन स्वरूपदेहसद्भाव. सूक्ष्माप्राकृतेन्द्रियाणां व्यापारः पूर्वस्मरणादिकं सविचारं प्रतिपादितानि ॥

"अनिन्द्रियाश्चानशनाश्च तत्र निष्पन्दहीनास्सुसुगन्धिनस्ते । श्वेताः पुमांसो गतसर्वपापाश्चक्षुर्मुषः पापकृतां नराणां" इति नारदेन मुक्तवर्णनं भारते (शां-३८३-अ०) उपरिचरोपाख्याने ॥ "स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा पुनश्चैकदशः स्मृतः ॥ शतं च दशैकं च सहस्राणिच विंशतिः" इति भूमज्ञानेन नानाभावः छान्दोग्योक्तः ॥ किंच "स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ते । अस्मा-

द्धयेवात्मनो यद्यत्कामयते तत्तत्सृजते कामान्नी कामरूप्यनुसंचरन्। स तत्र पर्येति जक्षन्क्रीडन् रममाणः" इत्यादिभिः प्रमाणैः गमनादिकं विहारादयश्च ज्ञायन्ते ))( परीत्या परब्रह्मणोऽपि सुखवत्त्वाभावेन क्व स्यात्सुखं तदैक्यमापन्नस्य मुक्तस्य। "न मोक्षसदृशं किंचिदधिकं वा सुखं क्वचित्। ऋते वैष्णवमानन्दं वाङ्मनोगोचरं महत्। सुखं मोक्षसुखं लोके न च मूढोऽवगच्छति" इति शान्तिपर्वणि (२८०–५)॥ अनेन मुक्तेर्जडत्वं स्पष्टं निषिध्यते। सायुज्यमुक्तावपि भेदः स्फुटः। 'भुञ्जते पुरुषं प्राप्य यथा देवग्रहादयः। तथा मुक्तावुत्तमायां विष्णुमाविश्य भुंजते" इति नारायणाष्टाक्षरकल्पे॥ "विष्णोर्वशाश्च ते सर्वे सर्वदा दुःखवर्जिताः। नतु विष्णुगुणान्सर्वे भुंजते ते कदाचन॥ ब्राह्मान्भोगान्भुंजते ते तारतम्येन कांश्चन। विष्णोर्देहाद्बहिश्चापि निर्गच्छन्ति यथेष्टतः" इति स्कान्दवचनमैतरेयभाष्योदाहृतं)( मुक्तेश्वरयोर्भेदेऽपि किं मुक्तस्य प्रयोजनं इष्टपुण्येभ्य इति शङ्का अवशिष्यते )( इयं समाहिता प्रमेयदीपिकायां—"ज्ञानिनः सर्वसुकृतहानं युक्तिविरुद्धं। तथाहि॥ उपासनादिजनितं सुकृतं ज्ञानिनः किमिष्टमुतानिष्टं। आद्ये किं तदिच्छया क्षीयते उत ज्ञानस्वभावात्॥ नाद्यः इष्टनाशेन ज्ञानी तत्क्षयं नेच्छेत्। द्वितीये ज्ञानस्यापुरुषार्थत्वप्रसंगः। नान्त्यः अनिष्टत्वे कारणाभावात्॥ इष्टाश्च केचिद्विषयाः ज्ञानिनः, यथा तत्प्राप्तिः सुकृतफलं॥ ननु मुक्तः किमर्थं विषयानिच्छेत्। न तावत् सुखार्थं, ज्ञानेनावरणरूपाविद्यानिवृत्तौ आत्मनः स्वरूपसुखस्य व्यक्तत्वात्॥ पृथक्सुखस्यानङ्गीकारात्। नापि दुःखनिवृत्त्यर्थं, अविद्यानिवृत्त्यैव तत्सिद्धेरिति। मैवं। नाविद्यैवात्मस्वरूपावारणं किंत्वीश्वरेच्छापि॥ तथाच ज्ञानेनाविद्यायां निवृत्तायामशेषानिष्टनिवृत्तिर्भवति॥ स्वरूपसुखंच बहुतरं व्यज्यते न तु सर्वं। ज्ञानोत्तरमनुष्ठितेन निवृत्तकर्मणा प्रसन्नः परमेश्वरो मुक्तौ विषयानुत्पाद्य तद्भोगेन ज्ञानानभिव्यक्तमपि स्वरूपसुखं व्यक्तीकरोति॥ अनेनैवाभिप्रायेण श्रुत्या-

दिषु मुक्तेर्ज्ञानमात्रसाध्यत्वं ज्ञानकर्मसमुच्चयसाध्यत्वचोच्यते " इति ॥ अत्रायं संग्रहः कथितः श्रीनिवासतीर्थीये—"अपरोक्षज्ञानानन्तरं क्षीणकर्माणोऽर्चिरादिपथा वैकुण्ठस्थं भगवन्तं सत्यलोकगतं हिरण्यगर्भं च प्राप्तास्ते, येच ब्रह्माण्डलये स्वोत्तमप्रवेशेन त्यक्तदेहाः स्वोचितेन पथा पुन्नामकं हिरण्यगर्भं च प्राप्तास्ते सर्वेऽपि पुन्नामकेन हिरण्यगर्भेण सह विरजास्नानेन भिन्नलिङ्गशरीराः अत्यन्तनिवृत्तानिष्टाः महाप्रलये भगवदुदरे स्थित्वा बहुतरमभिव्यक्तं स्वरूपसुखं भुञ्जानाः पुनस्सृष्टौ भगवल्लोकाविर्भावे सति श्वेतद्वीपगतभगवद्दर्शनेनापरोक्षज्ञानोत्तरानुष्ठितसत्कर्मणा चापगतभगवदिच्छावरकाः ज्ञानोत्तरकृतकर्मजनितभगवत्प्रसादानुसारेण प्राप्तशुद्धसत्वजन्यविषयभोगेन सम्यगभिव्यक्तस्वरूपसुखाः सन्तः स्वक्लृप्तस्थानेषु व्यवतिष्ठन्ते " इति ।)

**कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।**
**जन्मबंधविनिर्मुक्ताः पदं गच्छन्त्यनामयं ५१॥**

वि ॥ पूर्वोक्तं ज्ञानसाधनं ज्ञानफलं च विवृणोति ॥ कर्मजमिति । कर्मजं फलं त्यक्त्वेत्युपलक्षणं ॥ कर्मजफलसङ्कल्पत्यागादिपूर्वकं भगवदर्पणबुद्ध्या कर्मानुष्ठानरूपं योगमास्थाय बुद्धियुक्ताः सम्यक्शास्त्रजनितभगवज्ज्ञानिनः इत्यनेन ज्ञानसाधनं योगो विवृतः ॥ ततश्च । मनीषिणः प्रशंसायां मतुबर्थेनिप्रत्ययः ॥ अपरोक्षज्ञानिनो भूत्वा जन्मबन्धविनिर्मुक्ताः सन्तःअनामयं

निर्दुःखं पदं मोक्षं गच्छन्ति इत्युक्त्या ज्ञानफलं विवृतं ज्ञेयम् ॥

शं ॥ यस्मात् ॥ कर्मजमिति ॥ कर्मजं फलं त्यक्त्वा इति व्यवहितेन संबंधः । इष्टानिष्टदेहप्राप्तिः कर्मजं फलं कर्मभ्यो जातं ॥ बुद्धियुक्ताः समत्वबुद्धियुक्ताः सन्तः। हि यस्मात् । फलं त्यक्त्वा परित्यज्य मनीषिणः ज्ञानिनः भूत्वा जन्मबंधविनिर्मुक्ताः, जन्म एव बंधः जन्मबंधः तेन विनिर्मुक्ताः जीवन्तएव जन्मबंधाद्विनिर्मुक्तास्सन्तः पदं परमं विष्णोः मोक्षाख्यं गच्छन्ति। अनामयं सर्वोपद्रवरहितमित्यर्थः॥ अथवा बुद्धियोगाद्धनंजय इत्यारभ्य परमार्थदर्शनलक्षणैव सर्वतस्संप्लुतोदकस्थानीया कर्मयोगजसत्वशुद्धिजनिता बुद्धिर्दर्शिता साक्षात्सुकृतदुष्कृतप्रहाणहेतुत्वश्रवणात् ॥

रा ॥ बुद्धियोगयुक्ताः कर्मजं फलं त्यक्त्वा कर्म कुर्वन्तः तस्मात् जन्मबंधविनिर्मुक्ताः अनामयं पदं गच्छन्ति ॥ हि प्रसिद्धं ह्येतत्सर्वासूपनिषत्स्वित्यर्थः ॥

विचारः

निवृत्तं कर्म ज्ञानसाधनमिति पर्वमेवोक्तं ॥ यावानर्थइत्यादिना ऽस्थानीयमहाफलावहं कर्मणस्सकाशादत्युत्कृष्टं सुकृतदुष्कृतप्रहाण-

॥ प्रकृतश्लोके कर्मजफलत्यागो ज्ञानोपाय इति पूर्वार्धेन, ज्ञानस्य फलं बन्धविनिर्मुक्तिरित्युत्तरार्धेन च विवृतं ॥ विवरणपरत्वेन न पौनरुक्त्याशंकाया अवकाशः ॥ ज्ञानसाधनप्रतिपादकतया ज्ञानफलप्रतिपादक-

तया च वाक्यद्वयमस्मिन् श्लोके अभिप्रेतं ॥ कर्मजं फलं त्यक्त्वा बुद्धियुक्ता भूत्वा मनीषिणो भवन्तीत्येकं वाक्यं । मनीषया जन्मबन्धविनिर्मुक्तास्सन्तोऽनामयं पदं गच्छन्तीति द्वितीयं इति ॥

बुद्धियुक्ता मनीषिणो भवन्ति इति पक्षसाध्ययोः पर्यायत्वं न शंकनीयं। शास्त्रजनितभगवत्तत्वज्ञानवन्त एव बुद्धियुक्ता विवक्षिताः । मनीषिणस्त्वपरोक्षज्ञानिन. ॥ 'भूमनिन्दाप्रशंसासु भवन्ति मतुबादयः' इति वचनान्मत्वर्थकेनिप्रत्ययस्य प्रशंसा अर्थः । प्रशस्तज्ञानं अपरोक्षज्ञानं ॥ कर्मजफलत्याग इत्यनेनोपलक्षणया संकल्पत्यागादिकं गृह्यते ॥ अप्राप्तस्य कथं त्याग इत्याकांक्षायामकामनया ईश्वरार्पणमेव त्यागोऽत्र विवक्षितः इति ध्येयं॥ "बुद्धियुक्तो जहाति सुकृतदुष्कृते" इति पूर्वश्लोके उक्तं, इह कर्मजं फलं बुद्धियुक्तास्त्यक्त्वा इत्युच्यते । बुद्धियुक्त इति प्रयोगसाम्यादर्थसाम्यं न भ्रमितव्यं ॥ यतस्तत्र बुद्धियुक्तः अपरोक्षज्ञानी इह तु शास्त्रजनितभगवत्तत्वज्ञानवान् ॥ तत्र प्रहाणविषयौ सुकृतदुष्कृते पापं अनिष्टपुण्यं च, इह तु फलं स्वर्गादिकं यदकामनया कर्म निवृत्तं भूत्वा सम्यग्ज्ञानस्योपायो भवति । तत्र ज्ञानजन्यफलांगं उक्तं इहतु ज्ञानात्पूर्वभावि साधनांगं इति विशेषः ॥

अत्र (१) कर्मजफलत्यागः (२) बुद्धियुक्तत्वं (३) मनीषित्वं (४) जन्मबन्धविनिर्मुक्तत्वं (५) अनामयपदगमनं इति क्रमेण मुमुक्ष्वारोहणाय पंच सोपानानि कथितानि ॥ प्रथमप्रतीतौ बुद्धियुक्ताः मनीषिण इति पदयोरैकार्थ्यभ्रान्त्या पौनरुक्त्यं गम्यते । इमां शंकां न रामानुजाचार्यस्समाधत्ते॥ बुद्धियुक्तास्समत्वबुद्धियुक्ताः मनीषिणो ज्ञानिनः इति शंकरानन्दं विना अन्येषां शांकराणां समाधानं ॥ शंकरानन्दस्त्वेवं व्याचष्टे—"बुद्धियुक्ताः बुद्धिस्सांख्यबुद्धिर्ब्रह्मात्मैकत्वविज्ञानं तया युक्ताः तन्निष्ठासंपन्नाः ज्ञानयोगनिष्ठाः मनीषिणः विद्वांसः" इति ॥

अस्मिन्व्याख्याने बुद्धियुक्तत्वमनीषित्वयोरपर्यायत्वं नोपपादितं । मनीषिणो विद्वांस इति व्याख्यानेनानयोर्विशेषो न ज्ञायते ॥

किंच शंकरानन्दीये पूर्वश्लोकार्थः प्रकृतश्लोकार्थादभिन्नोऽवगम्यते ॥ परीक्षासौलभ्यार्थं उक्तार्थावेकत्र लिख्येते ॥ तथाहि—

| पूर्वश्लोके. | प्रकृतश्लोके. |
| --- | --- |
| : साङ्ख्यविषया । तया युक्तो ब्रह्मविदारूढः। कूटस्थासङ्गचिदात्मत्वविज्ञानबलेनैव इह लोके नानायोनिसहस्रप्रापके उभे सुकृतदुष्कृते जहाति ॥ ज्ञानाग्निना निर्मूल्य जीवन्मुक्तो भवति "—इति ॥ | " बुद्धियुक्ताः बुद्धिः साङ्ख्यबुद्धिः ब्रह्मात्मैकत्वविज्ञानं तया युक्तास्तन्निष्ठासंपन्नाः, हि ज्ञानयोगनिष्ठाहि मनीषिणो विद्वांसः कर्मजं कर्मभ्यः संचितादिभ्यो जातं नानायोनिसहस्रप्रापकं फलं जन्मादिलक्षणं त्यक्त्वा निमित्तापाये नैमित्तिकस्यापायः इति न्यायेन ज्ञानाग्निना सर्वेषामपि कर्मणां दाहे सति तत्फलानां च जन्मादीनां दाहसम्भवात्तेन त्यक्तकर्मफला भवन्ति " इति ॥ |

अनयोः प्रतिपाद्यार्थभेदो न स्फुटः ॥ किं च प्रकरणं कर्मकर्तव्यतानिरूपकं इत्यर्थं विस्मृत्येव ज्ञानयोगे नियोगः कृत इत्याशयः प्रतिपद्यं निरूपितो भाति ॥ अतोऽयमुपेक्ष्यः ॥

द्वितीयार्धे बन्धविनिर्मुक्तिपूर्वकमनामयपदगमनं उक्तं ॥ कोऽयं बन्धः किं नाम विमोचनं कुत्र गमनं मुक्तस्य इत्येतेषां निरूपणावसरेऽद्वैतव्याख्यातारः स्वसमयानुकूलमिथ्यात्वैकत्वाद्युपन्यासं कुर्वन्ति ॥ तथाहि शङ्करानन्दः।

"जन्मबन्धो देहः उत्तरकालभावी वर्तमानश्च, तेन विनिर्मुक्ताः ॥ कारणाभावाद्भाविदेहसम्बन्धरहितास्तादात्म्याभावाद्वर्तमानदेहसम्बन्धरहिताश्च सन्तः स्वयमिह जीवन्त एव अनामयं आध्यात्मिकादिसर्वोपद्रवरहितं, पदं पद्यते ज्ञानेन प्राप्यते इति पदं परंब्रह्म। अविद्याकृतं वासनाकृतमप्यन्यभावं परित्यज्य तद्भावमेवाप्नुवन्ति ॥ हिः विद्वदनुभवद्योतनार्थः" इति ॥

अत्र "तादात्म्याभावाद्वर्तमानदेहसंबंधरहिताः" इति जीवन्मुक्तस्वरूपं यत्कथितं तदद्वैतरहोगोष्ठीबाह्यानां दुर्घटं प्रमेयं ॥ अन्यभावं परित्यज्य ब्रह्मत्वमाप्नुवन्तीत्यस्य गीताक्षराणि नावकाशं ददते ॥ हि शब्दव्याख्यानावसरे प्रमाणीकृतो यो विद्वदनुभवः सत्वयथार्थएव ॥

अनामयं पदं गच्छन्ति इत्यत्र सर्वोपद्रवरहितं विष्णोर्मोक्षाख्यं पदं गच्छन्तीति शङ्कराचार्यव्याख्या ॥ एवं विष्णोः परंपदं गच्छन्तीति मधुसूदनीये श्रीधरीयेच ॥ आधुनिकास्तु नीलकण्ठवेंकटनाथादयो विष्णुनामग्रहणे लज्जिता इव स्वेष्टतमं पारिभाषिकं परब्रह्मत्वं पुरस्कृत्य व्याचक्षते ॥ वस्तुतस्तु पदं गच्छन्ति इत्यनेन वैकुण्ठाख्यस्थानविशेषं प्रति गमनं उक्तं इत्युक्ते को दोषः। ज्ञानिनः परत्र गमनं श्रुत्यसंमतमिति भ्रममूलं। अभेदेनाप्नुवन्तीति मधुसूदनस्य व्याख्यानं। अत्राक्षरार्थातिलङ्घनक्लेशस्तु स्फुटः ॥

दुःखाभावोपेतसुखानुभवरूपं दलद्वयात्मकं मोक्षस्वरूपमनङ्गीकुर्वाणा नैयायिकाः अनामयं पदं इत्युक्तिं मोक्षस्य स्वाभ्युपगतदुःखाभावमात्रत्वे साधकं मन्येरन् इति पूर्वपक्षमुत्थाप्य तन्नेति केनचित्समाहितं। "एतेन अभेदेनाप्नुवन्तीति व्याख्यानेन न्यायादिमतसिद्धस्य मोक्षस्वरूपस्यासुखत्वाज्जडत्वाच्चानभिलषितं मिथ्याभूतं च तत्र प्राप्यं इति सूचितं ॥ अन्यथा मूर्च्छाया अपि कामितत्वप्रसङ्गात् ॥ ज्ञाततयाऽभिलषितत्वे च मोक्षरूपस्यानभिलषितत्वतादवस्थ्यात्" इति ॥ यद्यप्येकविंशतिदुःखध्वंसो मोक्ष इति

यत्काणादपरिगृहीतं तदसङ्गतं । मोक्षस्य मूर्च्छातुल्यत्वानभिलषितत्वादि-प्रसङ्गात् ॥ परंत्वद्वैतसमये किन्नाम मोक्षस्वरूपं । तत्समये क्व सुखानुभवो निर्धर्मकब्रह्मत्वप्राप्त्या मुक्तस्य ॥ ब्रह्म सुखस्वरूपं इति हि नाममात्रेण तैरुपदिश्यते ॥ सुखानुभवगंधस्तु न सर्वथा तैरभ्युपगम्यते ॥ आनन्दं ब्रह्मेत्युक्तौ अनानन्दत्वनिषेधो हि वाक्यार्थः कथितः ॥ तस्मादनेन नैयायिक-दूषकेण "यस्तूभयोस्समो दोषस्स नैकतरेणोद्भावनीयः" इति न्यायो विस्मृतः॥ अत्र वस्तुतस्तु अनामयं इत्यनेन दुःखाभावः सुखञ्च बोध्येते। नञः अभावार्थ-कत्वं विरोधार्थकत्वं चाङ्गीकृत्य अनामयः आमयविरुद्धं सुखं तदस्मिन्नस्तीति अर्शआद्यच् इति व्याख्यानात् ॥

जन्मबन्धविनिर्मुक्ता इत्यत्र जन्मैव बन्धः जन्मना बन्धः इतिवाऽर्थः॥ जन्मशब्दः ईश्वरेच्छाऽविद्याद्यावरकाणां तन्मूलकजनिमृत्यादीनां चोपलक्षकः॥ अनादिभावाविद्याया बन्धमूलभूतायाः ज्ञानेनाहिना मूषिकस्येव वध्यत्वं ॥ आवरणभूताया ईश्वरेच्छायास्त्वेनं मोचयामीति भगवत्संकल्पेनापसर्पण-मेव ॥ विनिर्मोकविषयस्य बन्धस्यासत्यत्वसमर्थनाय तु गीताक्षराणि नावकाशं ददते ॥

**यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।**
**तदा गंतासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥५२**

वि ॥ फलकामनादिवर्जितानीश्वराराधनरूपाणि कर्माणि मोक्षसाधनज्ञानार्थिना कियत्पर्यन्तं कर्तव्यानीत्यतआह ॥ यदा तइति ॥ यदा ते तव बुद्धिः अन्तःकरणं मोहकलिलं

अन्यथाज्ञानलक्षणं दोषं व्यतितरिष्याति परित्यक्ष्याति ॥ तदा महद्भयः श्रुतस्य श्रोतव्यस्य च। सर्वकर्मोपलक्षणमेतत् ॥ तस्य सर्वस्य निर्वेदं नितरां लाभं गन्तासि प्राप्स्यसि ॥ (मुक्तिहेतुज्ञानसाधनभूतो निवृत्तकर्मानुष्ठानरूपो योगः साक्षाज्ज्ञानहेतुः)(श्रवणादिरूपप्रमाणस्यादृष्टद्वारा सत्त्वशुद्ध्युत्पादनेनोपकारकः सन् मिथ्याज्ञानदोषनिवृत्तिपर्यन्तं तत्त्वज्ञानोदयपर्यन्तं कर्तव्यइति भावः ॥

शं ॥ योगानुष्ठानजनितसत्त्वशुद्धिजा बुद्धिः कदा प्राप्स्यते इति, उच्यते। यदा इति ॥ यदा यस्मिन् काले ते तव मोहकलिलं मोहात्मकं अविवेकरूपं कालुष्यं, येन आत्मानात्मविवेकबोधं कलुषीकृत्य विषयं प्रत्यन्तःकरणं प्रवर्त्यते तत्। ते तव बुद्धिः व्यतितारिष्यति व्यतिक्रमिष्यति शुद्धभावमापत्स्यते इत्यर्थः ॥ तदा तस्मिन् काले गन्तासि प्राप्तासि निर्वेदं वैराग्यं श्रोतव्यस्य श्रुतस्य च। तदा श्रोतव्यं श्रुतं च ते निष्फलं प्रतिपद्यते इत्यभिप्रायः ॥

रा० ॥ उक्तप्रकारेण कर्मणि वर्तमानस्य तया वृत्त्या निर्धूतकल्मषस्य ते बुद्धिर्यदा मोहकलिलं अत्यल्पफलसङ्गहेतुभूतं कलुषं व्यतितरिष्यति, तदा अस्मत्त इतःपूर्वं त्याज्यतया श्रुतस्य फलादेरितःपश्चाच्छ्रोतव्यस्य च कृते स्वयमेव निर्वेदं गन्तासि गमिष्यसि ॥

## विचारः

कर्मजं फलं त्यक्त्वा बुद्धियुक्ताः मनीषिणो भूत्वा जन्मबन्धविनिर्मुक्ता अनामयं पदं गच्छन्ति इत्यभिहितं पूर्वश्लोके ॥ कर्मफलत्यागसत्त्वशुद्धि-मनीषाबन्धमुक्तिवैकुण्ठप्राप्त्याख्येषु प्रतिपाद्येष्वन्यतमस्यैव प्रकृतश्लोके परा-मर्शो विवक्षित इति मन्यमानाः केचिदस्यानन्तर्यसंगतिमाहुः ॥ तथाहि—कदा मे सत्त्वशुद्धिजा बुद्धिर्भवेत् इति शंकरमधुसूदनाववतारयतः ॥ कदा मे विरक्तिरित्याकांक्षा प्रदर्शिता शंकरभाष्योत्कर्षदीपिकायां । कदा मे सांख्यं इति च तत्रैव । कदा मे मनीषा इति नीलकण्ठीये ॥ कदा मे मोक्षः अनामयपदगमनं इति श्रीधरः ॥ एवं संगत्युद्भावनं दुष्टं न भाति ॥ कदा मे विरक्तिः ज्ञानं मोक्षो वा स्यात् इति प्रश्नो यद्यप्युपपद्यते ॥ परंत्विमे प्रश्नाः पुरुषार्थसंबन्धिसामान्याकाराः ॥ प्रकरणोचितविशेषसंगत्यां सत्यां तु सामा-न्याकारकाकांक्षानुधावनं न स्वारसिकमित्यभिप्रयन्नस्य योगाख्यकर्मानुष्ठान-प्रकरणत्वेन तदुचितं 'कियत्पर्यन्तं फलकामनादिवर्जितानीश्वराराधन-रूपाणि कर्माणि कर्तव्यानि' इति प्रश्नं पुरस्कृत्य पद्यमवतारितवान् श्रीमदाचार्यः ॥

निर्वेदप्राप्तेर्वत्सरादिकालेयत्तानियमो वक्तुं न शक्यते । परन्तु यस्या-मवस्थायां मोहो नश्यति तस्यां निर्वेद इत्यर्थो यदातदेति प्रयोगाल्लभ्यते ॥ कालबोधकेनापि यदेत्यादिशब्देन विवेकपरिपाकावस्था बोध्यते इति भावः ॥ त इत्यर्जुनव्यामोहनिरूपकं पदं इत्यभिप्रयन्नाह शंकराचार्यः—"ते मोहकलिलन्ते "बुद्धिर्व्यतितरिष्यति" इति अभ्यासादर्जुनस्य कलुषितत्वं विशेषतस्सूचितं इति तट्टीकाकारो व्याचष्टे ॥ इदं पुनःपुनस्सूच्यमान-मर्जुनाज्ञत्वं अप्रामाणिकं प्रमाणविरुद्धं चेति निरूपितं पूर्वमेव ॥ गी-ताशास्त्रस्यार्जुनं निमित्तीकृत्य प्रवृत्तत्वेन 'ते' इति जीवसामान्यवाचित्वे किं गलग्राहीति न ज्ञायते ॥ योयो जीवो मोहकलुषितः कालुष्य-

मतितरिष्यति स सनिर्वेदं प्राप्नोतीत्यर्थे न काप्यनुपपत्तिरित्यर्जुनाज्ञत्वे आग्रहो-ऽनुपपन्नः ॥

मोहकलिलं इति ॥ मोहशब्दो मूर्च्छायां भ्रान्तिसाधने अज्ञाने अविद्यावृत्तिभेदे दुःखे देहादिष्वात्माभिमाने पठ्यते इति नैघण्टुकाः ॥ '(कलिलं गहनं विदुरित्यभिधानं ॥ मोहो देहादिष्वात्मबुद्धिः मोहमयं गहनं दुर्गं मोहकलिलं' इति श्रीधरव्याख्या ॥ 'इष्टानिष्टवियोगसंयोगजपरितापजन्यं वैचित्त्यं मोहः' इति नीलकण्ठः। 'अहमिदं ममेदं इत्याद्यज्ञानविलसितमतिगहनं मोहकलिलं' इति मधुसूदनः )( "सदसद्विवेकशून्यतयाऽन्तःकरणमसत्स्वेव विषयेषु रम्यमरम्यं इष्टमनिष्टं ग्राह्यमग्राह्य इति येन रागद्वेषग्रस्तं सत्सर्वदा प्रवर्तते तदेव मोहकलिलं । मोहो विचित्तता, विषयजातमेतत्सर्वमसन्मायिकं तुच्छमिति विवेकाभावः पदार्थापरिज्ञानं मोहः तदेव कलिलं कालुष्यं दर्पणस्य धूलिपटलवद्विवेकबुद्धेरावरणं" इति शंकरानन्दः )( अल्पफलसंगहेतुर्दोषविशेषो मोह इति रामानुजाचार्यः ॥

मोहशब्दो भावरूपमूलाज्ञानपरएवेति कश्चित् ॥ "मोहकलिलं बुद्धिर्व्यतितरिष्यति इति वचनं ब्रह्मापरोक्षज्ञानप्रतिबन्धकमूलाज्ञानविकाररूपमोहातिक्रान्तिपरं न तु चित्तशुद्धिमात्रपरं । 'अभयं सत्त्वसंशुद्धिः' इति तस्याः पार्थे सहजसिद्धत्वेन मोहकलिलं व्यतितरिष्यतीत्युक्तेरयोगात्" इति तस्य व्याख्यानं (वें) )(अत्र मोहशब्दस्य मूलाविद्यापरत्वमेवेति निर्बन्धस्य बीजं चिन्त्यं ॥ अयमद्वैतिव्याख्याता अर्जुनो मूढ इति स्वव्यूहपरिगृहीतं विहाय तं सुज्ञमधिकारिणं मनुते ॥ प्रागेव शुद्धान्तःकरणत्वेन निवर्त्यमूलाविद्यामात्रोऽर्जुन इत्यभिप्रायेणैवमनेन व्याख्यातं ॥ श्लोकस्तु नार्जुनमात्रपरो अपितु जीवसामान्यपरः इति निरूपणेनेदं दत्तोत्तरं भवति।)( किंच यदा मूलाऽविद्या नश्यति तदा प्रपंचमिथ्यात्वधिया विरक्तो भवसीत्युपदेशो योगाख्यकर्मकर्तव्यतोपदेशप्रकरणे न किंचिदपि सम्बद्धो दृश्यते ॥ योगो हि

प्रकरणप्राप्तः । तत्सम्बन्धि कृत्स्नं प्रमेयजातं सङ्गतमेव ॥ योगफलत्वेन सत्त्वशुद्धिः मिथ्याज्ञानध्वंसः इत्यादिकं सङ्गतं प्रमेयं ॥ परोक्षज्ञानं अपरोक्षज्ञानं च श्रवणादिफलं न तु कर्मणः ॥ कर्मजसत्त्वशुद्ध्युपकृतस्य श्रवणादेर्ज्ञानं फलं भवति ॥ तस्मान्मोहशब्दस्य मूलाविद्यामात्रपरत्वेन सङ्कोचे स्वारस्यं न विद्यते ॥ अतस्सत्त्वशुद्धिपर्यन्तं कर्मानुष्ठेयं ॥ तदुपकृतेन श्रवणादिना परोक्षापरोक्षज्ञाने भवतः ॥ तदनन्तरमपि कर्मण्यनुष्ठितेऽधिकं फलं भवति इत्याचार्याकूतमेव समंजसं॥ अतो मोहो मिथ्याज्ञानमिति विवृतौ व्याख्यातं॥ अयं उत्तरश्लोकेऽपि स्फुटीकरिष्यते श्रुतिविप्रतिपन्नेत्यत्र "बुद्धेः मनसः मोहकलिलं श्रुतिविरुद्धत्वरूपो दोषः । तत्तरणं नाम वेदार्थानुकूलेन निश्चयेन दृढतयाऽवस्थानं इति व्याख्यानेन ॥

(मोहातिक्रमो नाम बुद्धेः प्रसादरूपइति नीलकण्ठः । शुद्धसत्त्वैकस्वभावप्राप्तिरिति शङ्कराचार्यः ॥ शिवप्रसादमूलकेन दृश्यमानसर्वं मिथ्यैवेति निश्चयेन सर्वत्यागो विवक्षितइति शङ्करानन्दः ॥ पश्यतात्र व्याख्यातुश्शैवपक्षपातं ॥ अनामयं पदमिति पूर्वश्लोके शङ्कराचार्योऽपि विष्णोः पदं इति व्याख्यातवान् ॥ अन्तःकरणस्य मोहकलिलातिक्रमो नाम ज्ञानप्राप्तिरिति प्रमेयदीपिकायां ॥

(गन्तासि गमिष्यासि प्राप्स्यसीत्यर्थः ॥ अत्र देशिकोपपादनं "गन्तासीत्यत्र पदभेदभ्रमस्स्यात् द्वितीयान्वयात्तृजंतत्वं न युज्यते ॥ तृन्नंतत्वेतु भविष्यत्वविवक्षा न स्वारसकी ॥ अतो लुडन्ततयैकपद्यं युक्तं ॥ एवं जेतासि इति वक्ष्यमाणेऽपि अनद्यतनविहितलुडन्तोऽपि शब्दो व्यतितरिष्यतीत्येतत्तुल्यतया भविष्यन्मात्रार्थः" इति ॥

निर्वेदं श्रोतव्यस्य श्रुतस्यचेति ॥ निर्वेदशब्देन वैराग्यमुच्यते इति सर्वे परे व्याचक्षते ॥ तद्विषयतयोक्ते श्रुतश्रोतव्ये के इत्यत्र तु तेष्वस्तिपरस्परं विवादः ॥

श्रुतं श्रोतव्यं चाध्यात्मशास्त्रातिरिक्तं विवक्षितं इति शंकरभाष्यटीकायामुक्तं ॥ निर्वेदशब्दस्य वैराग्यार्थकत्वे निश्चिते तद्बलाच्छ्रुतादिशब्दस्यार्थसंकोचः क्रियेतापि ॥ नाद्याप्यसौ निश्चयो जातः । यद्यप्यसच्छास्त्रव्युदासो नानुपपन्न. । अयोग्यतया प्रकरणासंगतेर्वा स संभवति ॥ 'श्रुतं श्रोतव्यं निष्फलं प्रतिपद्यते' इति शंकराचार्येणोक्तावपि सच्छास्त्रेभ्यो विरक्तिरसाध्वीति तट्टीकाकर्ता स्वाचार्यवचनमसामंजस्यात्परिरक्षतिस्म ॥

नीलकण्ठस्तु सर्वमपि शास्त्रं वैराग्यविषयमिति मन्यते ॥ अयं पद्यभावमेवमुपपादयति ॥ "मलिनायां बुद्धावसकृद्गृहीतस्यापि शास्त्रार्थस्यास्फुरणाच्छ्रोतव्यं श्रुतं च वृथैव । तद्वच्छुद्धायामपि बुद्धौ सद्यः शास्त्रार्थस्फुरणात्तयोर्वैयर्थ्यमित्युभयथापि तत्र निर्वेद उचितः" इति ॥ इदमतीव मन्दं ॥ अज्ञानदशायां ज्ञानदशायां च शास्त्राणां वैयर्थ्ये तत्राधिकारी कः । विना शास्त्राणि बुद्धेर्मालिन्यं कथं विनश्यति ॥ इदं भावकथनं "अधीते तु महाभाष्ये व्यर्था सा पदमंजरी । अनधीते महाभाष्ये व्यर्था सा पदमंजरी" इति परिहासवचनेनोक्तन्यायमनुसरतीव भाति ॥ एवं वैयर्थ्यकथनमपूर्वं युक्तिविरुद्धं च ॥

श्रुतश्रोतव्यशब्दौ गीताशास्त्रे त्याज्यतयोक्तार्थपराविति रामानुजभाष्यं ॥ 'निस्त्रैगुण्यो भव' इत्यादिना पूर्वं त्याज्यतया श्रुतस्य इतःपरमपि 'प्रजहाति यदा कामान्' इत्यादिना त्याज्यत्वेन श्रोतव्यस्य चार्थस्य विषये वैराग्यं इति वेंकटनाथोपपादनं ॥ अस्यां योजनायां गीताशास्त्रविशेष इत्यध्याहारबलेन सङ्कोच आश्रितः ॥ फलितार्थजिज्ञासायां तु यदा मोहो निर्गच्छति तदा कामना निर्गच्छति इत्युक्तं ज्ञायते ॥ मोहस्यैव कामनारूपत्वेन यदा तदेति वाक्ययोरर्थैक्यमापद्यते ॥ कथंचित्परिहारेप्यर्थस्वारस्यं दुर्घटं ॥

गीताशास्त्रमात्रविवक्षामकृत्वा सामान्यतः श्रुतस्य श्रोतव्यस्य चार्थस्य वैराग्यं प्राप्स्यासि इति श्रीधरः ॥ श्रुतस्य श्रोतव्यस्य कर्मफलस्य वैराग्यं

विवक्षितमिति मधुसूदनः । तथैवोक्तं शङ्करभाष्योत्कर्षदीपिकायां स्वाचार्यभावइति—'श्रोतव्यं श्रुतं च निष्फलं प्रतिपद्यते' इति शङ्करभाष्यं यथाक्षरमनुसृत्य तट्टीकाकारकृतपरिरक्षणं तिरस्कृत्य शङ्करानन्दः स्वापेक्षितामद्वैतप्रक्रियां विस्तारयति स्म ॥ "श्रोतव्यस्य श्रुतस्य च द्रष्टव्यस्य दृष्टस्य च ज्ञातव्यस्य ज्ञातस्य च गृहीतस्य ग्राह्यस्य च वस्तुनो मिथ्यात्वं विज्ञाय निर्वेदं वैराग्यं सर्वत्रालंबुद्धिलक्षणं प्राप्स्यसि ॥ व्यवहार्यस्य मिथ्यात्वाद्व्यवहारस्य मिथ्यार्थगोचरत्वान्निष्फलेनानेन मम किमिति सर्वस्माद्व्यवहार्याद्व्यवहाराच्चोपरतो भविष्यसीत्यर्थः" इति ॥ तथाच प्रपञ्चमिथ्यात्वमादाय सर्वव्यवहारवैधुर्यरूपतूष्णींभावः कथितइत्याशयः ॥

अन्यो व्याचष्टे पातंजलयोगपक्षपाती ॥ "द्विविधं हि वैराग्यं अपरं परंचेति ॥ तत्र 'दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञं वैराग्यं' इति योगपातंजलोक्तं स्रक्चन्दनवनिताधनक्षेत्रादिषु दृष्टेषु, स्वर्गादिष्वानुश्रविकेषु च वैतृष्ण्यरूपमिहामुत्रफलभोगविरागाख्यं वशीकारापरपर्यायभूतं अपरं वैराग्यं ॥ एतच्चाष्टांगयोगप्रवर्तकत्वेन संप्रज्ञातसमाधेरन्तरंगं असंप्रज्ञातसमाधेस्तु बहिरङ्गं ॥ परवैराग्यन्तु 'तत्परं पुरुषविवेकख्यातेर्गुणवैतृष्ण्यं' इति पातंजलसूत्रोक्तं त्रैगुण्यात्मककृत्स्नप्रपंचव्यवहारविषयं वैतृष्ण्यं ॥ तस्य च तारतम्यादसंप्रज्ञातसमाधितारतम्यमिति योगशास्त्रमर्यादा ॥ अत्र च दैवासुरसंपद्विभागाध्यायोक्तदैवसंपदन्तर्भूतसाधनचतुष्टयसंपन्नस्य भगवदुपदिष्टसांख्यज्ञानाधिकारिणश्चार्जुनस्य वशीकाराख्यमिहामुत्रफलभोगविरागरूपमपरं वैराग्यं पूर्वमेव सिद्धमिति नतद्विषयेयं निर्वेदं गन्तासीत्युक्तिः ॥ किंत्वसंप्रज्ञातसमाधिजनकतया निदिध्यासनोपकारकपरवैराग्यविषया." इति ॥ अर्जुनः प्रागेवापरवैराग्यसंपन्नः । मोहातिक्रमे तेन परं वैराग्यं असंप्रज्ञातसमाधिजनकं प्राप्यं । अनन्तरं समाधिः प्राप्यः इत्यस्याशयः ॥ किंचानेनैव व्याख्यात्रा मोहकलिलमित्यत्र मोहः मूलाज्ञानविकाररूपः अपरोक्षज्ञानप्रतिबन्धको विव-

क्षितः इत्युक्तं ॥ तथाच मूलाविद्यापगमे परं वैराग्यं सम्भवति इत्युक्तं भवति )( एवं पौर्वापर्य जन्यजनकभावश्च परसिद्धान्तविरुद्धः ॥ अविद्यानिवृत्तिर्हि जीवन्मुक्तिः ॥ तदनन्तरं क पुनर्वैराग्यं समाधिर्वा ? ॥ किंचायं व्याख्याता शङ्करानुगः मधुसूदनं बहुतरमनुसरति ॥ ताभ्यांतु कर्मफलवैराग्यमेवेह विवक्षितमित्याशयः कथितः । अस्य स्वव्यूहपरिगृहीतस्य पक्षस्य निरासपूर्वकं पातंजलपरिभाषाश्रयेण यन्नूतनं वैराग्यनिरूपणं कृतं तद्वृथा श्रमो भाति )( 'ते' इति अर्जुनमात्रसम्बोधनं नाभिप्रेतं किंतु जीवसामान्यस्य सम्बोधनमिति ग्रहणे अर्जुनज्ञानित्वाधिकारित्वाद्युत्थिता या आकांक्षा सा सुलभसमाधाना भाति )॥

अत्रैवं चिन्त्यते ॥ किं निर्वेदशब्दस्सर्वथा वैराग्यपर एव ग्राह्यः अथवा प्रकरणोचितमन्यमर्थं निर्वहेत् इति )( शंकराचार्यार्थे श्रुतं श्रोतव्यं कृत्स्नं निष्फलं प्रतिपद्यते )( इदमतीवानिष्टं ॥ श्रुतादीनां साफल्ये हि श्रवणादिकमधिकारी कुर्यात् । अतो निर्वेदो नितरांलाभ इत्याह श्रीमदाचार्यः । नात्र व्याकरणानुपपत्तिः ॥ निरुपसर्गः सत्तार्थस्यैव विदेरर्थं बाधित्वा वैराग्यार्थं व्यवस्थापयति ॥ लाभार्थस्य विदेरर्थं विशिनष्ट्येव ॥ तथाहि निर्विन्दति निर्विन्दते इति वैराग्ये प्रयोगो न दृष्टः । नापि लाभार्थे निर्वेदशब्दस्य प्रयोगाभावः । "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य" इत्यत्र निर्वेदशब्दस्य नितरां लाभरूपार्थस्य दृष्टत्वात् ॥ नचवाच्यमत्रापि लाभार्थकत्वं नस्यादिति । तर्हि जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानं" इति पंचम्याः विहितत्वात् पाण्डित्यमिति द्वितीया न स्यात् ॥ गीताश्लोके श्रुतस्य श्रोतव्यस्य च नितरां लाभं महाफलं गन्तासि इति व्याख्याने अर्थपौष्कल्यं हृद्यं भवति ॥ श्रवणविषयमात्रप्रतिपादकमपि श्रुतश्रोतव्यपदद्वयं मतस्य मंतव्यस्य निदिध्यासितस्य निदिध्यासितव्यस्य कृतस्य करणीयस्येति सर्वकर्मोपलक्षकं ॥ सर्वाण्यपि हि सत्कर्माण्यनुष्ठितानि सफलानि नाम ॥ अतः कर्मकर्तव्यमित्युप-

दिश्य तदखिलं निष्फलं इत्युपसंहारात्तदखिलं सफलं इत्युपदेश एव श्रेयान्। "बुद्धिमोहो यदा नस्यादन्यथाज्ञानलक्षणः । श्रोतव्यश्रुतसाफल्यं तदा प्राप्नोति मानवः" इति नारदीयं गीतातात्पर्योदाहृतं प्रमाणं स्पष्टमिममर्थं द्रढयति ॥

प्रसंगात्पुनरत्र चिन्त्यते, किं श्रवणादिकं ज्ञानिभिरप्यनुष्ठेयं उताज्ञानिभिरेव ॥ ज्ञानिभिरनुष्ठाने विहिते सति ज्ञानस्याप्तत्वात्तैः किमनेन फलं लभ्यते इति ॥ ज्ञानिभिरप्यनुष्ठेयमेव तेषां फलं च विद्यते इत्याह सप्रमाणमाचार्यः॥ शुकाद्यनुष्ठानं महदाचारत्वेन स्फुटं ॥ श्रवणादिकमेव महासुखस्वरूपं भागवतानां ज्ञानिनामिति बहूनि सन्ति वचनानि भागवतादिषु॥ किंच ज्ञानिकृतं उपासनादिक मुक्तिप्रतिबन्धकभगवदिच्छानिवृत्तेः मुक्तौ स्वरूपानन्दसम्यगभिव्यक्तेः तत्रानन्दविशेषस्य तत्रैच्छिकविषयभोगानां च हेतुरिति कर्मसाफल्ये कस्सन्देहः ॥ कश्चिदत्र शंकेत यदि ज्ञानिनामप्यनुष्ठानं विद्यते तर्हि अनुष्ठानस्यैकविध्यनियमासंभवात्स्वर्गवदपवर्गेऽपि तारतम्यं प्रसज्येतेति ॥ अत्रोच्यते ॥ नास्माकमिदमनिष्टं मुक्तावानन्दतारतम्यस्य प्रामाणिकत्वात् ॥ 'निरंजनः परमं साम्यमुपैति' इति साम्यवचनं प्राचुर्यविषयं दुःखाभावविषयं च ॥ "यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे । तथा मुक्तिविशेषोऽपि ज्ञानिनां लिंगभेदने" ॥ "योगिनां भिन्नलिंगानामाविर्भूतस्वरूपिणां । प्राप्तानां परमानन्दतारतम्यं सदैव हि" इत्युक्तेः ॥ "दुःखाभावः परानन्दो लिंगभेदस्समो मतः ॥ तथापि परमानन्दो ज्ञानभेदात्तु भिद्यते" इति नारायणाष्टाक्षरकल्पे ॥ अतो न वैराग्य श्रुतादावत्र विवक्षितं ॥ किन्तु अनुष्ठितानुष्ठेयसर्वसत्कर्मणां साफल्यमेवेति सिद्धम् ॥

श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥५३

वि ॥ किं तन्मोहकलिलं कीदृशं च तदतितरणमित्याकांक्षायां पुंसामधममध्यमोत्तमावस्थादिप्रदर्शनेन पूर्वश्लोकोक्तमेव योगानुष्ठानविधिं स्पष्टयति ॥ श्रुतीति । परोक्षनिश्चयात्पूर्वावस्थायां श्रुतिभिर्वेदैर्विप्रातिपन्ना विरुद्धा सती बुद्धिर्यदा वेदार्थानुकूलेन तत्वनिश्चयेनासच्छास्त्रैश्चालनहीना इदमदो वेति संशयानास्कन्दिता सती स्थास्यति ॥ ततश्च समाधिर्भवति ॥ जाते च समाधौ असंप्रज्ञातध्याने अपरोक्षज्ञानं भवति ॥ तेन च ब्रह्मदर्शनेन परमानन्दमग्नतया भेरीताडनादिनापि चलनहीना बुद्धिर्मनो यदा स्थास्यति तदा योगं योगफलं ज्ञानोपायानुष्ठानस्य फलमवाप्स्यसीत्यर्थः॥ पूर्वावस्थायामनुष्ठितयोगस्य परोक्षभगवन्निश्चयावधित्वमुक्तं । परोक्षनिश्चयस्य काष्ठातु असच्छास्त्रैरनेकधापरिलोड्यमानत्वेऽप्यप्रामाण्यशङ्काकलङ्कितत्वशून्यत्वम् ॥ तद्दशायामनुष्ठितानिवृत्तकर्मरूपयोगस्य तु समाधौ भगवदपरोक्षज्ञानावधित्वं ॥ तस्य तु काष्ठा भेरीताडनादिनाप्यप्रतिबोधसमाधिस्थत्वं । एतेन बुद्धेर्मनसः मोहकलिलं श्रुतिविरुद्धत्वरूपो दोषः। तत्तरणं नाम वेदार्थानुकूलेन निश्चयेन दृढतयाऽवस्थानं। तदा निर्वेदं गन्तासीत्यस्य विवरणं समाधावचला बुद्धिरित्युक्तं

भवति ॥ श्लोकद्वयस्याप्यचञ्चलसमाध्यवस्थाप्राप्तिर्योगानुतात्पर्यं ध्येयम् ॥ यद्वा बुद्धिर्मनः श्रुतिविप्रतिपन्ना श्रुतिविशेषेण प्रपन्ना श्रुत्यर्थनिर्णयं प्राप्ता सती इदमदो वेति चञ्चलत्वहीना यदा स्थास्यति तदा समाधौ । समाधिः समाधानं । सतिसप्तमी । श्रुत्यर्थनिश्चयेन निश्चलत्वे सति अपरोक्षज्ञानं भवतीति योज्यम् ॥ तेन च विष्णावचला भवति बुद्धिः ॥ ततश्च योगं भगवद्योगं मुक्तिमवाप्स्य-

शं ॥ मोहकलिलात्ययद्वारेण लब्धात्मविवेकजप्रज्ञः कदा कर्मयोगजं फलं परमार्थयोगमवाप्स्यामि इति चेत् शृणु ॥ श्रुतिविप्रतिपन्नेति ॥ श्रुतिविप्रतिपन्ना अनेकसाध्यसाधनसम्बन्धप्रकाशनश्रुतिभिः श्रवणैः प्रवृत्तिनिवृत्तिलक्षणैः विप्रतिपन्ना नानाप्रतिपन्ना श्रुतिविप्रतिपन्ना विक्षिप्ता सती ते तव बुद्धिः यदा यस्मिन् काले स्थास्यति स्थिरीभूता भविष्यति निश्चला विक्षेपचलनवर्जिता सती, समाधौ समाधीयते चित्तमस्मिन्निति समाधिः आत्मा तस्मिन्नात्मनि इत्येतत् अचला तत्रापि विकल्पवर्जितेत्येतत् बुद्धिरन्तःकरणं तदा तस्मिन्काले योगं अवाप्स्यसि ॥

रा ॥ 'योगेत्विमां शृणु' इत्यादिनोक्तस्यात्मयाथात्म्यज्ञानपूर्वकस्य बुद्धिविशेषसंस्कृतस्य धर्मानुष्ठानस्य लक्षणभूतं योगाख्यं फलमाह ॥ श्रुतिः श्रवणं। अस्मत्तः श्रवणेन

विशेषतः प्रतिपन्ना सकलेतरविसजातीयनित्यनिरतिशय-सूक्ष्मात्माविषया स्वयमचला एकरूपा बुद्धिरसङ्गकर्मानुष्ठानेन निर्मलीकृते मनसि यदा निश्चला स्थास्यति तदा योगं आत्मावलोकनं अवाप्स्यसि ॥ एतदुक्तं भवति । शास्त्र-जन्यात्मज्ञानपूर्वककर्मयोगः स्थितप्रज्ञताख्यज्ञाननिष्ठामापा-दयति । ज्ञाननिष्ठारूपा स्थितप्रज्ञता तु योगाख्यमात्मावलो-कनं साधयतीति ॥

विचारः

तदा योगमवाप्स्यसीति चतुर्थपादे योगशब्देन योगफलमुच्यते नतु कर्मयोग इत्यत्र प्रायशो न विवादः॥ "योगस्सन्नहनोपायध्यानसंगतियुक्तिषु" इत्यभिधानमाश्रित्य आत्मावलोकनं योगोऽत्र विवक्षित इति रामानुजदेशिकौ॥ सांख्ययोगो विवक्षित इत्येके ॥ प्रज्ञास्थैर्यमुक्तं इत्यन्ये ॥ कर्मयोगफलमुक्तं इति मधुसूदनः ॥ सर्वयोगफलं विवक्षितं इत्याचार्यः ॥ अन्यथा योग-शब्देन स्वशक्यार्थस्यैव ग्रहणे योगस्य ज्ञानात्पूर्वभाव्यवस्थात्वात् कथमवाप्स्य-सीत्युक्तं युक्तं भवेत् ॥ तस्मात्सर्वेऽपि प्रायशो योगशब्दस्य योगफलपरत्व-माहुः॥

श्रुतिविप्रतिपन्नेतिपादत्रयं तु आपाततोऽनुपपन्नाभिधेयं भाति॥ योग-फलावाप्तये बुद्धेः श्रुतिविप्रतिपन्नत्वं निश्चलत्वं अचलत्वं च श्रूयते ॥ त्रीण्यप्येकस्यैवानुतिष्ठतः कथं नाम सन्गच्छन्ते ॥ यदि श्रुतिविप्रतिपन्नेति श्रवणादितोऽपि वैराग्यं अभिप्रेतं स्यात्तर्हि निर्वेदशब्दोऽपि वैराग्यार्थः किं नस्यात् ॥ (गी. भा.) यथाह भास्करः—"वस्त्वन्तरश्रवणाद्विरक्तेति" ॥ किंच निश्चला अचलेति पर्यायप्रयोगोऽनुपपन्नः ॥ तस्माच्छ्रुतिविप्रतिपन्नत्व-निश्चलत्वाचलत्वविशेषणानि त्रीण्येकस्यैवावस्थाविशेषोपेतयोगिनोऽगतया न

वृतानि ॥ अपितु अवस्थाभेदमादाय प्रवृत्तानीति वक्तव्यं ॥ अवस्था तिस्रः संभाविताः ॥ तत्र श्रुतिविप्रतिपन्नत्वावस्था अधमा यस्यां असच्छास्त्रैर्वाऽन्यदोषैर्वा बुद्धिर्वेदविरोधिनी यदा मोहकलिलं बुद्धिमाक्रमते ॥ मोहव्यतितरणे तु मध्यमावस्था, यदा बुद्धिः श्रुत्यनुकूला निश्चला स्थास्यति कुतर्कैः कुशास्त्रैर्वा न कंप्यमाना ॥ अत्रेयं श्रुतिविप्रतिपन्नत्वमतिलंघ्य प्राप्तेति अस्याः श्रुत्यानुकूल्यं अर्थाल्लभ्यते ॥ पूर्वं हरिसर्वोत्तमत्वादौ संशयविपर्यासग्रस्ता सती यदा असंभावनाविपरीतभावनानिरासपूर्वकं श्रुतिसमन्वयबलेन वेदप्रतिपाद्ये श्रीहरौ भक्तिर्निश्चला सत्सिद्धान्तप्रमेयेषु दृढमतिश्च तदा परोक्षनिश्चयावस्था लब्धा ॥ उत्तमावस्थायां बुद्धिस्समाधावचला । अस्यामसंप्रज्ञातसमाध्यवस्थायां भगवदपरोक्षज्ञानं विशेषः ॥ ते बुद्धिः पूर्वं श्रुतिविप्रतिपन्ना अनन्तरं निश्चला श्रुत्यानुकूल्येन स्थास्यति अनन्तरं समाधावचला । अस्यामवस्थायां लब्धायां योगफलमवाप्तं भवतीति भावः ॥

(श्रुतिविप्रतिपन्नेत्यत्र विप्रतिपन्नत्वं विरुद्धप्रतिपत्तिरित्यादाय विरोधकारणं श्रुतिरिति च मत्वा श्रुतिशब्दार्थमनेकधा वदन्ति व्याख्यातारः ॥ श्रुतिः श्रवणं । योग्यतया नानालौकिकवैदिकानि श्रवणानि गृह्यन्ते । तैर्बुद्धिर्विक्षिप्तेति केचित् । (श्रीधरः) ॥ श्रुतिराम्नायः। अविचारिततात्पर्यैः वैदिकफलश्रवणैर्विक्षिप्तेत्यन्ये । (मधु) ॥ वेंकटनाथस्तु श्रुत्या पूर्वोपदिष्टसाङ्ख्यबुद्ध्युपदेशश्रवणेन विप्रतिपत्तिमसंभावनां प्राप्ता इति व्याचष्टे ॥ इदमसङ्गतं । नत्वेवाहमित्यारभ्य एषा ते इत्यन्तं साङ्ख्यमुपदिश्यानेन सांख्यश्रवणेनार्जुनबुद्धिर्विक्षिप्ता विपर्ययकलुषितेति भगवान् किमित्याहेति न ज्ञायते ॥ सांख्यस्य विक्षेपकारित्वं कुतो ज्ञायते ॥ श्रुतस्य साङ्ख्यस्य मोहकत्वे श्रोतव्यस्य गीताशास्त्रशेषस्यापि कुतो न मोहकत्वं कल्प्यते ॥ अयं व्याख्याता श्रुतिशब्दार्थं रामानुजभाष्यात्स्वीचक्रे इति ज्ञायते ॥ रामानुजाचार्यस्तु श्रुतिशब्दं "अस्मत्तः श्रवणेन" इति व्याख्याय विप्रतिपन्नेति पदं तु विशेषतः प्रति-

पन्ना इति व्याचष्टे न तु विरुद्धतया प्रतिपन्नेति ॥ अनेनार्धार्थस्वीकारेण भगवदुपदिष्टसाङ्ख्यस्यानर्थहेतुत्व संपादितं वेङ्कटनाथेन ॥

श्रुतिविप्रतिपन्ना वेदविरुद्धा इत्याचार्यस्य व्याख्यान ॥ आम्नायार्थकत्वेऽपि श्रुतिशब्दोऽत्र विरोधप्रतियोगिन बोधयति नतु विरोधहेतुं ॥ तथाच किं विरुद्धबुद्धिरधमावस्थायां इत्याकांक्षाशमनाय प्रयुक्तं श्रुतीति न तु कुतो विक्षेप इति प्रश्नस्योत्तरत्वेनेत्याशयः ॥

समाधौ निश्चला समाधौ अचला स्थास्यतीति योजनामभिप्रयन्तः परे नैश्चल्याचलत्वयोर्वैलक्षण्यबोधनाय नयतन्ते ॥ समाधिः परंब्रह्मेत्यद्वैतव्याख्यातारः ॥ मनउच्यते इति रामानुजाचार्यः ॥ समाधौ परमेश्वरे निश्चला विषयान्तरैरनाकृष्टा अतएवाचला अभ्यासपटुत्वेन तत्रैव स्थिरा इति हेतुहेतुमद्भावमादाय पौनरुक्त्यं परिहरति श्रीधरः ॥ समाधौ परमात्मनि निश्चला जाग्रत्स्वप्नदर्शनलक्षणविक्षेपरहिता अचला सुषुप्तिमूर्च्छास्तब्धीभावादिरूपलयलक्षणचलनरहिता सती स्थास्यति इति मधुसूदनेन व्याख्यातं॥ लयविक्षेपलक्षणौ दोषौ परित्यज्य समाहिता भविष्यति इति भावश्चोक्तः ॥ इदं व्याख्यानं क्लिष्टं ॥ अस्वारस्यभियेव पक्षान्तरेणापि व्याख्यातमनेनैव ॥ "निश्चला असम्भावनाविपरीतभावनारहिता अचला दीर्घकालादरनैरन्तर्यसत्कारसेवनैर्विजातीयप्रत्ययादूषिता" इति ॥ अयमक्षरलब्धार्थः कथं भवतीति चिन्त्यम् । विपर्ययराहित्यं नैश्चल्यं संशयराहित्यं अचलत्वं इति शङ्कराशयउक्तः आनन्दगिरिटिप्पण्यां ॥

अयमत्राचार्याभिसन्धिः ॥ निश्चला स्थास्यति इत्येकं वाक्यं, अचला समाधौ स्थास्यतीत्यपरं ॥ समाधिरसंप्रज्ञातावस्थोच्यते ॥ नैश्चल्याचलत्वयोरैक्येऽपि वाक्यभेदेनावस्थाभेदप्रतिपादकतया सार्थक्यम् ॥ नैश्चल्य श्रुतिविप्रतिपत्तिवैलक्षण्यं सूचयति ॥ अचाञ्चल्यं समाध्यवस्थायां भगवदे-

काग्रत्वं सूचयति ॥ निश्चलेति परोक्षज्ञानकाष्ठा दर्शिता, अचलेत्यपरोक्षज्ञानकाष्ठा दर्शिता॥ वाक्यभेदात्प्रकरणभेदात्समभिव्याहृतशब्दभेदादर्थभेद उपपन्नो ज्ञेयः ॥

इदमत्रावधार्यं ॥ पूर्वश्लोकप्रकृतश्लोकयोस्संगतिमालोच्यैकवाक्यताजिज्ञासायां पूर्वश्लोकव्याख्यानरूपं प्रकृतं पद्यमित्यवगम्यते ॥ तथाहि—(मोहकलिलं तद्व्यतितरणं निर्वेदगमनं चोक्तानि पूर्वश्लोके ॥ मोहशब्दार्थे विप्रतिपत्तयो दर्शिताः ॥ मूलभावाविद्यैवास्यार्थ इति कश्चिदाह॥ जगत्सत्यत्वभ्रान्तिरित्यन्यः । एवं सभावितमोहस्वरूपवैविध्ये भगवद्वचसैव मोहशब्दार्थाधिगतिस्संभवतीत्याचार्यहृदयं ॥ श्रुतिविप्रतिपन्नत्वमेव मोह इति भगवदाशयात् ॥(ये पुरुषा वेदापौरुषेयत्वे वेदार्थसत्यत्वे वैदिकपरममुख्यामुख्यप्रतिपाद्येषु च विप्रतिपद्यन्ते अतत्त्वं तत्त्वतया गृह्णन्ति ते सर्वे मोहकलुषिता इति भावः )॥ एवं मोहकलिलव्यतितरणं किन्नामेत्याकांक्षायां वेदार्थानुकूल्येन बुद्धेर्भवगति नैश्चल्यं समाधावचलत्वं चेति समाहितं ॥ निर्वेदशब्दो वैराग्यपरो वाऽन्यपरोवेति विचारितः पुरस्तात् ॥ वैराग्यमेवार्थ इति शङ्कराचार्यादयस्सर्वे ॥ नितरां लाभो विवक्षितः इत्याचार्यः ॥ अस्मिन् विवादे प्रकृतश्लोकगत "तदा योगमवाप्स्यसि" इत्युक्तिराचार्यव्याख्यानानुकूला ॥ यथा मोहकलिलं इत्यस्य व्याख्यानरूपा श्रुतिविप्रतिपन्नेत्युक्तिः । बुद्धिर्व्यतितरिष्यतीत्यस्य स्पष्टनरूपा यदा स्थास्यति निश्चला समाधावचला चेति च । तथा गन्तासि निर्वेदमित्यस्य स्फुटीकरणरूपा तदा योगमवाप्स्यसीत्युक्तिः ॥ उभयस्यापि फलनिरूपकत्वात् ॥ एवं श्लोकद्वयस्य तात्पर्यैक्यं व्याख्यानव्याख्येयभावं चाभिप्रेत्याहाचार्यः प्रकृतपद्यावतारिकायां भाष्ये "तदेव स्पष्टयति" इति ॥ साधूक्तमेतत् ॥

अधममध्यमोत्तमावस्थाभेदमादाय श्लोकं व्याख्याय भाष्ये विवक्षान्तरपरत्वेनाप्याचार्यो व्याचष्टे गीतातात्पर्ये॥ तदनुसारेणाह विवृतिकारः

"श्रुतिविप्रतिपन्ना श्रुत्यर्थनिर्णयं प्राप्ता सती निश्चला अनन्तरं समाधाने सति अपरोक्षज्ञानं भवति। तेन विष्णौ अचला भवति बुद्धिः" इति ॥ श्रुतिमार्ग विशेषेण प्रतिपन्ना वेदार्थावगाहने प्रवृत्ता श्रवणेनाज्ञानेऽपगते यदा निश्चला मननेन संशये विपर्यये च निरस्ते तदर्थावधारणेन निश्चला भवति निदिध्यासनरूपेण अचला स्थास्यतीत्याशयः ॥ श्रुतिविप्रतिपन्नेति श्रवणं तत्फलीभूतो निश्चयश्चोक्तः ॥ निश्चलेत्यनेन मननमुक्त ॥ समाध्यचलशब्दाभ्यां निदिध्यासन इति ॥

"श्रुतिमार्गे प्रपन्ना तु तदर्थज्ञाननिश्चला। समाधानेन तु पुनरापरोक्ष्याच्च निश्चला ॥ विष्णौ प्राप्स्यति तद्योगं मुक्तो भूत्वा तदश्नुते" इति नारदीयवचनमुदाहृतं ॥ (गी०ता)

श्रुतिविप्रतिपन्ना श्रुतिजन्यविशेषप्रतिपत्तिमतीति व्युत्पत्तिः शङ्करानन्देनाप्यनुसृता ॥ तथा रामानुजाचार्यस्यापीयं सम्मता ॥ नैश्चल्यं मननस्थिरीकृतत्वं अचलत्व कुतर्कैरकपनीयत्वं पूर्वोक्तबहुशाखत्वानन्तत्ववैधुर्य इति देशिकः ॥

समाधीयते अस्मिन्नात्मज्ञानमिति समाधिर्मनः इति रामानुजव्याख्या॥ मनसि बुद्धिरित्यर्थो दुर्बलो भाति ॥ बुद्धिशब्देनैव मनसो ग्रहणसम्भवात् ॥ श्रवणादिभेदमादाय यः पद्यभावउक्तः तं संवादयति देशिकवाक्यमपि । यथोक्तम् ॥ "प्रथमं शास्त्रतत्त्वज्ञानं ततः स्मृतिरूपमुपासनं ततस्तन्मूलस्साक्षात्कारः इति ज्ञानपर्वभेदः प्रदर्शितः" इति ॥

*अर्जुनउवाच*—

**स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।**
**स्थितधीः किं प्रभाषेत किमासीत व्रजेत किं ॥ ५४ ॥**

वि ॥ ज्ञानिनि प्रकृते लब्धावसरोऽर्जुनः प्रागुक्तलक्षणानुवादपूर्वकं लक्षणान्तरादिकं पृच्छति ॥ स्थितेति ॥ स्थितप्रज्ञस्य स्थिता प्रतिष्ठां प्राप्ता प्रज्ञाऽपरोक्षद्दशिर्यस्य सतथा॥ तस्य समाधिस्थस्य समाध्यवस्थां गतस्य प्राक् त्वदुक्तादिशाऽसंप्रज्ञातध्यानस्थत्वलक्षणं गतस्य का भाषा । भाष्यतेऽनयेति भाषाशब्दो लक्षणवचनः । किंलक्षणमित्यर्थः । येन लक्षणेनायं ज्ञानीति व्यवह्रियते तत्किमित्यर्थः ॥ केशव ब्रह्मरुद्रप्रवर्तक । केशाद्वोऽन्यतरस्यां इति मत्वर्थे वप्रत्ययोक्तेः । प्रशस्तकेशवानिति वा ॥ स्थितधीः अपरोक्षज्ञानी किं प्रभाषेत । किंप्रत्यासीत । किमुद्दिश्य व्रजेत प्रवृत्तिं कुर्यादित्यर्थः ॥ अत्र किंलक्षणमिति वक्तव्ये यौगिकभाषाशब्देन तदुक्तिः प्रागुक्तं समाधिस्थत्वलक्षणमयावद्द्रव्यभावित्वान्न सम्यग्व्यवहारोपयोगि, यावल्लक्ष्यभावि तु सम्यक्सार्वत्रिकव्यवहारोपयोगि, अतस्सार्वत्रिकव्यवहारभूतं यावल्लक्ष्यभावि लक्षणं किमिति प्रष्टुमिति ज्ञेयं । स्थितप्रज्ञस्य का भाषेत्येव पूर्तौ समाधिस्थस्येति प्राचीनलक्षणानुवादस्तु त्वदुक्तं लक्षणं ज्ञातं

तन्न पृच्छयते येन सिद्धार्थता प्रश्नस्य स्यात् किंत्वन्यदेव पृच्छयते इति ज्ञापयितुं ॥ यद्वा समाधिस्थस्य विषमबुद्धिवर्जितस्येत्यर्थः । उत्तरार्धे किंशब्दः आक्षेपार्थः ॥ ( भेरीताडनादिनापि अप्रतिबद्धो ब्रह्मदर्शनेन परमानन्दमग्नत्वात् स्थितधीरपरोक्षज्ञानी भाषणोपवेशनगमनादिप्रवृत्तिं किमर्थं कुर्यात् ॥ करोति च शुकादिः ॥ अतस्समाधावचला बुद्धिस्तदा योगमवाप्स्यसीत्युक्तमसदिति ॥

शं ॥ प्रश्नबीजं प्रतिलभ्यार्जुनउवाच लब्धसमाधिप्रज्ञस्य लक्षणबुभुत्सया ॥ स्थितप्रज्ञस्येति ॥ स्थिता प्रतिष्ठिता अहमस्मिपरंब्रह्मेति प्रज्ञा यस्य सः स्थितप्रज्ञः । तस्य का भाषा किं भाषणं वचनं । कथमसौ परैर्भाष्यते । समाधिस्थस्य समाधौ स्थितस्य हे केशव ॥ स्थितधीः स्थितप्रज्ञः स्वयं वा किं भाषेत ॥ किमासीत व्रजेत किं ॥ भाषणं व्रजनं वा तस्य कथमित्यर्थः ॥ स्थितप्रज्ञस्य लक्षणमनेन श्लोकेन पृच्छयते ॥

रा ॥ एवमुक्तः पार्थोऽसङ्गकर्मानुष्ठानरूपकर्मयोगसाध्यस्थितप्रज्ञतायाः योगसाधनभूतायास्स्वरूपं स्थितप्रज्ञस्यानुष्ठानप्रकारं च पृच्छति ॥ समाधिस्थस्य स्थितप्रज्ञस्य का भाषा को वाचकश्शब्दः ॥ तस्य स्वरूपं कीदृशमित्यर्थः ॥ स्थितप्रज्ञः किं च भाषणादिकं करोति ॥

विचारः

(भाषाशब्देन लक्षणमुच्यते इति सर्वसंमतं ॥ भाष्यते अनयेति भाषा ययाऽयं ज्ञानीति व्यवह्रियते इति यावत् )( प्रसिद्ध 'लक्षण' पदं विहायाप्रसिद्धभाषापदप्रयोगे प्रयोजनमुक्तं प्रमेयदीपिकायां "यावल्लक्ष्य-भावि सार्वत्रिकव्यवहारोपयोगि(लक्षणं) ज्ञास्यामीति" इति॥ स्थितप्रज्ञस्य का भाषा इति प्रयोगे षष्ठ्यंतार्थस्य कर्तृतयाऽन्वये तत्कर्तृकं भाषणं बोध्येत ॥ किं प्रभाषेतेत्यनेनायमर्थः पुनरुक्तो भवेत् ॥ तस्माद्भाषाशब्दो लक्षणवचनः ॥

ज्ञानिलक्षणविषयकमर्जुनप्रश्नं प्रति कश्चिच्छंकते जीवन्मुक्तलक्षणप्रश्नो मुमुक्षोरर्जुनस्य नोचितइति(धर्मदत्तशर्मा) ॥ अज्ञत्वमभ्युपगम्य शङ्कां मधु-सूदनस्समाधत्ते "यान्येव जीवन्मुक्तानां लक्षणानि तान्येव मुमुक्षूणां मोक्षोपायभूतानि इति मन्वानः अर्जुनः उवाच" इति ॥

ज्ञानिनि प्रकृते लब्धावसारोऽर्जुनः प्रष्टुमप्यनर्हइति शङ्का आश्चर्य-करा ॥ अज्ञत्वमङ्गीकृत्य समाधानमपि तुल्यं ॥ यतो वस्तुतो नार्जुनो मूढः। नचासौ न जानाति ज्ञानिलक्षणादिकं॥ "(जानन्ति पूर्वराजानो देवर्षयस्तथैव च। तथापि धर्मान्पृच्छन्ति वार्तायै गुह्यवित्तये ॥ न ते गुह्याः प्रतीयं-ते पुराणेष्वल्पबुद्धिनां" इति वचनात् ज्ञानिनोऽपि पृच्छन्तीति प्रसिद्धं ॥

कर्मयोगप्रकरणे का सङ्गतिर्ज्ञानिलक्षणस्येति संशयस्तूचित एव। यानि ज्ञानिलक्षणानि तान्येव ज्ञानोपायभूतयोगरूपाणि ॥ परन्तु ज्ञानार्थिनैतानि यत्नसाध्यानि ज्ञानिनि तु स्वभावसिद्धानीति न्यायो ज्ञानिलक्षणस्य प्रकरण-प्राप्तत्वं संपादयति )॥

अस्मिन् श्लोके कस्य लक्षणं पृष्टमर्जुनेनेति संदिह्यते ॥ समाधिस्थ-स्यैव स्थितप्रज्ञस्य लक्षणं पृष्टमिति केचित् ॥ तथाहि—वाक्यगत्याऽऽपाततो ज्ञानिमात्रव्युदासाय समाधिस्थस्येति विशेषणं दत्तमिति प्रतीयते ॥ ज्ञानी

अवस्थाद्वयवान्प्रसिद्धः समाधिस्थो व्युत्थितश्चेति ॥ समाधिस्थो ज्ञानीत्यत्र न संदेहः ॥ व्युत्थितस्य तु ज्ञानित्वे स्यादीषत्संशयावकाश. । सोऽपि वासिष्ठे समाहितः "परव्यसनिनी नारी व्यग्रापि गृहकर्मणि । तदेवास्वादयत्यन्तः परसंगरसायनं ॥ एवं तत्त्वे परे शुद्धे धीरो विश्रान्तिमागतः । तदेवास्वादयत्यन्तर्बहिर्व्यवहरन्नपि" इति ॥ तस्माद्व्युत्थितस्यापि ज्ञानिनो लक्षणं प्रश्नार्हं । समाधिस्थस्य ज्ञानिनस्तु प्रश्नस्सुतरां सङ्गतः तथैव कण्ठरवेणोक्तेः ॥ अतः पद्यस्य पूर्वार्धे समाधौ स्थितस्य लक्षणं अपेक्षितं ॥ द्वितीयार्धे स्थितधीरिति व्युत्थितविषयः प्रश्नः । अतएव "लब्धसमाधिप्रज्ञस्य लक्षणबुभुत्सया अर्जुन उवाच" इति शङ्करभाष्यं । तथैव "लब्धसमाधेः स्थितप्रज्ञापरनाम्नो लक्षणानि" इति नीलकण्ठीये ॥ तथैव मधुसूदनीये तथा वेङ्कटनाथेन च ॥

अत्रोच्यते ॥ ज्ञानिसामान्यलक्षणविषय एवायमर्जुनप्रश्नः ॥ समाधिस्थस्येत्युक्तिरसमाधिस्थं ज्ञानिनं व्युदस्य ज्ञान्येकदेशं समाधौ स्थितमुद्दिश्य न प्रवृत्ता ॥ इमास्तावदत्रोपपत्तयः ॥ प्रतिवचनं हि प्रश्नानुगुण्येन विद्यमानं । न हि भगवान्प्रष्टुर्भावं नाध्यगच्छादिति युक्तं ॥ प्रजहातीत्यादिप्रतिवचनग्रन्थे समाध्यवस्था नोपपादिता ॥ कामवर्जनं द्वन्द्वसहनं इत्यादिकं उक्तं लक्षणत्वेन ॥ प्राणायामादिप्रसक्तिस्तु न दृश्यते ॥ प्राणनिरोधं यदा करोति स्थितप्रज्ञस्तदोच्यते इत्यन्यथाऽवक्ष्यत् ॥ नच तथोक्तं ॥ "तत्रैव प्रत्ययैकतानताध्यानं तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः" इति पातंजलसूत्रे ॥ तदानुगुण्येन समाधिलक्षणं उक्तं स्यात् ॥ किंच "यस्सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभं । नाभिनन्दति न द्वेष्टि" इति प्रतिवचनग्रन्थे शुभाशुभप्राप्तिरुक्ता ॥ नह्यत्रासंप्रज्ञातस्य बाह्यानुसंधानरहितस्य शुभाशुभप्राप्तेरवसरः ॥ लक्षणप्रश्नस्य समाधिस्थमात्रगोचरत्वे यस्सर्वत्रेत्यपृष्टोत्तरं स्यात् ॥ ननु तर्हि शुभाशुभप्राप्त्युक्तिबलेनास्तु नाम प्रश्नविषयस्संप्रज्ञात एव, न तु

संप्रज्ञातासंप्रज्ञातोभयसाधरणो ज्ञानीति चेन्न ।। अन्यश्लोकेषु प्रजहातीत्यादिपूक्तानां कामवैधुर्यादीनामसंप्रज्ञातेऽपि संभवात् । यदि तस्यालक्ष्यत्वं तर्हि लक्षणमतिव्याप्तं प्रसज्येत ।। न च वाच्यं यस्सर्वत्रेत्युक्तलक्षणस्य लक्ष्यान्तर्भूतासंप्रज्ञाते अभावेनाव्याप्तेः लक्षणं दुष्टमिति ।। लक्षणप्रयोजनस्य गौरितिव्यवहारस्य गवेतरव्यावृत्तेश्च कपिलत्वेनापि सिद्ध्या अव्याप्तेरदोषत्वात् । तस्मात्प्रश्नो ज्ञानिसामान्यपरो भवितुमर्हति ।।'

(२) स्थितप्रज्ञः इत्यनेन समाधिस्थः, स्थितधीरित्यनेन व्युत्थितः इति विभागस्य बीजं दुर्ज्ञेयं ।।

(३) यद्यपि शंकरभाष्यं "लब्धसमाधिप्रज्ञस्य लक्षणबुभुत्सया अर्जुन उवाच" इति ।। तदनुसृत्य मधुसूदननीलकण्ठादयोऽवस्थाद्वयमालंब्य किंचित्स्वाचार्य परिरक्षन्ति ।। श्रीमध्वभाष्यटीकाप्रदर्शितोपपत्तिभीताविव शङ्करभाष्यटीकाकार उत्कर्षदीपिकाकारश्च स्वाचार्यभावमन्यथा कथयतः । तथाहि—उ० दीपिकायां "तत्त्वविल्लक्षणानि जिज्ञासुरर्जुन उवाच ।। स्थिता प्रतिष्ठिताऽहंब्रह्मास्मीति प्रज्ञा यस्य स एव समाधिस्थः । नह्यात्मज्ञानशून्यस्य मुख्यसमाधिरस्तीति भावः ।। एतेन, अवस्थाद्वयवान् योगी समाधिस्थो व्युत्थितचेताश्चेति । अतो विशिनष्टि समाधिस्थस्य स्थितप्रज्ञस्य इत्यादि प्रत्युक्तम् ।। योगिनोऽप्रक्रान्तत्वेन तस्य लक्षणप्रश्नानौचित्यात् । तत्त्वज्ञानिरूपसमाधिस्थस्यैव प्रक्रान्तत्वात् । उत्तरे प्राणनिरोधं यदा करोति तदा समाधिस्थ इत्यनुक्तत्वाच्च ।। ज्ञानिनः प्राणायामानपेक्षसमाधेर्वासिष्ठे स्पष्टं उक्तत्वाच्च" इति । इदं मधुसूदनीयप्रत्याख्यानं कण्ठोक्त्या ।। एवं आनन्दगिरिव्याख्यायां च लब्धसमाधिप्रज्ञस्येति शङ्करभाष्यव्याख्यानावसरे असंप्रज्ञातत्वावस्थापक्षे दोषं मन्वानो व्याख्याता आह "लब्धा समाधौ आत्मनि समाधानेन वा प्रज्ञा परमार्थदर्शनलक्षणा येन" इति ।। एवं समाध्यवस्थाविवक्षां नानु-

मन्यते रामानुजाचार्योऽपि ॥ तस्मात्प्रश्नो ज्ञानिसामान्यपर इति पक्षएव श्रेयान् ॥

ननु तर्हि समाधिशब्दार्थः कः? समाधिस्थस्येति विशेषणस्य सार्थक्यं किं? इत्यवशिष्यते ॥ समाधिः परंब्रह्म वा समाधानं वेति केचित् ॥ (आनन्दगिरि) ॥ समाधिर्मनः समाधिस्थत्वं मनोनिग्रहवत्त्वं इति देशिकः । समाधिरात्मज्ञानं न तु प्राणायामगर्भितं योगाङ्गं इति शं०भाष्योत्कर्षदीपिकायां ॥ "स्थितप्रज्ञ एव समाधिस्थः । नह्यात्मज्ञानशून्यस्य मुख्यसमाधिरस्ति" इत्युपपादितं च ॥ तद्दार्ढ्याय वासिष्ठवचनान्युदाहृतानि ॥ "नित्यप्रबुद्धचित्तास्तु कुर्वन्तोऽपि जगत्क्रियाः । आत्मैकतत्त्वसन्निष्ठाः सदैव सुसमाधयः । बद्धपद्मासनस्यापि कृतब्रह्माञ्जलेरपि । अविश्रान्तस्वभावस्य कः समाधिः कथञ्चवा ॥ तत्त्वावबोधो भगवन् सर्वाशातृणपावकः । प्रोक्तस्समाधिशब्देन द्वन्द्वेष्वननुपातिनी ॥ प्रोक्ता समाधिशब्देन मेरोः स्थिरतराकृतिः ॥ निश्चिताऽभिगताऽभीष्टा हेयोपादेयवर्जिता ॥ प्रोक्ता समाधिशब्देन परिपूर्णा मनोगतिः । यतःप्रभृति बोधेन युक्तमात्यन्तिकं मनः ॥ तदारभ्य समाधानमव्युच्छिन्नं महात्मनः ॥" इत्यादिद्युक्तमसंप्रज्ञातार्थत्वं विहाय ॥

'समाधिस्थस्य विषमबुद्धिवर्जितस्य' इति गीतातात्पर्ये आचार्य आह ॥

किंच समाधिशब्देनासंप्रज्ञातावस्थाग्रहणेऽपि न बाधकं॥समाधिस्थस्येति विशेषणं असमाधिस्थं ज्ञानिनं लक्षणप्रश्नविषयाद्व्यावर्तयतीति तु नांगीक्रियते ॥ तस्य समाधावचलेत्युक्तार्थस्यानुवादरूपत्वात् । इदमनुवादे प्रयोजनं 'यद्यपि यद्भवदभिप्रेतं समाधिस्थत्वं ज्ञानिनो लक्षणमिति तज्ज्ञातं मया ॥ न तल्लक्षणं अतिव्याप्त्यसंभवदुष्टं ॥ परंतु लक्षणान्तरं ज्ञातुं पृच्छामि' इति सूचनमेव ॥ नच शङ्कनीयं "प्रश्नदोषा हि चत्वारः स्वव्याहतिरसङ्गतिः

सिद्धार्थता च वैफल्य" इति वचनादस्य प्रश्नस्य सिद्धार्थता वैफल्ये दोषाविति॥ उक्तपूर्वस्य समाधिस्थत्वस्य कृत्स्नस्थितप्रज्ञेष्वभावेन लक्षणस्याव्याप्तेर्यावल्लक्ष्य-भावि सार्वत्रिकव्यवहारोपयोगि लक्षणं अपेक्ष्यते इति पुनः प्रश्नस्य कृत-त्वात् ॥/

द्वितीयार्धे व्रजेतेत्यात्मनेपदमार्षं । आसेरकर्मकत्वात्किं प्रत्यासीतेति प्रतियोगात्कर्मप्रवचनीये द्वितीया । किशब्दार्थः आक्षेपः ॥ प्रभाषणादिकं प्रवृत्तिसामान्योपलक्षकं ॥ केचित्प्रभाषणोपवेशनगमनानां विशेषमाहुः ॥ तथाहि मधुसूदनः "किमासीत व्युत्थितचित्तनिग्रहाय कथं बहिरिन्द्रियाणां निग्रहं करोति तन्निग्रहाभावकाले च किं व्रजेत कथं विषयान्प्राप्नोति" इति ॥ तथाचासनमिन्द्रियनिग्रहः व्रजनं विषयप्राप्तिः इति तस्याशयः ॥

किशब्दाः क्रियाविशेषणतयाऽन्वीयमानाः क्रियाप्रकारप्रश्नपरा इत्या-दाय—"किं प्रभाषेत इति वाचिके कि व्रजेतेति कायिके च पृष्टे किमा-सीतेति मानसपरं, ध्यानार्थत्वादत्रासनस्य" इति देशिकः । द्वितीयार्धे स्थितप्रज्ञस्य वाचिककायिकमानसानुष्ठानप्रकारं, पूर्वार्धे स्थितप्रज्ञस्य स्वरूप-मपृच्छदिति रामानुजाशयः ॥

अत्र इन्द्रियनिग्रहाभावकाले कथं विषयान्प्राप्नोतीति व्याख्यानं निस्सारं ॥ तस्य स्थितप्रज्ञत्वेन सर्वदा स्वाधीनेन्द्रियत्वात् ॥ नापि प्रभाषणा-सनव्रजनानां गतिः प्रत्येकं वा विशेषतो वा प्रोक्ता यावदध्यायसमाप्ति ॥ प्रभाषेत इत्यस्य स्वार्थमात्रपरत्वे 'एवं वदति, भागवतादिकं पठति' इति वाचिककृत्यं विवरीकृतं स्यात् ॥ नापि कायिकानुष्ठानप्रकारो वर्णितः ॥ तस्मात्प्रवृत्तिसामान्यगोचरः प्रश्न इत्यवगम्यते ॥

[तथाचास्मिन् श्लोके द्वावेव प्रश्नावित्याचार्यभावः ॥ चत्वारः प्रश्ना इत्यन्ये । का भाषेत्येकः । भाषणादिप्रश्नानामेकरूपत्वाभिप्रायेण

प्रवृत्तिप्रश्नो द्वितीयः इत्याचार्यः ॥ क्रियापदत्रयघटितत्वेन त्रयः प्रश्नाः द्वितीयार्धे इति परे ॥ उपर्युक्तप्रकारेण समाधौ (१) किं तल्लक्षणं, व्युत्थाने (२) किं भाषणं (३) कथं इन्द्रियनिग्रहः (४) निग्रहाभावकाले कथं विषयप्राप्तिः, इति चत्वारः प्रश्ना निरूपिता मधुसूदनेन ॥ लक्षणं पृष्टं किंच वाचिकमानसकायिकव्यापाराः क्रमात्पृष्टा द्वितीयार्धे इति देशिकः ॥

प्रश्नप्रतिवचनं यावदध्यायसमाप्ति कृतमित्यविवादं ज्ञायते । कस्य प्रश्नस्य कुत्रोत्तरमिति व्याख्यातारो विप्रतिपद्यन्ते ॥ प्रजहातीति पद्यं का भाषेति लक्षणप्रश्नस्योत्तरं इत्यत्र नविवादः ॥ करणत्रयानुष्ठानप्रकारप्रश्नस्य साक्षादुत्तरेषु प्रजहातीत्यादिषु चतुर्षु प्रथमस्य (प्रजहातीत्यस्य) स्वरूप-प्रश्नोत्तरताऽपि भवतीति देशिकोक्तेः तस्यापीदं सम्मतम् ॥

दुःखेष्वित्यारभ्य अध्यायान्तं एवं विभागः सूचितो मधुसूदनेन ॥ दुःखेषु, यस्सर्वत्रेति द्वाभ्यां किंप्रभाषेतेत्युत्तरितं ॥ यदा संहरत इत्यारभ्य क्रोधादित्यन्तं (५८–६३) किमासीतेत्यस्य, रागेत्यारभ्य विहायेत्यन्तं (६४–७१) किं व्रजेतेत्यस्य उत्तरं दत्तं इति । अयं विभागस्तु शङ्करभाष्यो-त्कर्षदीपिकायां प्रत्याख्यातः । एवमेव वाचिकमानसकायिकव्यापारानुगुणो-त्तरान्वेषणेऽपि वृथा भाति श्रमः । या निशेति श्लोकमात्रं प्रवृत्तिप्रश्नस्योत्तरं, अन्ये यावदध्यायसमाप्ति श्लोका ज्ञानिलक्षणप्रतिपादका इति श्रीमदाचार्योक्तं ज्ञेयम् ॥

*श्रीभगवानुवाच—*

**प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान् ।**
**आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते॥५५**

वि० ॥ का भाषेति कृतलक्षणप्रश्नस्योत्तरमाह । प्रजहातीति ॥ उत्तरार्धे कृताक्षेपस्य तु समाधिं या निशेत्यग्रे वक्ष्यति । यदा मनोगतान्सर्वान्कामान्प्रजहाति परित्यजति॥ कामानित्युपलक्षणं कामक्रोधादीनित्यर्थः । यदा चात्मन्येव परमात्मन्येव व्यवस्थितः सन् तदेकचित्तःसन्निति यावत् । आत्मना परमात्मना तत्प्रसादेनेत्यर्थः । तुष्टः सन्तोषयुक्तः। तदा स्थितप्रज्ञोऽपरोक्षज्ञानी उच्यतइत्यर्थः ॥ अत्र सर्वान्कामानित्यस्य विरुद्धकामानित्यर्थः ॥ कामादेर्मनोगतत्वाव्यभिचारेऽपि मनोगतानित्युक्तिर्विरुद्धसर्वकामप्रहाणघटनाय ॥ ज्ञानस्य कामादेश्च मानसैकनिष्ठत्वात् 'रसोऽप्यस्य परं दृष्ट्वा निवर्तत' इति वक्ष्यमाणदिशाऽन्योन्यं विरुद्धत्वान्मनसि भगवज्ज्ञाने जाते तद्विरुद्धाः कामादयो न स्थातुमर्हन्तीति युक्तिसूचनेन तद्घटनात् ॥ प्रायःसर्वविरुद्धकामादित्यागवत्त्वे सति भगवदेकचित्ततया संतुष्टत्वं ज्ञानिलक्षणमित्युक्तं भवति । न च योगे त्विमां शृण्विति ज्ञानोपायं प्रतिज्ञाय ज्ञानिलक्षणोक्तिरसङ्गतेति शङ्क्यं ॥ प्रायो विरुद्धकामत्यागभगवदेकचित्ततत्प्रसादायत्तसंतोषवत्त्वादी -

नां ज्ञानिलक्षणतयोक्तवक्ष्यमाणानामेव ज्ञानोपायशब्दितयोगरूपत्वात्॥ परन्तु ज्ञानार्थिनैतानि यत्नसाध्यानि ज्ञानिनि तु स्वभावसिद्धानीति विशेषः।

श० ॥ स्थितप्रज्ञस्य लक्षणमनेन श्लोकेन पृच्छति ॥ यो ह्यादितएव संन्यस्य कर्माणि ज्ञानयोगनिष्ठायां प्रवृत्तः यश्च कर्मयोगेन, तयोः प्रजहातीत्यारभ्य आध्यायपरिसमाप्ति स्थितप्रज्ञलक्षणं साधनं चोपदिश्यते॥ सर्वत्रैव ह्यध्यात्मशास्त्रे कृतार्थलक्षणानि यानि तान्येव साधनान्युपदिश्यन्ते यत्नसाध्यत्वात्॥ यानि यत्नसाध्यानि साधनानि लक्षणानि च भवन्ति तानि॥ श्रीभगवानुवाच॥ प्रजहातीति॥ प्रजहाति प्रकर्षेण जहाति परित्यजति यदा यस्मिन् काले कामान् इच्छाभेदान् सर्वान् समस्तान् हे पार्थ मनोगतान् मनसि प्रविष्टान् हृदि प्रविष्टान्॥ सर्वकर्मपरित्यागे तुष्टिकारणाभावात् शरीरधारणनिमित्तशेषे च सति उन्मत्तप्रमत्तस्येव प्रवृत्तिः प्राप्ता इत्यतउच्यते॥ आत्मनि एव प्रत्यगात्मस्वरूपे एव॥ आत्मना स्वेनैव बाह्यलाभनिरपेक्षः तुष्टः परमार्थदर्शनामृतरसलाभेन अन्यस्मादलंप्रत्ययवान्। स्थितप्रज्ञः स्थिता प्रतिष्ठिता आत्मानात्मविवेकजा प्रज्ञा यस्य सः स्थितप्रज्ञः विद्वान् तदा उच्यते॥ त्यक्तपुत्रवित्तलोकेषणः संन्यासी आत्मारामः आत्मक्रीडः स्थितप्रज्ञ इत्यर्थः॥

रा ॥ वृत्तिविशेषकथनेन स्वरूपमप्युक्तं भवतीति वृत्तिविशेष उच्यते ॥ आत्मन्येवात्मना मनसा आत्मैकावलम्बनेन तुष्टः तेन तोषेण तद्व्यतिरिक्तान्सर्वान्मनोगतान् कामान् यदा प्रकर्षेण जहाति तदाऽयं स्थितप्रज्ञ इत्युच्यते॥ ज्ञाननिष्ठाकाष्ठेयम् ॥

विचारः ॥

अत्र स्थितप्रज्ञस्तदोच्यते इति वाक्यं अवधार्य ॥ अनेन समाधिं कुर्वत एव लक्षणमुच्यत इति भ्रमो निरस्यते ॥ मनोगतानिति विशेषणं व्यर्थमित्यापाततः प्रतीयेत ॥ अमनोगतकामसम्भवे हि व्यभिचारवारणाय मनोगतत्वविशेषणं सार्थकं स्यात् । सर्वेषां कामानां मनोगतत्वेन व्यर्थमिदं विशेषणमिति संदिह्येत ॥ उच्यते ॥ नैतद्व्यभिचारवारणार्थं प्रयुक्तं । किंत्वाक्षेपान्तरं शमयितुं॥ तथाहि । कामज्ञानयोरहिमूषिकवद्वैरित्वं वक्ष्यते "रसोऽप्यस्य परं दृष्ट्वा निवर्तते" इति ॥ सामानाधिकरण्ये हि वध्यघातुकभावस्सिध्यति ॥ अन्यथाऽसंभवीदं लक्षणं भवेत् ॥ असंभवं परिहर्तुं कामाः मनोगताः यथा तथा अपरोक्षज्ञानमपि मानसं इति सूचितं । तथाच अपरोक्षज्ञानकामयोरुभयोरपि मनोगतत्वेन वध्यघातुकत्वं नासंभवतीति सूचनाय मनोगतान् इति स्वरूपकीर्तनपरं वचनमिति ॥

कामान् सर्वानित्युक्तावपीयमुक्तिस्संकोचघटितेति वक्तव्यं ॥ अकामित्वं नाम निषिद्धकामित्वाभावः ॥ सर्वविरुद्धकामत्यागोऽपि लोके न दृष्टः ॥ तस्मात्प्रायोविरुद्धकामत्यागएव विवक्षितः ॥ एवं सङ्कोचे प्रमाणमुदाहृतं तात्पर्ये ॥ "सर्वकामनिवृत्तिस्तु जानतो न कथञ्चन । अनिषिद्धकामितैवातो ह्यकामित्वमितीर्यते ॥ अपरोक्षदृशोऽपि स्याद्यदा नास्त्यपरोक्षदृक् । अतोऽन-

भिभवो यावद्दृशस्तावन्निगद्यते ।। स्थितप्रज्ञस्तथाप्यस्य कादाचित्क्यपि या दृशिः । नियमेनैव मोक्षाय भवेद्योग्या भवेद्यदि ।। अयोग्या भक्तिजाता चेत्क्रमान्मुक्त्यै भवेत्तथा" इति ।। "त्वत्पादभक्तिमन्विच्छन्ति ज्ञानिनस्तत्त्वदर्शिनः" "ब्रह्मजिज्ञासा" इत्यादिषु भक्तिज्ञानादीच्छायाः उचिततयोक्तेः सर्वकामपरित्यागो नाभिप्रेतो भवति ।।

इदमत्राकूतं ।। यथोक्तं श्रीनिवासतीर्थीये "उभयावस्थाविशिष्टस्यापि ज्ञानिनः प्रजहातीत्युक्तप्रायस्सर्वकामप्रहाणिर्लक्षणं ।। इदमेव च सार्वत्रिकव्यवहारोपयोगि ।। नच 'प्रायः' पदवैयर्थ्यं शङ्क्यम् ।। असंप्रज्ञातसमाधिस्थेऽपि भक्तिज्ञानादिकामनायाः सत्त्वेन तद्व्यावृत्त्यर्थत्वात् ।। अतएव त्वत्पादेत्यादिप्रमाणोदाहरणं कृतं भाष्ये ।। संप्रज्ञातावस्थाविशिष्टज्ञानिमात्रस्यतु तत्तत्प्राप्येत्युक्तं लक्षणमिति द्रष्टव्यं ।। ननु रुद्रादौ बहुतरविरुद्धकामसत्तादशायां प्रायःसर्वकामप्रहाणिर्नास्तीत्यसम्भव इति चेन्न ।। इष्टत्वात् । अत्रानभिभूतज्ञानित्वं लक्ष्यतावच्छेदकं तस्य तदनाक्रान्तत्वात् । रुद्रादिदेवानां तावदसंप्रज्ञातसमाधिर्नास्त्येव ।। तथात्वे जगद्व्यापारविलयप्रसङ्गात् ।। यथोक्तं या निशेत्यत्र तात्पर्ये ।। "देवेभ्योऽन्ये यदा ब्रह्म पश्यन्त्यन्यन्नदृश्यते" इत्यादि ।। तथाच संप्रज्ञातसमाधिना यदा ज्ञानित्वावस्था तदानीमेव लक्ष्यत्वं न तु ज्ञानाभिभवेन विरुद्धकामवत्तादशायां । यथोक्तं तात्पर्ये ।। "अपरोक्षदृशोऽपि स्याद्यदा नास्त्यपरोक्षदृक् ।। क्वचिद्विरुद्धकामोऽपि यथाऽयुध्यद्धरो हरि । अतोऽनभिभवो यावद्दृशेस्तावन्निगद्यते ।। स्थितप्रज्ञ" इत्यादि ।। अतोऽत्र नाननुगमाद्रष्टव्यं" ।। इति ।।

आत्मन्येवात्मना तुष्ट इति परमात्मनि तत्प्रसादेन तुष्टिरुक्ता ।। "विषयांस्तु परित्यज्य रामे स्थितिमतस्ततः । देवाद्भवति वै तुष्टिर्नान्यथा तु कथंचन" इति गी. भाष्योदाहृतनारायणरामकल्पे ।।

स्थितप्रज्ञस्तदोच्यत इत्युक्तावपि समाधिस्थ एव स्थितप्रज्ञोऽत्राभिप्रेत इति केचित् ॥ तथाहि ॥ "समाधिस्थ इति शेषः" इति मधुसूदनीये ॥ (माधुसूदनी अनुसरन्नाह वेङ्कटनाथोऽपि ज्ञानवासिष्ठोक्तं जीवन्मुक्तिप्रकरणादिषु विद्यारण्यस्वामिनिष्कृष्टं पठित्वा समाधिभूमिमध्ये पञ्चम्याद्यवस्थात्रयानुगतं लक्षणमनेन श्लोकेनोच्यत इति ॥ (एतास्तदुक्तास्समाधियोगस्य सप्त भूमयः "(१) नित्यानित्यवस्तुविवेकादिपूर्विका मोक्षेच्छा प्रथमा भूमिः॥ (२) ततो गुरुमुपसृत्य श्रवणमननादिरूपो वेदान्तविचारो द्वितीया भूमिः ॥ (३) ततो निदिध्यासनाभ्यासान्मनस एकाग्रतया सूक्ष्मवस्तुग्रहणयोग्यत्वं तृतीया भूमिः (४) ततो वेदान्तवाक्यादपरोक्षब्रह्मसाक्षात्कारश्चतुर्थी भूमिः (५) ततः सविकल्पकसमाध्यभ्यासेन निरुद्धे मनसि निर्विकल्पकसमाध्यवस्था पञ्चमी भूमिः ॥ (६) ततस्तदभ्यासातिरेकेण चिरकालावस्थायिनी सैव षष्ठी भूमिः॥ (७) ततस्तस्या अपि परिपाकेन सर्वदाऽपि स्वप्रकाशचिदानन्दैकरमे ब्रह्मणि मग्नतया समुद्रमध्यस्थापितकुम्भवदन्तर्बहिःपूर्णत्वं सप्तमी भूमिः। इति ॥ अत्राद्यं भूमिकात्रयं साधनं जाग्रदवस्थेति चोच्यते ॥ जाग्रतीवात्र द्वैतप्रपञ्चसत्यत्व प्रतिभासात् ॥ चतुर्थी भूमिका तु फलं स्वप्नावस्थेति चोच्यते । द्वैतस्य बाधितत्वेऽपि स्वप्न इव तत्प्रतिभासात् । एतां भूमिं प्राप्तो योगी ब्रह्मविदुच्यते । पञ्चम्यादयस्तिस्रो भूमयस्तु जीवन्मुक्त्यवान्तरभेदाः । तेच निर्विकल्पकसमाध्यभ्यासकृतेन विश्रान्तितारतम्येन संपद्यन्ते ॥ तत्र पञ्चमी भूमिस्सुषुप्तिरित्युच्यते ॥ द्वैतप्रतिभासाभावात् ॥ तां प्राप्तस्य योगिनः सति विकल्पे स्वयमेव व्युत्थानाच्च ॥ सोऽयं योगी ब्रह्मविद्वरः । षष्ठीभूमिस्तु गाढसुषुप्तिरुच्यते । तां प्रपन्नस्य योगिनः परप्रयत्नेनैवोत्थानात् ॥ सोऽयं ब्रह्मविद्वरीयान् ॥ सप्तमी तु तुर्यावस्थेत्युच्यते ॥ तां प्राप्तस्य योगिनः स्वतः परतो वा व्युत्थानमेव नास्ति ॥ जगत्प्रतिभासशून्यतया सर्वदा तन्मयत्वेनैवावस्थानात् । तस्य च देहनिर्वाहो विनैव स्वप्रयत्नं परमेश्वरप्रेरितप्राणवायुनैव

निष्पद्यते ॥ तामेतामवस्थां प्राप्तो ब्रह्मविद्वरिष्ठः ॥ इत्थं स्थिते पञ्चम्यादय-स्तिस्रोऽवस्थाः परस्परतारतम्यवत्योऽसंप्रज्ञातसमाधयः । एतत्त्रयानुगतं लक्षणमनेन श्लोकेनोच्यते " इति ॥ इयमापातरमणीया प्रक्रिया पारि-भाषिकपूर्णा न सुकरं गीतारूढा भवति ॥ स्वत उत्थानं परत उत्थानं नैवोत्थानमित्यादयोऽसंप्रज्ञातस्य विभाजकोपाधयो य उपपादितास्ते पातं-जलयोगोपदिष्टाः ॥ गीताप्रतिपाद्यस्तु योगो भिन्नः ॥ (तथाहि निरूपितं एषा ते इत्यत्र) प्रथमं प्रपंचसत्यत्वप्रत्ययः ततो मिथ्यात्वनिश्चये सति द्वैतानुवृत्तिरित्यादयोऽद्वैतराद्धान्तपरिभाषा ॥ जाग्रत्स्वप्नसुषुप्तिगाढसुषुप्ति-तुर्यावस्थादृष्टान्तैर्वंचितः सविकल्पकनिर्विकल्पकज्ञानभेदं परिकल्प्य ज्ञानिनं ब्रह्मविद् ब्रह्मविद्वरः ब्रह्मविद्वरीयान् ब्रह्मविद्वरिष्ठः इति हि चतुर्धा विभजते ॥ अय विभागोऽप्रामाणिकः ॥ भवत्वयं विभागः प्रामाणिको नाम ॥ गीतोक्तसर्वकामप्रहाणपूर्वकात्मतुष्टिस्तु प्रपंचितपंचम्यादिभूमिकां प्राप्तस्यैव योगिनो लक्षणमित्यत्र किं नियामकं ॥ तथासति शुकादीनां निगृहीतेन्द्रियाणामपरोक्षदशामलक्ष्यत्वे लक्षण य तेष्वतिव्याप्तेः ॥ न च वाच्यं सर्वथा निर्वासनं कामादित्यागोऽभिप्रेत इति ॥ पंचमीं षष्ठी वाऽवस्थां प्राप्ते स्वतो वा परतो वा व्युत्थानवतीषद्वासनाया अभ्युपगन्तव्यत्वेन लक्ष-णस्याव्याप्तेः ॥

किंच " समाधिस्थ इति शेषः " इति मधुसूदनवाक्यमादाय " तन्न । शेषस्य निरर्थकत्वात् " इति प्रत्याख्यातं शं. भा. उत्कर्षदीपिकायां ॥ " आ-त्मानं जिज्ञासमानो वैराग्यद्वारा पुत्रवित्तलोकेषणात्यागात्मकं सन्न्यासमासाद्य श्रवणाद्यावृत्त्या तज्ज्ञानं प्राप्य तस्मिन्नेवासक्त्या विषयवैमुख्येन तत्फलभूतां तुष्टिं तत्रैव प्रतिलभमानः स्थितप्रज्ञव्यपदेशभागित्यर्थः " इति चोत्कर्षदीपिकायाम् ॥ आनन्दगिरिव्याख्यायां चोक्तं तथैव ॥ अनेन गीतापद्यं सप्तभूमिका-स्वप्यवतिष्ठमानस्य लक्षणं वक्तीत्याशयोऽभिमतःस्वव्यूह एवेत्यवगम्यते ॥

केवलं साधकस्य परोक्षज्ञानिनो बहिर्भावेऽपि संप्रज्ञातस्यापरोक्षज्ञानिनो न बहिष्कार उपपन्न इति श्रीपूर्णप्रज्ञाचार्याशयः ॥

कामानिति स्थूलसूक्ष्मकारणशरीरभोग्या विषया विवक्षिता इति नीलकण्ठः ॥ तत्प्रहाणमेवमुपपादितं तेन ॥ "स्थूलानां कामानां त्याग एकान्तसेवनमात्राद्भवति । विलीनकरणग्रामस्य समनस्कस्य जाग्रद्वासनामयाः स्वप्ने ये कामाः स्फुरन्ति तेषामपि त्यागो भगवद्ध्यानादिरूपसद्वासनाभ्यासबलेन भवति । ये तूपसंहृतकरणस्य संप्रज्ञातसमाधिकाले दिव्याः कामाः संकल्पमात्रोपनता दहरविद्यादिषु प्रसिद्धास्तेषामपि त्यागोऽसंप्रज्ञातसमाध्यभ्यासबलेन भवति । एवं त्रिविधान् कामान् प्रजहाति" इति ॥ संकल्पादिमनोवृत्त्युपलक्षकः कामशब्द इति मधुसूदनादयः ॥ "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति श्रुतिप्रसिद्धा मनोवृत्तिविशेषा उच्यन्ते इति तेषामाशयः ॥ योगशास्त्रे प्रमाणविपर्ययविकल्पनिद्रास्मृतिभेदेन प्रपञ्चिता वृत्तिविशेषा उच्यन्ते इति माधुसूदन्यां ॥ विरुद्धकामा इच्छाविशेषा गृह्यन्ते इत्याचार्यः ॥ ध्यायतो विषयानित्यादिभि याज्यतया वक्ष्यमाणानां विषयध्यानसंगकामक्रोधसम्मोहस्मृति विभ्रमबुद्धिनाशानां ग्रहण प्रकरणोचित भाति ॥ श्रुत्युक्तसंकल्पादीनां ग्रहणेऽपि न च्यु[illegible]। कामःफलेच्छा ॥ प्रकृते विरुद्धेच्छैव गृह्यते । "संकल्पः कर्तव्यत्वाध्यवसायः ॥ विचिकित्सा संशयः । श्रद्धाश्रद्धे प्रामाण्याप्रामाण्यज्ञाने ॥ धृतिरधृतिर्धैर्याधैर्ये ॥ विकारकारणसमवधानकालिकतदभावप्रयोजकचेतोवृत्तिविशेषो धैर्य इति न्यायविदः ॥ ह्रीर्लज्जा चेतसस्सङ्कोचरूपा अभिलषितप्रवृत्त्यभावप्रयोजकनिन्दाद्यनुबन्धित्वज्ञानम् ॥ धीः आवरणभङ्गप्रयोजकवृत्तिविशेषः ज्ञानादिशब्दप्रतिपाद्यः ॥ भीः स्वानिष्टचिन्तनम्" इति धर्मदत्तोपपादनं ॥ पुरुषार्थविरोधिनस्सङ्कल्पादयास्तिरस्कार्या ज्ञेयाः ॥

सर्वानिति ।। प्रायोविरुद्धान् इति सङ्कोचो निरूपितो द्रष्टव्यः ।। एतदसङ्गतमिति निराह वेङ्कटनाथः।। "सर्वानित्यनेन स्रक्चन्दनवनितादिष्विव ब्रह्मलोकादिषु अणिमाद्यष्टैश्वर्येषु च ये कामास्तेषामपि हानं विवक्षितम् ।। तेन कामप्रहाणोक्तिर्निषिद्धकामप्रहाणपरा स्थितप्रज्ञस्याप्यनिषिद्धकामसम्भवादिति वदन्तो माध्वा निरस्ताः" इति तद्वाक्यम् ।।

यद्यप्यत्र माध्वा निरस्ता इत्युद्घुष्ट ।। निरासक्रमस्तु न ज्ञायते ।। अणिमाद्यैश्वर्याणामुपादेयत्वं क्वोक्त माध्वैः? ।। ब्रह्मलोकादयोऽपि परमपुरुषार्थतया नाभ्युपगता अस्माभिः ।। ये कामाः पुरुषार्थाविरोधिनोऽपित्वनुकूलाः त एव प्रहाणायोग्या इति ह्यस्मन्मतं ।। अभिप्रायमजानान एवं दूषितवान्

मनोगतानिति । अस्य सार्थक्यं निरूपितमुपरिष्टादाचार्यभाष्यानुसारेण ।। यद्यपि "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ।। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इति श्रुत्यनुरोधेन प्रवृत्तं गीतापद्यं । "हृदि स्थिता" इति श्रुत्युक्तिसमानार्थकं मनोगतानिति वचनम् ।। श्रुतावपि सर्वेषां कामानां हृदिस्थितत्वाविशेषात्तथोक्तेस्सार्थक्यं किमिति सन्देहस्तदवस्थ एव ।। कैश्चित्कामानामात्मनिष्ठत्वाभ्युपगमात्तद्भ्रमं वारयितुमियमुक्तिरित्यानन्दगिरिः ।। आत्मधर्मत्वे प्रहाणायोग्यास्स्युः मानसत्वात्प्रहाणयोग्याः इति सूचयितुं प्रयोग इति वेङ्कटनाथादयः ।।

प्रजहातीति ।। निर्बीजतया त्यागो विवक्षित इति वेङ्कटनाथः । निर्बीजतयेत्यनेन सुषुप्तिव्यावृत्तिर्भवतीति उपपादितं च । "सुषुप्तौ हि कामादि वृत्तीनां न निर्बीजतया त्यागः । तद्बीजस्याज्ञानस्य सत्त्वात् ।। अत एव न तत्रानावृतमखण्डानन्दस्फुरणं । समाधौ न तथेति महान्भेदः" इति ।।

कामानां प्रहाणं विदुष्युपचारमात्रं इति शङ्करानन्दः । "भोगजन्यसंस्कारापरपर्यायवासनया वस्तुनि समीचीनत्वबुद्धिरुदेति । ततस्सङ्कल्पः । ततः कामइति कामानां वासनामूलत्वं संगच्छते । यथा मृदात्मना पश्यतो घटाग्रहणं तथा सर्वं ब्रह्मात्मना पश्यतः। तदभावे विषयवासनाः स्वयमेव क्षीयन्ते तासां क्षये कामाःस्वयमेव नश्यन्ति। स्वयमेव विनश्यतां कामानां नाशो विदुषि ह्युपचर्यते" इत्यद्वैतप्रक्रियानुरोधेन प्रहाणमौपचारिकमित्युपपादितं॥ इदं तदीयोपदेशमात्रगम्यं ॥ येषां तस्मिन्निरतिशयाश्वासस्तैरेवांगीक्रियेत ॥

आत्मनि आत्मना तुष्टइति आत्मशब्दो जीवपरइति शांकराः॥ तृतीयान्तो मनःपरइति रामानुजाचार्यः ॥ उभावपि श्रीहरिपरौ इति श्रीमध्वः ॥ जीवस्थित्यादिना तोषायोगान्नात्मा जीवः । भगवतएव सर्वतोषमूलत्वात्तत्प्रसादादेवेष्टप्राप्तिरानिष्टानिवृत्तिरिति मन्तव्यं॥ स्वमहिम्नैव जीवः परमानन्दमनुभवतीति व्याख्यानं भगवन्तमवजानाति ॥

प्रजहातीत्यारभ्य श्लोकचतुष्टयमवस्थाविशेषचतुष्टयपरं इति रामानुजदेशिकौ व्याचक्षाते ॥ तथाहि देशिकोपपादनम्—

"प्रथमं बाह्येन्द्रियाणि विषयेभ्यः प्रतिसंहृत्य मन आत्मनि व्यवस्थापयितुं यतेत ॥ इयं यतमानसंज्ञा । अथ बलात्संहृतान्यपि बाह्येन्द्रियाणि सावशेषरागद्वेषादिदोषादीनौदासीन्यानभिनन्दनादिक्रमेण पचेत् । इयं व्यतिरेकसंज्ञा॥ ततः पक्वेऽपि दोषशेषे अनादिविषयानुभवभावितवासनामात्रमात्मानमनुबुभूषन्तीं शेमुषीं प्रतिबिभत्सेत् ॥ तत्र निरतिशयानन्दरूपमात्मानं पुरुषद्वेषिण्या योषित इव युवानं प्रदर्श्य प्रदर्श्य क्रमादात्मनि तोषं समुत्पाद्य तेन तोषविशेषेण दवीयसा च स्मृतिविधुरेण कालेन बाह्यविषयवासनाजालमुन्मूलयितुमीहेत । सेयमैकेन्द्रियसंज्ञा ॥ या पुनस्समस्तवासनाविलया-

दौत्सुक्यमात्रस्याप्यसम्भवेन परमवैराग्यदशा सा वशीकारसंज्ञा ज्ञाननिष्ठा-काष्ठा योगाख्यमात्मावलोकनं साधयति" इति ॥

अत्र प्रथमा दशा 'यदा संहरते' इति श्लोकेन (५८) निरूप्यते ॥ द्वितीया यस्सर्वत्रेत्यनेन (५७)। तृतीया दुःखेष्वित्यनेन (५६)। चतुर्थी प्रकृत-श्लोकेनेति रामानुजाशयः )( इदमिह चिन्त्यम् ॥ चतुःश्लोक्यां कामवर्ज-नादिगर्भितं महावैराग्यमुक्तं इति ज्ञायते । यद्योगतन्त्रे निरूपितम् "दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यं" इति पारिभाषिकं वैराग्यं तदेव प्रजहातीत्यत्र विवक्षितमित्यत्र किं नियामकमस्ति ॥ किंच यतमानसंज्ञा व्यतिरेकसंज्ञा ऐकेन्द्रियसंज्ञा वशीकारसंज्ञेत्यास्ववस्थासु मध्ये उक्तक्रमं विभिद्य प्रथमाऽवस्था प्रथमद्वितीयतृतीयश्लोकेष्वन्यतमेनैव निरूप्यते इत्युक्ते न बाधतेऽक्षरार्थः । एवं द्वितीयाद्यवस्था अपि प्रत्येकमुक्तश्लोकेनैव प्रतिपादिता इत्यत्र ज्ञापकं न दृश्यते । योगतन्त्रपरिभाषानुरोधेन गीता-श्लोकाः प्रवृत्ता इत्यत्र महानस्ति सन्देहः ॥ यद्यपि व्याख्यात्रभिलषितां योगतन्त्रप्रक्रियां मूले प्रवेशयितुं पद्याक्षराणि अवकाशं दद्युः। मूले तूक्ततार-तम्यगर्भितावस्थाविशेषा विवक्षिता इत्यत्र निर्धारकं नास्त्येव॥ तस्मात् प्रजहाती-त्यनेन यत्कामवर्जनं स्थितप्रज्ञलक्षणतयोक्तं "तदेव स्पष्टयत्युत्तरैस्त्रिभिः श्लोकैः" इति श्रीमदाचार्यव्याख्यानं निर्दुष्टमवगम्यते ॥

**दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।**
**वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ ५६ ॥**

वि ॥ एतदेव कामशब्दोपलक्षितदोषान्तरत्यागकथना-दिना त्रिभिः स्पष्टयति दुःखेष्वित्यादिभिः ॥ दुःखेषु प्राप्तेषु

अनुद्विग्नमनाः अनुद्विग्नं क्षान्तं मनः यस्य सः तथा ॥ सुखेषु विगतस्पृहः विगतेच्छः । वीतरागभयक्रोधः अशोभने शोभनाध्यासो रागः । रागभयक्रोधाः वीता अपगताः यस्मात्स तथा तादृशः ॥ मुनिः स्थितधीरुच्यते ॥

शं ॥ किञ्च दुःखेष्विति ॥ दुःखेषु आध्यात्मिकादिषु प्राप्तेषु अनुद्विग्नं न प्रक्षुभितं दुःखप्राप्तौ मनो यस्य सोऽयं अनुद्विग्नमनाः ॥ तथा सुखेषु प्राप्तेषु विगता स्पृहा तृष्णा यस्य ॥ नाग्निरिवेन्धनाद्याधाने सुखान्यनुविवर्धते स विगतस्पृहः । वीतरागभयक्रोधः रागश्च भयं च क्रोधश्च वीताः विगता यस्मात्सः वीतरागभयक्रोधः ॥ स्थितधीः स्थितप्रज्ञः मुनिः सन्न्यासी तदा उच्यते ॥

रा ॥ अनन्तरं ज्ञाननिष्ठस्य ततोऽर्वाचीना अदूरविप्रकृष्टावस्थोच्यते ॥ प्रियविश्लेषादिदुःखनिमित्तेषूपस्थितेषु अनुद्विग्नमनाः न दुःखीभवति ॥ सुखेषु विगतस्पृहः प्रियेषु सन्निहितेष्वपि विगतस्पृहः । वीतरागभयक्रोधः अनागतेषु स्पृहा रागः तद्रहितः। प्रियविश्लेषाप्रियागमनहेतुदर्शननिमित्तं दुःखं भयं तद्रहितः। प्रियविश्लेषाप्रियागमनहेतुभूतचेतनान्तरगतदुःखहेतुभूतस्वमनोविकारः क्रोधः तद्रहितः॥ एवं भूतो मुनिः आत्ममननशीलः॥ स्थितधीरित्युच्यते ॥

विचारः

अस्य श्लोकस्य प्रकरणसङ्गतिरानन्तर्यसङ्गतिश्चालोच्या ॥ अर्जुनप्रश्नस्योत्तरत्वं प्रकरणसङ्गतिरिति सामान्यतो ज्ञायते ॥ कस्य प्रश्नविशेषस्येति सन्दिह्यते ॥ प्रजहातीति पूर्वश्लोकेन कथमयं श्लोकस्संबद्ध इत्यपि सन्दिह्यते ॥

पूर्वश्लोकोक्तं कामवर्जनादिकं समाधिस्थस्य स्थितप्रज्ञस्य लक्षणं ॥ प्रकृतश्लोकस्तु व्युत्थितपरः, तत्रापि किं प्रभाषेतेत्यस्य प्रश्नप्रभेदस्योत्तरं वक्तीति मधुसूदनवेङ्कटनाथौ मन्येते । एवं योजयितुं वीतरागभयक्रोध इत्यस्यानन्तरं व्युत्थित इति पदं शेषपूर्त्या पठति च वेङ्कटनाथः ॥ पूर्वपद्यस्य समाधिस्थमात्रपरत्वे बाधकमुपन्यस्तं प्रागेव ॥

किंच किं प्रभाषेतेत्यस्यैव अनेन यस्सर्वत्रेत्युत्तरश्लोकेनच उत्तरं दत्तं इति मधुसूदनादिभिर्यदुक्तं तस्य गमकं चिन्त्यम् ॥ उद्वेगस्पृहारागभयक्रोधा मानसवृत्तयः तथैवाभिस्नेहाभिनन्दद्वेषाः ॥ स्थितधीस्ताञ्जहातीति गम्यते श्लोकयोस्तावत्प्रभाषणप्रसक्तिरेव किञ्चिदपि न दृश्यते ॥

व्याख्यात्राशयस्त्वेवं । तथाहि—"दुःखप्राप्तावहो पापोऽहं धिङ् मां दुरात्मानमेतादृशदुःखभागिनं, को मे दुःखमीदृशं निराकुर्यादित्यनुतप्यमानो मूढः प्रभाषते ॥ सुखप्राप्तौ अहो धन्योऽहं यस्य ममेदृशं सुखमुपस्थितं, को वा मया तुल्योऽस्ति भुवने, केन वोपायेन ममेदृशं सुखं नविच्छिद्येतेत्येवमुत्फुल्लहृदयो मूढः प्रभाषते ॥ स्थितधीस्तु स्वानुभवप्रकटनेन शिष्यशिक्षार्थमनुद्वेगनिस्पृहत्वादिवाचः प्रभाषते" इति मधुसूदनीये ॥ अत्र चिन्त्यं काऽत्र शिष्यस्य वा तं प्रत्युपदेशस्य वा प्रसक्तिरिति । अज्ञप्रलापादीनां स्यान्नाम निरूपणग्रन्थे औचित्यं । तेषां श्लोकारोहस्तु कथं संगच्छते इति च ॥

अस्मिन्व्यूह एवान्यो व्याख्याता (शं. आ) किं प्रभाषेतेत्यस्योत्तरमिदं पद्यमिति स्वीकृत्यापि उत्तरस्य भावमन्यथोपपादयति । "श्रुतं दृष्टं च स्पृष्टं

च सर्वं प्रत्यग्दृष्ट्या ब्रह्मैव मनुते पश्यति जानाति न तु तत्तदाकारेणेति मुनिर्ब्रह्मनिष्ठः ॥ अयं संसिद्धो ब्रह्मविद्यतिरापत्सु संपत्सु न किंचिद्वदति किन्तु तूष्णीमेव स्वात्मना तिष्ठतीति किं प्रभाषेतेत्यस्य प्रश्नस्योत्तरं दत्तं" इति ॥ अनयोर्व्याख्यात्रोर्भेदोऽनुसन्धेयः ॥ आद्य आह, किंप्रभाषेतेत्युक्ते शिष्यं प्रत्यनुद्वेगनिस्पृहत्वादिवाचः प्रभाषते इति ॥ द्वितीय आह, किंप्रभाषेतेत्युक्ते न किमपि, सर्वं ब्रह्मेति तूष्णीमास्ते" इति ॥

किं प्रभाषेतेति प्रश्नः स्थितप्रज्ञसंभाषणमात्रमुत्तरमपेक्षते इति भ्रमादुत्पन्न इयान्क्लेशः ॥ भाषणोपवेशनगमनानि सर्वव्यापारोपलक्षकाणीत्युक्ते न काऽप्यनुपपत्तिरिति नालोचितं ताभ्यां ॥ अतएव शङ्करभाष्योत्कर्षदीपिकाकारः पक्षमिमं निराह—"यत्तूक्तं किंप्रभाषेतेत्यस्योत्तरमाहेति तच्चिन्त्यं। स्थितधीर्मुनिरुच्यते इति वाक्यशेषेण प्रथमप्रश्नोत्तरप्रतीतेस्स्पष्टत्वात्" इति ॥

ज्ञाननिष्ठाकाष्ठायाः पूर्वभाव्यवस्थाचतुष्टयमध्ये एकेन्द्रियसंज्ञाख्यतृतीयावस्था प्रतिपाद्यतेऽस्मिञ्श्लोके इति रामानुजाचार्यव्याख्यानं ॥ प्रजहातीत्यारभ्य चतुःश्लोक्यास्तारतम्योपेतावस्थाचतुष्टयपरत्वेऽसामंजस्यं प्रागेवोक्तं। इयमवस्थाह्यपगतेऽप्यशेषदोषेऽनादिविषयानुभवभावितवासनामात्रमात्मानमनुबुभूषंती शेमुषी प्रतिबध्नातीति गृहीतं ॥ दुःखेति श्लोको वासनामात्रावशिष्टमात्मानं वक्तीत्यत्र तु गमकं न दृश्यते ॥

तर्हि का नाम सङ्गतिरित्याकांक्षायां सुलभं समाधानं यथोक्तं श्रीमदाचार्येण—पूर्वश्लोके कामशब्दस्सजातीयदोषोपलक्षकः । प्रायोविरुद्धकामत्यागपूर्वकभगवदेकाचित्ततत्प्रसादायात्तसन्तोषवत्वं स्थितप्रज्ञलक्षणं यदभिहितं, तत्र कामशब्दोपलक्षितदोषान्तरत्यागकथनादिना दुःखेष्विति त्रिभिः श्लोकैः स्पष्टनपरतया सङ्गतिर्ज्ञेया अतो नपुनरुक्तिशङ्कावकाशः इति ॥ एवं

सति प्रकृतपद्यस्य विषयतया प्रत्येकप्रश्नान्वेषणप्रयासोऽपि परिहृतः ॥ एतेन सिद्धस्य लक्षणान्तरमिहोच्यते इति वदन् शङ्करानन्दोऽपि प्रत्युक्तः ॥

मुनिरुच्यत इति ॥ मननशीलो मुनिः । अनेन आत्मन्येवात्मना तुष्टः इत्युक्तभगवद्ध्यानपरोऽयं इति सूचितं । अथवा यः कामशब्दोपलक्षित-दोषविधुरस्सएव मुनिशब्दवाच्यो नत्वन्यः केवलकाषायादिधारीति ज्ञापितं ॥ "स हि लोके मुनिर्नाम यः कामक्रोधविवर्जितः" इत्युक्तेः ॥ मुनिस्संन्यासीति शङ्करभाष्यं । विना संन्यासाश्रमं न पुरुषार्थ इत्येतस्य राद्धान्तो भाति ॥ तमनुसृत्येयं व्याख्या ॥

दुःखेषु सुखेषु इति दुःखसाधनं सुखसाधनं चोच्येते इति केचित् (रा. नी) ॥ तन्नास्माकमनिष्टं ॥ दुःखप्राप्त्यनन्तरं सुखप्राप्त्यनन्तरं इत्यर्थेऽपि न बाधकं दृश्यते ॥ प्राप्यं वा प्राप्तं वा दुःखं सुखं चाविवेकिन्युद्वेगस्पृहे जनयतीति तद्रहितो मुनिः ॥

अनुद्वेगादिकं ज्ञानिलक्षणं भवज्जिज्ञासावपि संभवति ॥ नानेनातिव्याप्तिशंक्या ॥ "तद्वै जिज्ञासुभिस्साध्यं ज्ञानिनां यत्तु लक्षणं" इति न्यायस्य प्रागेव दर्शितत्वात् ॥ अनुद्वेगादिकं अपवर्गसाधनं इति न भ्रमितव्यं । तानि ज्ञानसाधनान्येव नत्वपवर्गसाधनानि ॥ अपवर्गस्य प्रसादद्वारा ज्ञानमात्रसाध्यत्वात् ॥ "एतान्येव ज्ञानोपायानि" इति वदता भाष्यकृताऽपवर्गस्य समुच्चयसाध्यत्वं दूषितं ज्ञेयं ॥ ज्ञानिजिज्ञासूभयसमानगुणकथनस्य प्रयोजनं च प्रागेव सूचितं योगप्रकरणे ज्ञानिप्रपञ्चनमनुचितं इति भ्रमव्युदासायेति ॥

दुःखेष्विति ज्वरशिरोरोगादिकृतान्याध्यात्मिकानि व्याघ्रसर्पचोरादिकृतान्याधिभौतिकान्यतिवातवर्षादिनिमित्तान्याधिदैविकानि दुःखानि सर्वाणि गृह्यन्ते ॥ सुखेष्विति प्राकृतानि वैषयिकाणि पुरुषार्थप्रतिबन्धीनि विवक्षितानि ॥

अत्रानुद्वेगस्पृहारागभयक्रोधाः पंचोक्ताः ॥ केचिदुद्वेगस्पृहयोर्निषेधएव वाक्यार्थः। रागभयक्रोधानां निषेधस्त्वनुद्वेगत्वनिस्पृहत्वयोर्हेतुकथनतयोपपादकत्वेन प्रासङ्गिक इत्याहुः॥ तथाच तत्पक्षे स्थितधीरनुद्विग्नमनाः विगतस्पृहश्चेति प्रधानान्वयः ॥ कुत इत्याकांक्षायां यतो वीतरागस्ततो निस्पृहः । यतो वीतभयक्रोधस्ततोऽनुद्विग्नः इति हेतुकथनं इति (वें) ॥ अन्येतु पञ्चानामपि व्यावृत्तिरभिप्रेतेत्याहुः । अत्र पक्षद्वयेऽपि स्पृहारागयोरपौनरुक्त्यं तथोद्वेगभययोर्गतार्थतासमाधानं च वक्तव्यं ॥ अवशिष्टः क्रोधशब्दस्तु व्याख्यातः ॥ "रागविषयविनाशके समुपस्थिते तन्निवारणसामर्थ्यमात्मनो मन्यमानस्याभिज्वलनात्मकश्चित्तवृत्तिविशेषः क्रोधः" इति माधुसूदनीये ॥ 'अत्यन्तापकारिण्यप्रीतिः क्रोधः' इति केचित् (शं. आ.) ॥ 'प्रियविश्लेषाप्रियागमनहेतुभूतचेतनान्तरगतदुःखहेतुभूतस्वमनोविकारः क्रोधः' इति रामानुजाचार्यभाष्यं । सर्वमेतदस्माकं सम्मतम् ॥

अथोद्वेगभये स्पृहारागाविति युग्मद्वयं विचार्य ॥ 'ओ विजी भयचलनयोः' इति विधानान्नात्रोद्वेगो भयं किंतु चलनं। तथाचोद्वेगः क्षोभः चाञ्चल्यं अक्षान्तिरिति यावत् ॥ भयं तु रागविशेषस्य नाशके समुपस्थिते तन्निवारणस्यासामर्थ्यमात्मनो मन्यमानस्य दैन्यात्मकश्चित्तवृत्तिविशेष इति मधुसूदनः ॥

स्पृहारागावित्यत्र रागस्तृष्णाभेद इत्यादाय स्पृहारागशब्दयोस्सामान्यविशेषविषयत्वेन विशेषशब्दसन्निधाने गोबलीवर्दन्यायात्सामान्यशब्दस्तद्व्यतिरिक्तपर इत्यभिप्रायमाह देशिकः ॥ अत एव रामानुजाचार्यभाष्यम् "प्रियेषु सन्निहितेष्वपि विगतस्पृहो मुनिः । अनागतेषु स्पृहा रागः तद्रहितः" इति ॥ स्पृहां द्वेधा व्याचष्टे मधुसूदनः—सुखानुभववृत्तिकाले तज्जातीयसुखस्य कारणं धर्ममनुष्ठाय वृथैव तदाकांक्षा तामसी चित्तवृत्तिर्भ्रान्तिः ॥ अथवा हर्षात्मिका वा चित्तवृत्तिर्भ्रान्तिरिति ॥ रागस्तु शोभनाध्यासनिबन्धनो विषयेषु रञ्जनात्मकश्चित्तवृत्तिविशेषोऽत्यन्ताभिनिवेशरूपः इति

स एवाह ॥ अन्ये तृष्णासामान्यं स्पृहेति व्याचक्षते ॥ रागशब्दमशोभने शोभनाध्यासपरतया व्याख्याय स्पृहाशब्दस्य इच्छापरत्वमादाय तयोर्भेद-माह श्रीमदाचार्यैः ॥ "रसो रागस्तथा रक्तिश्शोभनाध्यास इष्यते" इत्य-भिधानमस्यानुकूलम् ॥

स्थितधीर्मुनिः केनोपायेनोद्वेगादिकं जयतीत्याशंक्य मधुसूदनस्समा-धत्ते ॥ 'मुनेस्सुखदुःखयोः प्रारब्धकर्मवशात्संभवेऽपि भ्रमोपादानाज्ञानस्य तस्मिन्नष्टत्वादुद्वेगस्पृहारागभयक्रोधानां विपर्ययरूपाणामयोगादयं मूढाद्वि-शिष्टः ॥ प्रारब्धप्राप्तं हि दुःखम् ॥ सति कारणे कार्यं भवेदेव ॥ अविवेकी खलु कार्यं माभूदिति वृथोद्विग्नः । धर्मानुष्ठानफलं तु सुखम् । कारणाभावे नैव स्यात्कार्यं । अविवेकी खलु धर्माननुष्ठानेऽपि सुखमीहते। अतः उद्वेग-स्पृहयोर्भ्रमरूपत्वेन ज्ञानिन्यसंभवः' इति॥ अनयैव दिशा रागभयक्रोधानामपि विपर्ययत्वमुक्तं ॥ अत्रैवं सन्दिह्यते । किं स्थितप्रज्ञः स्वज्ञानमहिम्नोद्वेगादिक प्रसक्तं प्रतिरुध्य जयति वा, उतोद्वेगादीनां भ्रमात्मकत्वेन ते स्वयमेवोपरता-वेति ॥ द्वितीये कल्पे रागस्याशोभने शोभनाध्यासरूपस्य भ्रमत्वे सिद्धेऽपि इतरेषां उद्वेगस्पृहाभयक्रोधानां चतुर्णां भ्रमात्मकत्वं कथं सङ्गच्छते ॥ अथोच्येत । प्रारब्धकर्माधीनत्वापरिज्ञानेन मूढः प्रसक्तं दुःखं परिहार्य मनुते । तस्य ज्ञानं भ्रमः, धर्मानुष्ठानाधीनत्वापरिज्ञानेन तदभावेऽपि सुख भूयादिति काङ्क्षते सा भ्रान्तिरिति ॥ तत्रेदं चिन्त्य ॥ नहि सर्वोऽप्युद्वेगी स्पृहावान्वा जनस्सुखदुःखमूलं प्रारब्धादिकमज्ञात्वैवैतादृशीं चित्तवृत्तिं लभते ॥ क्वचिज्जनः प्रारब्धाद्यनुसन्धानेऽप्यविवेकाच्छोचेतापि ॥ अवि-वेकस्य निरंकुशतया बाहुविध्यादियानेव भ्रम उद्वेगादिकं जनयतीति वक्तुं अशक्यत्वात् ॥ यदुक्तं वृथाकांक्षा वृथा उत्फुल्लताख्यो हर्षो भ्रम एवेति तन्न । निष्प्रयोजनत्वहेतुना कांक्षाया अनौचित्य सेत्स्यति न तु भ्रमत्वं ॥ नहि पङ्गोरुन्नतशाखास्थफलेच्छा भ्रान्तिरित्युच्यते । सा तु भ्रान्तिमूला

स्यान्न भ्रान्तिरूपा ॥ अस्मिन् प्रकरणे यदि सर्वफलानां भगवदायत्तत्वं पुरस्कृत्य उद्वेगी स्पृहावान् भयवान् क्रुद्धो वा, स्वसामर्थ्यादिकं स्वातन्त्र्यं च भ्रान्त्वा भगवन्तं विस्मृत्य वर्तते स मूढः। अपरोक्षज्ञानिन्येतादृशभ्रमस्यायोगात्स उद्वेगादिरहितः इति यद्युच्येत तत्साधुभाषितं भवेत्। उद्वेगादीनां भ्रमजन्यत्वं निष्पन्नं च स्यादित्यास्तां प्रपञ्चः ॥

यदुक्तमुद्वेगादिवैधुर्यं ज्ञानिनः स्वभावधर्म इति, तत्सामान्यजनानामनुभवारूढं न भवितुमर्हति ॥ त्रिलोककण्टकस्य हिरण्यकशिपोरातिदारुणवचसा तस्य घोरकृत्येन वा न भीतः, जलप्रवाहे प्रक्षिप्तोऽपि पर्वतात्पातितोऽपि मत्तमातंगपदा प्रमथितोऽपि सर्पैर्दंशितोऽपि शस्त्रास्त्रैस्ताडितोऽपि बहुधा पीडितोऽपि सर्वथाऽनुद्विग्नमनाः हरिध्यानतुष्टः प्रह्लाद एवास्य साक्षी ॥

सुखेषु विगतस्पृहत्वं यथोपदिष्टं भागवते। केवलमवधूतसाध्यमेतत्—

"सत्यां क्षितौ किं कशिपोः प्रयासैर्बाहौ स्वसिद्धे ह्युपबर्हणैः किं।
सत्यंजलौ किं पुरुपर्णपात्रैर्दिग्वस्त्रलाभे सति किं दुकूलैः" ॥

"चीराणि किं पथि न सन्ति दिशन्ति भिक्षां
नोवांघ्रिपाः परभृतः सरितोऽप्यशुष्यन्।
रुद्धा गुहाः किमवधूनसुहृन्न कृष्णः
कस्माद्भजन्ति कवयो धनदुर्मदान्धान्" ॥ (भा. II 2)

अशोभने शोभनाध्यासभूतस्य रागस्य मृगपोतमोहितो जडभरतस्साक्षी ॥ अयं हि मृगपोतं "कार्पण्यात्स्कन्धेनोद्वहति। एवमुत्सङ्गे उरसि चाधायोपलालयन्परमामवाप मुदं" इति भागवते. पं ॥ केचिदाधुनिकास्तु मृगस्थाने श्वानमारोहयन्तीति विशेषः ॥

जडभरतस्य तृतीयजन्मनि स एव वीतरागभयक्रोधत्वस्य दृष्टान्तः ॥ यथोक्तं "स्वभ्रातृभिरपि केदारकर्मणि निरूपितस्तदपि करोति। किं तु न

समं विषमं न्यूनमधिकमिति वेद ॥ कणपिण्याकफलीकरणकुल्माषस्थालीपुरीषादीन्यमृतवदारोचयति" ॥ रहूगणशिबिकावाहकत्वेनायमाह "स्थौल्यं कार्श्यं व्याधय आधयश्च क्षुत्तृड्भयं कलिरिच्छा जरा च। निद्रा रतिर्मन्युरहंमदश्च देहेन जातस्य हि मे न सन्ति" इति ॥

---

**यस्सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभं।**
**नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥५७**

वि ॥ वीतरागभयक्रोधत्वं केन हेतुना भवतीत्यतआह। य इति ॥ अनभिस्नेह इति हेतुगर्भं ॥ यः सर्वत्रानभिस्नेहत्वात्तत्तच्छुभाशुभं प्राप्यापि नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा अपरोक्षधीः प्रतिष्ठिता ॥

शं ॥ किंच ॥ यस्सर्वत्र इति ॥ यः मुनिः सर्वत्र देहजीवनादिषु अपि अनभिस्नेहः अभिस्नेहवर्जितः तत्तत् प्राप्य शुभाशुभं तत्तत् शुभं अशुभं वा लब्ध्वा नाभिनन्दति न द्वेष्टि शुभं प्राप्य न तुष्यति न हृष्यति ॥ अशुभं प्राप्य न द्वेष्टि इत्यर्थः। तस्य एवं हर्षविषादवर्जितस्य विवेकजा प्रज्ञा प्रतिष्ठिता भवति ॥

रा ॥ ततोऽर्वाचीनदशा प्रोच्यते ॥ यस्सर्वत्र प्रियेष्वनभिस्नेहः उदासीनः प्रियसंश्लेषविश्लेषरूपं शुभाशुभं प्राप्याभिनन्दनद्वेषरहितः सोऽपि स्थितप्रज्ञः ॥

विचारः

अस्यापि श्लोकस्य कामशब्दोपलक्षितदोषान्तरप्रपञ्चनतया स्पष्टनार्थत्वेन सार्थक्यमवगन्तव्यम् । वीतक्रोध इत्युक्तत्वान्नद्वेष्टीत्यनेन पुनरुक्तिरिति शङ्कायां सकारणद्वेषवर्जितत्वमत्रोच्यते इति विशेषः ॥ पूर्वं क्रोधत्यागमात्रमुक्तम् ॥ अत्र तु सर्वत्रानभिस्नेहत्वरूपकारणसहितं द्वेषवर्जनमुच्यते ॥ अनभिस्नेह इति हेतुगर्भं विशेषणम् ॥ सर्वत्रानभिस्नेहत्वाच्छुभाशुभ प्राप्य नाभिनन्दति न द्वेष्टीति यावत् । एवं हेतुसाध्यपरतयाऽन्वयं श्रीमदाचार्योक्तं वेङ्कटनाथोऽप्यनुकरोति ॥

(सर्वत्रेत्युक्तावपि तस्य किंचित्संकोचो वक्तव्यः । अप्रियेषु स्नेहप्रसङ्गाभावात्प्रियमात्रविषयः सर्वत्रेतिशब्द इति देशिको दर्शयति ॥ भगवति परमात्मनि सर्वथाऽभिस्नेहवानेव भवेत् अनात्मनि स्नेहाभावस्य तदर्थत्वादिति माधुसूदन्यां ॥ साधुभाषितमेतत् । सर्वत्रायोग्यविषये इति सङ्कोचः प्रामाणिकः ॥ शुभाशुभप्राप्तेरुक्तत्वात् समाधिस्थस्थितप्रज्ञलक्षणं नैतद्भवितुमर्हति । बाह्यानुसन्धानरहितस्य शुभाशुभप्रसक्तेरयोगात् ॥ अपरोक्षज्ञानिसामान्यलक्षणं पृष्टं । भगवदुक्तोत्तरेषु कानिचित्संप्रज्ञातासंप्रज्ञातसाधरणानि, अन्यानि संप्रज्ञातमात्रविवक्षावन्ति । अव्याप्तेरदोषत्वेन यथासम्भवं विनियोगोऽधिगन्तव्यः ॥ शुभाशुभप्राप्तिवचनमनुसन्धाय परेऽपि व्युत्थितपरोऽयं श्लोक इति वदन्ति )॥

किंप्रभाषेतेत्यस्येदं पद्यं उत्तरं इत्याहुः सर्वे अद्वैतव्याख्यातारो विना शङ्कराचार्यं ॥ तथाहि नीलकण्ठः "अभिस्नेहवान्हि धनदारादिषु विकलेषु सकलेषु वा अहमेव विकलः सकलोऽस्मीति दैन्यदर्पोपेतः पूर्वापरानुसंधानरहितो जल्पति । तथा शुभं प्राप्य नाभिनन्दति सन्तुष्टो भूत्वा शुभं प्रापयितारं नप्रशंसति, तथा अशुभं प्राप्य न द्वेष्टि दुःखीभूत्वा अशुभं प्रापयितारं न निन्दति" इति ॥ मधुसूदनादयस्त्वनाभिस्नेहं मानसत्वेन व्याख्यायाऽभिनन्दनद्वेषौ वाक्परतया

व्याचक्षते ॥ "अत्र निन्दाप्रशंसादिरूपा वाचो न प्रभाषते इति व्यतिरेकउक्तः" इति माधुसूदन्यां ॥ केवलमुदासीन एव भाषते इति श्रीधरवेङ्कटनाथौ ॥ इदं भावकथनं चिन्त्यम् ॥ अभिस्नेहाभिनन्दद्वेषास्तावन्मानसाः । तद्वाचकानां त्रयाणां वा द्वयोर्वा भाषणवाचित्वे गमकं न दृश्यते ॥ इदं पूर्वश्लोक एव दर्शितमिति नास्त्यवसरो विस्तरस्य ॥ पूर्वमनभिस्नेहस्सन् पश्चान्नाभिनन्दति नद्वेष्टि दैववशाच्छुभाशुभं प्राप्येति योजना रामानुजाभिप्रेता भाति ॥ अयं स्थितधीर्योगशास्त्रोक्तव्यतिरेकसंज्ञावस्थां गतः "स्वयं प्रियेषु प्रवृत्तिरहितत्वेनोदासीनो भागशः पक्वः दैवागतप्रियसंश्लेषविश्लेषयोश्चाभिनन्दनादिरहित इत्युक्ते, पक्वेतरेषां रागादीनां पाकाभिलाषेण मनोव्यापारविशेषनिवारणमुक्तं" इति देशिकः ॥ भागशः पक्वस्सन्नंशान्तरेण पक्वतामपेक्ष्य यतमानो व्यतिरेकसंज्ञावस्थापन्न इत्याशयः ॥

"यस्मिन्सत्यन्यदीये हानिवृद्धी स्वस्मिन्नारोप्येते स तादृशोऽन्यविषयः प्रेमापरपर्यायस्तामसो वृत्तिविशेषः स्नेहः ॥ अज्ञस्य सुखहेतुः यः स्वकलत्रादिः स शुभो विषयस्तद्गुणकथनादिप्रवर्तिका धीवृत्तिर्भ्रान्तिरूपाभिनन्दः स च तामसः ॥ एवमसूयोत्पादनेन दुःखहेतुः परकीयविद्याप्रकर्षादिरेनं प्रत्यशुभो विषयस्तन्निन्दादिप्रवर्तिका भ्रान्तिरूपा धीवृत्तिर्द्वेषः । सोऽपि तामसः" इति माधुसूदन्यां ॥ इमामेव व्याख्यां प्रतिलिखति वेङ्कटनाथः ॥ अभिस्नेहाभिनन्दद्वेषाणां तामसत्वं निरूप्य भ्रान्तित्वं च प्रदर्श्याभ्रान्ते शुद्धसत्त्वे स्थितप्रज्ञे तेषामसंभव उक्तः ॥ भ्रमत्वं त्वेवं निरूपितं । अभिनन्दे स्वकलत्रादिगुणकथनादेः परप्ररोचनार्थत्वाभावेन व्यर्थत्वात् । परनिन्दायाः निवारणार्थत्वाभावेन व्यर्थत्वात्तावभिनन्दद्वेषौ भ्रान्तिरूपाविति ॥ अत्र चिन्त्यते । निष्प्रयोजनत्वेऽपि तयोर्भ्रान्तित्वं कथं निष्पाद्यते इति ॥

मुनिरनभिस्नेह इत्यनेन दुरभिमानराहित्यं बोध्यते । अनेन तस्यान्तःकरणं शून्यं नीरसमिति न मन्तव्यं । भगवति तस्य भक्तिभरितत्वात् ।

शिष्यादीन् लोकान्प्रति दयापूर्णत्वात् ॥ परं त्विन्धनाद्याधानेऽग्निरिव विषयाणां वा स्वपुत्रकलत्रादीनां वाऽऽभिमुख्येनोद्दीपितमनुवर्धमानं च न भवतीति विशेषः। भरतशास्त्रादिप्रसिद्धो लौकिकः स्नेहाख्यरसविशेषः स्थितप्रज्ञे न विद्यते ॥ अयं रस एवमुक्तः "स्थायी वत्सलता स्नेहः पुत्राद्यालंबनं मतं। उद्दीपनानि तच्चेष्टा विद्याशौर्योदयादयः॥ आलिङ्गनाङ्गसंस्पर्शशिरश्चुंबनमीक्षणं। पुलकानन्दबाष्पाद्या अनुभावाः प्रकीर्तिताः" इति ॥ महात्मना स्थितप्रज्ञानां मनांसि परोपकारनिरतान्यपि कुत्सितविषयसुखाभिमुख्येन स्नेहप्रचोदिततया नानुधावन्ति ॥ ते हि—

"अपेक्षन्ते न च स्नेहं न पात्रं न दशान्तरं।
परोपकारनिरता मणिदीपा इवोत्तमाः" ॥

अयमर्थः अभि आभिमुख्येन स्नेहः कुत्सितरसविशेषः न विद्यते यस्येति व्युत्पत्त्या ध्वन्यते ॥ अभिनन्दास्सुखलवा इत्युक्तेरीषदपि तुच्छविषयसुखाय यतते न सुज्ञ इति ध्वनिः ॥

## यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः।
## इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता॥५८

वि० ॥ किंचायं ज्ञानी यदा इन्द्रियार्थेभ्यः शब्दस्पर्शरूपरसगन्धेभ्यः सर्वशः सर्वाणि इन्द्रियाणि श्रोत्रादीनि कूर्मः करचरणाद्यंगानि स्वभावेनोपसंहरति तद्वदनायासेनोपसंहरते तस्य प्रज्ञा प्रतिष्ठिता ॥ ज्ञानिनो जिज्ञासोरि-

वेन्द्रियप्रत्याहरणं न यत्नसाध्यं॥ किंत्वनायासेनैवेति ज्ञापनाय कूर्मोऽगानीवेति दृष्टान्तः॥

श० किंच॥ यदा संहरत इति॥ यदा संहरते सम्यगुपसंहरते चायं ज्ञाननिष्ठायां प्रवृत्तो यतिः कूर्मोऽङ्गानीव सर्वशो यथा कूर्मो भयात्स्वान्यंगानि उपसंहरति सर्वशः सर्वतः एवं ज्ञाननिष्ठः इन्द्रियाणीन्द्रियार्थेभ्यः सर्वविषयेभ्य उपसंहरते॥ तस्य प्रज्ञा प्रतिष्ठितेत्युक्तार्थं वाक्यं॥

रा०॥ ततोऽर्वाचीनदशामाह॥ यदेन्द्रियाणीन्द्रियार्थान्स्पृष्टुमुद्युक्तानि तदैव कूर्मोऽङ्गानीवेन्द्रियार्थेभ्यस्सर्वशः प्रतिसंहृत्य मन आत्मन्यवस्थापयति सोऽपि स्थितप्रज्ञः॥ एवं चतुर्विधा ज्ञाननिष्ठा पूर्वपूर्वा उत्तरोत्तरनिष्पाद्या॥

विचारः

कूर्मदृष्टान्तेन स्थितप्रज्ञस्येन्द्रियाणां सङ्कल्पमात्रनियम्यत्वं सूचितम्। यथा कमठोऽनायासेन स्वाङ्गानि यथापेक्षितमपकर्षति तथा स्थितप्रज्ञ इन्द्रियाणि शब्दस्पर्शरूपरसगन्धेभ्यो विषयेभ्यः प्रत्याहरतीत्यनायासेनोपसंहारे दृष्टान्त इति सर्वसम्मतम्॥

(केचिदत्रायमिति परामृष्टो न स्थितप्रज्ञः किन्तु जिज्ञासुरेवेत्याहुः॥ "अयं ज्ञाननिष्ठायां प्रवृत्तो यतिः" इति शङ्करभाष्यम्॥ "जिज्ञासोरेव कर्तव्यान्तरं सूचयति। इन्द्रियाणां विषयेभ्यो वैमुख्यस्य प्रज्ञास्थैर्यकारणत्वादादौ जिज्ञासुना तदनुष्ठेयमित्याह" इति तट्टीकाकारः (आनन्दगिरिः)॥ एवमेव शङ्करानन्दोऽपि। "यद्यपि ज्ञाननिष्ठासिद्धेर्महद्वैराग्यं तीव्रमोक्षेच्छो

तत्परत्वं चैतत्त्रितयमेव कारणम् ॥ तथापीन्द्रियनिग्रहाभावे वैराग्यादि ज्ञाननिष्ठा च नसिध्यतीत्यतः साधकस्य यतेर्यत्नत इन्द्रियजय. संपाद्यः प्रज्ञासिद्ध्याइत्याह" इति शङ्करानन्दावतारिका ॥ पूर्वश्लोकोऽपि विविदिषो-रेव कर्तव्योपदेशपर इति चोक्तमानन्दगिरिव्याख्यायाम् ॥

(स्थितप्रज्ञं विहाय साधकस्य जिज्ञासोः परामर्शे उत्तरस्यापृष्टोत्तरत्वं प्रसज्यते। स्थितप्रज्ञो हि साक्षात्प्रश्नविषयः॥ कर्मयोगाख्यप्रकरणप्राप्तत्वेन तु जिज्ञासुः प्रसङ्गादागच्छति। तस्माद्ये धर्माः स्थितप्रज्ञे साधके च समानास्त एव वक्तुमुचिता दृश्यन्ते॥ "सर्वत्रैवह्यध्यात्मशास्त्रे कृतार्थ-लक्षणानि यानि तान्येव साधनान्युपदिश्यन्ते" इति शङ्करभाष्यानुरोधे-नात्रापीन्द्रियनिग्रहः साधकस्य योगः कृतार्थस्य तु लक्षणं इत्युक्ते न काप्यनुप-पत्तिर्दृश्यते॥ अन्यथा साधकमात्रविवक्षायान्त्वपृष्टोत्तरत्वं दुष्परिहरं भवति। अस्मिन्नर्थे कूर्मदृष्टान्तः परमानुकूलः। कूर्मो हि सर्वथाऽनायासेन स्वभावत एव करचरणादीनुपसंहरति। एवं ज्ञान्येवेन्द्रियाणि संहर्तुं क्षमः न तु जिज्ञासुः, तेन विना बहुयत्नमिन्द्रियनिग्रहायोगात्॥ किञ्च सर्वश इति सर्वेन्द्रियाणां तत्तद्विषयेभ्यो निरोध उक्तः। रसनेन्द्रियस्य शान्तिस्त्वपरोक्ष-ज्ञानिन एव सम्भवति। "रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते" इति वक्ष्यते॥ तस्माज्ज्ञानिपरोऽयं श्लोक इति गम्यते॥ यत्तदोर्नित्यसम्बन्धाद्यदे-त्युक्तथा तदेतिवर्तते। अनेन स्थितप्रज्ञशब्दो न पंकजादिशब्दवद्योगरूढ इति सूचितम्॥ यदा यदाऽयमिन्द्रियाणि निगृह्यात्मनि क्रोडीकरोति तदा तदा स्थितप्रज्ञः इति यावत्॥

(पूर्वमेवोक्तं प्रायोविरुद्धकामत्यागवत्त्वे सति भगवत्स्थित्या तत्प्रसादेन संतुष्टत्वं स्थितप्रज्ञस्य लक्षण इति॥ दुःखेषु यस्सर्वत्रेति श्लोकाभ्यां काम-शब्दोपलक्षितदोषान्तरत्यागवचनेन लक्षणं स्फुटीकृतं॥ प्रकृतश्लोकेऽपि स्पष्टन-एव तात्पर्य। तथाच लक्षणमेकमेव। अन्यानि तूक्तानि तत्प्रपञ्चकतया

तदन्तर्भूतानीति श्रीमदाचार्याशयः॥ रामानुजाचार्यस्तु प्रतिश्लोकं 'सोऽपि स्थितप्रज्ञः' 'सोऽपि स्थितप्रज्ञः' इति वदन्भिन्नलक्षणपरत्वेन व्याकरोति ॥

अर्जुनः चतुरः प्रश्नानाहेत्यादाय किमासीतेति तृतीयप्रश्नस्योत्तरत्वेनेह जितेन्द्रियत्वमुक्तमित्यद्वैतव्याख्यातारः॥ "इदानीं किमासीतेति प्रश्नस्योत्तरं वक्तुमारभते भगवान् षड्भिः श्लोकैः" इति माधुसूदन्यां॥ तदेव प्रतिलिखति वेङ्कटनाथः प्रायशो मधुसूदनानुवर्ती॥ कूर्मप्रत्याहार इव इन्द्रियनिग्रहो विवक्षित इति स्फुटं। तदर्थमुपवेशनं तु क्वाभिधीयते इति न ज्ञायते॥ व्रजन्वा तिष्ठन्वा उपविशन्वा शयानो वा इन्द्रियाणि निगृह्णीयात् साधकः, निगृह्णाति ज्ञानीत्युपपत्तौ उपवेशनमात्रस्य विवक्षा किमित्युच्यते॥ भाषणोपवेशनयोर्न किमप्यस्ति शृङ्गं, येनार्जुनस्तन्मात्रविवक्षया पृच्छेत्। अपितु भाषणादयो ज्ञानिव्यापारसामान्योपलक्षका एव॥

किंच कमठाः भयादङ्गान्युपसंहरन्तीत्यादाय "प्रारब्धकर्मवशेन व्युत्थितोऽपि योगी द्वैतदर्शनोद्विग्नस्सन्निरोधसंस्कारप्राबल्यात्प्रीत्या समाधिमनुतिष्ठन्नास्ते" इति नीलकण्ठव्याख्या॥ "प्रारब्धकर्मवशाद्व्युत्थानेन विक्षिप्तानीन्द्रियाणि पुनरुपसंहृत्य समाध्यर्थमेव स्थितप्रज्ञोपवेशनं॥ पूर्वश्लोकाभ्यां व्युत्थानदशायामपि सकलतामसवृत्त्यभाव उक्तः। अधुना तु पुनः समाध्यवस्थायां सकलवृत्त्यभाव इति विशेषः" इति माधुसूदन्यां॥ अस्य व्याख्याने 'च' इति पुनरर्थः, तथा कूर्मदृष्टान्तेन विवक्षितो निरोधः असंप्रज्ञातावस्थां प्राप्तो विवक्षितः इति भाति॥ असंप्रज्ञातावस्थाप्रवेशमनुदिश्यापि स्वाधीनेन्द्रियस्य ज्ञानिन इत्युक्तेऽनुपपत्तिर्नज्ञायते।।समाध्यर्थमेवास्योपवेशनमिति मधुसूदनेनोक्तावपि विचारादिनेन्द्रियनिग्रहार्थं स्थितप्रज्ञस्योपवेशनं इति भावं प्रदर्शयत्युत्कर्षदीपिकाकारः॥ उपवेशनस्यैव सार्थक्यमन्वेषणीयं इति वा असंप्रज्ञातसमाधिपरतयैव योजनाऽन्वेष्टव्येति वा निर्बन्धस्य गमकं चिन्त्यं॥

योगशास्त्रोक्ता प्रथमावस्था यतमानसंज्ञा दशाऽत्रोच्यते इति रामानुजाचार्यः। यस्यामयं बाह्येन्द्रियाणि विषयेभ्यः प्रतिसंहृत्य मन आत्मनि व्यवस्थापयितुं यतते इति ॥ यतमानस्याकृतकृत्यस्य स्थितप्रज्ञ इति नाम केवलमौपचारिकं दृश्यते ॥ भावसंग्रहकथने देशिकस्यायमाशयः। "प्रजहातीत्यनेन कामानां तथात्वेन दर्शनं, दुःखेष्वित्यनेन कामानां तथात्वेन दृश्यमानेष्वपि निस्संगता, यस्सर्वत्रेत्यनेन संगलेशेन भुज्यमानेष्वपि नास्ति स्नेहः, यदेत्यनेन प्रचुरेऽपि रागे तन्निरोधसंरम्भ इत्यवस्थावैषम्यं ज्ञेयं" इति ॥ चतुःश्लोक्या प्रश्नचतुष्कोत्तर सिद्धमिति चैवं निरूपितं अनेन॥ "आत्मरतित्वं स्थितप्रज्ञस्य स्वरूपं आश्चर्यवद्वदति इति तस्य तदेकभाषणं तदनुसन्धानरूपं, तदासनं तत्प्राप्त्यर्थप्रवृत्तिरूपं तस्य व्रजनं चेति च" इति ॥

**विषया विनिवर्तन्ते निराहारस्य देहिनः।**
**रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते॥ ५९॥**

वि ॥ नन्वेवं कामप्रहाणादिलक्षणसाधनं चेज्ज्ञानं तर्हि सर्वोऽपि जनः कस्मान्न तत्साधयति। कामाद्युपद्रवपरिहारार्थं किं दंदह्यमानशिराः बंभ्रमीति इत्यतो निराहारत्वेनेन्द्रियजयः तेनैव च ज्ञानमित्यादिदुःसंपादत्वं ज्ञानस्य विषया इत्यादिभिस्त्रिभिः। तत्राद्येनेन्द्रियजय उच्यते॥ देहिनो निराहारस्य। गर्भमिदं। निराहारत्वेन हेतुना विषयाः रूपादयः इन्द्रियाणां तद्भोगशक्तय उपलक्ष्यन्ते। ताः निवर्तंते ॥ रसवर्जं रसो रागः मानसिकविषयाभिलाषवर्जं। निराहार

विषयाभिलाषो न निवर्तते । रसोऽप्यस्य देहिनः परं दृष्ट्वा निवर्तते ॥ परमात्मदर्शनेनैव विषयाभिलाषोऽपयातीत्यर्थः । यद्वा रसेतरे रूपगंधस्पर्शशब्दाः निवर्तन्ते । अत्रापि विषयपदेनेन्द्रियाणां तद्भोगशक्त्यादयो लक्ष्यंते । चक्षुरादीन्द्रियाणां रूपादिविषयभोगशक्तयो मनसस्तदाकांक्षाश्च निवर्तन्ते इत्यर्थः )( रसवर्जं रसशब्दः प्राग्वल्लाक्षणिकः । रसनेन्द्रियस्य रसभोगशक्तिवर्जं मानसिकरसाकांक्षावर्जमिति रसविषयकमनोगताकांक्षा रसनेन्द्रियगतरसभोगशक्तिश्च निराहारत्वेन हेतुना न निवर्तत इत्यर्थः ) । तद्द्वयं कदा निवर्तत इत्यत उक्तं ॥ रसोऽपीति । अस्य देहिनः रसः मानासिको रसविषयको रागः रसनेन्द्रियस्य तद्भोगशक्तिश्च परं दृष्ट्वा निवर्तते ॥ (अचेतने चेतनवदुपचाराद्रसः परं दृष्ट्वा निवर्तत इत्युक्तमिति ज्ञेयं )( अयमर्थः बाह्येन्द्रियाणि विषयसन्निधानेऽपि न तैः सन्निकृष्यन्ते ॥ सन्निकृष्टान्यपि मनस्तदाभिमुख्येन न हरन्ति ॥ अपहृतेऽपि मनसि न विषयरागो जायते । तदा नात्मनः क्षोभो भवति इत्येष इन्द्रियजयः )( सोऽयं संग्रहेण द्वेधा भवति ॥ बाह्येन्द्रियाणां शक्तिजयान्मनसो रागक्षयाच्च । एतद्द्वयं च जिज्ञासोर्निराहारत्वेन, ज्ञानिनो ब्रह्मदर्शनेन भवतीत्येवमिन्द्रियजयस्य महाप्रयत्नसाध्यत्वमिति )॥

शं ॥ तत्र विषयाननाहरत आतुरस्यापीन्द्रियाणि निवर्तन्ते कूर्मोंगानीव संह्रियन्ते न तु तद्विषयो रागः॥ स कथं संह्रि-

यते इति उच्यते। विषया इति॥ यद्यपि विषयाः विषयोपलक्षितानि विषयशब्दवाच्यानि इन्द्रियाणि। अथवा विषया एव निराहारस्य अनाह्रियमाणविषयस्य काष्टतपासि स्थितस्य मूर्खस्यापि विनिवर्तन्ते ॥ देहिनो देहवतो रसवर्जं रसो रागो विषयेषु यः तं वर्जयित्वा। रसशब्दो रागे प्रसिद्धः । स्वच्छन्दतः स्वरसेन प्रवृत्तः रसिकः रसज्ञः इत्यादिदर्शनात्। सोऽपि रसो रंजनारूपः सूक्ष्मः। अस्य यतेः परं परमार्थतत्त्वं ब्रह्म दृष्ट्वा उपलभ्य "अहमेवतत्" इति वर्तमानस्य निवर्तते । निर्बीजं विषयविज्ञानं संपद्यते इत्यर्थः ॥ न असति सम्यग्दर्शने रसस्योच्छेदः । तस्मात्सम्यग्दर्शनात्मिकायाः प्रज्ञायाः स्थैर्यं कर्तव्यमित्यभिप्रायः ॥

रा० ॥ इदानीं ज्ञाननिष्ठायाः दुष्प्रापतां तत्प्राप्त्युपायं चाह ॥ इन्द्रियाणामाहारा विषयाः निराहारस्य विषयेभ्यः प्रत्याहृतेन्द्रियस्य देहिनो विषया विनिवर्तन्ते। रसो रागः । विषयरागो न निवर्तत इत्यर्थः । रसोऽप्यात्मस्वरूपं विषयेभ्यः परं सुखतरं दृष्ट्वा निवर्तते ॥

विचारः ॥

[प्रजहातीत्यारभ्य श्लोकानामाशयनिरूपणावसरे व्याख्यातृष्वभिप्रायभेदः प्रागेवोक्तः ]। ज्ञाननिष्ठायाश्चातुर्विध्यनिरूपणपूर्वकं स्थितप्रज्ञस्य चतुर्विधत्वं विवरीकृतं पद्यचतुष्टयेनेति रामानुजाचार्यो व्याचष्टे ]॥ स्वरूपभाषणोपवेशनगमनविषयकाणां चतुर्णां प्रश्नानां चतुःश्लोक्योत्तराणि

क्रमाद्वृत्तानीति केचित् । श्रीमदाचार्याशयस्त्वन्यः । विना यानिशेति पद्यं अन्यानि पद्यानि यावदध्यायसमाप्ति स्थितप्रज्ञस्वरूपप्रश्नस्य समाधानानीति मत्त्वा प्रायो विरुद्धकामत्यागवत्त्वे सति भगवति सन्तुष्टचित्तत्वमेव तस्य लक्षणमित्याचार्योऽभिप्रैति ॥ एतल्लक्षणसंबन्धिप्रमेयजातमेव यानिशेति पद्यं विना अन्यानि निरूपयंति ॥ अस्मिन् प्रमेयजाते प्रथमं स्पष्टीकरणाय दुःखेष्विति त्रीणि पद्यानि प्रवृत्तानि ॥ स्थितप्रज्ञलक्षणशरीरे यः काम उक्तः तेन सर्वे मानसदोषास्संगृहीता उपलक्षणयेत्यभिप्रायः ॥ के ते दोषा इत्याकाङ्क्षायां उद्वेगादिकं कण्ठोक्त्या प्रदर्शितम् ॥ एवं त्रिभिः पद्यैः स्पष्टनान्तरं प्रमेयान्तरप्रदर्शनाय विषयेति त्रयः श्लोकाः प्रवृत्ताः ॥ केचिदस्यास्त्रिश्लोक्या ज्ञानिनो लक्षणान्तरकथनं प्रयोजनमाहुः । यद्यपि 'वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता' इति वक्ष्यते । वस्तुतस्तु न लक्षणान्तरं विवक्षितं ॥ कामवर्जनाख्ये लक्षणेऽत्रोक्तप्रमेयस्यान्तर्भावसौलभ्यात् ॥ तर्हि किमुच्यते विषयेति श्लोकत्रयेणेत्युक्तौ भाष्यकार आह—"नचैतल्लक्षणं ज्ञानमयत्नतो भवतीत्याहोत्तरश्लोकैः" इति॥ कूर्माङ्गोपसंहारदृष्टान्तेनेन्द्रियजयः प्रसक्तः । अनेनेन्द्रियजयस्सुलभ इत्यज्ञो मन्येत, तादृशभ्रमव्युदासाय ज्ञानस्य दुःसंपादत्वमिह प्रतिपाद्यते प्रकृतेन श्लोकत्रयेण ॥ स्यादेतत्सौलभ्यं यदि भोजनवैधुर्यमात्रेणेन्द्रियजयो निष्पद्येत । न चैवं, निराहारत्वहेतुना विषयवैमुख्ये संपादितेऽपि रागस्य भगवदपरोक्षज्ञानैकनिवर्त्यस्यावशिष्टत्वेनेन्द्रियजयस्य दुर्घटत्वात् ।

अत्र निराहारफलमेतावदिति निर्धार्यं । केषुचिदधिकारिषु निराहारात् रूपरसगन्धस्पर्शशब्दाख्यविषयविषयकपञ्चेन्द्रियकर्तृकभोगशक्तिर्नश्यति । तेषां भोगेच्छा तु न नश्यति । अन्येष्वधिकारिषु तूपवासात् रूपगन्धस्पर्शशब्दविषयविषयकचक्षुर्नासिकात्वक्श्रोत्रकर्तृकभोगशक्तिः तद्भोगेच्छा च नश्यति । रसनेन्द्रियकर्तृकभोगशक्तिः तद्भोगेच्छा तु न नश्यति ॥ एवमधिकारिपुरुषवैचित्र्येण उपवासफलमधिगन्तव्यं । अधिकारिद्वयेऽपि

उपवासार्जेयो रागोऽवशिष्यते । तस्य तु निवृत्तिर्भगवदपरोक्षादेवेतीन्द्रियजयस्य दुस्संपादत्वं सिद्धमिति श्रीमदाचार्याशयः ॥ उपवासस्य प्रकारद्वयोपेतफलवत्वं श्लोकाक्षरारूढमेव भवति ॥ विषयाः विषयभोगशक्तयः निराहारत्वेन विनिवर्तन्ते । रसस्तु न निवर्तते । शब्दादिपञ्चविषयविषयिका रक्तिर्न निराहारत्वहेतुना निवर्तते ॥ अस्मिन्नर्थे विषयपदस्य तद्भोगशक्तिबोधकतया लाक्षणिकत्वं ज्ञेयं । अथवा विषयाः शब्दस्पर्शरूपगन्धग्रहणशक्तयः तद्विषयकचैतसिका रागाश्च विनिवर्तन्ते रसवर्जं ॥ रसनेन्द्रियशक्तिः रसनारागश्च न निवर्तते इति ॥ अस्मिन्नर्थे विषयशब्दस्य रसशब्दस्य च लाक्षणिकत्वं ज्ञेयं ॥ रसशब्दस्य रागपरत्वं कोशप्रसिद्धं "रसो रागस्तथा रक्तिरशोभनाध्यास इष्यते" इति वचनात्, "शृङ्गारादौ गुणे वीर्ये बले रागे द्रवे रसः" "रसो रागे गुणे द्रव्ये" इति च ॥ पक्षान्तरव्याख्याने रसशब्दस्य रसनावाचित्वं श्रीधरीयेऽप्यामोदितं ॥ संवादतया यथोक्तं भागवते "इन्द्रियाणि जयंत्याशु निराहारा मनीषिणः । वर्जयित्वा तु रसनमसौ रस्ये हि वर्धते" इति ॥ अनेन रसनाया वैलक्षण्यं स्फुटं । इतरेन्द्रियभोगशक्तिविषयाकाङ्क्षाणां नाशोऽपि रसनाशक्तिरसनेच्छयोर्न निराहारान्नाश इति ॥ केषुचित्पुरुषेषु पञ्चेन्द्रियविषयरागोऽप्यवशिष्यते । निराहारत्वेन केवल भोगशक्त्यो नश्यन्तीत्यस्य संवादतया यथोक्तं मोक्षधर्मे (शांति 204, 6 14 16)

(६) "तर्षच्छेदो न भवति पुरुषस्येह कल्मषात् ।
निवर्तते तदा तर्षः पापमन्तगतं यदा ॥

(१३) उद्यन्हि सविता यद्वत्सृजते रश्मिमण्डलम् ।
स एवास्तमपागच्छस्तदेवात्मनि यच्छति ॥

(१४) अन्तरात्मा तथा देहमाविश्येन्द्रियरश्मिभिः ।
प्राप्येन्द्रियगुणान्पञ्च सोऽस्तमावृत्य गच्छति ॥

(१६) विषया विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥

मनस्याकूतयो मग्ना मनस्त्वभिगतं मतिं ।
मतिस्त्वभिगता ज्ञानं ज्ञानं चाभिगतं परं" इति ॥

रसशब्दस्य तृष्णापरत्व सर्वव्याख्यातृसम्मतं ॥

रसः परं दृष्ट्वा निवर्तते इत्यचेतने चेतनवदुपचारः ॥ एवमेव देशिकः "दृष्ट्वा निवर्तते इति दर्शनस्य रागकर्तृकतया निर्देश औपचारिकः" इति ॥ अथवा दृष्ट्वा स्थितस्यास्य देहिनो रसो निवर्तत इत्यन्वयः ॥

(परदर्शनेन रागनिवृत्तिः कथं भवतीत्याकाङ्क्षायामाहुरद्वैतवादिनः "विषयेषु भोग्यत्वभावनानिवृत्त्या रागनिवृत्तिः । भोग्यत्वभावना तु ब्रह्मदृष्ट्या निवर्तते । सर्वस्य स्वस्य च ब्रह्ममात्रत्वावगमाग्निना भोक्तृभोग्यत्वादिभेदवने निर्दग्धे सति तदाश्रयत्वात्तेन सहैव स्वयं च दग्धो भवतीत्यर्थः" इति शङ्करानन्दः । एवमन्येऽपि ॥)

(परशब्दस्य ब्रह्मबोधकत्वं विहाय प्रकृष्टार्थकत्वमादाय परं "सुखतरं" इति रामानुजाचार्यव्याख्या ॥ विषयाहि सुखरूपाः । आत्मस्वरूपं तु ततोऽप्यतिशयेन सुखरूपम् इति अस्य देशिकोपपादनम् ॥ महासुखरूपेण जीवेन स्वस्वरूपे दृष्टे विषयरागो नश्यतीत्यस्याशयः ॥)

इदं पक्षद्वयमनुपपन्नं ॥ ब्रह्माभेदस्य अप्रामाणिकत्वात् । स्वस्वरूपानुसन्धानेन रागस्य निवृत्त्ययोगात् ॥ ब्रह्मापरोक्षज्ञानमहिम्ना भगवत्प्रसादेन रागो वा रागशेषो वा नश्यतीत्येव प्रामाणिकं ॥ पश्यत शान्तिपर्वणि यदुक्तं "ज्ञानं चाभिगतं परं" इति ॥ तत्र परशब्दो ब्रह्मवाचीति स्फुटं ॥

ननु सम्यग्ज्ञानमन्तरेण रागो नापगच्छति चेत्तदपगमादृते रागवतः सम्यग्ज्ञानोदयायोगादितरेतराश्रयतेत्याशंक्य समाहितमानन्दगिरिव्यख्यायां "इन्द्रियाणां विषयपारवश्ये विवेकद्वारा परिहृते स्थूलो रागो व्यावर्तते ।

ततश्च सम्यग्ज्ञानोत्पत्त्या सूक्ष्मस्यापि रागस्य सर्वात्मना निवृत्त्युपपत्तेर्नैतरेतराश्रयता" इति ॥

इदमुक्तं द्वितीयार्धेन । सरागविषयप्रत्याहृतेन्द्रियत्वं वा रसनाशक्तिरसनाकांक्षाविजयसहकृतत्वेसतीतरेन्द्रियभोगशक्तिभोगेच्छयोरुपरमवत्वं वा ज्ञानिन्येव विद्यमानमितीन्द्रियजयो दुःसंपादः ॥ तस्माज्ज्ञानी जिज्ञासुविलक्षणः इति ॥ पूर्वार्धेन रागनाशात्पूर्वदशा प्रतिपादिता। यस्यां जिज्ञासुरुपवासेन रसवर्जमिन्द्रियाणि विषयेभ्य. प्रत्याहरति ॥ ज्ञानिनः कस्मात्सकाशाद्वैलक्षण्यमुक्तं इति निरूपणावसरे केचिद्विप्रतिपद्यन्ते ॥ विषयवैमुख्यस्यानेकधा संभावितत्वात्केचिद्रोगिणः केचित्काष्टतपस्विनः केचित् सुप्तिमूर्च्छालयग्रहावेशगतान् गृह्णन्ति ॥ सुप्तादेः समाधिस्थस्य च महानस्ति विशेष इति ज्ञापनाय श्लोक इति नीलकण्ठः ॥ निराहारस्य देहिनः इत्यनेन सुप्तः मूर्च्छितस्तथा स्वानिच्छया विषयविमुखो गृह्यते इति तस्याशयः ॥ सुप्तादौ रागमूलस्यात्माज्ञानस्यादाहाद्रागस्य सूक्ष्मरूपेण विद्यमानत्वान्न सुप्तादीनां समाधिस्थस्थितप्रज्ञसाम्यमित्यस्याभिप्रायः ॥ एव सुप्तादीनामेव ग्राह्यत्वे स्वाभिप्रायं वदन्नाह नीलकण्ठः॥ "प्रांचस्तु रोगिणः काष्टतपस्विनो वा मूढस्याऽपि विषयाननाहरतो रसवर्जं विषया विनिवर्तन्ते तस्यैव परं दृष्ट्वा स्थितस्य रसोऽपि निवर्तते इति व्याचख्युः" इति ॥

प्राचां मतेऽस्वारस्यमनेन यद्ध्वनितं तत्र युक्तिस्तु न ज्ञायते ॥ सुप्त्याद्यवस्थागतानामेव ग्राह्यत्वे युक्तिश्च न दृश्यते ॥ किंच देहिन इत्युक्त्या बाह्यानुसन्धानवतो विवक्षितत्वेन सुप्तादिव्यावृत्तिस्सुवचेति नीलकण्ठस्वीकृतपक्षे नीरसत्वं च गम्यते ॥

(देहएवाहंइत्यहम्बुद्धेरालम्बनत्वेन यो देहं मन्यते सदेहीति व्युत्पत्त्या देहात्मैक्यभ्रमवान्परममूढो विवक्षित इत्यद्वैतव्याख्यातार आहुः ॥ यद्यपि देहीतीहाऽनपगतरागेत्वनापरोक्षज्ञानिनस्सकाशादवरः कश्चिद्विवक्षित इत्य-

विवादम् ॥ जडतुल्यो देहात्मैक्यभ्रमवानेव विवक्षामर्हतीति तु को निर्बन्धः ॥ उपवासादिविष्णुधर्मनिरतपरोक्षज्ञानिनोऽपि संग्रहे न काप्यनुपपत्तिर्दृश्यते ॥

विषया विनिवर्तते इत्यत्र विषयशब्देन शब्दादिग्रहणे तेषां विनिवर्तनस्यायोगाल्लक्षणया इन्द्रियाणि बोध्यन्ते इत्युत्कर्षदीपिकाकारः शङ्करभाष्याशयं वदति ॥ इन्द्रियाणामपि स्थायिनां गमनानुपपत्त्येन्द्रियपरत्वेऽप्यस्य दूषणस्य समानत्वेन लक्षणामाश्रित्यापि लाभो न प्राप्तो भाति ॥ अतः इन्द्रियाणां विषयभोगशक्तयो विषयपदेन लक्षणया गृह्यन्ते, पक्षान्तरव्याख्याने घ्राणचक्षुःश्रोत्रत्वक्शक्तयस्तद्भोगेच्छाश्च गृह्यन्ते इत्याचार्यः ॥ विनिवर्तनं नाम नाशोऽभिप्रेतः ॥

विषयविनिवर्तनं केनोपायेन भवतीत्याकाङ्क्षायामाह भगवान् निराहारस्येति ॥ हेतुगर्भमिदं ॥ इन्द्रियैर्विषयाणामाहरणं ग्रहणमाहार इति भावार्थमाह श्रीधरः॥ इन्द्रियैर्विषयाननाहरतः अभुंजानस्येति नीलकण्ठोऽपि ॥ आह्रियन्ते विषया यैस्ते आहाराः इन्द्रियाणि । नियमार्थ तेभ्यो निर्गतो यस्स निराहारः इन्द्रियनिग्रहवान् तापसः इति शङ्करानन्दः ॥ 'दशैतानीन्द्रियोक्तानि द्वाराण्याहारसिद्धये' इति मोक्षधर्मवचनमादायाहारा विषयाश्शब्दादयः इति देशिकः ॥ भावे वा करणे वाऽन्यथावा व्युत्पत्त्या आहारशब्देन विषयसामान्यग्रहणेनैवमुक्तं भवति ॥ "शब्दादीनभुजानस्य शब्दादयो विनिवर्तन्ते" इति, अत्रोद्देश्यविधेययोरैक्यादस्वारस्यं कथ चित्परिहार्यं । सर्वेन्द्रियव्यापाराणामपि भोजनावलंबित्वेन प्रसिद्धेः, क्षुधा सन्तप्तस्येन्द्रियाणि कुण्ठितशक्तीनीत्यनुभवमनुसृत्योपवासमहिमाऽनेनोक्त इत्युक्ते बाधक न ज्ञायते ॥ अत एव श्रीधरोऽपि पक्षान्तरव्याख्यानमाह "यद्वा निराहारस्योपवासपरस्य विषयाः प्रायशो निवर्तन्ते । क्षुधासन्तप्तस्य शब्दस्पर्शाद्यपेक्षाभावात् । परंतु रसवर्जं रसापेक्षा तु न निवर्तते" इति ॥

**यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।**
**इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥६०**

वि ॥ नन्विन्द्रियजयार्थं किं निराहारत्वरूपमहाप्रयत्नेन, प्रत्याहारादिसाधारणयत्नेनापि तत्संभवात् । तथा किं ब्रह्मापरोक्षज्ञानेन, नित्यानित्यविवेकज्ञानेनापि रागनिवृत्त्युपपत्तेरित्यतआह । यततो ह्यपीति ॥ विपश्चितः परोक्षज्ञानिनः यततोऽपि साधारणप्रयत्नवतोऽपि पुरुषस्य देहाभिमानिनः इन्द्रियाणि मनः प्रसभं बलात् हरन्ति स्वयं विषयसन्निकृष्टानि सन्ति तदभिमुखं कृत्वा तावता तद्रागीकुर्वतीत्यर्थः । तावता आत्मनः कथं इन्द्रियाविजय इत्यत आह ॥ प्रमाथीनीति । प्रमथनशीलानि पुरुषस्य क्षोभणशीलानि न तेन तानि जितानि । योहि यं व्याकुलं न करोति स तेन विजित इत्युच्यते ॥ अतो महाप्रयत्नः प्रागुक्तदिशा कार्य इति ॥

शं ॥ सम्यग्दर्शनलक्षणप्रज्ञास्थैर्यं चिकीर्षता आदाविन्द्रियाणि स्ववशे स्थापयितव्यानि ॥ यस्मादनवस्थापने दोषमाह ॥ यतत इति ॥ यततः प्रयत्नं कुर्वतः हि यस्मात् कौन्तेय पुरुषस्य विपश्चितः मेधाविनः । अपि इति व्यवहितेन संबंधः । इन्द्रियाणि प्रमाथीनि प्रमथनशीलानि विषयाभिमुखं हि पुरुषं विक्षोभयन्ति आकुलीकुर्वन्ति ॥ आकुली-

कृत्य च हरन्ति प्रसभं प्रसह्य प्रकाशमेव पश्यतो विवेकविज्ञानयुक्तं मनः ॥

रा ॥ आत्मदर्शनेन विना विषयरागो न निवर्तते । अनिवृत्ते विषयरागे विपश्चितो यतमानस्यापि पुरुषस्येन्द्रियाणि प्रमाथीनि बलवन्ति मनः प्रसह्य हरन्ति । एवमिन्द्रियजय आत्मदर्शनाधीनः आत्मदर्शनमिन्द्रियजयाधीनमिति ज्ञाननिष्ठा दुष्प्रापा ॥

विचारः ॥

अपरोक्षज्ञानस्य दुःसम्पादत्वं प्रतिपाद्यते विषया विनिवर्तन्ते इत्यारभ्य श्लोकत्रयेणेति प्रागेवोक्तम् ॥ निराहारत्वापरोक्षज्ञानाभ्यां शक्तिक्षयरागक्षययोस्साध्यत्वं निरूप्य दौर्घट्यं प्रतिपादितम् ॥ तदुपरि शङ्काद्वयं जायते । किं विषयभोगशक्तेर्ह्रासो निराहारत्वेनैव लभ्यो वा उत स्यादन्यैरुपायैः प्रत्याहारादिसाधारणप्रयत्नैरपीति एका । कि रागादिक्षयोऽपि शास्त्राचार्योपदेशजन्यहेयोपादेयज्ञानपूर्वकनित्यानित्यवस्तुविवेकवतस्स्याद्वा न स्याद्वेत्यपरा ॥

अस्य शङ्काद्वयस्य समाधानं यततोऽपीति प्रकृते श्लोके दृश्यते । अत्रैवं योजना ॥ यततोऽपि पुरुषस्य इन्द्रियाणि प्रसभं मनो हरन्तीत्येकं वाक्यम् ॥ विपश्चितोऽपि पुरुषस्य इन्द्रियाणि प्रसभं मनो हरन्तीत्यपरं वाक्यम् ॥ तत्र आद्यं वाक्यं विषया विनिवर्तते इति श्लोकस्थपूर्वार्धमुक्तादाक्षेपाद्रक्षति ॥ द्वितीयं वाक्यं रसवर्जमिति द्वितीयार्धं ॥ तथाच यततोऽपि इन्द्रियाणि हरन्तीत्यनेन निराहारत्वरूपमहायत्नादूनाः प्रत्याहारादिसाधारणा यत्नाः इन्द्रियाणि प्रतिरोद्धुं नक्षमा इति गम्यते ॥ विपश्चितोऽपि इन्द्रियाणि हरन्तीत्युक्त्या अपरोक्षज्ञानादूनस्य साधारणविवेकस्य रागनिवर्तकत्वं नास्तीति गम्यते ॥

पुरुषस्येति न स्त्रीव्यावृत्तिर्विवक्षिता ॥ स्त्रीणामपि इन्द्रियबाधस्य विद्यमानत्वात् । किंतु शरीराभिमानी विवक्षितः । अतः पुरुषस्येति हेतु-
गान एव इन्द्रियाविजये कारणं इत्यनेन ज्ञाप्यते

इन्द्रियजयस्यात्यन्तायाससाध्यत्वमिहोच्यत इत्यभ्युपगम्य तन्निरूपणावसरे पूर्वोत्तरश्लोकसङ्गतिमेवमाह नीलकण्ठः—तथाहि समाहितेन ज्ञानिना इन्द्रियाणि कूर्मेणाङ्गानीव स्वेच्छया संह्रियन्ते । सुप्तादीनामिन्द्रियाणि श्रान्त्या स्वयमेव लीयन्ते । समाधिसिध्यर्थं यतमानो विपश्चित्तु इन्द्रियाणि निगृहीतुमसमर्थस्सन्क्लिश्यत्यन्तरितः ॥ तथाच ज्ञानी धन्यः । सुप्तिमूर्च्छालयग्रहावेशादिपरवशोऽपि धन्यः । केवलं जागरूको यतमानो विपश्चिन्नष्ट इति तस्याशयो भाति ॥

अत्रोच्यते । यततोऽपीत्यत्र "अपि" शब्दस्य सार्थक्यं स्वारस्यं चान्वेषणीयं ॥ पूर्वश्लोकेनोपवासापरोक्षज्ञानाभ्यामिन्द्रियजये प्रसाधिते सति तस्योपायान्तरैरपि साध्यत्वमाशंक्यान्यथोपपत्तौ चोदितायां परिहाराय यततोऽपीति श्लोकः ॥ यतमानत्वं विपश्चित्वं चेन्द्रियजये कारणत्वेन संभाविते शंक्यमाने इति अपिशब्दात्सूच्यते । यद्यपि ते संभाविते तथापि वस्तुतस्तयोर्न सामर्थ्यं इत्यपिशब्दाद्गम्यते इत्याचार्याशयः ॥ नीलकण्ठव्याख्याने तु अपिशब्दो निरर्थको वा "तु" इत्यर्थको वा भवति ॥ निराहारस्सुप्तादिर्विषयान्निवर्तते ज्ञानी रसान्निवर्तते यतमानो विपश्चित्तु न निवर्तते । किंतु इन्द्रियैर्जित एवेति वाक्यार्थस्य तेनाभिप्रेतत्वात् ॥

ज्ञाननिष्ठाया दुष्प्रापत्वे तात्पर्यमिति मन्वानस्तदुपपादनावसरे रामानुजाचार्य आह "इन्द्रियजय आत्मदर्शनाधीनः । आत्मदर्शनमिन्द्रियजयाधीनं" इति । इन्द्रियाणां बलप्रदो हि रागः । रागविशिष्टानीन्द्रियाण्यजेयानि । इन्द्रियाजये न परदर्शनं । परदर्शनाभावे रागो न नश्यति इति

चक्रकाभिप्रायेण व्याख्यातं भाति ॥ तात्पर्यचन्द्रिकायां पूर्वं रागस्यात्मदर्शनैकनिवर्त्यत्वमुक्त्वा इह रागविशिष्टेन्द्रियाणामजेयत्वमुच्यते इति श्लोकद्वयेनान्योन्याश्रयश्चक्रको वा तथाच दौर्घट्यमिति तदाशय उक्तः ॥

इतरेऽद्वैतव्याख्यातारो न नीलकण्ठवद्विषया विनिवर्तन्ते इति श्लोकेन संगतिं योजयितुं यतन्ते । नापि रामानुजोक्तदिशा ॥ "आदाविन्द्रियाणि स्ववशे स्थापयितव्यानि । यस्मात्तदनवस्थापने दोषमाह यतत इति" इति शङ्करभाष्यं ॥ मनुते ब्रह्मानेनेति मनः सर्वत्र सदवलोकनकारणं । तस्यापहारे ब्रह्मज्ञानं दुर्लभं इति महाननर्थस्स्यात् । तं प्रहातुं मनस्संरक्षणार्थं च प्रथमं इन्द्रियजय आवश्यकः, अन्यथा महान्दोषः प्राप्येत इति शाङ्कराणामाशयः ॥ इन्द्रियाख्यचोरा मानसं हरेयुर्जाग्रत जाग्रत इत्युपदेशोऽभिप्रेतः इति प्रायशस्सर्वे ते व्याचक्षते ॥

यततः इति परस्मैपदं न व्याकरणविरुद्धं ॥ चक्षिङो ङित्करणादनुदात्तेतो नावश्यकमात्मनेपदमिति मधुसूदनः ॥ "नच ङित्वाभावे सतीदित्वान्नुम् स्यादिति तद्वारणाय ङित्वकरणसार्थक्यान्नतस्यानुदात्तेत्वलक्षणात्मनेपदानित्यत्वज्ञापकत्वं । ङित्वेऽपि इदित्वान्नुम्प्राप्तिस्तु नशंक्या । अन्त्येदित्वस्यैव तन्निमित्तत्वेन ङित्करणे तदभावादिति वाच्यं । अनुदात्ताकारेत्वकरणेनापि नुम्प्राप्तिवारणसंभवान्नित्यमात्मनेपदस्य संभवाच्च ङित्वकरणवैयर्थ्यस्य दुर्वारत्वात् । अनुदात्तेत्वलक्षणात्मनेपदस्यानित्यत्वे तु नित्यमात्मनेपदप्राप्त्यर्थं ङित्वस्य सार्थक्यसंभवाद्भवति ज्ञापकत्वमिति भावः" इति धर्मदत्तशर्मा ॥

(यततः मोक्षे प्रयतमानस्येति श्रीधरः ॥ "विषयेषु भूयोभूयो दोषदर्शनवतः" इति वेङ्कटनाथादयः ॥ "प्रत्याहारादिसाधारणयत्नवतः" इति श्रीमदाचार्यः ॥ विपश्चितः अत्यन्ताविवेकिनः इति माधुसूदन्यां ॥

'विषयजातं मायिकमसत्तुच्छं इति विषयप्रवृत्तिर्बन्धाय भवतीति च विजानतः' इति शङ्करानन्दः ॥ 'शास्त्रजन्यहेयोपादेयविवेकवतः' इति देशिकः ॥ 'परोक्षज्ञानी विवेकी उक्त' इत्याचार्यः ।

इन्द्रियाणां बलीयस्त्वं यन्निरूपितं द्वितीयार्धेन तत्र नेषदपि विवादः॥ प्रमाथीनि प्रमथनशीलानि विषयाभिमुखं कर्तुं समर्थानि अतिबलीयस्त्वाद्विवेकोपमर्दनक्षमाणि प्रक्षोभकाणि, प्रमथितुं विषयदर्शनमात्रेण व्याकुलीकर्तुं शीलं येषां तानि रागादिदोषग्रस्तानि इत्येव व्याख्यातं तत्र तत्र ॥

हरन्ति विषयप्रवणं कुर्वन्ति । विकारं प्रापयन्ति । गृहीत्वा विषयेषु पातयन्ति स्वरूपाच्च्यावयन्ति इति इन्द्रियाणां मनोविषयकहरणव्यापारं बहुधा वर्णयन्ति ॥ "मात्रा स्वस्रा दुहित्रा वा नविविक्तासनो भवेत्" । "बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति" इति मनुः II. 215 ॥ "जिह्वैकतोऽच्युत विकर्षति मावितृप्ता शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित् । घ्राणोऽन्यतश्चपलदृक्क्वच कर्मशक्तिर्बह्व्यः सपत्न्य इव गेहपतिं लुनंति" ॥ (भा. स०. प्रह्लादस्तुतिः) इति भागवते ॥

यथा बहवश्चोराः वने एकं पुरुषं प्रमथ्य तस्य वित्तं हरन्ति एवमिन्द्रियाणि इति नीलकण्ठः ॥ विपश्चिति स्वामिनि विवेकिनि सति सर्वप्रमाथित्वादिन्द्रियाणि विवेकजप्रज्ञायां प्रविष्टं मनस्ततः प्रच्याव्य स्वविषयाविष्टत्वेन हरन्ति ॥ यथा दस्यवः प्रसभमेव धनिनं धनरक्षकं चाभिभूय तयोः पश्यतोरेव धनं हरन्ति तथेन्द्रियाण्यपि विषयसन्निधाने मनो हरन्ति इति मधुसूदनः ॥

तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥६१

वि० ॥ यदि साधारणयत्नविवेकज्ञानाभ्यामिन्द्रियाणि न जीयन्ते तर्ह्यशक्यान्येव तानि जेतुं, निरहारत्वे देहावस्थित्य-संभवात्। इन्द्रियजयस्य ब्रह्मदृष्टिसाध्यतायाऽभिमतत्वेन तस्य तद्धेतुत्वे विवक्षिते सत्यन्योन्याश्रयप्रसंगादित्यत आह ॥ तानीति । तानीन्द्रियाणि सर्वाणि संयम्य विषयेभ्य उपसंहृत्य मत्परः । अहमेव भगवान् कृष्णएव परः सर्वोत्कृष्टो यस्य स मत्परः । भगवानेव सर्वोत्तम इति ज्ञात्वा युक्तः ॥ समाध्यर्थस्य युजे रूपं । भगवति मनो युंजान-इत्यर्थः । आसीत तिष्ठेत् ॥ अयं भावः । यद्यपीन्द्रियजये परोक्तः प्रत्याहारादिः साधारणप्रयत्नो न साधनं । नापि निराहारत्वादिकं प्रागुक्तमवश्यं । तथापि तत्प्रतिनिधिना महाप्रयत्नेन जेयानि ॥ तत्र भगवतः सर्वोत्तमत्वज्ञानपूर्वं तस्मिन्नेव निरन्तरं मनोयोजनमिन्द्रियजये मुख्यं साधनं । निराहारत्वादिकं तु वस्तुगतिप्रदर्शनार्थमेवोक्तमिति ॥

सार्धश्लोकद्वयेनेन्द्रियजयरूपोपोद्घात उक्तः । अथेदानीं महाप्रयत्नेन साधितेन्द्रियजयस्य ज्ञानसिद्धिः फलमित्याह ॥ वशे हीति । यस्य वशे इन्द्रियाणि वर्तन्ते तस्य प्रज्ञा प्रतिष्ठितेति । यतएवं महायाससाध्येन्द्रियजयफलं

ज्ञानमतएवायासभीरुर्जनो न तत्साधयतीति । न तु ज्ञानस्योक्तलक्षणाभावादिति श्लोकत्रयतात्पर्यार्थः॥ अत्रोक्तमिन्द्रियजयस्य ज्ञानरूपं फलं न साक्षादिति रागद्वेषवियुक्तैरित्यादौ व्यक्तीभविष्यतीति ज्ञेयं ॥

शं ॥ यतः तस्मात् । तानि इति ॥ तानि सर्वाणि संयम्य संयमनं वशीकरणं कृत्वा युक्तः समाहितस्सन् आसीत मत्परः अहं वासुदेवः सर्वप्रत्यगात्मा परो यस्य समत्परः । न अन्योऽहं तस्मात् इति आसीत इत्यर्थः ॥ एवमासीनस्य यतेः वशे हि यस्य इन्द्रियाणि वर्तन्ते अभ्यासवशात् तस्य प्रज्ञा प्रतिष्ठिता ॥

रा ॥ अस्य सर्वस्य परिजिहीर्षया विषयानुरागयुक्ततया दुर्जयानीन्द्रियाणि संयम्य चेतसश्शुभाश्रयभूते मनोऽवस्थाप्य समाहित आसीत ॥ मनसि मद्विषये सति निर्दग्धाशेषकल्मषतया निर्मलीकृतं विषयानुरागरहितं मन इन्द्रियाणि स्ववशानि करोति । ततो वश्येन्द्रियं मन आत्मदर्शनाय प्रभवति ॥ यथोक्तं "यथाग्निरुद्धतशिखः कक्षं दहति सानिलः । तथा चित्तस्थितो विष्णुर्योगिनां सर्वकिल्बिषं" इति ॥ तदाह "वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता" इति ॥

विचारः

स्थितप्रज्ञस्य का भाषेति प्रकरणारम्भे चत्वारः प्रश्नाः कृता इति मत्वा तन्मध्ये किमासीतेति तृतीयप्रश्नस्येहोत्तरं दीयते इति मधुसूदनश्रीधरवेङ्कट-

नाथा मन्यन्ते। यद्यपि युक्त आसीत मत्परः इतीहोक्तम्। तावन्मात्रेणोपवेशन-प्रकारो विवक्षितार्थ इति व्याख्यातुं न शक्यते। मत्परत्वं ह्यत्र मुख्यं विधेयं गम्यते, आसीनो वा पर्यटन्वा जिज्ञासुर्भगवत्परो भवेत् इति ज्ञानोपायोपदेशाय प्रवृत्तमिदं पद्यं ॥ स्वायत्ते शब्दप्रयोगे आसीतेति क्रियाप्रयोगस्य किन्निमित्तं इति प्रष्टव्यं ॥ उच्यते। इन्द्रियहारिबाह्यलोकव्यापारेषु प्रायशोऽप्रवृत्तिरनेन ध्वन्यते नतूपवेशनमात्रं कथ्यते। नहि विवक्षितार्थसिद्धावुपवेशनस्य किमपि श्रृङ्गमस्ति ॥ केचिद्यस्सर्वत्रानभिस्नेह इति पद्यं किमासीतेति चोद्यस्योत्तरत्वेन व्याचख्युरिति प्रदर्शितमेव पुरस्तात् ॥ तस्यापि व्याख्यानस्य गमकवैधुर्यं स्फुटम् ॥

एवं 'युक्तः' इत्यत्रापि केचित्पातञ्जलयोगपक्षपातिनो दृश्यन्ते। वस्तु-तस्तु युक्तः मनो युञ्जान इत्येवार्थः। युज समाधौ इति धातुपाठः। अकारोऽ-नुबन्धार्थः। कर्तरि क्तप्रत्यये युक्त इति रूपम् ॥ युक्तः मनस्समाधानयुक्तः। युजियोगे इत्यन्योऽपि धातुपाठो दृश्यते। अत्रापि युज् इत्येव धातुः शिष्टमनु-बन्धार्थं ॥ कर्तरि क्तप्रत्यये युक्त इति रूपं भवति। एवं व्युत्पत्तौ युक्त इत्यस्य सहित इत्यर्थकत्वात् केनेति करणकारकाकाङ्क्षायां तस्यात्र गीतायामनुक्तत्वा-द्दोषस्स्यात् ॥ अतस्समाध्यर्थकयुजेरूपमित्युक्तम्। तथाच नोक्तदोषः ॥

संयम्येति पदं च किञ्चित्पातञ्जलयोगपक्षभ्रामकं स्यात्। वस्तुतस्तु उपसंहृत्य वशीकृत्य प्रवृत्तिं निरुद्ध्य इत्यर्थः प्रकरणसमर्पको भवति ॥ अत्रेदं चिन्त्यते। सम्यम्य मत्पर आसीत इति वाक्ये सम्यमनानन्तरं मत्परत्वं बोध्यते ॥ सम्यम्येत्यनेनेन्द्रियजयस्य विवक्षायां इन्द्रियाणि जित्वा तदनन्तरं मत्परो भवेत्युक्तं भवति। तदसङ्गतं भाति। मत्परत्वस्येन्द्रियजयसाधनत्वेनेह विवक्षितत्वात् इति ॥ इयं शङ्कैवं समाधेया। सम्यम्येत्यत्र विषयस्पर्शनि-वारणमात्रमभिप्रेतं नत्वात्यन्तिकेन्द्रियजयावस्थेति ॥

(मत्पर इति ॥ अस्य व्याख्यानावसरे केचिदद्वैतवादिनः स्वसमयाभिमतजीवब्रह्मैक्यवादं प्रवेशयन्ति ॥ तथाहि शङ्करभाष्यं "मत्परः अहं वासुदेवः सर्वप्रत्यगात्मा परो यस्य सः नान्योऽहं तस्मादित्यासीनः" इति ॥ तथैव शङ्करानन्दोऽपि "अहमेव परः परमात्मेति परस्मिन्नेव ब्रह्मण्यहंधीर्यस्य सः सर्वमिदमहं च ब्रह्मैवेति सर्वं स्व ब्रह्मैव पश्यन्नासीत" इति ॥ एवं व्याख्याने मत्पर इत्यत्रास्मच्छब्दबोध्यः कृष्णो वा अर्जुनाद्युपासकजीवो वेति सन्दिह्यते ॥ भगवतः कृष्णस्य ग्रहणे "नान्योऽहं तस्मात्" इत्युक्तानुसन्धानप्रकारस्याक्षरारोहो दुर्घटः । परस्मिन्नेव ब्रह्मण्यहंधीर्यस्येति शङ्करानन्दकृतव्याख्यानेन मत्पर इत्यत्रास्मच्छब्दस्योपासकपरामर्शोऽधिगम्यते । अस्मच्छब्दस्य वक्तृपरामर्शशक्तिकत्वादत्र वक्तुर्भगवत्त्वेन कथमुपासकग्रहणं संगच्छेत)।

अन्ये नीलकण्ठमधुसूदनवेङ्कटनाथादयस्तु नैवं व्याकुर्वन्ति । यथाहि मधुसूदनः "मत्परः अहं सर्वात्मा वासुदेवएव परः उत्कृष्टः उपादेयो यस्य सः एकान्तमद्भक्तः" इति ॥ तथा नीलकण्ठः "मत्परः अहमेव सर्वेषां प्रत्यगात्मा परः स्त्रयादिभ्यो बाह्येभ्यो देहेन्द्रियादिभ्यः आन्तरेभ्यश्च उत्कृष्टः प्रियतमो यस्य" इति ॥ एवं वेङ्कनाथः "परशब्द इष्टवचनः अहमेव परः इष्टो यस्य सः मदर्पितमनाः" इति ॥ अयमर्थः क्लेशहीनः पदाक्षरात्सुलभः प्रामाणिकश्च । अत एवाह श्रीमदाचार्यः ॥ "अहमेव परः सर्वस्मादुत्कृष्टो यस्य" । इति उत्कृष्टो यस्येत्यत्र उत्कृष्ट इति ज्ञानं यस्येत्यर्थो विवक्षितः । अन्यथा स्वरूपसदुष्कृष्टत्वस्य सर्वान्प्रत्यपि समानत्वेन यस्येति विशिष्योक्त्ययोगात् । एतेन हरिसर्वोत्तमत्वज्ञानपूर्वकभगवदाराधनं मुमुक्षुणेन्द्रियजयायावश्यमनुष्ठेयमित्युपदिष्टं भवति ॥ इन्द्रियजयमत्परत्वयोस्साध्यसाधनभावं निरूपयन्नाह मधुसूदनः । "यथाहि लोके बलवन्तं राजानमाश्रित्य दस्यवो निगृह्यन्ते । राजाश्रितोऽयमिति

ज्ञात्वा च ते स्वयमेव तद्वश्या भवन्ति । तथैव भगवन्तं सर्वान्तर्यामिणमाश्रित्य तत्प्रभावेनैव दुष्टानीन्द्रियाणि निगृह्याणि। पुनश्च भगवदाश्रितोऽयमिति मत्वा तानि तद्वश्यान्येव भवन्तीति भावः" इति ॥ इममेव पन्थानमाश्रित्याह वेङ्कटनाथः 'यथाहि राजविन्यस्तं धनं न चोरैरपहर्तुं शक्यं । प्रत्युत राजाश्रितोऽयमिति भयाच्चोरादय एव तस्य वशवर्तिनो भवन्ति। तथा भगवति सर्वेश्वरे विन्यस्त मनो नेन्द्रियैरपहर्तुं शक्यं ॥ इन्द्रियाण्येव तु तस्य भयाद्वश्यानि भवन्तीति मत्परशब्देन ध्वन्यते" इति ॥ आह रामानुजाचार्यः "मनसि मद्विषये सति निर्दग्धाशेषकल्मषतया निर्मलीकृतं विषयानुरागरहितं मन इन्द्रियाणि स्ववशानि करोति ततो वश्येन्द्रियं मन आत्मदर्शनाय प्रभवति । यथोक्तं 'यथाग्निरुद्धतशिखः कक्षं दहति सानिलः । तथा चित्तस्थितो विष्णुर्योगिनां सर्वकिल्बिषं' इति ॥ इदमेव स्मृतिवचनमुदाहृत्य रामानुजाशयं स्वस्यैव लिखितवा नाथः ॥

अथ मत्परत्वमाहात्म्यं श्रीमदाचार्यतट्टीकाकृत्सूचितं संगृह्यते । अत्र पूर्वसंगतिः किञ्चिदालोच्या । कामप्रहाणादिलक्षणसाधनं चेज्ज्ञानं तर्हि सर्वोऽपि जनः कस्मान्न तत्साधयति ॥ कामाद्युपद्रवपरिहारार्थं किं दंदह्यमानशिराः बंभ्रमीति इति शङ्का प्रथमं प्रवृत्ता ॥ तत्समाधानावसरे ज्ञानस्य दौर्लभ्यं इन्द्रियजयस्य च दौर्घट्यं समर्थितम् ॥ इन्द्रियजयो द्विविधः आत्यन्तिको अवान्तरश्च । तत्राद्यः अपरोक्षैकसाध्यः । द्वितीयः अपरोक्षसाधनभूतः । आहारवर्जनात्सर्वनिर्वाहस्सम्भवतीति शङ्कायां नेति समाहितं ॥ तेन भोगशक्ति क्षीयेत रक्तिस्तु न क्षीयते । रसनेन्द्रियवर्जं शक्तिरक्ती अपि क्षीयेताम् न तु रसनशक्तिरक्ती क्षीयेते ॥ किं च, निराहारत्वमशक्यं तथा सति देहावस्थानस्यैव दौर्लभ्यात् । प्रत्याहारादिसाधारणयत्नैरिन्द्रियजयस्स्यादिति पुनः शङ्किते सति तेषां सामर्थ्यं प्रतिषिद्धं यततोऽपीति श्लो-

केन ॥ तथाचात्यन्तिकेन्द्रियविजयः नोपवाससाध्यः । नवा प्रत्याहारादिसाधारणयत्नसाध्यः । नापि नित्यानित्यवस्तुविवेकादिसाधारणज्ञानसाध्यः अपित्वपरोक्षमात्रसाध्यः॥ एवं सति अपरोक्षं प्रथमं संपाद्यं अनन्तरं इन्द्रियजयः इति पर्यवस्यति ॥ इदमनुपपन्नम् । विना इन्द्रियजयमपरोक्षज्ञानं न भविष्यतीति प्रमितत्वात् । पक्षद्वयस्याप्यङ्गीकारे त्वितरेतराश्रयता दुर्वारा। अत्रोच्यते । विषया विनिवर्तन्ते इत्यारभ्य त्रीण्यपि पद्यान्येकतात्पर्यकाणि ॥ यद्यपि निराहारत्वं दुर्घटं । प्रत्याहारादयस्साधारणा यत्ना असमर्थाः । अपि चापरोक्षसाध्यो रागविनाशः अपरोक्षसाधनं न भवितुमर्हति । ततः अपरोक्षसिद्धये कश्चिदिन्द्रियजयो महाप्रयत्नेन संपाद्यः ॥ तादृशमहाप्रयत्नः "युक्त आसीत मत्परः" इत्यनेन कथितः ॥ उपवासादिमहाप्रयत्नप्रतिनिधिना मत्परत्वाख्यसाधनेनेन्द्रियजयस्संपाद्य इत्युक्तं भवति । अयं जयः ज्ञानस्य परमसाधनम् । अत एवोक्तं द्वितियार्धे "वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता" इति ॥ तथा च प्रमेयदीपिकायाम् "भगवानेव सर्वस्मादुत्कृष्ट इति ज्ञात्वा तस्मिन्नेव निरन्तरं मनसो योजनं इन्द्रियजये परं साधनमिति भावः। निराहारत्वादिकं तु वस्तुगतिप्रदर्शनार्थमेवोक्तमिति मन्तव्य॥ इन्द्रियजयस्य ज्ञानं फलमाह द्वितीयार्धेन॥ यत एवं ज्ञानं महायाससाध्येन्द्रियजयफलं अत एवायासभीरुर्जनो न तत्साधयति न तु ज्ञानस्योक्तलक्षणत्वाभावादिति श्लोकत्रयतात्पर्यार्थः" इति ॥ एतेनान्योन्याश्रयशङ्का च समाहिता वेदितव्या । निराहारत्वब्रह्मसाक्षात्काराभ्यामपि इन्द्रियजयस्य जायमानत्वाभिप्रायेण विषया निवर्तते इत्युक्तम् । न तु तादृशेन्द्रियजयस्यापरोक्षज्ञानसाधनत्वाभिप्रायेण ॥ अत्रचापरोक्षज्ञानसाधनीभूतेन्द्रियजयप्रकार उक्त इत्यदोषः ॥ (श्री)

अहो भगवद्भक्तेर्महिमा। यया भक्त्या विनातिशयितोपवासादिमहाप्रयत्नं विना च प्रत्याहारादिदृढतमनियमं,संपाद्यते इन्द्रियनिग्रहस्तद्वारा ज्ञानं च॥ अन्यो

जनो भगवति विश्वासहीनो भक्तिशून्यस्त्विन्द्रियनिग्रहोपायविधुरः क्लिश्यतेवेति ॥

यदुक्तमिन्द्रियाणां प्रमाथित्वेनातिबलं तदपि मत्परत्वमहिम्ना ध्वस्यते। तानि इति प्रमाथित्वस्य परामर्शः। (प्रमाथित्वेऽपि इन्द्रियाणि मत्परेण निगृहीतानि भवन्तीति भगवदाशयः। मत्परेण भक्तेन सर्वाणि इन्द्रियाणि नियंतव्यानि इत्युक्त्या मत्परत्वमाहिम्नाऽयं भक्तः सर्वाणि जयति॥ किंच सर्वाण्यपि च जेतव्यान्यन्यथा नोपयोग इत्युक्तं भवति)। अतएव मनुराह एकमपीन्द्रियं नौदासीन्यमर्हतीत्यर्थे "इन्द्रियाणां तु सर्वेषां यद्येकं क्षरतीन्द्रियं। तेनास्य क्षरति प्रज्ञा दृतेः पादादिवोदकं॥" इति (मनुः II 99) अतएव सर्वाणीन्द्रियाणि एकैकशो मिलित्वा च रक्षणीयानि॥ मनसस्सर्वेन्द्रियाणां च भगवदाभिमुख्ये सिद्धे खलु विषयवैमुख्यं तेष्वप्रवृत्तिश्च सिध्यतीति मत्परः सर्वाणीन्द्रियाणि नियम्येति साधूक्तं भगवता॥ अतएव भक्तौ नलकूबरमाणिग्रीवौ प्रार्थयामासतुः॥

"वाणी गुणानुकथने श्रवणे कथायां
हस्तौ च कर्मसु मनस्तव पादयोर्नौ।
स्मृत्यां शिरस्तव सुरप्रवरप्रणामे
दृष्टिस्सतां दर्शनेऽस्तु भवत्तनूनां॥" इति भा. X.

गीतापद्यद्वितीयार्धे "वशेहि" इत्यत्र हिशब्देन वशज्ञानयोर्हेतुसाध्यभावसंबंधे श्रुतिप्रसिद्धिस्सूचिता॥ तथाहि काठके—

"आत्मानं रथिनं विद्धि शरीरं रथमेव च।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च॥
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्।
आत्मेंद्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः॥

यस्त्वविज्ञानवान्भवत्ययुक्तेन मनसा सदा ।
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥

विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदं" ॥

अस्यां श्रुतौ इन्द्रियनियमनं युक्तत्वं विष्णुपरत्वं विज्ञान महाफलगमनं इति प्रमेयजातमन्योन्यसंबद्धमभिहितं द्रष्टव्यं ॥ गीताऽपि श्रुत्यनुसारिणी तदेव स्पष्टयति ॥

**ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते ।**
**सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते॥६२**

**क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ।**
**स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥६३**

वि ॥ मत्परो युक्त आसीतेति हरिसर्वोत्तमत्वज्ञानपूर्वकं तस्मिन्नेव मनोयोजनं इन्द्रियजयस्य मुख्यं साधनं ॥ रागद्वेषवियुक्तैरिति वक्ष्यमाणदिशा रागादिपरिहारोऽप्यपरं साधनं ॥ तत्र रागादेर्यत्कारणं यच्च फलं तदुभयज्ञाने सति तत्परित्यागो भवत्यतस्तदुपोद्घातत्वेन तदुभयमाह ॥ ध्यायतइति श्लोकद्वयेन ॥ यद्यपि वीतरागभयक्रोधइति रागादिराहित्यं ज्ञानि-

लक्षणत्वेनोक्तं। तथापि तस्य तत् सिद्धं जिज्ञासुना च साध्यं । अतस्तत्परिहाराय तत्कारणफलयोरुक्तिर्नायुक्तेति ज्ञेयं ॥ विषयान् रूपादीन् हितबुद्ध्या ध्यायतः पुंसः तेषु विषयेषु सङ्गः आसक्तिः भवति । आसक्त्या च तेषु कामः संजायते अधिको भवति ॥ कामाच्च केनचित्प्रतिहतात् क्रोधो भवति ॥ किंच क्रोधाद्भवति संमोहः अकार्येच्छा परवित्तापहरणाद्यधर्मे धर्मबुद्धिरित्यादिमिथ्याज्ञानं वा ॥ संमोहादुक्तद्विरूपात्स्मृतिविभ्रमः । क्रमात्प्रतिषेधादिस्मृति-नाशः, परवित्तापहरणादेरधर्मत्वाद्यभिधायकश्रुत्याद्यर्थस्य पूर्वं स्वयं ज्ञातस्याप्यन्यथास्मरणं वा ॥ स्मृतिभ्रंशाद्बुद्धि-नाशः येन पूर्वं निर्णीतदोषबुद्धेः सर्वात्मना नाशो भवति। तन्नाशात् तेन चाधर्मकरणाच्च प्रणश्यति नरकाद्यनर्थं प्राप्नोति । एतदुक्तं भवति, रागद्वेषयोः परंपरया नरकाद्य-नर्थप्राप्तिः फलमिति ज्ञानेन तत्परिजिहीर्षायां, विषयध्यानं परंपरया तत्कारणमिति ज्ञानेन तदकरणाद्रागद्वेषयोर-नुत्पादइति ॥

श० ॥ अथेदानीं पराभविष्यतः सर्वानर्थमूलं इदमुच्यते ध्यायत इति ॥ ध्यायतः चिन्तयतः विषयान् शब्दादीन् विषयविशेषान् आलोचयतः पुंसः पुरुषस्य सङ्गः आसक्तिः प्रीतिः तेषु विषयेषु उपजायते उत्पद्यते ॥ सङ्गात् प्रीतेः सञ्जायते समुत्पद्यते कामः तृष्णा ॥ तस्मात् कस्मात्

कुतश्चित् प्रतिहतात् क्रोधः अभिजायते (६२)॥ क्रोधात् भवति संमोहः अविवेकः कार्याकार्यविषयः । विभ्रमो भवतीति संबध्यते । क्रुद्धोहि संमूढस्सन् गुरुमपि आक्रोशति॥ संमोहात् स्मृतिविभ्रमः । शास्त्राचार्योपदेशाहितसंस्कारजनितायाः स्मृतेः स्यात् विभ्रमो भ्रंशः ॥ स्मृत्युत्पत्तिनिमित्तप्राप्तौ अनुत्पत्तिः ॥ ततः स्मृतिभ्रंशात् बुद्धिनाशः बुद्धेर्नाशः कार्याकार्यविषयविवेकायोग्यता अंतःकरणस्य बुद्धेः नाश उच्यते ॥ बुद्धिनाशात्प्रणश्यति । तावदेव हि पुरुषः यावदन्तःकरणं तदीयं कार्याकार्यविवेकयोग्यं, तदयोग्यत्वेन नष्ट एव पुरुषो भवति ॥ अतः तस्यान्तःकरणस्य बुद्धेर्नाशात् प्रणश्यति पुरुषार्थायोग्यो भवति ॥ (६३)

रा०॥ एवं मय्यनिवेश्य मनः स्वयत्नगौरवेणेन्द्रियजये प्रवृत्तो विनष्टो भवतीत्याह ॥ अनिरस्तविषयानुरागस्य हि मय्यनिवेशितमनस इन्द्रियाणि संयम्यावस्थितस्याप्यनादिपापवासनया विषयध्यानमवर्जनीयं स्यात् ॥ ध्यायतो विषयान् पुंसः पुनरपि संगोऽतिप्रवृद्धो जायते ॥ सङ्गात् संजायते कामः। कामो नाम सङ्गस्य विपाकदशा। पुरुषो यां दशामापन्नो विषयानभुक्त्वा स्थातुं नशक्नोति स कामः। कामात्क्रोधोऽभिजायते । कामे वर्तमाने विषये चासन्निहिते सन्निहितान् पुरुषान् प्रत्येभिरस्मादिष्टं विहतमिति क्रोधो

भवति॥ क्रोधाद्भवति संमोहः कृत्याकृत्यविवेकशून्यता, तया सर्वं करोति ॥ ततश्च प्रारब्धे इन्द्रियजयादिके प्रयत्ने स्मृतिभ्रंशो भवति ॥ स्मृतिभ्रंशाद्बुद्धिनाशः ॥ आत्मज्ञाने यो व्यवसायः कृतस्तस्य नाशः स्यात् ॥ बुद्धिनाशात् पुनरपि संसारे निमग्नो विनष्टो भवति ॥ (६२—६३)

विचारः

अत्र प्रकरणसङ्गतिः प्रथममालोच्या ॥ तथाहि । स्थितप्रज्ञलक्षणं पृष्टं स्थितप्रज्ञस्य भाषणोपवेशनगमनादिव्यापाराणां निमित्तं च पृष्टं ॥ उत्तराणि च दत्तानि ॥ परंतु स्थितप्रज्ञप्रकरणमपि प्रासङ्गिकमेव । जिज्ञासुनुष्ठेयस्य कर्मण एव योगप्रकरणप्राप्तत्वात् ॥ "तद्वै जिज्ञासुभिस्साध्यं ज्ञानिनां यत्तु लक्षणं" इति न्यायमनुसृत्येन्द्रियजयः ज्ञानिजिज्ञासूभयसाधारणः उक्तः ॥ अयमिन्द्रियजयः स्थितप्रज्ञस्य स्वभावभूतः जिज्ञासोस्तु यत्नसाध्यः ॥ कथं नाम जिज्ञासोरिन्द्रियजयः स्यादित्याकांक्षायां अशक्यत्वेनोपवासादिकं निषिध्य असामर्थ्येन निमित्तेन साधारणयत्नान् प्रतिषिध्य, मत्परत्वाख्यं, भगवदाराधनं परमसाधनमिन्द्रियजयायेति प्रतिपादितं॥ अस्ति चान्यदपरं साधनमिन्द्रियजयाय रागद्वेषवियुक्तैस्त्विति यद्वक्ष्यते । अस्मिन्नपरसाधने विचार्यते । कथं कामक्रोधाख्यरागद्वेषौ जायेते को वा तयोः फलभूतोऽनर्थः यज्ज्ञानेन यद्भयेन च कामक्रोधौ वर्जनीयौ भवेतां इति ॥ एतद्विवरणार्थं प्रवृत्त प्रकृतश्लोकद्वयं 'ध्यायत' इत्यादि ॥ अतः प्रकरणसङ्गतिस्सुगमा ॥

केचित्तु तानि सर्वाणि संयम्येति पूर्वश्लोकेनानन्तर्यसंगतिं संपाद्यान्यथा व्याचक्षते ॥ तथाहि रामानुजाचार्यः (पश्यतोपरिष्टात्) अस्यैवा-

शयमनुसरति वेङ्कटनाथः। स आह "नन्वादौ मनः परमेश्वरे विनिधाय निष्कल्मषीकृतेन तेन बाह्येन्द्रियाणि वशीकर्तव्यानीति कोऽयं शिरोवेष्टनेन नासिकाग्रहणप्रयासः। चक्षुरादीनां तत्तद्गोलकोपरोधेनैव तत्सिद्धेः इत्याशंक्य मदनर्पितचित्तस्यानिवृत्तविषयरागस्याभिनिरुद्धकेवलबाह्येन्द्रियगोलकस्य अनादिवासनास्वाभाव्याद्विषयध्यानमवर्जनीयं स्यात्" इति॥ पूर्वश्लोके प्रथमार्धे 'तानि सर्वाणि संयम्य युक्त आसीत' इत्येवालं "मत्परः" इत्युक्तिरधिका व्यर्था इत्याक्षेपे यो हि पुमान्न भगवत्परस्तस्य मनो विषयान्ध्यात्वाऽनर्थमालां प्रापयत्येव। अतो मत्परत्वं निरवधिकं साधनं इति प्रतिपादनाय प्रवृत्तं प्रकृतं पद्यद्वयमित्यनयोराशयः॥ अस्मिन्व्याख्याने विवक्षितो मुमुक्षुस्संयतेन्द्रियः परन्तु न "मत्परः" इत्यादाय ध्यायत इत्यादिग्रन्थः प्रवृत्तः)।

अपरे मधुसूदनादयस्तु "युक्त आसीत" इति भागस्य वैयर्थ्यमाशङ्क्य युक्तत्वरूपमनोनिग्रहाभावे प्राप्यमाणामनर्थपरंपरां वक्ति ध्यायत इति श्लोकद्वयमित्याहुः॥ तथाहि मधुसूदनीये "निगृहीतबाह्येन्द्रियस्य तूत्खातदंष्ट्रोरगवन्मनस्यनिगृहीतेऽपि न कापि क्षतिः॥ बाह्योद्योगाभावेनैव कृतकृत्यत्वात् "युक्त आसीते" ति व्यर्थमुक्तं इत्याशङ्क्य निगृहीतबाह्येन्द्रियस्यापि युक्तत्वाभावे सर्वानर्थप्राप्तिमाह" इति॥ एवं नीलकण्ठः " 'यदा पञ्चावतिष्ठंते ज्ञानानि मनसा सह। बुद्धिश्च न विचेष्टेत तामाहुः परमां गति' इति श्रुतौ इन्द्रियमनोबुद्धीनां निग्रहे परमपदप्राप्तिरित्युक्तम्। तत्रोपसंहृतकरणस्य बाह्यान् शब्दादीन् गृण्हतो मनोमात्रेणावस्थितस्य योगिनो मनसोऽनिग्रहे किंस्यादित्याह ध्यायत इति" इति॥

अस्मिन्नपि व्याख्याने विवक्षितो मुमुक्षुस्संयतेन्द्रियः परन्तु न निगृहीतमनाः॥ तथाच मत्पर आसीतेति यदुक्तं तत्सार्थकं इति रामानुजवेङ्कटनाथौ॥ युक्त आसीतेति यदुक्तं तत्सार्थक इति मधुसूदनादयः)। (अस्मदाचार्यस्तु नैवं पूर्वपद्यस्थविशेषणैर्योजयति प्रकृतश्लोकद्वयं युक्त इत्यस्य वा

मत्पर इत्यस्य वा सार्थक्यं प्रतिपादयितुं प्रवृत्तमिति। किंतु मत्परत्वमिन्द्रियजये परं साधनं इत्युक्त्वा रागद्वेषवर्जनं अपरं साधनमिति विवक्षुरस्योपोद्घाततया रागद्वेषकारणानि फलानि च भगवान् वक्तीति व्याकरोति ॥

विषयध्यानं सङ्गः कामः क्रोधः संमोहः स्मृतिविभ्रमः बुद्धिनाशः नाशः इत्यष्टौ प्रतिपादिताः ॥

तेषु कामक्रोधौ वर्जनीयत्वेनानुपदं रागद्वेषवियुक्तैस्त्वित्यादिभिर्वक्ष्येते। तौ प्रधानौ ॥ कामक्रोधयोः कारणं विषयध्यानसङ्गौ ॥ कामक्रोधयोः फलं संमोहस्मृतिविभ्रमबुद्धिनाशनाशाः चत्वारः इति विभागः ॥ उपर्युक्तपरकीयव्याख्यानेषु "ध्यायतः" इत्यस्य निगृहीतबाह्येन्द्रियस्यापि चिन्तयतः इत्यर्थोऽभिप्रेतः ॥ निगृहीतबाह्येन्द्रियस्येति विशेषणेनार्थसङ्कोचस्य नियामकं न दृश्यते ॥

विषयध्यानात्सङ्गः सङ्गात्काम इत्युक्तौ सङ्गकामयोरयं विशेषोऽनुसन्धेयः। सङ्गः आसक्तिः ममात्यन्तमिमे सुखहेतव इति शोभनाध्यासलक्षणा प्रीतिः (म. स.) ॥ कामस्तूद्रिक्ता तृष्णा ममैते भवन्त्विति सङ्गस्येयं विपाकदशा ॥ (रा०) ॥ सङ्गशब्देन केवलं विषयेन्द्रियसंबन्ध उक्तः इति नीलकण्ठः ॥

'अभिज्वलनात्मको क्रोधः' स अभि जायते अभितो जायते। विवेकवैधुर्यात्स सर्वानुपलभ्यमानान् विषयीकरोतीत्युपसर्गाद्ध्वन्यते ॥ संमोह इति न मूर्च्छा विवक्षिता। क्रोधान्मूर्च्छाया अजननात् ॥ केचित्कृत्याकृत्यविवेकशून्यताऽनेनोच्यत इत्याहुः ॥ 'संमोहः' निषिद्धकार्येच्छा इति गीताभाष्ये तथाह्युपगीतासु। "मोहसंज्ञितं। अधर्मलक्षणं चैव नियतं पापकर्मसु" इति ॥ तथाचान्यत्र "संमोहोऽधर्मकामिता" इति ॥ "अधर्मकामिनः शास्त्रे विस्मृतिर्जायते यदा। दोषादृष्टेस्तत्कृतेश्च नरकं प्रतिपद्यते" इति

(सूचि. अदृष्टरूपाधर्मविषयं तद्धेतुषु पापकर्मसु च नियतं कामनं मोहसंज्ञित-मित्यर्थः) ॥

स्मृतिविभ्रम इति । स्मृतिसामान्यस्य प्रमात्वमनंगीकुर्वाणाः केचित् स्मृतिरूपो विभ्रमः भ्रान्तिः स्मृतिविभ्रम इति वदेयुः ॥ तदसङ्गत । स्मृति-विशेषप्रामाण्यस्य साक्षिसिद्धत्वेन स्मृतिसामान्यस्य भ्रमत्वायोगात् । स्मृते-र्विभ्रमः स्मृतिविभ्रम इत्यर्थस्यापि साक्षिवेद्ये भ्रमाभावेन बाधितत्वात् । विभ्रमशब्देन नाशस्य बोध्यत्वेतु सर्वविषयकस्मृतेस्संमोहान्नाशायोगादनुप-पत्तिः स्फुटा ॥ तस्माद्विषयविशेषकथनेन स्मृतिविभ्रम उपपादनीयः ॥ अत्रा-रब्धेन्द्रियजयादिके प्रयत्ने स्मृतिभ्रंशो भवतीति रामानुजाचार्यव्याख्या ॥ प्रतिषेधस्मृतेर्नाश इत्याचार्यः गीताभाष्ये ॥ श्रुत्याद्यर्थानामन्यथास्मरणमुक्तं इति तात्पर्ये ॥ यथोक्तं न्यायदीपिकायाम् "अत्र संमोहपदेन परवित्ताप-हरणाद्यधर्मे धर्मबुद्धिरित्यादिमिथ्याज्ञानमुच्यते ॥ स्मृतिविभ्रमपदेन च परवित्तापहरणादेरधर्मत्वाभिधायकश्रुत्याद्यर्थस्य पूर्वं स्वयं ज्ञातस्याप्यन्यथा-स्मरणमुच्यते । तयोश्च हेतुहेतुमद्भावस्संभवतीति भावः" इति ॥ भ्रमः अनवस्थानं। भ्रमु सञ्चलन इति धातोः भ्रमु अनवस्थाने इति वा॥ शास्त्रा-चार्योपदेशाहितसंस्कारजनितायाः स्मृतेरुत्पत्तिनिमित्तप्राप्तौ तदनुदयः इति शङ्करादयः ॥

बुद्धिनाश इति । निर्णीतदोषबुद्धेः सर्वात्मना नाशः ॥ स्मृति-विभ्रम इत्यत्रतु प्रतिषेधादिस्मृतिनाशो न सर्वात्मना इति भेदः ॥ इन्द्रिय-जयफलत्वेनाभिमतायाः बुद्धेस्तत्त्वज्ञानस्य नाशः अभाव इति वेङ्कटनाथः ॥

अत्राह शङ्करानन्दः । "बुद्धिः ब्रह्ममयी वृत्तिः तस्याः स्वविषयक-स्मृतिविनाशान्नाशो भवति । यथा पुरोवर्तिन्येव पुरुषे पुत्र इति स्मृतिरस्ति चेन्ममायं पुत्र इति पुत्राकारेण बुद्धिर्जायते भ्रान्तस्य तु स्मृत्यसम्भवात्पुत्रा-

कारबुद्धिर्नजायते तथा ब्रह्मण्यपरोक्षेऽपि विषयव्यामोहाक्रान्तचित्तस्याविदुषः स्वविषयस्मृत्यभावादिदमहं च ब्रह्मैवेति दृश्याकारतामुत्सृज्य जगतः स्वस्य च ब्रह्माकारत्वावगाहिन्यखण्डात्मिका चिन्मयी वृत्तिर्नजायते । किं तु भोक्तृभोग्याकारवृत्तिभिः स्वयं तिरोहितो भूत्वा नष्टो भवति ॥ एवं स्वविषयज्ञानविनाशाद्विद्वान् स्वयमपि प्रणश्यति । सम्सारकारागारे पतित्वा कदाचिदपि मुक्तिं न प्राप्नोति " इति ॥ इममेव भावमनुसृत्यानेन 'स्मृतिभ्रंश' पदमपि व्याख्यातम् ॥ "वेदान्तश्रवणजन्यज्ञानेन ब्रह्मैवाहमिति पुनः पुनः कृतस्वानुभवसंस्कारजस्तदाकारपरिणामो बुद्धिवृत्तिविशेषः स्मृतिरित्युच्यते । तस्या विभ्रमो भ्रंशः स्मृतिहेतुषु सत्स्वपि स्मृतेरनुदयः" इति ॥

इयमद्वैतप्रक्रियाऽतिक्लिष्टा भाति ॥ स्मृतिशब्दार्थविवरणं हासं जनयति । "कार्याकार्यविषयविवेकायोग्यता अन्तः करणस्य बुद्धेर्नाश उच्यते" इति शङ्कराचार्यव्याख्यामपि परित्यज्य ब्रह्मात्मैक्यज्ञानस्यानुदयोऽत्र विवक्षित इति व्याख्याने पश्यत क्लेशमस्य व्याख्यातुः ॥

नाशशब्दस्य ध्वंसपरत्वमादायाह देशिकः—"नतावदिह सामान्यतो ज्ञानमात्रं बुद्धिशब्दार्थः । नचेतःपूर्वमात्मदर्शनं सिद्धं । नच भविष्यदात्मदर्शनादिकमिदानीं नाशयोग्यं । अतस्तल्लिप्सया कृतस्तदुपायानुष्ठानाध्यवसाय इहोपायस्मृतिसाध्यो बुद्धिशब्देनोच्यते" इति ॥ यदीहोक्तं तत्त्वज्ञानस्याद्याप्यनुदयात्तस्य ध्वंसोऽनुपपन्न इति तत्साधूक्तं ॥ यदुक्तं "आत्मज्ञाने यो व्यवसायः कृतः तस्य नाशः" इति रामानुजाचार्यभाष्ये । तच्चिन्त्यं । नेहाभिक्रमनाशोऽस्तीत्युक्तदिशाऽस्य व्यवसायस्य नाशासंभवात् । अतो निर्णीतदोषबुद्धेस्सर्वात्मना नाश एवाभिप्रेतो दृश्यते ॥

प्रणश्यतीति ॥ मृततुल्यो भवतीति श्रीधरः ॥ पुरुषार्थायोग्यो भवतीति शङ्करादयः ॥ पुरुषार्थं न प्राप्नोति इत्युच्यतां नाम, अयोग्यो भवतीति तु तन्मते कथं सङ्गच्छते इति चिन्त्यते ॥ पुनरपि संसारे निमग्नो भवतीति रामानुजाचार्यः ॥ संसाराद्द्याप्यनुत्थितस्य पुनर्मज्जनं किं नामेत्यालोच्यते ॥ "प्रणश्यतीत्यत्र नित्यस्यात्मनो नाशो ह्यसत्समत्वं यथावस्थिताकारानुपलंभः। स च देहात्मभ्रमादिकृतः । तत्रापि हेतुर्देहसंबन्धः" इति देशिकोपपादनं ॥ प्रणश्यति नरकाद्यनर्थं प्राप्नोति इत्याचार्यव्याख्यानम् ॥ इदं ऋजुमार्गमनुधावति । यथा प्रमाणवाक्यम् "अधर्मकामिनश्शास्त्रे विस्मृतिर्जायते यदा । दोषादृष्टेस्तत्कृतेश्च नरकं प्रतिपद्यते" इति ॥

इह तावदिमे प्रश्नाः पठद्भिश्चिन्तनीयाः । व्याख्यातृभिप्रायभेदानुसारेणोत्तराण्यनुसंधेयानि च ॥

(१) पर्यायार्थकत्वेन भासमानयोस्सङ्गकामयोः को भेदः ?

(२) संमोहः कीदृशः मूर्छा वा अन्यो वा ?

(३) स्मृतिविभ्रमः इत्यस्य कोऽर्थः । स्मृतिविषयस्यानुक्तेः को विषयो विवक्षितः ?

(४) बुद्धिनाश इत्यस्य कोऽर्थः । बुद्धिः ज्ञानसामान्यं वाऽन्यद्वा ? द्वितीये कीदृशी बुद्धिरिति सङ्कोचः क्रियते ?

(५) स्मृतिभ्रंशबुद्धिनाशयोः को भेदः ?

(६) प्रणश्यतीत्युक्तौ चेतनस्य नाशासम्भवान्नाशः कीदृशः. इति ?

**रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।**
**आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥६४**

वि ॥ अस्त्वेवमुक्तदिशा रागद्वेषपरिहारः ॥ ततः किमित्यतस्तस्येन्द्रियजयाख्यं फलमिन्द्रियजयाज्जायमानं फलं चाह। रागद्वेषेति ॥ यद्यपीन्द्रियजयस्य 'वशेऽहीं'त्यत्र ज्ञानं फलमित्युक्तं । तथापि तन्न साक्षात् किंतु मनः प्रसादद्वारेति अत्र श्लोकद्वयेनोच्यत इत्यदोषः ॥ अयमर्थः । य उक्तविधया त्यक्तरागद्वेषः स पुमान् रागद्वेषावियुक्तैः ताभ्यां अप्रयुक्तैरिन्द्रियैश्चक्षुरादिबाह्येन्द्रियैः अतएवात्मवश्यैः स्वाधीनैः रूपरसादीन्विषयान्केवलदेहधारणमात्रार्थं चरन्ननुभवति ॥ विधेयात्मा विधेयः स्वाधीनः आत्मा मनो यस्य स तथा। तादृशो भूत्वा प्रसादं मनसः स्वतोऽपि प्रायोविषयागतिलक्षणं प्रसादं अधिगच्छति प्राप्नोति ॥ अत्र पादत्रयेण रागद्वेषपरिहाराख्येन्द्रियजयाख्यं फलमुक्तं॥ रागद्वेषाप्रयुक्तत्वादेवेन्द्रियाणां विधेयात्मत्वहेतुनात्मवश्यत्वस्येन्द्रियाणामुक्त्या तज्जयस्य प्रतीतेः आत्मवश्यत्वस्य स्वात्मनः क्षोभानापादकत्वरूपत्वात् । विषयांश्चरन्नित्युक्तिस्तु, इन्द्रियजयकारणत्वं निराहारत्वस्य प्रागुक्तमयुक्तं अशक्यत्वादित्याशंक्य, देहधारणमात्रोपयुक्तविषयानुभवो न दोषायेति वक्तुं इन्द्रियजयस्याव्यवहितफलोक्तिर्विधेयात्मा प्रसादमधिगच्छतीति ॥

शं ॥ सर्वानर्थस्य मूलमुक्तं विषयाभिध्यानं ॥ अथेदानीं मोक्षकारणमिदमुच्यते । रागद्वेषइति ॥ रागद्वेषवियुक्तैः रागश्च द्वेषश्च रागद्वेषौ तत्पुरस्सरा हि इन्द्रियाणां प्रवृत्तिः स्वाभाविकी। तत्र यो मुमुक्षुः भवति सः ताभ्यां वियुक्तैः श्रोत्रादिभिः इन्द्रियैः विषयानवर्जनीयान् चरन् उपलभमानः आत्मवश्यैः आत्मनः वश्यानि वशीकृतानि इन्द्रियाणि तैः आत्मवश्यैः विधेयात्मेच्छातः विधेयः आत्मा अन्तःकरणं यस्य सः ॥ अयं प्रसादमधिगच्छति । प्रसादः प्रसन्नता स्वास्थ्यं ॥

रा ॥ उक्तेन प्रकारेण मयि सर्वेश्वरे चेतसश्शुभाश्रयभूते न्यस्तमना निर्दग्धाशेषकल्मषतया रागद्वेषवियुक्तैरात्मवश्यैरिन्द्रियैर्विषयांश्चरन् विषयांस्तिरस्कृत्य वर्तमानो विधेयात्मा विधेयमनाः प्रसादमधिगच्छति । निर्मलान्तःकरणो भवतीत्यर्थः ॥

विचारः

अत्र "तु" शब्देन पूर्वस्माद्व्यतिरेक उच्यते ॥ विषयध्यानसङ्गाभ्यां जन्यौ संमोहस्मृतिविभ्रमबुद्धिनाशनाशानां जनकौ कामक्रोधावित्युपदिष्टं । परिहारे "तु" इति तद्व्यतिरेकदशाऽनेनोच्यते ॥ कामक्रोधवियोगे इन्द्रियजयः फलं किमनेनेन्द्रियजयेनेति पुनराशङ्कायां मनः प्रसादो भविष्यति येन ज्ञानं जन्यते इति इन्द्रियजयाख्यं फलं इन्द्रियजयस्य फलं चोच्यते प्रकृतेन श्लोकद्वयेन ॥ यद्यपि विधेयात्मा रागद्वेषवियुक्तैरात्मवश्यैरिन्द्रियैर्विषयांश्चरन्प्रसादमधिगच्छतीति वाक्यगत्या रागद्वेषवियोगपूर्वकविषयचरणस्य

इन्द्रियाणामात्मवश्यत्वस्य विधेयात्मत्वस्यचानुवादत्वं प्रसादाधिगतेरेव विधेयत्वं च प्रतीयेते । वस्तुतो नैवं वाक्यवृत्तिः । उक्तानामप्राप्तत्वेनानुवादत्वायोगात् ॥ यःत्यक्तरागद्वेषः स विषयांश्चरति, स विधेयात्मा भवति, तत एव बाह्येन्द्रियाणि तस्य वश्यानि भवन्ति, सः प्रसादमधिगच्छति इति वाक्यानि चतुर्धा विभज्यानि ॥ अनेन हेतुहेतुमद्भावस्स्फुरत्यते ॥

ननु "वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता" इति विधेयात्मत्वस्य ज्ञानं फलमित्युक्तेः कथं इन्द्रियजयज्ञानयोर्हेतुहेतुमद्भावस्याप्राप्तत्वं, कथं नाम तस्यैव पुनः प्रतिपादने न पुनरुक्तिरिति चेन्न । यद्यपि वश्येन्द्रियत्वज्ञानयोस्साधनसाध्यत्वमुक्तम् । अत्र संदिह्यते किमयं साक्षादुतावस्थान्तरद्वारेति ? । न साक्षादपितु मनःप्रसादद्वारेति प्रतिपादनाय विधेयात्मा प्रसादमधिगच्छतीति हेतुसाध्यपरंपराणामुक्तिरिति । तथाच न पौ-

ननु विषयांश्चरन्निति साधनसंघे विषयचरणस्याप्युक्तेः विषयभोगो न केवलमभ्यनुज्ञातः किंत्ववश्यमनुष्ठेयत्वेन विहितो भाति ॥ नैतद्युक्त । उक्तप्रकारेण विषयध्यानमात्रस्याप्यनर्थहेतुत्वं चेत् किं वाच्यं विषयभोगस्य इत्याशङ्कामभिप्रयन् चरगतिभक्षणयोरिति धातोः अत्र चरतिर्भक्षणार्थको वा आक्रमणरूपगत्यर्थको वेत्यादाय 'चरन् तिरस्कृत्य' इति रामानुजाचार्यो व्याचष्ट ॥ "विषयांश्चरन्नित्यनेन विषयभोगभ्रमव्युदासायात्मवश्यत्वफलितमाह विषयांस्तिरस्कृत्य वर्तमान इति" इति देशिकवाक्यं ॥

अत्र चरतेर्भक्षणाद्यर्थत्वे करणताबोधकतृतीयान्तेन्द्रियैरिति न स्यात् । भोगार्थकत्वे प्रकरणानौचित्यं । यदभिप्रेतं भोगभ्रमव्युदासायेति देशिकोक्तेन । तदसङ्गतं । चरन्नप्ययं रागद्वेषवियुक्तस्सन् प्रसादं गच्छतीति व्याख्यानस्य निर्दुष्टत्वात् ॥ विषयभोगस्य साधननिवहे नान्तर्भाव इत्यविवादं ॥ सामान्यतो

विषयभोगपुरुषार्थयोर्विरोध इत्यप्यविवादं ॥ सर्वात्मना निराहारत्वस्याशक्यत्वात्कथमिन्द्रियजयस्साध्य इत्याकाङ्क्षां परिहरति चरन्निति ॥ इयमभ्यनुज्ञा । नानेन निषिद्धभोगो वा देहधारणापेक्षितसीमातिक्रमो वाऽनुज्ञातः। केवलं यथोचितविषयसेवन न दोषायेत्यनुज्ञातं ॥ चरतेर्भोगार्थकत्वं श्रीमदाचार्यसमत । तथा शाङ्कराणांच । यथा विषयभोगस्सर्वथा तिरस्कार्य इति रामानुजाचार्यपक्ष तथा विषयभोगोपलक्षितबाह्येन्द्रियनिग्रहोऽकिंचित्कर इति मधुसूदनस्साक्षात्प्रतिपक्षमवलंबते । "मनसि निगृहीते तु बाह्येन्द्रियनिग्रहाभावेऽपि न दोष इति वदन्" इंति तस्यावतारिकावाक्यं ॥ बाह्येन्द्रियनिग्रहाभावस्यामुख्यत्वं नैव श्लोकभावस्स्यात् । अन्यथा आत्मवश्यैरिन्द्रियैरिति नैवावक्ष्यत् । किन्तु अनिषिद्धकिंचिद्विषयभोगो न बाह्येन्द्रियनिग्रहविरोधी यदि रागद्वेषौ वियुक्तौ स्यातामित्याशय एवानवद्यः ॥ "आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृति." इत्याद्यभियुक्तवाक्यानि शुद्धाहारमिताहाराद्यर्थे प्रमाणानि ॥

अथ विचार्यते, रागद्वेषवियुक्तत्वं किन्नामेन्द्रियाणामिति, स वियोगः कथं भवतीति च ॥ ननु रागद्वेषयोर्मनोधर्मत्वेन सर्वपुरुषबाह्येन्द्रियाणां सदा तद्वियुक्तत्वाज्ज्ञानार्थिन एत्र किं विशिष्योच्यते इति चेन्न । वियुक्तत्व नाम रागद्वेषाप्रेरितत्वं इन्द्रियाणामभिप्रेतम् । तथाहि "प्रवर्तनालक्षणाः स्युर्दोषा रागादयश्च ते" इत्यभियुक्तवाक्यम् ॥ वियुक्तत्वमेवमुपपादयति वेङ्कटनाथः "मनोगतरागद्वेषाभ्यामेव बहिरिन्द्रियाणां तद्वत्त्वम् । मनसि च भगवदर्पणक्षीणरागद्वेषाद्यखिलकलुषे सति तदधीनेन्द्रियाणामपि तद्राहित्यं भवति" इति ॥

वियोगोपायश्चैवमुपपद्यते । विषयध्यानसङ्गयोः रागद्वेषमूलत्वेन कारणपरिहारात्कार्यपरिहारो भवति । संमोहस्मृतिविभ्रमबुद्धिनाशनाशानामनर्थानां चिन्तनाच्च तज्जनकौ रागद्वेषौ विहन्येते इति वियोगप्रकारः आचार्याभिमतः ॥ "मयि सर्वेश्वरे चेतसश्शुभाश्रयभूते न्यस्तमना निर्दग्धाशेष-

कल्मषतया रागद्वेषवियुक्तैः" इति रामानुजभाष्यम् ॥ एतेन भगवद्ध्यानेन रागद्वेषवियोग इत्युक्तं भवति । यद्यपि भगवानेव सर्वशुद्धिप्रदः परमसाधनं दोषशान्त्यै । परन्तु तदधीनावान्तरसाधनजिज्ञासायां विषयध्यानादिदोषाणां परिहारोऽपि साधनमिति सङ्गच्छते ॥

एवमाह शङ्करानन्दः । "रागद्वेषयोर्बीजं विषयेष्विष्टत्वानिष्टत्वबुद्धिः। दोषदर्शनेन तस्यां परित्यक्तायां इन्द्रियाणि रागद्वेषवियुक्तानि भवन्ति । तथा च वियुक्तैः विषयेष्वसत्त्वतुच्छत्वबन्धकत्वबुध्या रागद्वेषाभ्यां वियोजितैः" इति ॥ रागद्वेषयोर्बीजमिष्टत्वानिष्टत्वबुद्धिरिति स्वोत्प्रेक्षितं विहाय विषयध्यानादिकं इत्यङ्गीकारेण पूर्वश्लोकेन सङ्गतिः खचिता भाति ॥ किं च इष्टत्वानिष्टत्वबुद्धिरेव रागद्वेषावित्यनर्थान्तरत्वादेवमुपपादनं नीरसम् ॥

प्रसादो नाम नेहात्मधर्मः इच्छारूपः । किं तु मनःप्रसादो विवक्षितः, विधेयात्मेति मनसः प्रसक्तत्वात् 'प्रसन्नचेतसो ह्याशु' इति चानुपदं वक्ष्यमाणत्वात् ॥ ननु यस्यानायासेनाभिलषितविषयप्राप्तिः तस्य मनोऽव्याकुलं प्रसन्नमुच्यते, तत् कथं प्रसादस्येन्द्रियजयफलत्वं ज्ञानसाधनत्वं चोच्यते । इन्द्रियजयाभावेऽप्युक्तरूपमनःप्रसादसद्भावात् । अभिलषितविषयोपनतौ च तादृशप्रसादस्य ज्ञानविरुद्धत्वात् इति चेन्न । प्रसादो नामात्र प्रयत्नं विनापि मनसः प्रायो विषयान्प्रत्यप्रवृत्तिर्विवक्षिता । एतादृशप्रसादः इन्द्रियजयफलं भवितुमर्हति ज्ञानसाधनं च ॥

केचिदिमं श्लोकं व्युत्थितज्ञानिमात्रपरं, केचिच्च समाधिस्थव्युत्थितोभयपर इति मन्यन्ते ॥ द्वितीयं पक्षं शङ्करानन्द आश्रयते । रागद्वेषवियुक्तैरात्मवश्यैरिन्द्रियैर्विषयांश्चरतीति व्युत्थितस्थितप्रज्ञं प्रतिपादयति । विधेयात्मा प्रसादमधिगच्छति इति समाधिस्थस्थितप्रज्ञं इति तस्य विभागः ॥ "नन्विन्द्रियैर्विषयग्रहणाभावे विदुषः कथं शरीरयात्रा सेत्स्यतीत्याशङ्कायां तत्प्रकारं

नित्यं समाधिमनुतिष्ठतश्चित्तप्रसादं च प्रतिपादयति" इति तस्यावतारिकावाक्य ॥ व्युत्थितो ज्ञानी अन्नरसादीननिषिद्धान् तत्रापि प्राणत्राणमात्रपर्यन्तान् सेवते ॥ विधेयात्मा समाधिस्थो मनःप्रसादं चित्तनिर्मलतां प्राप्नोति इति तद्भावः ॥ आद्यपक्ष मधुसूदनादय अवलम्बन्ते ॥ स्थितधीरित्युक्तो व्युत्थितो मुनिः किं प्रभाषेत, किमासीत, किं व्रजेत इति पृष्टं । तत्र किं प्रभाषेत किमासीतेति द्वावपि प्रश्नौ उत्तरितावभवतां ॥ किं व्रजेतेत्यस्योत्तरमितः परमारभ्यते इति तदाशयः ॥ "कथं व्रजेत भुंजीतेत्यस्य चतुर्थप्रश्नस्य स्वाधीनैरिन्द्रियैर्विषयानधिगच्छति इत्युत्तरं" इति श्रीधरवाक्यं ॥ "मनसि निगृहीते तु बाह्येन्द्रियनिग्रहाभावेऽपि न दोष इति वदन् किंव्रजेतेत्यस्योत्तरमाहाष्टभिः" इति मधुसूदनीये ॥ व्युत्थितस्थितप्रज्ञपरतां गाढं सगृह्याह नीलकण्ठः । "ननु विषयानध्यायतोऽपि योगिनो व्युत्थाने प्रमाणस्वाभाव्यादिन्द्रियाणां विषयेषु सङ्गो दुष्परिहरः ततश्चोक्तरीत्या तस्यापि नाशप्रसक्तिरित्याशंक्याह ॥ रागद्वेषेति ॥ स्वयं रागद्वेषवियुक्तः विषयान्पथि पतिततृणादीनिवानास्थया चरन् पश्यन्नपि पुमान् तत्र कामाद्यनुदयात्प्रसादं सङ्कल्पविकल्पपङ्कलेपप्रक्षालनेन मनसः स्वास्थ्यमधिगच्छति" इति ॥ अत्रैतच्चिन्त्यते । "वीतरागभयक्रोधः नाभिनन्दति नद्वेष्टि" इति द्वाभ्यां किं प्रभाषेतेत्युत्तरितं इत्युक्तम् ॥ किमासीतेति प्रश्न 'स्तानि सर्वाणि सम्यम्य' इत्यनेन समाहित इत्युक्तम् ॥ कि व्रजेतेति प्रश्नः स्वाधीनैरिन्द्रियैर्विषयानधिगच्छतीति समाहित इत्युक्तम् । एतेन व्युत्थितः स्थितप्रज्ञो जितेन्द्रियस्सन् प्रभाषते उपविशति व्रजति इत्युक्तं भवति ॥ एवंसति प्रतिप्रश्नं समाधानैक्यं गम्यते तर्हि प्रश्नानां त्रित्वं किमित्यङ्गीकार्य ? । नहि विनोपलक्षणादिकं भाषणोपवेशनगमनेषु व्युत्थितमुनेस्सर्वव्यापाराणामन्तर्भावस्सम्भवति ॥ श्रीधरेणापि व्रजेतेति प्रतीकमादाय भुञ्जीतेति हि व्याख्यातम् ॥ भाषणोपवेशनयोरपि स्वार्थमात्रपरतां विहाय व्यापारसामान्योपलक्षकत्वग्रहणे का हानिरिति

न ज्ञायते ॥ अत एव श्रीमदाचार्याशयः यानिशेति पद्य विना सर्वाण्यपीमानि पद्यानि स्थितप्रज्ञस्य का भाषेति ज्ञानिलक्षणप्रश्नस्योत्तराणि, पृष्टं प्रासङ्गिकं च प्रमेयं प्रतिपादयन्ति इति ॥ किं च 'ध्यायत' इत्यादिप्रस्तुतं प्रकरणं न स्थितप्रज्ञपरं नापि तन्मध्यपतितव्युत्थितपरं वा समाधिस्थपरं वा। अपित्वेतज्जिज्ञासुपरमेव भवितुमर्हति ॥ विषयध्यानाद्यनर्थप्रवाहनिमग्नोऽज्ञानीत्यत्र न सन्देहः। रागद्वेषवियुक्तः युक्ताहारादिमान् आत्ममनःप्रसादोऽपि जिज्ञासुरेव। "प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठति" इत्यनेनास्याद्याप्यनात्मज्ञानत्वमत्र तन्त्रम् ॥ तस्मात् ध्यायत इत्यारभ्य श्लोकेषु प्रायो ज्ञानात्पूर्वस्यां दशायां ज्ञानकारणभूतेन्द्रियजयः प्रतिपादितो भाति ॥

---

**प्रसादे सर्वदुःखानां हानिरस्योपजायते।**
**प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठति ॥ ६५ ॥**

वि ॥ प्रसादे सति किं स्यादित्यत उक्तं ॥ प्रसाद इति। प्रागुक्तरूपमनःप्रसादे सति अस्य प्रसन्नचेतसः पुंसः आशु शीघ्रं बुद्धिः ब्रह्मापरोक्षज्ञानं पर्यवतिष्ठति सम्यग्भवति। ततश्चास्यापरोक्षज्ञानिनः सर्वदुःखानां हानिरुपजायते॥ हि प्रसिद्धमेतत्। "तरति शोकमात्मवित्" इत्यादौ इति॥ अत्र प्रसादे सति बुद्धिः पर्यवतिष्ठतीत्येतावत्येव वक्तव्ये सर्वदुःखानां हानिरिति ज्ञानफलस्याप्युक्तिः, बुद्धियुक्तो जहातीहेत्यत्र सुकृतदुष्कृतहानस्य ज्ञानफलत्वोक्तिरयुक्ता

सुखदुःखप्राप्तिपरिहारयोरन्यतरत्वाभावेनापुमर्थत्वात् इत्याशङ्कानिरासाय प्रसङ्गात्प्राप्तेति ज्ञेयं ॥

शं ॥ प्रसादे सति किं स्यादिति । उच्यते ॥ प्रसादे । सति प्रसादे सर्वदुःखानां आध्यात्मिकादीनां हानिः विनाशः अस्य यतेः उपजायते ॥ किं च प्रसन्नचेतसः शुद्धान्तःकरणस्य हि यस्मात् आशु शीघ्रं बुद्धिः पर्यवतिष्ठते । आकाशमिव परि समंतात् अवतिष्ठते आत्मस्वरूपेणैव निश्चलीभवति इत्यर्थः ॥ एवं प्रसन्नचेतसोऽवस्थितबुद्धेः कृतकृत्यता यतस्तस्माद्रागद्वेषवियुक्तैरिन्द्रियैः शास्त्राविरुद्धेष्ववर्जनीयेषु युक्तस्समाचरेदिति वाक्यार्थः ॥

रा ॥ अस्य पुरुषस्य मनःप्रसादे सति प्रकृतिसंसर्गप्रयुक्तसर्वदुःखानां हानिरुपजायते । प्रसन्नचेतसः आत्मावलोकनविरोधिदोषरहितमनसः तदानीमेव हि विविक्तात्मविषया बुद्धिः मयि पर्यवतिष्ठते ॥ अतो मनःप्रसादे सर्वदुःखानां हानिर्भवत्येव ॥

विचारः

अयं श्लोकस्समाधिस्थपर इत्यादाय व्याख्याति शङ्करानन्दः । "नित्यं समाधिनिष्ठया चेन्द्रियाणां मनसश्च शुद्धिलक्षणं प्रसादं संपादितवतो विदुषः फलमाह" इति तद्वाक्यं ॥ एतदानुगुण्याय दुःखहानिरित्यत्र दुःखशब्देन विक्षेपा लक्ष्यन्ते इति च व्याख्यातं ॥ गीतायां अस्येत्यस्य समाधिस्थस्येति व्याख्याने गमकं चिन्त्यं ॥ विधेयात्मा प्रसादमधिगच्छतीति वाक्यं समाधि-

स्थपरं इति कृत्वा व्याहृतिर्भिया प्रकृतश्लोकोऽपि तत्पर इत्युक्तं दृश्यते ॥ दुःखशब्दस्य विक्षेपलक्षकत्वं क्लिष्टं ॥ अनेन व्याख्यात्रा प्रथम प्रसादः तस्मात् दुःखहानिः तस्याः ज्ञानं इति क्रमोऽभिप्रेतः । तर्हि प्रसादस्य समाधिस्थलक्षणत्वं कथं घटते ॥ अस्य पूर्वश्लोकस्य च वाक्यार्थ एवं ह्युक्तः शङ्करभाष्ये । "एवं प्रसन्नचेतसोऽवस्थितबुद्धेः कृतकृत्यता यतस्तस्माद्रागद्वेषवियुक्तैरिन्द्रियैश्शास्त्राविरुद्धेष्ववर्जनीयेषु युक्तस्समाचरेदिति वाक्यार्थः" इति ॥ एतद्भाष्यं श्लोकयोस्समाधिस्थपरता विरुणद्धि ॥ नैवं कोऽपि व्याख्याता ब्रूत इत्यास्तां विस्तरः ॥

समाधिस्थपरत्वमनादृत्य हानिरस्येत्यत्र अस्येति विवक्षितः पुरुषो यतिरिति शङ्कराचार्यो मन्यते । अत्र गमकं चिन्त्यं ॥ किमिति गृहस्थोऽस्मादुपदेशाच्छासनाद्वा बहिष्क्रियत इति न ज्ञायते ॥

(अत्र प्रसादशब्दार्थः सम्यगनुसन्धेयः । यस्यानायासेनाभिलषितविषयोपनतिः तस्य मनोऽव्याकुलं प्रसन्नमुच्यते । एतादृशः प्रसादः इन्द्रियजयफलं न भवितुमर्हति । नापि 'प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठति ।' इत्युक्तप्रकारेण ज्ञानस्य साधनं वा स भवेत् । तस्मात् योऽयं विधेयात्मनाधिगम्यते पर्यवस्थितबुद्धेर्बीजं च स प्रसादः मनसस्स्वतो विषयान्प्रत्यप्रवृत्तिरूप इति ज्ञेयं ॥ अन्ये व्याख्यातारस्सर्वेऽपि नैर्मल्यं उक्तमनेनेत्याहुः ॥ इन्द्रियद्वारमन्तरा स्वतोऽपि प्रायोविषयान्प्रत्यगमनं नैर्मल्येऽन्तर्भवतीति नेतरव्याख्यानविरोधः ।)

ः पर्यवतिष्ठति इत्यत्र बुद्धिः ब्रह्मात्मैक्याकारेत्यद्वैतव्याख्यातारः ॥ अपरोक्षज्ञानमित्याचार्य ॥ पर्यवतिष्ठते इत्यस्य आकाशमिव परि समंतात् अवतिष्ठते आत्मस्वरूपेणैव निश्चलीभवतीत्यर्थ उक्तश्शंकरभाष्ये ॥ प्रतिष्ठिता भवति सम्यग्भवतीत्याचार्याशयः ॥

गीतायां प्रसादस्य फलं दुःखहानिः इति प्रथमार्धे, प्रसादस्य फलं बुद्धिरिति द्वितीयार्धे उक्तं ॥ प्रसाददुःखहानिज्ञानानां परस्परं साध्यसाधनभावक्रमजिज्ञासायां त्रयः पक्षा दृश्यन्ते ॥ (१) प्रथमः, प्रसादाद्दुःखहानिः दुःखहानेर्बुद्धिरिति शङ्करानन्दः ॥ (२) द्वितीयः, प्रसादाद्दुःखहानिरेकं फलं, प्रसादाज्ज्ञानमन्यत्फल इति शङ्कराचार्यः ॥ पश्यत तट्टीकां च आनन्दगिरिव्याख्यां ॥ (३) तृतीयः, प्रसाद-फल ज्ञानं ज्ञानाद्दुःखहानिरिति (मधुसूदननीलकण्ठवेङ्कटनाथरामानुजश्री-मध्वाः) ॥

अत्र आद्यः पक्षो न समीचीनः दुःखशब्दस्य विक्षेपलक्षकत्वं पुरस्कृत्य श्लोकस्य समाधिस्थपरत्वस्थापनाय प्रवृत्तं तद्व्याख्यानं ॥ द्वितीया-र्धगत "हि" शब्दार्थं नालोचयत्ययं व्याख्याता ॥ मनःप्रसादस्य सर्वदुः-खहानिहेतुत्वं ज्ञानहेतुत्वादुपपद्यते इति हेत्वर्थाद्धिशब्दाद्गम्यते ॥ एतदर्थ-स्वारस्यं न लभ्यते यदि दुःखहानिः साक्षात्प्रसादफलं इति गृह्येत ॥

द्वितीयः पक्षोऽपि न सरसः ॥ "प्रसादे सर्वदुःखानां आध्यात्मि-कादीनां हानिर्विनाशोऽस्य यतेरुपजायते ॥ किंच प्रसन्नचेतसः बुद्धिः पर्यव-तिष्ठते" इति शङ्करभाष्यं ॥ "बुद्धि प्रसादस्यैव फलान्तरमाह किं चेति" इत्यानन्दगिरिव्याख्या । अस्मिन्नपि व्याख्याने द्वितीयार्धगत 'हि' शब्दस्य पूर्वार्धोक्तहेतुकथनत्वं नोपपद्यते ॥ दुःखहानेर्ज्ञानफलत्वेन 'तरति शोकमात्म-वित्' इत्यादिशास्त्रप्रसिद्धिर्नालोचितेति भाति ॥

(३) फलद्वयपक्षं विहायाह वेङ्कटनाथः । "ननु ज्ञानफलत्वेन प्रसिद्धस्य सर्वदुःखनाशस्य कथं प्रसादफलत्वमित्याशंक्याह ॥ प्रसन्नचेतस इति । दुःखहानिर्ज्ञानद्वारा प्रसादफलमित्यर्थः" इति ॥ एवं मधुसूदनोऽपि 'प्रसादे सति बुद्धिपर्यवस्थानं ततस्तद्विरोध्यज्ञाननिवृत्तिः ततस्तत्कार्यसकल-

दुःखहानिरिति क्रमेऽपि प्रसादे यत्नाधिक्याय सर्वदुःखहानिकरत्वमिति न विरोध." इति ॥ एवमेव "बुद्धिः पर्यवतिष्ठते अतः मनःप्रसादे सर्वदुःखानां हानिर्भवत्येव" इति रामानुजाचार्यभाष्यम् ॥ एवमेव श्रीधराचार्याशयोऽपि ॥ अत एव प्रमेयदीपिकायां "एतेन प्रसादस्य फलद्वयमुच्यत इत्यपिप्रतीतिर्निरस्ता भवति ॥ प्रसादे सति ब्रह्मापरोक्षज्ञानं भवति । तच्च व्यवधानेन । ततो भवति सर्वदुःखहानिः । सा प्रसादफलतयोक्ता" इति ॥

अत्रेदमनुसन्धेयम् । यद्यपि प्रसादफलं ज्ञानमित्युक्तम् । तच्च व्यवधानेन । 'नास्ति बुद्धिरयुक्तस्ये'ति युक्तत्वरूपचित्तनिरोधस्य बुद्धेः पूर्वभावित्वेनोक्तत्वात् ॥ तथाच क्रमः, प्रसादः युक्तत्वं बुद्धिः दुःखहानिरिति ॥

ननु सर्वदुःखहानेः का सङ्गतिरिह । मत्परत्वं परं साधनमिन्द्रियजयस्येत्युक्तम् रागद्वेषवियोग अपरं साधनमिति च ॥ स्थितप्रज्ञप्रकरणत्वेन इन्द्रियजयः ज्ञानसाधनं प्रसादद्वारा । अथवा प्रसादचित्तनिरोधयोर्द्वारेत्यप्युच्यतां नाम । ज्ञानानन्तरं दुःखहानिरिति त्वप्रस्तुतमेवेति चेन्न । प्रसंगादस्य संगतिरुपपद्यते । यथोक्तं प्रमेयदीपिकायां "बुद्धियुक्तः इति श्लोके सुकृतदुष्कृतहानं ज्ञानफलमित्युक्तं, तदयुक्तं अपुरुषार्थत्वादित्याशङ्कां परिहर्तुं प्रसंगादिदमुक्तं" इति ॥ एतेन प्रसादज्ञानयोर्व्यवधानभूतस्य वक्तव्यस्य युक्तत्वस्यानुक्तिः ज्ञानफलभूतस्याप्रस्तुतस्य दुःखपरिहारस्योक्तिश्चेत्याक्षेपद्वयं समाहितं वेदितव्यम् ॥

यच्छंकरभाष्ये श्लोकद्वयतात्पर्यकथनावसरे वाक्यार्थत्वेन क्रोडीकृतं तत्रास्तीषद्विचारः ॥ तत्रह्युक्तं "रागद्वेषवियुक्तैरिन्द्रियैः शास्त्राविरुद्धेष्ववर्जनीयेषु युक्तस्समाचरेत् इति वाक्यार्थः" इति ॥ एतेन "विषयानिन्द्रियैश्चरन्नि"त्युक्तेः प्राधान्यं दत्त भवति ॥ विषयाचरणस्येह मुख्यविधेयत्वं कथं संगच्छते । अनिषिद्धेष्ववर्जनीयेष्विति विषयविशेषणे अप्यध्याहृते

न गीताप्राप्ते ॥ चरन्नपि रागद्वेषवियुक्तश्चेद्यं विषयचरणफलमपि जित्वेन्द्रियजयमनोजयप्रसादानां द्वारा स्थिप्रज्ञो भवति ॥ बलवति सति रागद्वेषवियोगे बलवतीन्द्रियजयादौ विषयचरणमकिंचित्करमिति हि गीताभावः ॥ तस्मान्मुमुक्षुः रागद्वेषाविन्द्रियेभ्यो वियोजयेत् । इन्द्रियमनसी वशीकुर्यात् । प्रसादं लभेत । सर्वदुःखप्रहाणाय ज्ञानी भवेदिति वाक्यार्थे वक्तव्ये अमुख्यत्वेन प्रसंगाल्लब्धस्य मितविहितभोजनस्य मुख्यविशेष्यत्वेन वाक्यार्थत्वं कथं संगच्छते इति चिन्त्यते ॥

किंचोच्यते स्यादिमं शङ्करभाष्योक्तं वाक्यार्थं हृदि निधाय किंव्रजेतेति प्रश्नस्य रागद्वेषवियुक्तैरित्यादिनोत्तरं दीयते इति मधुसूदनादयोऽमन्यन्त इति ॥

**नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।**
**नचाभावयतः शान्तिरशान्तस्य कुतस्सुखं ॥६६**

वि ॥ श्रवणमननाभ्यामुपकृतेन ध्यानेनैव ब्रह्मापरोक्षज्ञानसिद्धेः किमनेन प्रसादेनेत्यतः प्रसादाभावे दोषमाह ॥ नास्तीत्यादिश्लोकद्वयेन ॥ विपक्षे दोषोक्तिपरत्वान्मनःप्रसादाभावे युक्तिशब्दितचित्तनिरोधो न भवतीत्येतत्प्रकरणप्राप्तमादौ योज्यम् ॥ नास्तिबुद्धिरित्येतदग्रे योज्यम् । अयुक्तस्य चित्तनिरोधहीनस्य भावना ध्यानं न भवति । अभावयतश्चाध्यायिनश्च बुद्धिरपरोक्षज्ञानं न भवति । न चाबुद्धेरिति शेषः। अपरोक्षज्ञानहीनस्य च शान्तिर्मुक्तिर्नास्ति।

अशान्तस्यऽमुक्तस्य च सुखं कुतः । न कुतोऽपीत्यर्थः ॥ अबुद्धेरशान्तिर्नैत्येतावत्येव वाच्येऽशान्तस्य कुतःसुखमित्युक्तिर्न केवलमपरोक्षिणो मुक्तौ सर्वदुःखप्रहाणमात्रं किं तु संसारिभिरलभ्यं परमं सुखं चेति ज्ञापयितुं प्रसङ्गात्प्राप्तेति ज्ञेयम् । यद्वा शान्तिर्भगवदेकनिष्ठबुद्धिता, सुखं मोक्षः ॥

शं ॥ सा इयं प्रसन्नता स्तूयते । नास्ति इति ॥ नास्ति न विद्यते न भवतीत्यर्थः । बुद्धिः आत्मस्वरूपविषया अयुक्तस्य असमाहितान्तःकरणस्य ॥ नचायुक्तस्य भावना आत्मज्ञानाभिनिवेशः । तथा नचाभावयतः आत्मज्ञानाभिनिवेशं अकुर्वतः शान्तिः उपशमः न विद्यते ॥ अशान्तस्य कुतः सुखं ? ॥ इन्द्रियाणां हि विषयसेवातृष्णातो निवृत्तिर्या तत्सुखं न विषयविषया तृष्णा । दुःखमेव हि सा । न तृष्णायां सत्यां सुखस्य गन्धमात्रमप्युत्पद्यते इत्यर्थः ॥

रा० ॥ मयि सन्यस्तमनोरहितस्य स्वयत्नेनेन्द्रियनियमने प्रवृत्तस्य कदाचिदपि विविक्तात्मविषया बुद्धिर्न सेत्स्यति । अत एव तस्य तद्भावना च न संभवति ॥ विविक्तात्मानमभावयतो विषयस्पृहाशान्तिर्न भवति ॥ अशान्तस्य विषयस्पृहायुक्तस्य कुतो नित्यनिरतिशयसुखप्राप्तिः ॥

विचारः

अध्याहारपूर्णोऽयं श्लोकः। शेषपूर्तिपूर्वकं विवृत्यां व्याख्यातं पठनीयं। "प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते" इति प्रसन्नमना अपरोक्षमाशु लभते

इत्युक्तं ॥ प्रसादाभावे को दोष इति व्यतिरेकमुखेन प्रसन्नताया माहात्म्यं वक्ष्यते ) (उपदेशग्रहणयोर्लोपवाय बुद्ध्यभावः प्रथममुक्तः । प्रकरणात्परामर्श-बलाच्च बुद्धिः पर्यवतिष्ठते इत्यत्र यादृशी बुद्धिरपरोक्षदृक् विवक्षिता सैव नास्तिबुद्धिरित्यत्र बुद्धिशब्देन ग्राह्येत्युचितं ॥ प्रसादाभावे बुद्धिर्नास्ती-त्यभिप्रेतम् ॥ एतद्व्यवधानेन संभवति । बुद्धेः श्रवणमननोपकृतेन निदिध्यासनेन साध्यत्वं सुप्रसिद्धं । निदिध्यासनमत्र भावनापदेनोच्यते । ततो भावनाख्यं ध्यानमेक व्यवधानं । भावनाच चित्तैकाग्रतासाध्या । सैवहि युक्तत्वं । अतउक्तं नचायुक्तस्य भावनेति )। यतः प्रसादाभावे युक्तत्व नास्ति (चित्तै-काग्रता) युक्तत्वाभावे न भावना भावनाभावे नापरोक्षज्ञानं (बुद्धिः) । ततो नास्ति बुद्धिरयुक्तस्येति संक्षेपत उक्तिः ॥ उपपत्तिजिज्ञासायां युक्तेर्भावना-हेतुत्वेन भावनाया बुद्धिसाधनत्वेन उक्तं युक्तं इत्युपपादितं ॥ अयं प्रथमार्धवाक्यार्थः )।

द्वितीयार्धे भावनाशान्त्योस्साक्षात्संबन्धस्योक्तावपि व्यवहितसम्बन्धोऽ-वगन्तव्यः । भावनाख्यध्यानसाध्यत्वादपरोक्षज्ञानस्य (बुद्धेः) । तत्साध्य-त्वान्मोक्षस्य । शान्तिर्मोक्षोऽथ निर्वाणं इत्यभिधानम् ॥

नशान्तिरित्येतावत्येव वक्तव्ये कुतः सुखमित्युक्तिस्तु प्रसंगप्राप्ता । मुक्तौ दुःखहानिमात्रं, न सुखं इति केषांचिन्मतं । तन्न । ससारिभिरलभ्य-परमसुखस्य मुक्तैर्लभ्यत्वात् । एतज्ज्ञापनायाधिकोक्तिस्सार्थका ज्ञेया ॥ अथवा सुखं मोक्षः शान्तिः भगवद्भक्तिः इति यथाव्याख्यातं तात्पर्यं ॥

बुद्धिःपर्यवतिष्ठते इति वाक्यभागं पुरस्कृत्य नीलकण्ठस्संगतिं योजयति ॥ तथाहि "समनस्कानामिन्द्रियाणामनिग्रहे दोष उक्तः । (ध्यायत इत्यादिनेति भावो भाति) बुद्धेरपर्यवस्थाने को दोष इत्यत आह ॥ नास्तीति" इति तेन सङ्गतिरुत्थापिता ॥ बुद्धेः पर्यवस्थानं

नाम ब्रह्मात्मैक्यनिश्चयस्य सुदृढत्वं इत्यनेनैव परिष्कृतं (पूर्वश्लोके) ॥ बुद्धेः पर्यवस्थानाभावे को दोषः इत्याक्षिप्य अयुक्तत्वं दोषः इति समाधानमुक्त्वा अयुक्तत्वं नाम श्रवणमननयोरनासक्तिरित्यनेन व्याख्यातं ॥ श्रवणमननयोरप्यनासक्तो हि मूढः । नायं रागद्वेषवियुक्तः वश्येन्द्रियः विधेयात्मा प्रसन्नचेता वा भवितुमर्हति । तादृशस्य हि बुद्धेरपर्यवस्थानमापादितं । श्रवणं हि जिज्ञासोः प्रथमः पादन्यासो मोक्षमार्गे । तत्राप्यनासक्तो मनःप्रसादं कुतो लब्धवान् इति न ज्ञायते ॥ प्रसादे इदं फलं इत्युक्त्वा व्यतिरेकोक्तौ प्रसादाभावस्यैव ग्रहणमुचितं भाति । अयुक्तस्य बुद्धिर्नास्तीत्यत्रायुक्तत्वं मनःप्रसादेन संबद्धं नतु बुद्धेः पर्यवस्थानेन ॥ अयुक्तस्य पर्यवस्थितबुद्धिहीनस्येति व्याख्याने तस्य बुद्धिर्नास्तीत्युक्तिरयुक्ता भवति ॥ केयं निषेधविषया बुद्धिः पर्यवस्थिता वा अन्यावा ॥ नाद्यः पक्षसाध्ययोरविशेषात् । न द्वितीया असाङ्गत्यात् ॥

अत्र शङ्करभाष्योत्कर्षदीपिकायामपि नीलकण्ठः प्रत्याख्यातः ॥ तथाहि—"यत्तु समनस्कानामिन्द्रियाणामनिग्रहे दोष उक्तः । बुद्धेरपर्यवस्थाने को दोष इत्यत आहेति । तच्चिन्त्यं । अयुक्तस्य बुद्धिर्नास्तीत्युक्त्या चित्तप्रसादस्तुतेः स्पष्टप्रतीतेः तथोत्थापनानौचित्यात्" इति ॥

अस्मिन् श्लोके भावनेत्यनेन निदिध्यासनापरपर्यायं ध्यानं उक्तमिति सर्वसम्मतम् ॥ श्लोके अयुक्तस्येति द्विरुक्तम् । तयोरर्थेऽस्ति विचारः ॥ बुद्धिशान्तिपदयोरप्यर्थेऽस्ति विप्रतिपत्तिः ॥

नास्तिबुद्धिरयुक्तस्येत्यत्र अयुक्तत्वं नामाप्रसन्नमनस्कत्वमेवेति केचित् उ. दी. ॥ अप्रसन्नस्येत्यनुक्त्वा अयुक्तस्येत्युक्तौ प्रयोजनमन्वेषणीयम् ॥ अतः प्रसादो नाम स्वतः प्रायो विषयागतिः ॥ युक्तत्वं तु न केवलं चित्तनिग्रहोऽपित्वेकाग्रतेति प्रसादयुक्तत्वयोर्हेतुहेतुमद्भावः सूचितः प्रमेयदीपिकाटिप्पण्याम् ॥

अयुक्तस्य भगवति मनोयोगहीनस्येति यद्रामानुजाचार्येणाभिप्रेतं तन्निरवद्यं । असमाहितान्तःकरणस्य समाधिमकुर्वतः इति यदन्यैर्व्याख्यातं तदपि नास्माकमनिष्टम् ॥

द्विवारमुक्तं अयुक्तस्येति पदं प्रथममेकधा व्याख्याय द्वितीयमन्यथा व्याख्याति नीलकण्ठः ॥ तथाहि "अयुक्तस्य बुद्धिर्नास्ति । श्रवणमननयोरनासक्तस्य बुद्धिर्ब्रह्मात्मैक्यनिश्चयो नास्ति । नायुक्तस्य भावना । अयुक्तस्यासमाहितमनसो भावना ब्रह्माकारान्तःकरणवृत्तिप्रवाहो नास्ति ॥ आद्यमयुक्तस्येति पदं 'युजियोगे' इत्यस्य रूपं, द्वितीयं 'युज समाधौ' इत्यस्य" इति ॥

देशिकोऽपि द्विरुच्चरितस्यास्य भिन्नार्थकत्वं अभिप्रैति । अयुक्तस्य न बुद्धिः अबुद्धेः न भावना इति शृङ्खलायां वक्तव्यायां अबुद्धेरित्यनुक्त्वा किमित्ययुक्तस्येति प्रयुक्तमिति देशिकस्य सन्देहः । अत आह "द्वितीयपादस्थमयुक्तत्वं फलभूतबुध्यभावलक्षकं" इति॥ लक्षणाश्रयणेऽस्वारस्यं मन्वानेनान्यथापि व्याख्यातं ॥

अत्रोच्यते । कुतोऽयं क्लेशः । अयुक्तस्येति द्वितीयं पदं पूर्वोच्चरितेनैकार्थमित्युक्ते का हानिः । व्यर्थकल्पनेच गौरवं दोषः ॥ शृङ्खलौचित्यन्त्वर्थसौष्ठवं बाधते ॥ बुद्धिस्त्वपरोक्षधीर्भावनासाध्येति शास्त्रप्रसिद्धा । तस्मात् "च" कारोऽत्र हीत्यर्थकः ॥ यतोऽयुक्तस्य न भावना अतः भावनाभावादेवायुक्तस्य न बुद्धिरिति योजना सुगमा ॥ अत एव शङ्करभाष्योत्कर्षदीपिकायां च "अयुक्तस्य बुद्धिर्नास्ति । कुत इत्यत आह । नचेति ॥ नचायुक्तस्य भावना ॥ पूजाप्रतिष्ठाद्यर्थं श्रवणमननयोस्सत्त्वेऽपि भावनाऽभिनिवेशो निदिध्यासनं बुद्धिसाधनं नास्ति" इति ॥ पश्यत भावनाया यदुक्त बुद्धिसाधनत्वं॥ शृङ्खलायां भावनायाः पूर्वं बुद्धिं स्थापयितुमिमे नीलकण्ठदेशिकादयो बुद्धि-

शब्दं परोक्षज्ञानपरं मन्यन्ते ॥ अत एव मधुसूदनः । "बुद्धिः आत्मविषया श्रवणमननाख्यवेदान्तविचारजन्या" इति ॥ एवमेव श्रीधरः "बुद्धिः शास्त्राचार्योपदेशाभ्यामात्मविषया प्रज्ञा" इति ॥ तथाच वाक्यजन्यं परोक्षज्ञानं विवक्षितमिति तेषामाशयः ॥

अत्र वक्तव्यं ॥ "प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते" इत्यत्र यो बुद्धिशब्दार्थः स एवात्रापि तदर्थो भवितुमर्हतीति स्पष्टं भाति । अन्यथा व्यतिरेकमुखेन संगतिर्नोत्कृष्टाऽवगम्यते । प्रसन्नचेतसा लभ्या बुद्धिस्त्वपरोक्षज्ञानमेव ॥ तस्मादिहापि तदेव विवक्षितं भाति । शृङ्खलौचित्ययुक्तिस्तु न प्रत्याययति । शृङ्खलायां बुद्धेः भावनानन्तरं प्रतिष्ठापनस्यानौचित्यायोगात् ॥

ये बुद्धिशब्देन परोक्षज्ञानं गृह्णन्ति तेषां ब्रह्मसाक्षात्कारलाभायोचितं गीतापदं दुर्लभं ॥ भावनानन्तरं साक्षात्कारः तदनन्तरं मोक्षः इति क्रमस्तु सर्वाभ्युपगतः ॥ अतस्सुखं इत्यनेन मोक्षं गृहीत्वा शान्तिशब्दं साक्षात्कारपरं मधुसूदनवेङ्कटनाथावाहतुः ॥ "शान्तिः सकार्याविद्यानिवृत्तिरूपा वेदान्तवाक्यजन्या ब्रह्मात्मैक्यसाक्षात्कृतिः" इति माधुसूदन्यां ॥ "निदिध्यासनमकुर्वतः सर्वानर्थनिवृत्तिकरस्तत्त्वसाक्षात्कारो नास्ति" इति वेङ्कटनाथः ॥ शान्तिशब्दस्योपरमार्थत्वमुचितमिति मन्वानौ शङ्कराचार्यरामानुजाचार्यौ तु तृष्णोपरमः विषयस्पृहाशान्तिरनेनोच्यत इति व्याचक्षाते ॥ शान्तिशब्देन सर्वदुःखोपरम उक्त इति केचित् ॥ द्वैतादर्शनं शान्तिरिति शङ्करानन्दः ॥

"शमो मन्निष्ठता बुद्धेः" इति भागवतोक्तिमादाय शान्तिर्भगवद्भक्तिर्वा "शान्तिर्मोक्षोऽथ निर्वाण" मित्यभिधानमाश्रित्य मोक्षः शान्तिशब्दार्थः इत्याचार्याशयः ॥ विदेहमुक्तिरभिप्रेता स्यादिति शङ्करानन्देनाप्युक्तम् ॥

अशान्तस्य विषयतृष्णावतः इति व्याख्यानानुगुण्येन "कुतस्सुखं" इत्यत्र विषयप्राप्यत्वेन यद्वृथा काङ्क्षितं तत्सुख विवक्षितमिति शङ्कराचार्योऽभिप्रैति ॥ "कुतस्सुखं। इन्द्रियाणां हि विषयसेवातो निवृत्तिर्या तत्सुखं न विषयविषया तृष्णा। दुःखमेव हि सा। न तृष्णायां सत्यां सुखस्य गन्धमात्रमुत्पद्यते इत्यर्थः" इति शङ्करभाष्यं ॥ भावनाभावे न तृष्णानिवृत्तिः। तृष्णा तु दुःखहेतुरिति शङ्कराचार्याशयः॥ तदर्थोपपादनावसरे वासिष्ठोक्तिरुदाहृता तदुत्कर्षदीपिकायां।

"यान्येतानि दुरन्तानि दुर्जराण्युन्नतानि च।
तृष्णावल्याः फलानीह तानि दुःखानि राघव॥
इच्छादयो यथा दुःखमिच्छाशान्तिर्यथा सुखं।
तथा न नरके नापि ब्रह्मलोकेऽनुभूयते॥
(यावती यावती जन्तोरिच्छोदेति यथा यथा।
तावती तावती दुःखबीजमुष्टिः प्ररोहति" ॥ इति)

आस्तां नाम सम्सारस्य कामबीजत्व। उक्तं ह्येतत्पुरस्ताद्ध्यायत इत्यादिनानर्थपरंपराकथनावसरे ॥ प्रकृते भावनायास्साक्षाज्जन्यत्वं तृष्णानिवृत्तेः कथमुपपद्यत इति चिन्त्यते॥ 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' इत्युक्तेस्तृष्णानिवृत्तिर्हि साक्षात्कारानन्तरभाविनी न तु भावनामात्रानन्तरभाविनी॥ श्रृङ्खलौचित्याय बुद्धिशब्दं परोक्षज्ञानपरं व्याख्याय शान्तिशब्दमपि तृष्णोपरमपरतया व्याख्याने ब्रह्मसाक्षात्कारबोधकं पदं दुर्लभमेव॥ इयमनुपपत्ती रामानुजाचार्यभाष्यस्यापि समाना॥ तस्माच्छान्तिशब्देन साक्षात्कारग्रहणे शब्दाप्राप्तत्वरूपानौचित्यात् उपरमार्थकत्वेऽप्युक्तानुपपत्तेर्बुद्धिशब्दोऽपरोक्षज्ञानपरः, शान्तिशब्दस्तु मोक्षवाचक इत्येव समंजसम्॥ सुखशब्देन मोक्षग्रहणं तु सुगमम्। तदा शान्तिर्भगवन्निष्ठबुद्धिता इति व्याख्यानं युक्तम्। बुद्धिशब्दस्तु अपरोक्षज्ञानपर एव। नान्यथा व्युत्पादनीयो भाति॥

'युक्तत्वं' 'भावना' 'शान्तिः' इति पदानि योगशास्त्रे पारिभाषिकार्थवत्तया बहुवारं प्रयुक्तानि ॥ चित्तस्य एकाग्रता निरोधश्च योगफलत्वेन प्रतिपाद्यते तत्र । योगविरोधिनश्चित्तविक्षेपाः अन्तराया उच्यन्ते । "व्याधि-स्त्यान-संशय-प्रमाद-आलस्य-अविरति-भ्रान्तिदर्शन-अलब्धभूमिकत्व-अनवस्थितत्वानि-चित्तविक्षेपास्तेऽन्तरायाः" इति पतञ्जलिसूत्रं ॥ अत्र स्त्यानं नाम कर्मानर्हता । प्रमादः समाधिसाधनानामभावनं, अविरतिः तृष्णा विषयसंप्रयोगात्मा, अलब्धभूमिकत्वं प्रागलब्धायां भूमौ चित्तस्याप्रतिष्ठिता ॥ एकतत्त्वाभ्यासेन चित्तविक्षेपानां जये भावना जायते इति तेषां प्रक्रिया ॥ प्रकृतश्लोकार्थश्चेममेव द्रढयति । युक्तत्वं चित्तैकाग्रता भावना निधिध्यासनमिति व्याख्यातत्वात् ॥ "यदा विनियतं चित्तमात्मन्येवाऽवतिष्ठते । निस्पृहस्सर्वकामेभ्यो युक्त इत्युच्यते तदा" इति गीतायामन्यत्रोक्तिश्चेममर्थं संवादयति ॥ अतश्च यदुक्तं नीलकन्ठेन "श्रवणमननयोरनासक्तिरयुक्तत्वं" इति तच्चिन्त्यम् ॥

**इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।**
**तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥६७॥**

त्रि ॥ अयुक्तस्य भावना नेत्ययुक्तं । कृतश्रवणमननस्य पुंसो ध्यानोपपत्तेरित्यत आह ॥ इन्द्रियाणामिति ॥ चक्षुरादीन्द्रियाणां स्वैरं विषयेषु चरतां गच्छतां अनु पृष्ठभावितया मनो विषयान्प्रति विधीयते ईश्वरेण क्रियते ॥ यत्तन्मनस इन्द्रियाणां पृष्ठभावितया ईश्वरेण करणं अस्य पुंसः प्रज्ञां परोक्षनिश्चयं हरति । उत्पत्स्यत्परोक्षज्ञानं निवारयति ।

उत्पन्नमपि ज्ञानं चित्तनिरोधहीनस्य न ध्यानोपर
सदपरोक्षज्ञानाय प्रभवतीत्यर्थः ॥ कथं अंभ।स वायुना
प्लवमिवेति ॥

शं ॥ अयुक्तस्य कस्माद्बुद्धिर्नास्तीति । उच्यते ॥ इन्द्रियाणामिति ॥ इन्द्रियाणां हि यस्माच्चरतां स्वविषयेषु प्रवर्तमानानां यत् मनः अनुविधीयते अनुप्रवर्तते। तत् इन्द्रियविषयविकल्पनेन प्रवृत्तं मनः, अस्य यतेः हरति प्रज्ञां आत्मानात्मविवेकजां नाशयति । कथं वायुः नावमिव । अंभसि उदके जिगमिषतां सांयात्रिकाणां मार्गादुद्धृत्य उन्मार्गे यथा वायुः नावं प्रवर्तयति, एवं आत्मविषयां प्रज्ञां हृत्वा मनो विषयविषयं करोति ॥(मनो विषयविषयां कल्पनां करोति इति पाठान्तरं) ॥

रा ॥ पुनरप्युक्तेन प्रकारेणेन्द्रियनियमनमकुर्वतोऽनर्थमाह ॥ इन्द्रियाणां विषयेषु चरतां वर्तमानानां वर्तनमनुनयन्मनो विधीयते पुरुषेणानुवर्त्यते । तन्मनोऽस्य विविक्तात्मप्रवणां प्रज्ञां हरति । विषयप्रवणां करोतीत्यर्थः । यथांऽभसि नीयमानां नावं प्रतिकूलो वायुः प्रसह्य हरति ॥

विचारः ॥

अत्र उत्थापकाकाङ्क्षा न दुर्घटा । युक्तत्वं चित्तनिरोध. ॥ अयुक्तत्वे 'नचायुक्तस्य भावने'त्युक्तं गीतायां ॥ श्रवणमननाभ्यां निदिध्यासनमिति

प्रसिद्धेः किं मध्ये युक्तत्वकल्पनयेत्याकांक्षायां । उच्यते । केवलं श्रवणमननाभ्यां चित्तनिरोधानुपकृताभ्यां निदिध्यासनं न संभवति, विषयेष्विन्द्रियसंचारे मनसस्तत्प्रवृत्तोऽनुगतौ च प्रज्ञाया हृतत्वादिति ॥ तथाच युक्तत्वभावनयोर्हेतुहेतुमद्भावोपपादनाय प्रवृत्तोऽयं श्लोकः ॥ एवं श्लोकयुगलस्य मिथस्संबन्धमेकवाक्यतां चाभिप्रेत्य श्रीमदाचार्य आह पूर्वश्लोकावतारिकायामेव "प्रसादाभावे दोषमाह उत्तराभ्यां श्लोकाभ्यां" इति ॥

(शङ्करभाष्योक्तोत्थापनमपि नास्मादतिभिद्यते। (अयुक्तस्य कस्माद् बुद्धिर्नास्ति' इति तत्रावतारिका ॥ बुद्धिरिति पाश्चात्यावस्थया युक्तत्वस्य संबन्धकथनापेक्षया अव्यवहितया भावनया संबन्धबोधनं लब्धिवति भाति ॥ युक्तत्वबुद्ध्योर्भावनाद्वारा संबन्धमभ्युपगच्छति शङ्करभाष्यटीकाकारः । तथाह्यानन्दगिरिव्याख्याने "विक्षिप्तचेतसो भावनाभावे साक्षात्कारलक्षणा बुद्धिर्न भवतीति हेत्वन्तरेण साधयति" इति तद्वाक्यं ॥ युक्तत्वभावनयोस्संबन्धज्ञापनं युक्तत्वबुद्ध्योरर्थात्संबन्धज्ञापने पर्यवस्यतीति नेह शङ्करभाष्यमति भिद्यत इत्युच्यते ॥

नीलकंठस्तु पूर्वश्लोकं बुद्धेः पर्यवस्थानाभावे दोषमाहेत्यवतार्य प्रकृतश्लोकमपि तथैव 'तदभावे दोषमाह' इत्यवतारयति ॥ एतत्प्रत्याख्यातं शं. भा. उ. दीपिकायां। "यत्तु तदभावे दोषमाहेति । तदयुक्तं। पूर्वश्लोकेऽपि दोषस्यैवोक्तत्वात्" इति ॥ यत्तु रामानुजाचार्यभाष्यं—"पुनरप्युक्तेन प्रकारेणेन्द्रियनियमनमकुर्वतोऽनर्थमाह" इति। तदपि चिन्त्यं । संभवन्त्यामुक्तरीत्याऽनन्तर्यसङ्गतौ पौनरुक्त्याभ्युपगमस्यानौचित्यात् ॥

विधीयते इत्यस्य क्रियत इत्यर्थः । धाञः पोषणार्थत्वेऽपि विपूर्वो दधातिः करोत्यर्थे वर्तते ॥ कर्मणि प्रयोगः। कर्ता ईश्वरः । "बुद्धिर्ज्ञानमसंमोहः" इत्याद्युक्त्वा "भवन्ति भावा भूतानां मत्त एव पृथग्विधाः"

इत्युक्तत्वादिन्द्रियाणामनु मनसश्चरणव्यापारस्यापीश्वराधीनत्वावगमात्. (श्री. नि)॥ पुरुषकर्तृकत्वाभिप्रायेण कर्मणि प्रयोग इति रामानुजाचार्याशयः॥ भगवत्कर्तृकत्वग्रहणेनाधिकतममास्तिकता स्फुट्यते। तत्त्वतो भगवतएव निरवधिकस्वातन्त्र्यात् ॥ 'कर्मकर्तरि लकारः। विधीयते प्रवर्ततइति यावत्' इत्यादाय नीलकण्ठमधुसूदनौ स्वव्याख्यानयोर्यत्तत्पदप्रकृतस्य मनसो वा इन्द्रियविशेषस्य वा कर्तृत्वमित्याहतुः॥ जडस्य मनसो वा इन्द्रियविशेषस्य वा प्रवर्तनकर्तृत्वं नीरसम्॥

ननु इन्द्रियाणां अनु इत्ययुक्तं। "अनुर्लक्षणे" इति सूत्रविहितस्य लक्षणार्थकस्यानोः "लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः" इति कर्मप्रवचनीयसंज्ञायां, "कर्मप्रवचनीययुक्ते द्वितीये"ति द्वितीयायां इन्द्रियाण्यनु इति स्यान्नतु इन्द्रियाणामन्विति इति चेन्न। अत्रानोः पृष्ठभावित्वार्थत्वात्। तथाच इन्द्रियाणामनु इन्द्रियाणां पृष्ठतो मनः ईश्वरेण विधीयते क्रियते इत्यर्थः॥ इन्द्रियाणामिति कर्मणि षष्ठीति नीलकण्ठस्समाधत्ते॥

प्रज्ञाशब्देन परोक्षज्ञानं विवक्षितं। अपरोक्षस्य हरणायोगात्॥ युक्तत्वाभावे श्रवणमननजातं परोक्षज्ञानं अभिभूतं भवति। उत्पत्स्यमान प्रतिरुद्धं भवति। भावना च नोदेतीति हरणप्रकारो ज्ञेयः॥ अयमर्थ उपपादितः श्रीनिवासतीर्थीये। "श्रवणेन ह्यज्ञाननिवृत्तौ सत्यां तत्त्वानिश्चयः। मननेन संशयविपर्ययनिवृत्तौ सत्यामयमेव वेदार्थ इति नियमे पश्चाद्ध्यानं भवति। यथोक्तं "तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्व्यप्रतिबन्धः फलं" इति, तथा "श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ। संशयं च पराणुद्य लभते ब्रह्मदर्शनं इति" चोक्तं॥ अतश्चित्तनिरोधरहितश्रवणं ध्यानोपयोगिनं तत्त्वानिश्चयं न करोति। तथा चित्तनिरोधरहितमननमपि न ध्यानोपयोगिनं वेदार्थनियमं करोतीति 'नचायुक्तस्य भावने'त्युक्तं युक्तमिति भावः" इति॥

वायुर्नावमिवाम्भसि इति दृष्टान्तः स्फुटार्थः । अम्भसि विषमस्थानादिकं वायुर्गमयतीति भावः ॥ दृष्टान्तभावः प्रकाशितः स्फुटभाषयैवं शङ्करानन्देन ॥ यथोचितं उदाह्रियते । "नद्याः परं पारं गच्छन्तीं नावं प्रतिकूलो वायुर्गृहीत्वा महावर्ते तां पातयति । जलेनापूर्य वा मज्जयति । महापाषाणेनाभिहत्य भञ्जयति पुनरपारं वा विषमस्थानं वा गमयति । सर्वथाऽनर्थवतीमेव करोति ॥ तथा विदुषः प्रज्ञां पातयित्वा वायुर्नावमिव ध्वंसयति" इति ॥ अम्भसीत्युक्तेः स्वारस्यं प्रदर्शयति मधुसूदनः । "अम्भस्येव वायोर्नौकाहरणसामर्थ्यं न भुवीति सूचयितुमम्भसीत्युक्तं ॥ एवं दार्ष्टान्तिकेऽप्यम्भःस्थानीये मनश्चांचल्ये सत्येव प्रज्ञाहरणसामर्थ्यमिन्द्रियाणां न तु भूस्थानीये मनस्थैर्येइति सूचयितुं" इति ॥

अथ यत् मधुसूदनश्रीधरवेङ्कटनाथैर्यत्तत्पदबोध्यमिहेन्द्रियमिति व्याख्यातं तद्विचार्यते । "यत् एकमपि इन्द्रियं अनु लक्षीकृत्य मनो अनुविधीयते प्रेर्यते प्रवर्तते इति यावत् । कर्मकर्तरि लकारः ॥ तत् इन्द्रियं एकमपि मनसाऽनुसृतं, अस्य साधकस्य मनसो वा प्रज्ञां आत्मविषयां शास्त्रीयां हरति अपनयति । मनसस्तद्विषयाविष्टत्वात् ॥ यदैकमपीन्द्रियं प्रज्ञां हरति तदा सर्वाणि हरन्तीति किमु वक्तव्यमित्यर्थः" इति मधुसूदनीये ॥

इममेव पन्थानमाश्रयते श्रीधरस्तथा वेङ्कटनाथश्च ॥ यत्तत्पदाभ्यां इन्द्रियविशेषग्रहणेऽस्य वा हरणस्य कर्ता इन्द्रियमित्युक्तेर्वा, अस्येति प्रज्ञास्वामित्वेन मनसो ग्रहणस्य वा बीजं न ज्ञायते ॥ यद्यपि मनुनोक्तम् "इन्द्रियाणां तु सर्वेषां यद्येकं क्षरतीन्द्रियं । तेनास्य क्षरति प्रज्ञा दृतेः पादादिवोदकं" इति ॥ (II 99) एतदनुरोधेन स्यान्मधुसूदनादिव्याख्यानं ॥ मनुवचनं तु न गीताक्षरसमानाकारं येनार्थैक्यनिर्बन्ध ऊह्यस्स्यात् ॥ तत्र इन्द्रियस्य प्रज्ञा-

क्षारकत्वं स्फुटमुक्तं । मनस्तु नोक्तमेव । इन्द्रियशब्दोऽभ्यस्तश्च । 'एकं' इति कण्ठत उक्तंच ॥ तस्मान्मनुवचनप्रतिपादितोऽर्थोऽन्यो दृश्यते ॥ यत्तच्छब्दयोर्मनोविषयत्वमेवोचितमित्युक्त्वोपपादयति देशिकः ॥ "प्रज्ञाहरणे तस्यैव मनस एव प्रधानत्वात् बाह्येन्द्रियानुविधाने सर्वेन्द्रियसाधारण्येन वक्तव्ये यदिति निर्धारणस्य प्रयोजनाभावात् । बाह्येन्द्रियस्य मनोऽनुविधाने प्रज्ञाहरणाभावाच्च" इति ॥ इदं च वक्तव्यमस्ति । इन्द्रियाणां चरतां इत्यस्यानन्तरं "मध्ये" इत्यध्याहारः कृतो दोषायेति ॥

मधुसूदनीयं वाक्यं पठित्वा निराह शं. भा. उ. दीपिकाकारश्च ॥ उक्तं हि—"तदयुक्तम् । नास्ति बुद्धिरयुक्तस्येत्यनुरोधेन इन्द्रियानुमतमनस एव बुद्धिहरणकर्तृत्वस्य विवक्षितत्वात् श्रुतं मनःपदं त्यक्त्वाऽश्रुतस्यैकेन्द्रियस्य यत्तत्पदेनोपादनानौचित्यात् ॥ मनस इत्यपि न । साधकस्यैव प्रसक्तत्वात्" इति ॥ मधुसूदनीयं प्रत्याख्यातुममना अपि नीलकण्ठो मधुसूदनस्य शङ्करभाष्यविरोधं दर्शयति ॥ तथाच शङ्कराचार्यरामानुजाचार्यनीलकण्ठाः तथाऽनन्दगिर्युत्कर्षदीपिकारौच यत्तत्पदे मनःपरत्वेन, अस्येतिपदं साधकपरतया च व्याकुर्वन्ति ॥ एतन्नास्माकमनिष्टं ॥ मनुवचनकिञ्चित्साम्येन यदिन्द्रियपरतया व्याख्यातं तदयुक्तम् ॥ विवृत्याचार्यस्तु यत्तच्छब्दाभ्यामनुविधीयते इत्यनेनोक्तां क्रियां गृह्णाति ॥ इन्द्रियाणां अनु मनो विषयान् प्रति विधीयते ईश्वरेण क्रियत इति यत्करणं (इन्द्रियाणां पृष्ठभावितया ईश्वरेण मनसः करणं) अस्य पुंसः प्रज्ञां हरति इति हि विवृतौ योजना ॥ इयं निरवद्या ॥

**तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ६८**

वि० ॥ प्रजहातीत्यादिनोक्तज्ञानिलक्षणस्यासंभवानिरासाय ज्ञानस्य महाप्रयत्नसाध्येन्द्रियनिग्रहसाध्यत्वं ' विषया निवर्तन्ते ' इत्यादिना यदुक्तं तदुपसंहरति ॥ तस्मादिति ॥ यस्मादेवं निगृहीतेन्द्रियस्यैवोक्तरूपः प्रसादः, प्रसादवत एव चित्तनिरोधरूपा युक्तिः, युक्तिमतएव श्रवणमनने, ताभ्यां तत्त्वनिश्चयः, तत्त्वनिश्चयवत एवापरोक्षसाधनं ध्यानं ॥ तस्मात् हे महाबाहो सर्वशः इन्द्रियाणि सर्वाण्यपीन्द्रियाणि इन्द्रियार्थेभ्यः रूपादिसर्वेन्द्रियविषयेभ्यो यस्य निगृहीतानि तस्य प्रज्ञा प्रतिष्ठिता ॥ प्रसादयुक्तिश्रवणमननतत्त्वनिश्चयध्यानप्रणाड्या अपरोक्षधीः प्रतिष्ठिता प्रकर्षेण जायते इति ॥

शं०॥ यततो ह्यपीत्युपन्यस्तस्यार्थस्यानेकधोपपत्तिमुक्त्वा तंचार्थमुपपाद्योपसंहरति ॥ तस्मादिति । इन्द्रियाणां प्रवृत्तौ दोष उपपादितो यस्मात्तस्माद्यस्य यतेः हे महाबाहो निगृहीतानि सर्वप्रकारैर्मानसादिभेदैरिन्द्रियाणि इन्द्रियार्थेभ्यः शब्दादिभ्यः तस्य प्रज्ञा प्रतिष्ठिता ॥

रा ॥ तस्मादुक्तेन प्रकारेण शुभाश्रये मयि निविष्टमनसो यस्येन्द्रियाणि इन्द्रियार्थेभ्यस्सर्वशो निगृहीतानि तस्यैवात्मनि प्रज्ञा प्रतिष्ठिता भवति ॥

विचारः ॥

उपसंहारश्लोकोऽयं । यथा प्रकरणस्योपक्रमः तथोपसंहार उन्नीयते ॥ एतदानुगुण्येन 'तस्मात्' इति हेतुवचनं उपपाद्यते ॥ (श्रीमदाचार्यव्याख्याने तावत् विषया विनिवर्तन्ते इत्यारभ्य स्थितप्रज्ञलक्षणस्य प्रजहातीति श्लोकचतुष्टयेनोक्तस्यासम्भवपरिहार एतावत्पर्यन्तं कृत इति गम्यते ॥ यदि ज्ञानं कामप्रहाण्यादिजनकं तर्हि सर्वोऽपि जनः कस्मान्न तत्साधयति, कामाद्युपद्रवपरिहाराय दन्दह्यमानाशिराः वंभ्रमीति । अतो नास्त्येवेदं ज्ञानिषु लक्षणमित्यसम्भवः प्रसक्तः । तस्यैव परिहारः कृतः ॥ असम्भवपरिहारार्थत्वेन विषया इत्यारभ्य तस्माद्यस्येति श्लोकावधि प्रमेयैक्यपरत्वेनैकवाक्यता ज्ञेया ॥ तत्रापि इन्द्रियजयदौर्घट्यं प्रसाध्य युक्तत्वे सति मत्परत्वं तस्य परं साधनं इत्यसम्भवपरिहारप्रकरणं विभज्योपपादनं कृतम् ॥ रागद्वेषवियोगस्योपायं प्रदर्शयन् तयोर्बीजं ताभ्यां जायमानमनर्थं चोपोद्घातत्वेन प्रतिपादयामास भगवान् ध्यायत इति श्लोकद्वयेन ॥ तदनन्तरं रागद्वेषैरित्यारभ्याद्यावधि जितेन्द्रियस्य प्रसाद-चित्तनिरोध-भावना-बुद्ध्यपरपर्यायापरोक्षज्ञान-मोक्ष-सर्वदुःखहानि-सुखप्राप्तिरूपोच्छ्रयसोपानानि प्रदर्श्य तस्मादित्यद्योपसंह्रियते ॥ अतो विषया विनिवर्तन्ते इत्यारब्धप्रकरणगतोपपत्तीनां तस्मादित्यनेन परामर्शोऽभिप्रेत इत्याचार्याशयः )॥ एतेन एतावत्पर्यंत स्थितप्रज्ञस्य काभाषेति स्थितप्रज्ञलक्षणप्रश्नमात्रस्योत्तरं सोपपत्तिकं प्रासङ्गिकाकाङ्क्षापरिहारपूर्वकं दत्तं इति गम्यते ॥

(अन्येतु तस्मादिति पदमन्यथा व्याचक्षते ॥ अव्यवहितेन पूर्वपद्येन योगमेव दर्शयति शङ्करभाष्यटीकाकारः (आनं) । 'असमाहितेन मनसा यस्मादनुविधीयमानानि इन्द्रियाणि प्रसह्य प्रज्ञामपहरन्ति तस्मात्' इति ॥ प्रायशोऽन्यव्याख्यातारो हि प्रजहातीतिपद्यमात्रं स्थितप्रज्ञलक्षणप्रतिपादकं मत्वेतराणि पद्यानि व्युत्थितस्य स्थितधियो भाषणोपवेशनगमनपराणीति

व्याख्यातवन्तो दृश्यन्ते ॥ युक्त आसीतेति श्लोकमुपवेशनप्रतिपादकत्वेन, रागद्वेषेति श्लोकं किं व्रजेतेत्यस्य समाधानपरतया व्याकुर्वन्तो विषया विनिवर्तन्ते इत्यारभ्य प्रकरणैक्यं वैकवाक्यतां वा कथं वदेयुः ? ॥ अतः तस्मादिति पदमतिसमीपमुक्तेन प्रमेयेण ते योजयन्ति ॥ उपक्रान्तायाः प्रक्रियायाः बहुश्लोकवर्णितायाः स्थितप्रज्ञलक्षणविषयायाः उपसम्हारस्तस्मादित्यनेनेत्याचार्यस्तु मन्यते ॥

यस्यतस्येतिपदाभ्यां विवक्षितो यतिरिति शङ्कराचार्यः ॥ गृहस्थस्य बहिर्भावे गमकं चिन्त्यम् ॥

एताभ्यां पदाभ्यां साधकस्य सिद्धस्य च ग्रहणमुचितं इति मधुसूदनीये यदुक्तं तत्साधूक्तं ॥ "तद्धे जिज्ञासुभिस्साध्यं ज्ञानिनां यत्तु लक्षणं" इति प्रमाणानुसारेण साधकसिद्धयोरुभयोरपि प्रसक्तत्वात् ॥ सर्वश इन्द्रियाणीत्युक्त्या समनस्कानामिन्द्रियाणां ग्रहणं विवक्षितमिति मधुसूदननीलकण्ठौ॥ सर्वशः सर्वाणि इति व्याख्यानं निर्दुष्टं ॥ अनया तु कात्स्र्न्यविवक्षया "इन्द्रियाणां तु सर्वेषां यद्येकं क्षरतीन्द्रियं । तेनास्य क्षरति प्रज्ञा दृतेः पादादिवोदकं" इति मनुप्रदर्शितः एकस्यापीन्द्रियस्यावज्ञायां योऽयमनर्थः सोऽभिप्रेतस्स्यात् ॥ सर्वशः सर्वप्रकारेण इत्यपि सुगमं ॥ युक्तत्वे सति मत्परत्वेन रागद्वेषपरिहारेण च इति परसाधनापरसाधनयोर्विवक्षा संभवति ॥

महाबाहो इति संबोधनस्य तात्पर्यमाह मधुसूदनः । "महाबाहो इति संबोधयन् सर्वशत्रुनिवारणक्षमत्वादिन्द्रियशत्रुनिवारणेऽपि त्वं क्षमोऽसि इति सूचयति" इति ॥ (महाबाहुभ्यां शत्रून् विजित्य यथा राज्यस्य प्रतिष्ठितत्वं शूरैस्संपाद्यते । एवं विवेकिभिरिन्द्रियशत्रूञ्जित्वा प्रज्ञाप्रतिष्ठितत्वं इति सूचयति इत्युत्कर्षदीपिकायाम् ॥

**या निशा सर्वभूतानां तस्यां जागर्ति संयमी।**
**यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः॥६९**

वि॥ स्थितप्रज्ञस्य काभाषेति पृष्टं ज्ञानिलक्षणं प्रजहातीत्यादिश्लोकचतुष्टयेनोक्त्वा, तस्यासंभवं च विषया इत्यादिश्लोकनवकेनोक्त्वा तस्मादित्यनेन तदुपसंहृत्येदानीं स्थितधीः किंप्रभाषेतेत्युत्तरार्धे भाषणादिप्रवृत्तिं परमानंदतृप्तः किमर्थं करोतीति कृतज्ञानिप्रवृत्त्याद्याक्षेपस्योत्तरमाह॥ या निशेति॥ यद्वा प्रजहातीत्यादिश्लोकचतुष्टये विक्षिप्योक्तं ज्ञानिलक्षणं पिण्डीकृत्याह॥ या निशेति॥ या भूतानां प्राणिनां निशेव निशा परमेश्वरस्वरूपलक्षणा। यत्परमेश्वरस्वरूपं प्राणिनां निशास्थानीयमिति यावत्। निशायां सुप्तानीव नकिंचिद्भगवत्स्वरूप जानन्तीति भावः॥ तस्यां भगवत्स्वरूपलक्षणायां प्राणिनिशायां संयमी इन्द्रियसंयमयुक्तो ज्ञानी जागर्ति भगवत्स्वरूपं सम्यगापरोक्ष्येण पश्यति॥ यस्यां विषयलक्षणायां भूतानि जाग्रति स्वरूपादिविषयेष्वासक्त्याऽनुभववन्तो वर्तन्ते प्राणिनः सा निशा मुनेः मननवतः॥ अत एव पश्यतोऽपरोक्षिणः सा निशेव निशा। नकिंचिज्जानातीत्यर्थः॥ तथात्वे भाषणभिक्षाटनादिप्रवृत्त्यनुपपत्तिरिति चेत्, प्रारब्धकर्मणैषत्तिरोहितब्रह्मस्वरूपस्य वासनया प्रायोऽल्पाभिसंधिपूर्वकं प्रवृत्तीनां मत्तस्येवोपपत्तेरिति भावः॥

एतेन नित्यं भगवदेकचित्ततया तदितरत्वाभिसन्धिहीनत्वं ज्ञानिलक्षणमित्युक्तं भवति ॥ एतच्च देवेतरज्ञानिलक्षणं बोध्यं ॥ अन्यथा सर्वप्रेरकाणां देवानामपि ज्ञानित्वात्तेषां भगवदितरत्वाभिसन्ध्यभावे लोकयात्रोच्छेदापत्तेः॥ शब्दक्रमा-दर्थक्रमस्य बलवत्त्वान्मुनेः पश्यतइति व्यत्यासेन मुनेर्मन-नवतः पश्यतइति पौर्वापर्येण योजना ॥ ततश्च तयोर्हेतु-हेतुमद्भावलाभः । स च मननादेः प्राक् दर्शनसाधनत्वस्य स्पष्टमनुक्तेरिह प्रसङ्गादुक्तइति ॥

शं ॥ योऽयं लौकिको वैदिकश्च व्यवहारः स उत्पन्नविवेक-ज्ञानस्य स्थितप्रज्ञस्य अविद्याकार्यत्वात् अविद्यानिवृत्तौ निवर्तते अविद्यायाश्च विद्याविरोधान्निवृत्तिः इत्येतमर्थं स्फुटीकुर्वन्नाह ॥ या निशा इति ॥ या निशा रात्रिः सर्वपदार्थानां अविवेककरी तमस्स्वभावत्वात् सर्वभूतानां सर्वेषां भूतानां ॥ किं तत् । परमार्थतत्त्वं स्थितप्रज्ञस्य विषयः । यथा नक्तंचराणां अहरेव सत् अन्येषां निशा भवति तद्वत् नक्तंचरस्थानीयानां अज्ञानिनां सर्वभूतानां निशा इव निशा परमार्थतत्त्वं । अगोचरत्वात् अतद्बु-द्धीनां ॥ तस्यां परमार्थतत्त्वलक्षणायां अज्ञाननिद्रायां प्रबुद्धो जागर्ति सम्यमी सम्यमवान् जितेन्द्रियो योगीत्यर्थः॥ यस्यां ग्राह्यग्राहकलक्षणायां अविद्यानिशायां प्रसुप्तान्येव भूतानि जाग्रति इत्युच्यंते। यस्यां निशायां प्रसुप्ताइव स्वप्न-

दृशः सा निशा अविद्यारूपत्वात् परमार्थतत्त्वं पश्यतः मुनेः इति ॥ अतः कर्माणि अविद्यावस्थायामेव चोद्यन्ते न विद्यावस्थायां ॥ विद्यायां हि सत्यां उदिते सवितरि शार्वरमिव तमः प्रणाशमुपगच्छत्यविद्या ॥ प्राक् विद्योत्पत्तेरविद्या प्रमाणबुद्ध्या गृह्यमाणा क्रियाकारकफलभेदरूपा च सती सर्वकर्महेतुत्वं प्रतिपद्यते। नाप्रमाणबुद्ध्या गृह्यमाणायाः कर्महेतुत्वोपपत्तिः ॥ 'प्रमाणभूतेन वेदेन मम चोदितं कर्तव्यं कर्म' इति हि कर्मणि कर्ता प्रवर्तते 'नाविद्यामात्रमिदं सर्वं निशेव' इति ॥ यस्य तु पुनः, निशेवाविद्यामात्रमिदं सर्वं भेदजातं इति ज्ञानं तस्यात्मज्ञस्य सर्वकर्मसंन्यास एवाधिकारो न प्रवृत्तौ। तथा दर्शयिष्यति "तद्बुद्धयस्तदात्मानः" इत्यादिना ज्ञाननिष्ठायामेव तस्याधिकारं ॥ तत्रापि प्रवर्तकप्रमाणाभावे प्रवृत्तेरनुपपत्तिरिति चेन्न। स्वात्मविषयत्वादात्मविज्ञानस्य ॥ नह्यात्मनः स्वात्मनि प्रवर्तकप्रमाणापेक्षा। आत्मत्वादेव ॥ तदन्तत्वाच्च सर्वप्रमाणानां प्रमाणत्वस्य ॥ नह्यात्मस्वरूपाधिगमे सति पुनः प्रमाणप्रमेयव्यवहारः संभवति ॥ प्रमातृत्वं ह्यात्मनो निवर्तयति अन्त्यं प्रमाणं निवर्तयदेव चाप्रमाणीभवति स्वप्नकालप्रमाणमिव प्रबोधे ॥ लोके च वस्त्वधिगमे प्रवृत्तिहेतुत्वादर्शनात् प्रमाणस्य ॥ तस्मान्नात्मविदः कर्मण्यधिकारइति सिद्धं ॥

रा ॥ एवं नियतेन्द्रियस्य प्रसन्नमनसः सिद्धिमाह ॥ या आत्मविषया बुद्धिः सर्वभूतानां निशा निशेवाप्रकाशा तस्यामात्मविषयायां बुद्धौ संयमी प्रसन्नमनाः जागर्ति ॥ आत्मानमवलोकयन्नास्तइत्यर्थः । यस्यां शब्दादिविषयायां बुद्धौ सर्वाणि भूतानि जाग्रति प्रबुद्धानि भवंति । सा शब्दादिविषया बुद्धिरात्मानं पश्यतो मुनेर्निशेवाप्रकाशा भवति ॥

विचारः

स्थितप्रज्ञलक्षणं प्रजहातीति श्लोकचतुष्टयोक्तं पिण्डीकृत्येहोच्यते ॥ विक्षिप्तसंग्रहः प्राधान्येन विवक्षितः ॥ तथाचानेन श्लोकेन नित्यम्भगवदेकचित्ततया तदितरत्राभिसन्धिहीनत्वं ज्ञानिलक्षणमित्युक्तं भवति ॥ लक्षणपरादपि श्लोकात् 'कि प्रभाषेत किमासीत व्रजेत किं' इति ज्ञानिनो गमनादिप्रवृत्तेः प्रयोजनं यत्पृष्टं तस्याप्युत्तरं लब्धं भवति । अत एव प्रजहातीति श्लोकस्यावतारिकायां भाष्यकार आह "गमनादिप्रवृत्तिर्नात्यभिसन्धिपूर्विका मत्तादिप्रवृत्तिवदिति यानिशेत्यादिना दर्शयिष्यन्" इति ॥ प्रकृतश्लोकस्यावतारिकातु "उक्तं लक्षणं पिण्डीकृत्याह" इति ॥ एवं प्रयोजनद्वयस्य साक्षादर्थाच्च लाभो ज्ञेयः ॥

रामानुजाचार्याशयाधिगमाय यत्तेन प्रजहातीति चतुःश्लोकी वशीकारसंज्ञा एकेन्द्रियसंज्ञा व्यतिरेकसंज्ञा यतमानसंज्ञेत्यवस्थाचतुष्टयपरतया व्याख्याता, तदिह स्मर्तव्यं ॥ प्रागवस्थाचतुष्टयमुक्त्वा तस्य सिद्धिर्यानिशेत्यादिना निगम्यते, उपायोपदेशानन्तरं फलोपदेशस्योचितत्वादिति तस्याभिप्रायः॥ ननूक्तं हि प्रसादे सर्वदुःखानां हानिरित्यादिना फलमपीत्याकांक्षायां "उक्तस्यैव फलस्य प्रशंसापरत्वात् पुनरुक्तिः" इति देशिकस्समाधत्ते ॥

"यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च नविचेष्टेत तामाहुः परमां गतिं" इति श्रुताविन्द्रियमनोबुद्धीनां निग्रहे परमपदप्राप्ते-रुक्तत्वेन तदनिग्रहे ध्यायतो विषयानित्यादिभिरनर्थ प्रदर्श्याद्य यानिशेत्यनेन श्रुतिगतं "तामाहुः परमां गतिं" इत्येतं चतुर्थ पादं व्याचष्टे इति नील-कण्ठः ॥ ऐतेन इन्द्रियसंयमस्य फलमाह भगवानित्युक्तं भवति ॥ रामानुजा-चार्यभाष्यान्नेदमतिभिद्यते ॥

इह तावच्छ्लोके ज्ञानिलक्षणज्ञानिव्यापारदर्शनेनाज्ञानिनस्सकाशात्तस्य विशेषः प्रतिपादितोऽवगम्यते । पाताञ्जलयोगोक्ताः पूर्वावस्थाः विवक्षित्वा एतासां इदं फलमितीह निगमनं कृतमित्यत्र श्लोकाक्षरेषु गमकं चिन्त्यमेव ॥

"ननु कश्चिदपि प्रसुप्त इव दर्शनादिव्यापारशून्यस्सर्वात्मना नि-गृहीतेन्द्रियो लोके न दृश्यते । अतोऽसम्भावितमिदं लक्षणं इत्याशङ्क्याह" इति श्रीधरस्यावतारिका ॥ "स्थितप्रज्ञस्य समाधिव्युत्थानावस्थयोर्लक्षणं सपरिकरमुक्तम् । इदानीमवस्थाद्वयानुगतं स्थितप्रज्ञलक्षणमाह" इति वेङ्कट-नाथः ॥ असम्भवस्योत्थानं तत्परिहारश्च न सुगमः ॥ यदुक्तं अनुगतं लक्षण-मिहोक्तं इति । तदपि न । प्रजहातीत्यत्र प्रायः सर्वविरुद्धकामादित्यागवत्त्वे सति भगवदेकचित्ततया सन्तुष्टत्वं इत्युक्तस्य ज्ञानिलक्षणस्यानुगतलक्ष-णत्वात् ॥

ज्ञानिनः सर्वकर्मत्याग एवाधिकारः इति प्रतिपादयत्ययं श्लोक इति शङ्करभाष्यम् ॥ इदं शाङ्करमाकूतं तत्र तत्र खण्डितम् ॥ (पश्यत गीतातात्पर्योपोद्धातम्) ॥ "ज्ञानीतु कर्माणि सदोदितानि कुर्यात्" "पश्यन्नपीममात्मानं कुर्यात्कर्माविचारयन्" इत्यादिप्रमाणविरोधः स्फुटः ॥

ज्ञानिनो गमनादिप्रवृत्तिस्तु नात्यभिसन्धिपूर्विका मत्तादिप्रवृत्तिवत् । तदुक्तम्—

"देहं तु तन्न चरमं स्थितमुत्थितं वा
सिद्धोऽभिपश्यति यतोऽध्यगमत्स्वरूपम् ।
दैवादुपेतमथ दैववशादपेतम्
वासो यथा परिकृतं मदिरामदान्धः इति ॥ भा. (III-29-36)

ऽपि दैववशगः खलु कर्म यावत्
स्वारम्भकं प्रतिसमीक्षित एव सासुः ।
तं सप्रपञ्चमधिरूढसमाधियोगः
स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तुः ॥ इति भा. (III-29 37)

इह विवक्षिताः लोकव्यापारमकुर्वाणाः ज्ञानिनो देवभिन्ना इति ज्ञेयं ॥ अन्यथा लोकयात्रोच्छेदापत्तेः ॥ तथाह्युक्तम् "देवेभ्योऽन्ये यदा ब्रह्म पश्यन्त्यन्यन्न दृश्यते। निशायामिव सुव्यक्तं यथाऽन्यैर्ब्रह्म नेक्ष्यते॥ आश्चर्यवस्तुदृग्यद्वद्व्यक्तमन्यन्न पश्यति । ऐकाग्र्याद्वा सुखोद्रेकाद्देवास्सूर्यवदेव च ॥ प्रायशस्सर्ववेत्तारस्तत्रापि ह्युत्तरोत्तरं" इति ब्रह्मतर्के ॥ अतः संयमीति देवभिन्नः स्थितप्रज्ञ उक्तः ॥ "त्रयमेकत्र संयमः" इति धारणाध्यानसमाधीनां समुच्चितानां संयमत्वेन पातंजलपरिभाषा नात्र विवक्षिता भाति ॥ (सम्यमी इति संन्यासी विवक्षित इति शाङ्कराः ॥ आविद्यकप्रपञ्चव्यवहारशून्यत्वेसति परब्रह्मदृक्त्वं स्थितप्रज्ञलक्षणं इति परिष्कृत्य याज्ञवल्क्यादिषु संन्यासावस्थातः पूर्वमविश्रान्तचित्ततया स्थितप्रज्ञतानापन्नेषु केवलज्ञान्यवस्थेष्वतिव्याप्तिमाशङ्क्य परिहाराय सत्यन्तविशेषणं इति वेङ्कटनाथः ॥ याज्ञवल्क्यादीनां ज्ञानावस्थायामपि मलिनवासनानुवृत्तेर्नातिव्याप्तिरिति तस्याशयः ॥ अत्रोच्यते । ज्ञानी खलु याज्ञवल्क्यः । कुतोऽयं न स्थितप्रज्ञः ॥

तस्यालक्ष्यत्वं भ्रान्त्वा कुतोऽयमतिव्याप्तिपरिहारश्रमः ॥ "तथैव याज्ञवल्क्याद्या मुच्यन्ते स्त्रीसहायिनः" इति प्रमाणादवगम्यते ॥ स्थितप्रज्ञत्वगार्हस्थ्ययोर्नाहिमूषिकवत्परस्परपरिहारेणैव विद्यमानत्वं इति ॥

यानिशेत्यत्र निशास्थानीयं परब्रह्मेति प्रायशस्सर्वे प्रतिपन्नाः ॥ ननु सर्वभूतनिष्ठाज्ञानं प्रति ईश्वरस्वरूपस्य विषयत्वेन, निशाकालस्य तु सुप्तभूताज्ञानं प्रति अधिकरणत्वेन वैलक्षण्यात्कथं साम्यमिति शङ्काऽत्र समाधेया ॥ अत्राह कश्चित् । "लोके हि निशायां निद्राणो न निशां पश्यति । तथा ब्रह्मलक्षणनिशायामज्ञाननिद्रापरवशानि सर्वभूतानि न ब्रह्मतत्त्वं पश्यन्ति" इति (वेङ्कटनाथः) ॥ अपर आह "सर्वव्यापकत्वेन दृष्टेः प्रवेष्टुमशक्यत्वेन सर्वपदार्थानां स्वमात्रत्वापादनेन भूतानां मनुष्यादीनां व्यवहर्तुमशक्या भवति । तथा सेयं परदेवता सर्वव्यापकत्वादिधर्मैस्सर्वभूतानां व्यवहर्तुमशक्यत्वान्निशेत्युच्यते" इति (शं. आ.) ॥ आद्ये समाधाने निशाब्रह्मणोरधिकरणत्वसाम्यादुपमानोपमेयभाव उक्तो ज्ञायते ॥ निशायां स्थितस्सन्निद्राति अज्ञानी । ज्ञानीतु निद्राविधुरो जागर्तीति विशेषस्सूचितः॥ अत्र यथा निशा जाग्रत्सुप्तयोरुभयोरधिकरणं तथा ब्रह्मतत्त्वमुभयोरप्यधिकरणं इत्यधिकरणत्वविवक्षायां ज्ञान्यज्ञानिनोर्वैषम्यं न प्रतिपद्यते ॥ निशायाः कर्मतायां च निशाकालस्य साक्षिवेद्यत्वेन सुप्तस्तं न पश्यति व्युत्थितस्तु पश्यतीति वैलक्षण्यं नोपपद्यते ॥ द्वितीये समाधाने यथा निशा व्यवहर्तुमशक्या तथा ब्रह्म व्यवहर्तुमशक्यमित्युक्त भाति ॥ किमिदं ब्रह्मणो व्यवहारायोग्यत्वं ॥ काचिद्दुर्बोधाद्वैतपरिभाषा स्मर्तव्या ॥ क्लेशस्तु स्फुटः ॥

"विषयत्वमधिकरणत्वमविवक्षित्वा कारकत्वमात्रविवक्षया साम्यमिदमुक्तं" इत्याचार्याशयः । (प्र. दी.) । कर्मण्यधिकरणेचानुगतं यत्कारकत्वं तन्मात्रविवक्षयेत्यर्थः ॥ निशाब्रह्मणोस्साम्येऽधिकरणत्वविषयत्वरूपवैलक्षण्यानुपपत्तिभियेव निशाशब्देन ब्रह्मविद्या गृह्यते इति मधुसूदनो

व्याचष्टे ॥ "या वेदान्तवाक्यजनितसाक्षात्काररूपाहंब्रह्मास्मीति प्रज्ञा, सर्वभूतानामज्ञानां निशा, तस्यां ब्रह्मविद्यालक्षणायां जागर्ति सावधानो वर्तते संयमी स्थितप्रज्ञः ॥ यस्यां द्वैतदर्शनलक्षणायां अविद्यानिद्रायां प्रसुप्तान्येव भूतानि जाग्रति सम्यग्व्यवहरन्ति" इति तस्य व्याख्यानं ॥ यथा काकस्य रात्र्यन्धस्य दिनमुलूकस्य दिवान्धस्य निशा, रात्रौ पश्यतश्चोलूकस्य यद्दिनं रात्रिरेव सा काकस्येति ज्ञान्यज्ञान्यहोरात्री उपपादिते (म. सू.) ॥

आपूर्यमाणमचलप्रतिष्ठं समुद्र-
मापः प्रविशन्ति यद्वत् ।
तद्वत्कामा यं प्रविशन्ति सर्वे स
शान्तिमाप्नोति न कामकामी ॥ ७० ॥

वि ॥ ननु ज्ञानिनो बाह्यानुसन्धानहीनस्य मत्तस्येव युज्येतापि कथंचिद्गमनादिकं ॥ विषयानुभवस्तु दृश्यमानः कथं स्यात् । तस्य नियतसाधनसाध्यस्यानुसन्धानेन विनानुदयात् इत्यतो ज्ञानिना क्रियमाणविषयानुभवप्रकारमाह ॥ आपूर्यमाणमिति ॥ नानानदीजलैरापूर्यमाणमपि अचलप्रतिष्ठं सरित्प्रवेशाद्वृद्धिविशेषहीनतया स्वभावत एव स्थितं । सरितामप्रवेशनिमित्तशोषहीनं च । सरित्प्रवेशार्थं यत्नहीनं चेत्यपि ध्येयं ॥ समुद्रमापो यद्वत् यथा प्रवि-

शन्ति तद्वत् तथा यं ज्ञानिनं विषयैरापूर्यमाणत्वे वा उत्से-
कानुत्सेकहीनं कामाः विषयाः प्रविशान्ति। स ज्ञानी शान्तिं मोक्षं आप्नोति। न तु कामकामी कुत्सितविषयेच्छावान् शान्तिमाप्नोतीत्यर्थः॥ यद्वा विषयभोक्ता कामी कथमुच्यत इत्यतउक्तं। नेति॥ एवं विषयाननुभवन्स ज्ञानी न कामकामी॥

शं॥ विदुषस्त्यक्तेषणस्य स्थितप्रज्ञस्य यतेरेव मोक्षप्राप्तिर्नत्वसंन्यासिनः कामकामिनः इत्येतमर्थं दृष्टान्तेन प्रतिपादयिष्यन्नाह। आपूर्येति॥ आपूर्यमाणं अद्भिः अचलप्रतिष्ठं अचलतया प्रतिष्ठा अवस्थितिः यस्य तं अचलप्रतिष्ठं। समुद्रं आपः सर्वतोगताः प्रविशान्ति, स्वात्मस्थं अविक्रियमेव सन्तं यद्वत्, तद्वत् कामाः विषयसन्निधावपि सर्वतः इच्छाविशेषाः यं मुनिं समुद्रमिवापः अविकुर्वन्तः प्रविशान्ति सर्वे आत्मन्येव प्रलीयन्ते नस्वात्मवशं कुर्वंति। सः शान्तिं मोक्षं आप्नोति नेतरः कामकामी। काम्यन्तइति कामाः विषयाः तान् कामयितुं शीलं यस्येति स कामकामी नप्राप्नोतीत्यर्थः॥

रा॥ यथा स्वेनैवापूर्यमाणमेकरूपं समुद्रं नादेय्य आपः प्रविशान्ति। आसामपां प्रवेशेऽप्यप्रवेशे च समुद्रो न कंचन विशेषमापद्यते। एवं सर्वे कामाः शब्दादयो विषयाः यं संयमिनं प्रविशान्ति इन्द्रियगोचरतां यान्ति, स शान्ति-

माप्नोति । शब्दादिष्विन्द्रियगोचरतामापन्नेष्वनापन्नेषु च स्वात्मावलोकनतृप्त्यैव यो न विकारमाप्नोति स एव शान्तिमाप्नोतीत्यर्थः ॥ न कामकामी यश्शब्दादिभिर्विक्रियते स कदाचिदपि न शांतिमाप्नोति ॥

विचारः

अस्य श्लोकस्य प्रकरणादिसङ्गत्युद्भावनावसरे "अथान्यास्थितप्रज्ञलक्षणं तत्फलं चाह" इत्युक्त्वा कामैरविकार्यत्वं स्थितप्रज्ञलक्षणमित्युक्तं भवतीति वाक्यार्थमाह कश्चित् (वे) ॥ अस्य लक्षणस्य प्रजहातीत्यनेन स्फुटमुक्तत्वात्, फलस्यापि प्रसादे सर्वदुःखानामित्यादिनोक्तत्वाच्चापूर्यमाणमित्यनेनेहोक्तयोर्लक्षणफलयोः पूर्वोक्तयोरन्यत्वं कथमिति चिन्त्यम् ॥

प्रजहातीति चतुःश्लोक्याऽवस्थाचतुष्टयमुक्त्वा तासां सिद्धिं यानिशेत्यनेन प्रतिपाद्य सिद्धेरर्वाचीनामदूरविप्रकृष्टां शब्दादिविषयदर्शनेऽप्यविकारितारूपामवस्थामाहेति देशिकेन निरूपिता सङ्गतिः ॥ इयमवस्थाऽपि प्राङ्नानुक्ताऽवगम्यते ॥ येन केन प्रकारेण पातञ्जलोपदिष्टानामवस्थानां गीताक्षरेषु प्रवेशमिच्छति देशिक इति प्रतीयते ॥

"यतेरेव मोक्षप्राप्तिर्नत्वसन्न्यासिनः" इत्येतमर्थं प्रतिपादयति पद्मशङ्कराचार्याशयः ॥ स शान्तिमाप्नोति न कामकामीति चतुर्थपादं दृष्ट्वा इदं सङ्गत्युद्भावनं कृतमनेनेति ज्ञायते ॥ नेदं समञ्जसम् । प्रसादे सर्वदुःखानां, नचाभावयतः शान्तिः इत्यादिना ज्ञानिनो मुक्तेः तदन्यस्यामुक्तेश्च प्रतिपादितत्वेन पुनस्तदुक्तौ प्रयोजनाभावात् ॥

नीलकण्ठव्याख्यायां यन्निरूपितमस्मिन्नर्थे, तत्स्वव्यूह एव प्रत्याख्यातं ॥ अयमाह "ननु प्रजहाति यदा कामान्, इन्द्रियाणीन्द्रियार्थेभ्यो निगृहीतानि इत्यादिनाऽसकृद्विषयाणां प्रहाणं तेभ्यश्चेन्द्रियादीनां प्रत्याहरणमुक्तम् ।

तेन तेषामात्मनः पृथक्सत्त्वमस्तीति सिद्धम्। अतो नाद्वैतसिद्धिरित्याशङ्क्य सदृष्टान्तं परिहरति" इति॥ एवमेव भावमाहोपसंहारे च॥ तथाहि "अयं भावः। कूटस्थादात्मनस्सर्वस्योत्पत्तिस्तत्रैव च लयः इति सर्वश्रुतिस्मृतिप्रसिद्धम्। तेन कामानां प्रहाणं तेभ्यश्चेन्द्रियाणां प्रत्याहरणं स्मर्यमाण न तेषां परमार्थतस्सत्त्वं साधयति बहुप्रमाणविरोधात्। किन्तु पामरप्रसिद्धं पृथक्सत्त्वमभिप्रेत्य प्रहाणादिकमुक्तं" इति॥

एतद्व्याख्यानमुपेक्ष्यमित्युत्कर्षदीपिकायामुक्तम्॥ विषयाणामिन्द्रियाणां तद्भेदस्य च सत्यत्वे शङ्किते सति मिथ्यात्वं प्रतिपादितमिहेति व्युत्थापनं सर्वथाऽप्रामाणिकं प्रकरणानुचितं तद्विरुद्धं च॥ 'नेह नानास्ति किञ्चन' 'वाचारम्भणं' इत्यादिश्रुत्युदाहरणपूर्णं यत्कृतमनेन वाग्विजृम्भणं, तस्य सुतरां श्लोकोऽवकाशं न ददातीत्यलं प्रपञ्चेन॥

'विषयानुभवप्रकारमाह' इति गीताभाष्यं॥ विषयानुभवस्य नियतसाधनसाध्यस्यानुसन्धानेन विनाऽनुदयात्कथं ज्ञानी विषयाननुभवतीत्याकांक्षायामुत्तरमुच्यते आपूर्यमाणमित्यनेनेत्याचार्याशयः॥ एवमेव श्रीधरोऽपि व्याख्याति॥ "विषयदृष्टयभावे कथमसौ तान्भुंक्ते इत्यपेक्षायामाह" इति॥ श्लोकान्ते स शान्तिमाप्नोति न कामकामीत्युक्तिर्ज्ञानिप्रशंसार्थं॥ किंच देहधारणार्थं यथोचितविषयभोगस्यावर्जनीयत्वेन ज्ञानी विषयान् सेवमानः किं कामकामावा नवेत्याकाक्षाया, यथा आपः आपूर्यमाणं अचलप्रतिष्ठं समुद्रं प्रविशन्ति, तथा कामाः यं आपूर्यमाणमचलप्रतिष्ठं ज्ञानिनं प्रविशन्ति, सः न कामकामी शान्तिं चाप्नोति इत्येकान्वयाभिप्रायेण विषयानुभवेऽपि ज्ञानिनः कामकामित्वं प्रतिषिद्धं॥ कामपदेन निषिद्धेच्छैवाभिप्रेता। तस्या एव मोक्षविरोधित्वात्। कुत्सितेयमिति मानं यद्विषये सैवेच्छा काम उच्यते॥ एतेन ज्ञानिनाऽपि सर्वथा इच्छाप्रहाणं न साध्यं नाप्यावश्यकं इत्युक्तं भवति॥ तथाचोक्तं ब्रह्मतर्के॥ (गी. ता.) "भुंजानोऽपि हि यः

कामान्मर्यादां नतरेत्क्वचित् । समुद्रवद्धर्ममयी नासौ कामी स उच्यते ॥ केति कुत्सितवाची स्यात्कुत्सितं मानमेव तु । कामो मोक्षविरोधी स्यान्न सर्वेच्छा विरोधिनी ॥" इति॥

शान्तिरिति ॥ शान्तिशब्दः 'शान्तिर्मोक्षोऽथ निर्वाण'मित्यभिधानान्मोक्षवाची ॥ अथवा 'शमो मन्निष्ठता बुद्धे'रिति भागवतोक्तेर्भगवद्भक्तौ रूढः॥ द्वितीयपक्षे तु आद्यार्थस्य रूढलक्षणात्वेनाभिधातुल्यत्वं ज्ञेयं ॥ "शान्तिर्मोक्षो यतो ह्यत्र विष्णुनिष्ठा भवेद्ध्रुवा" इति ब्रह्मतर्कवचनं विष्णुनिष्ठताख्यशक्यार्थसंबन्धज्ञापनेन रूढलक्षणात्वं सूचयति ॥

यं प्रविशन्तीति ॥ यच्छब्देन संयमी विवक्षितः । अयं समुद्रस्थानीयः । यथा समुद्रः प्रविशन्तीभिरद्भिरापूर्यमाणोऽप्यचलप्रतिष्ठः तथा संयमी कामैरापूर्यमाणोऽप्यचलप्रतिष्ठ इत्युपमानोपमेयाकूतं गम्यते । समुद्रसयमिनोस्समानमचलप्रतिष्ठत्वमेवमुपपद्यते ॥ समुद्रः सर्वदाऽनतिक्रान्ततीरमर्यादः। संयमी सदाऽनतिक्रान्तधर्ममर्यादः । समुद्रो जलप्रवाहागमेऽपि वृद्धिविशेषहीनः प्रवाहाभावेऽपि शोषहीनः। तथैव मुनिर्भोगलाभेऽपि नोद्रिक्तः अलाभेऽपि नाविषण्णः । यथा जलधिः प्रवाहागमार्थं न यतते । तथा मुनिर्न विषयभोगार्थं यतते इति ॥

प्रविशन्तीत्यनेन यथा नद्यः प्रविशन्त्यनपेक्षिताः अनाहूता न विकुर्वन्ति च । तथा कामाः सुखदुःखप्रारब्धेरिताः स्वयं प्रविशन्ति न तु विकुर्वन्ति मुनिमिति ध्वन्यते ॥

आपूर्यमाणं इत्यत्र प्रविशन्तीभिरद्भिरिति योग्यतया योजनां प्रायशस्सर्वे व्याख्यातारः अनुजानन्ति ॥ वेङ्कटनाथस्तु रामानुजाचार्यव्याख्यामनुसृत्य "आपूर्यमाणं निरवधिकनिजस्वरूपजलभरणेनैव परिपूर्णं (इति समुद्रपरत्वे) निरतिशयस्वात्मानन्देनैव परिपूर्णं" (इति ज्ञानिपरत्वे) व्याचष्टे ॥ नदीभिः कामैर्वा समन्तात्पूर्यमाणोऽप्यचलप्रतिष्ठो मुनिरित्यर्थस्सुरसो भाति ॥

अचलप्रतिष्ठं इति समुद्रविशेषणत्वेन व्याख्याने 'अचलानां मैनाकादीनां प्रतिष्ठा यस्मिन्निति समुद्रस्य गाम्भीर्यातिशय उक्तः' इत्युक्तं मधुसूदनीये ॥ इदमसङ्गतमिति खण्डितमुत्कर्षदीपिकायां ॥ अस्यार्थस्य दार्ष्टान्तिके विनियोगो दुर्गमो भाति ॥ क्वचिच्छ्रुतां जलेन जलस्यैकीभावोक्ति पुरस्कृत्य प्रथमार्धं व्याख्याय द्वितीयार्धस्य भोगवस्तूनि यतिर्ब्रह्मत्वेनैव पश्यतीत्यर्थमाह शङ्करानन्दः ॥ अनेनोक्तं 'नदनद्यादयः समुद्रं प्राप्य तत्संबन्धमहिम्ना नामरूपगुणविशेषैर्यथा समुद्रान्न भिद्यन्ते । तद्वत्कामाः भोग्यपदार्थाः ब्रह्मनिष्ठं प्राप्य चिद्भावापन्ना अध्यात्मदृष्ट्या प्रविलापितास्सन्तः स्वकीयं नामविशेषं रूपविशेषं गन्धविशेषं पाकविशेष संस्कारविशेषं रुचिविशेषं च परित्यज्य समुद्रप्रविष्टमहानदीजलानि समुद्रभावमिव स्वयं ब्रह्मभावं गच्छन्तीत्यर्थः ॥ पूर्वश्लोकेनानेन च द्वाभ्यामाहारादावपि स्थितप्रज्ञो ब्रह्मविद्यतिर्ब्रह्मात्मना ब्रह्मण्येव तिष्ठति न क्वचिदप्यनात्मनीति किमासीतेति प्रश्नस्योत्तरं दत्तं' इति॥ अत्रेदं चिन्त्यते । किमासीतेत्युपवेशनप्रश्नस्योत्तरं केषु केषु पद्येषु कतिवारं दत्तं इति न ज्ञायते ॥ अद्वैतव्याख्यातृष्वप्यत्र परस्परमतिविप्रतिपत्तेर्दर्शनात् ॥ किञ्चाद्वैतस्य प्रवेशभूमिं श्लोकान्तरेऽपश्यन्त इव बलात्स्वातिहृद्यं मतमिह प्रवेशयन्ति इति स्फुटं भाति ॥ अद्वैतलाभायाऽप्रसक्तां 'नेह नानाऽस्ति किंचने'ति श्रुतिं निनाय नीलकण्ठः ॥ तं सुष्ठु प्रत्याचष्टे तत्सखोऽप्युत्कर्षदीपिकाकारः ॥ इम शङ्करानन्द न कोऽप्यालक्षितवानिति भाति ॥ यामयं जलेन जलैक्योक्तिं जग्राह तस्यास्सुतरां प्रकरणौचित्यं दुर्घटम् ॥ वस्तुतस्तु जलस्य जलांतरप्रवेशे तयोरैक्यमतत्त्वमेव यतस्सङ्गमेन वृद्धिः प्रदृश्यते ॥ दार्ष्टान्तिके भोग्यानां भोक्त्रैक्यं हि वाक्यार्थो भवितुमर्हति, कथमयं युज्यते ॥ विषयाणां चिद्भावप्राप्तेर्वा स्थितप्रज्ञेन विषयतिरस्कारस्य वा का सङ्गतिः ? ॥ एतच्छ्लोकव्याख्याने तावद्विस्तृताऽस्ति जनमोहिनी शङ्करानन्दवाणी ॥ स्वयूथ्यैश्शङ्कराचार्यतट्टीकाकारमधुसूदनश्रीधरादिभिरपि नानुमोदितेतीयमुपेक्ष्यते ॥

**विहाय कामान्यस्सर्वान् पुमांश्चरति निस्पृहः ।**
**निर्ममो निरहंकारः स शांतिमधिगच्छति ॥७१॥**

वि ॥ एतच्छ्लोकोक्तं प्रपञ्चयति ॥ विहायेति ॥ यो निस्पृहो निषिद्धस्पृहाहीनः निर्ममः स्वामित्वाभिमानहीनः निरहङ्कारः भक्षयामीति कर्तृत्वाभिमानहीनः सन् सर्वान्कामान्विषयान् विहाय चरति भक्षयति । भक्षयामीति कर्तृत्वाद्यभिमानत्यागेन विषयाननुभवति इत्यर्थः ॥ स एव पुमान् अन्यः पशुरिति वा । स पुमान् शान्तिमधिगच्छतीति वा । ज्ञानिन इयं स्तुतिः ॥

शं ॥ यस्मादेवं तस्मात् ॥ विहाय इति ॥ विहाय परित्यज्य कामान् यः संन्यासी पुमान् सर्वान् अशेषतः चरति जीवनमात्रचेष्टाशेषः पर्यटति इत्यर्थः ॥ निस्पृहः शरीरजीवनमात्रेऽपि निर्गता स्पृहा यस्य सः निस्पृहः सन् ,निर्ममः शरीरजीवनमात्राक्षिप्तपरिग्रहेऽपि ममेदं इत्यभिनिवेशवर्जितः, निरहङ्कारः विद्यावत्त्वादिनिमित्तात्मसम्भावनारहितः इत्येतत् ॥ स एवं भूतः स्थितप्रज्ञः ब्रह्मवित् शांतिं सर्वसंसारदुःखोपरमलक्षणां निर्वाणाख्यां अधिगच्छति प्राप्नोति ब्रह्मभूतो भवतीत्यर्थः ॥

रा ॥ काम्यन्त इति कामाश्शब्दादयः । यः पुमान् शब्दादीन् सर्वान्विषयान्विहाय, तत्र निस्पृहः तत्र ममतार-

हितश्च अनात्मनि देहे आत्माभिमानरहितश्चरति । स आत्मानं दृष्ट्वा शांतिमधिगच्छति ॥

विचारः

पूर्वश्लोकस्य प्रपंचनं क्रियते इत्याचार्यव्याख्या ॥ कामकामी न शान्तिमाप्नोतीत्युक्तेः "यस्मादेवं कामिनो न शान्तिस्तस्मात्" इति श्लोकमवतारयन्ति शाङ्कराः ॥ इदमत्र देशिकोत्थापनं । "किं कामकामिनस्सर्वदा शान्तिर्नस्यादिति शङ्कामपाकुर्वन्नदर्शनाविकारत्वावस्थयोः कारणभूतां विषयसंग्रहणस्पृहाममकारदेहात्मभ्रमाणां क्रमात्कार्यकारणभावानिवन्धनानुलोमप्रतिलोमान्वयव्यतिरेकद्वयानां निवृत्तिरूपामवस्थामाह" इति ॥ किंच यानिशा आपूर्यमाणामिति पूर्वश्लोकावात्मदर्शिपुरुषपर्वभेदविषयौ, विहायेत्ययन्त्वात्मदर्शनार्थिपुरुषविषयः इति विवेकं च स दर्शयति ॥ कामप्रहाणादीनां प्रायशस्तत्रतत्रोक्तत्वात् प्रपंचनत्वेन व्याख्यानं सुगमं भाति ॥

मं श्लोक व्रजेताकि इति प्रश्नस्य उत्तरत्वेन वा उत्तरसमाप्तिपरत्वेन वा व्याकुर्वते ॥ "ईदृश व्रजनं स्थितप्रज्ञस्येति चतुर्थप्रश्नस्य उत्तर परिसमाप्त" इति मधुसूदनवाक्यं ॥ चर गतिभक्षणयोरित्युक्तेरत्र चरतीत्यस्य पर्यटतीत्यर्थमादाय स्थितप्रज्ञव्रजनोपपादकत्वेन वाक्यार्थमाहुः शाङ्करा इति भाति ॥ कामान्विहाय यत्र कुत्र वा गच्छतीत्युक्तव्याख्यानं नीरसं व्यर्थं च ॥ संभवद्रागद्वेषादिकदेशे निवासव्यावृत्त्यर्थं चरतीत्येतत्पर्यटतीति व्याख्येयमिति शङ्कराचार्याशयः ॥ "" कामान्नी कामरूप्यनुसंचरन्नि"त्युक्तप्रकारेण भूमौ सर्वत्र संगोदासीनो भूत्वा परमहंसः पर्यटती'ति भावमाह शङ्करानन्दः ॥ कामान्नीति श्रुतिं वैकुण्ठस्थमुक्तपराममुक्तपरतया भ्रान्त्वाऽयमुदाहरतीति ज्ञायते ॥ ब्रह्मात्मना सर्वं वीक्षमाणो ब्रह्मानन्दमनुभुंजानो ब्रह्मवित्सर्वत्र चरति नैकत्र तिष्ठतीति चोक्त्वा यतीना सर्वदेशसंचारं

विवक्षित्वा चरतीति प्रयोगस्य भावमयं मन्यते ॥ नैकत्र तिष्ठतीत्यर्थस्याक्षर-लब्धत्वं दुर्गमं ॥ परमहंस एवात्र विवक्षित इतिच कुतो ज्ञायते ॥ चरति भक्षयति भुङ्क्ते इत्येव निर्दिष्टोऽर्थः प्रकरणाद्यनुकूलः ॥ नीलकण्ठोऽपीममर्थ गृह्णाति ॥

विहाय कामानिति ॥ कामशब्देन कर्मव्युत्पत्त्या विषया गृह्यन्ते नत्वि-च्छाविशेषाः । अन्यथा निस्पृह इत्यनेनैकार्थ्यं स्यात् ॥ विषयान्वि-हाय निस्पृहः इत्यत्राप्यस्ति किंचिद्वैर्घट्यम् ॥ सर्वविषयाणां त्यागे जीवनं नोपपद्येत "सर्वकामनिवृत्तिस्तु जानतोऽपि कथंचन" इत्यादिवचनविरो-धश्च । अतो विषयप्रहाणं यदिह विवक्षितं न तदात्यंतिकं कार्त्स्न्येन भवितु-मर्हति । तस्मान्निस्पृह इति विशेषणेन सम्योज्य योऽयं निस्पृहतया विषयान् जहातीति व्याख्येयम् ॥ तथाच विषयप्रहाणं नाम स्पृहात्याग इत्युक्तं भवति ॥ ननु स्पृहाया अपि सर्वकामनिवृत्तिरिति वचनात्कार्त्स्न्येन त्यागायोगात्कथमे-तदिति चेन्न । स्पृहेति निषिद्धस्पृहाणामेव संग्रहात् । सर्वनिषिद्धस्पृहाशून्यतया विषयान्भुंजानोऽप्ययं सर्वविषयत्यागी भवतीति यावत् ॥

अन्ये व्याख्यातारस्तु सर्वान्विहाय निस्पृहः इति पदानि निरंकुशं व्याचक्षते ॥ सर्वान् बाह्यान्तरवासनारूपेण त्रिविधान् । गृहक्षेत्रादयो बाह्याः कामाः । मनोराज्यादय आन्तराः । पथिगततृणादिवदापाततः प्रतीता वासनाः इति तैर्व्याख्यातम् ॥

'यस्संन्यासी कामानशेषतो विहाय जीवनमात्रचेष्टाशेषः पर्यटति शरीरजीवनमात्रेऽपि निर्गतस्पृहः' इति शङ्करभाष्यं । सर्वथा विषयत्यागे स्पृहात्यागे वा कथमयं जीवेदिति नानेनालोच्यते । मुनीनामपि कर्म विहित-मिति प्रामाणिकः पक्षस्तु नास्मै रोचते ॥ निर्मम इति स्वामित्वाभि-मानहीनोऽभिप्रेतः । निरहङ्कार इति कर्तृत्वाभिमानरहितः । विषयभक्ष-णेऽपि भक्षयामीति धीशून्यः ॥ "अस्वरूपे स्वरूपत्वमतिरेव ह्यहंकृतिः ।

त्याज्या सर्वत्र ममता ज्ञात्वा सर्वं हरेर्वशे" इति ब्रह्मतर्के॥ परमात्मन-स्स्वतंत्रकर्तृत्वभोक्तृत्वपुरस्कारेण स्वावरताधीरेवाहंकारममकारौ खंडयतीति भावः ॥

निर्ममः, विषये ममताहीनः इति रामानुजाचार्यः॥ देहे ममताहीनः इति काश्चित् ॥ कौपीनकंथादौ परिग्रहेऽपि ममताहीनः इति शांकराः ॥ सर्वान्कामान्विहाय निस्पृहः इत्यनेन परकीयव्याख्यामादाय कोऽत्राधिकार्थो निर्ममेत्यनेन लब्धो भवतीति न ज्ञायते ॥

निरहंकारः इत्यनेन जीवस्य स्वतत्रकर्तृत्वाभिमानो भ्रमइति गम्यते॥ अन्येतु देहात्मैक्यभ्रमोऽनेन कथितइत्याचक्षते। तथाहि रामानुजाचार्यमधुसूदनशंकरानंदादयः॥ अत्र चित्यते। यद्यपि कृष्णोऽहं कृशोऽहं इत्यादिव्यवहाराः दृष्टाः। अहं देहः इति व्यवहारस्तु न दृश्यते, मम देहइत्येव प्राकृतोऽपि जनो ब्रूते इति॥ "निरहंकारः विद्यावत्त्वादिनिमित्तात्मसभावनारहितः" इति शंकरभाष्यं ॥

विषयप्रहाणनिस्पृहत्वनिर्ममत्वनिरहंकारत्वानां गतार्थताविधुरस्य परस्परसंबन्धस्य ज्ञापनायाहुः शांकराः, क्रमात्पूर्वपूर्वं उत्तरोत्तरस्य कार्यमिति ॥ तथाहि। कुतो निर्ममः निरहंकारत्वात्। नह्यहंकारशून्यस्य सुप्त्यादौ ममता दृष्टा। तथा निर्ममत्वान्निस्पृहः। ममतावान्हि इदं मम भूयादित्यन्यधनाद्यर्थं स्पृहां करोति यतो निस्पृहस्ततो विषयान्जहाति इति हेतुहेतुमद्भावापन्नत्वेन सोपानानि सूचितानि इति ॥

पुमानिति। यस्सर्वान्कामान्निस्पृहतया विहाय भक्षयति भक्षयामीत्यहंकारममकारवर्जितश्च स एव पुमान् अन्यः पशुः इति प्रथममन्वयः। स शान्तिमधिगच्छति इति प्रशंसार्थं संकलितं ॥ एतेन स पुमान् इति विधिरिति ज्ञायते। अन्यथा समग्रश्लोकस्यैकान्वये स पुमान् शान्तिमधि-

गच्छतीति विधौ पुमानित्यनुवादेन मुक्त्यधिगन्तुः पुंस्त्वोक्त्या स्त्रीणां मोक्षाभाव उक्तः स्यात् । स हि पुमानिति विधेयत्वे तु स्तुतिपरत्वेन स्त्रीव्यावर्तकत्वाभावात्तासामपि शान्तिः प्रतिपादिता भवति ॥ किंचैकान्वयेन शान्त्यधिगतेर्मुख्यविधेयत्वे पौनरुक्त्यं स्फुट । प्रागेव विवक्षितानां शान्त्य-धिगमस्योक्तत्वात् । प्रशंसार्थत्वे तु नायं दोषः ॥ अस्मिन्प्रकरणे बहुधा यत्तच्छब्दपूर्वकं ज्ञानिलक्षणं जिज्ञासुभिः क्रियमाणं साधनं च तत्र तत्र प्रतिपादितं द्रष्टव्यं ॥ तद्वैजिज्ञासुभिस्साध्यं ज्ञानिनां यत्तु लक्षणं इति वचनमत्र स्मर्यतां ॥ यस्सर्वत्र(५७) यस्येन्द्रियाणि(६७) यस्य महाबाहो (६८) य प्रविशन्ति (७०) यः सर्वान् सपुमान् (७१) इति यत्तच्छब्दप्रयोगभावानु-सन्धाने साधनपरोऽप्ययं ग्रन्थ इति स्फुटमवगम्यते ॥ तत्र तत्र "यः सः" इत्यनन्तरं जन इति पदमेवोपस्कृत्य योजनीयं न तु स्थितप्रज्ञशब्दमुप-स्कृत्य । अन्यथा यत्तदोः स्थितप्रज्ञविशेषणत्वे यो यः स्थितप्रज्ञः एवं स सएवं, नान्यः स्थितप्रज्ञः इति स्थितप्रज्ञेष्ववान्तरविभागो ॥

शान्तिमिति । शान्तिर्मोक्ष इति प्रायशस्सर्वैरभ्युपगतं ॥ कस्त्वन्यथा आह । "अनयोः श्लोकयोः (७०. ७१) विषयानुभवनि-वृत्तिलक्षणा 'सानिशा' इति पूर्वश्लोकोक्तशान्तिरुक्ता" इति । देशिक-व्याख्याने तावत् यानिशेति पद्यं ह्यात्मदर्शनाख्यसिद्धि वक्ति । अतश्शान्ति-पदं ज्ञानपरमित्युक्तं भवति ॥ "शान्तिर्मोक्षोऽथ निर्वाणं" इत्यभिधानान्मोक्ष-वाचित्वेन व्याख्याने काऽनुपपत्तिः ? ॥

एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति।
स्थित्वाऽस्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति
॥ ७२ ॥

वि ॥ प्रजहातीत्यादिनोक्तं ज्ञानिलक्षणप्रकरणं समापयाति एषेति ॥ एषा प्रजहातीत्यादिनोपक्रांता यानिशेत्यत्र निष्कृष्योक्ता ब्राह्मी ब्रह्मविषया स्थितिः। सर्वकामप्रहाणनित्यभगवदनुस्मृत्यादिरूपब्रह्मज्ञानिलक्षणरूपा स्थितिरिति यावत् ॥ एनामुक्तरूपां स्थितिं प्राप्य न मुह्यति भववेदनानुभववान्न भवति ॥ अंतकालेऽपि देहत्यागकालेऽपि अस्यां भगवदनुस्मृत्यादिरूपास्थित्यां स्थित्वा निर्वाणं प्राकृतशरीररहितं ब्रह्म ऋच्छति प्राप्नोति ॥ प्रारब्धकर्माभावे यद्देहे ज्ञानोदयस्तद्देहत्यागकाले भगवदनुस्मृत्या तद्देहपातानंतरमेव मुक्तिः। प्रारब्धसत्वेतु देहांतरं प्राप्नोतीति भावः ॥ तथाच सूत्रं "ॐ भोगेन त्वितरे क्षपयित्वाऽथ संपत्स्यते" इति ॥ ब्रह्मपदेन विरिंचोपादानव्यावृत्त्यर्थं निर्वाणमिति विशेषणं। परब्रह्मप्राप्तेरेव मोक्षत्वादिति भावः ॥

शं ॥ सैषा ज्ञाननिष्ठा स्तूयते। एषा ब्राह्मी इति॥ एषा यथोक्ता ब्राह्मी ब्रह्मणि भवा इयं स्थितिः, सर्वं कर्म संन्यस्य ब्रह्मस्वरूपेणैवावस्थानं इत्येतत् ॥ हे पार्थ नैनां स्थितिं प्राप्य लब्ध्वा न विमुह्यति न मोहं प्राप्नोति। स्थित्वा अस्यां

स्थितौ ब्राह्मयां यथोक्तायां अन्तकालेऽपि अन्त्ये अपि वयसि ब्रह्मनिर्वाणं ब्रह्मानिर्वृतिं मोक्षं ऋच्छति गच्छति ॥ किमु वक्तव्यं (ब्रह्मचर्यादेव संन्यस्य यावज्जीवं यो ब्रह्मण्येवावतिष्ठते स ब्रह्मनिर्वाणं ऋच्छतीति ॥)

रा ॥ एषा नित्यात्मज्ञानपूर्विका असङ्गकर्माणि स्थितिः स्थितधीलक्षणा ब्राह्मी ब्रह्मप्रापिका । ईदृशीं कर्मणि स्थितिं प्राप्य न विमुह्यति पुनः संसारं नाप्नोति ॥ अस्यां स्थित्यामन्तिमेऽपि वयसि स्थित्वा ब्रह्म निर्वाणमृच्छति निर्वाणमयं ब्रह्म गच्छति । सुखैकतानमात्मानमवाप्नोतीत्यर्थः ॥ एवमात्मयाथात्म्यं युद्धाख्यस्य च कर्मणस्तत्प्राप्तिसाधनतामजानतश्शरीरात्मज्ञानेन मोहितस्य, तेन च मोहेन युद्धान्निवृत्तस्य मोहशान्तये नित्यात्मविषया या सांख्यबुद्धिः, तत्पूर्विका असंगकर्मानुष्ठानरूपकर्मयोगविषया बुद्धिः, स्थितप्रज्ञता योगसाधनभूता द्वितीयेऽध्याये प्रोक्ता ॥ तदुक्तं "नित्यात्मासंगकर्मेहागोचरा सांख्ययोगधीः । द्वितीये स्थितधीलक्षा प्रोक्ता तन्मोहशांतये" इति ॥

विचारः ॥

अध्यायान्तिममिदं पद्यम् ॥ उक्तस्येहोपसंहार उचितः । अध्यायादावशोच्यानित्यादिना सांख्यापरपर्यायं जैवज्ञानं ईश्वरज्ञानं चोपदिष्टं । अनन्तरमसङ्गकर्माख्यो योगः प्रोक्तः । ततः स्थितप्रज्ञलक्षणं कथितम् । एतेषु प्रकरणविशेषेषु कस्योपसंहार इति संशयः स्यात् ॥ अध्यायार्थमुपसंहरति इति

वेङ्कटनाथस्यावतारिका। 'अशोच्यानिति प्रस्तुता एषा तेऽभिहितेति मध्ये परामृष्टा योगेत्विमामित्यादिनोपदिष्टसाधना प्रजहातीत्यादिना लक्षिता ब्रह्मविषया स्थितिः ज्ञान' इति तद्व्याख्यान॥ अध्यायार्थस्य निगमन फलाव्यभिचारस्थापनं चानेन कृतमित्युक्त्वा एषेति निर्देशस्य पूर्वोक्तनिखिलप्रकारपरामर्शित्वमभिप्रैति देशिकः॥

ज्ञाननिष्ठा स्तूयते इति शङ्करभाष्यम्॥ ब्राह्मी स्थितिरेषेत्युक्तेरालोचने तु स्थितप्रज्ञप्रकरणस्यैव परामर्श उचितः। अतएव स्थितप्रज्ञप्रकरणमनेन भगवान्समापयतीत्याचार्यः॥ तत्रापि स्थितप्रज्ञलक्षणप्रकरणमात्रमुपसंहृतं ज्ञातव्यं॥ ब्राह्मी स्थितिः ब्रह्मविल्लक्षणं इत्यर्थः। स्थितधीः किंप्रभाषेत किमासीत व्रजेतकि इति ज्ञानिव्यापारप्रश्नस्योत्तर यानिशेत्यादिनाऽर्थादेव लभ्यमिति तस्य नोपसंहारः कृतः॥ प्रजहातीत्यारभ्याध्यायान्तं ज्ञानिलक्षणमेव तदुपयुक्तप्रमेयजातेन सह प्रतिपादितमित्यखण्डितस्यास्य प्रकरणस्योपसंहार एषेत्यनेनाभिप्रेत इति भावः॥ 'उपक्रान्तां ब्रह्मनिष्ठामुपसंहरति' इति शङ्करानन्दोऽप्याचष्टे॥ "एषा स्थितप्रज्ञलक्षणव्याजेन कथिता एषा तेऽभिहितेति प्रागुक्ता" इति मधुसूदनोऽपि॥

ब्राह्मी स्थितिरिति। स्थितप्रज्ञलक्षणं ब्राह्मी स्थितिरित्याचार्यः॥ सर्वकर्मसन्न्यासपूर्वकपरमात्मज्ञानलक्षणा निष्ठेति मधुसूदनः॥ ब्रह्मप्रापिका स्थितिरित्येकः, ब्रह्मविषयेत्यन्यः। इमे पक्षाः कथंचिद्ग्राह्याः॥ ब्रह्मस्वरूपेणैवावस्थानं शङ्करभाष्यन्तु न सङ्गतम्। तथा विद्यमानत्वस्याप्रामाणिकत्वात्॥

न विमुह्यतीति॥ मोहं न प्राप्नोतीति प्रामाणिकमर्थं विहाय सर्वेषां प्राणिनामहमिति विशिष्टो मोहो यत्र सविमोहो देहः, तं न प्राप्नोतीति शङ्करानन्दो व्याकरोति॥ संसारं न प्राप्नोतीति रामानुजभाष्यं॥ इदमस्माकं सम्मतं॥ स्थितप्रज्ञतापन्नस्य पुनर्न संशयादयस्सम्भवंतीत्यर्थः सुगमः।

“ भिद्यते हृदयग्रंथिः छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ” इति श्रुतौ सर्वसंशयानां छेदस्योक्तेः ॥

पार्थेति संबोधनस्य केचिदेवं भावमाहुः । ‘ मत्सम्बन्धिनस्तव मयि ब्रह्मण्येवावस्थानं युक्तं इति सूचयति ” इत्युत्कर्षदीपिकायां ॥ ‘ पातीति पुः परमात्मा तमेवार्थयते वांच्छतीति पार्थः । संबुद्धिः मुमुक्षो इत्यर्थः ’ इति शङ्करानन्दः ॥

अन्तकाले भगवत्स्मरणस्य महाफलकत्वं द्वितीयार्धेनोच्यते ॥ अयमर्थो ‘ यं यं वापि स्मरन्भावं ’ इति वक्ष्यमाणार्थसमानः । अत एव ‘ सन्ततं चिन्तयेऽनन्तमन्तकाले विशेषतः ’ इत्याहाचार्यो द्वादशस्तोत्रेषु ॥ यदि मरणसमये नारायणस्मरणं तर्हि जन्मान्तरं नास्ति । अन्यथा जन्मान्तरं प्राप्नोति । स्मरन् त्यजतीति ह्युक्तं । त्यागस्मरणयोस्समानकालीनत्वमभिप्रेतं ॥ भीष्मस्यापि त्यागकाले न स्मरणमभूत् इत्यूह्यं । जन्मान्तरप्राप्तेः ॥ यदि प्रारब्धशेषस्तर्ह्यसौ मृतिसमये स्मरणं प्रतिबध्नाति ॥

“ ज्ञानिनां कर्मयुक्तानां कायत्यागक्षणो यदा ।
विष्णुमाया तदा तेषां मनो बाह्य करोति हि ॥ ” इति गारुडे ॥

“ बहुजन्मविपाकेन भक्तिज्ञानेन ये हरिं ।
भजन्ति तत्स्मृतिन्त्वन्ते तेवै यान्ति न चान्यथा ॥ ” ब्र. वै. ॥

अपरोक्षज्ञाने जाते संचितानां कर्मणां ‘ यथैषीकातूलं ’ ‘ ज्ञानाग्निस्सर्वकर्माणि ’ इत्युक्तप्रकारेण दाहो भवति ॥ प्रारब्धं तु अनुभोक्तव्यं । परन्तु तस्य ईषदुपमर्दोऽस्त्येव ॥

यदाहुः पाशुपतवैशेषिकादयः “ अनियतकालविपाकान्यपि कर्माणि ज्ञानी योगसामर्थ्यात्समाहृत्यानेकशरीरफलान्यपि कायव्यूहनिर्माणेन क्षपयित्वा प्रव्रज्यते ” इति तदसत् । यतः “ भोगेन त्वितरे क्षपयित्वाऽथ सं-

पत्स्यते" (ब्र. सू. IV 1-8-7) इति सूत्रं ॥ इतरे अप्रारब्धादितरे आरब्धपुण्यपापे भोगेन क्षपयित्वा ब्रह्म सपद्यते ॥ अथेति नियमसूचकः ॥ सन्तिबहुशरीरफलानि कानिचित्कर्माणि ॥ "स्थितप्रज्ञोऽपि यस्तूर्ध्वः प्राप्य रुद्रपदं गतः । सांकर्षणं ततो मुक्तिमगाद्विष्णुप्रसादतः" इति गारुडे । 'महादेव परेजन्मंस्तवमुक्तिर्निरूप्यते' इति नारदीये ॥

तस्माज्ज्ञानजन्मानन्तरं जन्मैव नास्तीति पक्षो न साधुः ॥ कस्तर्हि ज्ञान्यज्ञानिनोर्विशेष इति जिज्ञासायां ज्ञानिनो मोक्षो निश्चितः । अन्यस्य नेति विशेषः ॥ 'तस्य तावदेव चिरं' 'यदुच नार्चिषमेवाभिसंभवति' इत्यादिप्रमाणैरयं गम्यते ॥

(प्रारब्धे क्षीणे सति भगवदनुग्रहादन्तकाले श्रीहरिध्यानं भवति ॥ निर्वाणं ब्रह्माप्नोति । ब्रह्मविशेषणं निर्वाणमिति । चतुर्मुखब्रह्मव्यावृत्त्यर्थमेतत् ॥ नपुंसकब्रह्मशब्देनैव तद्व्यावृत्तिरिति न वाच्यं । 'तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते' 'स एनान्ब्रह्म गमयति' इत्यादौ 'एतदब्रह्म चतुर्मुखः' इत्याथर्वणभाष्योक्त्या 'कार्यं बादरिः' इति सूत्रेण हिरण्यगर्भस्यापि नपुंसकब्रह्मशब्दवाच्यत्वावगमात् ॥

निर्वाणमित्यशरीरमुच्यते । 'कायो बाणं शरीरं च' इत्यभिधानं । 'एतद्बाणमवष्टभ्य' इति षट्प्रश्ने ॥ निर्वाणं प्राकृतशरीरहीनं इति यावत् ॥ अनेन चतुर्मुखव्यावृत्तिः स्फुटा ॥

केचिद्भगवतस्सर्वथा शरीरवैधुर्यमभिप्रयन्ति ॥ तदसत् । अत्रार्थे "आनन्दरूपममृतं" इत्यादि गीताभाष्योदाहृतबहुप्रमाणान्यालोक्यानि ॥ "अभावाज्जडदेहस्य विष्णुर्निर्वाण उच्यते । भिन्नदेहाभावतो वा स सहस्रशिरा अपि" इति तात्पर्योदाहृतम् ॥

# तृतीयोऽध्यायः ।

अर्जुनउवाच—

**ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ।**
**तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥१॥**

वि ॥ (एषा तेऽभिहिता सांख्ये इत्यंतेन नत्वेवाहमित्यादिना ग्रंथेन जीवेश्वरस्वरूपमुक्त्वा, तज्ज्ञानोपायं च योगेत्विमां शृण्विति प्रतिज्ञापूर्वं त्रैगुण्यविषया वेदाइत्यादिनोक्त्वा, कर्मजं बुद्धियुक्ताहीत्यादिना किंचित्प्रपन्चनं तस्य कृतं पूर्वाऽध्याये ॥) अत्र तु पूर्वोक्तस्यैव निवृत्तकर्मरूपज्ञानोपायशब्दितयोगस्यावश्यकार्यताज्ञापनरूपं प्रपञ्चनं प्राचुर्येण क्रियते इति पूर्वोत्तराध्याययोः पौर्वापर्यं ध्येयं ॥ दूरेणह्यवरं कर्मेत्युक्ते लब्धावसरः पृच्छति ॥ दूरेणह्यवरं कर्म बुद्धियोगात्, कृपणाः फलहेतवः इत्यादिनोक्तदिशा बुद्धिः कर्मणः सकाशाज्ज्यायसी चेत् श्रेष्ठा यदि, हे जनार्दन ते तव मता ॥ (तत् तर्हि कर्मणि किमर्थं मां नियोजयसीत्येकः प्रश्नः ॥ (तत्रापि घोरे रागद्वेषाद्युपेते युद्धाख्ये कर्माणि किमर्थं नियोजयसीत्यन्यः ॥ अयं

भावः । "सर्वएते पुण्यलोका भवन्ती"त्यादिफलश्रवणेन सर्वकर्मणां, हतो वा प्राप्स्यसि स्वर्गमित्यादि युद्धस्यापि काम्यत्वात्तेषां च बुद्धियोगादवरत्वात् यत्याश्रमविहितानां शमादीनां फलाश्रवणेनाकाम्यत्वात् "शान्तो दान्तः" इत्युपक्रम्यात्मानं पश्येदिति ज्ञानार्थत्वश्रवणाच्च यत्याश्रमं स्वीकृत्य तद्धर्मनिष्ठो भवेत्येव नियोक्तव्यं । न तु काम्यकर्मणि युद्धे "युध्यस्व भारते"ति नियोजनं युक्तमिति ॥ अत्र केशवशब्दार्थ उक्तः प्रथमाध्याये ॥ न जायते अर्दयति च संसारमिति दशमभाष्ये ॥ नञः परनिपातः अतएव न लोपाभावः। उत्तरपदे परतस्तस्य स्मरणात् इति तट्टीकोक्तादिशा च जनार्दनशब्दार्थो ध्येयः ॥

शं ॥ शास्त्रस्य प्रवृत्तिनिवृत्तिविषयभूते द्वे बुद्धी भगवता निर्दिष्टे सांख्ये बुद्धिर्योगे बुद्धिरिति च ॥ तत्र "प्रजहाति यदा कामान्" इत्यारभ्याध्यायपरिसमाप्तेः सांख्यबुद्ध्याश्रितानां संन्यासं कर्तव्यमुक्त्वा तेषां तन्निष्ठतयैव कृतार्थतोक्ता एषा ब्राह्मी स्थितिरिति ॥ अर्जुनाय च "कर्मण्येवाधिकारस्ते" "मा ते सङ्गोऽस्त्वकर्मणि" इति कर्मैव कर्तव्यमुक्तवान्, योगबुद्धिमाश्रित्य न तत एव श्रेयःप्राप्तिमुक्तवान् ॥ तदेतदालक्ष्य पर्याकुलीभूतबुद्धिरर्जुन उवाच । कथं भक्ताय श्रेयोर्थिने यत् साक्षाच्छ्रेयःसाधनं, सांख्यबुद्धिनिष्ठां श्रावयित्वा मां कर्मणि दृष्टानेकानर्थयुक्ते पारंपर्येणाप्यनैकांतिकश्रेयः-

प्राप्तिफले नियुंज्यादिति युक्तः पर्याकुलीभावोऽर्जुनस्य । तदनुरूपश्च प्रश्नो ज्यायसी चेदित्यादिः । प्रश्नोपाकरणवाक्यं च भगवतोक्तं यथोक्तविभागविषये शास्त्रे ॥ केचित्त्वर्जुनस्य प्रश्नार्थमन्यथा कल्पयित्वा तत्प्रतिकूलं भगवतः प्रतिवचनं वर्णयन्ति, यथाचात्मना संबन्धग्रन्थे गीतार्थो निरूपितस्तत्प्रतिकूलं चेहपुनः प्रश्नप्रतिवचनयोरर्थं निरूपयन्ति ॥ कथं, तत्र संबन्धग्रन्थे तावत् सर्वेषामाश्रमिणां ज्ञानकर्मणोः समुच्चयो गीताशास्त्रे निरूपितोऽर्थ इत्युक्तं ॥ पुनर्विशेषितं च यावज्जीवं श्रुतिचोदितानि कर्माणि परित्यज्य केवलादेव ज्ञानान्मोक्षः प्राप्यत इत्येतदेकान्तेनैव प्रतिषिद्धमितीह त्वाश्रमविकल्पं दर्शयता यावज्जीवश्रुतिचोदितानामेव कर्मणां परित्याग उक्तः, तत् कथमीदृशं विरुद्धमर्थं अर्जुनाय ब्रूयाद्भगवान्, श्रोता वा कथं विरुद्धमर्थं अवधारयेत् ॥ तत्रैतत् स्याद्, गृहस्थानामेव श्रौतकर्मपरित्यागेन केवलादेव ज्ञानान्मोक्षः प्रतिषिध्यते । नत्वाश्रमान्तराणामित्येदपि पूर्वोत्तरविरुद्धमेव, कथं, सर्वाश्रमिणां ज्ञानकर्मणोः समुच्चयो गीताशास्त्रे निश्चितोऽर्थ इति प्रतिज्ञायेह कथं तद्विरुद्धं केवलादेव ज्ञानान्मोक्षं ब्रूयादाश्रमान्तराणां ॥ अथ मतं श्रौतकर्मापेक्षयैतद्वचनं केवलादेव ज्ञानाच्छ्रौतकर्मरहितादगृहस्थानां मोक्षः प्रतिषिध्यत इति, तत्र गृहस्थानां विद्यमानमपि स्मार्तं कर्माविद्यमानवदुपेक्ष्य ज्ञानादेव केव-

लादित्युच्यत इति, एतदपि विरुद्धं, कथं गृहस्थस्यैव स्मार्तकर्मणा समुच्चिताज्ज्ञानान्मोक्षः प्रतिषिध्यते । नत्वाश्रमान्तराणामिति कथं विवेकिभिः शक्यमवधारयितुं ॥ किंच यदि मोक्षसाधनत्वेन स्मार्तानि कर्माण्यूर्ध्वरेतसां समुच्चीयन्ते तदा गृहस्थस्यापीष्यतां स्मार्तैरेव समुच्चयः, न श्रौतैः ॥ अथ श्रौतैः स्मार्तैश्च गृहस्थस्यैव समुच्चयो मोक्षायोर्ध्वरेतसां तु स्मार्तकर्ममात्रसमुच्चिताज्ज्ञानान्मोक्ष इति । तत्रैवं सति गृहस्थस्यायासबाहुल्याच्छ्रौतं स्मार्तं च बहुदुःखरूपं कर्म शिरस्यारोपितं स्यात् ॥ अथ गृहस्थस्यैवायासबाहुल्यकारणान्मोक्षः स्यान्नाश्रमान्तराणां श्रौतनित्यकर्मरहितत्वादिति । तदप्यसत्, सर्वोपनिषत्स्वितिहासपुराणयोगशास्त्रेषु च ज्ञानाङ्गत्वेन मुमुक्षोः सर्वकर्मसन्न्यासविधानादाश्रमविकल्पसमुच्चयविधानाच्च श्रुतिस्मृत्योस्सिद्धस्तर्हि सर्वाश्रमिणां ज्ञानकर्मणोः समुच्चयः न मुमुक्षोः, सर्वकर्मसन्न्यासविधानात् ॥ "पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति" 'तस्मात्संन्यासमेषां तपसामतिरिक्तमाहुः' 'नाश एवात्यरेचयन्' इति 'न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः' इति च ब्रह्मचर्यादेव प्रव्रजेत् इत्याद्याः श्रुतयः ॥ "त्यज धर्ममधर्मं च उभे सत्यानृते त्यज । येन त्यजसि तं त्यज। संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया । प्रव्रजंत्यकृतोद्वाहाः परं वैरा-

ग्यमाश्रिताः॥" इति बृहस्पतिः॥"परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि । सर्वैषणाविनिर्मुक्तः स भैक्ष्यं भोक्तुमर्हति ॥ कर्मणा बध्यते जन्तुः विद्यया च विमुच्यते । तस्मात्कर्म न कुर्वंति यतयः पारदर्शिनः ॥" इति शुकानुशासनम् ॥ इहापि च "सर्वकर्माणि मनसा सन्न्यस्ये"त्यादि ॥ मोक्षस्य चाकार्यत्वान्मुमुक्षोः कर्मानर्थक्यम् ॥ नित्यानि प्रत्यवायपरिहारार्थमनुष्ठेयानीति चेत्, न, असंन्यासिविषयत्वात् प्रत्यवायप्राप्तेः ॥ न ह्यग्निकार्याद्यकरणात् संन्यासिनः प्रत्यवायः कल्पयितुं शक्यः यथा ब्रह्मचारिणां असंन्यासिनामपि कर्मिणां ॥ न तावन्नित्यानां कर्मणामभावादेव भावरूपस्य प्रत्यवायस्योत्पत्तिः कल्पयितुं शक्या युक्ताच । "कथमसतः सत् जायेत" इत्यसतः सज्जन्मासम्भवश्रुतेः॥ यदि विहिताकरणादसम्भाव्यमपि प्रत्यवायं ब्रूयाद्वेदस्तदाऽनर्थकरो वेदोऽप्रमाणमित्युक्तं स्यात्, विहितस्य करणाऽकरणयोः दुःखफलमात्रत्वात् ॥ तथाच कारकं शास्त्रं न ज्ञापकमित्यनुपपन्नार्थं कल्पितं स्यात् ॥ नचैतदिष्टं ॥ तस्मान्न संन्यासिनां कर्माणि, अतो ज्ञानकर्मणोः समुच्चयानुपपत्तिः ॥ "ज्यायसी चेत्कर्मणस्ते मता बुद्धिः" इत्यर्जुनस्य प्रश्नानुपपत्तेश्च ॥ यदि हि भगवता द्वितीयाध्याये ज्ञानं कर्म च समुच्चयेन त्वयाऽनुष्ठेयमित्युक्तं स्यात् । ततोऽर्जुनस्य प्रश्नोऽनुपपन्नो ज्यायसी चेत्कर्मणस्ते

मता बुद्धिरिति ॥ अर्जुनाय चेत् बुद्धिकर्मणी त्वयाऽनुष्ठेये इत्युक्ते या कर्मणो ज्यायसी बुद्धिः साप्युक्तैवेति 'तत् किं कर्माणि घोरे मां नियोजयसि केशव' इति उपालंभो वा प्रश्नो वा न कथंचनोपपद्यते ॥ न चाऽर्जुनस्यैव ज्यायसी बुद्धिर्नानुष्ठेयेति भगवतोक्तं पूर्वमिति कल्पयितुं युक्तं, येन ज्यायसी चेदिति विवेकतः प्रश्नः स्यात् ॥ यदि पुनरेकस्य पुरुषस्य ज्ञानकर्मणोर्विरोधाद्युगपदनुष्ठानं न संभवतीति भिन्नपुरुषानुष्ठेयत्वं भगवता पूर्वमुक्तं स्यात् ततोऽयं प्रश्न उपपन्नो ज्यायसीचेदित्यादिः ॥ अविवेकतः प्रश्नकल्पनायामपि भिन्नपुरुषानुष्ठेयत्वेन भगवतः प्रतिवचनं नोपपद्यते ॥ नचाज्ञाननिमित्तं भगवत्प्रतिवचनं कल्प्यं ॥ अस्माच्च भिन्नपुरुषानुष्ठेयत्वेन ज्ञानकर्मनिष्ठयोर्भगवतः प्रतिवचनदर्शनात् ज्ञानकर्मणोः समुच्चयानुपपत्तिः ॥ तस्मात्केवलादेव ज्ञानान्मोक्ष इत्येषोऽर्थो निश्चितो गीतासु सर्वोपनिषत्सु च ॥ ज्ञानकर्मणोः 'एकं वद निश्चित्ये'ति चैकविषयैव प्रार्थनाऽनुपपन्नाभेयाः समुच्चयसंभवे ॥ 'कुरु कर्मैव तस्मात्त्वमि'ति च ज्ञाननिष्ठासंभवमर्जुनस्यावधारणेन दर्शयिष्यति ॥ ज्यायसी चेदिति। ज्यायसी श्रेयसी चेद्यदि कर्मणः सकाशात्ते तव मताऽभिप्रेता बुद्धिर्ज्ञानं, हे जनार्दन। यदि बुद्धिकर्मणी समुच्चिते इष्टे तदैकं श्रेयःसाधनमिति कर्मणो ज्यायसी बुद्धिरिति कर्मणोऽतिरिक्तकरणं बुद्धेरनुपपन्नमर्जुनेन कृतं स्यात्। नहि तदेव तस्मात्

फलतोऽतिरिक्तं स्यात् । तथाच, कर्मणः श्रेयस्करी भगवतोक्ता बुद्धिः, अश्रेयस्करं च कर्म कुर्विति मां प्रतिपादयति, तत् किं नु कारणमिति भगवतउपालंभमिव कुर्वन् तत् किं कस्मात् कर्माणि घोरे क्रूरे हिंसालक्षणे मां नियोजयसि केशवेति च यदाह तच्च नोपपद्यते ॥

रा ॥ तदेवं मुमुक्षुभिः प्राप्यतया वेदान्तोदितनिरस्तनिखिलाविद्यादिदोषगन्धानवधिकातिशयासंख्येयकल्याण - गुणगणपरब्रह्मपुरुषोत्तमप्राप्त्युपायभूतवेदनोपासनध्यानादिशब्दवाच्यतदैकान्तिकात्यन्तिकभक्तिं वक्तुं तदङ्गभूतं 'य आत्माऽपहतपाप्मा' इत्यादिप्रजापतिवाक्योदितं प्राप्तुरात्मनो याथात्म्यदर्शनं, तन्नित्यताज्ञानपूर्वकासङ्गकर्मनिष्पाद्यज्ञानयोगसाध्यमुक्तम् ॥ प्रजापतिवाक्ये हि दहरवाक्योदितपरविद्याशेषतया प्राप्तुरात्मनः स्वरूपदर्शनं 'यस्तमात्मानमनुविद्य विजानाति' इत्युक्त्वा, जागरितस्वप्नसुषुप्त्यतीतं प्रत्यगात्मस्वरूपमशरीरं प्रतिपाद्य, "एवमेवैष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति दहरविद्याफलेनोपसंहृतं ॥ अन्यत्रापि 'अध्यात्मयोगाधिगमेन देवं मत्त्वा धीरो हर्षशोकौ जहाति' इत्येवमादिषु ॥ देवं मत्वेति विधीयमानपरविद्याङ्गतया 'अध्यात्मयोगाधिगमेन' इति प्रत्यगात्मज्ञानमपि विधाय, 'न जायते म्रियते वा विपश्चित्' इत्यादिना प्रत्यगात्मस्वरूपं

विशोध्य 'अणोरणीयान्' इत्यारभ्य "महान्तं विभुमात्मानं मत्त्वा धीरो न शोचति" 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वां' इत्यादिश्रुतिभिः परस्वरूपं तदुपासनं, उपासनस्य च भक्तिरूपतां प्रतिपाद्य "विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदं" इति परविद्याफलेनोपसंहृतं ॥ अतः परमध्यायचतुष्टयेनेदमेव प्राप्तुः प्रत्यागात्मनो दर्शनं ससाधनं प्रपञ्चयति ॥ ज्यायसीति ॥ यदि कर्मणो बुद्धिरेव ज्यायसीति ते मता किमर्थं तर्हि घोरे कर्मणि मां नियोजयसि ॥ एतदुक्तं भवति, ज्ञाननिष्ठैवात्मावलोकनसाधनं कर्मनिष्ठा तु तस्याः निष्पादिका । आत्मावलोकनसाधनभूता च ज्ञाननिष्ठा सकलेन्द्रियमनसां शब्दादिविषयव्यापारोपरतिनिष्पाद्येत्यभिहिता । इन्द्रियव्यापरोपरतिनिष्पाद्यमात्मावलोकनं चेत्सिषाधयिषितं, सकलकर्मनिवृत्तिपूर्वकज्ञाननिष्ठायामेवाहं नियोजयितव्यः किमर्थं घोरे कर्मणि सर्वेन्द्रियव्यापाररूपे आत्मावलोकनविरोधिनि कर्मणि मां नियोजयसीति ॥

विचारः

तत्त्वमसीतिमहावाक्यं खल्वद्वैतिनां वेदान्तसारः ॥ यथोपनिषत्सु सर्वासु तथा ब्रह्मसूत्रेषु चैतद्वाक्यार्थ एव निरूप्यते इति तेषामाशयः॥ गीतापि वेदान्तशास्त्रंचेत् तत्रापि तत्त्वमसीतिवाक्यार्थनिरूपणेनैव भाव्यं इति मन्वानो

मधुसूदनः अध्यायेषु प्रथमषट्कं त्वंपदार्थनिरूपकत्वेन, द्वितीयषट्कं तत्पदार्थनिरूपकत्वेन, तृतीयषट्कं तयोरैक्यनिरूपकत्वेन विभजाति ॥ द्वितीयाध्यायं कृत्स्नशास्त्रपादपीठमारचय्य तत्र ईषत्सूत्रितानां प्रमेयविशेषाणां प्रपञ्चनमेवोत्तरत्र कृतमित्युपपादयति ॥ तथाहि "आदौ निष्कामनिष्ठा ततोऽन्तःकरणशुद्धिः ततः शमदमादिसाधनपुरस्सरः सर्वकर्मसंन्यासः ततो वेदान्तवाक्यविचारसहिता भगवद्भक्तिनिष्ठा ततस्तत्त्वज्ञाननिष्ठा तस्याः फलं च, त्रिगुणात्मकाविद्यानिवृत्त्या जीवन्मुक्तिः प्रारब्धकर्मफलभोगपर्यन्तं, तदंते च विदेहमुक्तिः ॥ जीवन्मुक्तिदशायां च परमपुरुषार्थावलंबनेन परवैराग्यप्राप्तिः, दैवसंपदाख्या च शुभवासना तदुपकारिण्यादेया, आसुरसंपदाख्यात्वशुभवासना तद्विरोधिनी हेया । दैवसंपदोऽसाधारण कारणं सात्विकिश्रद्धा । आसुरसंपदस्तु राजसी तामसी च इति हेयोपादेयविभागेन कृत्स्नशास्त्रार्थपरिसमाप्तिः ॥ तत्र "योगस्थः कुरु कर्माणि" इत्यादिना सूत्रिता सत्त्वशुद्धिसाधनभूता निष्कामकर्मनिष्ठा सामान्यविशेषरूपेण तृतीयचतुर्थाभ्यां प्रतिपाद्यते । ततः शुद्धान्तःकरणस्य शमदमादिसाधनसंपत्तिपुरस्सरा "विहाय कामान् यस्सर्वान्" इत्यादिना सूत्रिता सर्वकर्मसंन्यासनिष्ठा संक्षेपविस्तरेण पञ्चमषष्ठाभ्यां॥ एतावता च त्वंपदार्थोऽपि निरूपितः ॥ ततो वेदान्तवाक्यविचारसहिता "युक्त आसीत मत्परः" इत्यादिना सूत्रितानेकप्रकारा भगवद्भक्तिनिष्ठा अध्यायषट्केन प्रतिपाद्यते । तावता च तत्पदार्थोऽपि निरूपितः ॥ ततस्तत्त्वंपदार्थैक्यज्ञानरूपा "वेदाविनाशिनं नित्यं" इत्यादिना सूत्रिता तत्त्वज्ञाननिष्ठा त्रयोदशे प्रकृतिपुरुषविवेकद्वारा ॥ प्रपञ्चितज्ञाननिष्ठायाश्च फलं "त्रैगुण्यविषया वेदा निस्त्रैगुण्योभवार्जुन" इत्यादिना सूत्रितं । त्रैगुण्यनिवृत्तिश्चतुर्दशे सैव जीवन्मुक्तारति गुणातीतलक्षणकथनेन प्रपञ्चिता ॥ "तदागन्तासिनिर्वेदं" इत्यादिना सूत्रिता परवैराग्यनिष्ठा संसारवृक्षच्छेदनद्वारा पञ्चदशे ॥ दुःखेष्वनुद्विग्नमनाः" इत्यादिना स्थितप्रज्ञलक्षणेन सूत्रिता परवैराग्योपकारिणी

दैवीसंपदादेया, "यामिमां पुष्पितां वाचं" इत्यादिना सूत्रिता तद्विरोधिन्यासुरी संपच्च हेया षोडशे ॥ दैवसंपदोऽसाधारणकारणं च सात्त्विकी श्रद्धा "निर्द्वन्द्वो नित्यसत्त्वस्थः" इत्यादिना सूत्रिता, तद्विरोधपरिहारेण सप्तदशे ॥ एवं सफला ज्ञाननिष्ठा अध्यायपञ्चकेन प्रतिपादिता। अष्टादशेन च पूर्वोक्तसर्वोपसंहार इति कृत्स्नगीतार्थसङ्गतिः" इति ]। अत्रोच्यते। भागत्रयात्मकस्य तत्त्वमसीत्यस्य षट्कत्रयात्मकं गीताशास्त्रं क्रमाद्व्याख्यानरूपं इत्यत्र गमकं स्ववांच्छानुगृहीतोत्प्रेक्षां विना नान्यद्दृश्यते ॥ त्रयोदशात्सप्तदशपर्यन्तं प्रपञ्चिततयोक्तस्य जीवब्रह्मैक्यस्य मूलसूत्रं "वेदाविनाशिनं" इति ह्यवलम्बितं। अस्मिन्पद्ये अद्वैतसाधकं न किञ्चिदपि पश्यामः ॥

किंच त्वंपदाभिधेयप्रतिपादनं प्रथमषट्के कृतं इत्यत्र को निर्बन्धः ॥ [निष्कामानिष्ठा हि तृतीयचतुर्थाध्याययोः प्रतिपादितेति मधुसूदनोक्तिः ॥ साहि योगशब्दोदितं ज्ञानसाधनम्। त्वंपदार्थस्त्वविद्यावच्छिन्नो जीवः। तत्स्वरूपज्ञानं सांख्यशब्दितं। सांख्यं विविच्य "योगेत्विमां श्रुणु" इति भगवतैवोक्तत्वेन योगप्रकरणेन सांख्यस्य त्वंपदार्थसंबंधिनस्सांकर्यमयुक्तं भाति ॥ पंचमषष्ठाध्याययोश्शमादिसाधनपुरस्सरः कर्मसंन्यास उच्यत इत्युक्तम्]। अस्य त्वंपदार्थनिरूपणपरत्वं न सुगमम्। अस्यापि योगत्वात् ॥ न च वाच्यं, अज्ञानदशायामनुष्ठीयमानत्वेन कर्मणो विशेषेण त्वपदार्थसम्बद्धत्वादेवमुक्तिरिति, तर्हि द्वितीयषटकस्य भक्तिप्रतिपादकस्यापि त्वंपदार्थनिरूपकत्वं स्यात्, भक्तेरप्यज्ञानदशायामनुष्ठीयमानत्वेन न्यायस्य समानत्वात्॥ किंच "विहाय कामान्यस्सर्वान् पुमांश्चरति निस्पृहः। निर्ममो निरहंकारस्स शान्तिमाधिगच्छति ॥" इतिपद्यं पंचमषष्ठयोरध्याययोर्मूल इत्युक्तं ], मंदमिदं भाति। स्थितप्रज्ञप्रकरणांहि "दुःखेष्वनुद्विग्नमनाः" इत्यारभ्य "विहाय कामान्" इत्यंतं दृश्यते ॥ दुःखेष्वित्युपक्रमपद्यं जीवन्मुक्तिदशायामनुभूयमानं पंचदशाध्यायेन वक्ष्यमाणं परवैराग्यं वक्तीति मन्यमानः कथं तत्प्रकरणोप-

संहारभूतं "विहाय कामान्" इतिपद्यं त्वंपदार्थान्तर्भूताज्ञानाविष्टं शमादि-साधनपुरस्सरकर्मसंन्यासं ब्रूयात् ॥

द्वितीयषट्के तत्पदार्थो निरूपितइत्युक्तं । यद्यपि सर्वत्र गीता-शास्त्रे भगवानेव मुख्यप्रतिपाद्यः । ज्ञानयोगाक्षरब्रह्मयोग-राजविद्याराजगुह्य-योग-विभूतियोग-विश्वरूपदर्शनयोग-भक्तियोगा इति हि द्वितीयषट्काध्यायानां नामानि । एतेषां तत्पदार्थमात्रपरत्वे गमकं चिंत्यम् ॥ 'युक्त आसीत मत्परः' इति वचनं द्वितीयाध्यायगतमेतत्षट्कस्य मूलं इति यदभिप्रेतं, तदपि नीरसं दृश्यते ॥

तृतीयषट्कप्रतिपाद्यवर्णनेन व्याख्यात्रा बहुतरः क्लेशोऽनुभूतो ज्ञायते ॥ त्रयोदशाध्यायः खलु क्षेत्रक्षेत्रज्ञविभागयोगाभिधः, क्व तत्र जीवब्रह्मैक्य-मधिगम्यते ॥ किंच त्रयोदशाध्यायार्थस्य "वेदाविनाशिनं" इत्यनेन व्याख्यान-व्याख्येयभावो दुर्ज्ञेयः ॥ चतुर्दशाध्याये फलमुच्यते इत्याभिप्रयन् द्वितीयगतं "त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन" इति पद्यार्धं मूलत्वेनाददाति । त्रैगुण्येत्यनेन जीवन्मुक्तिदशा प्रतिपादितेति प्रतीतिर्भ्रान्तिः ॥ वस्तुतस्तत्र हि प्रतिपादितं वेदास्तावदापाततः स्वर्गादिफलककर्मादिप्रतिपादकाः, त्वं तु त्रिगुणसंबंधिस्वर्गादिबुद्धितो निर्गतो भव इति ॥ तथाच स्वर्गादि-फलेच्छां माकार्षीरिति वचनं जीवन्मुक्तिनिरूपकं कथं भवति ॥

'तदा गन्तासि निर्वेदं' इति मूलमादाय निर्वेदशब्दं वैराग्यार्थत्वेन भ्रान्त्वा पंचदशाध्यायं जीवन्मुक्तिदशासंबन्धिवैराग्यपरतया व्याख्याय प्रप-ञ्चकप्रपंच्यभावमाह मधुसूदनः ॥ निर्वेदो न वैराग्यं किंतु नितरां लाभः इति तच्छ्लोकव्याख्याने प्रदर्शितं द्रष्टव्यम् ॥

'त्रैगुण्यविषयाः' इति श्लोके पूर्वार्धं चतुर्दशाध्यायमूलत्वेन निरू-प्योत्तरार्धं षोडशाध्यायस्य सूत्रमाह ॥ 'नित्यसत्वस्थ' इत्युक्तिमादाय

षोडशे सात्विकश्रद्धायाः दैवसंपदश्च वर्णनं दृष्ट्वा उभयोर्व्याख्येयव्याख्यानभाव उक्तो ज्ञायते। निस्त्रैगुण्यो भवेत्युक्त्वा नित्यसत्वस्थो भवेति परस्परं विरुद्धं। विरोधशान्त्यै सत्त्वशब्दो न गुणपर इत्यभ्युपगन्तव्यं। ततो व्याख्येयव्याख्यानभावो दूरोत्सारितो भवति॥ यद्यपि द्वितीयाध्यायः कृत्स्नगीताशास्त्रसारसंग्रहः। तथापि इतस्ततः कस्यचित्पदस्य वाक्यस्य वा पूर्वोत्तरसङ्गतिं विना उत्तराध्यागतपदवाक्येभ्यो योजनं क्लेशमेव ज्ञापयति॥ 'स आत्मातत्त्वमसी'ति वाक्यमद्वैतसाधकमित्यादाय तदानुगुण्येन षट्कत्रयभावकथनं च क्लिष्टमवगम्यते। तस्य वाक्यस्य अतदितिपदच्छेदे भेदपरत्वेन, तदितिपदच्छेदेऽपि सादृश्यपरत्वेनाप्युपपत्त्या अभेदपरत्वानुपपत्तेः इत्यास्तां विस्तरः॥

ज्यायसीचेदित्यर्जुनप्रश्नस्य भावो बहुधा वर्ण्यते व्याख्यातृभिः॥ अत्राहुर्भास्कराः। कर्मणस्सकाशात् बुद्धिर्ज्यायसी चेत् कर्मणि कस्मान्नियोजयसि, तस्य मोक्षसाधनत्वाभावात् बुद्धेरेव तद्भावात्। मोक्षसाधनस्यैवाधिकारिणा संपाद्यत्वादित्यर्जुनप्रश्नाशयः॥ लोकेऽस्मिन्निति प्रतिवचने "कर्मयोगेन योगिनां" इत्यधिकारिविशेषाणां कर्मणैव मुक्तिरिति कर्मणो मोक्षसाधनत्वं भगवताऽभिप्रेतं इति॥ तन्न। कर्मणस्साक्षान्मोक्षसाधनत्वस्याप्रामाणिकत्वात्। 'नान्यः पन्था अयनाये'त्यादिनिरवकाशप्रमाणैर्ज्ञानस्यैव साक्षात् (प्रसादद्वारा) मोक्षसाधनत्वस्य शास्त्रे निर्णीतत्वात्॥

आह वृत्तिकारः, "ज्ञानकर्मणोस्समुच्चयमवधारयितुं प्रश्नः। प्रतिवचनंत्वाश्रमभेदमादाय अधिकारभेदं पुरस्कृत्य प्रवृत्तं" इति॥ तन्न। अस्य मते हि समुच्चयस्यैव सर्वाश्रमापेक्षयापि पुरुषार्थहेतुत्वमभ्युपगतं। तर्हि आश्रमभेदमादाय समाधानमनुचितं स्यात्॥ श्रुतिस्मृतीतिहासोपनिषत्सु ज्ञानादेव केवलान्मोक्षइत्युक्तेर्वृत्तिकाराभिमतस्समुच्चयवादोऽनुपपन्नइति शंकरभाष्ये विस्तरतः प्रत्याख्यातं। समुच्चयवादनिरसनं नास्माकमनिष्टं। यतस्समुच्चयस्य

मोक्षसाधनत्वं न वयं ब्रूमः । सत्कर्माणि ज्ञानमुत्पाद्य चरितार्थानि भवंति। ज्ञानादूर्ध्वमनुष्ठितानि तु मुक्तावानंदमभिवर्धयंतीतिह्याचार्यमतं ॥

ज्यायसीचेदित्यत्र चेदित्यस्य प्रतिक्षेपार्थकत्वं स्वीकृत्य भास्करवृत्तिकारौ व्याचक्षाते इत्यवगम्यते ॥ नायमत्र प्रतिक्षेपपरः । किंतु "वेदाश्चेत्प्रमाणं" इत्यत्रेव ज्ञातं तत्त्वमनूद्योपरितनां शंकां स्फुटयतीति प्रश्नार्थकएव ॥

गीतायां निकृष्टत्वेनोक्तं कर्म सकामं वा अकामं वेति विचार्यं ॥ अकाममिति परकीयव्याख्यातारस्सर्वे । सकामं कर्म विवक्षितमिति श्रीमदाचार्याशयः ॥

अकाम्यपक्षेऽस्त्यनुपपत्तिः ॥ ज्यायसीचेदिति प्रश्नेन स्पष्टमवगम्यते क्वचिदतीताध्याये कर्मणस्सकाशाद्बुद्धेर्ज्यायस्त्वं उपदिष्टमिति ॥ कुत्र निष्कामकर्मज्ञानयोस्तारतम्यमालोच्याद्यस्य निकृष्टत्वं उत्तरस्य ज्यायस्त्वं उक्तं भगवता । तच्च न ज्ञायते ॥ असंगं कर्म ज्ञानसाधनत्वेन तदंगमिति हेतोर्निन्दां नार्हति ॥ सकामं तु विगुणफलप्रापकमिति ज्ञानानङ्गतया ज्ञानप्रतिशिरस्कत्वेन तारतम्यपरीक्षामर्हति॥ निष्कामकर्मणः 'योगेत्विमां श्रृणु' 'बुद्ध्या युक्तो यया पार्थ कर्मबंधं प्रहास्यसि' 'नेहाभिक्रमनाशोऽस्ति' इत्यादिना प्रशंसितत्वाच्च निन्दाया अयोगः ॥ न च वाच्यं, ज्ञानतदुपाययोर्मध्ये आद्यस्य साक्षान्मोक्षहेतुत्वेन ज्यायस्त्वमभिप्रेतमिति, । तर्हि "तदेकं वद निश्चित्य इत्यर्जुनप्रश्नः अनुपपन्न आपद्येत । नहि ज्ञानोपकारकं कर्मेति जानतः स्वयं च ज्ञानार्थिनः एकं वदेत्युपायं विहाय उपेयप्रार्थना उचिता भवति ॥ निष्कामकर्म विवक्षितमिति वदंतस्सर्वेऽपि व्याख्यातारः तस्य निकृष्टत्वं अमुके स्थले द्वितीयाध्याये उपदिष्टं भगवतेति श्रृङ्गग्राहेण प्रदर्शयितुं बद्धा नाम ॥ एतदर्थं नीलकण्ठ आह, "'व्यवसायात्मिका बुद्धिः' इति श्लोकेन सांख्यनिष्ठावतां पातशङ्का नास्ति॥ कर्मयोगनिष्ठावतां तु साऽस्तीत्युक्तं ॥ 'यावानर्थ उदपाने' इति सांख्य-

निष्ठायां सर्वकर्मफलांतर्भावश्रवणाच्च" इति ॥ इदमतीव मन्दम्, यावानर्थ इत्यत्र काम्यफलस्य ज्ञानफलादवरत्वं खल्वुक्तम् ॥ व्यवसायेतिपद्यं प्रकृतानुपयुक्तमेव। तद्व्याख्याने या नीलकण्ठेन कर्मयोगस्य पातशङ्का उत्प्रेक्षिता सा निर्मूला ॥

अनन्यशरणौ शकरानंदमधुसूदनौ तु 'दूरेण ह्यवरं' इति पद्यमेव ज्ञानयोगात्कर्मयोगस्य निकृष्टत्वं वक्ति इत्यभिप्रयंतौ तदेवोदाहरतः ॥ अस्मिन् पद्ये तु काम्यकर्मैवाभिप्रेतमित्यविवादं। 'कृपणाः फलहेतवः' इति वाक्यशेषात्। निष्कामकर्मनिकृष्टत्वं प्रतिज्ञाय सकामकर्मपरस्य वाक्यस्य प्रमाणत्वेनोदाहरणमसंबद्धं इति मन्यमानेन स्वयूथ्येनापि वेंकटनाथेन निष्कामस्य ज्ञानान्निकृष्टत्वं नाद्याप्युपदिष्टं इत्यंगीकृतं ॥ बुद्धेः निष्कामकर्मणस्सकाशाज्ज्यायस्त्वं आर्थिकोऽर्थः इति रामानुजदेशिकयोराशयः ॥

एवं सति निष्कामकर्मणस्सकाशाद्बुद्धेर्ज्यायस्त्वस्याद्याप्यनुपदिष्टत्वे 'तथापि निष्कामं कर्म विवक्षितं' इति वदद्भिः ज्यायसीचेदित्याकारकप्रश्नस्योपपत्तिर्वा कल्पनीया, सकामं कर्म विवक्षितमिति वा पक्ष आश्रयणीयः ॥ आद्ये उद्यतस्सन्नाह वेङ्कटनाथः, "सन्दिग्धहृदयस्यार्जुनस्य विकल्परूपोऽयं प्रश्नः। ज्ञानकर्मणोरेकाधिकारिकत्वे किं ज्ञानं कर्मापेक्षया ज्यायः कि वा मोक्षे जनयितव्ये ज्ञानकर्मणोस्समप्राधान्यं ॥ आद्ये तत्रैवाहं नियोजयितव्यः न तु निकृष्टे कर्मणि ॥ द्वितीये आह 'घोरे' इति ॥ द्वयोरपि समत्वे हि सौम्ये ज्ञानएव प्रवर्तयितुमुचितं. न तु गुर्वादिवधरूपत्वेन क्रूरे युद्धे" इति ॥ इदमस्याकूतं ज्ञायते, नाद्यापि निष्कामकर्मणो निकृष्टत्वं समत्वं वाऽर्जुनो व्यजानात्। केवलं संशयात्मा विकल्परूपेण पप्रच्छ इति ॥ अत्रोपपादितविकल्पोऽनुपपन्नः। निष्कामकर्मणः ज्ञानोपायत्वात्। तस्य ज्ञानसमत्वं वा ज्ञानादवरत्वं वेति विकल्प्य न कोऽपि पृच्छेदिति भाति। स्वतन्त्रयोः एकफलयोः द्वयोरेव साधनयोः समादिविकल्पो

युज्यते । न तु साध्यसाधनभावापन्नयोः ॥ न च वाच्यं, असङ्गकर्मज्ञानयोर्हेतुहेतुमद्भावमजानता एवं पृष्टमिति ॥ यतः योगशब्दस्योपायपरत्वे न विद्यते विप्रतिपत्तिः । सांख्यस्योपायो निष्कामकर्मेति योगशब्दव्युत्पत्तेरधिगम्यमानत्वात् कथमर्जुनो नैतज्जज्ञौ ॥ एवं वेङ्कटनाथोपपादितविकल्पशिरस्कव्याख्याने तिरस्कृते अवशिष्यते पक्षः) (विवक्षितं ज्ञानादवरं कर्म काम्यमिति योऽवलम्बित आचार्येण )( इमं दूषयति वेङ्कटनाथः ( "कर्मशब्दस्य सकामकर्मपरत्वे तत्किं कर्मणि नियोजयसीत्युत्तरार्धासङ्गतेः । 'सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ । ततो युद्धाय युज्यस्व" 'माफलेषु कदाचन' 'योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा' इत्यादिना निष्कामकर्मनियोजनस्यैव प्रस्तुतत्वात् ।। यत्तु 'हतो वा प्राप्स्यासि स्वर्गं' इति सकामकर्मनियोजनवचनं । तत्तु सकामत्वपक्षेऽपि युद्धादुपरतिर्नकार्येत्येतत्परमेव । न तु तद्विधिपरं ॥ एतेन 'काम्यकर्मापेक्षया ज्ञानस्य ज्यायस्त्वे किमिति युद्धाख्ये काम्यकर्मणि मां नियोजयसीत्यर्थः' इति माध्वव्याख्यानमपि निरस्तं। उक्तरीत्या निष्कामकर्मण्येव नियोजयन्तं प्रत्येवंप्रश्नायोगात् ॥ कामनानिमित्तकानुष्ठानविषयत्वाविषयत्वाभ्यामेव काम्याकाम्यविभागव्यवस्थेति निकृष्टकाम्यनियोजने को हेतुरिति पृष्टवंतं प्रति "लोकेऽस्मिन् द्विविधा निष्ठा' इत्यादिप्रतिवचनस्याप्यसम्बद्धत्वाच्च" इति )।(अत्र हि द्वावाक्षेपौ प्रदर्शितौ। (१) सकामकर्मणि नियोजनं न कृतं, (२) लोकेऽस्मिन्निति प्रतिवचनमसंबद्धं इति ) अत्रोच्यते ( हतो वा प्राप्स्यसि स्वर्गमित्यत्र सकामकर्मणि नियोजनं खलु स्पष्टं दृश्यते। पाक्षिकतया भावकथनेऽपि कृतस्य नियोजनस्यापोहायोगात्।। नियोजनमेव न कृतं इति न वक्तुं शक्यते ।। तत्किं कर्मणि घोरे मां इति प्रश्नस्यानेकभावगर्भितत्वात् विकल्पकोटिविशेषानादाय लोकेऽस्मिन्निति निष्ठाभेदवर्णनोपेतं प्रतिवचनं चोपपद्यते )। विवक्षिताः भावाः प्रमेयदीपिकायां संग्रहेण ग्रथिताः पठ्यन्ते । तथाहि, "इदमुक्तं भवति ॥ आश्रमत्रयां

तानि यज्ञादीनि युद्धादीनि च काम्यानि कर्माण्येव, फलश्रवणात् ॥ 'सर्वएते पुण्यलोका भवन्ती'त्यादि । तथात्रापि "हतो वा प्राप्स्यसि स्वर्गं" इत्यादि ॥ चतुर्थाश्रमविहितानि शमादीन्यकाम्यानि, फलाश्रवणात्, "शान्तो दान्तः" इत्युपक्रम्य "आत्मानं पश्येत्" इति ज्ञानार्थत्वश्रवणाच्च ॥ ज्ञानं च काम्यकर्मणोऽप्युत्तममित्यभिहितं । ततश्च काम्ये कर्मणि युद्धे "युध्यस्व भारत" इति नियोजनमयुक्तं । किंतु चतुर्थाश्रमं स्वीकृत्य तद्धर्मनिष्ठो भवेति नियोक्तव्यं ॥ ननु युद्धमपि "कर्मबन्धं प्रहास्यसि" इत्युक्तत्वाज्ज्ञानार्थं भवतीति मतं, तदा व्यामिश्रेण वाक्येन बुद्धिमोहनमिवापद्यते ॥ अथैवं मतं युद्धादीनि कर्माणि काम्यान्यकाम्यानि च । तत्र यस्सकामः तं प्रति "हतो वा" इत्याद्युक्तं । यः पुनः ज्ञानार्थी तमुद्दिश्य "कर्मण्येवाधिकारः" इत्युक्तं तत्र का व्यामिश्रतेति ॥ तथापि शुद्धेषु निवृत्तिलक्षणेषु यत्याश्रमधर्मेषु सत्सु वैकल्पिकेषु नियोजनमयुक्तमेव । तत्र मनोविक्षेपाभावात् । अत्र तद्भावादिति ॥ किंच कामक्रोधादीनां नरकफलत्वमुक्तं । युद्धे च कामादयोऽवर्जनीयाः । ततोऽपि तत्र नियोजनमयुक्तं ॥ नन्वस्योत्तरं "सुखदुःखे समे कृत्वा" इत्युक्तं । सत्यं, तथापि रागादिप्रसक्तिहीनेषु शक्यानुष्ठानेषु यतिधर्मेषु सत्सु अशक्यानुष्ठाने युद्धे नियोजनमयुक्तमेवेति" इति ॥ अयं भावः, कानिचित्कर्माणि काम्यानि, कानिचिद्वैकल्पिकानि । श्रुतफलत्वेन काम्यानि सन्त्यपि फलाकामनया कृतानि चेदकाम्यानि ज्ञानार्थानि भवन्ति ॥ कानिचित्कर्माणि शुद्धानि अश्रुतज्ञानातिरिक्तफलत्वेनाकाम्यानि । येषां मनोविक्षेपाभावात् अधिकारिभेदेन काम्याकाम्योभयरूपत्वाख्यवैकल्पिकत्वाभावाच्च शुद्धत्वं, यथा यत्याश्रमविहितानां शमादीनां ॥ किं कर्मणि घोरे नियोजयसीत्यत्र प्रश्नद्वयमभिप्रेतं ॥ उभयोः प्रश्नयोरेवं व्याख्यानं, I. किं कर्मणि काम्ये । किं कर्मणि वैकल्पिके ॥ II. किं घोरे अवर्जनीयकामादौ रागादिप्रसक्तिहीनेषु शक्यानुष्ठानेषु यतिधर्मेषु सत्सु अशक्यानुष्ठाने युद्धे इति ॥

मेवार्जुनस्य योग्यं बुद्धिशक्त्यवस्थानुरूपं इति निश्चित्य वद ब्रूहि, येन ज्ञानेन कर्मणा वा अन्यतरेण श्रेयः अहं आप्नुयां इति ॥ यदि हि कर्मनिष्ठायां गुणभूतमपि ज्ञानं भगवता उक्तं स्यात्, तत् कथं "तयोरेकं वद" इत्येकविषयैव अर्जुनस्य शुश्रूषा स्यात् ॥ न हि भगवता पूर्वमुक्तं 'अन्यतरदेव ज्ञानकर्मणोर्वक्ष्यामि, नैव द्वयं' इति, येन उभयप्राप्त्यसंभवमात्मनो मन्यमान एकमेव प्रार्थयेत् ॥

रा ॥ अतो मिश्रवाक्येन मां मोहयसीव प्रतिभाति ॥ तथाह्यात्मावलोकनसाधनभूतायास्सर्वेन्द्रियव्यापारोपरतिरूपाया ज्ञाननिष्ठायास्तद्विपर्ययरूपं कर्म साधनं, तदेव कुर्विति वाक्यं विरुद्धं व्यामिश्रमेव, तस्मादेकममिश्ररूपं वाक्यं वद ॥ येन वाक्येनाहमनुष्ठेयरूपं निश्चित्य श्रेयः प्राप्नुयां ॥

विचारः

मोहयसीवेत्यत्र इवशब्दध्वनितोऽयं भावः । यद्यपि परमकारुणिको भवान् मम मोहशान्तये प्रवृत्तः । भावापरिज्ञानात्तु मन्दोऽहं मुह्यामि । वस्तुतो भवान्न मां मोहयति इति ॥ निश्चित्येत्यस्य वदेत्यनेनान्वयं विहाय आप्नुयां इत्यनेन योजने अस्ति स्वारस्यं ॥ सर्वज्ञस्य भगवतः प्रागनिश्चयायोगात्, व्यामिश्रवाक्येनापि परव्यामोहनमात्रस्य शङ्कितत्वात् अर्जुनस्यैव निश्चयाकाङ्क्षा युक्तेति देशिकः ॥ व्यामिश्रतानिरूपणे शाङ्करास्तु मन्यन्ते ॥ पूर्वाध्याये प्रथमं सांख्यमुपदिश्यानन्तरं तद्विरुद्धस्य क्रियाकारकफलभेदेन विपरीतस्य योगस्योपदेशः कृतः । उभयोरेकाधिकारित्वे व्याहतिः स्फुटेति ॥

किंचोक्तं "तस्मादेवं विदित्वैनं" इत्यर्जुनं प्रति ज्ञाननिष्ठा उपदिष्टा । योगप्रकरणेऽपि 'निस्त्रैगुण्यो भव निर्द्वंद्वो भव बुद्धौ शरणमन्विच्छ' इति ज्ञाने नियोगो दृष्टः ॥ स्थितप्रज्ञमहिमवर्णनेन यानिशेत्यादिना चार्जुनस्तत्रैव प्रेरितवांश्च भाति ॥ एतादृशोपदेशानां परमविरुद्धानि वाक्यानि कानिचिदन्यत्रदृष्टानि नाम ॥ तथाहि 'योगेत्विमां शृणु' 'बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि' 'कर्मण्येवाधिकारस्ते' 'धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते' 'योगस्थः कुरु कर्माणि' इत्यादीनि कर्मप्रवर्तकानि ॥ एवं विरुद्धयोर्वाक्यजातयोर्विना भिन्नाधिकारित्वमुपपत्तिर्नैव घटते इति ॥ अत्रोच्यते । ज्ञानकर्मणोर्यो विरोधोऽभिहितः स नैव तत्त्वम् ॥ यद्यर्जुनस्य ज्ञाने नाधिकारः तर्हि तं प्रति द्वितीयाध्यायो बहुशो निरर्थकस्स्यात् । बुद्धौ शरणमन्विच्छेति स्फुटनियोगोऽप्यसङ्गत आपद्येत ॥ कर्मण्येवाधिकार इत्यनेन ज्ञानानर्हत्वं न विवक्षितं । योगस्योपदेशस्तु ज्ञानाङ्गत्वेनैव कृतः, नतु तद्विरोधित्वेन वाऽन्याधिकारविवक्षया वा ॥ तस्मात् यदुक्तं मधुसूदनादिभिः, "एवं ज्ञानकर्मनिष्ठयोरेकाधिकारित्वे विकल्पसमुच्चययोरसंभवादधिकारिभेदज्ञानायार्जुनस्य प्रश्न इति स्थितं" इति ॥ तच्चिन्त्यं । अर्जुनं प्रति कर्मज्ञानयोर्द्वयोरप्युपदेशादुभयोरर्जुनोऽधिकारीत्येव गम्यते । एकस्य साधनत्वेन इतरस्य साध्यत्वेन विरोधो नास्त्येव ॥ यद्यपि कर्मयोगी ज्ञानयोगी भक्तियोगी इति विभागः प्रामाणिकः । एतेषां लक्षणापरिज्ञानाद्विरोधो भाति । उत्तरत्र लक्षणकथनेनायं परिहरिष्यते ॥ नहि कर्मयोगी ज्ञानभक्तिविधुरः । न ज्ञानयोगी कर्मभक्तिविहीनः । नापि भक्तियोगी कर्मज्ञानशून्यः ॥ तस्मादर्जुनस्य मानुषे लोके कर्मयोगित्वेऽपि सांख्यप्रकरणं स्थितप्रज्ञप्रकरणं च तं प्रति निरर्थकत्वेन न भ्रमितव्यं ॥

ननु तर्हि कथं व्यामिश्रिता, एकंवदेत्यनेन विवक्षितौ द्वौ कौ इति संदिह्यते । उच्यते । "हतो वा प्राप्स्यसि" इत्यनेन काम्यमपि कर्तव्यमुक्तं ।

“ योगस्थःकुरु कर्माणि ” इत्यसंगं कर्म प्रशंसितं॥ अनयोर्विरोधमालक्ष्य व्यामिश्रेणैवेत्युक्तमर्जुनेन ॥ युद्धं सकामं अकामं चेति कर्तृभावभेदविवक्षया समाधाने तु सत्सु यत्याश्रमविहितेषु शुद्धाकाम्येषु कर्मसु, कुतो वैकल्पिके युद्धे नियोगः । काम्याकाम्ययोर्मध्ये वैकल्पिकशुद्धकर्मणोर्मध्येवा मदनुष्ठेयमेकं वद निश्चित्य प्राप्स्यामि कल्याणमिति प्रश्नाशयः )॥( ज्ञाननिष्कामकर्मणोर्मध्ये एकं वद इति शांकराणां व्याख्यानं )॥ ज्ञानकर्मणोर्मध्ये एकंवदेति शाङ्कराणां व्याख्यानं दुष्टं इति मत्वा देशिकस्त्वन्यथा व्याचष्टे मिश्रामिश्रवाक्ययोर्मध्येऽमिश्रं वाक्यं वदेति ॥

*श्रीभगवानुवाच-*

**लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ ।**
**ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥३॥**

वि ॥ यद्यपि सर्वकर्माण्याश्रमत्रयविहितानि काम्यकामिभेदेन काम्यान्यकाम्यानि चेति वैकल्पिकानि ॥ यतिधर्मास्तु शमादयः केवलमकाम्याः युद्धकर्मैव नरकाद्यन रागद्वेषोपेताश्च न भवंति ॥ तथापि तेषामनाधिकारिकयत्वात्, तव च जनकप्रियव्रतादेरिव आधिकारिकत्वात् सुखदुःखे समे कृत्वेत्यत्रोक्तदिशा भगवद्भक्त्या स्वधर्मत्वेनानुष्ठाने पापानवाप्तेर्वैकल्पिकेऽपि युद्धकर्मण्येव नियोज्य इति भावेनाद्यप्रश्नस्योत्तरमाह ॥ लोक इत्यादिना ॥ द्वितीयस्य तु श्रेयानित्यादिनाऽग्रे ध्येयं ॥ अस्मिन् लोके

साधकवर्गे निष्ठा स्वरूपेण स्थितिः मुक्तिरिति यावत् । यद्वा निष्ठा नितरां संसारगतिनिवृत्तिः द्विविधा द्विप्रकारा द्विविधसाधनसाध्येत्यर्थः । पुरा मया प्रोक्ता ॥ हे अनघेति सम्बुद्धिः ॥ कथमित्यत आह ॥ सांख्यानां ज्ञानप्रधानानां देवानां सनकादियतीनां च ज्ञानयोगेन । प्राचुर्याज्ज्ञानस्योक्तिः ॥ अप्रचुरकर्मोपेतप्रचुरज्ञानोपायेन जपध्यानादिना निष्ठा मुक्तिः ॥ योगिनां कर्मरूपोपायवतां कर्मयोगेन अप्रचुरज्ञानोपेतेन प्रचुरकर्मोपायेन निष्ठा मुक्तिः॥ योगिनामित्यनन्तरं इतिशब्दोऽध्याहार्यः ॥ अत्र भगवज्ज्ञानिनामप्युभयेषां न ज्ञानमात्रेण स्वयोग्ययावदानन्दानुभवरूपसम्पूर्णमुक्तिः । अपि तु कर्मसमुचितेनैव ॥ तत्र केचन सनकादयो यतयः स्वगतज्ञानकर्मणोर्मध्ये ज्ञानप्रचुरास्सन्तो मुक्तिभाजः ॥ केचित्तु जनकप्रियव्रतादयो गृहस्थाः स्वगतज्ञानकर्मणोर्मध्ये प्रचुरकर्माणस्सन्त एव मुक्तिभाजो भवन्ति ॥ आधिकारिकतया तथैव भगवता क्लृप्तत्वात् ॥ तथाच त्वमप्याधिकारिक इति कर्मणि विनियोज्य एवेति भावः ॥ अत्र नीरमिश्रक्षीरे क्षीरशब्दप्रयोगवत्प्राचुर्याभिप्रायेण ज्ञानयोगेन कर्मयोगेनेत्येकैकोक्तिरिति ज्ञेयम् ॥

शं ॥ प्रश्नानुरूपमेव प्रतिवचनं श्रीभगवानुवाच ॥ लोकेऽस्मिन्निति ॥ लोके अस्मिन् शास्त्रार्थानुष्ठानाधिकृतानां त्रैवर्णिकानां द्विविधा द्विप्रकारा निष्ठा स्थितिः अनुष्ठेयतात्पर्यं

पुरा पूर्वं, सर्गादौ प्रजास्सृष्ट्वा तासां अभ्युदयनिश्रेयसप्राप्तिसाधनं वेदार्थसंप्रदायं आविष्कुर्वता प्रोक्ता मया सर्वज्ञेन ईश्वरेण ॥ हे अनघ अपाप । तत्र का सा निष्ठा द्विविधा इति आह ॥ ज्ञानेति । तत्र ज्ञानयोगेन ज्ञानमेव योगः तेन सांख्यानां आत्मानात्मविषयविवेकविज्ञानवतां ब्रह्मचर्याश्रमादेव कृतसन्न्यासानां वेदान्तविज्ञानसुनिश्चितार्थानां परमहंसपरिव्राजकानां ब्रह्मण्येवावस्थितानां निष्ठा प्रोक्ता, कर्मयोगेन कर्मैव योगः कर्मयोगः तेन कर्मयोगेन योगिनां कर्मिणां निष्ठा प्रोक्ता इत्यर्थः ॥ यदि चैकेन पुरुषेण एकस्मै पुरुषार्थाय ज्ञानं कर्म च समुच्चित्य अनुष्ठेयं भगवता इष्टमुक्तं वक्ष्यमाणं वा गीतासु वेदेषु चोक्तं, कथमिहार्जुनायोपसन्नाय प्रियाय विशिष्टभिन्नपुरुषकर्तृके एव ज्ञानकर्मनिष्ठे ब्रूयात् ॥ यदि पुनरर्जुनः ज्ञानं कर्म च द्वयं श्रुत्वा स्वयमेवानुष्ठास्यति, अन्येषां तु भिन्नपुरुषानुष्ठेयतां वक्ष्यामीति मतं भगवतः कल्प्येत, तदा रागद्वेषवानप्रमाणभूतो भगवान्कल्पितस्स्यात् । तच्चायुक्तं । तस्मात्कयापि युक्त्या न समुच्चयो ज्ञानकर्मणोः ॥

रा० ॥ पूर्वोक्तं न सम्यगवधृतं त्वया, पुरा ह्यस्मिन लोके विचित्राधिकारिपूर्णे द्विविधा निष्ठा ज्ञानकर्मविषय यथाधिकारमसंकीर्णैव मयोक्ता । न हि सर्वो लौकिकः पुरुष स्संजातमोक्षाभिलाषस्तदानीमेव ज्ञानयोगाधिकारे प्रभवति

अपित्वनभिसंहितफलत्वेन केवलपरमपुरुषाराधनानुष्ठितेन कर्मणा विध्वस्तस्वान्तमलोऽप्याकुलेन्द्रियो ज्ञाननिष्ठायामधिकरोति, "यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततं । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥" इति परमपुरुषाराधनैकवेषता कर्मणां वक्ष्यते, इहापि 'कर्मण्येवाधिकारस्ते' इत्यादिना अनभिसंहितफलं कर्मानुष्ठेयं विधाय तेन विषयव्याकुलतारूपमोहादुत्तीर्णबुद्धेः 'प्रजहाति यदा कामान्' इत्यादिना ज्ञानयोग उदितः ॥ अतस्साङ्ख्यानामेव ज्ञानयोगेन स्थितिरुक्ता ॥ योगिनां तु कर्मयोगेन ॥ संख्या बुद्धिः तद्युक्तास्सांख्याः । आत्मैकविषयया बुद्ध्या संबाधिनस्सांख्याः, अतदर्हाः कर्मयोगाधिकारिणो योगिनः ॥ विषयव्याकुलबुद्धियुक्तानां कर्मयोगेऽधिकारः; अव्याकुलबुद्धिनां तु ज्ञानयोगेऽधिकार उक्त इति न किंचिदिह विरुद्धं व्यामिश्रमभिहितं ॥

विचारः ॥

(अत्र 'पुरा' इत्यस्य शाङ्करं व्याख्यानं अपूर्वं द्रष्टव्यं । सर्गादौ प्रजाः सृष्ट्वा तासां अभ्युदयनिश्रेयसप्राप्तिसाधनं आविष्कृतं भगवतेति ॥ पुरा पूर्वकाले मया वेदरूपेण प्रोक्ता मदैकरीत्या कर्तव्यत्वेन विहिता इति व्याख्याय, "तमेवैकं विजानथ" "वेदान्तविज्ञानसुनिश्चितार्थाः" "सर्वं खल्विदं ब्रह्म" इत्यादीनि ज्ञानयोगसंबन्धीनि,) ("अहरहस्सन्ध्यामुपासीत" "कुर्वन्नेवेह कर्माणि" इत्यादीनि कर्मयोगपराणि इति वेदरूपेण भगवता विभागस्योपदिष्टत्वं निरूपयति शङ्करानन्दः ) (नीलकण्ठमधुसूदनश्रीधरादयस्तु, "पुरा पूर्वाध्याये" इति व्याचक्षते । तैरेतदनुगुणानि वा-

क्यानि द्वितीयाध्यायगतान्युदाहृतानि च ।। यदेतैश्शङ्करभाष्यविरुद्धं वर्णितं तन्नेति प्रत्याख्याति उत्कर्षदीपिकाकारः । प्रोक्तेत्येतावतैव निर्वाहे लोकेऽस्मिन्नित्यस्य पुरेत्यस्य च वैयर्थ्यप्रसंग, "इमं विवस्वते योगं प्रोक्तवानहमव्ययं" इति वक्ष्यमाणसंवादं च स्वाचार्यभाष्यदार्ढ्याय युक्तिमाह ।। इयं युक्तिर्दुर्बला । द्वितीयाध्याये व्यामिश्रवाक्यान्युक्तानि इति शङ्कायां तत्रैव द्विविधा निष्ठा प्रोक्ता । न तत्र व्यामिश्रता वस्तुतो दृश्यते इति कथनं खलु उचितं । उक्तार्थे दोषशङ्का नोपपद्यते इति हि वक्तुं पुरेतिद्वितीयाध्यायस्य परामर्शस्सङ्गतो भाति । तथा लोकेऽस्मिन्नित्यपि सार्थकं । विचित्राधिकारिपूर्णे भूलोके हि अधिकारिविभागवर्णनं उपपन्नं । न तद्देवादिलोकविवक्षया घटते ।।

एवं वेदरूपेण मया प्रोक्ता इत्यपि क्लिष्टम् ।। व्यामिश्रेण वाक्येन बुद्धिं मोहयसीव मे इति द्वितीयाध्यायान्मोहे शंकिते, न मया द्वितीयाध्याये मोहबीजान्युपदिष्टानि । तत्र तवाधिकारिकत्वविवक्षया वाक्यानि प्रवृत्तानि । तद्भावं न सम्यगध्यगच्छः इति वाक्यार्थे हि स्वारस्यं दृश्यते ।।

द्विविधा निष्ठा, साङ्ख्यानां एवं, योगिनां एवं, इति भगवत्प्रतिवचनमतिगूढाभिसन्धिगर्भितं भाति । प्रश्नानुगुणं प्रतिवचनमित्यत्र न संशयः । प्रश्नभावस्य बाहुविध्यं प्रदर्शितमुपरिष्टात् । प्रतिवचनेऽपि तन्निबन्धना प्रतिपत्तिर्दृश्यत एव ।।

(प्रायशस्सर्वे परकीयाः अर्जुनस्य अयोग्यत्वेन अज्ञत्वेन अशक्तत्वेन नैच्यमुपपाद्य तस्य कर्मयोगित्वं वर्णयन्ति ।। अशुद्धान्तःकरणानां कर्मयोगः, शुद्धान्त.करणानां ज्ञानयोगः, ज्ञानभूमिकारूढानां ज्ञानयोगः, आरुरुक्षूणां कर्मयोगः इति विभज्य अर्जुनं कर्मयोगिष्वज्ञेषु परिगणयन्ति । तदानुगुण्येन श्लोकाक्षराणि व्याख्यातानि च ।) तथाहि "निष्ठा स्थितिः अनुष्ठेयतात्पर्य । द्विविधा द्विप्रकारा । ज्ञानमेव योगः ज्ञानयोगः कर्मैव योगः

कर्मयोगः। ज्ञानं ब्रह्मणा मुमुक्षुं योजयतीति योग उच्यते ॥ कर्म कर्मिणं ज्ञानेनाभ्युदयेन वा योजयतीति योग उच्यते । सांख्याः शुद्धान्तःकरणाः । योगिनोऽशुद्धान्तःकरणाः । अन्तःकरणशुद्ध्यशुद्ध्योर्विवक्षया अवस्थाभेदेनाधिकारिभेदः ॥ एकैव निष्ठा साध्यसाधनावस्थाभेदेन द्विप्रकारा न तु द्वे एव स्वतन्त्रे निष्ठे इति कथयितुं निष्ठेत्येकवचनं" इति सामान्यतः परकीयाशयः ॥ एतन्निरूपणावसरे केचिदधिकतरमद्वैतावलम्बभराः शङ्करानन्दादयः सांख्यादिशब्दान् विशेषतोऽपि व्याचक्षते ॥ "सांख्यं वेदान्तैस्सर्वैः सम्यक् ख्यायते तात्पर्येण प्रतिपाद्यते इति सांख्यं निर्विशेषं परं ब्रह्म । तदेव स्वात्मत्वेन ये विदुः ते सांख्याः ॥ ज्ञानयोगेन ब्रह्मविद् ब्रह्मणा युज्यते एकीक्रियतेऽनेनेति योगः ज्ञानमेव योगः सर्वमिदमहंच ब्रह्मैवेति ब्रह्माकारवृत्त्या निष्ठा नैश्चल्येन स्थितिः" इत्यादि तद्वाक्यं । नेहैतामद्वैतप्रक्रियां निराकर्तुमवसर इतीयमत्रोपेक्ष्यते ॥

ननु अनघेतिसंबोधनेन अर्जुनस्य निरवद्यत्वं खलु गम्यते । कथं नामासावशुद्धांतःकरणः इति शंकां देशिकस्समाधत्ते॥ 'यथास्मिन् लोकेऽनघतया त्वमपवर्गसाधनेऽधिकरोषि इतरेतु काम्यादौ, तद्वत् अनघमात्रस्य कर्मयोगेऽधिकारः अनघतराणांतु ज्ञानयोगे इति संसारदाहज्वरचिकित्सकस्य सर्वज्ञस्य भिषजः तत्तदवस्थोऽचितोऽयमुपदेशः' इति ॥ एवमर्जुनमनधिकारिणमशुद्धस्वांतमशक्त मन्वाना व्याख्यातारः पूर्वत्र यत्सांख्यमुपदिष्ट न तदर्जुनं प्रतीति निर्णयंति ॥ श्रीमदाचार्यस्तु न सहतेऽर्जुनस्योक्तरीत्या नैच्यं ॥ पार्थार्ष्टिषेणेति द्वितीयस्कंधभागवतेऽर्जुनस्य ज्ञानिषु गणनात् । इंद्रसुतत्वेन देवांशत्वात् । नरांशत्वाच्च ॥ अनघेति प्रकृतश्लोके संबोधनमपि ज्ञानित्वपक्षं सवादयति ॥ नास्मिन् श्लोके अवरत्वेनार्जुनोपालंभो विवक्षितः । किंतु अर्जुनोत्कर्षमेव वक्ति पद्यं । तथाहि, निष्ठेति मोक्षोऽभिहितः 'मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थिति'रित्युक्तेः । निष्ठा स्थितिः । स्वरूपेणेति योग्यतया संबध्यते ॥

निष्ठेति परिसमाप्तिर्वा बोध्यते । संसारपरिसमाप्तिर्मोक्षः ।। निष्ठेत्युक्ता मुक्तिः द्विविधा द्विप्रकारसाधनसाध्या ।। जनास्तावद्विविधाः । केचन गार्हस्थ्यत्यागेन सनकादिवज्ज्ञानिनः सांख्याः। केचन गृहस्थाअपि ज्ञाननिष्ठाः उपायिनः जनकप्रियव्रतादिवद्योगिनः ।। अत्र यथा सांख्याः ज्ञानिनः तथा योगिनोऽपि ज्ञानिनः। केवलं गार्हस्थ्यत्यागावलबाभ्यां विशेषः ।। इह प्रियव्रतोपाख्यानं भागवतपंचमस्कधोक्तं स्मरणीयं—

" प्रियव्रतो भागवत आत्मारामः कथं मुने ।
गृहेऽरमत यन्मूलः कर्मवन्धः पराभवः ।।
संशयोऽयं महाब्रह्मन् दारागारसुतादिषु ।
सक्तस्य यत्सिद्धिरभूत् कृष्णे च मतिरच्युता ।।" इति प्रश्नः,

स्वायंभुवमनुरस्य पिता राज्यं वहेत्येनमुवाच ।। सन्न्यासाभिनिविष्टचित्तत्वेन नासावनुजज्ञौ । तदा ब्रह्मा तमुपदिदेश

" त्वत्वब्जनाभांघ्रिसरोजकोश-
दुर्गाश्रितो निर्जितषटसपत्नः ।
भुंक्ष्वेह भोगान्पुरुषातिसृष्टान्
विमुक्तसङ्गः प्रकृति भजस्व ।।" इति ।।

अनन्तरं " जगतीपतिरीश्वरेच्छयाधिनिवेशितकर्माधिकारोऽखिलजगद्बन्धध्वंसनपरानुभावस्य भगवतः आदिपुरुषस्यांघ्रियुगलानवरतध्यानानुभावेन परिरन्धितकषायाशयावदातोऽपि मानवर्धनो महीतलमनुशशास" इति भागवते ।।

अर्जुनोऽप्येवमाधिकारिकः पुमान् । तस्मात्सत्सु यतिधर्मेषु शुद्धाकाम्येषु चित्तविक्षेपावकाशशून्येषु प्रियव्रतवदाधिकारिकत्वेनोत्कृष्टत्वात् वैकल्पिके युद्धे तस्य नियोजनं इति भावः ।।

"प्रजापाश्च तथा देवाः महाधिकारिणस्स्मृताः ।
ऋष्यशीतिस्तथा सप्त पितरोऽप्सरसां शतम् ॥
गन्धर्वाणां तथा राज्ञां विंशदन्यासु जातिषु ।
अल्पाधिकारिणः प्रोक्ता अनधिकारिणः परे" ॥ इति

ब्रह्माण्डपुराणवचनं पञ्चमस्कन्धतात्पर्योदाहृतम् ॥ एतेन देवाना-माधिकारिकत्वावगमादर्जुनस्येन्द्रावतारतया देवत्वेनाधिकारिकत्व ज्ञेयम् ॥

यद्यपि निष्ठा द्विविधा इति गीतावाक्यं । तथापि जनाः द्विविधाः सन्तीत्येवार्थः । एवमेव श्रीमदाचार्यभाष्यम् ॥ परव्याख्याने एकस्यैव पुरुषस्य गृहस्थाद्याश्रमस्वीकारेण तद्विहितधर्मैः कर्मनिष्ठानन्तरं यत्याश्रमस्वीकारेण पुनस्तदुक्तैर्धर्मैर्ज्ञाननिष्ठेति उपपादितं ॥ श्रीमदाचार्याभिप्रायस्तु कैश्चिदाधिकारि-कपुरुषविशेषैरेव गृहस्थाश्रममपरित्यज्यैव तद्विहितकर्माणि निष्कामनयाऽनुष्ठे-यानीति । अतो ज्ञाननिष्ठा एकैव, जनास्तु द्विविधाः इति व्याख्यानम् ॥

यद्यप्यधिकारशब्दं पुरस्कृत्य परव्याख्यानानि प्रवृत्तानि । अर्जुनस्य ज्ञानानधिकारे पर्यवसितानि च ॥ श्रीमदाचार्यव्याख्यानन्तु अधिकारभेद-मादाय अर्जुनस्य विशेषत आधिकारिकत्वं स्थापयतीतीयान्विशेषः ॥

अथात्रान्योऽपि भ्रमः परिहरणीयः ॥ केचित् कर्मयोगिनां ज्ञानवैधुर्यं ज्ञानयोगिनां कर्मवैधुर्यं मन्वानाः कर्मयोगज्ञानयोगयोः परस्परविरोधं ब्रुवते ॥ यदि कर्मयोगी ज्ञानगन्धाविधुरः तर्हि कर्मयोगिनां जनकादीनामपि मोक्षो दुर्लभ आपद्येत । "नान्यः पन्था अयनाय" इत्यादि प्रमाणैर्विना ज्ञानं मोक्षस्यायोगात् ॥ यत्परैरुक्तं ज्ञानमेव योगः ज्ञानयोगः कर्मैव योगः कर्म-योगः इति तदसङ्गतं, ज्ञानप्रचुरो योगः ज्ञानयोगः कर्मप्रचुरो योगः कर्मयोगः इत्येव व्युत्पत्तिरुचिता ॥

" सांख्या ज्ञानप्रधानत्वात् देवाश्च यतयस्तथा ।
मुख्यसांख्यास्तत्र देवाः ज्ञानमेषां महद्यतः ॥
बहुकर्मकृतोऽप्येते ततोऽपि बहुवेदनात् ।
मुख्यसांख्या इति ज्ञेयाः तदन्ये कर्मयोगिनः ॥
ज्ञानिनोऽप्यतिबाहुल्यात् कर्मणः कर्मयोगिनः ।
नोभयं तद्विना कश्चित्पुमान्हि पुरुषार्थभाक् ॥
नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
नहि ज्ञानं विना कर्म पुरुषार्थकरं भवेत्" । इति ब्रह्मवैवर्ते ॥

तस्मात्प्राचुर्यविवक्षयैव कर्मयोगी ज्ञानयोगीत्यादिशब्दाः प्रयुज्यंते । यथा क्षीरव्यवहारस्तथा ॥ भक्तियोगि-ज्ञानियोगि-कर्मयोगि लक्षणान्यत्र कथितानि पठ्यंते—

" भगवद्गुणानुसारेण वेदार्थो नीयते हि यैः ।
भक्तियोगास्तु ते प्रोक्ताः तादृशा हि सुरास्सदा ॥
अंगानुसारिवेदार्थ ज्ञात्वा तदनुसारतः ।
भगवद्गुणा यैर्नीयंते ते प्रोक्ता ज्ञानयोगिनः ॥
कर्माणि शास्त्रतो ज्ञात्वा तत्प्राधान्यानुसारतः ।
विज्ञाता यैर्गुणा विष्णोर्ज्ञेयास्ते कर्मयोगिनः ॥
देवानामपि कर्मित्व विद्यते यद्यपि स्फुटं ।
तथापि प्रत्यवायित्वान्मनुष्याः कर्मयोगिनः ॥
स्वेस्वेऽधिकारे या निष्ठा स गुणःपरिकीर्तितः ।
विपर्ययस्तु दोषः स्यादुभयोरेष निर्णयः" ॥ इति ॥

**न कर्मणामनारंभान्नैष्कर्म्यं पुरुषोऽश्नुते ।**
**न च संन्यसनादेव सिद्धिं समधिगच्छति ॥४॥**

वि ॥ यतिधर्माः शमादय एवानुष्ठेयाः न तु गृहिधर्माः । तत्रापि न घोरं युद्धकर्मेतिवादिनं पार्थंप्रति तव जनकादेरिवाधिकारिकत्वात् वर्णाश्रमोचिताः धर्मास्त्वयाऽनुष्ठेया एवेत्युक्तं ॥ इदानीं कर्म न कार्यमिति वदतः, किं कर्माकरणप्राप्यत्वहेतुना मुक्तेर्नैष्कर्म्यशब्दवाच्यत्वात्तदन्यथानुपपत्त्या कर्म न कार्यमित्यभिप्रायः, उत कर्मणस्संसारबीजत्वात्तदकरणं मुक्तिहेतुरिति, "कर्मणा बध्यते जन्तु"रिति स्मृतेः कर्मणो मुक्तिप्रतिबन्धकत्वाद्वा ॥ आद्यं निराह ॥ नेति ॥ कर्मणामनारम्भात् अकरणान्नैष्कर्म्यं कर्माकरणप्राप्यत्वहेतुना नैष्कर्म्यशब्दवाच्यं मोक्षमश्नुते इति यत्त्वयोक्तं तन्न भवति ॥ कुत इत्यत उक्तं पुरुष इति । पुराणि शरीराणि सरति प्राप्नोतीति पुरुसः, पुरुस एव पुरुषः । हेतुगर्भमिदम् । सदा सूक्ष्मेण स्थूलेन च देहेन युक्तत्वादिति ॥ कर्माकरणमात्रेण मोक्ष इति पक्षे कदाचित्कर्मानधिकारशरीरस्यापि सम्भवेन तद्देहे कर्माकरणनिमित्तमोक्षप्राप्त्याऽधुना दृश्यमानं पुरुषत्वं न स्यादिति भावः ॥ नैष्कर्म्यशब्दवाच्यत्वं तु काम्यकर्माप्राप्यत्वनिमित्तेनोपपन्नं । मया तु निवृत्तकर्मण्येव नियोगः क्रियत इति भावः ॥ द्वितीयमपि निराह ॥ नेति ॥ कर्म-

णामनारम्भादकरणान्नैष्कर्म्यं काम्यकर्माप्राप्यं मोक्षमश्नुते, सम्सारबीजभूतकर्माभावात् इति त्वयोक्तं यत्तन्न । कुतः, पुरुष इति ॥ प्राग्वदेवार्थः । अनादौ सम्सारे कर्माधिकृतानन्तजन्मसम्भवेन सदा पुरुषशब्दितदेहयुतत्वात्तत्र कृतानन्तकर्मणां भावेनाद्यतनदेहावच्छेदेन कर्माकरणमात्रेण सम्सारबीजाभावकृतमोक्षाशा कुतः स्यादिति भावः ॥ तृतीयपक्षनिरासस्तु यज्ञार्थात्कर्मणोऽन्यत्रेत्यादौ वक्ष्यते ॥

ननु 'निष्कामं ज्ञानपूर्वं तु' इति स्मृतौ निवृत्तकर्मणा मोक्ष उच्यते ॥ तस्य मोक्षहेतुत्वे फलान्तराभाव एव युक्तिर्नत्वन्या । तथाच कर्माकरणस्यापि फलान्तराभावरूपयुक्तिसाम्यात्, आयासाभावरूपगुणवत्त्वाच्च कर्माकरणादपि मोक्षः स्यात् । एवं 'त्ययि नान्यथेतोऽस्ती'त्यादौ श्रुतः कर्माकरणे प्रत्यवायस्तु अमुमुक्षुविषयतयोपपन्नः इत्यत आह ॥ न चेति ॥ संन्यसनात् काम्यकर्माकरणादेव । तन्मात्रादिति यावत् ॥ अनेन निवृत्तकर्मकरणमुपलक्ष्यते । निवृत्तकर्मकरणमात्रात्सिद्धिं मोक्षं पुरुषो न समधिगच्छति प्राप्नोति । किन्तु तेनान्तःकरणशुद्धिविषयवैराग्यश्रवणमननध्यानज्ञानद्वारैव ॥ 'निवृत्तं सेवमानस्तु ब्रह्माभ्येती'ति स्मृतेरप्ययमेवाभिप्रायः । तथाच न तत्प्रतिबन्धा कर्माकरणस्य मोक्षहेतुत्वं शङ्क्यमिति भावः ॥ ननु यत्याश्रमधर्माणां श्रुत्यादिसिद्धे मुक्तिहेतुत्वे फलान्तराभाव एव युक्ति-

रिति तत्प्रतिबन्धाऽस्तु कर्माकरणस्य मुक्तिहेतुत्वमित्यतोऽप्युक्तं ॥ नचेति । संन्यसनात् यत्याश्रमादेवेत्यर्थः ॥ सतु भगवति मनःसमाधानद्वारा तत्प्रीतिविशेषद्वारा वा मुक्तिहेतुर्न फलान्तराभाववत्त्वहेतुना । येन तत्प्रतिबन्धापि फलान्तराभावयुक्त्या कर्माकरणस्य मुक्तिहेतुत्वं शंक्येतेति ॥ एतेन लोक इति पूर्वश्लोकोक्तदिशा न केवलं आधिकारिकत्वात्तव कर्मणि नियोगः, अपितु कर्माकरणस्य त्वदुक्तरीत्या मुक्तिहेतुत्वाभावादपीति हेत्वन्तरमुक्तं भवति ॥

शं ॥ यदर्जुनेनोक्तं कर्मणो ज्यायस्त्वं बुद्धेः, तच्च स्थितं, अनिराकरणात् । तस्याश्च ज्ञाननिष्ठायाः संन्यासिनैवानुष्ठेयत्वं, भिन्नपुरुषानुष्ठेयत्ववचनात् । भगवतः एवमेव अनुमतमिति गम्यते । मां च बन्धकारणे कर्मण्येव नियोजयसि इति विषण्णमनसं अर्जुनं कर्म नारभेइत्येवं मन्वानं आलक्ष्य आह भगवान् ॥ न कर्मणां अनारंभात् इति ॥ अथवा ज्ञानकर्मनिष्ठयोः परस्परविरोधात् एकेन पुरुषेण युगपत् अनुष्ठातुं अशक्यत्वे सति, इतरेतरानपेक्षयोरेव पुरुषार्थहेतुत्वे प्राप्ते, कर्मनिष्ठाया ज्ञाननिष्ठाप्राप्तिहेतुत्वेन पुरुषार्थहेतुत्वं, न स्वातन्त्र्येण । ज्ञाननिष्ठा तु कर्मनिष्ठोपायलब्धात्मिका सती स्वातन्त्र्येण पुरुषार्थहेतुः अन्यानपेक्षा इत्येतं अर्थं प्रदर्शयिष्यन् आह भगवान् । न कर्मणामिति । कर्मणां क्रियाणां यज्ञादीनां इह जन्मनि जन्मान्तरे वा

अनुष्ठितानां, उपात्तदुरितक्षयहेतुत्वेन सत्त्वशुद्धिकारणानां तत्कारणत्वेन च ज्ञानोत्पत्तिद्वारेण ज्ञाननिष्ठाहेतूनां, "ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः । यथादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि" इत्यादिस्मरणात्॥ अनारम्भात् अननुष्ठानात् नैष्कर्म्यं निष्कर्मभावं कर्मशून्यतां ज्ञानयोगेन निष्ठां, निष्क्रियात्मस्वरूपेणैव अवस्थानं इति यावत्॥ पुरुषः न अश्नुते न प्राप्नोतीत्यर्थः ॥ "न कर्मणां अनारम्भात् नैष्कर्म्यं पुरुषोऽश्नुते" इति वचनात् तद्विपर्ययात् तेषां आरम्भात् नैष्कर्म्यं अश्नुते इति गम्यते ॥ कस्मात् पुनः कारणात् कर्मणामनारम्भात् नैष्कर्म्यं न अश्नुते इति,? उच्यते । नैष्कर्म्योपायत्वात् कर्मारम्भस्य ॥ न हि उपायमन्तरेण उपेयप्राप्तिरस्ति ॥ कर्मयोगोपायत्वं च नैष्कर्म्यलक्षणस्य ज्ञानयोगस्य श्रुतौ इह च प्रतिपादनात् ॥ श्रुतौ तावत् प्रकृतस्य आत्मलोकस्य वेद्यस्य वेदनोपायत्वेन "तमेतं वेदानुवचनेन ब्राह्मणाः विविदिषन्ति यज्ञेन" इत्यादिना कर्मयोगस्य ज्ञानयोगोपायत्वं प्रतिपादितं ॥ इहापि च, "संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः" "योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये" "यज्ञो दानं तपश्चैव पावनानि मनीषिणां" इत्यादि प्रतिपादयिष्यति ॥ ननु च "अभयं सर्वभूतेभ्यो दत्वा नैष्कर्म्यमाचरेत्" इत्यादौ कर्तव्यकर्मसंन्यासादपि नैष्कर्म्यप्राप्तिं दर्शयति, लोके च

"कर्मणामनारम्भान्नैष्कर्म्यं" इति प्रसिद्धतरं । अतश्च नैष्कर्म्यार्थिनः किं कर्मारम्भेण इति प्राप्तं। अत आह ॥ नच संन्यसनादेव इति॥ नापि संन्यसनादेव केवलात् कर्मपरित्यागमात्रादेव ज्ञानरहितात् सिद्धिं नैष्कर्म्यलक्षणां ज्ञानयोगेन निष्ठां समधिगच्छति, न प्राप्नोति ॥

रा० ॥ सर्वस्य लौकिकस्य पुरुषस्य मोक्षेच्छायां जातायां सहसैव ज्ञानयोगो दुष्कर इत्याह ॥ न कर्मणामिति । न शास्त्रीयाणां कर्मणामनारम्भादेव पुरुषो नैष्कर्म्यं ज्ञाननिष्ठां प्राप्नोति । नचारब्धस्य शास्त्रीयस्य त्यागात्; यतोऽनभिसंहितफलस्य परमपुरुषाराधनवेषस्य कर्मणस्सिद्धिस्स्यात् ॥ अतस्तेन विना तां न प्राप्नोति ॥ अनभिसंहितफलैः कर्मभिरनाराधितगोविंदैरविनष्टानादिकालप्रवृत्तानन्तपाप सञ्चयैरव्याकुलेन्द्रियतापूर्विकात्मनिष्ठा दुस्संपादा ॥

विचारः

श्रीमदाचार्यभावं बहुवैशद्येनाविष्कृतवानत्र विवृत्याचार्यः । तत्रोपपादितमादरात् पठतः प्रति नास्ति विशेषांशकथनस्यावसरः । तथापि मंदमनसामवगाहार्थं किंचिदुच्यते ॥ ( पदस्थैर्गार्हस्थ्यादिमाद्भिर्दैवैराधिकारिकैः कर्म कर्तव्यमेवेति ईश्वरनियमात् अर्जुनेन योद्धव्यमेवेति प्रथमा युक्तिरभिहिता ), अन्या अपि वक्तुं शक्यते । तथाहि । कर्मणामननुष्ठानात् को लाभः, नकोऽपि । प्रत्युत पापमेव संभवतीति ॥

अत्रेमे प्रश्ना उत्तराणि चानुसंधेयानि ॥

(१) प्र० । ननु नैष्कर्म्यशब्दव्युत्पत्तिपर्यालोचनयैव मोक्षःकर्माभावरूपो वा तज्जन्यो वेति ज्ञायते ॥

उत्तरं ॥ नैवं नैष्कर्म्यशब्दो व्युत्पत्तव्यः । यतः काम्यकर्माप्राप्यत्वेनापि नैष्कर्म्यशब्दस्य मोक्षवाचित्वं उपपद्यते । शब्दव्युत्पत्तिबलादेव कर्माकरणस्य मोक्षरूत्वं वा मोक्षहेतुत्वं वेति न भ्रमितव्यं ॥

(२) प्र० ॥ ननु कर्म हि संसारबीजं प्रसिद्धं । कारणाभावे कार्याभावस्तु स्फुटः । कर्माकरणे तस्माज्जायमानस्य संसारस्योपरतिस्सिद्धा इति ॥

उत्तरं ॥ नैवं संभवति । संसारो ह्यनादिः । अनंतातीतजन्मसु कर्मानधिकृतजन्मान्यपि स्युः । यथा पशुजन्म वा स्थावरजन्म वा ॥ तादृशजन्मसु यदा कर्माकरणं लब्धं, तदा अकरणस्य पूर्वपक्षरीत्या संसारोपरतिकारणत्वेन तत्क्षणं लिंगभंगप्राप्त्या मोक्षो लब्धस्स्यात् । विवक्षितेन मनुजेन नाद्यापि निर्वाणमलाभि इति पुरुषत्वादेव गम्यते ॥ सर्वदा स्थूलेन सूक्ष्मेण वा पुरेण युक्तः पुरुषः । पुराणि शरीराणि सरति प्राप्नोतीति व्युत्पत्त्या तादृशार्थलाभः । प्रलयसंग्रहार्थं सूक्ष्मशरीरस्य ग्रहणं ॥ कर्माभावमात्रेण यदि मुक्तिः तर्हि 'स्यात्स्थावराणां' इति श्रीमदाचार्योक्तं साधूक्तं ॥ यतः स्वयमेव भीमरूपेण युधिष्ठिरं प्रत्याह आनुशासनपर्वणि,

"यदि संन्यासतस्सिद्धिं राजन्कश्चिदवाप्नुयात् ।
पर्वताश्च द्रुमाश्चैव क्षिप्रं सिद्धिमवाप्नुयुः ॥
एतेहि नित्यसंन्यासाः दृश्यन्ते निरुपद्रवाः ।
अपरिग्रहवन्तश्च सततं ब्रह्मचारिणः ॥
तस्मात्कर्मैव कर्तव्यं नास्ति सिद्धिरकर्मणः ।
अवेक्षस्व यथा स्वैः स्वैः कर्मभिर्व्यापृतं जगत् ॥
तस्मात्कर्मैव कर्तव्यं नास्ति सिद्धिरकर्मणः" इति ॥

मनुष्यजन्मप्राप्त्यनन्तरं तु नैवास्त्यकरणेन संसारबीजच्छेदाशा ॥

"जीवंश्चतुर्दशादूर्ध्वं पुरुषो नियमेन तु ।
स्त्रीवाप्यनूनदशकं देहं मानुषमार्जते ॥
चतुर्दशोर्ध्वजीवीनि संसारश्चादिवर्जितः ।
अतोऽवित्त्वा परं देवं मोक्षाशा का महामुने ॥" इति ब्राह्मे ॥

चतुर्दशवत्सरादूर्ध्वं यो जीवति स बहुकर्मकृद्भूत्वाऽक्षय्यं जन्मबीजं सृजतीति जन्मक्षयाशाया अनवकाशः ॥

(३) प्र० ॥ ननु "कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते" इत्युक्तेः कर्म मोक्षविरोधीति ज्ञायते। तस्मादहं मुमुक्षुर्मोक्षप्रतिबन्धके न प्रविशामि इति ॥

उ० ॥ सर्वं कर्म मोक्षविरोधीति नोक्तं। किंतु सकामंहि कर्म बन्धकं इति ॥ "निष्कामं ज्ञानपूर्वं तु निवृत्तमिह चोच्यते । निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनं ॥" इत्याह मनुः। "अनिष्टमिष्टं मिश्रंच त्रिविधं कर्मणः फलं। भवत्यत्यागिनां प्रेत्य नतु संन्यासिनां क्वचित् ॥" इति गीतायाम् ॥

(४) प्र० ॥ स्यादकर्मणा न मोक्षः। काम्यकर्मण एव बन्धकत्वादकर्मणा तावत्तादृशानर्थस्यासंभवेन आयासवैधुर्यरूपस्य गुणस्य लाभस्य च सत्त्वात् कुतो मयाऽकरणान्निवर्तितव्यं इति ॥

उ० ॥ अकरणे प्रत्यवायस्य संभवात् इत्युत्तरं। "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतँसमाः । एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥" इत्यादिप्रमाणैर्नित्यनैमित्तिकाकरणे पापं भवेदेव ॥ स्ववर्णाश्रमोचितानि कर्माण्यवश्यं कर्तव्यानीति वक्ष्यते "स्वधर्मे निधनं श्रेयः" इत्यादिभिः ॥

(५) प्र० ॥ ननु यदुक्तं प्रत्यवायः प्राप्यते इति ॥ तन्न । "अकरणस्यासत्त्वेन ततो भावरूपस्य प्रत्यवायस्योत्पत्तिरनुपपन्ना, "कथमसतः सज्जायेत" इत्यसतः सज्जन्मासंभवश्रुतेः ॥ (शं. भा. III, प्रथमपद्ये) ॥

उ० ॥ कथमसतः सज्जायेतेति श्रुतिः द्रव्यविषया। गुणस्तु असतोऽपि जायते । प्रकृते च नरकहेतुभूताधर्मरूपप्रत्यवायस्य गुणत्वेन तस्यासतोऽप्यकरणाज्जनिर्भविष्यति इति भास्करश्शङ्कराचार्य निराह ॥ एते शङ्कासमाधाने अनुपपन्ने । यथोक्तं प्रमेयदीपिकायां । "नह्यकरणमसत् । तथासति करणप्रसङ्गात् ॥ किंत्वभावः । सच भाववत्तत्त्वमेवेति कथमकारणम् । गुणं प्रति कारणत्वे च द्रव्यकारणत्वं कुतो न भवेत् ॥ ननुचात्रोपादानत्वस्य विवक्षितत्वादकरणस्य चाभावरूपतया सत्त्वेऽप्यत्र विवक्षितोपादानत्वानुपपत्तेर्नप्रत्यवायजनकत्वमित्यभिप्राय इति चेत् । नह्यत्रोपादानत्वं विवक्षितं । किन्तु निमित्तत्वमेव" इति ॥

(६) प्र० ॥ निष्कामं कर्म तारकं इत्यविवादङ्गम्यते । कुत एतत् इति विचार्यतां, फलवैधुर्यात् इति समाधेयं । कर्माकरणस्यापि फलवैधुर्यसाम्यात् तारकत्वं सेत्स्यति । प्रत्यवायपक्षस्तु अमुमुक्षुपर इत्युच्यते इति ॥

उ० ॥ इयं प्रतिबन्दी नोचिता । फलाभावमात्रेण निष्कामकर्मणस्सिद्धिप्रदत्वं को ब्रूते । केवलं कर्मसन्न्यासमात्रेण सिद्धिर्नभवति ॥ निष्कामानुष्ठानं अन्तःकरणशुद्धिवैराग्यज्ञानानां द्वारमात्रम् । न तु साक्षान्मोक्षस्य । "कर्मभिश्शुद्धसत्वस्य वैराग्यं जायते हृदि" "न तस्य तत्वग्रहणाय साक्षाद्वरीयसीरपि वाचस्समासन् । स्वप्ने निनिरुक्त्या गृहमेधिसौख्यं न यस्य हेयानुमतं स्वयं स्यात् ॥" इत्यन्तःकरणशुद्धिवैराग्यजन्यज्ञानस्यैव तारकत्वं दृश्यते ॥ अतस्साधूक्तं "नच संन्यसनादेव सिद्धिं समधिगच्छती"ति ॥ संन्यसनं निष्कामानुष्ठानं । "काम्यानां कर्मणां न्यासं संन्यासं कवयो

विदुः" इत्युक्तेः । तस्मादेव केवलात् अश्रुतफलवत्त्वमात्राद्धेतोः सिद्धि-मोक्षो न भवति ॥

(७) प्र० ॥ ननु यत्याश्रमो हि मोक्षसाधकत्वेन प्रसिद्धः । "मोक्षाश्रमः चतुर्थो वै यो भिक्षोः परिकीर्तितः" इत्युक्तेः ॥ कुत एतत् इति विचार्यमाणे यतिधर्माणामश्रुतफलत्वेन शुद्धाकाम्यत्वादिति समाधेय । समानन्यायेन कर्माकरणस्यापि सिद्धिप्रदत्वं सेत्स्यति इति ॥

उ० ॥ इयमपि प्रतिबन्दी न साध्वी । फलाभाववत्त्वहेतुमात्रेण यतित्वस्य मोक्षप्रदत्वं को ब्रूते । यतित्वस्य प्रयतत्वहेतुत्वात् भगवत्तुष्टि-विषयत्वाच्च तुरीयाश्रम उत्कृष्टः । तत्रापि वैराग्यादिकं, नत्वाश्रममात्रं तारकं ॥ संन्यासिनः चतुर्विधाः, कुटीचक-बहूदक-हंस-परमहंसभेदात् ॥ "चतुर्विधा भिक्षवस्ते कुटीचकबहूदकौ । हंसः परमहंसश्च योऽत्र पश्चात्स उत्तमः ॥" इत्यानुशासने ॥ 14

"न्यासे कुटीचकः पूर्वो बहूदोहंसनिष्क्रियौ" इति भागवते । (III. 12 27) "यत्याश्रमं तुरीयं तु दीक्षां मम सुतोषणीं" इति नारायणाष्टाक्षरकल्पे ॥ तस्मात् प्रयतत्वभगवत्तोषविषयत्वाभ्यां यतित्वस्यो-त्कर्षः । अतस्साधूक्तं "नच संन्यसनादेवे"ति । संन्यसनादेव संन्यासाश्रमस्वीकारमात्रात् सिद्धिं मोक्षं नाप्नोति ॥

(८) प्र० ॥ यतित्वस्य प्रयतत्वहेतुत्वेन भगवत्तुष्टिसंपादकत्वेन चोत्तमत्वे यतिर्भवेयं, कुतोऽहं गार्हस्थ्यादिधर्मेषु प्रेरितः इति ॥

उ० ॥ आधिकारिकत्वेन तवापि प्रयतत्वं भगवत्तुष्टिविषयत्वं च क्रियते ॥ "देवादीनामादिराज्ञां महोद्योगेऽपि भोगिनः । विष्णोश्चलति तद्भोगोत्यतीव हस्तितोषणं ॥" इतिपाद्मे ॥ एवं श्रीमदाचार्यव्याख्यानाशय-संग्रहः ॥

(अन्येतु नैष्कर्म्यादिपदान्यन्यथा व्याकुर्वते। तत्रादौ शङ्करानन्दव्याख्या सूच्यते, "न यत्र कर्म तन्निष्कर्म ब्रह्म। नैष्कर्म्यं ब्रह्मत्वं॥ कर्मणामननुष्ठानाद्ब्रह्मत्वं नाप्यते अपितु ज्ञानात्" इति भावन्निरूप्य केवलसन्न्यासाश्रमेऽपि नोपयोगः इत्याह॥ अनेनैतदुपपादनावसरे लिखितं, "ननु सन्न्यस्य मुक्त्यर्थं दहरोपास्तिं वा वैश्वानरीं वोपास्तिं शिवस्य वा पूजां तन्नामकीर्तनंवा कुर्या इति चेन्। नाद्यः, "सत्यकामः सत्यसङ्कल्पः" इति दहरोपासनस्य सत्यकामत्वादिगुणवत्त्वश्रवणाद् गुणवदुपास्त्या तद्भावापत्तिप्रसङ्गात्॥ न द्वितीयः, "स सर्वेषु भूतेष्वन्नमत्ति" इति श्रवणाद्वैश्वानरोपास्त्या सर्वभूतात्मनान्नादनमात्रफलप्रसङ्गात्॥ न तृतीयः, "देवो भूत्वा देवानप्येति" इति श्रवणात्तल्लोकप्राप्तिप्रसङ्गात्॥ नापि चतुर्थः, "नास्ति पातकमहो कलिकाले नामकीर्तनपरेषु नरेषु", "पुण्यश्रवणकीर्तन"मित्यादिवचनात्पापक्षयमात्रप्रयोजनसिद्धेः)( यद्दृश्यं तदसत् इत्यव्याकृतादेः स्थूलान्तरस्य सगुणस्य सर्वस्य दृश्यत्वेनासत्त्वावगमादुपास्यस्य सर्वस्यापि सगुणत्वेनासत्त्वाव्यभिचारादसदुपास्त्या त्वसद्भावफलं सिध्यति न क्वचिदपि सद्भावः" इति)

अत्रोच्यते ( अंतःकरणशुध्यर्थं कर्म कर्तव्यमेव नत्याज्यमिति निरूपणावसरे दहरोपास्त्यादीनां दूषणस्य का संगतिः॥ "यद्दृश्यं तन्नसत्" इत्यद्वैतप्राक्रियापीहासंबद्धा। कर्मानुष्ठानविध्युपदेशप्रकरणे हि उपासनादिसर्वकर्मासत्त्वस्यार्जुनदृष्टेर्दूरीकरणं खलूचितं॥ 'न कर्मणामनारंभान्नैष्कर्म्यं पुरुषोऽश्नुते' इति वचनात् 'तद्विपर्ययात् तेषामारंभात् नैष्कर्म्यं अश्नुते इति गम्यते' इति शंकरभाष्यं॥ कर्मानुष्ठानस्य ज्ञानसाधनत्वं प्रथमार्धेनोक्त्वा उपासनादिसर्वकर्मणां झटिति द्वितीयार्धेनासत्त्वकथने शिष्यस्तावत्किंकुर्यात्। नाहमसति कर्माणि प्रविशामीति तत्क्षणं परावर्तेत॥ तस्मादत्र यद्दृश्यं तन्नसत्, इति व्याप्तिबोधनं प्रकरणं विरुणद्धीति स्फुटं।

उपासनादीनां यत्फलं जायते इत्यादि यदुक्तं. तत्राप्यसांगत्यं दृश्यते । सत्यकामत्वसत्यसकल्पत्वसर्वभूतात्मनानादनादिकं मनोराज्यकल्पमेव ॥ नामकीर्तनेन पापक्षयमात्रं संभवतीत्यौदासीन्येनास्वारस्यं ध्वनितं । किं पापक्षयस्सर्वथाऽनायासलभ्योऽल्पः पदार्थः । पापक्षयस्य सुलभसाध्यत्वेनेवाल्पत्वकथनं विस्मयं जनयति ॥ पापक्षयेहि मोक्षमार्गो बहुतरं क्रांतो भवति ॥ किंच न केवलं पापक्षयमात्रं नामकीर्तनेन भवेत् । किंतु महापुण्यमपि लभ्यत एवेत्यलं प्रपंचेन ॥

(अन्ये व्याख्यातारः शंकराचार्यादयः नैष्कर्म्यशब्द ज्ञानापरपर्यायज्ञाननिष्ठावाचकत्वेन व्याचक्षते । "कर्मणां क्रियाणां अनारंभात् अननुष्ठानात् नैष्कर्म्यं ज्ञानयोगं न प्राप्नोति" इति तेषां व्याख्यानं । नैष्कर्म्यशब्दस्य मोक्षवाचित्वं प्रसिद्धं ) ( "निष्क्रांतकर्मयोगः पर्यवसितकर्मयोगः ज्ञाननिष्ठो विवक्षितः" इति देशिकवाक्यं ॥ नैष्कर्म्यशब्दस्योत्तरार्धगतासिद्धिशब्दसमानार्थकत्व कुतः त्यज्यते इति न ज्ञायते ॥ उत्तरार्धे 'सिद्धि' पदं मोक्षवाचित्वेन नीलकंठशंकरानंदादयोऽभ्युपयंति ॥ केचित् नैष्कर्म्यसिद्धिशब्दावेकार्थकावित्यादाय सिद्धिशब्दमपि ज्ञानयोगपरतया व्याचक्षते ॥ मोक्षो वा स्यात् मोक्षसाधनं वा नैष्कर्म्यसिद्धिशब्दयोरर्थः । नास्माकमनेन बह्वी क्षतिः । परंतु शांकरव्याख्यानेषु प्रथमद्वितीयार्धयोः प्रतिपाद्यविशेषो न सुगमः । यतः कर्माननुष्ठानात् न ज्ञानयोगः इति प्रथमार्धप्रतिपादितोऽर्थः । द्वितीयार्धेऽपि कर्मत्यागान्न ज्ञानयोगः इति स एव प्रतिपाद्यार्थउक्तः ॥

केचित् सन्न्यासपदं चतुर्थाश्रमवाचकत्वेन गृह्णंति ॥ एनमर्थं तु तिरस्करोति नीलकण्ठः ॥

"असन्न्यासिनो ज्ञानमेव नोत्पद्यते इति प्राचामाग्रहो विक्षेपकर्मत्यागरूपसन्न्यासविषयो न तु काषायमात्रपरिधानविषयः । गार्ग्याधवसिष्ठादीनामतथाविधानामपि ज्ञानोत्पत्त्यवगमात्" इति तद्वाक्यम् ॥

अनारम्भशब्दस्य अननुष्ठानपरत्वे संन्यसनशब्दपर्यायत्वमियेव आरम्भः उपक्रमः, संन्यसनं आरब्धस्य शास्त्रीयस्य युद्धस्यासमापनं इत्यर्थभेदमाह रामानुजाचार्यः ॥

इमं मार्गमनुसृत्य "नेहाभिक्रमनाशोऽस्ती"ति वचनं चोदाहृत्य केवलं कर्मोपक्रमस्यापि महाफलमाह वेङ्कटनाथः ॥

श्रीमदाचार्यव्याख्याने तु पूर्वार्धोत्तरार्धयोरर्थभेदः स्फुटः । अकरणेन न मोक्षः । प्रत्युत प्रत्यवाय इति पूर्वार्धाशयः । काम्यन्यासस्य संन्यासत्वप्रसिद्ध्या निष्कामकर्मणः फलाभावप्रयुक्तं मोक्षहेतुत्वं इति भ्रान्त्वा अकरणस्य तुल्यन्यायत्वेन मोक्षहेतुत्वे शङ्किते इमां प्रतिबन्दीं मोचयत्युत्तरार्धं ॥ किंच यतित्वस्यापि महिमा फलाभाववत्त्वेनेति भ्रान्त्वा तुल्यन्यायेन कर्माकरणस्य पुरुषार्थसाधनत्वे शङ्किते तामपि प्रतिबन्दीं मोचयत्युत्तरार्धं इति ॥ तथाच भ्रान्तिविषयस्य निष्कामकर्मसाम्यस्य यतित्वसाम्यस्य च परिहृतत्वादकरणं नैष्कर्म्यहेतुर्न भवतीति स्थितं ॥ उत्तरार्धस्य पूर्वार्धोत्थापिताकाङ्क्षानिवर्तकत्वेन सार्थक्यं सम्भवति । परव्याख्यानेषु नैवं सङ्गतिर्लभ्यते । पुरुषशब्दस्य योगवृत्तिमाश्रित्य हेतुगर्भविशेषणत्वं प्रसाध्य, कुतः कर्मणामनारम्भान्नैष्कर्म्यं न लभ्यते इत्यस्यानेन पुरुषशब्देनोत्तरं दत्तमिति यदुक्तमाचार्येण साधूक्तं ॥

## न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
## कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५ ॥

वि ॥ किंच कर्मणेत्यादिस्मृतिबलात्कर्मणो मुक्तिप्रतिबन्धकत्वमिति तृतीये पक्षे स्मृतौ कर्मशब्दः संकुचितवृत्ति-

रिति वक्ष्यमाणोपोद्घाततया कर्माणि सर्वात्मना त्यक्तुं न शक्यानीत्याह ॥ नहीति । जातु कस्याञ्चिदवस्थायां क्षणमात्रमपि कश्चिदपि ज्ञोऽज्ञो वा अकर्मकृत् कर्माण्यकुर्वन्न तिष्ठति । कुत इत्यतउक्तं ॥ कार्यतइति ॥ सर्वः सर्वेण जनेन । व्यत्ययात् । अवशः अवशेन 'अः इति ब्रह्मे'ति श्रुतेः । विष्णुवशेनैव सता स्वतन्त्रकर्तृविष्ण्वधीनकर्तृताकेनैव कर्त्रा प्रकृतिजैर्गुणैः सत्वादिभिर्विकारकर्तृभूतैः कर्म कार्यते । स्वतन्त्रकर्त्रा भगवता विकारकर्तृसत्वादिभिश्च प्रेरितो जनः सदा किंचित्कर्म करोतीति हेतोरकर्मकृत्कोऽपि नेत्यर्थः ॥

शं ॥ कस्मात्पुनः कारणात्कर्मसंन्याससमात्रादेव केवलात् ज्ञानरहितात्सिद्धिं नैष्कर्म्यलक्षणां पुरुषो नाधिगच्छति इति हेत्वाकांक्षायां आह ॥ नहीति । न हि यस्मात्क्षणमपि किंचित्कालं जातु कदाचित् कश्चित्तिष्ठति । अकर्मकृत्सन् कस्मात् कार्यते प्रवर्त्यते । हि यस्मात् अवशएवास्वतन्त्रएव कर्म सर्वः प्राणी प्रकृतिजैः प्रकृतितो जातैः सत्वरजस्तमोभिर्गुणैः । अज्ञइति वाक्यशेषः । यतो वक्ष्यति "गुणैर्यो न विचाल्यते" इति सांख्यानां पृथक्करणात्, अज्ञानामेव हि कर्मयोगो न ज्ञानिनां ॥ ज्ञानिनां तु गुणैरचाल्यमानानां स्वतश्चलनाभावात् कर्मयोगो नोपपद्यते ॥ तथाच व्याख्यातं "वेदाविनाशिनं" इत्यत्र

रा ॥ एतदेवोपपादयति ॥ नहीति ॥ नह्यस्मिँल्लोके वर्तमानः पुरुषः कश्चित्कदाचिदपि कर्माकुर्वाणास्तिष्ठति । न किंचित्करोमीति व्यवसितोऽपि सर्वः पुरुषः प्रकृतिसम्भवैस्सत्वरजस्तमोभिः प्राचीनकर्मानुगुणं प्रवृद्धैर्गुणैः स्वोचितं कर्म प्रत्यवशः कार्यते प्रवर्त्यते । अत्रोक्तलक्षणेन कर्मयोगेन प्राचीनं पापसंञ्चयं नाशयित्वा गुणांश्च सत्वादीन् वशे कृत्वा निर्मलांतःकरणेन सम्पाद्यो ज्ञानयोगः ॥

विचारः

प्रकृतश्लोकस्य पूर्वश्लोकेन प्रकरणेन च सङ्गतिमनुसन्दधानाः न कर्मणामिति श्लोकविचारे प्रश्नोत्तरमुखेन लिखितं ग्रन्थं पुनः पश्यन्त्विति प्रार्थ्यते । ( तत्र तावदष्टौ प्रश्नाः द्रष्टव्याः ) तेषु मध्ये पञ्चमषष्ठसप्तमाष्टमाः शङ्कितप्रतिबन्दीमोचकत्वेन तच्छ्लोकद्वितीयार्धप्रपञ्चकाः । प्रथमार्धानुसंबन्धिनः इतरे प्रथमादिचत्वारः । तेषु मध्ये नैष्कर्म्यशब्दव्युत्पत्ति कर्मणस्संसारबीजत्वेन बीजपरित्यागे नैष्कर्म्यं लभ्यते इति युक्तिं च पुरस्कृत्य प्रवृत्तौ प्रथमद्वितीयौ प्रश्नौ हेतुगर्भेण पुरुष इत्यनेन समाहितौ ॥ "कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते" इति स्मृतिवचनं पुरस्कृत्य प्रवृत्तस्तृतीयः प्रश्नः । अस्य समाधान न कण्ठोक्त्यातीताच्छ्लोकादधिगम्यते । यज्ञार्थात्कर्मणोऽन्यत्रेति अस्य समाधानं वक्ष्यते । कर्मणा बध्यते इति वचने विवक्षितं कर्म काम्यं इति समाधानाशयः । संकोचबीजमारचयितुमुपोद्घातत्वेन प्रवृत्तः नहि कश्चिदिति प्रकृतश्लोकः । कर्मणा बध्यते इति स्मृतिवाक्ये कर्मशब्दो यद्यसंकुचिततया सर्वकर्मसंग्राहकः तर्हि बन्धस्सुतरां कदापि स्यात् । ज्ञानिनापि शरीरयात्राद्यर्थं कर्मणां त्यागस्याशक्यत्वात् । नहि

जाग्रत्स्वप्नसुषुप्त्यात्मिकासु सर्वास्ववस्थासु क्षणमात्रं कायिकं वाचिकं मानसं वा कर्माकुर्वन् ज्ञानीवाऽज्ञानीवा जीवितुमीष्टे। न हि च शास्त्रमेतादृशेऽशक्ये व्यापारे अधिकारिण प्रवर्तयेत्। अनयानुपपत्त्या बन्धकं काम्यमेवेति स्थित॥ अस्याः युक्तेरुपपादनाय नहि कश्चिदित्युपोद्घातपद्य सार्थकमित्याशयः॥

शाङ्करास्तु श्लोकसङ्गति भावं चान्यथा कल्पयन्ति॥ "कस्मात्पुनः कारणात्कर्मसन्न्यासमात्रादेव ज्ञानरहितात्सिद्धिं नाधिगच्छतीति हेत्वाकाङ्क्षायामाह" इति शङ्करभाष्यम्। द्रव्यवासना गुणवासना कर्मवासना जातिवासना रागद्वेषादय इत्येतैर्गुणैर्वशीकृतो मूढः कर्म करोति॥ ब्रह्मवित्त निर्विकल्पसमाध्यग्निना निर्दग्धप्रकृतिगुणतत्कार्यतूलपटलत्वाद्वायुना मेरुरिव स्वयं गुणैर्न चाल्यते। किंतु निष्क्रियब्रह्मात्मना तूष्णीमेव तिष्ठति॥ अतो वक्ष्यते "उदासीनवदासीनो गुणैर्यो न विचाल्यते" इति। तस्माज्ज्ञानमेव मुख्यं संपाद्य च इति निगमनमभिप्रेतमिति परकीयाशयः॥ अस्मिन्व्याख्याने सन्त्यनुपपत्तयः। तथाहि, (१) नहिकश्चिदिति श्लोके ज्ञानावश्यकत्वप्रतिपादकान्यक्षराणि न कानिचिदृश्यन्ते। (२) कश्चित् इत्यत्र अज्ञः इतिशेषपूर्तिः कार्या। सर्व. इत्यत्रापि तथैव कर्तव्यं। यथोक्तं शङ्करभाष्ये "अज्ञ इति वाक्यशेषः" इति॥ एवं शेषपूर्त्या सङ्कोचावलंबनं दोषः। सङ्कोचस्यागतिकगतित्वादिह गत्यन्तरस्य सुगमत्वात्। (३) किञ्च अकर्मकृदित्यत्रापि सङ्कोच आश्रयणीयो भवति। कुतश्च। शरीरयात्राद्यर्थमवर्जनीयं सर्वं कर्म विवक्षितश्चेत् तज्ज्ञान्यज्ञानिसाधारणम्। अज्ञमात्रपरतया कश्चित्सर्वशब्दयोस्सङ्कोचे तन्मात्रेण क्रियमाणं यागादिकमेव अकर्मकृदित्यत्र विवक्षितमापद्येत॥ एवं यागादिमात्रपरतया सङ्कोचे जातु क्षणमपि इति प्रयोगयोरप्यर्थसङ्कोच आश्रयणीयो भवति। नहि सर्वास्ववस्थासु सर्वदा सर्वोऽप्यज्ञो यागादिकर्मावर्जनीयत्वेन करोतीति वक्तुं शक्यते॥ केनापि यागादिकर्मणाम-

परिहार्यत्वं कथं घटते । तस्मात्परकीयार्थे 'कश्चित्' 'सर्वः' 'कर्म' 'जातु' 'क्षणमपि' इति श्लोकस्थानां मुख्यशब्दानां सर्वेषां व्यर्थ सङ्कोच आपद्यते । किंच ज्ञानिव्युदासप्रयोजकं पद तु न दृश्यते । यागादीनामु-परिहार्यकर्मत्वे प्रत्यक्षबाधः ॥

अकर्मकृदित्यत्र कैश्चित्परिगृहीतं यागादिकं वैदिकं कर्म विहाय अन्ये एतव्द्यूहव्याख्यातारः सर्वं लौकिकं कर्म गृह्णंति ॥ 'जातु' इत्यनेन विवक्षिते जाग्रत्स्वप्नावस्थे एव । नतु सुषुप्तिरिति शंकरानंदः । "सुषुप्तो भूर्भूरित्येवश्व-सती"तिश्रुतिमादाय सुषुप्तावपि निश्वासोच्छ्वासकर्मकृत्त्वात् सुषुप्तेरपि ग्रहणं कर्तव्यं इति वेंकटनाथो मन्यते ॥ निश्वासादिकर्मणां शरीरधारणार्थम-वर्जनीयानां ग्रहणे अस्य ज्ञानिनोऽपि समानत्वेन किमपराद्धं तेनेति न ज्ञायते ॥

'कश्चित्' 'सर्वः' 'जातु' 'क्षणमपि' इत्यादिनिरवकाशपदाभिधेय-मालक्ष्य सकोचाद्भीतस्सन् श्रीधरस्तु ज्ञानीवाऽज्ञोवेति व्याचष्टे । शंकरभाष्य-विरोधं प्रदर्श्योत्कर्षदीपिकाकार एतं प्रत्याचष्टे आग्रहेण ॥

"कश्चिदपि ज्ञानीवाऽज्ञो वेति परास्तं ॥ अस्य पक्षस्य युक्तिशतेन भग-वत्पादैर्निराकृतत्वात् ॥ गुणैर्यो न विचाल्यते इति वक्ष्यमाणविरोधस्यात्रैवाचार्यै-रुक्तत्वाच्चे"ति ॥ युक्तिशतेनेत्युक्तिराधिकोक्तिरेव । गुणैर्यो न विचाल्यते इति सा-मान्याकारेण ज्ञानिनां काम्यैरचलितत्वं यदभिहित तदेव तत्प्रकरणार्थं न विरुणद्धि ॥ शरीरयात्राद्यर्थं कर्म न ज्ञानी करोति इति न कुत्राप्युक्तं दृश्यते ॥

श्रीमदाचार्यव्याख्यानमस्मिन्नर्थेऽनुसरति श्रीधरः । अस्य पक्षस्य यौक्तिकत्वात् । कर्माणि हि द्विविधानि । कानिचिन्निश्वासोच्छ्वासवत्सर्वैरपि प्राणिभिरवश्यमनुष्ठेयानि ॥ अन्यानित्वीश्वराधीनतद्दत्तस्वातन्त्र्यमनतिक्रम्य

स्वेच्छानुबन्धीनि यागादीनि ॥ आद्यानि कर्माण्यादाय युक्तिरभिहिता "नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्" इति । ऐच्छिककर्माण्यादाय "कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्" इत्युत्तरं पद्यं अनन्तरं पद्यं च प्रवृत्तं ॥

क्षणमपि जातु इति पदयोरन्यतरस्य वैयर्थ्यं न शङ्कनीयं । जात्विल्यवस्थावैचित्र्यं बोध्यते इत्येकं समाधानं ॥ जातुशब्दो दिवसादिस्थूलकालपरः । क्षणशब्दस्तु "क्षणो व्यापारवैकल्पे कालभेदाल्पकालयोः" इत्यनेकार्थतया पाठात्तदन्तर्गताल्पकालविषय इत्यपौनरुक्त्यं इति देशिकोक्तमन्यत् ॥

अवशः इति सर्वविशेषणं वा कार्यते इत्यनेनान्वितं वा ॥ अवशः विष्णुवशः इति भगवत एव मुख्यस्वातन्त्र्यं बोधयति । गुणैः कार्यते इत्युक्तावपि गुणानां भगवदधीनतया विकारकर्तृत्वमेव ज्ञेयं ॥ "कर्तृत्वं द्विविधं प्रोक्तं विकारश्च स्वतन्त्रता । विकारः प्रकृतेरेव विष्णोरेव स्वतन्त्रता" ॥ इति पैङ्गिश्रुतिः ॥

ज्ञानिनां कर्मराहित्यं कर्मिणः ज्ञानराहित्यं दृढमवलम्ब्य बहुप्रमाणविरोधं बहुसंकोचाद्यनर्थं चाविगणय्य परे प्रकृतं श्लोकं व्याख्यातवन्त इति दृश्यते । ज्ञानयोगिनां कर्म, कर्मयोगिनां ज्ञानं इति
ह्युभयं स्मृतिर्हि वक्ति स्पष्टं ॥ "नोभय तद्विना कश्चित्पुमान्हि पुरुषार्थभाक् । नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ॥ नच ज्ञानं विना कर्म पुरुषार्थकरं भवेत् ।" इति. ब्र. वै.

कर्मेन्द्रियाणि सम्यम्य य आस्ते मनसा स्मरन्
इन्द्रियार्थान् विमूढात्मा मिथ्याचारस्स उच्यते ॥६

वि ॥ ननु शरीरयात्राद्यर्थकर्मणां त्यक्तुमशक्यत्वेऽपि यज्ञादिकर्मणां त्यक्तुं शक्यत्वात्तेषामस्तु त्यागः । नह्यशक्यविषये शास्त्रप्रवृत्तिरस्ति ॥ अतः (कर्मणा बध्यते इति कर्मत्यागपरे शास्त्रे कर्मशब्दो यज्ञादिकर्मपरो) भविष्यतीत्यतो मनएव बंधमोक्षयोः प्रयोजकं न कर्मकरणाकरणे इति भावेन मनसएव प्राधान्यमाह कर्मेत्यादिश्लोकाभ्यां ॥ कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थानि । चक्षुरादीन्युपलक्ष्यंते ॥ संयम्य निगृह्य यो मनसा इन्द्रियार्थान् रूपादीन् मनसा स्मरन्नास्ते वर्तते ॥ स विमूढात्मा भ्रांतः मिथ्याचारः कपटाचारः डाम्भिक उच्यते इत्यर्थः ॥

शं ॥ यस्त्वनात्मज्ञश्चोदितं कर्म नारभत इति, तदसदेवेत्याह ॥ कर्मेन्द्रियाणीति ॥ कर्मेन्द्रियाणि हस्तादीनि सम्यम्य संहृत्य य आस्ते तिष्ठति ॥ मनसा स्मरन् चिंतयन् इन्द्रियार्थान् विषयान् विमूढात्मा विमूढान्तःकरणो मिथ्याचारो दुष्टाचारः पापाचारः स उच्यते ॥

रा ॥ अन्यथा ज्ञानयोगाय प्रवृत्तो मिथ्याचारो भवतीत्याह ॥ कर्मेन्द्रियाणीति ॥ अविनष्टपापतया अजितबाह्यान्तःकरणः आत्मज्ञानाय प्रवृत्तो विषयप्रवणतया

आत्मनि विमुखीकृतमनाः विषयानेव स्मरन् य आस्ते, अन्यथा संकल्प्य अन्यथा चरतीति स मिथ्याचार उच्यते ॥ आत्मज्ञानायोद्युक्तो विपरीतो विनष्टो भवति इत्यर्थः ॥

## विचारः

कर्मणा बध्यते जन्तुरित्यत्र कर्मशब्दार्थे विचार्यमाणे सति शरीरयात्राद्यर्थानां कर्मणामपरिहार्यत्वात् शास्त्रेणाशक्यनियोगायोगात् कर्मशब्दार्थ. कथंचित्संकोच्य इति स्थितं ॥ यावता सङ्कोचेनानुपपत्तिः शाम्यति तावानेव सङ्कोचः आश्रयणीयः इत्युचित । यतो यागादिकर्माणि नावर्जनीयानि । अतस्तानि बन्धकानीति स्मृतिवाक्यार्थः सेत्स्यति ॥ ततो न युद्धं करोमीति प्राप्ते भगवानाह, कर्मेन्द्रियाणि इति । केवलं कर्मेन्द्रियनिरोधे किं प्रयोजनं, बन्धप्रयोजकस्य मनसोऽनिगृहीतस्य दोषमूलतयाऽवस्थानात् ॥ बाह्येन्द्रियमात्र निगृह्य अनिगृहीतेन मनसा विषयध्यानं य. करोति स बन्धककर्मत्यागी न भवति । "ध्यायतो विषुयान्पुंसः" इत्यारभ्य "बुद्धिनाशात्प्रणश्यती"त्यन्तोक्तदिशा नाशएव पर्यवसानात् ॥ 'मन एव मनुष्याणां कारणं बन्धमोक्षयोः' इति वाक्येनैकार्थ्यं संपादयितुं 'कर्मणा बध्यते जन्तु' रित्यत्र कर्मशब्दो मानसदोषं निरूपयतीति वक्तव्यम् ॥

परे केचित्त 'न च सन्न्यसनादेव' इति वाक्यं पुरस्कृत्य सङ्गतिमाहुः ॥ अतः संन्यासो नाम किं स्वरूपेण कर्मत्यागः उतेन्द्रियनिरोधरूप । आद्यः अशक्यः । द्वितीयोऽनुपयुक्तः मिथ्याचारत्वान् इति ॥

विमूढात्मा मिथ्याचारः इत्युक्तं अवधार्य पूर्वश्लोके अज्ञसुज्ञसाधारणाश्शब्दाः प्रयुक्ताः इहत्वज्ञमात्रवाचकः इति विशेषः ॥ इमं विशेषमना-

लोच्य पूर्वश्लोकं अज्ञपरतया यागादिकर्मपरतया च ये व्याचख्युः तेषाम-कौशलं स्फुटं भवति ॥ मनसा इन्द्रियार्थान् स्मरन् इत्यत्र मनसः स्मरणं प्रति करणत्वोक्तौ 'मानसप्रत्यक्षजा स्मृति'रिति वचनेन स्मरणस्य मानस-त्वाव्यभिचारात् मनसेत्यस्य वैयर्थ्यशङ्का स्यात् ॥ मैवं, मनोऽनिगृहीतं चेद्बन्धः इति बंधापेक्षयाऽन्वयपरत्वेन, मनोऽनिगृहीतं चेन्मोक्षाभावः इति मोक्षापेक्षया च व्यतिरेककथनपरत्वेन मनसो मुख्यत्वज्ञापनएव तात्पर्यं ज्ञेयं। ननु स्मरणं प्रति मनसः करणत्वोक्तौ तात्पर्यं येन वैयर्थ्यं शङ्क्यं स्यात् ॥

विमूढात्मेति। विमूढः विवेकरहितः आत्मा मनो यस्येत्यर्थः ॥ आत्मशब्द इहांतःकरणपरः ॥ इन्द्रियार्थान् जहामीतिसंकल्प्येन्द्रियाणि च रुद्ध्वा पुनर्विषयान् स्मरन् पुरुषः स्वसंकल्पक्रिययोर्विरुद्धमाचरतीति मिथ्या-चारः कपटीत्युच्यते ॥ "श्रवणाद्यर्थं वाऽन्यथा वा संन्यस्य श्रवणादिकमकृत्वा वेषेण जीवनं कुर्वन् संन्यासेनैव कृतार्थोऽहमिति यो यतिर्मन्यते स मिथ्या-चारः"। इति शंकरानंदोपपादनं ॥

लोके तावदाचारपक्षपातिभिर्दीक्षाबद्धैरिदं प्रमेयं सम्यक् निर्धार्यं। यद्बन्धमोक्षापेक्षया मनस प्राधान्यं पुनःपुनर्ज्ञापित ॥

"दीक्षा हि द्विविधा प्रोक्ता बाह्याभ्यंतरभेदतः।
ज्ञानिनामुभयी तत्र बाह्यैवाज्ञानिनां भवेत् ॥
अयं सर्वेष्टदाता मे सर्वारिष्टनिवारकः।
सर्वोत्कृष्टोऽयमेवैकः तदीयोऽहं स मे पतिः ॥
इति ज्ञानं निश्चितं यत् सा दीक्षाऽऽभ्यंतरा मता।
नाम चिह्नादिना देहे वह्निना वा मृदाङ्कन ॥
सा बाह्या प्रोच्यते दीक्षा ह्यज्ञानां ज्ञानिनामपि। इति. वि० रहस्ये

**यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।**
**कर्मेन्द्रियैः कर्मयोगमसक्तस्स विशिष्यते ॥ ७ ॥**

वि ॥ यस्त्विन्द्रियाणि 'चक्षुरादिज्ञानेन्द्रियाणि' मनसा नियम्य असक्तः फलेच्छाहीनस्सन् कर्मेन्द्रियैः कर्मयोगं स्ववर्णाश्रमोचितकर्मरूपज्ञानोपायं आरभते करोति स विशिष्यते पूर्वतनादधिको भवति ॥ एतेन पूर्वश्लोके मनसो निग्रहाभावे बन्ध इत्यन्वयः, द्वितीये तु मनसो निग्रहे बन्धाभाव इति व्यतिरेक उक्तः । तथा पूर्वत्र मनसोऽनिग्रहे मोक्षाभाव इति व्यतिरेकः । द्वितीये तु श्लोके मनसो निग्रहे मोक्ष इत्यन्वयः । इति बन्धापेक्षयाऽनिग्रहनिग्रहयोरन्वयव्यतिरेकौ, मोक्षापेक्षया च व्यतिरेकान्वयावित्युक्तदिशाऽभिप्रेततया बन्धमोक्षयोर्मनोऽनिग्रहनिग्रहावेव प्रयोजकावित्युक्तं भवति ॥ मनस एव प्रयोजकत्वज्ञापनाय मनसा स्मरन्नित्युक्तिः । अन्यथा स्मरणस्य मानसत्वाव्यभिचारान्मनसेति व्यर्थं स्यादिति ज्ञेयम् ॥

शं ॥ यस्त्विति। यस्तु पुनः कर्मण्यधिकृतः अज्ञः बुद्धीन्द्रियाणि मनसा नियम्य आरभते ॥ अर्जुन । कर्मेन्द्रियैः वाक्पाण्यादिभिः ॥ किमारभते ? इत्याह ॥ कर्मयोगं । असक्तस्सन् फलाभिसन्धिवर्जितः । स विशिष्यते इतरस्मात् मिथ्याचारात् ॥

रा० ॥ अतः पूर्वाभ्यस्तविषयसजातीये शास्त्रीये कर्मणि इन्द्रियाण्यात्मावलोकनप्रवृत्तेन मनसा नियम्य, तैः स्वत एव कर्मप्रवणैरिन्द्रियैरसङ्गपूर्वकं यः कर्मयोगमारभते सोऽसंभाव्यमानप्रमादत्वेन ज्ञाननिष्ठादपि पुरुषाद्विशिष्यते ॥

विचारः

इन्द्रियाणि नियम्य कर्मेन्द्रियैः कर्मयोगं यस्त्वारभते इत्युक्तेः इन्द्रियाणीति विवक्षितानि ज्ञानेन्द्रियाण्येव ।।(ज्ञानेन्द्रियनियमनं नाम तद्विषयेष्वनासक्तत्वं ) नियम्य, पापहेतुशब्दादिविषयासक्तेर्निवर्त्येत्यर्थः ॥

मनसा नियम्येत्युत्र मनसेतिवचनं व्यर्थमिति भिया केचित्सहयोगे तृतीयां अवलम्बन्ते (नीलकण्ठमधुसूदनादयः) ॥ मनसा सहेत्यर्थस्तु अरुचिग्रस्त इत्युत्कर्षदीपिकायां दूषितं ॥ सहयोगाश्रयणे अनुपपत्तिर्न दृश्यते ॥ मनसा सह ज्ञानेन्द्रियाणि नियम्येत्यनेन मनोनिग्रहरूपार्थस्य स्पष्टं लाभसंभवेन "मन एव मनुष्याणां कारणं बन्धमोक्षयो"रिति यदुक्त मनसः प्राधान्यं तत् कण्ठोक्त्या लब्ध भवति ॥

हे अर्जुन इति संबोधनं पुरस्कृत्य आश्चर्यमनेन ध्वनितं इत्यादाय केचिदाश्चर्यमेवमुपपादयन्ति, " पश्येदमाश्चर्यं यदेकः कर्मेन्द्रियाणि नियम्य ज्ञानेन्द्रियाणि व्यापारयन्ननर्थमाप्नोति । अन्यस्तु ज्ञानेन्द्रियाणि नियम्य कर्मेन्द्रियाणि व्यापारयन् कृतार्थो भवति " इति ॥ इदं मधुसूदनवाक्यं ॥ वेङ्कटनाथेनापि स्ववाक्यत्वेन पठितं च ॥ इदं निरूपणमसङ्गतं । कर्मेन्द्रियाणि संयम्येति श्लोके कर्मेन्द्रियशब्देन ज्ञानेन्द्रियाणामप्युपलक्षितत्वात् । चित्तमनिगृह्य ज्ञानेन्द्रियकर्मेन्द्रियनिरोधमात्रं य. कुरुते स मिथ्याचारः इति वाक्यार्थाद्धि चित्तस्यानिग्रहानिग्रहाभ्यां बन्धमोक्षापेक्षया निमित्तत्वं

स्फुटीभवति । कर्मप्रति कर्मेन्द्रियाणां साक्षादुपकारकत्वेन कर्मेन्द्रियाणि संयम्येति प्रयोगगतिश्च निष्पद्यते ॥ यः ज्ञानेन्द्रियाण्यपि नियम्य विषयान्मनसा स्मरन्नास्ते सोऽपि वस्तुतो मिथ्याचार एव ॥ तस्मात्कर्मेन्द्रियशब्देनोपलक्षणया ज्ञानेन्द्रियसंग्रहणमुचित । अतो यदुक्तं "कर्मेन्द्रियाणि नियम्य ज्ञानेन्द्रियाणि व्यापारयन्ननर्थमाप्नोतीति अतीतश्लोकतात्पर्य, तन्न ॥ तत्रोक्तरीत्या ज्ञानेन्द्रियनिग्रहस्यापि विवक्षितत्वात् । न हि ज्ञानेन्द्रियकर्मेन्द्रिययोर्मध्ये ज्ञानेन्द्रियनिरोधस्य प्राधान्यं वक्तुं श्लोकौ प्रवृत्तौ । अपितु मनसः प्राधान्यं वक्तुम् ॥

आरभते इति करोतीत्यर्थः ॥ एवमेव "नकर्मणामनारंभात्" इत्यत्रापि आरंभशब्दः अनुष्ठानपरः ॥ 'नेहाभिक्रमनाशोऽस्ती'त्युक्तिमादाय आरंभशब्द अभिक्रमपरतया केचिद्व्याचक्षते ॥ इदं क्लिष्टं । प्रकरणसंगत्योर्भिन्नत्वात् ॥

कर्मयोगमिति । "ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनां" इत्यत्र कर्मयोगशब्दस्य गृहस्थादिकर्मविषयत्वेन प्रकृतत्वादत्रापि तद्विषयत्वप्रतीतिः स्यात् । नचैवं, किंतु अत्र कर्मयोगं इत्यनेन स्ववर्णाश्रमोचितं कर्मोच्यते । नैतद् गृहस्थकर्मैवेति नियमः ॥ पूर्वं "ज्ञानयोगेन सांख्यानां" इति यत्याश्रमकर्मणः पृथगुक्तत्वात् कर्मयोगइति सामान्यशब्दोऽपि विशेषे व्यवस्थापितः । नचात्र तथाविधं किंचित्संकोचज्ञापकमस्ति ॥

असक्त इति इन्द्रियनियमनप्रकार उक्तः ॥

विशिष्यत इति । अत्र रामानुजाचार्यव्याख्या अपूर्वा । "असंभाव्यप्रमादत्वेन ज्ञाननिष्ठादपि पुरुषाद्विशिष्यते" इति तद्भाष्यम् । एवमेव "नियतं कुरु कर्म त्वं" इति श्लोकभाष्ये तद्वाक्यं ॥ "यतः प्रकृतिसंसृष्टस्य कर्मयोगस्सुशकोऽप्रमादश्च अतो ज्ञाननिष्ठायोग्यस्यापि ज्ञानयोगात्कर्मयोगो ज्यायान् । तस्मात्त्व कर्मयोगमेव कुर्वित्यभिप्रायः" इति ) ( इदं भावकथन-

मनुचितं प्रकरणाप्रानंच भाति । मनुष्याणा सामान्यतः कर्मप्रवणताया निरूपणस्य का सङ्गतिः । "कर्मेन्द्रियैः" इत्यनेन मनुजाः स्वभावतः कर्म-प्रवणा इत्यर्थः कथमक्षरार्थो भवेन । मनोनिग्रहस्य हि प्राधान्यमत्र निरूप्यते । ज्ञानयोगकर्मयोगयोस्तारतम्यपरीक्षा कृत्वा ज्ञानयोगस्यावरत्व कर्मयोगस्य ज्यायस्त्वं प्रतिपादितं इति व्याख्यानं न प्रकरणसङ्गतिमक्षरगति वानुधावति ॥ पूर्वं वाह्येन्द्रियनिग्रहपूर्वकमनिगृहीतमनाः य आस्ते स निन्दितः ॥ अधुना व्यतिरेकी स्तूयते ॥

यस्तु इति ॥ 'तु' शब्दो मिथ्याचार व्यतिरेकार्थः ॥ विशिष्यते इत्यपि मिथ्याचारात्कर्मयोगिनं विशिनष्टि ॥ ज्ञानयोगिनोऽप्रस्तुतत्वात् ज्ञाननिष्ठात्पुरुषाद्विशिष्यते इति भाष्यं चिन्त्यमेव ॥

(केचिच्छाङ्कराः, "न कर्मणा"मित्यारभ्य प्रकरणस्य भावमेवमाहुः । " 'न च सन्न्यसनादेवे'ति सन्न्यासस्वरूपं प्रस्तुतम् । कस्सन्यास इत्या-काङ्क्षायां संन्यासलक्षणं तत्प्रभेदाश्च निरूप्यन्ते ॥ सन्यासो द्विविध. । सर्व-फलत्यागः सर्वकर्मणां स्वरूपतस्त्यागश्च ॥ द्वितीये पक्षे अज्ञः शङ्कते, स्वरूपतस्त्यागोनाम सर्वकर्मणां दर्शनश्रवणादीनामकरणं इति ॥ इमा शङ्कां भगवान्निराह "नहि कश्चित्क्षणमपि" इत्यनेन ॥ तर्हि स्वरूपतस्त्यागः कथंभूतः इत्याकांक्षायां, "पश्यन्शृण्वन् स्पृशन्जिघ्रन्नश्नन्गच्छन्स्वपन्श्वसन्" "नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित्" इति वक्ष्यमाणरीत्या दर्श-नादिकर्मणामनात्मधर्माणां आत्मन्यारोपितानामकर्त्रात्मज्ञानेन बाधः ॥ अत्र आद्ये संन्यासे सर्वकर्मफलत्यागरूपे गृहस्थानामप्यधिकारः । तथाच वक्ष्यते "अनाश्रितः कर्मफलं कार्यं कर्म करोति यः । स संन्यासी च योगी च न निरग्निर्नचाक्रिय." इति ॥ द्वितीयेतु ज्ञाननिष्ठानामेवाधिकारः । स च "यस्त्वात्मरतिरेव स्या"दित्यादिनाऽग्रे वक्ष्यते। अत्रतु कर्मफलत्यागरूपं संन्यासं दर्शयति । यस्त्विति " इति ॥)

(इदं बहुक्लिष्टनिरूपणं भाति ॥ यदुक्तं नैव किंचित्करोमीत्यनुसंधाने ज्ञाननिष्ठानामेवाधिकारः इति, तदप्रामाणिकं । अस्यानुसंधानस्य कर्मयोगिज्ञानयोग्युभयसमत्वात् । सर्वस्मिन्कर्मणि स्वपारतंत्र्यानुसंधानपूर्वकभगवत्स्वातंत्र्यज्ञानं तावन्मुमुक्षुसामान्यसमानं इति हि शास्त्रैरधिगम्यते ॥ किंच अनात्मधर्माणां आत्मन्यारोपितानामकर्त्रात्मज्ञानेन बाधः कर्मत्याग इति यल्लक्षणं कथितं, तदद्वैतपरिभाषामूलं ॥ वस्तुतस्तु नैवकिंचित्करोमीत्यत्र विवक्षितमकर्तृत्वं, जीवस्यास्वातंत्र्यविवक्षया भगवतो निरवधिकस्वातंत्र्यविवक्षयाचोक्तं ज्ञेयं ॥ श्रीमदाचार्यरीत्या प्रकरणभावस्तूपपादितएवोपरिष्टात् ॥ सर्वथा कर्माकरणेन मुक्तो भवेयमित्युक्ते, अशक्यं तदित्युत्तरं ॥ कर्म बंधकं तस्मान्नकरोमीत्युक्ते, न कर्म किंतु मन इत्युत्तरं ॥ तस्मात्कुरु कर्म शुद्धेन मनसा इति प्रकरणार्थः)

**नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।**
**शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः ॥ ८ ॥**

वि ॥ ततः किमित्यतआह ॥ नियतमिति । हि यस्मादकर्मणः कर्माकरणात्कर्मानुष्ठानं ज्यायः प्रशस्ततमं, अतो नियतं वर्णाश्रमोचितं कर्म कुरु ॥ किंचाकर्मणः कर्माकुर्वतः ते तव शरीरयात्रापि देहनिर्वाहोऽपि न प्रसिद्ध्येदित्यर्थः ॥

शं ॥ यतएवं अतः ॥ नियतमिति । नियतं नित्यं, यो यस्मिन् कर्मणि अधिकृतः फलाय चाश्रुतं तन्नियतं कर्म, तत्कुरु त्वं ॥ हे अर्जुन । यतः कर्म ज्यायः अधिकतरं फलतः ॥

हि यस्मात् अकर्मणः अकरणात् अनारम्भात् । कथं, शरीर-यात्रा शरीरस्थितिः अपि च ते नव न प्रसिद्ध्येत् प्रसिद्धिं न गच्छेत् । अकर्मणः अकरणात् ॥ अतो दृष्टः कर्माकर्म-णोर्र्थविशेषो लोके ॥

रा ॥ नियतं व्याप्तं ॥ प्रकृतिसंसृष्टेन हि व्याप्तं कर्म ॥ प्रकृतिसंसृष्टत्वमनादिवासनया ॥ नियतत्वेन सुशकत्वाद-सम्भावितप्रमादत्वाच्च कर्मणः कर्मैव कुरु ॥ अकर्मणो ज्ञान-निष्ठाया अपि कर्मैव ज्यायः । "नैष्कर्म्यं पुरुषोऽश्नुते" इति प्रक्रमादकर्मशब्देन ज्ञाननिष्ठैवोच्यते । ज्ञाननिष्ठाधिकारिणोऽ-प्यनभ्यस्तपूर्वतया ह्यनियतत्वेन दुश्शकत्वात्सप्रमादत्वाच्च ज्ञाननिष्ठायाः कर्मनिष्ठैव ज्यायसी ॥ कर्मणि क्रियमाणे चात्मयाथात्म्यज्ञानेनात्मनोऽकर्तृत्वानुसन्धानमनन्तरमेव व-क्ष्यते ॥ अतः आत्मज्ञानस्यापि कर्मयोगान्तर्गतत्वात्स एव ज्यायानित्यर्थः ॥ कर्मणो ज्ञाननिष्ठायाः ज्यायस्त्ववचनं ज्ञान-निष्ठायामधिकारे सत्येवोपपद्यते ॥ यदि सर्वं कर्म परित्यज्य केवलं ज्ञाननिष्ठायामधिकरोषि तर्ह्यकर्मणस्ते ज्ञाननिष्ठस्य ज्ञाननिष्ठोपकारिणी शरीरयात्रापि न सेत्स्यति । यावत्सा-धनसमाप्ति शरीरधारणं चावश्यं कार्यं ॥ न्यायार्जितधनेन महायज्ञादिकं कृत्वा तच्छिष्टाशनेनैव शरीरधारणं कार्यं ॥ "आहारशुद्धौ सत्त्वशुद्धिस्सत्त्वशुद्धौ ध्रुवा स्मृतिः" इत्या-दिश्रुतेः" "भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्"

इति वक्ष्यते ॥ अतो ज्ञाननिष्ठस्यापि कर्माकुर्वतो देहयात्रापि न सेत्स्यति ॥ यतो ज्ञाननिष्ठस्यापि ध्रियमाणशरीरस्य यावत्साधनसमाप्ति महायज्ञादिनित्यनैमित्तिकं कर्मावश्यं कर्तव्यं। यतश्च कर्मयोगेऽप्यात्मनोऽकर्तृत्वभावनयाऽऽत्मयाथात्म्यानुसंधानमन्तर्भूतं, यतश्च प्रकृतिसंसृष्टस्य कर्मयोगस्सुशकोऽप्रमादश्च अतो ज्ञाननिष्ठायोग्यस्यापि ज्ञानयोगात्कर्मयोगो ज्यायान् ॥ तस्मात्त्वं कर्मयोगमेव कुर्वित्यभिप्रायः ॥

विचारः

( नियतं वर्णाश्रमोचितं इति श्रीमध्वः। नित्यं इति शङ्कराचार्यः। विहितं इति मधुसूदनः। नित्य संध्योपासनादीति श्रीधरः ॥ एवं प्रायशोऽभिप्रायैक्ये सति रामानुजाचार्येणैवास्य नूतनोऽर्थः कल्पितो दृश्यते।( "नियतं व्याप्तं। कर्म हि प्रकृतिसंसृष्टत्वेन व्याप्तं। प्रकृतिसंसृष्टत्वमनादिवासनया इति" ॥ कर्म ज्याय., "ज्ञाननिष्ठायोग्यस्यापि कर्मयोगो ज्यायान्। तस्मात्त्वं ज्ञानयोगयोग्योऽपि कर्मयोगमधिकुरु इति वा, नत्वमिदानीं ज्ञानयोगयोग्यः अतः कैमुत्येन कर्मयोगमेव कुर्विति वा त्वंशब्दार्थः" इति देशिकवाक्यम् ॥ उपक्रमे ज्ञानयोगकर्मयोगयोस्तारतम्यमनुयुक्तम्। तस्यैवोत्तरमिह विवक्षितम् ॥ ज्ञानाधिकार्यनधिकारिणोरुभयोरपि ज्ञानयोगात्कर्मयोगो ज्यायान् इति रामानुजाशयः ॥ एवं सति तदुपकारिण्यो युक्तयोऽपेक्षिताः ॥ अपेक्षितयुक्त्यन्वेषणावसरे, प्रथमार्धगतं 'अकर्मणः' इति पदं ज्ञाननिष्ठापरत्वेन व्याख्यातं। "नियतं" इति पदं "व्याप्तं" इति ॥ एतेन अकर्मणस्सकाशात् (ज्ञानयोगादिति) यावत। कर्म कर्मयोगः ज्यायान् इति प्रतिज्ञा। कुतः, कर्मयोगस्य नियतत्वात्। नियतत्वं नाम प्रकृतिसंसृष्टत्वव्याप्तिः। प्रकृतिसंसृष्टत्वमनादिवासनया व्याप्तम् ॥ एतेन नियतत्वाख्यहेतुना

कर्मयोगस्य सुशकत्वमसम्भावितप्रमादत्वं च लभ्यते ॥ युक्त्यन्तरं च द्वितीयार्धे दृश्यते ॥ ज्ञाननिष्ठेनापि, यतो ध्रियमाणशरीरस्य यावत्साधनसमाप्ति महायज्ञादिनित्यनैमित्तिक कर्मावश्य कर्तव्यं, यतो यज्ञादिकर्मावर्जनीयं अतः कर्मण उत्कृष्टत्वं सेत्स्यति ॥ किंच नियतत्वावर्जनीयत्वसमुच्चायकत्वेनान्यापि युक्तिर्वर्तते, कर्मयोगेऽप्यात्मनोऽकर्तृत्वभावनयाऽऽत्मयाथात्म्यानुसन्धानमन्तर्भूतम् ॥ एवं त्रियुक्तिघटितत्वेन कर्मयोगस्याधिक्यं प्रकरणार्थः इति रामानुजाचार्याशयः ॥ अत्रोच्यते । यदुक्तमुपक्रमे कर्मयोगज्ञानयोगयोस्तारतम्यमनुयुक्तमिति, तन्न। तत्र काम्यकर्मज्ञानयोरेव तारतम्यं पुरस्कृत्य प्रश्नस्योपपादितत्वात् ॥ "अकर्मणः" इत्यत्राकर्मपदं ज्ञाननिष्ठापरं इति व्याख्यानं च चिन्त्यम्॥ "मा ते सङ्गोऽस्त्वकर्मणि" इत्यत्राकर्मशब्दस्य कर्माभावपरत्वेन सर्वैरपि व्याख्यानात्तदानुगुण्येनात्रापि व्याख्यानस्य सुगमत्वात्॥

अकर्मेत्यस्य ज्ञानवाचकत्वं क्लिष्टम्। ज्ञानिनः कर्माभावभ्रमस्य निरस्तत्वात् ॥

किंच यदि अकर्म इति ज्ञाननिष्ठा उच्यते प्रथमार्धे, सैव स्यात्तदर्थो द्वितीयार्धेऽपि। एवं चेत्, ज्ञाननिष्ठायां आश्रितायां देहधारणरूपा वा विहितकर्मानुष्ठानरूपा वा शरीरयात्रा कथं न सेत्स्यति। कर्मयोगस्य ज्ञानयोगादुत्कृष्टत्वनिगमनाय हि 'अकर्म' 'नियत' शब्दावपूर्वार्थकतया व्याख्यातौ। अमुकात् निरवकाशप्रमाणादयं निर्णयो लभ्यत इति न ज्ञायते ॥ प्रकृतश्लोकेनैवेत्युक्तौ तु अन्यथोपपत्तिः प्रदर्श्यते। न कर्मणामनारम्भादिति प्रकरणप्राप्तस्याकरणस्य निष्कामकर्मणस्सकाशान्निकृष्टत्व विवक्षितं इत्युक्ते काऽनुपपत्तिः इति, नियतशब्दव्याख्यानमतिक्लिष्टं ॥ प्रकृतिसंसृष्टत्वादीनामिहाध्याहारमुखेनाकर्षणस्य बीज न दृश्यते। सुशकत्वासंभावितप्रमादत्वादियुक्तयस्तु स्वोत्प्रेक्षिताः । देहयात्रा नसेत्स्यतीत्यस्य व्याख्यानावसरे यज्ञादिकर्मणामवर्जनीयत्वं यन्निरूपितं, तच्चिन्त्यं। देहधारणं नाम विध्युक्तदेहधारणं इत्या-

नाय, "भुञ्जते तेत्वघं पापा ये पचन्त्यात्मकारणात्" इत्युक्तं चाश्रित्य यज्ञादिकर्मणां देहव्यवहारसिद्धिप्रयोजकत्वमुक्तं ॥ यदि नित्यनैमित्तिकाकरणं द्वितीयार्धे "अकर्मणः" इत्यनेन विवक्षितं स्यात् तर्हि तत्कार्यपापाद्यनर्थ एवोक्तस्स्यात्, "शरीरयात्रापि च" इति नावक्ष्यत् ॥

(यच्चोक्तं कर्मयोगे ज्ञानमन्तर्भूतमिति, तन्नास्माकमनिष्टं। यथा ज्ञानयोगे कर्म, तथा कर्मयोगे ज्ञानमित्यस्माभिरंगीकारात् ॥ प्रकृतेतु कर्मयोगे ज्ञानांतर्भावकथनस्य नास्ति संगतिः ॥ तस्मात्कर्मयोगज्ञानयोगयोस्तारतम्यपरीक्षार्थमुपक्रमप्रश्नः, कर्मयोगो ज्ञानयोगापेक्षया उत्तमइत्युत्तराशयनिर्णय इत्युक्तमनुपपन्नं ॥ वस्तुतस्तु प्रथमार्धे अकर्मणः इत्यत्र कर्माननुष्ठानमेव विवक्षितं नतु ज्ञानं वा ज्ञाननिष्ठा वा ॥ द्वितीयार्धे अकर्मणः इत्यस्य कर्माननुष्ठानात् इतिवा बहुव्रीहिमाश्रित्य कर्माकुर्वतः इतिवार्थः ॥ कर्माननुष्ठानादित्यर्थः शंकरभाष्यागीकृतः ॥ कर्माकुर्वतइत्यर्थो विवृतिकारोक्तः नीलकंठमधुसूदनादिसम्मतश्च ॥

("अपिच" इत्यस्यार्थः सम्यगनुसन्धेयः ।( अकर्मणः अननुष्ठानात् नियतं वर्णाश्रमोचितं कर्म ज्यायः अन्यथा प्रत्यवायसंभवात्, ज्ञानोपायभूतान्तःकरणशुद्ध्यादीनामसंभवाच्च इति यावत् ॥ न केवलमामुष्मिकार्थमेव कर्म कर्तव्यं नापि केवलं ज्ञानोपायत्वेन। किन्त्वैहिकार्थमपि शरीरव्यवहाराय कर्म कर्तव्यं इति समुच्चयार्थः 'अपिच' इत्यनेन गम्यते ।( किंच शरीरं हि आद्यं धर्मसाधनं। शरीरस्यापि हानिप्राप्तौ 'कुड्याभावे न चित्रं' इति न्यायेन मूलोच्छेदप्रसङ्गात्क्व दुराशा मोक्षाद्यर्थे इति गम्यते शरीरयात्रापीत्यनेन ॥ एतेन यावता कर्मणा शरीरपरित्राणं सिध्येत्तावत्कर्म कुर्यात् न ततोऽतिरिक्तं इत्याक्षेपश्च समाहितः ।( पूर्वार्धेन शरीरयात्रोपयुक्तकर्मणोऽप्यतिरिक्तस्य वर्णाश्रमोचितस्य कर्मणः कार्यत्वस्योक्तत्वात्। शरीरनिर्वाहोपयुक्त कर्ममात्रं करोमि नान्यत इतीमं पूर्वपक्षं उत्थाप्य शङ्करान दस्तु

समाधत्ते, "इति चेत्तत एव भवानतिमूढः संन्यासानर्हश्च भवति । यतः स्वेतरस्यैवानात्मनो देहस्य रक्षणं कर्तुमिच्छति । नत्वात्मनः । तवायमात्मा जननमरणप्रवाहे पतित्वा मुहुर्मुहुर्निमज्जन्नुन्मज्जन्निरन्तरदुःखेन क्लिश्नाति त्वमात्मनस्त्राणमकृत्वा आत्मनः शत्रोरेव त्राणाय यतसे । इतोऽपि वा दुरभिमानं त्यक्त्वा कर्मणा शरीरत्राणमत्यन्तास्थया यथा करोषि तथा विहितानि कर्माण्यनुष्ठाय तेन प्राप्तचित्तशुद्ध्याऽऽत्मज्ञानमपरोक्षलक्षणं संपाद्यात्मानं दुःखसागरादुद्धर" इति ॥ अत्रोपन्यस्तस्यार्थस्य मूलाक्षराल्लाभःकथमिति चिन्त्यं ॥

'ते' इत्यर्जुनं निमित्तीकृत्य लोकानुद्दिश्य संबोधनं भाति ॥ नीलकण्ठस्त्वन्यथा आह, "ते तव क्षत्रियस्य अकर्मणः सत्यामपि चित्तशुद्धौ सर्वकर्मत्यागिनः शरीरव्यवहारो न सिध्येत्, भैक्षाचर्यायामनधिकारात् ॥ चत्वार आश्रमाः ब्राह्मणस्य, त्रयो राजन्यस्य, द्वौ वैश्यस्य इतिस्मृतेः" इति ॥ इदमुपपादनं चिंत्यं । विहितत्यागेन पापं भवतीत्यादियुक्तेः नियतं कर्म कुर्विति पूर्वार्धएवोक्तत्वात् द्वितीयार्धे किमधिकमभिहित लभ्यते । शरीरयात्रेत्यनेन विध्युक्तव्यवहारस्य ग्रहणे अर्थस्वारस्यं दुर्गमं । 'अपिच' इति व्यर्थं च ॥ ते तव क्षत्रियस्य युद्धाकरणे सति शरीरस्थितिर्न सिध्येत् । यतश्शत्रुर्निरायुध पलायिनं त्वां सपदि मारयेत् इति कथंचिद्योजयितुं शक्यते ॥ शरीरयात्रेत्यनेन विहिताचरणग्रहणं तु दुष्करम् ॥

कुरु कर्म त्वं इति त्वंशब्दस्य प्रयोजनकथनावसरे "कर्मण्येवाधिकारस्ते" इत्यत्र यथा युष्मच्छब्दार्थः परैरुक्तः तथात्रापि पार्थमशुद्धान्तःकरणं केचिदाहुः । तदसङ्गतं । त्वंइत्यर्जुनं निमित्तीकृत्य सामान्यतो लोकान्प्रति संबोधनं इति भावस्य वक्तुं शक्यत्वात् ॥ कुर्वित्यनेनैव मध्यमपुरुषार्थलाभे सति त्वमित्यस्य वैयर्थ्यशङ्का समाधेयेत्युक्तावपि आधिकारिकपुरुषत्वेन भवान् पार्थो नियतं कर्म कर्तुमर्हतीति व्याख्यातुं शक्यते ॥

यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः।
तदर्थं कर्म कौंतेय मुक्तसङ्गस्समाचर ॥ ९ ॥

वि ॥ "कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते। तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः" इति स्मृतेः मुक्तिप्रतिबन्धकत्वात्कर्म न कार्यमिति प्राग्विकल्पितं तृतीयं पक्षं निराह ॥ यज्ञार्थादिति ॥ यज्ञो विष्णुः। "यज्ञो वै विष्णुरि" ति श्रुतेः। तदर्थात्। यद्वा जानातीति ज्ञः, इगुपधज्ञाप्रीकिरःकः। स्वपरगताशेषविशेषज्ञत्वात् ज्ञो विष्णुः ॥ येनोद्देशेन यातो विषयीकृतः स उद्देशो यज्ञः। विष्णुविषयोद्देशार्थात् कर्मणोऽन्यत्र विष्ण्वन्यविषये विष्णूद्देशादन्योद्देशविषये वा ॥ अयं लोकः जनः कर्मबन्धनः। 'कृत्यल्युटो बहुलमि'ति कर्तरि ल्युट्। कर्म बन्धनं बन्धकं यस्य स कर्मबन्धनः। अवैष्णवकर्मैव प्रतिबन्धकं न वैष्णवं कर्म ॥ कर्मणेति स्मृतौ कर्मपदमवैष्णवकर्मपरं। न तु कर्ममात्रपरं॥ अत एव प्राक् न हि कश्चिदिति श्लोके कर्मणेति स्मृतिबलात्कर्ममात्रं न करोमीति त्वया वक्तुमशक्यं। स्मृतौ कर्मपदस्य सङ्कोचस्त्वयाप्यभ्युपेयइति भावेनाकर्मकृत् कोऽपि नास्ति, सदा भगवदादिप्रेरितः किंचित्कर्म कुर्वन्नेव सर्वोऽप्यास्ते इत्यसंकुचितवृत्तित्वे बाधकमुक्तं ॥ तथा शरीरयात्रापीत्यत्रापि देहनिर्वाहाभावो बाधकउक्तः॥ अतस्तदर्थं

भगवत्पूजार्थं मुक्तसङ्गः फलकामनारहितस्सन् कर्म समाचर कुर्विति ॥

शं ॥ यच्च मन्यसे बन्धार्थत्वात्कर्म न कर्तव्यमिति तदप्यसत् । कथं यज्ञार्थादिति ॥ "यज्ञो वै विष्णुः" इति श्रुतेर्यज्ञ ईश्वरः, तदर्थं यत्क्रियते तद्यज्ञार्थं कर्म, तस्मात्कर्मणोऽन्यत्रान्येन कर्मणा लोकोऽयमाधिकृतः कर्मकृत्, कर्मबन्धनः कर्म बन्धनं यस्य सोऽयं लोको न तु यज्ञार्थात् ॥ अतस्तदर्थं यज्ञार्थं कर्म कौन्तेय मुक्तसङ्गः कर्मफलसङ्गवर्जितः सन् समाचर निर्वर्तय ॥

रा ॥ एवं तर्हि द्रव्यार्जनादेः कर्मणोऽहङ्कारममकारादिसर्वेन्द्रियव्याकुलतागर्भत्वेनास्य पुरुषस्य कर्मवासनया बन्धनं भविष्यतीत्यत्राह । यज्ञादिशास्त्रीयकर्मशेषभूतद्रव्यार्जनादेः कर्मणोऽन्यत्रात्मीयप्रयोजनशेषभूते कर्मणि क्रियमाणेऽयं लोकः कर्मबन्धनो भवति। अतस्त्वं यज्ञार्थं द्रव्यार्जनादिकं कर्म समाचर ॥ तत्रात्मप्रयोजनसाधनतया यस्सङ्गः तस्मात्सङ्गान्मुक्तस्तत्समाचर ॥ एवं मुक्तसङ्गेन यज्ञाद्यार्थतया कर्मणि क्रियमाणे यज्ञादिभिः कर्मभिराराधितः परमपुरुषोऽस्यानादिकालप्रवृत्तकर्मवासनामुच्छिद्याव्याकुलात्मावलोकनं ददातीत्यर्थः ॥

विचारः

(अत्र प्रमेयदीपिकायां उक्तं । "अयमत्र प्रत्युत्तरक्रमः । कर्मणा बध्यते इति वाक्यमाश्रित्य न युद्धादिकर्मत्यागः कार्यः, तस्यावैष्णवकाम्यकर्म-

विषयत्वात् ॥ कुतस्सङ्कोच इति चेत् परेणापि परिस्पन्दमात्रस्य त्यक्तुमशक्यत्वेनासंकुचितार्थतायाः स्वीकर्तुमशक्यत्वात् ॥ तद्धेत एव बाधकाच्छरीरयात्रार्थकर्मव्यतिरिक्तविषयत्वं कल्प्यते इतिचेत् । न, वैयर्थ्यात् ॥ एवमपि मनोव्यापारस्यात्पकत्वेन प्रतिबन्धकाभावो न सिध्यति । तस्यैवान्वयव्यतिरेकाभ्यां प्रयोजकत्वावधारणात् ॥ बाधकात्सङ्कोचमङ्गीकुर्वतां चायमपि सङ्कोचोऽङ्गीकार्यः, विधानसामर्थ्याद्युद्धादीनामपि तत्तद्वर्णाश्रमोचितत्वात् ॥ न च विधानस्यामुमुक्षुविषयत्वम्, कल्पकाभावात् । न चेदमेववाक्यं कल्पकं, तस्यावैष्णवादिधर्मत्यागेन चरितार्थत्वात् । धर्मिपरित्यागाद्धर्ममात्रपरित्यागस्य ज्यायस्त्वात् ॥ अतो न कर्मस्वरूपं त्याज्यं" इति ।)

(यज्ञार्थादिति श्लोकस्य व्याख्याने व्याख्यातृषु परस्परं भावभेदः प्रायशो न दृश्यते ॥ यज्ञो विष्णुरुद्दिष्ट इति प्रायशस्सर्वेऽपि शाङ्करा अभ्युपयन्ति ॥ रुद्रोऽप्यस्यार्थ इति वेङ्कटनाथ आह । रामानुजाचार्यस्तु यज्ञशब्देन शास्त्रीयं कर्म गृह्णाति ॥ भगवत्पूजार्थं यत्कर्म तन्न बन्धकं अन्यत्तु बन्धकमिति रामानुजव्यतिरिक्तानां व्याख्यानं ॥ शास्त्रीयकर्मशेषभूतं द्रव्यार्जनादिकं न बन्धकं, आत्मीयप्रयोजनशेषभूतंतु कर्म बन्धकं इति रामानुजाचार्यव्याख्याने न भगवदुत्कर्षो लभ्यते । यद्विहितं तन्न बन्धकं इति शास्त्रविधेरुत्कर्षो हि लभ्यते ॥ स्वर्गकामो यजेतेत्यत्र कामविधिरप्यभिप्रेत इति केषांचिन्मतं ॥ तन्मते कामनापूर्वकाणां शास्त्रीयाणां यागादीनां अबंधकत्वं कथं इति संदिह्यते ॥ यज्ञशब्देन शास्त्रीयकर्मग्रहणे आह देशिकः, "'अत्र यज्ञो वै विष्णुः' इति श्रुतेः यज्ञ ईश्वर इति परैर्व्याख्यातं । तच्चाविरुद्धमस्माकं । तथापि समनंतरश्लोकपठितयज्ञशब्दैकार्थ्यमुचितं" इति ॥ "यज्ञःपरमेश्वराराधनं । 'यज' देवपूजायां इति धात्वर्थानुगमात्" इति नीलकण्ठः ॥ यदस्ति तज्जानातीति यज्ञः सर्वज्ञो विष्णुः । निरुक्तत्वात्तकारलोपः ॥ 'ज्ञो

यात्युद्देश एष यः । स यज्ञ इतिसम्प्रोक्तो विहिते कर्मणि स्थितः' (वर्कश्रुति ॥ गी. ता.)

अन्यत्रेति । अन्येन इति तृतीयार्थतया शङ्करभाष्यम् ॥

अन्यत्र अन्यस्मिन् कर्मणि प्रवृत्तो लोकः कर्मणा बध्यते इति मधुसूदन-नीलकण्ठश्रीधरादयः । कर्मभिर्बध्यते इति कर्मबन्धनः इति विग्रहः कैश्चिदुक्तश्च ॥ "प्रवृत्तपदाध्याहारदोषः, कर्मण्यनुशासनाभावाद् बहुलग्रहण-स्यागतिकगतित्वात् ल्युडनुपपत्तिदोषो, बहुव्रीह्यभावे पुल्लिङ्गानुपपत्तिदोषश्च परिहरणीयः" इतीदं व्याख्यानं दूषितमुत्कर्षदीपिकायां ॥ कृत्यलुटो बहुल-मिति कर्तरि ल्युट् । कर्म बन्धनं बन्धकं यस्येति बहुव्रीह्याश्रयणेन नपुँल्लिङ्गानुप-पत्तिः ॥ विष्णवन्यविषये विष्णूद्देशादन्योद्देशविषये इति यद्विवृत्याचार्येण व्याख्यातं तत्रानुपपत्तिर्न दृश्यते ॥ विष्णुप्रीत्यर्थमेव मुक्तसङ्गः कर्म समा-चरेत्यर्थो विष्णूत्कर्षप्रतिपादकतया सुरसो भाति ॥

"यद्ब्रह्माणि परे साक्षात्सर्वकर्म समर्पणं ।
मनो वाक्तनुभिः पार्थ क्रियाद्वैतं तदुच्यते ॥"

"यन्नस्स्वधीतं गुरवः प्रसादिताः विप्राश्च वृद्धाश्च सदानुवृत्त्या ।
यन्नस्सुतप्तं तप एतदीदृशं निरंधसा कालमदभ्रमप्सु ॥
सर्वं तदेतत्पुरुषस्य भूम्नो वृणीमहे ते परितोषणाय ।"

इति च भागवते ॥

**सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।**
**अनेन प्रसविष्यध्वमेषवोऽस्त्विष्टकामधुक् ॥ १० ॥**

वि ॥ वर्णाश्रमोचितकर्मणः सर्वथा कर्तव्यत्वे स्तुति-निंदापरकृतिपुराकल्परूपार्थवादं चाह सहेत्यादिचतुर्भिः श्लो-

कैः ॥ यज्ञैस्सह वर्तन्तइति सहयज्ञाः ब्राह्मणादिप्रजाः, पुरा सर्गादौ सृष्ट्वा प्रजापतिरुवाच ॥ किमुवाचेत्यत आह। अनेनेत्यादिना कारणादित्यन्तेन । हे प्रजाः अनेन यज्ञेन यूयं प्रसविष्यध्वं, इष्टकामानिति शेषः ॥ स्वस्वाभिमतपुमर्थान्सम्पादयत । एष यज्ञः वो युष्माकमिष्टकामधुक् । कामाः भोगाः तान्दोग्धीति कामधुक्, इच्छाविषयभोगप्रदोऽस्तु ॥

शं ॥ इतश्चाधिकृतेन कर्म कर्तव्यं ॥ सहेति । सहयज्ञाः यज्ञसहिताः प्रजास्त्रयो वर्णाः । ताः सृष्ट्वा उत्पाद्य पुरा पूर्वं सर्गादावुवाच उक्तवान् प्रजापतिः प्रजानां स्रष्टा । अनेन यज्ञेन प्रसविष्यध्वं । एष यज्ञो वो युष्माकमस्तु भवत्विष्टकामधुगिष्टानभिप्रेतान्कामान्फलविशेषान्दोग्धीति इष्टकामधुक् ॥

रा ॥ यज्ञशिष्टेनैव सर्वपुरुषार्थसाधननिष्ठानां शरीरधारणकर्तव्यतामयज्ञशिष्टेन शरीरधारणं कुर्वतां दोषं चाह ॥

"पतिं विश्वस्य" इत्यादिश्रुतेर्निरुपाधिकः प्रजापतिशब्दः सर्वेश्वरं विश्वस्य स्रष्टारं विश्वात्मानं परायणं नारायणमाह ॥ पुरा सर्गकाले स भगवान् प्रजापतिरनादिकालप्रवृत्ताचित्संसर्गविवशाः उपसंहतनामरूपविभागाः स्वस्मिन् प्रलीनाः सकलपुरुषार्थानर्हाश्चेतनेतरकल्पाः प्रजास्समीक्ष्य, परमकारुणिकस्तदुज्जिजीविषया स्वाराधनभूतयज्ञनिर्वृत्तये

यज्ञैस्सह तास्सृष्ट्वा एवमुवाच ॥ अनेन यज्ञेन प्रसविष्यध्वं आत्मनो वृद्धिं कुरुध्वं । एष वो यज्ञः परमपुरुषार्थलक्षण-मोक्षाख्यस्य कामस्य तदनूक्तगुणानां च कामानां प्रपूरयिता भवतु इत्यर्थः ॥

विचारः

(वर्णाश्रमोचितस्य कर्मणः कर्तव्यत्वमभिप्रेतमिति ज्ञेयम् । अर्थवादद्वारा-ऽयमभिप्रायो व्यक्तीकृतः । स्तुतिर्निन्दा परकृतिः पुराकल्पोऽर्थवादः ॥ सहयज्ञा इति चत्वारः श्लोकाः अर्थवादपराः । इष्टान्भोगानिति स्तुतिः । तैर्दत्तानित्या-दि निंदा । पुरोवाच प्रजापतिः इति परकृतिः । यज्ञशिष्टाशिन इति पुराकल्पः ॥ कौण्डिन्येनेदं अनुष्ठितं इत्यादिनामग्रहणपूर्वकं वचनं परकृतिः । पूर्वतनैरनु-ष्ठितमिति सामान्यतो वचनं पुराकल्पः । इति तयोर्भेदमाह श्रीनिवासतीर्थः)। (एको यत्र कर्तृत्वेनोपाख्यायते सा परकृतिः । यथा "जनकोह वैदेह आसां-चक्रे" इति ॥ अनेके यत्र कर्तृत्वेनोपाख्यायन्ते स पुराकल्पः, यथा "त्रयो होद्गीथे कुशला बभूवुः ।" इति कृष्णाचार्यटिप्पण्यां ॥ प्रकृते 'एष वोऽस्त्विष्ट-कामधुगि'त्यादिस्तुतेः, 'स्तेन एवे'त्यादिनिन्दायाः, 'पुरोवाचे'ति परकृतेः, इष्टान्भोगा'निति पुराकल्पस्य च सत्त्वादर्थवादः इति च तट्टि-प्पण्याम् ॥ गुर्वर्थदीपिकायां तु या परेषां कृतिरुच्यते सा परकृतिः, पूर्वा-चार्यऋषर्याऽऽज्ञारूपकल्पना सा पुराकल्पः इत्युक्तम् ॥ प्रकृतस्यार्थवादस्य न शब्दविधया कर्मकर्तव्यताप्रतिपादकत्वं, अनुपलम्भात् । नाप्यनुमान-विधया, भिन्नतात्पर्यकत्वात् ॥ किन्तु प्राशस्त्यप्रयोज्यावश्यकत्वज्ञापक तया)

प्रजापतिरिति चतुर्मुखो विवक्षित इति केचित् ॥ भगवान्नारायण इति रामानुजाचार्यः ॥ "प्रजास्सृष्ट्वा इति प्रजाशब्दस्सर्वान् ब्रह्मपर्यन्तान् जग-

दन्तर्व्यवस्थितान् कर्मजनितसंसारवशवर्तिनो यज्ञाद्यधिकारिणः प्राणिनः संगृह्णाति। अतोऽत्र प्रजापतिशब्दः उपक्रमस्थप्रजाशब्दानुरोधात्सङ्कोचेन तद्वैरूप्यायोगाच्च परित्यक्तरूढिरकर्मवश्यं नियोक्तारं सर्वेश्वरं नारायणमाह। तथा सृज्यसमस्तक्षेत्रज्ञविषयो ह्ययमनवच्छिन्नः प्रजाशब्दः" इति देशिकः॥

सहयज्ञैरिति पाठमाश्रयति रामानुजाचार्यः। अन्ये सहयज्ञाः इति पठन्ति। इमं पाठं "अप्रसिद्धेरनादृतः" इति देशिकस्तिरस्करोति॥ सहयज्ञा इति प्रजाविशेषणत्वे कर्मण्यधिकृतान् ब्राह्मणादीन् प्रति प्रजापत्युपदेश इति लभ्यते। सहयज्ञैरितिपाठे तु प्रजासर्जनं तत्काल एव यज्ञसर्जनं च गम्यते। उपदिष्टानां कर्मण्यधिकृतत्वं न स्पष्टं लभ्यते इति विशेषः॥

"प्रजास्त्रयो वर्णाः" इति शङ्करभाष्यं॥ शूद्राणामपि संग्रहे बाधकं न दृश्यते॥

प्रसविष्यध्वं इति॥ षूञ् प्राणिप्रसवे, षूङ् गर्भविमोचने इति धातुद्वयेनापि प्रजननं गम्यते। अत उक्तं विवृत्यां "इष्टकामानिति शेषः। स्वाभिमतपुमर्थान्संपादयत" इति॥ 'संतत्युपलक्षिता स्वनिष्पाद्या समृद्धिरत्र विवक्षिते'त्यभिप्रायमाह देशिकः॥

अस्मिन् श्लोके यज्ञशब्देन नित्यं अकाम्यमेव गृह्यते इति केचित्। काम्याकाम्ययोरुभयोरपि संग्रह इत्यन्ये॥ इष्टकामधुगिति काम्यफलभूतस्वर्गादेरेव ग्रहणस्यौचित्यात् अकाम्यमात्रग्रहणमयुक्तमिति ते शङ्कन्ते॥ अत्राह मधुसूदनः, "अत्र यद्यपि यज्ञग्रहणमावश्यककर्मोपलक्षणार्थं, अकरणे प्रत्यवायस्याग्रे कथनात्। काम्यकर्मणां च प्रकृते प्रस्तावो नास्त्येव। "माकर्मफलहेतुर्भूः" इत्यनेन निराकृतत्वात्॥ तथापि नित्यकर्मणामानुषङ्गिकफलसद्भावात् "एष वोऽस्त्विष्टकामधु"गित्युपपद्यते। तथाचापस्तम्बः स्मरति "तद्यथा फलार्थे निर्मिते छायागन्धावनूत्पद्येते। एवं धर्मं चर्यमाण-

मर्था अनूत्पद्यन्ते । नोचेदनूत्पद्यन्ते न धर्महानिर्भवति" इति ॥ फलसद्भावेऽपि तदभिसन्ध्यनभिसन्धिभ्यां काम्यनित्ययोर्विशेषः ॥ अनभिसंहितस्यापि वस्तुस्वभावादुत्पत्तौ न विशेषः" इति ॥ एतेनायमस्याशयोऽधिगम्यते । यज्ञशब्देन नित्यमेवाकाम्यं कर्माभिप्रेत । यद्यप्ययमर्थः 'इष्टकामधुगित्यनेन व्याहृतः, तेन काम्यफलस्य स्वर्गादेरेव ग्राह्यत्वात् । तथाप्यवर्जनीयत्वेन सन्निहितानुषंगिकफलापेक्षया उक्तिरुपपन्नेति ॥ अयमभिसंधिस्समीचीनो भाति ॥ यज्ञास्तावत्सात्विक-राजस-तामसभेदेन त्रिविधाः । "अफलाकांक्षिभिर्यज्ञो विधिदृष्टो य इज्यते । यष्टव्यमेवेति मनस्समाधाय स सात्विकः ॥ अभिसंधायतु फलं दंभार्थमपि चैव यत् । इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसं ॥ विधिहीनमसृष्टान्नं मंत्रहीनमदक्षिणं । श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥" इति विभागः ॥ XIII ch 11

अन्येऽपि विभागास्संभवंति । ब्रह्मयज्ञः पितृयज्ञः दैवयज्ञः भौतयज्ञः मनुष्ययज्ञः इति ॥ "अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणं । होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनं" ॥ इति गारुडे ॥ एवं "द्रव्ययज्ञास्तपोयज्ञाः योगयज्ञास्तथापरे । स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः" ॥ इति गीतायां ॥

---

## देवान्भावयतानेन ते देवा भावयंतु वः ।
## परस्परं भावयंतः श्रेयः परमवाप्स्यथ ॥ ११ ॥

वि ॥ कथमिष्टकामदोग्धृत्वं यज्ञस्येत्यत आह ॥ देवानिति । हे प्रजाः अनेन यज्ञेन यूयं देवान्भावयत संभावयत । हविर्भिस्तर्पयत । ते हविरादिभिस्तृप्ता देवा वो युष्मान्

भावयंतु । इष्टकामदानेन तर्पयंतु ॥ एवमन्योन्यं भावयंतो देवाश्च यूयंच परं श्रेयो मोक्षाख्यमवाप्स्यथ ॥

शं ॥ कथं । देवानिति । देवानिंद्रादीन् भावयत वर्धयत अनेन यज्ञेन । ते देवा भावयंत्वाप्याययंतु वृष्ट्यादिना वो युष्मान् ॥ एवं परस्परमन्योन्यं भावयंतः श्रेयः परं ज्ञानप्राप्तिक्रमेणावाप्स्यथ, स्वर्गं वा परं श्रेयोऽवाप्स्यथ ॥

रा ॥ कथं अनेन देवताराधनभूतेन देवान् मच्छरीरभूतान् मदात्मकानाराधयत, "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" इति हि वक्ष्यते ॥ यज्ञेनाराधितास्ते देवा मदात्मकाः स्वाराधनापेक्षितान्नपानादिकैर्युष्मान्पुष्णंतु । एवं परस्परं भावयन्तः परं श्रेयो मोक्षाख्यमवाप्स्यथ ॥

विचारः

इन्द्रादिदेवपूजा हविरादिभिः कर्तव्येति प्रथमपादाभिप्रायः । यज देवपूजायामिति यज्ञो देवताराधनं । तैस्तृप्ता अभिवृद्धाश्च प्रीतास्सन्तो देवाः वृष्ट्यादिभिरन्नपानादिप्रदानेन यजमानं तर्पयन्ति इति द्वितीयपादाशयः ॥ अनेन यज्ञानां इष्टकामदोग्धृत्वं सेत्स्यति । तथा परस्परसभावनंच स्फुटं । चतुर्थपादोक्तपरश्रेयःप्राप्तिस्तु न स्फुटा ॥

(१) हविर्भिर्वृष्ट्यादीन्प्राप्य कथं यजमानाः मोक्षं लभन्ते इति प्रथमस्सन्देहः ॥

(२) परस्परं भावयन्तः श्रेयः परमवाप्स्यथेत्यन्वयस्योचितत्वात् किं देवानां यजमानानांच मोक्ष उक्तः, उत यजमानानामेवेति द्वितीयस्सन्देहः ॥

"अहं हि सर्वयज्ञानां भोक्ताच प्रभुरेवचे"त्युक्तेः भगवतो नारायणस्यैव सर्वयज्ञभोक्तृत्वेन देवानां भगवच्छरीरात्मकत्वाच्च सर्वेऽपि देवयज्ञाः भगवत्पूजा एवेति मोक्षस्य फलतयोक्तिं अभिप्रैति रामानुजाचार्यः ॥ तत्रेदं वक्तव्यं । यद्यपि भगवानेव स्वतन्त्रभोक्ता स एवापेक्षितं फलं ददाति देवताद्वारेण । तथाप्येतदनुसन्धानविधुराणां मोक्षप्राप्तिर्नोपपद्यते । नहि वक्तुं शक्यते, प्रथमपादोक्ताः यजमानास्सर्वेऽपि निष्कामनया भगवत्पूजात्वानुसन्धानेनैव याजका विवाक्षिता इति । नापि द्वितीयपादेन वृष्ट्यादिकं अन्नपानादिवृत्तयो वा न विवक्षिता इति वक्तुं शक्यते ॥ तस्मात्प्रथमार्धेन काम्ययज्ञः कामितं फलं च संगृहीतं भाति । तर्हि कथं "परं श्रेयः" इत्युक्तिरुपपद्यते इति प्रष्टव्यं ॥ द्वेधाऽस्य समाधान संभवति ॥ स्वर्गादीनामपेक्षितानां फलानामत्युत्कृष्टत्वाभिप्रायेण परं श्रेय इत्युक्तं इत्येकं । अस्मिन् अर्थवादत्वेनोक्तिरुपपन्ना ॥ परशब्देन विशेषणान्मोक्ष एव ग्राह्य इत्युक्तेऽपि देवतापूजादिभिस्तत्प्रसादे लब्धे सति निश्शेषविनष्टप्रतिबन्धा भूत्वा क्रमप्राप्तनिष्कामकर्मसत्वशुद्धिद्वारा ज्ञानं लब्ध्वा मोक्षमाप्नुवन्तीत्याशयेऽपि नानुपपत्तिरित्यपरं ॥ भगवतस्सर्वयज्ञभोक्तृत्वं देवशरीरान्तर्यामित्वं च, तदनुसन्धानविधुराणां मोक्षोपयोगि न भवितुमर्हतीति तन्मात्रपुरस्कारेण व्याख्यानं चिन्त्यम् ॥

द्वितीयं संशयमेवं शमयति शङ्करानन्दः, "यद्यप्यत्र "परस्परं भावयन्तः श्रेयः परमवाप्स्यथ" इत्युभयेषां परश्रेयःप्राप्तिविधिः प्रतीयते । तथापि विचार्यमाणे प्रजानामेव धर्मोपदेशविषयत्वेनोक्तधर्मानुष्ठानलभ्यपरमश्रेयःप्राप्तिविधिः न तु तदनुग्राहकाणां देवानां । तेषामुपदेशाविषयत्वात्स्वयंप्रभातविज्ञानत्वाज्जीवन्मुक्तत्वाच्च न श्रेयोविधिरुपयुज्यते ॥ ततस्संभावनायामेव परस्परपदस्य संबंधो न तु परमश्रेयःप्राप्तिविधाविति ज्ञेयम्" इति ॥ देवा अनुग्राहका एव नानुग्राह्याः ज्ञानिनो जीवन्मुक्ताश्च धर्मोपदेशाविषया इत्याद्यायेदं समाधानमुक्तम् ॥

स्यादिदं पारितोषिकं जीवन्मुक्तत्वम्।तेषामनुग्राहकत्वेऽपि ज्ञानित्वेऽप्युपदेशाविषयत्वं कुतो लभ्यते। तेह्यद्यापि न मुक्ताः। अतस्तेषां मुक्तिसाधनजातं नाद्यापि पूर्ण इत्यूह्यते । कल्पादौ अज्ञानिजीवसंघवत्तेऽपि हि सृज्यन्ते । स्वाधिकारप्रवेशानुज्ञायाः पूर्वं भगवान्प्रजापतिस्तान्प्रत्युपदिशतीत्युक्तौ को दोष.॥ भक्तजनान्यथायोग्यं भावयन्तो देवाः स्वोच्छ्रयं स्वसाधनपूर्तिञ्च लब्ध्वा परं श्रेयो लभन्ते इत्यर्थो निर्दिष्टो भाति ॥ देवानामधिकृतत्वेन स्वविहितकार्यकरणेनानन्दवृद्धिर्वर्तत एव ॥ अत एवाह विवृत्याचार्यः "देवाश्च यूयं च श्रेयो मोक्षाख्यमवाप्स्यथे"ति ॥

(केनचिदिदं पद्यं गूढाभिसन्धित्वेनेत्थं व्याख्यातं, "देवाः क्रीडाशाला इन्द्रियप्रवृत्तयः करणेश्वर्यो देवता रहस्यशास्त्रप्रसिद्धाः, ता अनेन कर्मणा तर्पयत । यथासंभवं विषयान्भक्षयतेत्यर्थः । तृप्ताश्च सत्यस्ताः वो युष्मानात्मनएव स्वरूपमात्रोचितानपवर्गान् भावयन्तु । स्वात्मस्थितियोग्यत्वात् ॥ एवमनवरतं व्युत्थानसमाधिसमयपरंपरायामिन्द्रियतर्पणतदात्मसद्भावलक्षणे परस्परभावने सति शीघ्रमेव परमं श्रेयः परस्परभेदविगलनलक्षणं ब्रह्म प्राप्स्यथ" इति ॥ अयमर्थोऽतिगूढो भाति । यथासंभवं भोज्यान् भुक्त्वा निद्राद्युपरतिचानुभूय व्युत्थानसमाध्योर्मग्नाः कथं नामाज्ञाः ब्रह्माभिमुखा भवेयुरिति न ज्ञायते ॥ नहीदं स्थितप्रज्ञप्रकरणं, यत्र संप्रज्ञातासंप्रज्ञातावस्थे संभवतः । अपितु देवानां तदितरासां सर्वासां प्रजानां च परस्परसंभावना हि प्रकरणार्थः, सृष्ट्वा प्रजाः प्रजापतिरुवाचेत्युक्तेः । अज्ञानां व्युत्थानसमाधीतु जाग्रन्निद्रे एवेति कथमेतयोर्ब्रह्मप्राप्तिसाधकत्वं स्यादिति संक्षेपः ॥

इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः॥
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः॥१२

वि ॥ एतदेव स्पष्टयितुं कर्माकरणे दोषमाह ॥ इष्टानिति । यज्ञैर्भाविताः देवाः वो युष्मभ्यं इष्टान् भोगान् दास्यन्ति । तैर्देवैर्दत्तान्नादीन् तेभ्यो यज्ञादिभिरप्रदाय यो सः स्तेन एव चोर एव ॥

शं ॥ किंच । इष्टान्भोगानिति । इष्टानभिप्रेतान् भोगान्हि वो युष्मभ्यं देवा दास्यन्ते वितरिष्यन्ति । स्त्रीपशुपुत्रादीन् यज्ञभाविताः यज्ञैर्वर्धिताः तोषिता इत्यर्थः ॥ तैर्देवैः दत्तान्भोगान् अप्रदाय अदत्वा आनृण्यं अकृत्वा इत्यर्थः ॥ एभ्यः देवेभ्यः । यः भुङ्क्ते स्वदेहेन्द्रियाण्येव तर्पयति, स्तेन एव तस्कर एव सः देवादिस्वापहारी ॥

रा ॥ यज्ञभाविताः यज्ञेनाराधिताः मदात्मका देवाः इष्टान्भोगान्वो दास्यन्ते । उत्तमपुरुषार्थलक्षणं मोक्षं साधयतां ये इष्टाः भोगास्तान् भोगान् पूर्वपूर्वयज्ञभाविता देवाः दास्यन्ते, उत्तरोत्तराराधनापेक्षितान् सर्वान् भोगान् वो दास्यन्ते इत्यर्थः ॥ स्वाराधनार्थतया तैर्दत्तान्भोगान् तेभ्योऽप्रदाय यो भुङ्क्ते चोर एव सः ॥ चौर्यं हि नाम अन्यदीये तत्प्रयोजनायैव परिक्लृप्ते वस्तुनि स्वकीयताबुद्धिं कृत्वा

तेन स्वात्मपोषणं। अतोऽस्य न परमपुरुषार्थानर्हतामात्रं, अपि तु निरयगामित्वं च भविष्यतीत्यभिप्रायः ॥

विचारः

(यज्ञैस्सम्भाविताः देवाः पशुपुत्रकलत्रधनधान्यादीन् वितरिष्यन्ति। पुनश्च पुरोडाशादिरूपेण दानमपेक्षन्ते। यद्येवं न दत्तम्। तर्हि देवस्वचौर्येणानर्थभाग्भवति नरः इत्यर्थः॥ हिशब्देन "तृप्त एवैनमिंद्रः प्रजया पशुभिस्तर्पयति" "ते तृप्तास्तर्पयन्त्येनं सर्वकामफलैः शुभैः" इति श्रुतिस्मृतिप्रसिद्धिस्सूचिता ॥

(इष्टान्भोगानित्यत्रोत्तरोत्तराराधनापेक्षितान् मुमुक्ष्वभीष्टान् इत्यर्थसङ्कोच आश्रितो रामानुजाचार्येण। "देवाहि कर्मभिराराधिता अपि हविर्ग्रहणार्थमेव फलं प्रयच्छन्ति। यथा राजानष्षड्भागसंग्रहाय स्वाराधकेभ्यः क्षेत्रादिकम्। तत्र करप्रदानविमुखाः पुरुषा इव हविरादिकमप्रयच्छन्तो दण्ड्या एव" इति देशिकोपपादनम्॥)

'स्तेन एव सः' इत्यनेन कृतायाः निन्दायाः भावस्सम्यगनुसन्धेयः॥ (अन्यदीयस्य वस्तुनः स्वकीयतया परिग्रहश्चौर्यं॥ इहखलु मानवः स्वसामर्थ्येनैव धनादिकं संपादितं इति भ्रांत्वा स्वोदरभरणमात्रपरस्सन्, अस्ति परलोक इत्यर्थं विस्मृत्य नास्तिको भूत्वा आयुः क्षपयति॥ वस्तुतस्तु देवैर्दत्तं खल्वैश्वर्यं प्राचीनपूजाफलत्वेन पौनःपुन्येन पुण्यकर्मकरणं प्रतीक्ष्य, अतो देवैर्न्यस्तानि नाम भागधेयानि। न्यासवस्तूनि हि न्यासके प्रत्यर्पयितव्यानि यथा योग्यम्। अन्यथा न्यासद्रोही भवति। स्तेनोऽप्येतादृश एव॥ "योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते। किं तेन न कृतं पापं चोरेणात्मापहारिणा॥" इति भारतोक्तं (उद्योग 42-35) चानेनैवाभिप्रायेण। भगवदीयस्य स्वातन्त्र्यस्य स्वस्मिन्नारोपात्मत्वात्तस्यापहारस्य॥ इन्द्रादिदत्तं ऐश्वर्यादिकं यः स्व-

सामर्थ्येन संपादितं इति भ्रांत्वा स्वोपभोगायैव तदुपयोजयति स एकःस्तेनः। सर्वं भगवदायत्तं इति ज्ञानं विना स्वस्वातन्त्र्यं यो मन्यते सोऽपि स्तेन एव। (यस्तु सर्वोऽप्यभ्युदयो भगवतस्सकाशादेवायास्यति साक्षाद्वा इन्द्रादिदेवताद्वारा वेति मत्वा न्यासप्रत्यर्पणधिया साक्षाद्वा इन्द्रादितर्पणद्वारावा भगवन्तं आराधयति स एवास्तेनः । श्रेयानिति यावत्)।

(अस्यापि श्लोकस्याध्यात्मिकार्थमाह अभिनवगुप्ताचार्यः ।। "यज्ञतर्पितानि हीन्द्रियाणि स्थितिं वध्नंति यत्र क्वापि ध्येयादावित्यतः एतद्व्यापारे सति तेषां विषयाणां स्मृतिसंकल्पध्यानादिना भावाः विषयाः इंद्रियैरेव दत्ताः। यदि तेषामेवोपभोगाय नदीयंते तर्हि स्तेनत्वं चौर्यं स्यात् । छद्मचारित्वात् । उक्तं हि पूर्वमेव भगवता "मिथ्याचारस्स उच्यते" इति ।। अतोऽयं वाक्यार्थः, यः सुखोपायं सिद्धमपवर्गं वा प्रेप्सति तेनेन्द्रियकौतुकनिवृत्तिमात्रफलतयैव भोगाः यथोपनतमासेव्याः" इति ।।)

अत्रेदं चिंत्यते ।। "न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूयएवाभिवर्धते ।।" इति ययातिवचनं नानेन व्याख्यात्रा स्मृतमवगम्यते ।। इन्द्रियकौतुकनिवृत्तिमात्रफलतया भोगानां सेव्यत्वं प्रायशोऽशक्यं भाति । "ऋणं कृत्वा घृतं पिबेत्" इति चार्वाकोक्तदिशा इन्द्रियभोगस्यानुज्ञां दातुमिदं प्रकरणं किं प्रवृत्तम् । अपितु स्वोपभोगं निरुध्य द्रव्यादित्यागरूपैर्यज्ञैर्देवतापूजां खलु शास्ति । तस्माद्गुप्ताचार्येण यो गूढार्थः प्रकाशितः, तस्मिन्नकिंचिदपि स्वारस्यं दृश्यते इति ।।

यज्ञशिष्टाशिनस्सन्तो मुच्यन्ते सर्वकिल्बिषैः ।
भुञ्जते ते त्वघं पापाः ये पचन्त्यात्मकारणात् ॥ १३ )

वि ॥ एवमयजतो विनिंद्य यजतः स्तौति । यज्ञेति । विष्णुतदितरदेवाराधनावशिष्टभोजिनः सन्तः सर्वकिल्बिषैः पापैः प्रमुच्यन्ते । यद्वा वैश्वदेवादियज्ञावशिष्टभोजिनः सन्तः सर्वकिल्बिषैः, "खण्डनी पेषणी चुल्ली उदकुम्भी च मार्जनी । पञ्च सूना गृहस्थस्य ताभिस्स्वर्गं न विंदति ॥" इत्युक्तपञ्चसूनाकृतदोषैर्मुच्यन्तइत्यर्थः ॥ पुनरयजतो निन्दति । भुञ्जत इति । आत्मकारणात् स्वार्थमेव ये पचान्ति ते पापाः अघमेव भुञ्जते अघनिमित्तमेव भुञ्जते । तद्भोजनं पापहेतुरेवेत्यर्थः ॥ इति प्रजापतिरुवाचेति इतिशब्दो योज्यः ॥

शं ॥ यज्ञेति ॥ ये पुनर्देवयज्ञादीन्निर्वर्त्य तच्छिष्टमशनममृताख्यमशितुं शीलं येषान्ते यज्ञशिष्टाशिनः सन्तो, मुच्यंते सर्वकिल्बिषैः सर्वपापैश्चुल्यादिपञ्चसूनाकृतैः प्रमादकृतहिंसादिजनितैश्चान्यैः । येत्वात्मंभरयो भुञ्जते ते त्वघं पापं, स्वयमपि पापाः ये पचंति पाकं निर्वर्तयंति । आत्मकारणात् आत्महेतोः ॥

रा ॥ तदेव विवृणोति । इन्द्राद्यात्मनाऽवस्थितपरमपुरुषाराधनार्थतयैव द्रव्याण्युपादाय विपच्य तैर्यथावस्थितं तं परम-

पुरुषमाराध्य तच्छिष्टाशनेन ये शरीरयात्रां कुर्वते । ते त्वनादिकालोपार्जितैः किल्बिषैरात्मयाथात्म्यावलोकनविरोधिभिस्सर्वैर्मुच्यन्ते । ये तु परमपुरुषेणेन्द्राद्यात्मना स्वाराधनाय दत्तानात्मार्थतयोपादाय विपच्याश्नंति । ते पापात्मानोऽघमेव भुञ्जते । अघपरिणामित्वादघमुच्यते । आत्मावलोकनविमुखाः नरकायैव पचन्ते ॥

विचारः

अत्र पूर्वार्धे 'श्रेयः परमवाप्स्यथ' इत्यस्य प्रकारकथनं । उत्तरार्धं 'तैर्दत्तानप्रदायैभ्यः' इत्याद्युक्तस्य प्रपञ्चनरूपं (दे) ॥

सन्तः वर्तमाना इत्यर्थो वा साधव इत्यर्थो वा युज्यते । आद्ये यज्ञशिष्टाशिन एव वर्तमानाः मुच्यन्ते नत्वन्ये इत्यर्थो लभ्यते । द्वितीयार्थे उत्तरार्धस्थपापशब्दप्रतिस्थानीयत्वेन साधव उक्ताः इति ज्ञेयम् ॥

"यज्ञशिष्टाशिनः" इति । यज्ञेति ऋषिपितृभूतमनुष्ययज्ञा विवक्षिता केचित् । सामन्यतो, विष्णुतदितरदेवाराधनं विवक्षितं इति विवृत्याचार्यैः । वैश्वदेवादिकं वा गृह्यते इत्यपि तस्याशयः ॥

यज्ञशिष्टं अमृतं इत्युच्यते । "अमृतं विघसो यज्ञशेषभोजनशेषयो"रित्यमरः । "अमृतं यज्ञशेषे स्यात् पीयूषे सलिले घृते । अयाचिते च मोक्षे च ना धन्वन्तरिदेवयोः" इति मेदिनी । यज्ञस्य शेषो होमावशिष्टाज्यपुरोडाशादिः, देवपित्रथितिगुर्वादिभुक्तस्य च शेषः ॥

"सर्वकिल्बिषैः" इति सामान्यतस्सर्वाणि पापानि उक्तानीति प्रतीयते । एवमाह रामानुजाचार्योऽपि । "आत्मावलोकनविरोधिभिस्सर्वै-

मुच्यन्ते" इति तद्व्याख्यानं ।। "एतेन विरोधित्वाविशेषात्सांसारिकपुण्यान्यप्यत्र किल्बिषशब्देनोच्यन्ते" इति (देशिकः) ।।

द्वितीयार्धे 'तु'शब्दोऽवधारणार्थः । "अघमेव भुञ्जते" इत्यर्थः इति विवृत्यां । एवमेव मधुसूदनः । उ० दीपिकाकारस्त्विममर्थं प्रत्याचष्टे । "(तुशब्दः पूर्ववैलक्षण्यार्थः । अवधारणतु 'सर्वं वाक्यं सावधारणं' इति न्यायलब्धं । एतेन 'तुशब्दोऽवधारणे' इत्याचार्यविरुद्धोक्तिः प्रत्युक्ता" इति ।। अहो आचार्यपक्षपातः, शब्दप्राप्यमर्थं विहाय अपवादग्रस्त न्यायमवलम्ब्य यद्व्याख्यातं इति ।।

पापा इति । पापमेषामस्तीत्यर्थे अर्शआद्यजतत्वात् पुल्लिङ्गोऽत्र पापशब्दः पापविशिष्टविषयः ।।

आत्मकारणात् इति । कारणशब्दः प्रयोजनरूपहेतुपरः । आत्मैव कारणमिति प्रसिद्धार्थएव साधुः विवृत्यनुसारीच ।।

पापं भुंजते पापनिमित्तं भुंजते । यद्वा पापमेवान्नरूपेण स्थितं भुंजते इति ।। पापं श्रुतावुक्तं "इदमेवास्य तत्साधारणमन्नं यदिदमद्यते स य एतदुपास्ते न स पाप्मनो व्यावर्तते मिश्रं ह्येतत्" इति । मन्त्रवर्णोऽपि "मोघमन्नं विन्दते अप्रचेताः । सत्यं ब्रवीमि वध इत्सतस्य । नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी ।" इति (तै. अष्ट. २-प्र. ४. ऋग्वेद 8-6-23-10) ।।

आत्मकारणादित्यनन्तरं इतिशब्दोऽध्याहार्यः, प्रजापत्युक्तेरेतावत्पर्यन्तत्वात् । इदं विवृत्याचार्यसूचितं । वेङ्कटनाथेनापि स्वीकृतम् । अन्ये व्याख्यातारस्तु नेदं प्रदर्शयन्ति ।।

इममपि श्लोकं गूढार्थत्वेनाभिनवगुप्ताचार्यो व्याचष्टे । "अवश्यकर्तव्यतारूपशासनमहिमायातान्भोगान्येऽश्नन्ति अवान्तरव्यापारमात्रतया,

त एव च पृथक् फलत्वाभावाङ्गतया । अथ चेन्द्रियात्मकदेवगणतर्पण-लक्षणयज्ञादवशिष्टमन्तःसारस्वात्मस्थित्यानन्दलक्षणविघसं येऽश्नन्ति तत्र रूढा भवन्ति तदुपादेयोपायतया तु विषयभोगं वांछन्ति । ते सर्वकिल्विषैः शुभाशुभैर्मुच्यन्ते । येत्वात्मकारणान् इति । अविद्यावशात्स्थूलमेव विषयभोगं परत्वेन मन्वानाः आत्मार्थमिदं वयं कुर्म इति कुर्वते, त एवाघं शुभाशुभात्मकं लभन्ते" इति ॥ यथाश्रुतार्थपरित्यागेनास्मिन्नर्थे क्लेशः स्फुटः ॥

**अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः ।**
**यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४ ॥**

वि ॥ वर्णाश्रमोचितकर्मणस्सर्वथा कर्तव्यत्वे स्तुत्याऽघात्मकार्थवादं चतुर्भिरुक्त्वा अधुना जगच्चक्रप्रवर्तकत्वरूपं हेत्वन्तरं विपक्षेऽनर्थोक्त्याह । अन्नाद् भूतानि भवंति । रेतोद्वारा प्राणिन उत्पद्यंते । पर्जन्यात् आदित्यादन्नसंभवः । द्वारा अन्नस्योत्पत्तिः । पर्जन्यो मेघचक्राभिमानी आदित्यः यज्ञाद्भवति । यज्ञशब्दोऽत्राज्यादिहविःपरः । यजमानदत्तेनाज्यादिहविषामुपभोजनेनादित्यस्य बलाद्युपचयान्निमित्तादुपचारेण यज्ञाद्भवति पर्जन्य इत्युच्यते । यद्वा पर्जन्यशब्देनादित्याभिमन्यमानं मेघचक्रमेव लक्षणया वा, "जननात्परसस्यादेः पर्जन्यो मेघसंतति"रिति स्मृत्युक्तयोगवृत्त्या वा ग्राह्यं । तच्च यज्ञाद्भवति हविर्भागेन परितुष्टादादित्यादुत्पद्यते । "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुप-

तिष्ठते । आदित्याज्जायते वृष्टि"रित्यादेः॥ वृष्टिर्वार्षिकमेघचक्रं जायत इत्यर्थः ॥ यज्ञो देवतोद्देशेन द्रव्यत्यागरूपो ज्योतिष्टोमादिः, कर्मसमुद्भवः तदंगक्रिययोत्पद्यते ॥

शं ॥ इतश्चाधिकृतेन कर्म कर्तव्यं । जगच्चक्रप्रवृत्तिहेतुर्हि कर्म । कथमिति, उच्यते ॥ अन्नाद्भवन्तीति । अन्नाद्भुक्ताल्लोहितरेतःपरिणतात्प्रत्यक्षं भवन्ति जायन्ते भूतानि । पर्जन्याद्वृष्टेः, अन्नस्य संभवोऽन्नसंभवः । यज्ञाद्भवति पर्जन्यः, "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥" इति स्मृतेः । यज्ञोऽपूर्वं । स च यज्ञः कर्मसमुद्भवः । ऋत्विग्यजमानयोश्च व्यापारः कर्म, ततः समुद्भवो यस्य यज्ञस्यापूर्वस्य । स यज्ञः कर्मसमुद्भवः ॥

रा ॥ पुनरपि लोकदृष्ट्या शास्त्रदृष्ट्या च सर्वस्य यज्ञमूलत्वं दर्शयित्वा यज्ञानुवर्तनस्यावश्यकार्यतां अननुवर्तने दोषं चाह । अन्नात्सर्वाणि भूतानि भवन्ति । पर्जन्याच्चान्नसम्भव इति सर्वलोकसाक्षिकं । यज्ञात्पर्जन्यो भवति इति च शास्त्रेणावगम्यते । (ब्रह्मपुराणे २९ अ ४. श्लो) मनु. भारतादिषु च द्रष्टव्यं ॥ "अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिः" इत्यादिना ॥ यज्ञश्च द्रव्यार्जनादिकर्तृव्यापाररूपकर्मसमुद्भवः ॥

कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥१५

एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥१६॥

वि ॥ कर्म ब्रह्मोद्भवं परब्रह्मजन्यं विद्धि जानीहि ॥ ब्रह्म परब्रह्म चाक्षरसमुद्भवं । अक्षरशब्दितवेदाभिव्यंग्यं । वेदेन यथावदवगतमेव ब्रह्म सत्कर्म कारयतीति भावः ॥ तानि चाक्षराणि भूतव्यंग्यानीति शेषोक्त्या चक्रं ध्येयं ॥ तस्मादुक्तपरंपरया यज्ञाभिव्यंग्यत्वात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितमित्युच्यते ॥ एवं च भगवतो यज्ञे प्रतिष्ठितत्वात् यज्ञानुष्ठानेन चक्रप्रवृत्तौ भूतस्थितिहेतुत्वानिमित्तसुकृतमिव भगवदभिव्यक्तिनिमित्तं च सुकृतं भवतीति भावः ॥ १५ ॥

(एवं पुरातनैः प्रवर्तितं भगवतैव वा प्राणिनां इष्टसिद्ध्ये प्रवर्तितं जगच्चक्रं, इह लोके यो नानुवर्तयति । कर्म न करोतीति यावत् ॥ विश्वस्य चक्रे अन्तर्भावात् ) कर्माकरणेन चक्राप्रवृत्तौ चक्रविनाशकत्वेन विश्वहंतृत्वात् सः अघायुः । तादर्थ्यात्ताच्छब्द्यं । अघनिमित्तमायुर्यस्य सः तथा । इन्द्रियारामः इन्द्रियैर्विषयेषु रतिमान् । हे पार्थ ।

व्यर्थमेव जीवति, नरके मज्जतीत्यर्थः ॥ यज्ञदानतपोरूपत्रिविधकर्मणां गृहस्थानामिव ब्रह्मचर्याद्याश्रमत्रयस्यापि विद्यादानाभयदानस्वभोक्तव्यान्नदानस्य च, तथा अध्ययनप्रवचनध्यानादिरूपवाचिकमानसिकयज्ञस्य, तथा कृच्छ्रचांद्रायणादितपसः सत्त्वेन तेषामपि चक्रप्रवर्तनसंभवो ज्ञेयः। उक्तं हि "वाचिको मानसो यज्ञो न्यासिनां तु विशेषतः" इत्यादि ॥ १६ ॥

शं ॥ तच्च कर्म ब्रह्मोद्भवं । ब्रह्म वेदः स उद्भवः प्रकाशको यस्य तत् कर्म, ब्रह्मोद्भवं विद्धि विजानीहि ॥ ब्रह्म पुनः वेदाख्यं, अक्षरसमुद्भवं । अक्षरः परमात्मा समुद्भवो यस्य अक्षरसमुद्भवं ब्रह्म वेदः इत्यर्थः ॥ यस्मात् साक्षात् परमात्माख्यात् अक्षरात् पुरुषात् निश्वासवत् समुद्भूतं ब्रह्म, तस्मात् सर्वार्थप्रकाशकत्वात् सर्वगतमपि सत्, नित्यं सदा यज्ञविधिप्रधानत्वात् यज्ञे प्रतिष्ठितम् ॥ १५ ॥

एवमिति ॥ एवं ईश्वरेण वेदयज्ञपूर्वकं जगच्चक्रं प्रवर्तितं नानुवर्तयति इह लोके यः कर्मणि अधिकृतस्सन्, अघायुः अघं पापं आयुः जीवनं यस्य सः अघायुः पापजीवनः इति यावत् । इन्द्रियारामः इन्द्रियैः आरमणं आक्रीडा यस्य सः इन्द्रियारामः, मोघं वृथा हे पार्थ स जीवति । तस्मात् अज्ञेन अधिकृतेन कर्तव्यमेव कर्म इति

प्रकरणार्थः ॥ प्राक् आत्मज्ञाननिष्ठायोग्यताप्राप्तेः तादर्थ्येन कर्मयोगानुष्ठानं अधिकृतेन अनात्मज्ञेन कर्तव्यं इत्येतत् , "न कर्मणामनारम्भात्" इत्यत आरभ्य "शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः" इत्येवमन्तेन प्रतिपाद्य, यज्ञार्थात् कर्मणोऽन्यत्र इत्यादिना "मोघं पार्थ स जीवति" इत्येवमन्तेनापि ग्रन्थेन प्रासङ्गिकमधिकृतस्य अनात्मविदः कर्मानुष्ठाने बहुकारणमुक्तम् । तदकरणे च दोषसङ्कीर्तनं कृतम् ॥ १६ ॥

रा० ॥ कर्म ब्रह्मोद्भवं विद्धि ॥ अत्र च ब्रह्मशब्दनिर्दिष्टं प्रकृतिपरिणामरूपं शरीरं । "तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते" इति हि ब्रह्मशब्देन प्रकृतिर्निर्दिष्टा । इहापि "मम योनिर्महद्ब्रह्म" इति हि वक्ष्यते ॥ अतः कर्म ब्रह्मोद्भवं इति प्रकृतिपरिणामरूपशरीरोद्भवं कर्मेत्युक्तं भवति । ब्रह्माक्षरसमुद्भवं इत्यत्राक्षरशब्दनिर्दिष्टो जीवात्मा । अन्नपानादिना तृप्ताक्षराधिष्ठितं शरीरं कर्मणे प्रभवतीति कर्मसाधनभूतं शरीरमक्षरसमुद्भवं, तस्मात् सर्वगतं ब्रह्म सर्वाधिकारिगतं शरीरं, नित्यं यज्ञे प्रतिष्ठितं यज्ञमूलमित्यर्थः ॥ १५ ॥

एवं परमपुरुषेण प्रवर्तितमिदं चक्रं ॥ अन्नात् भूतशब्दनिर्दिष्टानि सजीवानि शरीराणि, पर्जन्यादन्नं, यज्ञात्पर्जन्यः, यज्ञश्च कर्तृव्यापाररूपात् कर्मणः, कर्म च स-

जीवाच्छरीरात्, सजीवं शरीरं पुनरप्यन्नात् इत्यन्योन्यकार्यकारणभावेन चक्रवत्परिवर्तमानं, इह साधने वर्तमानो यः कर्मयोगाधिकारी ज्ञानयोगाधिकारी वा नानुवर्तयति न प्रवर्तयति। यज्ञशिष्टेन देहधारणमकुर्वन् सोऽघायुर्भवति। अघारम्भायैव यस्यायुरघपरिणतंवोभयरूपं वा सोऽघायुः। अत एवेन्द्रियारामो भवति। नात्मारामः। इन्द्रियाण्येवास्योद्यानानि भवन्ति॥ अयज्ञशिष्टवर्धितदेहमनस्त्वेनोद्रिक्तरजस्तमस्कः आत्मावलोकनविमुखतया विषयभोगैकरतिर्भवति॥ अतो ज्ञानयोगादौ यतमानोऽपि निष्फलप्रयत्नतया मोघं पार्थ स जीवति॥ १६॥

विचारः (१४. १५. १६.)

(१४) देवमनुष्ययोरितरेतरयोगक्षेमनिर्वाहकत्वेनानुबन्धं यज्ञाकरणे न्यासद्रोहेणाकर्तुस्स्तेनत्वं, अनुष्ठानेत्वमृतभोक्तृतया श्रेयःप्राप्तिंच प्रजापतिराहेत्यर्थवादद्वारा कर्मणां सर्वथाकर्तव्यत्वमुक्त्वा इदानीं हेत्वन्तरेण तदेवोपपाद्यते॥

(यदुक्तं परस्परभावनया श्रेयो लभ्यत इति, तच्च निरूप्यते। जगद्व्यापारचक्रे परिवर्तमाने दिवि भुवि जातानामन्योन्यसापेक्षं संयुक्तत्वेन, विना ब्रह्मप्रतिष्ठितं यज्ञं, मनुष्यस्य चक्रानुवर्तनाभावे सति यतोऽसावघायुर्भवति ततस्तेन यज्ञस्सर्वथाऽनुष्ठेयः इति निरूप्यतेऽत्र त्रिभिः श्लोकैः)(भूतान्यन्नात्, अन्नं पर्जन्यात्, पर्जन्यो यज्ञात्, यज्ञः कर्मणः, कर्म ब्रह्मणः, ब्रह्म अक्षरात्,

अक्षरं भूतेभ्यः इति यथायोग्यं उत्पन्त्यभिव्यक्त्युपचयादिकं पुरस्कृत्य चक्रस्वरूपं ज्ञातव्यं ॥




अत्र भूतशब्देन प्राणिन उच्यन्ते। अन्नं तदुपभोग्यवस्तूनि व्रीह्यादीनि। पर्जन्य[1] यज्ञ[2] कर्म[3] ब्रह्म[1] अक्षर[5]शब्दैः किं प्रतिपाद्यते इत्यत्रास्ति किंचिद्विवादः ॥

(एतद्विचारात्पूर्वं यदभिनवगुप्ताचार्येण गूढार्थत्वेन प्रतिपादितं तत्सूच्यते । ("अन्नात् अविभागभोग्यस्वभावात् कथंचिन्मायाविद्याप्रकृतिकालाद्यनेकापरपर्यायात् भूतानि भवन्ति । पर्जन्यात् अविच्छिन्नसंवित्स्वभावादात्मनः अन्नं, भोक्तृतन्त्रात्मलाभत्वाद्भोग्यतायाः । पर्जन्यो भोक्ता । यज्ञात् भोगक्रियायाः पर्जन्यः, तदायत्तत्वात् भोक्तृत्वस्य । यज्ञः कर्मणः क्रियाशक्तिस्वातन्त्र्यबलात् । तच्च स्वातन्त्र्यमविच्छिन्नमप्यनविच्छिन्नानन्तस्वातन्त्र्यपूर्णसमुच्चलन्महेश्वरभावपरमात्मब्रह्मणः संस्पर्शवशात् । तच्च उच्चलदच्छादितैश्वर्यं ब्रह्म, अक्षरानुप्रशान्ताशेषैश्वर्यतरङ्गात्संविन्मात्रात् । इत्येवं व्यवस्थितोऽयं यज्ञः षडरं चक्रं वाहयन्, तत्तु अरात्रयसन्धानादपवर्गं अरात्रयतन्त्रणाद्व्यवहारमासूत्रयतीति विद्याविद्योल्लासतरङ्गसुभगं ब्रह्म यज्ञे एव प्रतिष्ठितम् ॥ यस्त्वेवं नाङ्गीकरोति स पापमयः । अतस्स इन्द्रियेष्वेव रमते नात्मनि " इति ॥)

अत्रेदं संदिह्यते । "नियतं कुरु कर्म त्वं" इति कर्मणस्सर्वथा कर्तव्यत्वं खलु प्रकरणार्थः। इममर्थं दूरीकृत्य यज्ञः षडरं चक्रं वाहयन् अरात्रयसंधानादपवर्गं अरात्रयतन्त्रणाद्व्यवहारमासूत्रयतीति कल्पना चित्यमूला ॥ "एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः" इत्यत्र चक्रप्रवेशेनाधिकारी कर्मणि नियोजितो भाति। अनुवर्तनं नाम यथासंभवमनुष्ठानं खलु विवक्षितं। स्पष्टोक्तं क्रियायोगं परित्यज्य नानुवर्तयति नांगीकरोति इत्यंगीकारमात्रार्थकथनं क्लिष्टं भाति। किंचु कथं सूर्यस्य मेघस्य वा वाचकः पर्जन्यशब्दः भोक्तात्मवाचको भवति। कथं च यज्ञपदं भोगक्रियासामान्यं बोधयेत्। एवं कर्मशब्देन शक्तिस्वातन्त्र्यग्रहणे नियामकं चित्यं। अक्षरशब्दस्य प्रशांताशेषैश्वर्यतरंगभूतसंविन्मात्रवाचकत्वं च कथं लभ्यते ॥

किंच भूताद्यक्षरपर्यंतमुक्त्वा परस्परसंयुक्तत्वज्ञापनाय संग्राहकतयेदं चक्रं इत्यभिहितं॥ उक्तयोराद्यंतयोर्भूताक्षरयोर्विनाऽन्योन्यसंबंधं, केवलजन्यजनकपरंपरामात्रात् चक्रत्वं न सेत्स्यति। गुप्ताचार्यार्थे जन्यजनकपरंपरामात्रं गम्यते। यदि भूतानीत्याविद्यकप्रपंच उच्यते अक्षरपदेन संविन्मात्र, तर्हि तयोर्मध्ये संविदो भूतोद्भवनायोगेन चक्रत्वं दुर्गमं भवति। प्राण्यर्थकत्वेतु अक्षरशब्देन वेदस्य ग्रहणे वेदाः पठनाध्ययनादिविवक्षया जनोद्भूता इति चक्रत्वं सुकरं। किंच यदि यज्ञस्य सर्वथानुष्ठेयत्वं प्रकरणार्थः इत्युभ्युपगमः, तदा तदुपयुक्तप्रमेयतया अन्नादिसंभवप्रपंचनपूर्वकं यज्ञे सर्वं प्रतिष्ठितं इत्युक्तिः संगता भवति। यद्युक्तरीत्या तन्न प्रकरणार्थः इत्युच्यते तर्हि भूतान्न-पर्जन्य-यज्ञ-कर्म-ब्रह्माक्षरेषु सप्तसु मध्ये यज्ञस्य षडरचक्रवाहकत्वं दुर्गमं दृश्यते। आस्तामयमाध्यात्मिकोऽर्थः, यं भाष्यकारा वा मधुसूदनादयो वा नानुमोदन्ते ॥

प्रसिद्धार्थेतु भूतान्नपर्जन्ययज्ञकर्मब्रह्माक्षरभूतानि इति चक्रं ज्ञेयं। यथायोग्यं जन्यजनकभावोऽनुसन्धेयः। अन्नाद्भूतोत्पत्तिः प्रत्यक्षसिद्धा। पर्ज-

न्यादन्नसंभव इत्यत्र पर्जन्यशब्दस्यार्थेऽस्ति किंचिद्विचार्यं। "अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः॥" इति मानववचनेन प्रजानां जनकं वर्षं, वर्षस्यादित्यः, आदित्यस्य बलं होमः इति गम्यते। एवं संवादवाक्यानुरोधेन पर्जन्यो रविरेव भवितुमर्हति। यद्यपि पर्जन्यशब्दः मेघे रूढः। तदभिमानित्वेन तु सूर्येऽपि रूढो भवति। "अभिमानिव्यपदेशस्तु विशेषानुगतिभ्यां" इति सूत्रोक्तन्यायमनुसृत्य बालरूढिं विनैव विद्वद्रूढ्या सूर्यवाचको भवति॥ "तत्तन्नामान एवैते तत्तद्रूस्त्वभिमानिनः" इत्यनुव्याख्याने अभिमान्यभिमन्यमानयोर्नामैक्यं सूचितं॥ तथाच पर्जन्यापरपर्यायस्य सूर्यस्यान्नोत्पादकत्वं यज्ञोत्पाद्यत्वं च यथायोग्यमनुसन्धेयं। स तु यज्ञैरुपचितशरीरो मेघमुत्पाद्य तज्जन्यवृष्टिद्वारा अन्नं जनयतीति यावत्॥ ननु यज्ञजन्यत्वं गौणं खल्वत्रोपपादितं। यज्ञो हि द्विविधः। सामान्यतो मनुष्यैरनुष्ठीयमानः पर्जन्यशरीरोपचयहेतुरेकः, पर्जन्यस्य पर्जन्यपदप्राप्तिहेतुभूतः स्वानुष्ठितः पूर्वतनो यज्ञः अपरः। अत्र द्वितीययज्ञः पर्जन्यकारणं विशेषाकारेण। आद्यस्तूपचारेण पर्जन्यकारणं भवति॥ द्वयोर्मध्ये आद्योहि मनुष्यानुष्ठानविषयो यज्ञो भवद्भिरत्राभिप्रेततयोच्यते, कथमेतदिति चेन्न। येन यज्ञेन पर्जन्यत्वमयं प्राप, स यज्ञो नात्र विवक्षामर्हति। तस्य पर्जन्यपदप्राप्तिहेतोर्यज्ञस्य चक्रप्रवेशायोगात्॥)

यद्वा पर्जन्य इति मेघचक्रं विवक्षितम्। तस्य तत्र कोशप्रसिद्धेः। "जननात्परसस्यादेः पर्जन्यो मेघसन्ततिः" इति नारदीयवचनमिमं शब्दं यौगिकं च गमयति॥ यज्ञोपचितादित्यजन्यत्वेन मेघानामपि यज्ञसम्भव औपचारिकः॥ मेघादन्नं इत्यत्र अनुपपत्तिं पश्यन्तः केचित् पर्जन्यशब्देन तत्कार्यं वर्षं लक्ष्यत इत्याहुः॥ पर्जन्यादन्नसम्भवस्तु "याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति। पर्जन्येनौषधिवनस्पतयः प्रजायन्ते।

ओषधिवनस्पतिभिरन्नं भवति" इति श्रुतेर्गम्यते । पर्जन्यो यज्ञाद्भवतीत्युक्तेरानुगुण्येन तत्त्वमनतिक्रम्य यज्ञशब्दार्थो वर्णनीय. । तथा पर्जन्यसम्भवप्रकारश्च । यद्यपि यज्ञशब्दः देवतामुद्दिश्य द्रव्यपरित्यागे रूढः । तथाप्यत्र परित्यज्यमानं द्रव्यं गृह्यते, तस्य पर्जन्यान्नत्वात् ॥ शाङ्करव्याख्यानेषु तु 'ऋत्विग्यजमानव्यापारसाध्यः अपूर्वाख्यो धर्मः सूक्ष्मो यज्ञशब्देन विवक्षितः' इत्युक्तम् । अपूर्वाङ्गीकारे रूढित्यागेन लक्षणाश्रयणं स्यात् इति प्रमेयदीपिकायां देशिकतात्पर्यचन्द्रिकायां च दूषितम् ॥

'कर्म ब्रह्मोद्भवं' इति । ब्रह्म वेद इति अत्र शाङ्करं व्याख्यानम् । तदानुगुण्येन 'ब्रह्माक्षरसमुद्भवं' इत्यत्र अक्षरशब्देन परमात्मानमादाय वेदस्य परब्रह्ममुखादाविर्भावादुक्तेरुपपत्तिं परिकल्प्य "निश्वसितो यदृग्वेदो यजुर्वेदः" इति प्रमाणंचोदाहृतं परैः ॥ ब्रह्मपदेन प्रसिद्धपरब्रह्मग्रहणे काऽनुपपत्तिरिति चिन्त्यते । अनुपपत्तिस्तु न कापि दृश्यते ॥ कर्म ब्रह्मोद्भवं, ब्रह्मणस्सत्कर्मकारयितृत्वात् तदनुग्रहायत्तत्वात्कर्मणः । "ब्रह्माक्षरसमुद्भवं" इत्युक्तिरपि अक्षरशब्देन वेदग्रहणे आम्नायैकवेद्यं ब्रह्म इत्युपपद्यते ॥ शाङ्करव्याख्यानोक्तप्रकारेण ब्रह्माक्षरशब्दयोरर्थव्यत्यासे "तस्मात्सर्वगतं ब्रह्म" इत्युपसंहारे ब्रह्मशब्देन परमात्मग्रहणं अयुक्तं स्यात् । अक्षरशब्देन ब्रह्मग्रहणे चक्रं नोपपद्यते । अक्षरभूतयोरन्योन्यकार्यकारणभावाभावेन चक्रवत्परिवर्तनस्यायोगात् ॥ वेदग्रहणे तु तस्य भूतैस्सह व्यंग्यव्यंजकभावः संबन्धस्सुगमः ॥

रामानुजाचार्यस्तु ब्रह्मशब्देन भूतशरीरं प्राकृतं गृह्णाति ॥ "मम योनिर्महद्ब्रह्म" इति वचनमत्र प्रमाणयतिच । अक्षरपदं जीवपरं व्याख्याति 'अन्नाद्भूतशब्दनिर्दिष्टानि सजीवानि शरीराणि । पर्जन्यादन्नं यज्ञात्पर्जन्यः यज्ञश्च कर्तृव्यापाररूपात्कर्मणः कर्मच सजीवाच्छरीरात् सजीवं शरीरं पुनरप्यन्नात् इति चक्रं उपपादितं रामानुजाचार्यभाष्ये ॥

अत्र वेदस्य परब्रह्मणो वा चक्रप्रवेशो न दृश्यते । केवलं शरीर-जीवात्मनोर्वचनायापूर्वब्रह्माक्षरपदप्रयोगे प्रयोजनं चिन्त्यं । ब्रह्मविशेषण-तया सर्वगतत्वस्योपादानं कुतः कृतमिति च संदिह्यते । तस्मात्सर्वगतं शरीरं नित्यं यज्ञे प्रतिष्ठितं इत्यनेन कः प्रमेयविशेषः उपदिष्टः। विना यज्ञं शरीरयात्रा न सेत्स्यतीति प्रमेयं तु "शरीरयात्रापि च ते न प्रसिद्ध्येद-कर्मणः" इति प्रागेव प्रतिपादितं ॥ किंचात्र सर्वैरपि व्याख्यातृभिर्यज्ञ-स्यातिशय उपपादनीयः । "तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितं" इत्युक्तेः ब्रह्मपदेन परब्रह्म ये गृह्णन्ति तेषां यज्ञस्यातिशयोपपादनं सुकरं । ब्रह्मैव हि जगच्चक्रप्रवृत्तिहेतुः । ब्रह्म तु यज्ञोपलक्षितकर्मानुसृत्य नीचमध्यमोत्तम-भेदभिन्नं जगत्प्रवर्तयतीति, यज्ञः परमात्मनि वैषम्यादिदोषशङ्कामपाकरो-तीत्यतस्तस्य प्राधान्यं स्फुटं । तस्मात् यज्ञे ब्रह्म प्रतिष्ठित इति वचनं चोपपद्यते ॥ येतु जगत्प्रवर्तकं परब्रह्म विहाय ब्रह्मशब्देन पामरशरीरादिकं गृह्णन्ति तेषामुक्तानुपपत्तिर्दुर्वारा दृश्यते। परब्रह्मप्रतिस्थानत्वं खलु यज्ञस्य महागौरवापादकं अवश्यकर्तव्यतायां प्रबलहेतुश्च भवितुमर्हति । शरीरे प्रतिष्ठितत्वं तु न तथा गौरवमावहति कर्तव्यतायां नीरसश्च हेतुः ॥

केचिद्यज्ञ इत्यग्निहोत्रानुबन्धि कर्मैव गृह्णन्ति । गीतातात्पर्येत्वनेकवि-धस्य सत्कर्मणस्संग्राहकत्वेनेदं व्याख्यातं॥ पर्जन्ययज्ञब्रह्माक्षरेतिपदानां च व्याख्यानरूपाणि नारदीयोक्तानि तात्पर्याचार्यैरुदाहृतानि पठ्यन्ते—

"जननात्परसस्यादेः पर्जन्यो मेघसन्ततिः ।
स यज्ञात्कर्मणः सोऽपि समग्रं कर्म केशवात् ॥
सऽनित्योऽप्यक्षरततिरूपाद्वाक्याद्धि गम्यते ।
वाक्यमुच्चार्यते भूतैस्तान्यन्नात्तच्च मेघतः ॥

तस्मात्सर्वगतो विष्णुर्नित्यं यज्ञे प्रतिष्ठितः ।
एवं प्रवर्तित चक्रं नानुवर्तयतीह यः ॥
स पापो विश्वहंतृत्वान्नरके मज्जति ध्रुवं ।
वाचिको मानसो यज्ञो न्यासिनां तु विशेषतः ॥
वनस्थस्याक्रतुर्यज्ञः क्रत्वादिर्गृहिणोऽखिलः ।
शुश्रूषाद्यात्मको यज्ञो विहितो ब्रह्मचारिणः ॥
विद्याभयादिदानं च सर्वेषामपि संमतम् ।
गृहिणो वित्तदानंतु वनस्थस्यान्नपूर्वकं ॥
सर्वैःकार्यं तपोघोरमिति सर्वे त्रिकर्मिणः "॥ इति नारदीये ॥

यज्ञविभागस्तथा मानवे (III 70 73 75).

"अहुतं च हुतं चैव तथा प्रहुतमेव च ।
ब्राह्मं हुतं प्राशितंच पंच यज्ञान्प्रचक्षते ।
जपोऽहुतं हुतो होमः प्रहुतो भौतिको बलिः ।
ब्राह्मं हुतं द्विजाग्र्यार्चा प्राशितं पितृतर्पणं ।
स्वाध्याये नित्ययुक्तः स्याद्दैवेचैवेह कर्मणि ।
दैवे कर्मणि युक्तो हि बिभर्तीदं चराचरं ॥ " इति ॥

भगवान् श्रीमन्नारायणोऽनिरुद्धप्रद्युम्नसङ्कर्षणवासुदेवनामभिः देवांश्चक्रमिव पर्यावर्तयदिति श्रुतावप्युक्तं । तथाहि "चतुर्भिस्साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीरँवीविपत् " इति । अस्यार्थः, सः बृहच्छरीरो मूलरूपी चतुर्भिः वासुदेवादिनामभिः नाममात्रैः स्वरूपभेदशून्यैः साकं नवतिं, अष्टौ वसवः एकादश रुद्राः द्वादशादित्याः दश प्रजापतयः पंचाशन्मरुतः इति । चक्रं न चक्रमिव व्यतीन् विशेषेणाधिकान् देवान् अवीविपत् पर्यावर्तयत् इति ॥ गीतोक्तचक्रे पर्जन्यशब्देनोपलक्षणया देवादीनां नवतीत्युक्तानां संग्रहस्सम्भवति ॥

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च संन्तुष्टस्तस्य कार्यं न विद्यते ॥ १७

वि ॥ एवं न कर्मणामनारंभादित्यादिना सहयज्ञा इत्यादिना चोक्तदिशा कर्माकरणतत्करणयोर्हानिलाभौ चेत्तर्हि परमेश्वरे असंप्रज्ञातसमाधिरूपं मनस्समाधानमपि न कार्यं प्रसज्येत । तत्र कर्मलोपस्यावश्यकत्वादित्यत आह ॥ यस्त्विति ॥ तुशब्दस्समाधिस्थत्वविशेषसूचकः । यस्त्वसंप्रज्ञातसमाधिस्थः मानवोऽपरोक्षज्ञानी । मनुतेरवण् । आत्मरतिरेव, अत्रात्मशब्दस्सर्वोऽपि परमात्मपरः । आत्मनि आत्मनो वा रतिमान् दर्शनजन्यसुखवान् । परमात्मविषयकदर्शनजन्यसुखवानेव नत्वन्यत्र रतिमानित्येवकारार्थः ॥ भगवतोऽन्यत्र रतिराहित्यं न प्रायेणेति मन्तव्यं किंतु सर्वात्मनेत्याह । आत्मतृप्त इति । आत्मना तृप्तः परमात्मप्रसादेनैव । तदन्यत्र सर्वात्मनाऽलंबुद्धिमानित्यर्थः । अन्यत्रालंबुद्धिरपि भगवत्प्रसादायत्तेति भावः ॥ किंचातिशयितं सुखं दत्वा भगवानन्यत्र सर्वात्मनाऽलंबुद्धिमुत्पादयतीत्यतोऽन्यत्रालंबुद्धौ हेतुतया प्रागुक्तरत्याख्यमेव सुखमाह ॥ आत्मन्येव च संतुष्ट इति । सम्यक् तुष्टिमान् संतुष्टः महासुखवानित्यर्थः । हेतुगर्भमिदं । भगवद्दर्शननिमित्तकमहासुखवत्त्वादन्यत्रालंबुद्धिमानिति ॥ भगवद्दर्शननिमित्तकं महासुखं केन हेतुना स्यादित्यतस्संतुष्टत्वे हेतुरात्म-

न्येवेति। अधिकरणसप्तमी। आत्मानि स्थित एव सन्सं-तुष्ट इति। असंप्रज्ञातसमाधिरूपयाऽऽत्मनि स्थित्यैव संतुष्टो नत्वन्येन केनापीत्येवकारार्थः॥ अत्र मानव इति उक्तिः अ-परोक्षिण एवासंप्रज्ञातसमाधिरिति द्योतयितुं॥ (यस्त्वेवंरूपः तस्य कार्यं कर्तव्यं संध्यावन्दनादिकं किमपि कर्म न विद्यते॥ (मू० उत्तरश्लोकव्याख्याने विवृतौ लिखितं इह सौकर्याय लिख्यते)। यद्वा न केवलं चक्रप्रवर्तकत्वेन भूतस्थितिहे-तुत्वात्कर्म कर्तव्यं, किन्तु मुक्तस्यैवाकर्मत्वादमुक्तेनावश्यं कर्म कार्यं इति 'तस्मात्' इत्यनेन वक्तुं अकर्मत्वं मुक्तस्यै-वेत्याह—यस्त्विति॥ यस्तु मानवः प्राप्तज्ञानफलो मुक्तः आत्मरतिः आत्मना परमात्मना रतिः अभिव्यक्तस्वरूपा-नन्दो यस्य सः तथा आत्मना परमात्मना तृप्तः कृतकृत्यः आत्मतृप्तः आत्मन्येव च सन्तुष्टः प्रीतिमान्। तस्य तु तस्यैव मुक्तस्यैव कार्यं न विद्यते।

शं॥ एवं स्थिते किमेवं प्रवर्तितं चक्रं सर्वेणानुवर्तनीयं आहोस्वित्पूर्वोक्तकर्मयोगानुष्ठानोपायप्राप्यां अनात्मविदा ज्ञानयोगेन निष्ठां आत्मविद्भिः सांख्यैरनुष्ठेयां अप्राप्तेनैव इत्येवमर्थमर्जुनस्य प्रश्नमाशंक्य, स्वयमेव वा शास्त्रार्थस्य विवेकप्रतिपत्त्यर्थं, एतं वा एतमात्मानं विदित्वा निवृत्त-मिथ्याज्ञानास्सन्तो ब्राह्मणाः मिथ्याज्ञानवद्भिरवश्यं कर्तव्ये-भ्यः पुत्रैषणादिभ्यो व्युत्थायाथ भिक्षाचर्यं शरीरस्थितिमात्र-

प्रयुक्तं चरन्ति । न तेषां आत्मज्ञाननिष्ठाव्यतिरेकेण अन्यत्कार्यं अस्ति इत्येवं श्रुत्यर्थमिह गीताशास्त्रे प्रतिपिपादयिषितं आविष्कुर्वन्नाह, यस्तु इति । यस्तु सांख्यः आत्मज्ञाननिष्ठः आत्मरतिः न विषयेषु यस्य स आत्मरतिरेव स्यात् भवेत् । आत्मतृप्तश्च । आत्मनैव तृप्तो नान्नरसादिना । स मानवः मनुष्यः संन्यासी आत्मन्येव च संतुष्टः । संतोषो हि बाह्यार्थलाभे सर्वस्य भवति । तमनपेक्ष्य आत्मन्येव च संतुष्टः सर्वतो वीततृष्ण इत्येतत् ॥ य ईदृश आत्मवित् तस्य कार्यं करणीयं न विद्यते नास्तीत्यर्थः ॥

रा ॥ असाधनायत्तात्मदर्शनस्य मुक्तस्येव महायज्ञादिवर्णाश्रमोचितकर्मानारंभइत्याह ॥ यस्तु ज्ञानयोगकर्मयोगसाधननिरपेक्षः स्वतएवात्मरतिरात्माभिमुखः, आत्मनैव तृप्तो नान्नपानादिभिरात्मव्यतिरिक्तैः, आत्मन्येव च संतुष्टो नोद्यानस्रक्चन्दनगीतवादित्रनृत्तादौ, धारणपोषणभोग्यादिकं सर्वमात्मैव यस्य तस्यात्मदर्शनाय कर्तव्यं न विद्यते । स्वतएव सर्वदा दृष्टात्मस्वरूपत्वात् ॥

विचारः

(कर्म सर्वैः कर्तव्यं इत्युत्सर्गतः प्रतिपादितं । तस्यापवादमाह । यस्त्विति । तुशब्दः अपवादं द्योतयति । यः आत्मरतिरेव आत्मतृप्तश्च आत्मन्येव सन्तुष्टःतस्य तु कार्यं न विद्यते इत्यन्वयः )( जनास्तावत्केचित्परोक्षज्ञानिनः केचिदपरोक्षज्ञानिनः । तत्राद्यैः कर्मावश्यमनुष्ठेयमित्यत्र न

विवादः ॥ द्वितीयाः संप्रज्ञातासंप्रज्ञातावस्थाभेदेन द्विविधाः ॥ अपरोक्षज्ञानिनोऽपि यदाऽसंप्रज्ञातावस्थायां न मग्नाः, तदा तैः कर्म कर्तव्यमेव ॥ यदात्वसप्रज्ञातदशापन्नाः तदा कर्माननुष्ठानेन जगच्चक्राननुवर्तनान्न प्रत्यवयन्ति इति भावः ॥

मानवः इति पदं न मनुष्यपरं, ऋष्यादिव्यावृत्तेरसाङ्गत्यात् । वैयर्थ्याच्च । किंत्वपरोक्षज्ञानिनो वाचकं । 'मनु अवबोधने' इत्यस्माद्धातोर्भावे उप्रत्ययः । ततो मनुरवबोधोऽस्यास्तीत्यस्मिन्नर्थे मनोरयमाश्रय इत्यर्थेवाऽण् प्रत्ययः । यद्वा धातोरेवावण् प्रत्ययः (प्र. दी.) ॥ मानवशब्देन ब्रह्मज्ञान्युच्यते इत्यर्थः परेषामपि सम्मतः । तथाहि, शङ्करानन्दः "बहिरंतश्च सर्वत्र ब्रह्मैव मापयति ग्राहयति इति मानं प्रत्यग्दर्शनं । तदेव सर्वदा वाति भजतीति मानवः ब्रह्मविद्यतिः" इति व्याचष्टे ॥ "चण्डालोऽस्तु स तु द्विजोऽस्तु गुरुरित्येषा मनीषा मम" इति शङ्कराचार्यवचनं हृदि निधाय मधुसूदनस्तु 'मानव'शब्दभावमेवमाह । "मानव इति, यः कश्चिदपि मनुष्य एवं भूतः स एव कृतकृत्यो न तु ब्राह्मणत्वादिप्रकर्षेणेति कथयितुं" इति ॥

तस्य कार्यं न विद्यते इत्युक्तं । कार्यशब्दार्थः कः, कस्य न विद्यते इति विचार्य ॥ "न तस्य कार्यं करणं च विद्यते नतत्समश्चाभ्यधिकश्च दृश्यते । पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इत्यत्र कार्यं शरीरमित्यादाय प्रकृतेऽपि कार्यं शरीरं स्यादित्याशंक्य नेति समाहितं देशिकव्याख्याने ॥ शङ्का तु निर्मूला भाति ॥ कार्यं न विद्यते इत्यनेन कर्तव्यं न विद्यते इत्यर्थे न काप्यनुपपत्तिर्दृश्यते, मुक्तानामपि "जक्षन्क्रीडन्रममाणः" इत्युक्तेः कार्यस्य संभवात् कार्यपदमत्रात्मदर्शनार्थककर्तव्यपरं इति संकोचश्चाश्रितो रामानुजाचार्येण ॥ अकरणे प्रत्य-

वायापादकं कर्म न विद्यते इत्यर्थे सुगमे सति आत्मदर्शनायेति विशेषणप्रदानं नावश्यकं भाति ॥

कस्य कार्यं न विद्यते इत्याकाङ्क्षायां ब्रह्मसाक्षात्कारवतः संप्रज्ञातासंप्रज्ञातसाधारणस्येति शाङ्कराणां हृदयं ॥ असंप्रज्ञातदशापन्नब्रह्मसाक्षात्कारवतस्तद्दशायामेव कार्यं न विद्यते इति श्रीमध्वाशयः। यद्वा मुक्तपरोऽयं श्लोकः। यथोक्तं गीतातात्पर्ये उपोद्घातप्रकरणे, "यस्त्वात्मरतिरेव स्यादिति तु मुक्तविषयं। "यस्त्वेवात्मरतो मुक्तः कार्यं तस्यैव नास्ति हि। तस्मात्कुर्वीत कर्माणीत्याह कृष्णोऽर्जुनं स्मयन् ॥" इति स्कान्दे" इति ॥

अत्र शङ्करानन्दः, "परावरैकत्वविज्ञानवह्निनिर्मूलितद्वैतभ्रमस्य सर्वं ब्रह्मैव पश्यतो जीवन्मुक्तस्य ब्रह्मविदः कर्मकरणं स्वार्थं वा परार्थं वा ऐहिकार्थं वाऽऽमुष्मिकार्थं वा शरीररक्षार्थं परिग्रहरक्षार्थं वाऽयुत विलासार्थम् ॥ आमुष्मिकार्थत्वे, स्वर्गार्थं वाऽपवर्गार्थं वा आत्मशुद्ध्यर्थं वा। आत्मशुद्ध्यर्थत्वे शरीरशुद्ध्यर्थंवा चित्तशुद्ध्यर्थंवा" इत्यादिविकल्पप्रदर्शनपूर्वकं सर्वानपि पक्षान् प्रत्याचष्टे ॥ आत्मशुद्ध्यर्थत्वपक्षनिराकरणावसरे आह "अस्नाविरं शुद्धमपापविद्धं" इति श्रवणान्निरवयत्वेनाविषयत्वाच्च कर्मणाऽऽत्मनः शुद्धिकल्पनायोगात्। यज्ज्ञानबलेन विष्णुरुद्रादयोऽकार्यशतकोटिमपि कृत्वा स्वयं शुध्यन्त्यन्यानपि शोधयन्ति तमात्मानं कः केन शोधयेत्" इति ॥ किंचाह "देहवर्णाश्रमादिष्वहंममेत्यभिमानः प्रपंचसत्यत्वबुद्धिः अर्थित्वं कर्तव्यताबुद्धिरकरणे प्रत्यवायभयं शास्त्रभयं च खलु प्रवृत्तेर्बीजम्। तदेतत्सर्वमप्यस्मिन्नास्ति" इति ॥ लोकसंग्रहवचनविषयः कः इति विचारावसरे स एवाह "अपरोक्षज्ञानी द्विविधः सिद्धस्साधकश्चेति। तयोस्सिद्धस्य लोकसंग्रहो नोपपन्नः। यतस्स्वविज्ञानेन स्वं च सर्वं च प्राणिजातं मुक्तमेव पश्यति। साधकस्यापि मुमुक्षोः कर्मविधिर्नदृश्यते। नहि मुमुक्षोर्यतेर्निदिध्यासोर्लोकसंग्रहार्थं कर्म कर्तव्यमिति विधिरस्ति विना समाधिं। "तमेव धीरो विज्ञाय

प्रज्ञां" इत्यादिभिः ज्ञाननिष्ठैव कर्तव्यत्वेन श्रूयते । अतः साधकस्यात्मवेदिनो यतेः कर्तव्यः समाधिरेव । नश्रौतं नस्मार्तं च । स्वार्थं वा परार्थं वा । अतः परोक्षज्ञान्येव बहुधाकृतश्रवणः आभासात्मज्ञान्यहममादिवाह्यवासनाबद्धो लोकसंग्रहवचनस्य विषयः " इति ॥

अत्रोच्यते । उक्तविकल्पप्रतिक्षेपावसरे विष्णोरप्यकार्यशतकोटिप्रयुक्तदोषानुद्भाव्य आत्मज्ञानबलेन तेषां परिहारो यः कल्पितः स विस्मयं जनयति ।अपरोक्षज्ञान्यपि शरीरचित्तयोश्शुद्ध्यर्थं साधनपूर्त्यर्थं मुक्तावानन्दवृद्ध्यर्थं लोकसंग्रहार्थं च कर्म कुर्यादेव ॥ प्रपञ्चसत्यत्वधीस्तु न भ्रमः । व्युत्थितस्य ज्ञानिनः अर्थित्वं च संभवति । अधिकज्ञानानंदभगवत्प्रसादानामर्थ्यमानत्वात् । अकरणे प्रत्यवायभयं शास्त्रभयं च तस्य भूषणमेव ॥

"योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः । सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ नैव किंचित्करोमीति युक्तो मन्येत तत्ववित्" । इत्यादिवाक्यपर्यालोचनया अपरोक्षज्ञानिनापि कर्म कर्तव्यमेवेति प्रतीयते (गी. 5 7) ॥ स्वमुक्त्या सर्वमुक्तिज्ञानं तु भ्रम एव । किंच आत्मरतिरेव आत्मतृप्तश्च आत्मन्येव च सन्तुष्टः इत्यवधारणत्रयं दृश्यते । आत्मतृप्तश्चेत्यत्रापि एवकारार्थानुकर्षात् । अवधारणाभ्यासस्य प्रयोजनचिन्तायां सर्वात्मना रतितृप्तिसंतोषा एव विवक्षिताः प्रतीयंते । असंप्रज्ञातदशायामेव ते सर्वात्मना संभवतीति न केवलापरोक्षज्ञानिपरोऽयं श्लोकइति गम्यते। असंप्रज्ञातदशायामेव कर्मकर्तव्यत्वस्यापवादः इति पद्याक्षरैरवगम्यते ॥ "यो भुङ्क्ते सतु न ब्रूयात्" इत्यत्र यथा कालावच्छेदो वाक्यार्थः, एवं "य आत्मरति"रित्यादावपि रत्यादिसमये तस्य न कार्यं इत्येवार्थः । "यो दारान् परिगृह्णाति स गृही", । "यो दारान्परित्यजति स यतिः" इत्यादयोऽपि प्रयोगास्तथैव योज्याः ॥ यद्यपि यत्पतति तद्गुरु इत्यत्र गुरुत्वपतनयो-

स्समानकालावस्थानं न विवक्षितं । अयं तु प्रयोगोऽमुख्यः ॥ यथोपपादितं प्रमेयदीपिकायां । "अयं भावः, तस्य कार्यं न विद्यते इत्युक्तेऽतिप्रसक्तौ सत्यां अन्यव्यावर्तकं "यस्त्वात्मरतिरेव स्या"दित्यनेनोक्तं । व्यावर्तकं च द्विविधं भवति । विशेषणमुपलक्षणं चेति ॥ तत्र व्यवच्छेद्यसमानकालं विशेषणं, यथा सिद्धान्त्युदाहृतं भोजनं । अन्यथातूपलक्षणं । यथा पूर्वपक्ष्युदाहृतं पतनं । तत्र विशेषणं मुख्यं, विशेषज्ञानहेतुत्वात् । अन्यदमुख्यं, वैपरीत्यात् । मुख्यामुख्ययोश्च मुख्ये कार्यसंप्रत्ययः ॥ न चात्रविशेषणत्वग्रहणे बाधकमस्ति । येनोपलक्षणमेतदिति प्रतीमः" इति ॥

तथाचावधारणबलादसंप्रज्ञातसमाधिकर्ता गृह्यते । यो भुंक्ते इत्यादिप्रयोगानुगृहीतन्यायबलात्तद्दशायामेव न कार्यमित्यर्थश्च सिध्यति ॥ अपरोक्षज्ञानिव्यतिरिक्तस्यासंप्रज्ञातदशा न संग इति द्योतनाय मानवपदप्रयोगः । एवं मानवत्वे सत्यसप्रज्ञातदशापन्नस्य कार्यं नास्तीत्याशयः॥

अत्र पद्यस्थात्मशब्दाः परमात्मपराः । "विष्णुप्रसादाद्रतिमांस्तृप्तोविष्णुप्रसादतः । विष्णावेवातितृप्तश्च मुक्तोऽसौ विद्ध्यगोचरः" इत्याग्नेये (गी. ता) ॥ आत्मरतिः आत्मनि रतिर्यस्य । आत्मनोरतिर्यस्येति वा । आत्मतृप्तः आत्मना परमात्मप्रसादेन सर्वात्मनान्यत्रालम्बुद्धिमान् । अत्र पंचमीसमासोऽनुपपन्नः ॥ आत्मनः सकाशादन्यत्रालम्बुद्धिमानिति हि पंचमीसमासेनार्थो वक्तव्यः । अत्र अन्यत्रेत्यस्य तृप्तिशब्दार्थान्तर्भावाभावात्, आत्मन इत्यस्यान्यत्रेतिपदं विनान्वयासामर्थ्यात् तृतीयासमास एव ज्यायान् ॥ षष्ठीसमासस्तु "पूरणगुणसुहितार्थे"ति प्रतिषिद्धः । "वयं तु न वितृप्याम उत्तमश्लोकविक्रमैः" इत्यत्र तृप्तिरलंबुद्धिमात्र । नत्वन्यत्रालंबुद्धिः । अन्यथा उत्तमश्लोकविक्रमेभ्योऽन्यत्रालंबुद्धिं न प्राप्नुमः इत्यर्थः प्रसज्येत ॥

आत्मन्येव सन्तुष्टः, आत्मनि स्थितस्सन्नत्यतसुखवान्। स्थितिरसंप्रज्ञातसमाधिः॥ आत्मरतिरेवेत्यवधारणेनान्यात्रालंबुद्धौ लब्धायामपि यत्पृथगात्मतृप्त इत्याभिधत्ते, तेन सर्वात्मनाऽलंबुद्धिरवधारणेनाभिप्रेतेति ज्ञायते (प्र. दी.)॥

रतितृप्तिसंतोषाणां वैलक्षण्यं व्याख्यातृभिरनेकधा प्रदर्शितमस्ति॥ रतिः दर्शनादिनिमित्तं सुखं। "दर्शनस्पर्शसंभाषाद्यत्सुखं जायते नृणां। आरामस्तु विज्ञेयः" इत्यभिधानं (पञ्चमे उदाहृत)॥ प्रकृते परमात्मदर्शननिमित्तं सुखं विवक्षितम्॥ तृप्तिरलंबुद्धिः। योग्यतयाऽन्यत्रेति लभ्यते॥ परमात्मप्रसादेन सर्वथाऽन्यत्रालंबुद्धिमान् आत्मतृप्तः॥ संतोषः तृप्तिकारणं महासुखं इति व्याख्यातं श्रीमदाचार्येण भाष्ये॥ तृप्तिसंतोषशब्दयोः पर्यायत्वेऽपि परमात्मना तृप्तः,परमात्मनि तृप्तः, इति समासभेदेन विशेषो ज्ञायते गीतातात्पर्यगतव्याख्यानेन॥ 'संतोषस्तृप्तिरापूर्तिः प्रीतिः पर्यायवाचकाः' इत्यभिधानं॥ रतितृप्तिसंतोषाः भिन्नाः इत्यपि वक्तु शक्यते। "रतिरानन्द उद्दिष्टस्तृप्तिस्तु कृतकृत्यता। प्रीतिस्तु द्विविधः स्नेहः कर्मजो निज एव च"॥ इति शब्दनिर्णयवचनं उदाहृतं (गी-तात्पर्ये)॥

"रतितृप्तिसंतोषाणां मोदप्रमोदानन्दवदवान्तरभेदः। अथवा रतिः विषयासक्तिः। तृप्तिः विषयविशेषसंपर्कजं सुखं। संतोषः अभीष्टविषयमात्रलाभाधीनं सुखसामान्यम्" इत्यानन्दगिरिटिप्पण्यामुक्तं॥

'रतितृप्तितुष्टयो मनोवृत्तिविशेषाः साक्षिसिद्धाः' इति मधुसूदनीये। प्रकृते 'रतितृप्तिसंतोषाः वैषयिकस्येव ज्ञानिनो न मनोवृत्तिरूपाः। किंत्वात्मरूपा एवे'ति वेङ्कटनाथो दर्शयति॥ अपरोक्षज्ञानस्य मानसत्व "प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान्" इत्यत्र व्याख्याने प्रतिपादितं द्रष्टव्यमिति प्रार्थ्यते॥ "न्यायनये रतिरुत्कटेच्छा। तृप्तिः कामितलाभ-

प्रयुक्तलब्धाधिकतज्जातीयेच्छाराहित्ये सति सुखविशेषः। कामितमनोज्ञान्नपानादिलाभेऽपि तज्जातीयलब्धाधिकेच्छावतो लब्धप्रयुक्तसुखसत्वेऽपि न तृप्तिव्यवहारः, अपितु नास्मि तृप्तो परं देहीतिव्यवहार इति सत्यंत। तादृशेच्छाविरहे अन्नपानाद्युपयोगप्रयुक्तसुखविरहे च तृप्तत्वव्यवहारवारणाय विशेष्यदलम्॥ तुष्टिरल्पलाभेऽपि तदधिकवाञ्छाराहित्यं" इति धर्मदत्तः॥ "रतिशब्दोऽत्राभिमुख्यविषयः। तृप्त्यादेःपृथङ्निर्देशात्। तृप्तितुष्टिशब्दौहि भोग्यपोषकजन्यप्रीतिविषयतया प्रसिद्धौ" इति देशिकः॥

"अनात्मविषयकरतितृप्तितुष्टयभावादात्मानं परमानन्दमद्वयं साक्षात्कुर्वन्नुपचारादेवमुच्यते आत्मरतिरात्मतृप्त आत्मसन्तुष्ट इति" इति मधुसूदनीये॥ तथाच ज्ञानिनः रत्यादिकं उपचारादेवेति सूचितं भवति॥ "आत्मरत्यादिशब्दा अनात्मविषयकरत्याद्यभाववति लाक्षणिकाः। रत्यादिपदानां उक्तमनोवृत्तिविशेषेषु शक्तत्वात्, मुख्यस्यात्मसाक्षात्कारवति रत्यादिपदार्थस्याभावात्" इति धर्मदत्तेनोपपादितं॥ एवं जघन्यवृत्त्याश्रयणं स्वसमयानुवर्तनायातिक्लिष्टमिति स्फुटम्॥

एतच्छ्लोकार्थपर्यालोचनायां अर्जुनः ज्ञानी नरांशः इन्द्रः इत्येतन्न विस्मरणीयम्॥ सोऽज्ञानीति पक्षो द्वितीयाध्याये निरस्तः )(अपरोक्षज्ञानिसामान्यस्य कार्याभावेहि झटित्यसौ रणरङ्गान्निवर्तेत। कार्याभावस्यासंप्रज्ञातमात्रपरत्वेत्वर्जुनो निरुत्तरो भवति इति श्रीमध्वव्याख्यानमेव रम्यम्॥

**नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन।**
**नचास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः॥१८॥**

वि॥ ननु कर्मकरणाकरणयोर्लाभहानी चेत्तर्हि समाधिर्न

कार्यः प्रसज्येतेति चोदिते, समाधिस्थस्य कार्यं न विद्यत इत्युत्तरं कस्मादुक्तं । कर्मकृतिकाले त्वयाऽहमुद्बोधनीय इति कञ्चित्प्रत्युक्त्वा समाधौ स्थितस्सन्, तेन योगशास्त्रोक्तैरुपायैरुद्बोधितः कर्म करोतीत्येवोत्तरं कुतो नोक्तमित्यत आह ॥ नैवेति । तस्यासम्प्रज्ञातस्थस्य समाधिं विनेह कृतेन यज्ञादिकर्मणाऽऽत्मरत्यधिकस्तत्समो वाऽर्थः पुमर्थो नास्ति ॥ ननु यज्ञादिकरणार्थं उत्थानाभावेऽपि नित्यनैमित्तिककर्माकरणे प्रत्यवायात् तत्करणार्थं समाधित उद्बोधनं आवश्यकमित्यत आह ॥ नाकृतेनेति । तस्य समाधिस्थस्य अकृतेन कर्मणा सन्ध्यावन्दनादितत्तत्कालानुष्ठेयकर्माभावेन कश्चन, दोषः इति शेषः । नास्ति ॥ ननु समाधिस्थस्याल्पस्य यज्ञादेरनुष्ठाने फलाभावेऽपि सन्ध्याद्यकृतौ प्रत्यवायाभावेऽपि गुरुदेवतादिषु पूजाकरणाकरणयोरर्थप्रत्यवायौ स्यातामेव । अतस्तत्सन्निधानप्राप्तौ उद्बोधनमावश्यकं इत्यत आह ॥ नचेति । अस्य असम्प्रज्ञातसमाधिस्थस्य । सर्वभूतेषु । विषयसप्तमीयं । अर्थव्यपाश्रयः अर्थस्य व्यपाश्रयः प्राप्तिः येन दर्शनसंभाषणपूजनादिव्यापारेण भवति सोऽर्थव्यपाश्रयइति व्यधिकरणबहुव्रीहिः । गुर्वादिविषयकदर्शनभाषणवन्दनादिव्यापारः पुमर्थप्राप्तिहेतुभूतः समाधिस्थस्य नास्तीत्यर्थः ॥ च शब्दः पूर्वार्धोक्तसमुच्चये ॥ गुर्वादिविषयव्यापारेणाप्यात्मरतितुल्यं सुखं न लभ्यतइत्याभिप्रायः ।

एवं तत्पूजाद्यकरणमपि समाधिस्थस्य नानर्थप्राप्तिहेतुरित्युपलक्ष्यते ॥ यद्वा न केवलं चक्रप्रवर्तकत्वेन भूतस्थितिहेतुत्वात्कर्म कर्तव्यं किंतु मुक्तस्यैवाकर्मत्वादमुक्तेनावश्यं कर्म कार्यमिति तस्मादित्यनेन वक्तुं अकर्मत्वं मुक्तस्यैवेत्याह ॥ यस्त्विति ॥ यस्तु मानवः प्राप्तज्ञानफलो मुक्तः आत्मरतिः आत्मना परमात्मना रतिः अभिव्यक्तस्वरूपानन्दो यस्य स तथा ॥ आत्मना परमात्मना तृप्तः कृतकृत्यः आत्मतृप्तः आत्मन्येव च सन्तुष्टः प्रीतिमान् ॥ यद्वा तृप्तिसंतोषशब्दयोः प्रीतिरूपैकार्थत्वेऽपि आत्मना तृप्तः प्रीतिमान् आत्मन्येव च संतुष्ट इत्येवार्थभेदो ध्येयः ॥ तस्य तु तस्यैव इति तुशब्दोऽत्र योज्यः । मुक्तस्यैव कार्यं न विद्यते ॥ ननु कृष्णो मुक्तैरिज्यते वीतमोहैरित्युक्तेर्मुक्तस्यापि कर्म कर्तव्यामित्यत आह ॥ नैवेति । प्राग्वदेवार्थः। स्वेच्छयैव करणं न विधिबद्धत्वेन न वा फलापेक्षया। तस्यैव फलरूपत्वेन फलान्तराभावादिति भावः ॥

शं ॥ किंच, नैवेति ॥ नैव तस्य एवं आत्मरतेः कृतेन कर्मणा अर्थः प्रयोजनं अस्ति । तर्हि अकृतेन अकरणेन प्रत्यवायाख्यः अनर्थः न, अकृतेन इह लोके कश्चन कश्चिदपि प्रत्यवायप्राप्तिरूपः आत्महानिलक्षणो वा नैवास्ति ॥ न चास्य सर्वभूतेषु ब्रह्मादिस्थावरान्तेषु भूतेषु कश्चित् अर्थव्यपाश्रयः प्रयोजननिमित्तं क्रियासाध्यो व्यपाश्रयः

व्यपाश्रयणं, कंचित् भूतविशेषं आश्रित्य न साध्यः कश्चिदर्थः अस्ति, येन तदर्था क्रिया अनुष्ठेया स्यात् ॥

रा ॥ अतएव तस्यात्मदर्शनाय कृतेन तत्साधनेन नार्थः न किंचित्प्रयोजनं । अकृतेनात्मदर्शनसाधनेन न कश्चिदनर्थः । असाधनायत्तात्मर्शनत्वात् ॥ स्वतएवात्मव्यतिरिक्तसकलाचिद्वस्तुविमुखस्यास्य सर्वेषु प्रकृतिपरिणामविशेषेष्वाकाशादिभूतेषु सकार्येषु न कश्चित्प्रयोजनतया व्यपाश्रयः ॥

विचारः

प्रकृतश्लोकस्य पूर्वश्लोकस्य च मुक्तपरत्वे वाक्यार्थदौर्घल्य न विद्यते। विध्यबद्धत्वात्तस्य कार्यं न विद्यते। कृतेन नार्थः अकृतेन न प्रत्यवायः। विना भगवन्तं कस्माच्चिदपि वस्तुनः प्राप्तव्यं प्रयोजनं च नास्तीति समंजसम्॥

असंप्रज्ञातसमाधिस्थपरतया व्याख्यानस्यातीतश्लोकस्थावधारणबाहुल्यं गमकं। तदानुगुण्येन प्रकृतश्लोकोऽपि व्याख्येयः॥ ननु असंप्रज्ञातसमाधिस्थपरत्वं अनुपपन्नं, समाधौ कर्मकरणाकरणयोः प्रसक्तेरेवाभावात्। यदा सर्वबाह्येन्द्रियव्यापारादुपरतः तदा कर्माभिमुख्यं स्वत एव न तस्य संभवतीति तस्मिन्विषये प्रयोजनसद्भावादिजिज्ञासा गर्भस्रावेणैव नोपपद्यते इति चेन्न। अभिप्रायानवगमात्। यदि प्रयोजनादयस्संभवेयुः तर्हि व्युत्थानमपेक्षेत योगी। योगशास्त्रे खलूपाया उक्ताः यैरसंप्रज्ञातसमाधिस्थ उद्बुध्यते। सन्ध्याद्यनुष्ठानाय उचितकाले मामुद्बोधयेति मित्रं प्रत्युक्त्वा ज्ञानी समाधिङ्गतः। समये तावन्मित्रप्रेरितस्सन्नुत्थाय कर्म कुर्यात्॥ परन्तु नैत-

स्यावसरः, कीदृशाय प्रयोजनायानेन व्युत्थितव्यं ॥ लौकिकसुखविशेषायेति चेत्, न विद्यते सुखमात्मरतेस्सममधिक वा। अकरणे प्रत्यवायः स्यादिति भिया व्युत्थितव्यं इत्यपि न सगच्छते, प्रत्यवायाभावात् ॥ गुर्वादिपूजार्थ इत्यपि न संभवति। सर्वभूतेषु अर्थव्यपाश्रयाभावात् इति ॥

द्वितीयार्धे चकारः पूर्वार्धसमुच्चयार्थः हेत्वर्थो वा। यतस्सर्वभूतेष्वस्यार्थव्यपाश्रयो नास्ति तस्मान्नैव तस्य कृतेनार्थः नाकृतेनानर्थः इति ॥ मुक्तपरतां विहाय असंप्रज्ञातसमाधिस्थमात्रपरत्वेन संकोचं चानाश्रित्य ज्ञानिसामान्यपरतया व्याख्याने किं बाधकं इति चिन्तायां वस्तुतः अर्जुनस्य ज्ञानित्वेन युद्धात्तत्क्षणमयमुपरतो भवेदित्येकं बाधकं। किंच ज्ञानी असमाधिस्थो यद्यप्यकरणनिमित्तप्रत्यवायहीनः, परन्तु तेनानुष्ठितं सत्कर्म न निष्फलं, दुष्कर्म किंचिदनिष्टावहं च। अकृतेनेत्येतत् विरुद्धकर्मणेति वा करणाभावेनेति वा व्याख्येयं। महता विरुद्धकर्मणा वृत्रहत्यादिना श्रमः स्यादेव। परन्तु ज्ञानिविषये अकिंचित्कर इति विशेषः ॥

अकृतेन करणाभावेन इत्यर्थे भावे निष्ठा, संध्याद्यनुष्ठानाभावेन न प्रत्यवाय इति यावत्। इममर्थं नीलकण्ठः प्रत्याचष्टे, "येतु अकृतेनेति भावे निष्ठा, नित्याकरणाद्गर्हितत्वरूपो वा प्रत्यवायप्राप्तिरूपो वा कश्चनार्थो विदुषो नास्तीति व्याचक्षते। तेषामपि अभावाद्भावोत्पत्तेरनुभ्यपगमान्नित्यानां काले, यदन्यदविहितं क्रियते तत्र तत एव प्रत्यवायोत्पादो वक्तव्य इति घट्टकुट्यां प्रभातवृत्तान्त आपद्यते" इति ॥ अत्रेद वक्तव्यं। अभावाद्भावोत्पत्त्ययोगं मन्वानं मधुसूदनं प्रति लग्नं स्यादिदं दूषणाभिधानं ॥ वस्तुतस्तु प्रागभावस्य प्रतियोग्युत्पत्तिं प्रति निमित्तकारणत्वेन तत्र न काप्यनुपपत्तिर्दृश्यते। अकरणस्य तु प्रत्यवायजनकत्वं प्रमितं इति ॥

ज्ञानिकृतसत्कर्मणां साफल्यं सच्छास्त्रप्रमितं इति श्रीनिवासतीर्थीये विस्तरतः प्रतिपादितम् ॥ तथाहि "अस्त्यत्र सिद्धान्ते रहस्यविशेषः।

उत्तमाधिकारिव्यतिरिक्तानां आनन्दस्य ह्रासो नाम यावत्स्वरूपमुखानभिव्यक्तिः। अपरोक्षज्ञानोत्तरकृतसत्कर्मणा यावत्स्वरूपसुखाभिव्यक्तिर्वृद्धिः॥ ननु कथं मोक्षे सुखानभिव्यक्तिः आवरणाभावादिति चेन्न। द्विविधं ह्यावरणं एकमीश्वरेच्छारूपं अपरं प्रकृत्यादि॥ तत्र द्वितीय मुक्तौ नास्त्येव, समूलघातितत्वात्। आद्यत्वस्त्येव। तच्च ज्ञानोत्तरं स्वोत्तमद्रोहादिरूपं पापं निमित्तीकृत्य यावत्स्वरूपानन्दानुभव प्रतिबध्नातीति युक्तस्सुखानभिव्यक्तिरूपो ह्रासः। तथा पापवत् भगवत्पूजात्मककर्माकरणमपि ह्रासे निमित्तं। यथोक्तं "कृष्णोपास्तिमकुर्वतः। ज्ञानिनोऽपि यतो ह्रासः आनन्दस्य भवेद्ध्रुवं" इति॥ तथा चाविद्यायां निवृत्तायामपि स्वस्वरूपभूतमप्यानन्दादिकमीश्वरेच्छाशक्तयाऽऽवृतम् सत्कर्माभावे नानुभवितु शक्यम्। कृतेच कर्मणि तेन तुष्टो भगवानिच्छाशक्तिमपसारयति। ततः पूर्वप्रसक्तानन्दापेक्षया अधिकानन्दानुभवलाभात् आनन्दवृद्धिरित्युच्यते। एतदेवाभिप्रेत्योक्तं अणुभाष्ये, "सुखस्यापि वृद्धिह्रासौ विमुक्तिगौ नृणां" इति॥ देवानामप्यपरोक्षज्ञानेन प्रकृत्याद्यावरणानिवृत्त्यनन्तरं ईश्वरेच्छारूपावरणस्याप्यपसरणं भवति। ततो यावत्स्वरूपसुखं तावतः सर्वस्याप्यभिव्यक्तिः जायतएव। क्लृप्तस्य च तस्यासत्प्रवृत्त्या हानिः कदापि नास्ति॥ तथापि असत्प्रवृत्त्या विशेषोऽस्ति। स कीदृश इति चेदुच्यते, येन देवेन स्वयोग्यसुखपरिपूर्तये यावत्साधनमनुष्ठेयं ततोऽतिरेकेणानुष्ठितेन साधनेन तस्य यदानन्दादिकं प्रसक्तं, तद्धानिरेवासत्प्रवृत्तिजन्यो विशेषः। अयमेव चात्र ह्रासशब्दार्थो नान्यः पूर्वोक्तः। यथोक्तमनुव्याख्याने, "चन्द्रसुग्रीवयोश्चैव स्वोच्चदारपरिग्रहात्। प्राप्तहानिर्-
क्लृप्तहानिःकथञ्चन" इति॥ प्राप्तहानिः प्रसक्तहानिः। इदं च हिरण्यगर्भेतरदेवाविषयं। तस्यासत्प्रवृत्तेरभावात्॥ यद्वा सम्यगभिव्यक्ते क्लृप्ते देवतासुखे निरुक्तवृद्धिह्रासयोरभावेऽपि विद्यमानस्यैव सुखस्य भोगादिविशेषादिना निमित्तेन विशेषबलात् चन्द्रोदयेन समुद्रतरला-

मिवृद्धिवद्वृद्धिर्भवति । तथा ज्ञानोत्तरकृतविकर्मणा निमित्तेन विद्यमानस्यैव सुखस्य विशेषबलाच्चन्द्रोदयाभावे समुद्रतरलह्रासवत् ह्रासश्च भवति ॥ इममेव वैवक्षिकं ह्रासमभिप्रेत्योक्तं श्रीमन्महाभारततात्पर्यनिर्णये—

" उदरस्य किंचिदाधिक्यं वृषणाधिक्यमेव च ।
सव्यबाहोस्तथाऽधिक्यं दुर्लक्षणमथार्जुने ॥
नैवोक्त वासुदेवेन दृश्यमानमपि स्फुटं ।
ज्ञानानन्दह्रासकराह्येते दोषास्सनातनाः ॥" इति ॥

उक्तं च भाष्ये,

" अवृद्धिह्रासरूपत्वं मुक्तानां प्रायिकं भवेत् ।
कादाचित्कविशेषस्तु नैव तेषां निषिध्यते ॥" इति ॥
भोगानान्तु विशेषेतु वैचित्र्यं लभ्यते क्वचिन् ॥ इति च ॥

('कृतेन तस्यार्थः नैव' इत्यत्र एवकारेण कर्मसाध्यप्रयोजनं ज्ञानसाध्यप्रयोजनं च निषिध्यते इति मधुसूदनोऽभिप्रैति ), इदमसारं । ज्ञानसाध्यप्रयोजनस्याप्रस्तुतत्वात् । वस्तुतः ज्ञानसाध्यस्य मोक्षाख्यप्रयोजनस्य निषेधायोगात् ॥ मधुसूदनीये इह प्रकरणे योगशास्त्रोक्तासु सप्तभूमिकासु कांचिदपि भूमिकां आरूढोऽत्राभिप्रेतो ज्ञानीति कथितं । संवादत्वेन वासिष्ठवचनं चोदाहृतम्—

" ज्ञानभूमिः शुभेच्छाख्या प्रथमा परिकीर्तिता ।
विचारणा द्वितीया स्यात्तृतीया तनुमानसा ॥
सत्त्वापत्तिश्चतुर्थी स्यात्ततोऽसंसक्तिनामिका ।
पदार्थाभावनी षष्ठी सप्तमी तुर्यगा स्मृता ॥" इति ॥

(शं. भा. उ. दीपिकायामयं भावप्रकाशः तिरस्कृतः । 'अस्मिन् श्लोके भूमिकारूढस्येत्यादिशब्दस्याभावेनाप्रासङ्गिकं वासिष्ठभूमिकाप्रदर्शनं

कैश्चित्कृतमिति बोध्यं' इति ॥ अत्रोभावपि स्थूलदृश्वानौ भातः । यन्मधुसूदनेनासंप्रज्ञातावस्थायाः पूर्वासां भूमिकानां ग्रहणमनुमतं, तस्यानुपपन्नत्वात् । यदुत्कर्षदीपिकायामसंप्रज्ञातभूमिकाद्यप्रसक्तत्वेनोक्ता, तस्याप्यसङ्गतेः । आत्मरतिरेवेत्याद्यवधारणसामर्थ्यात् अन्यहेतोश्चासंप्रज्ञातज्ञानिविवक्षाया उपपादितत्वात् ॥

"द्वितीयार्धश्लोकव्याख्यानावसरे शाङ्करैः, "तस्य ह न देवाश्च नाभूत्या ईशत आत्माह्येषां स भवति" इति श्रुतिमादाय तस्य मोक्षाभवनाय देवा अपि न समर्था इति श्रुत्यर्थमभिधाय ज्ञानिनो देवानपि न गणयेयुरिति फलितार्थ उक्तः ॥ सर्वभूतेषु इत्यनेन देवा विवक्षिता इति तेषामाशयः ॥ "सर्वभूतेषु प्रकृतिपरिणामविशेषेपु आकाशादिभूतेषु स्वकार्येपु" इति रामानुजभाष्यं ॥ एतदानुगुण्येन "अर्थव्यपाश्रयः पदार्थस्वीकरणं" इति देशिकटीका । अर्थशब्दस्य प्रयोजनार्थत्वं चाय कण्ठोक्त्या निराह ॥ समाधि परित्यज्य अर्थार्थं कश्चन सेवनीयो नास्ति विना भगवन्तं इति व्याख्याने बाधकं न दृश्यते ॥ अर्थस्य व्यपाश्रयः प्राप्तिः येन (दर्शनादिना) इति विवृत्यां व्याख्यातं द्रष्टव्यम् ॥

**तस्मादसक्तस्सततं कार्यं कर्म समाचर।**
**असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः ॥ १९ ॥**

वि ॥ तस्मादसंप्रज्ञातसमाधिस्थस्य वा मुक्तस्यैव वाऽकर्मत्वेन त्वादृशेनावश्यं कर्मणः कर्तव्यत्वादसक्तः फलस्नेहरहितस्सन् कार्यमवश्यकर्तव्यं कर्म सततं समाचर, भगव-

त्पूजात्वेनानुतिष्ठ ॥ ननु मुक्तस्य कर्मणा प्रयोजनाभावा-त्कार्याभावः । एवं मुमुक्षोरपि कर्मणा फलाभावात्कार्याभावः किं न स्यादित्यत आह ॥ असक्त इति । पुरुषः असक्तः कर्मा-चरन्नेव ज्ञानद्वारा परमाप्नोति । हि यस्मात्तस्मान्मुक्तसमाधि-स्थाभ्यामन्यस्य कर्मणा फलसत्त्वादस्त्येव कार्यमिति भावः ॥

शं ॥ न त्वं एतस्मिन्सर्वतः संप्लुतोदकस्थानीये सम्य-ग्दर्शने वर्तसे । यत एवं । तस्मादिति । तस्मादसक्तः सङ्गवर्जि-तः सततं सर्वदा कार्यं कर्तव्यं नित्यं कर्म समाचर निर्वर्तय ॥ असक्तो हि यस्मात् समाचरन् ईश्वरार्थं कर्म कुर्वन् परं आप्नोति पूरुषः, मोक्षं आप्नोति पुरुषः सत्त्वशुद्धिद्वारेणेत्यर्थः॥

रा ॥ यस्मादसाधनायत्तात्मदर्शनस्यैव साधनाप्रवृत्तिः, यस्माच्च साधने प्रवृत्तस्यापि सुशकत्वादप्रमादत्वादन्तर्गतात्म-याथात्म्यानुसन्धानत्वाच्च ज्ञानयोगिनोऽपि मात्रया कर्मानु-वृत्त्यपेक्षत्वाच्च कर्मयोग एवात्मदर्शननिर्वृतौ श्रेयान् । तस्मादसङ्गपूर्वकं कार्यमित्येव सततं यावदात्मप्राप्ति कर्मैव समाचर ॥ असक्तः कार्यं इति वक्ष्यमाणाकर्तृत्वानुसन्धान-पूर्वकं च कर्माचरन् पुरुषः कर्मयोगेनैव परमाप्नोति आ-त्मानं प्राप्नोतीत्यर्थः ॥

विचारः

(तस्माच्छब्दः पूर्वोक्तयुक्तिपरामर्शी इति स्फुटं । युक्तयस्तु बहुधा पूर्वं प्रपंचिताः व्याख्यातृभिः । तदानुगुण्येन तस्माच्छब्दोऽपि व्याख्यातः ॥

अर्जुनस्याज्ञत्वं ज्ञाननिष्ठानधिकारित्वं च मन्वानाः शांकरव्याख्याकाराः यस्मात्त्वं ज्ञानी न, किंतु कर्माधिकृतएव, तस्मात् इति व्याकुर्वते ॥ अव्यवहितपूर्वोक्तयुक्तिजातं विहाय 'यस्मान्निष्कामस्य कर्मलेपो नास्ति तस्मात्' इति नीलकण्ठीये ॥ असंप्रज्ञातसमाधिस्थस्य मुक्तस्य चैव कार्याभावनियमात् तदुभयभिन्नस्य ज्ञानिनोऽपि तव कार्यं विद्यते, तच्च न निष्फल इति हेतोस्त्वं कर्म समाचरेति श्रीमध्वाशयः ॥ यस्मात्त्वमात्मदर्शनवान्न, यस्माच्च कर्मयोग एवात्मदर्शनसाधनं, तस्मादिति रामानुजाशयः ॥

'असक्तो हि' इत्यत्र हिशब्देन प्रमाणप्रसिद्धिस्सूचिता । "धर्मेण पापमपनुदति" "ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मण." इत्यादय. प्रमाणतया विवक्षिताः ॥

कर्मयोगस्य ज्ञानयोगाच्छ्रेष्ठत्वमादाय 'तस्मात्' इति 'हि' इति च हेतुगर्भवचनं प्रयुक्तमिति रामानुजव्याख्या ॥ कर्मयोगस्य ज्ञानयोगादुत्कृष्टत्वं तु, सुशकत्वादप्रमादत्वादन्तर्गतात्मयाथात्म्यानुसन्धानत्वाच्च लभ्यते इत्युपपादितं च ॥ सततशब्दबलेनापि ज्ञानयोगाधिकारे सत्यपि कर्मयोगस्यैवानुष्ठेयत्वे गीताशयमाहतू रामानुजदेशिकौ ॥ इदं चिन्त्यं । यद्यपि कर्मयोगिनः अन्तर्गतभगवज्ज्ञानभक्तित्वेनापरोक्षद्वारा मोक्षं साधयन्त्येव, तथापि ज्ञानयोग्यपेक्षया तेषामुत्तमत्वं न संगच्छते । सुशकत्वाप्रमादत्वयुक्तीच न प्रत्याययतः ॥ ये ऋष्यादयः ज्ञानयोगयोग्याः तेषां ज्ञानयोगेनैव साधनप्रकारो वाच्यः । तेषामपि ज्ञानयोगव्यवच्छेदो नोचितः ॥

(तस्माद्यदुक्तं रामानुजव्याख्याने ज्ञानयोगाधिकारिणामनधिकारिणां च सर्वेषां मुमुक्षूणां कर्मयोग एवोपदिष्टो मार्ग इति, तदसारं भाति ॥ ज्ञानित्वेऽपि अर्जुनस्य कर्मयोगे प्रेरणं तु निमित्तविशेषायत्तं । तस्य प्रियव्रतादिवदीश्वरेच्छयाऽऽधिकारिकपुरुषविशेषत्वात् । एतत् प्रागेव निरूपितं पश्यतेति प्रार्थ्यते ॥

(परमाप्नोति पूरुषः' इत्यत्र परशब्दो भगवद्वाचको वा मोक्षवाचको वा व्याख्येयः)। रामानुजभाष्येतु जीवात्मवाचकत्वेन व्याख्यातः॥ अत्र संशयो माभूदिति देशिकेनायमर्थ उपपादितश्च, "अत्र प्राप्यतया निर्दिष्टः परो, देहातिरिक्तात्मप्रकरणत्वात्प्रकृतेः परो जीवः" इति)।

(जीवस्य प्रकृतेः परत्वं दुर्ज्ञेयम्॥ मुमुक्षुः कर्मयोगेन जीवं प्राप्नोति इत्युक्ते लब्धः प्रमेयविशेषो न ज्ञायते। अत्र प्राप्तिः एतादृशीति न प्रपंचितम्। स्वस्वरूपं अनुसन्धत्ते इति वा स्वस्वरूपमाप्नोति इति वा व्याख्यानेन मोक्षमाप्नोतीति पर्यवस्यति॥ इमं शिरोवेष्टनप्राणायामं विहाय परं भगवन्तं इति वा उत्कृष्टं मोक्षं इति वा व्याख्याने न काप्यनुपपत्तिरव गम्यते। "ब्रह्मविदाप्नोति परं" इति श्रुत्यानुकूल्यं च)॥

कर्मणैव हि संसिद्धिमास्थिता जनकादयः।
लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि॥ २०॥

वि ।( ननु ज्ञानादेव मोक्षसिद्धेः कथमसक्तो ह्याचरन्नेवेत्युच्यते इत्यतो, मुक्तावानंदातिशयार्थं विहितकर्मणोऽवश्यकर्तव्यतायां ज्ञानिनामाचारमपि प्रमाणयति॥ कर्मणैवेति॥ सहयोगे तृतीया। जनकादयो जनकप्रियव्रतादयो ज्ञानिनः कर्मणैव, कर्मसहिता एव कर्म कुर्वंतएव संसिद्धिं संपूर्णमोक्षं आस्थिताः प्राप्ताः)।(ज्ञानमात्रान्मुक्तिसिद्धावपि तत्रानन्दातिशयार्थं कर्म कुर्वन्तीत्यर्थः)।( तृतीयायाः करणार्थत्वेऽपि कर्मणा करणेन संसिद्धिं मोक्षमाप्ता इत्यर्थः। लाङ्गलेन जीवाम इतिवत् ज्ञानद्वारकत्वाभिप्रायं करणत्वमिति)।

यद्वा संसिद्धिं ज्ञानं कर्मणा प्राप्ता इत्यर्थः ॥ न केवलं ज्ञानिनां आचारात्कर्म कर्तव्यं किंत्वीश्वरप्रीतिद्वारा मुक्तिहेतुलोकसंग्रहार्थत्वाच्च कर्म कार्यमित्याह ॥ लोकेति । लोकानामज्ञजनानां कर्माणि प्रवृत्तिरूपं संग्रहमेवापि । न केवलं ज्ञान्याचारमित्यपेरर्थः । एवकारस्तु तिष्ठतु तावत्कर्मकरणेऽन्यो हेतुरित्यर्थसूचकः ॥ संपश्यन् कर्म कर्तुमर्हसि । जनस्य कर्मणि प्रवर्तनेन भगवत्प्रीतिः तयाच मोक्षे सुखातिशयः इति ध्येयं ॥ तदुक्तं, "अज्ञानां ज्ञानदं कर्म ज्ञानिनां लोकसंग्रहात् । अत्रैव तुष्टिदं मह्यं सा मुक्तानन्दपूर्तिदा" इति ॥

शं ॥ यस्माच्च ॥ कर्मणैव इति ॥ कर्मणैव हि पूर्वे क्षत्रियाः विद्वांसः संसिद्धिं मोक्षं गंतुं आस्थिताः प्रवृत्ताः । के । जनकादयः, जनकाश्वपतिप्रभृतयः । यदि ते प्राप्तसम्यग्दर्शनाः ततः लोकसंग्रहार्थं, प्रारब्धकर्मत्वात् कर्मणा सहैव असंन्यस्यैव कर्म, संसिद्धिं आस्थिता इत्यर्थः । अथाप्राप्तसम्यग्दर्शनाः जनकादयः, तदा कर्मणा सत्त्वशुद्धिसाधनभूतेन क्रमेण संसिद्धिमास्थिता इति व्याख्येयः श्लोकः ॥ अथ मन्यसे पूर्वैरपि अजानद्भिरेव कर्तव्यं कृतं कर्म तावता नावश्यं अन्येन कर्तव्यं सम्यग्दर्शनवता कृतार्थेनेति, तथापि प्रारब्धकर्मायत्तस्त्वं लोकसंग्रहमेवापि । लोकस्य उन्मार्गप्रवृत्तिनिवारणं लोकसंग्रहः । तमेवापि प्रयोजनं संपश्यन् कर्तुमर्हसि ॥

रा ॥ यतो ज्ञानयोगाधिकारिणोऽपि कर्मयोग एवात्म-दर्शने श्रेयान् अतएव हि जनकादयो राजर्षयो ज्ञानिना-मग्रेसराः कर्मयोगेनैव संसिद्धिमास्थिताः, आत्मानं प्राप्तवन्तः ॥

एवं प्रथमं मुमुक्षोर्ज्ञानयोगानर्हतया कर्मयोगाधिकारिणः कर्मयोगएव कार्य इत्युक्त्वा, ज्ञानयोगाधिकारिणोऽपि ज्ञान-योगात्कर्मयोगएव श्रेयानिति सहेतुकमुक्तं ॥ इदानीं शि-ष्टतया व्यपदेश्यस्य सर्वथा कर्मयोगएव कार्य इत्युच्यते। लोकसंग्रहं पश्यन्नपि कर्मैव कर्तुमर्हसि ॥

विचारः

'असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः' इत्यसगकर्मणः प्रयो-जनं परमपुरुषार्थावाप्तिरित्यभिहितं ॥ सेयमेव संसिद्धिरित्यभिप्रयन्नुक्तार्थे वृद्धाचारं प्रमाणयति भगवान्। "कर्मणैव हीति" हिशब्देन भारतादि-प्रमाणप्रसिद्धिस्सूचिता। शान्तिपर्वणि तावज्जनकसंवादाः बहवो दृश्यन्ते। तथाहि (१८. अ.)

१. यत्रार्जुन एव युधिष्ठिरं प्रत्याह जनकस्य स्वभार्यया सह संवादं ॥ अर्जुनः—

"तत्त्वज्ञो जनको राजा लोकेऽस्मिन्निति गीयते।
तं ददर्श प्रिया भार्या भैक्षवृत्तिमकिंचनं ॥
धानामुष्टिमुपासीनं निरीहं गतमत्सरं।
कापालीं वृत्तिमास्थाय धान्यमुष्टिमुपासते ॥

भार्या आह—

असक्तस्संगवद्गच्छन्निस्संगो मुक्तबन्धनः ।

समश्शत्रौ च मित्रे च स वै मुक्तो महीपते ॥

बिभ्रत्साधून्महाराज जय लोकाञ्जितेन्द्रियः ।"

इति जनककथा ज्ञाताऽर्जुनेनेति 'कर्मणैवही'त्यत्र हिशब्देन विशेषो बोध्यते। हे अर्जुन वेत्थ त्वं जनकवृत्तान्त इति ध्वनिः ।

२. पुनश्शान्तिपर्वणि अश्मजनकयोस्संवादः.

३. पुनश्च जनकं प्रति पंचशिखोपदेशो मोक्षधर्मे (220, 221, 222, 223) अध्यायेषु अग्निजनकयोः ॥ उक्तंहि, अग्निरागच्छद्ब्राह्मवेषेण परीक्षायै ।

"का सीमा तव भूमेस्तु ब्रूहि धर्म ममाद्यवै" ॥ इत्यपृच्छन् ॥

"तच्छ्रुत्वा मैथिलो राजा लज्जयाऽवनताननः ।

नोवाच वचनं विप्रं तत्त्वबुद्ध्या समीक्ष्य तन् ॥

जनकः ॥

आवासो वा न मेऽस्त्यत्र सर्वा वा पृथिवी मम ।

गच्छ वा तिष्ठ वा ब्रह्मन्निति मे निश्चिता मतिः ॥" इति

ततो गत्वा ब्राह्मणः पुरीं ददाह ॥

"प्रदीप्यमानां मिथिलां दृष्ट्वा राजा न कंपितः ।

जनैस्सपरिपृष्टस्तु वाक्यमेतदुवाचह ॥

अनन्तं बत मे वित्तं भाव्यं मे नास्ति किंचन ।

मिथिलायां प्रदीप्तायां न मे किंचन दह्यते ॥" इति

ततोऽग्निस्तमनुजग्राहेति कथा ॥ ४. पराशरजनकयोः (296, 304) तत्रैव—

पराशरः

" परेषां यदसूयेत न तत्कुर्यात्स्वयं नरः ॥ (24, 296)

वसन्विषयमध्येऽपि नवसत्येव बुद्धिमान् ।

नाधर्मः श्लिष्यते प्राज्ञं पयः पुष्करपर्णवत् ॥

अप्राज्ञमधिकं पापं श्लिष्यते जतुकाष्ठवत् ।

वीतरागो जितक्रोधः सम्यग्भवति यस्सदा ॥

विषये वर्तमानोऽपि न स पापेन युज्यते ॥ " इति ॥

एवं जनको महाविरक्तः ज्ञानीति च ज्ञायते । तथा प्रियव्रतादयः कर्माविहायैव मोक्षं प्राप्ताः ॥

'कर्मणा' इति सहयोगे तृतीया । " सहयोगेऽप्रधाने च " इति सूत्रं । सहार्थेन साहित्येन युक्ते अप्रधाने तृतीया स्यादित्यर्थः ॥ पुत्रेण सहागतः पितेत्युदाहरणं ॥ यद्यपि यथा उदाहरणे पितुः पुत्रस्य चागमनं कथ्यते तथा प्रकृते जनकादीनां तत्कर्मणांच सिद्ध्याऽऽस्थानं नोपपद्यते । तथाप्यध्याहृता-वान्तरक्रियया सहोपपदयुतस्य कर्मणः योगः सम्भवति । यथा सहैव दशभिः पुत्रैः भारं वहति गर्दभीत्यत्र वहनरूपप्रधानक्रियया पुत्राणां योगाभावेऽपि पुत्रै-स्सह वर्तमाना गर्दभी एकैव भारं वहतीत्यर्थः, तथा प्रकृतेऽपि कर्मणा सह वर्तमाना जनकादयः स्वयमेव मुक्तिमास्थिता इत्यर्थः ॥

जनकादीनां कर्मसाहित्यं तु, ते ज्ञानिनः इति पक्षे मुक्तावानन्द-वृद्धिसंपादकत्वेन, अज्ञानिन इति पक्षे ज्ञानसंपादकत्वेन संभवति ॥ अथवा 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी'ति न्यायेन तृतीयायाः कारकत्व-मेव स्यादित्युक्तावपि करणार्थत्वमुपपद्यते । अज्ञानित्वे जनकादयः संसिद्धिं (पूर्णानन्दाभिवृद्धिमोक्षमिति यावत्) प्राप्ता इत्यर्थः ॥

प्राग्ज्ञानादनुष्ठितं कर्म ज्ञानसाधनं । ज्ञानोत्तरमनुष्ठित आनन्दाभिवृद्धिसाधनमिति समुच्चयवादिनामस्माकं मतं ॥ कर्मवादिनस्तु मोक्षस्य साक्षात्कर्मसाध्यत्वमाहुः ॥

“ अपाम सोमममृता अभूमागन्म ज्योतिरविदाम देवान ” (श्रु).

“ ब्रह्मज्ञानेन वा मुक्तिः प्रयागमरणेन वा ।
अथवा स्नानमात्रेण गोमत्यां कृष्णसन्निधौ ॥
अयोध्या मथुरा माया काशी काञ्ची अवन्तिका ।
पुरी द्वारवती चैव सप्तैता मोक्षदायिकाः ॥ ”

इत्यादीनि तेषां प्रमाणानि ॥ एतन्मतमसत् । “ नान्यः पन्था अयनाये”त्यादिनिरवकाशश्रुतिवाक्यानि मोक्षस्य ज्ञानमात्रसाध्यत्वं वदन्तीति तद्विरोधादुक्तानि सावकाशान्यन्यथायोज्यान्येव । यथोक्तं नारदीये—

“ ब्रह्मज्ञानं विना मुक्तिर्न कथंचिदपीष्यते ॥
प्रयागादेस्तु या मुक्तिर्ज्ञानोपायत्वमेव हि ।
यानि तीर्थादिवाक्यानि कर्मादिविषयाणि च ॥
स्तावकान्येव तानि स्युरज्ञानां मोहकानि च ।
भवेन्मोक्षस्तु मद्दृष्टेर्नान्यथा तु कथंचन ॥ ” इति ॥

“ सहैव कर्मणा सिद्धिमास्थिता जनकादयः ।
ज्ञाननिष्ठा अपि ततः कार्यं वर्णाश्रमोचितं ॥
अज्ञानां ज्ञानदं कर्म ज्ञानिनां लोकसंग्रहात् ।
अद्धैव तुष्टिदं मह्यं सा मुक्तानन्दपूर्तिदा ॥ ” इति च ॥

यत्र तीर्थाद्येव मुक्तिसाधनमुच्यते तत्र पापादिमुक्तिर्वा स्तुतिर्वाऽभिप्रेता । स्तुतिपरत्वं वाक्यलक्षणाङ्गीकारेण वा प्रशस्तसादृश्याद्गौण्यङ्गीकारेण वा संभवति ॥

(ज्ञानिनां कर्मानुष्ठानमानन्दवृद्ध्यर्थमित्युक्तं। लोकसंग्रहार्थं च कर्मावश्यमनुष्ठेयं। लोकसंग्रहः, अज्ञजनानां स्वधर्मे प्रवर्तनं सत्कर्ममार्गप्रदर्शनेन पामरजनतारणं। लोकसंग्रहाख्यपुण्यविशेषाद्भगवत्प्रीतिर्जायते। तुष्टो भगवान् स्वेच्छाख्यावरणमपसार्यानन्दविशेषमाविर्भावयति मुक्तानां इति लोकसंग्रहप्रयोजनमवधेयं॥ तथाच भगवत्प्रीत्यर्थं ज्ञानिनः कर्म कुर्वन्तीति भावः॥)

(केचिदद्वैतव्याख्यातारश्शङ्करभाष्यभावमाविष्कुर्वन्तो गीताश्लोकं क्षत्रियमात्रस्य कर्मण्येवाधिकारो न सन्यासे इत्यर्थप्रतिपादकतया व्याकुर्वते॥ तथाहि मधुसूदनः ( तस्यायं भावः। क्षत्रियस्य संन्यासानधिकारप्रतिपादनेनापनुदति शङ्कां भगवान्॥ "ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति" इति ब्राह्मणत्वं चतुर्थाश्रमाधिकारप्रयोजकत्वेन विवक्षितं श्रुतौ। "मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणं। बाहुजातोरुजातानां नायं धर्मः प्रशस्यते॥" इति स्मृतेश्च ब्राह्मणस्यैव संन्यासो नान्यस्य॥ यस्तु वार्तिककृता अन्यथाऽभिप्रायस्सूचितो वक्ष्यमाणवचनानुरोधेन, स प्रौढिवादो ज्ञेयः॥ यद्यपि "त्रयाणामविशेषेण संन्यासः श्रूयते श्रुतौ। यदोपलक्षणार्थः स्याद्ब्राह्मणग्रहणं तदा॥" इति वार्तिकवचनं तत्र प्रमाणं "ब्राह्मणः क्षत्रियो वापि वैश्यो वा प्रव्रजेद्गृहान्" इति। "त्रयाणां वर्णानां चत्वार आश्रमाः" इति च॥ श्रुतिविरोधादेतादृशवाक्यानां स्वार्थेऽप्रामाण्यमेवाभ्युपेयं॥ विद्वांसो वा विविदिषवो वा जनकादयः क्षत्रियत्वप्रापकप्रारब्धकर्मपरवशास्सन्तो लोकसंग्रहार्थं कर्म कुर्वन्ति। क्षत्रियत्वेन गत्यन्तराभावात्। यदा जनकादीनामप्येवं निर्बन्धः किं अर्जुनस्य॥ अर्जुनोहि प्रागुक्तरीत्या ज्ञानभूमिकासु विविदिषामप्यनारूढः, तस्मात्तस्य क्षत्रियत्वाविशेषात् कर्मण्येवाधिकारः इति)( अत्रोच्यते। क्षत्रियस्य

चतुर्थाश्रमेऽस्ति वाऽधिकारो नवेत्यास्तां विचारः, अङ्गीकृतहि क्षत्रियस्य ब्रह्मज्ञानयोग्यत्वम् ॥ यदि स्याद्विवक्षितः क्षत्रियो ब्रह्मविन्, तदा तेन विरक्तेन कृतकृत्येन कर्म न्यस्यतएव। अत्र खलु क्षत्रियत्वजातिरकिंचित्करी। अर्जुनोऽपि स्व ज्ञानिनं मन्यमानः क्षत्रियत्वयुक्तिं परिहृत्य ज्ञानित्वेन कर्मन्यासमाश्रयेदेव। किंच यथैतादृशन्यास क्षत्रियस्य युज्यते तथा ब्राह्मणस्यापि चतुर्थाश्रमाधिकारवतः ज्ञानानन्तरं लोकसंग्रहार्थं कर्मानुष्ठानं च संभवत्येव॥ किंच भार्याजनकसंवादे प्रागुदाहृते वाक्ये "त ददर्श प्रिया भार्या भैक्षवृत्तिमकिंचनम्" इति सन्न्यासमाक्षिपन्त्या भार्यया क्षत्रियत्वमनुपपत्तितया नोक्तं। भागवतेऽपि पंचमस्कन्धे प्रियव्रतंप्रति सन्न्यासत्यागोपदेशावसरे ब्रह्मा क्षत्रियत्वं हेतु न जगाद। नापि श्रीकृष्णोऽर्जुनं क्षत्रियत्वेन सन्न्यासाश्रमानर्हमाह कचित्। तस्माज्जात्यादिविवक्षां विना युक्तयन्तरेणैव जनकाद्याचारः प्रमाणीकृतो वेदितव्यः॥ नीलकण्ठोऽपि क्षत्रियत्वयुक्तिमवजानाति ॥ तथाहि, "ननु स्वप्रयोजनाभावेऽपि केवलं लोकसंग्रहार्थं चेत्कर्म कर्तव्यं तदा विदुषां ब्राह्मणानामपि सन्न्यासो न स्यात्। यतीनेव सन्न्यासधर्मान् ग्राहयितुं तेषां सन्न्यास इति चेत् अर्जुनेऽपि न तद्दंडवारितमस्ति। ननु क्षत्रियस्य सन्न्यासाधिकारो नास्तीति चेत् लिंगधारणेऽधिकाराभावेऽपि भरतऋषभादिवद्विक्षेपकर्मत्यागेऽधिकारात्। वार्तिके "सर्वाधिकारनियमो व्युत्थाने क्रियते बलात्" इति विद्वत्सन्न्यासे क्षत्रियादेरप्यधिकारस्य साधितत्वात्। अतो लोकसंग्रहो न मुख्य कर्मप्रयोजनम् इति चेत्सत्यम्, "न मे पार्थास्ति कर्तव्यं" इति स्वदृष्टान्तेनाधिकारिकत्वादर्जुन एवैवं नियोज्यते न क्षत्रियमात्रम् इति तुष्यतु भवान्" इति।

ज्ञानिभिर्लोकसंग्रहार्थं कर्मानुष्ठीयते इत्यर्थमुपपादयद्भिश्शांकरव्याख्यातृभिः ज्ञानिनां कृतकृत्यतया कर्मभिर्न किमपि प्रयोजनं सभवतीत्युक्तं। तत्र केचिदाहुः कर्मणां प्रारब्धचोदितत्वात्तत्क्षय एव प्रयोजनमिति। भगवत्प्रीति

तज्जन्यानन्दविशेषाविर्भावं वा महाप्रयोजनत्वेन न तेऽभ्युपयंति । अयमर्थः श्रीमध्वेन प्रदर्शितो विशेषः ॥

इदं रामानुजाकूतं । अर्जुनवद्यो ज्ञानयोगेऽधिकारहीनः तस्य कर्मयोगएव शरणं । येतु ज्ञानयोगेऽधिकारवंतः जनकादयः तैरपि कर्मयोगएवाश्रीयते ज्ञानयोगात्कर्मयोगस्य श्रेष्ठत्वात् । किंच ज्ञानयोगाद्यधिकारतदभावविचारं विना, यः पुमान् शिष्टतया व्यपदेश्यः, तेन लोकसंग्रहार्थं कर्मयोगएव सर्वथाऽऽश्रयणीयः इति लोकसंग्रहं पश्यन्नपि कर्मैव कर्तुमर्हसि इति ॥

**यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।**
**स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ २१ ॥**

वि ॥ कथं कर्मकरणेन लोकसंग्रह इत्यतआह ॥ यद्यदिति । श्रेष्ठो महात्मा यत्प्रमाणं कुरुते, यद्वाक्यादिकं प्रमाणं सदपि लोके प्रमाणत्वेनानवगतं प्रमाणतया ज्ञापयतीत्यर्थः । यद्वा यत्प्रमाणं इत्येकं पदं बहुव्रीहिः । यत्प्रमाणं लौकिकं वैदिकं वा कर्म कुरुते, तदेव लोकोऽनुवर्तते अनुसरति ॥

शं ॥ लोकसंग्रहः किमर्थः, उच्यते ॥ यद्यदिति ॥ यद्यत्कर्म आचरति करोति श्रेष्ठः प्रधानः, तत्तदेव कर्म आचरति इतरः जनः तदनुगतः । किंच स श्रेष्ठः यत् प्रमाणं कुरुते लौकिकं वैदिकं वा, लोकः तत् अनुवर्तते तदेव प्रमाणीकरोतीत्यर्थः ॥

रा॥ श्रेष्ठः कृत्स्नशास्त्रज्ञतयाऽनुष्ठातृतया च प्रथितो यद्यदाचरति तत्तदेवाकृत्स्नविज्जनोऽप्याचरति। अनुष्ठीयमानमपि कर्म श्रेष्ठो यत्प्रमाणं यदंगयुक्तमनुतिष्ठति, तदंगयुक्तमेवाकृत्स्नविल्लोकोऽप्यनुतिष्ठति। अतो लोकरक्षार्थं शिष्टतया प्रथितेन श्रेष्ठेन स्ववर्णाश्रमोचितं कर्म सकलं सर्वदाऽनुष्ठेयं। अन्यथा लोकनाशजनितं पापं ज्ञानयोगादप्येनं प्रच्यावयेत्॥

विचारः

लोकसंग्रहार्थं कर्म कर्तव्यमित्युक्तं॥ केन कृतेन लोकसंग्रहो भवति, कथंच संभवतीत्याकांक्षायामाह। यद्यदिति। यःकश्चनाज्ञोऽनुष्ठानहीनोऽप्रसिद्धः किंचित्कर्माचरति नवेत्येतावताऽनर्थो न संभवति। नहि तादृशाचारानुधावनं लोकस्य धर्मः, वस्तुतोऽपि लोकस्तादृशं नानुसरति च। किंतु श्रेष्ठं। "प्रशस्यस्य श्रः" इत्यनुशासनात्प्रशस्यतम. श्रेष्ठइत्यर्थः। अतएव "कृत्स्नशास्त्रज्ञतयाऽनुष्ठातृतयाच प्रथितः" इति रामानुजाचार्यव्याख्यान श्रेष्ठ इत्यस्य॥

नकेवलं श्रेष्ठं स्वभावतएवानुसरति लोकः, 'तमनुसरेति' लोकस्य धर्मोऽपीति मन्वादिभिश्शिक्षितं च। तथाहि धर्मलक्षणम्—

"वेदोऽखिलो धर्ममूल स्मृतिशीलेच तद्विदां।
आचारश्चैव साधूनां आत्मनो रतिरेव च॥" इति मनु॰॥

यत्र श्रुतिस्मृतिवाक्यानि न सन्ति शिष्टाश्च धर्मबुध्याऽनुतिष्ठन्ति तदपि वैदिकं प्रतिपत्तव्यं इति मेधातिथिः। यथा कंकणधारणमङ्गलाचरणादिकम्॥

" न यत्र साक्षाद्विधयो न निषेधाः श्रुतौ स्मृतौ ।
देशाचारकुलाचारैः तत्र धर्मो निरूप्यते " ॥ इति स्कान्दे ॥
धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ।
द्वितीयं धर्मशास्त्रं च तृतीयं लोकसंग्रहः ।
स्मृतेर्वेदविरोधे तु परित्यागो यथा भवेत् ।
तथैव लौकिकाचारं स्मृतिबाधे परित्यजेत् " ॥ इति वसिष्ठः ॥
' तदलाभे शिष्टाचारः प्रमाणं " इति च ॥

सदाचारप्रदर्शनाभावे महाननर्थ उक्तश्शिष्टस्य शान्तिपर्वणि २२४. तथाहि—

" यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
वर्तते तेन लोकोऽयं सङ्कीर्णश्च भविष्यति ।
सङ्कीर्णे च तथा धर्मे वर्णस्सङ्करमेति च ।
ये मूढास्ते दुरात्मानो धर्मसङ्करकारकाः ॥

मर्यादाभेदका नीचाः नरकं यान्ति जन्तवः ।
आसुरीं योनिमापन्नाः इति देवानुशासनम् ॥ ६९ ॥
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
तस्माल्लोकस्य सिद्ध्यर्थं कर्तव्य चात्मसिद्धये ॥" इति ॥ (२२४-४८)

एतेन शिष्टाचाराख्यप्रवर्तकप्रकाशाभावाद्धर्मसाङ्कर्येण शिष्टस्य नरकप्राप्तिरभिहितेति स्वसिद्ध्यर्थं लोकसंग्रहार्थंच कर्मावश्यमनुष्ठेयमिति सिद्धम् ॥

शिष्टो यत्प्रमाण सत् प्रमाणीकुरुते, प्रमाणत्वेनानवगतं प्रमाणत्वेन ज्ञापयति लोकस्तदनुवर्तते इति द्वितीयार्धार्थः । अत्र प्रमाणं सत्प्रमाणत्वेन ज्ञापयतीत्यर्थस्वारस्यमवधेयम् । सद्वाऽसद्वा यच्छ्रेष्ठः करोति तदेव प्रमाणं

इत्यापाततः प्रतीयात् । अयमर्थोऽनुपपन्नः । मूलप्रमाणेऽनवगते हि यदि शिष्टस्तज्ज्ञात्वा लोकान् बोधयेत् तदेवानुसर्तव्यं नेतरत् । ' यान्यनवद्यानि कर्माणि तानि सेवितव्यानि । यान्यस्माकं सुचरितानि । तानि त्वयोपास्यानि नो इतराणि " इति श्रुत्यनुशासनात् । प्रागुदाहृतस्मृतिवचांसि चात्र साधकानि ज्ञेयानि ॥

(स यत्प्रमाण कुरुते' इत्यत्र व्याख्यानबाहुविध्यं दृश्यते । श्रेष्ठः यत् लौकिकं वैदिकं कर्म प्रमाणत्वेन मन्यते इति शङ्करमधुसूदनादयः)। यत् कर्मशास्त्रं निवृत्तिशास्त्रं वा प्रमाणत्वेन मन्यते इति श्रीधरः ।(प्रवृत्तिनिवृत्तिशास्त्रमात्रपरतया सङ्कोचे मानाभावमभिप्रेत्य सामान्याकारेण लौकिकं वैदिकं प्रमाणत्वेन यन्मन्यते इति शङ्करभाष्यं प्रवृत्तमिति, श्रीधरव्याख्यानं प्रत्युक्तमुत्कर्षदीपिकायां ॥ सदाचारः अनुवर्तनीयः प्रमाणत्वेन विवक्षितः पूर्वार्धेन । सतां प्रतिपत्तिस्तथा विवक्षिता द्वितीयार्धेनेति शाङ्कराणामाशयः ॥ नेदमस्माकमनिष्टं । यद्यस्याप्रमाणत्वेनावगतमपि शिष्टानुगृहीतत्वमात्रेण प्रमाणं भवितुमर्हतीत्याशयः स एव नोऽनभिमतः ॥ प्रमाणं कुरुत, प्रमाणीकुरुते प्रमाणत्वेन जानाति, प्रमाणत्वेन ज्ञापयति, प्रमाणत्वेन व्यवहरति. प्रमाणत्वेन ज्ञात्वा तदनुगुणमाचरतीत्यर्थाः निर्दुष्टाः भान्ति ॥

रामानुजाचार्यस्त्वन्यथा व्याचष्टे । "यत्प्रमाणं यदङ्गयुक्तं कुरुते अनुतिष्ठति तदङ्गयुक्तं लोकोऽनुतिष्ठति" इति तद्व्याख्यानं ॥ एतदुपपादनावसरे देशिकः, "यच्छास्त्रं प्रमाणीकुरुते" इति व्याख्यानमनूद्य निराह ॥ पूर्वार्धेनानुष्ठानानुवर्तनमुक्त्वा पुनः प्रमाणीकृतशास्त्रार्थानुधावनोक्तौ पुनरुक्तत्वं अभिप्रैति । "कुरुते" इत्यस्य मन्यते इत्यर्थे च क्लेशं मनुते ॥ अत्र प्रमाणं सत्प्रमाणत्वेन ज्ञापयति इत्युपदेशादिविशेषप्रदर्शने पौनरुक्त्यं दुर्ज्ञेय । किंचार्थिकपुनरुक्तिश्च न दोषायेति शास्त्रसमतम् ॥

'कुरुते' इत्यस्य मन्यते इत्यर्थोऽप्यबाधितः। मत्वाऽनुतिष्ठतीति चार्थस्संभवति। नह्यत्र कश्चिदपि क्लेशः॥ यत्प्रमाण सत् प्रमाणीकुरुते इति प्रथम व्याख्याय, यत्प्रमाणं इति बहुव्रीह्याश्रयणेनैकं पदं इति च विवृतौ व्याख्यातं॥ यदुक्तप्रकारेण कर्मानुतिष्ठति तदुक्तप्रकारेण लोकः करोतीत्युक्तौ न कश्चिद्दोषो दृश्यते॥

परव्याख्यानं निरस्य देशिकः स्वव्याख्याने प्रमाणशब्दं अवध्यर्थकमाह॥ अनुष्ठेयकर्मस्वरूपस्यावधिस्तु अङ्गान्येव भवन्तीत्यभिप्रयन् यदङ्गयुक्तं कर्मानुतिष्ठति तान्यङ्गान्यन्यैरनुसृतानीति वाक्यार्थमाह। अत्राप्यार्थिकपुनरुक्तत्वं न सर्वथा वर्जितं दृश्यते॥

---

**न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन।**
**नानवाप्तमवाप्तव्यं वर्तएव च कर्मणि॥ २२॥**

वि॥ किंच प्रयोजनमात्रहीनेनाऽपि मया केवलाऽनुग्रहेण लोकसंग्रहणार्थं कर्म क्रियते, मुक्तावानन्दवृद्धिप्रयोजनवता ज्ञानिना तत्कर्तव्यमिति किं वाच्यमिति भावेनाह॥ न मे इत्यादित्रिभिः॥ हे पार्थ, मे किंचन कर्तव्यं नास्ति, यतस्त्रिषु लोकेषु प्रागप्राप्तं पश्चात्प्राप्तव्यं नास्ति। तथापि कर्मणि वर्त एव, कर्म करोम्येव॥

शं॥ यद्यत्र लोकसंग्रहकर्तव्यतायां विप्रतिपत्तिस्तर्हि मां किं न पश्यसि॥ न मे इति। न मे, मम पार्थ नास्ति

न विद्यते कर्तव्यं, त्रिष्वपि लोकेषु किंचन किंचिदपि । कस्मात्, नानवाप्तमप्राप्तमवाप्तव्यं प्रापणीयं । तथापि वर्त एव च कर्मण्यहं ॥

रा ॥ न मे सर्वेश्वरस्याप्तकामस्य सर्वज्ञस्य सत्यसंकल्पस्य त्रिषु लोकेषु देवमनुष्यादिरूपेण स्वच्छन्दतो वर्तमानस्य किंचिदपि कर्तव्यमस्ति, यतोऽनवाप्तं कर्मणाऽवाप्तव्यं न किंचिदप्यस्ति । अथापि लोकरक्षायै कर्मण्येव वर्ते ॥

विचारः

" प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते " इत्यादिपामरव्यवहारमादाय सर्वथा फलानपेक्षकर्तृत्वे दृष्टान्ते अपेक्षिते स्वमेव दृष्टान्तमाह भगवान् ॥

अत्र श्रीकृष्णस्य जगदीशत्वं पूर्णकामत्वं जगद्व्यापारकर्तृत्वंच पुरोधाय श्लोकः प्रवृत्तः । तस्य च न कर्तव्यं अनवाप्तमवाप्तव्यं वा प्रयोजनं किंचिदप्यस्ति त्रिषु लोकेषु ॥ " पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते " इति श्रुतिस्तस्य पूर्णत्वं वक्ति ॥ अदः मूलरूप, इदं अवताररूपं, सृष्टिकाले पूर्णान्मूलरूपादुदच्यते । प्रलये च पूर्णस्य स्वस्य पूर्णमवताररूपं आदाय तेन एकीभूय स्वयमवशिष्यते इत्यर्थः॥ श्रीहरिव्यापारस्याप्तव्यप्रयोजनं नास्तीत्यत्र वैदिकेषु विवादो न विद्यत इति भाति ॥

" ममैव केवलं नास्ति केनाप्यर्थस्तथाऽप्यहम् ।
कर्मकृल्लोकरक्षायै तस्मात्कुर्वीत मत्परः" इति कृष्णसंहितायां ॥

" रक्षया वाऽथ सृष्ट्या वा संहृत्यादेर्नतु क्वचित् ।
अर्थो विष्णोस्तथाऽप्येषस्स्वभावात्सर्वकर्मकृत् ॥

80

मत्तो नृत्तादिकं यद्वत्कुर्यात्सुखविशेषतः ।
परमानन्दरूपत्वात्कुर्याद्विष्णुस्तथैव तु" इति बर्कश्रुतिः ।

"लोकवत्तु लीलाकैवल्य" इति ब्रह्मसूत्रम् ॥

"सृष्ट्यादिकं हरेर्नैव प्रयोजनमपेक्ष्य तु ।
कुरुते केवलानन्दाद्यथा मत्तस्य नर्तनम् ॥
पूर्णानन्दस्य तस्येह प्रयोजनमतिः कुतः ।
मुक्ता अप्याप्तकामास्स्युः किमु तस्याखिलात्मनः ॥" इति

नारायणसंहितायाम् ॥

"देवस्यैषस्स्वभावोऽयमाप्तकामस्य का स्पृहा"
"पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च"

इति श्रुतिः ॥

एतद्विवरणमनुव्याख्याने—

"अनित्यत्वात्क्रियाणां तु कथमेव स्वरूपता ।
इति चेत्सविशेषोऽपि क्रियाशक्त्यात्मना स्थिरः ॥
ज्ञानं नित्यं क्रिया नित्या बलं शक्तिः परात्मनः ।
नित्यानन्दोऽव्ययः पूर्णो भगवान्विष्णुरच्युतः ॥" इति ॥

त्रिषु लोकेष्विति । त्रिषु लोकेषु नानवाप्तमवाप्तव्यं इति संबध्यते । भूर्भुवस्वर्लोकेषु, जाग्रत्स्वप्नसुषुप्त्यवस्थासु, स्थूलसूक्ष्मकारणदेहेषु, विश्वतैजसप्राज्ञरूपैः इत्यादित्रयैः भगवान् जगद्व्यापारं करोति । तथापि प्रयोजनं तु क्वापि न विद्यते इत्याशयः ॥

लोकसंग्रहार्थं जनकेनेव कर्म कर्तव्यमित्युक्तं । जनकस्यापि बद्धजीवत्वेन प्राप्यप्रयोजनत्वात् निरवधिकदृष्टान्तं स्वमेवाह श्रीकृष्णः—"मे"

इतिगीताशब्दः श्रीकृष्णस्य भगवत्त्वं बोधयति । यथा भगवान्फलानपेक्षितया करोति तथा भक्तोऽपि यथासंभवं कुर्यादिति तत्रतत्र शास्त्रेषूच्यते ॥ यथा भागवते दशमे कुचेलं प्रति श्रीकृष्णवचनम् ॥ "केचित्कुर्वन्ति कर्माणि कामैरहतचेतसः । त्यजन्तः प्रकृतीर्दैवीर्यथाऽहं लोकसंग्रहम्" इति ॥

**यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥२३**

वि ॥ यदि ह्यहं जातु कदाचिदतंद्रितोऽनलसः कर्मणि न वर्तेयं न कर्म कुर्यां, तर्हि मम वर्त्म मार्गं कर्माकरणरूपं मनुष्याः सर्वशः सर्वेऽपि अनुवर्तन्ते अनुसरेयुः। मद्दृष्टान्तेन कर्म न कुर्युः इत्यर्थः ॥

शं ॥ यदि हि पुनरहं न वर्तेयं जातु कदाचित् कर्मण्यतन्द्रितोऽनलसस्सन्, मम श्रेष्ठस्य सतो वर्त्म मार्गमनुवर्तन्ते मनुष्याः हे पार्थ, सर्वशः सर्वप्रकारैः ॥

रा ॥ अहं सर्वेश्वरस्सत्यसंकल्पः स्वसंकल्पकृतजगदुदयविभवलयलीलश्छन्दतो जगदुपकृतये मर्त्यो जातोऽपि मनुष्येषु शिष्टजनाग्रेसरवसुदेवगृहेऽवतीर्णस्तत्कुलोचिते कर्मण्यतन्द्रितस्सर्वदा यदि न वर्तेयं, मम शिष्टजनाग्रेसरवसुदेवसूनोः वर्त्माकृत्स्नविदश्शिष्टाः सर्वप्रकारेणायमेव धर्म इत्यनुवर्तन्ते ॥

विचारः

'अनुवर्तन्ते' इति वर्तमानव्यपदेशः प्रसंगार्थकः। प्रसंगस्य सिद्धवत्काराभिप्रायेण तथोक्तिः। अनुसरेयुरित्यर्थः॥

'वर्तेयं' इति परस्मैपदप्रयोग आर्षो भाति। केचित् वर्ते, अयं, इति पदच्छेदाभिप्रायेण अयं अहं यदि न वर्ते इति योजयंति (वे)॥ अत्र वक्तृविशेषणतया अयंइत्युक्तेः स्वारस्यं चिन्त्यं॥

'पार्थे'तिसंबोधनस्य भावमाहोत्कर्षदीपिकाकारः। "इतरे जना अपि मम मार्गमनुवर्तन्ते, त्वं संबन्धी नानुवर्तस इत्याश्चर्यमिति द्योतयन्संबोधयती"ति॥ स्यादेतद्यदि अनुवर्तन्ते इति वर्तमानार्थको व्याख्यातः। वस्तुतस्तु अयं शब्दःप्रसंगार्थक इत्युक्तमेव। एवं विवक्षायां न विद्यतेऽर्जुनोपालंभस्यावसरः॥

'सर्वशः' सर्वप्रकारेण इति परव्याख्यानं। इदं पदं प्रमाणपौष्कल्यपरं सेतिकर्तव्यताकत्वपरवेत्यभिप्रैति देशिक॥ 'सर्वशः सर्वे' इति व्याख्यातं विवृतौ॥ पूर्वश्लोकः 'त्रिषु लोके'ष्विति निर्देशात्सर्वावतारपरः। अयंतु 'मनुष्याः' इति दर्शनात्कृष्णावतारासाधरणः इति देशिको मन्यते॥ अत्र चिन्त्यते। 'त्रिषु लोकेषु' इति भगवत्सर्वावतारकर्तृकव्यापारे प्रसक्ते सति, व्यतिरेके आनर्थक्यकथनावसरे कृष्णावतारमात्रमुद्दिश्य मां मनुष्या अनुवर्तेरन्निति वचन न सुरसं भाति। ननूक्तंहि संकोचे गमकं प्रयुक्तं मनुष्यपदं इति चेन्न। अन्यथाऽप्युपपत्तेः। कृष्णावतारमात्रपरत्वेन श्लोकार्थसंकोचमकृत्वा मनुष्यशब्दार्थविकासेन सर्वप्राणिनां ग्रहणेऽप्यर्थौचित्यात्, प्रकृतश्लोकपूर्वश्लोकयोर्भगवदवतारापेक्षया समानविषयकत्वमेवोचितं भाति॥

देशिकशंकितोपपत्तेरुभयथा समाधानं भवेत्। (१) मनुष्यशब्दस्योपलक्षणया सर्वप्राणिपरत्वमेकम्। (२) त्रिषु लोकेषु कर्माणि वर्ते इति योज-

नायां हि सर्वावतारसंग्रहो भवति ॥ नैव योजना । त्रिषु लोकेषु न मे कर्तव्यमस्ति, अनवाप्तं आप्तव्यं वा नास्ति इति योजनामात्रेण लोकत्रयविवक्षायाश्चारिताध्यर्यात् इत्यपरं समाधानं । एव योजनायां पूर्वश्लोके प्रकृते च कृष्णावतारमात्रस्य परामर्शो विवक्षितः ॥

---

**उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहं ।**
**सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः॥२४॥**

वि ॥ ततः को दोष इत्यतः, उच्यते । अहं चेत्कर्म न कुर्यां तदा इमे लोकाः उत्सीदेयुः कर्मलोपेन नरकं प्राप्नुयुः। किंच कर्मलोपे सति ब्रह्मक्षत्रादिवर्णविवेको न स्यात् । अतो वर्णसंकरस्य च कर्ता स्यां भवेयं । एवमहमेव प्रजाः उपहन्यां हतवान्भवेयम् ॥

शं ॥ तथाच को दोषः इति, आह ॥ उत्सीदेयुः । इमे सर्वे लोकाः । लोकस्थितिनिमित्तस्य कर्मणः अभावात्, न कुर्यां कर्म चेदहं । किंच संकरस्य च कर्ता स्यां । तेन कारणेन उपहन्यामिमाः प्रजाः । प्रजानामनुग्रहाय प्रवृत्तः तदुपहतिं कुर्यां इति ममेश्वरस्याननुरूपमापद्येत ॥

रा ॥ ते च स्वकर्तव्याननुष्ठानेनाकरणे प्रत्यवायेन चात्मानमलब्ध्वा निरयगामिनो भवेयुः । अहं कुलोचितं कर्म न चेत्कुर्यां, एवमेव सर्वे शिष्टलोका मदाचारायत्तधर्म-

निश्चयाः अकरणादेवोत्सीदेयुः नष्टा भवेयुः। शास्त्रीयाचारानुपालनात्सर्वेषां शिष्टकुलानां सङ्करस्य च कर्ता स्यां। अतएवेमाः प्रजाः उपहन्यां। एवमेव त्वमपि शिष्टजनाग्रेसरपाण्डुतनयो युधिष्ठिरानुजोऽर्जुनस्सन् यदि ज्ञाननिष्ठायामधिकरोषि ततस्त्वदाचारानुवर्तिनोऽकृत्स्नविदश्शिष्टा मुमुक्षवः स्वाधिकारमजानन्तः कर्मनिष्ठायां नाधिकुर्वन्तो विनश्येयुः। अतो व्यपदेश्येन विदुषा कर्मैव कर्तव्यं ॥

विचारः

अकरणस्योत्सादहेतुत्वेऽवान्तरव्यापारः सङ्करः इति देशिकः प्रदर्शयति। 'अहं' इत्यनेन अवतीर्णस्य श्रीकृष्णस्यैव ग्रहणमुचितमिति देशिकाशयः। अत एव कर्मेत्यस्य कुलोचितं कर्मेति रामानुजभाष्यं। 'लोकाः' इत्यनेन शिष्टलोकाः विवक्षिताः इत्यपि तस्याशयः ॥ 'अहं' इत्यनेन भगवतः इतरावताराः, तथा रूपाणि च ग्राह्याणि इति मधुसूदनाभिप्रायो विज्ञायते। यथोक्तं धर्मदत्तेन (तट्टिप्पणीकर्त्रा) "प्रलये सर्वसंप्रदायविलोपाद्यथावत्साध्यसाधनेतिकर्तव्यता-तद्व्यापारविशेषज्ञानाभावेन लौकिकवैदिककर्मकलापानुष्ठानासंभवात्, व्यवहारोपयोगिसकलपदार्थस्याभावेन शरीरयात्रानिर्वाहासंभवेन शरीरस्थित्यसंभवादग्निहोत्रादिधर्माभावेन वृष्ट्याद्यभावाल्लोकोच्छेदः स्यात्। पुण्यपापविवेकाद्यभावे शरीरस्वभावात्कामादिनिबन्धनप्रवृत्त्या वर्णसङ्करश्च स्यात्। यद्यहं सर्गादिकाले निखिलजनप्रारब्धप्रवर्तितः, कुलालकुविन्दादिकायमधिष्ठाय व्यवहारोपयोगिघटपटादिनिर्माणकर्माणि, यजमानर्त्विगादिरूपमास्थायाग्निहोत्रदर्शपूर्णमाससोमादिवैदिककर्माणि, शासकेन्द्रयमादिरूपो भूत्वा सुकृतिदुष्कृतिजननिग्रहानुग्रहादिकर्माणि,

च न कुर्यां तदेति ॥ क्लेशकर्मविपाकाशयैरपरामृष्टो निर्माणकायमधिष्ठाय सम्प्रदायप्रद्योतकोऽनुग्राहकः परमेश्वरोऽत्राहमर्थ इति भावः" इति ॥ अत्रेदं चिन्त्यते । "लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि" इति प्रकरणमारभ्य स्वव्यापारं दृष्टान्तत्वेनालोच्य अर्जुनोऽपि कर्म कुर्यादिति निगमनं कृतवान्भगवान् । अयमाशयो 'न मे' इत्यादिश्लोकानां श्रीकृष्णावतारमात्रपरत्वेऽपि लभ्यत इति भगवतस्सृष्ट्यादिकर्मपर्यन्तमनुधावनं नावश्यम्भाति । किंच 'मम वर्त्मानुवर्तन्ते मनुष्याः' इत्युक्तं ॥ जनानुवर्तने को दोष इति शङ्कायां अनुवर्तने पश्येमं दोषं इत्याह भगवान्, उत्सीदेयुरिति । यद्यपि सर्गादिव्यापाराद्यदि भगवानुपरमेत् तदा स्यादेवानर्थपरम्परा । तथापि तादृशी दोषपरंपरा न भगवदाचारायत्ताचारमूला । किंतु भगवदौदासीन्यसाक्षाज्जन्या । इहतु विवक्षा भगवदालस्यनिमित्तेतरजनालस्यप्रसक्तदोषाणामेवेति ज्ञायते ॥ 'मनुष्याः' 'सङ्करस्य च' इति प्रयोगाभ्यां च श्रीकृष्णेन मर्त्यावतारेण लोकविलक्षणत्वहेतुना धर्माननुष्ठाने 'धर्मो विश्वस्य जगतः प्रतिष्ठा' इति श्रुत्युक्तरीत्या लोकोऽपि धर्मं विहाय नश्येदित्येवार्थो रमणीयः ॥

'यद्यदाचरती'त्यादिश्लोकचतुष्टयभावं इतरव्याख्यातृवदुक्त्वा योजनान्तरमप्याह मधुसूदनः ॥ तथाहि ("यद्यदाचरतीत्यादेरपरा योजना । न केवलं लोकसंग्रहं पश्यन्कर्तुमर्हसि अपि तु श्रेष्ठाचारत्वादपीत्याह ॥ यद्यदिति ॥ तथाच मम श्रेष्ठस्य यादृश आचारः, तादृश एव मदनुवर्तिना त्वया अनुष्ठेयो न स्वातन्त्र्येणान्य इत्यर्थः । कीदृशस्तवाचारो यो मयाऽनुवर्तनीय इत्याकांक्षायां, न मे पार्थेत्यादिभिस्त्रिभिः श्लोकैस्तत्प्रदर्शनमिति" इति ॥

इयं योजना शङ्करभाष्यानभिमता, अत उत्कर्षदीपिकायामुपेक्षिता । किंच पूर्वोक्तलोकसंग्रहप्रकारादिप्रपंचनं प्रकरणप्राप्तं भाति । अन्यथा

अर्जुनाननुष्ठानमात्रेण कथं लोकसंग्रहाभावः इत्याक्षेपस्यासमाहितत्वेन न्यूनताप्रसङ्गः स्यात् । यथा अहं श्रेष्ठः आचरामीति मामनुसृत्य लोकोऽप्याचरतीति तेन लोकसंग्रहो लभ्यते, तथा त्वमपि श्रेष्ठः तवाचारं च लोकोऽनुयाति इति लोकसंग्रहो भवति ॥

(तं पश्यन्कर्तुमर्हसीति भावः । यदि लोकसंग्रहार्थत्वयुक्तिमविवक्षित्वा श्रीकृष्णस्य कर्मकर्तृतामात्रं पश्यतः तदनुवर्तिनाऽर्जुनेन कर्मानुष्ठेयं इत्याशयः, तर्हि पुनरर्जुनः एवं शङ्केत—(भगवान्कृष्णः पूर्णकामः प्रभुः लीलया त्वं करोषि अहन्तु न तथेत्यावयोर्वैषम्यमस्ति इति ॥ अस्याः शङ्काया उत्तरन्तु न केवल लीलया किंतु लोकसंग्रहाय कर्माणि वर्ते, तथा त्वमपि श्रेष्ठत्वेन लोकसंग्रहाय कर्माणि वर्तस्वेति सयुक्तिकं भवति ॥ लोकसंग्रहार्थत्वयुक्तेरत्राविवक्षायां तु वाक्यार्थः कुण्ठितो भाति ॥

---

**सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत।**
**कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहं २५॥**

वि० ॥ ननु अज्ञवदाग्रहेण ज्ञानिनाऽपि कर्म कार्यं चेद्विद्वदविद्वत्कर्मणोराविशेषप्रसंग इत्यत आह ॥ सक्ता इति । हे भारत, अविद्वांसोऽज्ञाः कर्मणि सक्ताः अभिनिविष्टाः फलेच्छावन्तस्सन्तो यथा कर्म कुर्वन्ति, तथा विद्वान् ज्ञान्यपि असक्तः फलेच्छाहीनस्सन् लोकसंग्रहं चिकीर्षुः कर्म कुर्यादित्यर्थः । सक्त्यसक्तिपूर्वकत्वेन कर्मानुनुष्ठानं तयोर्विशेष इति भावः ॥

शं ॥ यदि पुनः अहमिव त्वं कृतार्थबुद्धिः आत्मवित् अन्यो वा, तस्यापि आत्मनः कर्तव्याभावेऽपि परानुग्रह एव कर्तव्यः इत्याह ॥ सक्ताः इति ॥ सक्ताः कर्मण्यस्य कर्मणः फलं मम भविष्यतीति केचिदविद्वांसो यथा कुर्वन्ति भारत। कुर्याद्विद्वानात्मवित्तथाऽसक्तः सन्। तद्वत् किमर्थं करोति तच्छृणु, चिकीर्षुः कर्तुमिच्छुर्लोकसंग्रहं॥

रा॥ अविद्वांसः आत्मन्यकृत्स्नविदः कर्मणि सक्ताः कर्मण्यवर्जनीयसंबंधाः आत्मन्यकृत्स्नवित्तया तदभ्यासरूपज्ञानयोगेऽनधिकृताः कर्मयोगाधिकारिणः, कर्मयोगमेव यथा आत्मदर्शनाय कुर्वते, तथा आत्मनि कृत्स्नवित्तया कर्मण्यसक्तो ज्ञानयोगाधिकारयोग्योऽपि व्यपदेश्यशिष्टो,लोकरक्षार्थं स्वाचारेण शिष्टलोकानां धर्मनिश्चयं चिकीर्षुः कर्मयोगमेव कुर्यात्॥

विचारः

सक्तत्वासक्तत्वाभ्यामज्ञसुज्ञयोर्विशेष इति श्लोकाभिप्रायः॥ अज्ञः सक्तत्वेन कर्तृत्वाभिमानफलाभिसन्धिभ्यां कर्मणि निरतः॥ विद्वांस्तु फलेच्छां विहाय कर्तृत्वाभिमानरहितः कर्तव्यमित्येव कर्म करोति लोकसंग्रहार्थं ईश्वरप्रीत्यर्थं च। अकरणे तस्य प्रत्यवायाभावेऽपि लोकसंग्रहस्तेनावश्यं कार्यो विद्यते। लोकसंग्रहो नाम लोकोपकारविशेषः॥ मत्यैक्येन जनानेकीकृत्य स्वाचारेण तेषां स्वयूथ्यतापादनं संग्रहः॥ अज्ञस्यतु लोकसंग्रहो न प्रयोजनं भवति। यतो लोकः श्रेष्ठतरं नानुवर्तते। यतश्च धनवनितादिप्रत्यक्षप्रयोजनभिन्नं स्वार्थत्वेन स न स्वीकुर्यात्। स्वतंत्रकर्तृत्वाभिमानफला-

भिसंध्योस्सतोः तस्य लोकसंग्रहाय प्रवृत्तेरसंभवात् । तस्मात्सएवाविद्वान् विवक्षितः । असक्तस्तु विद्वान् इति ॥

अविद्वच्छब्देन कर्मयोगाधिकारिणं गृह्णाति रामानुजाचार्यः । अज्ञः कर्मयोगं आत्मदर्शनाय करोति । सुज्ञः कर्मयोगं लोकरक्षार्थं करोति इत्यज्ञसुज्ञयोरुद्दिष्टप्रयोजनभेदे तात्पर्यमाह ॥ उक्तं च तात्पर्यचन्द्रिकायां "अविद्वांसः, कर्माणि सक्ता, इत्युभयं न सांसारिककर्मतत्परपुरुषविषयं । तथासति कर्मयोगमपि परित्यज्य सांसारिककर्माण्येव विदुषाऽप्यनुष्ठेयानि स्युः । तस्माज्ज्ञानयोगानधिकारः कर्मयोगाधिकारश्च ताभ्यां सूच्यते" इति ॥ अत्रेदं वक्तव्यं । अविद्वच्छब्देन कर्मयोगाधिकारिग्रहणमनुचितं भाति । कामादित्यागपूर्वकं ईश्वरार्पणबुध्या कर्मानुष्ठानं हि कर्मयोगः । एवमनुष्ठाता कथमज्ञो भवेत् । कथं वा स सक्त इत्युच्यते । सक्तोहि फलेच्छावान् कर्मण्यभिनिविष्टः । तस्य कर्मण्यधिकारः स्यात्, नतु कर्मयोगे ॥ किंच अविद्वान् सक्तः विद्वानसक्तो लोकसंग्रहं चिकीर्षुः कुर्यात् इत्यस्य कोऽभिप्रायः । यथा विद्वान् असक्तः तथा अविद्वानप्यसक्तो भवेत् । इदमेव विद्वत्कर्तृकलोकसंग्रहस्य फलं इतिह्याशयो गम्यते । यद्यविद्वानिति तत्त्वदर्शनाय यतमानस्सात्विकः कर्मयोगी विवक्षितः, तर्हि तद्व्यापारस्य निर्दुष्टत्वात्तच्छिक्षार्थं किमिति विद्वान्यतेत । यदिहि ज्ञानार्थं कर्मयोगिनो यत्नः दुष्टः अविहितो वा स्यात् तर्हि विद्वांस्तं सन्मार्गं नेतुं आचरेत् । अतो गीतायां पूर्वार्धोक्तस्य सक्तस्याविदुषस्संग्रहायात्तेरार्धोक्तस्य विदुषस्समाचरणं इत्याशयो रामानुजभाष्यात् न लभ्यते । तस्मादिह कर्मयोगिज्ञानयोगिनोर्विशेषो नाभिप्रेतः किंतु कर्मिज्ञानिनोः ॥

अविद्वांस इत्यनेनाविहितकर्मकर्तारो व्रात्या विवक्षितास्स्युरित्यापाततः प्रतीयेत ; तन्न । अविहितकर्मकर्तुरप्रसक्तेः । क्रियमाणकर्मापेक्षया अत्राज्ञसुज्ञयोस्साम्याभिप्रायेण सक्तत्वासक्तत्वमात्रेण वैलक्षण्यमुच्यते । अविहितं

कर्म न कदापि सुज्ञः कुर्यादित्यतः अविद्वत्कर्मापि विवक्षितं विहितं कर्मैव स्यात् ॥

"सक्ताः कर्मण्यवर्जनीयसंबन्धाः" इति रामानुजभाष्यं। अवर्जनीयत्वप्रकारस्तु न निरूपितः। श्लोके यथातथेतिशब्दौ न केवलं दृष्टान्तार्थौ, किंतु "कुर्वन्ति" "कुर्यात्" इति क्रिययोर्विशेषणत्वं च संपादयतः॥ येन प्रकारेण स्वानुष्ठानं दृष्ट्वा अन्ये कर्म कुर्युः तेन प्रकारेण विद्वानाचरेदिति यावत् ॥

कर्मसंगिन

जोषयेत्सः

वि ॥ अज्ञानां कर्मणि सक्तिं जनयितुमपि ज्ञानिना कर्म कार्यमित्याह ॥ न बुद्धीति। अज्ञानां भगवत्स्वरूपमजानतां कर्मसङ्गिनां कर्माभिनिवेशिनां बुद्धेर्भेदं विपर्यासं न जनयेत्, कर्मानुष्ठानाद्बुद्धेश्चालनं न कुर्यात्। विद्वान्युक्तो भगवति मनोयोगवान् तत्पूजात्वेनेति यावत्। कर्म समाचरन् सर्वकर्माणि जोषयेत् सेवयेत्। अज्ञानिति शेषः॥

शं ॥ एवं लोकसंग्रहं चिकीर्षोर्ममात्मविदः कर्तव्यमन्यस्य वा लोकसंग्रहमुक्त्वा ततस्तस्यात्मविद इदमुपदिश्यते॥ नेति॥ बुद्धेः भेदः बुद्धिभेदः, 'मया इदं कर्तव्यं भोक्तव्यं चास्य कर्मणः फलं' इति निश्चयरूपाया बुद्धेः भेदनं चालनं बुद्धिभेदः, तं न जनयेत् नोत्पादयेत्। अज्ञानामविवे-

किनां कर्मसङ्गिनां कर्मण्यासक्तानां आसंगवतां । किन्तु कुर्यात्? जोषयेत् कारयेत् सर्वकर्माणि, विद्वान् स्वयं तदेव अविदुषां कर्म युक्तः अभियुक्तः समाचरन् ॥

रा ॥ अज्ञानामात्मन्यकृत्स्नवित्तया ज्ञानयोगोपादाना-शक्तानां मुमुक्षूणां कर्मसंगिनामनादिकर्मवासनया कर्मण्येव नियतत्वेन कर्मयोगाधिकारिणां, कर्मयोगादन्यदात्मावलोक-नसाधनमस्तीति न बुद्धिभेदं जनयेत् । किं तर्हि । आत्मनि कृत्स्नवित्तया ज्ञानयोगशक्तोऽपि, पूर्वोक्तरीत्या कर्मयोग एव ज्ञानयोगनिरपेक्ष आत्मावलोकनसाधनमिति बुद्ध्या युक्तः, कर्मैवाचरन् सर्वकर्मस्वकृत्स्नविदां प्रीतिं जनयेत् ॥

विचारः

कर्मसङ्गिनामिति काम्यकर्म कुर्वाणा उक्ताः । त एव हि भगवत्स्वरूप न जानन्तीत्यज्ञा उच्यन्ते । स्वतन्त्रकर्तृत्वाभिमानेन फलाभिसन्धिना च कर्मण्यभिनिविष्टास्सन्तः केवलं श्रद्धाजाड्यान्नियमेनादरेणच विहितं कुर्वन्ति । विध्युल्लंघनेन प्रत्यवायशून्योऽप्यपरोक्षज्ञानी तान्कर्मिणः कर्ममार्गान्न चालयेत् । अपित स्वयं कर्माणि [illegible] ासक्तिमभिवर्धयेत् । सुज्ञकर्माज्ञकर्मणो-ास्त्वयान् विशेषः । सुज्ञो भगवति मनोयोगपूर्वमाचरति । अज्ञस्तु तादृशयो-गहीन इति ॥

उपदेशेनाज्ञोद्धारः कुतो न सम्भवेदित्याकांक्षायामाह । जोषयेदिति । उपदेशादनुष्ठानं बलवत्तरं सन्मार्गप्रवर्तनायेति भावः ॥ जोषयेत् सेवयेत् । प्रीणयेदित्यर्थकरणे ‘कर्माणि’ इत्यस्यान्वयो न स्यात् । सर्वकर्माणि समा-चरन् अज्ञान् सर्वकर्माणि जोषयेदिति योजना । अज्ञानां कर्मसु प्रीतिः

सद्भिराचरितत्वहेतुना सुकरा संभवतीति यावत्। सद्भिर्विहितकर्मणामननुष्ठाने अज्ञानां बुद्धिभेदो जायेत। कर्म नानुष्ठेयमिति बुद्ध्या कर्म परित्य-
। यतः ज्ञानित्वात्सतां प्रत्यवायो न स्यात्, मम तु स्यादेव प्रत्यवाय इत्यज्ञो नानुसन्धत्ते। एवं प्राप्तस्यानर्थस्य कारणं सुज्ञो भवतीत्यत उक्तं॥ न बुद्धिभेदं जनयेदिति॥ अत्र सुज्ञैरुपदेशो न कर्तव्यः इति नाशयः, आचारस्य बलवत्त्वेन कर्तव्यत्वमेव विवक्षितं। उपदेशादिनिषेधे तात्पर्यं न ज्ञेयं। अन्यथा अध्ययनाध्यापनशास्त्राणां निरधिकारिकत्वमापद्येत॥

किंच फलेच्छया कर्मणि सक्तानामज्ञानां फलकामनानुगतबुद्धेस्तान्सुज्ञो न प्रच्यावयेदित्यपि नाशयः। स्वाचारेण स्वोपदेशेन वा फलबुद्धिं त्याजयित्वा अज्ञान् कर्मनिष्ठान्कर्तुमुद्यमस्योचितत्वात्, शास्त्रसम्मतत्वाच्च॥ एतेन यन्मधुसूदनोक्तं, "कर्तृत्वाभिमानेन फलाभिसंधिना कर्मसङ्गिनां कर्मण्यभिनिविष्टानां या बुद्धिरहमेतत्कर्म करिष्ये एतत्फलं भोक्ष्ये इति, तस्याः भेदं विचालनं अकर्त्रात्मोपदेशेन न कुर्यात्" इति। तत्, यच्चोक्तं शङ्करानन्देन, "ज्योतिष्टोमेन स्वर्गकामः" इति वचनाज्ज्योतिष्टोमं कृत्वा स्वर्गफलं भोक्ष्ये इत्यादिफलविषया या कामना बुद्धिस्तस्याः भेदं चालनं न जनयेत्, न कर्माणि कामनया कर्तव्यानीतिवा, स्वर्गादिफलमसदितिवा, कर्त्रादिसर्वं मिथ्येति वा तेषां बुद्धेर्वैकल्यं न संपादयेत्, किंतु 'अक्षय्यं ह वै चातुर्मास्ययाजिनः' इति 'पश्यति पुत्रं पश्यति पौत्रं' इति 'तस्माद्धर्मं परमं वदंति' इत्यादिना च सर्वाणि वैदिकानि जोषयेत्" इति। तच्च प्रत्युक्तं। भ्रान्तानां भ्रमपरिहारस्य ज्ञानिभिरवश्यं कर्तव्यत्वात्। गीतायां कर्मकार्यत्वबुद्धेर्भेदं नजनयेदित्यभिप्रेतं न तु कर्मकरणे यत् दुष्टमनुसन्धानं स्यात्तन्न परिहरणीयमिति॥

द्वितीयार्धे 'युक्तः' इति पदं न विस्मर्तव्यं। "भगवति मनोयोगवान्" इति विवृत्याचार्येण यद्व्याख्यातं, साधूक्तं तत्॥ केचित्, युक्तः आदृतो भूत्वा अवहितः इति व्याचख्युः॥ एतन्नीरसं। अज्ञसुज्ञकर्मणोर्वैलक्षण्य-

द्योतनाय प्रयुक्तोऽयं युक्तशब्दः । वैलक्षण्यं तु भगद्भक्तिवैधुर्यसद्भावाभ्यामेव सुरसं ज्ञायते । अज्ञवत्काम्यकर्माणि फलेच्छया सह आदरेण सुज्ञोऽपि कुर्यात् इत्यर्थस्तु बाधितः, सुज्ञत्वव्याहतेः ॥

श्लोके 'अज्ञानां' इत्यनेन विवक्षिताः के इति सन्देहः स्यात् ॥ "आत्मन्यकृत्स्नवित्तया ज्ञानयोगोपादानाशक्ताः मुमुक्षवः कर्मवासनया कर्मण्येव नियतत्वेन कर्मयोगाधिकारिणो विवक्षिताः" इति रामानुजाचार्यव्याख्यानम् ॥ एतेषां कर्मयोगाधिकारिणां "कर्मयोगादन्यदात्मावलोकनसाधनमस्तीति न बुद्धिभेदं जनयेत्" इति चोक्तं । तच्चिन्त्यं, अज्ञाः कर्मसङ्गिनोह्यत्रोक्ताः ते काम्यकर्मकर्तार एव विवक्षिताः स्युः । न तु कर्मयोगाधिकारिणः । सङ्गराहित्येन कर्तुर्हि कर्मयोगाधिकारः । न तु फलाकाङ्क्षावतः । कर्मयोगाधिकारिभिर्ज्ञानयोगस्वरूपमपि न ज्ञातव्यमिति को निर्बन्धः । विना भगवज्ज्ञानं विना च भगवद्भक्तिं कुतः कर्मयोगे कस्याप्यधिकारः । कर्मयोगिनो न ज्ञानं ज्ञानयोगिनो न कर्मेति तु भ्रमः । उभाभ्यामपि कर्मज्ञानयोरपेक्षितत्वात् ॥

उत्तरार्धे 'विद्वान्' इत्यनेन ज्ञानयोगाधिकार्येव विवक्षित इत्यपि नास्ति निर्बन्धः ॥ अनेन भगवत्तत्त्वज्ञान्युक्त इत्यवगम्यते । सः परोक्षज्ञानी वा अपरोक्षदृग्वा स्यात् । परोक्षज्ञानित्वे कर्मयोगी वा ज्ञानयोगी वा भवेत् । नत्वज्ञशब्दाभिहितः काम्यकर्ता ॥ 'विद्वान्' इत्युक्तः अपरोक्षज्ञानी इति ग्रहणेतु बाधकं किंचिदपि नास्ति । स एवहि लोकसंग्रहार्थं करोति मोक्षानन्दवृद्धिं विना अन्यत् प्रयोजनमनपेक्ष्य । सएवाज्ञानां कर्माणि सक्तिं जनयितुं अर्हतीति ॥

---

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहंकारविमूढात्मा कर्ताऽहमिति मन्यते ॥२७॥

वि ॥ ज्ञान्यज्ञानिनोः सक्ता इत्यादिश्लोकद्वयोक्तं कर्मानुष्ठानवैलक्षण्यं प्रपञ्चयति ॥ प्रकृतेरित्यादिश्लोकत्रयेण ॥ अत्र प्रकृतिशब्देन जीवस्वभावे-श्वर-जडप्रकृतयो ग्राह्याः ॥ प्रकृतेः प्रकृष्टकृतिमत्वहेतुना प्रकृतिपदवाच्यस्य हरेः गुणैः इच्छा-ज्ञानप्रयत्नादिरूपगुणैर्धर्मैः स्वतन्त्रैः । तथा प्रकृतेः उत्तम-मध्यमाधमरूपजीवराशिस्वभावस्य गुणैः अनुगुणैः तत्त्वज्ञान-मिश्रज्ञान-मिथ्याज्ञानादिरूपधर्मैरीशाधीनैः । तथा प्रकृतेः जडप्रकृतेः सम्बन्धिभिः गुणैस्तत्कार्यभूतैः सत्त्वरजस्तमो-गुणैः, प्रकृतेर्विकारभूतैः देहेन्द्रियान्तःकरणरूपगुणैः क्रिय-माणानि कर्माणि साधुकर्म-मिश्रकर्मासाधुकर्माणि प्रति, अहं-कारविमूढात्मा सन् कर्ताऽहं स्वतन्त्रकर्ताऽहमिति मन्यते ॥ ईश्वरः स्वतन्त्रकर्ता सन् स्वज्ञानेच्छादिना स्वाधीनकर्त्री त्रिविधजीवस्वभावमनुसृत्य प्रकृतिविकारजीवकरणैः प्रकृति-कार्यसत्त्वादिगुणरूपोपादानकारणेन क्रियमाणकर्मणामहमेव स्वतन्त्रकर्तेत्यात्मानं अजानानो मन्यते इत्यर्थः ॥

शं ॥ आविद्वानज्ञः कथं कर्मसु सज्जत इत्याह ॥ प्रकृते-रिति ॥ प्रकृतेः, प्रकृतिः प्रधानं सत्त्वरजस्तमसां गुणानां साम्यावस्था, तस्याः प्रकृतेर्गुणैर्विकारैः कार्यकारणरूपैः क्रि-

यमाणानि कर्माणि लौकिकानि शास्त्रीयाणि च सर्वशः सर्वप्रकारैरहंकारविमूढात्मा कार्यकरणसंघातात्मप्रत्ययोऽहंकारस्तेन विविधं नानाविधं मूढः आत्माऽन्तःकरणं यस्य सोऽयं कार्यकरणधर्मा कार्यकरणाभिमान्यविद्यया कर्माण्यात्मनि मन्यमानस्तत्तत्कर्मणामहं कर्तेति मन्यते ॥

रा ॥ कर्मयोगमनुतिष्ठतो विदुषोऽविदुषश्च विशेषं प्रदर्शयन् कर्मयोगापेक्षितमात्मनोऽकर्तृत्वानुसन्धानप्रकारमुपदिशति ॥ प्रकृतेर्गुणैः सत्त्वादिभिः स्वानुरूपं क्रियमाणानि कर्माणि प्रति अहङ्कारविमूढात्माऽहङ्कर्तेति मन्यते। अहङ्कारेण विमूढ आत्मा यस्यासावहंकारविमूढात्मा ॥ अहङ्कारो नाम अनहमर्थे प्रकृतावहमभिमानः। तेनाज्ञातस्वरूपो गुणकर्मस्वहङ्कर्तेति मन्यते इत्यर्थः ॥

विचारः

"(क्वचित्स्वभावः प्रकृतिः क्वचिच्च त्रिगुणात्मिका। क्वचित्प्रकृष्टकर्तृत्वाद्भगवान्प्रकृतिर्हरिः" इति शब्दनिर्णयवचनानुसारेण प्रकृतिशब्दोऽत्रैतत्त्रितयपरतया ग्राह्यः। तथाहि। प्रकृष्टकृतिमत्त्वादीश्वरः प्रकृतिरुच्यते। तस्य गुणाः ज्ञानेच्छाप्रयत्नादिरूपास्स्वतन्त्रधर्माः। तैः प्रेरितानि कर्माणि)॥ (किंच प्रकृतिस्स्वभावः। योग्यतया जीवस्वभावो गृह्यते। स्वभावस्त्रिधेष्यते उत्तममध्यमाधमत्वेन। स्वभावस्य गुणाः अनुगुणाः सज्ज्ञानमिश्रज्ञानमिथ्याज्ञानादिधर्माः ईशाधीनाः। तैःप्रेरितानि कर्माणि)॥ (किंच। प्रकृतिः जडप्रकृतिः। तत्संबन्धीनि इन्द्रियादीनि गुणा उच्यन्ते। अप्रधानत्वात्तेषां गुणत्वं। देहेन्द्रियान्तःकरणरूपैः क्रियमाणानि

कर्माणि ॥ किंच प्रकृतिकार्यसत्त्वरजस्तमोगुणरूपोपादानकारणेन क्रियमाणानि कर्माणि इति ॥

[मूढः स्वमेव कर्तारं मन्यते । कर्ता तु स्वतंत्रः परमात्मा । सहि स्वज्ञानेच्छाप्रयत्नैर्जीवेन कर्म कारयति । कर्मप्रति प्रचोदने जीवस्वभावं तत्पूर्वकर्मादिकं चानुसृत्य प्रेरयति भगवान् । जीवस्य शरीरेन्द्रियादीनि चेशजीवाधीनानि करणानि । सत्वरजस्तमोगुणोपादानकाः पदार्थाश्च कर्मनियंतारः ॥ एवं कर्मणि स्वतंत्रपरतंत्रनायकनियते सति भ्रान्तः पुमान् स्वमेव स्वतंत्रकर्तारं मत्त्वा नश्यतीत्याशयः ]॥

आत्मनः कर्तृत्वमेव नास्तीत्यादाय परमात्मनोऽपि तन्निषेधन्त्यद्वैतिनः । तन्न, यतः ईश्वरस्य स्वतन्त्रकर्तृत्वं जीवस्य तदधीनकर्तृत्वञ्च शास्त्रप्रमितम्—

"नह्येव कर्ता पुरुषः कर्मणोः शुभपापयोः ।
अस्वतन्त्रो हि पुरुषः कार्यते दारुयन्त्रवत्" इति भारते ॥

"इन्द्रियैस्तु प्रदीपार्थं कुरुते बुद्धिसत्तमैः ।
निर्विचेष्टैरजानद्भिः परमात्मा प्रदीपवत् ॥"

शान्ति ॥ (194-42)

"एकश्शास्ता न द्वितीयोऽस्ति शास्ता
गर्भे शयानं पुरुषं शास्ति शास्ता ।
तेनानुयुक्तः प्रवणादिवोदकं
यथा नियुक्तोऽस्मि तथा वहामि ॥"

इतीन्द्रनमुचिसंवादे शान्तिपर्वणि (266) ।

"यथा दारुमयीं योषां नरः स्थिरसमाहितः ।
इङ्गयत्यङ्गमङ्गानि तथा राजन्निमाः प्रजाः ॥" इति भारते ।

इत्यादिप्रमाणैः कर्मसु क्रियमाणेषु ईश्वरस्य स्वातन्त्र्यं जीवस्यास्वातन्त्र्यञ्च स्पष्टम् ॥ यदि जीवस्य परतन्त्रकर्तृत्वञ्च निषिध्यते तदा शास्त्रस्यानधिकारिकत्वेन वैयर्थ्यापत्तिः ॥ प्राकृतानां इन्द्रियादिकरणानां कर्तृत्वन्तु परमगौणं। जडस्य ज्ञानायोगात् क्षेत्रज्ञस्य विषयानुभवो वाच्यः ॥ यत्परैः पुनःपुनरुच्यतेऽन्तःकरणादिकमेव कर्तृ नात्मेति, तद्बहुप्रमाणविरुद्धं ज्ञेयम् ॥ उक्तं शान्ति पर्वणि, "रूपं गन्धं रसं स्पर्शं शब्दं चैवाथ तद्गुणान्। इन्द्रियाणि न बुध्यन्ते क्षेत्रज्ञस्तैस्तु बुध्यते ॥" इति। शां ॥ (275-1-5) दृत्तस्वातन्त्र्यानभ्युपगमे उक्तं शान्तिपर्वणि—

"यदि कालेन निर्याणं सुख दुःखं भवाभवौ।
भिषजं भेषजं कर्तुं कस्मादिच्छंति रोगिणः ॥
यदि कालेन पच्यंते भेषजैः किं प्रयोजनं।
यदि कालः प्रमाणं ते कस्माद्धर्मोऽस्ति कर्तृषु ॥"

इति शां (139-154-56) ॥

ईश्वरस्य सर्वकारयितृत्वे वैषम्यादिदोषः स्यादित्याक्षेपः शास्त्रेषु समाहितः। स्वभावकर्मादिकमनुसृत्य कारयति फलं ददातिचेति तस्य वैषम्यनैर्घृण्यायोगादिति ॥ स्वभावनिमित्तजं जीवत्रैविध्यं परे नांगीकुर्वन्ति। उक्तं हि शान्तिपर्वणि—

"नित्यमेवाभिवर्तन्ते गुणाः प्रकृतिसंभवाः ॥ (शां 269-56)
पश्य भूतानि दुःखानि व्यतिषक्तानि सर्वशः।
उत्तमाधममध्यानि तेषु तेष्विह कर्मसु (174-134) ॥
स्वभावादेव संदृश्याः वर्तमानाः प्रवृत्तयः।
स्वभावनिरताः सर्वाः परितुष्ये न केनचित् ॥

(शां 179 प्रह्लादनमुचिसंवादे ॥) "तमो रजश्च सत्वं च विद्धि जीवगुणानिमान्" ॥ (ch. 187-26.) इत्यादि ॥

तस्माद्यदुक्तं प्रकृतेर्गुणैः क्रियमाणानि इत्यत्र प्रकृतिशब्दः भगवत्परः जीवस्वभावपरः जडप्रकृतिपरश्चेति, साधूक्तं तत् ॥ गीतातात्पर्योदाहृत-प्रमाणानि चास्मिन्नेवार्थे पठनीयानि-

"स्वभावतस्त्रिधा जीवा उत्तमाधममध्यमा. ।
उत्तमास्तत्र देवाद्याः मर्त्यमध्यास्तु मध्यमाः ॥
अधमा असुराद्याश्च नैषामस्त्यन्यथाभवः ।
अतोऽधमानां जीवानां मिथ्याज्ञानादयोऽखिलाः ॥
स्वाभाविकगुणा ज्ञेयाः मध्यमर्त्येषु मिश्रिताः ।
तत्त्वज्ञानं विष्णुभक्तिरित्याद्या देवतादिषु ॥
कार्यते ह्यवशः कर्म सर्वैस्तैः प्राकृतैर्गुणैः ।
स्वाभाविकगुणानेतान् हेतुं कृत्वैव विष्णुना ॥
कर्मसु क्रियमाणेषु कर्ताऽहमिति मूढधीः ।
मन्यते तत्त्वविद्विष्णोर्गुणा इच्छादयस्तु ये ॥
स्वाभाविकेषु जीवस्य कामाद्येषु सदैवतु ।
प्रेरकत्वेन कर्त्रेते स्वातंत्र्यं मम न क्वचित् ॥
इति मत्वा न सक्तः स्यात्प्रीतोऽस्य भवति प्रभुः ।
स्वभावगुणसंमूढाः ज्ञानादिगुणवत्तरं ॥
स्वातंत्र्येणैव कर्तारं चात्मानं प्रतिजानते ।
तान्गुणान्कर्म तच्चैव विष्ण्वधीनं न ते विदुः ॥" इति प्रकाश-संहितायां ॥

एतेन मूढस्य विवक्षितो भ्रमः स्वस्वातंत्र्यविषयः इत्युक्तं भवति ॥

('अहंकारः' इत्यनेन देहात्मभ्रम एव विवक्षितः इत्याह देशिकः । इदं तस्य वाक्यं, 'नात्राहंभावमात्रमुच्यते, तस्यात्मस्वभावान्तर्गतत्वात् ।

नाप्यहंकाराख्यमचिद्द्रव्यं, तस्य देहात्मभ्रमं द्वारीकृत्य कार्यकरत्वे सति अव्यवहितस्यैव वक्तुमुचितत्वात्। नापि गर्वः, उत्कृष्टपरिभवादिहेतुत्वेनानिर्देशात्। अतोऽहंकार इति देहात्मभ्रम एवात्र विवक्षितः' इति॥ अत्र वक्तव्यं। देहात्मैक्यविषय एवाविद्वद्भ्रमो विवक्षितः इति को निर्बन्धः। देहात्माविवेके सत्यपि ईश्वराविस्मरणपूर्वकं स्वस्वातंत्र्यं यो मन्यते सोऽप्यविद्वान् प्रकरणविवक्षितः इत्युक्तौ न दृश्यतेऽनुपपत्तिः॥

अद्वैतव्याख्यातारः कर्तृत्वं सर्वथा नाभ्युपयन्त्यात्मनः। ते अनात्मधर्मभूतस्य कर्तृत्वस्यात्मन्यध्यासमाहुः॥ तथाहि शंकरानन्दः, "अहंकारविमूढात्मा देहेन्द्रियादिष्वहंकरणेन विमोहितः, द्रष्टाऽहं स्प्रष्टाऽहं श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता भोक्ता इति तत्तदुपाधिसंबंधसंभावितविपरीतवृत्तीनां विषयतां गमितः आत्मप्रत्ययलक्षणः, यस्य दुष्टादुष्टप्रारब्धवशाद्देहेन्द्रियैः कृतेषु दुष्टेष्वपि कर्मस्वकर्तारमेवात्मानं, मया पापं कृतं पुण्यं कृतमिति तत्तत्क्रियायाः कर्तारमेव पश्यति" इति॥ अद्वैतव्याख्यातृषु वेंकटनाथस्तु प्रकृतेर्गुणैरित्यस्य मनसा इत्यर्थमुक्त्वा "अहंकारो नाम अनात्मनि मनसि आत्मत्वबुद्धिः। तदैक्याध्यासइतियावत्" इत्याह॥ अत्राचेतनस्यैव कर्तृत्वं इति वादः प्रागेव प्रत्याख्यातो द्रष्टव्यः॥

गीतायां प्रकृतिशब्देन भावाऽविद्या ग्राह्येति मधुसूदनाशयं धर्मदत्तो विस्तरेण तल्लक्षणप्रमाणाभ्यामुपपादितवान्॥ भावाऽविद्या पराभ्युपगता न परोक्तरीत्या सिध्यतीति सुधा-वादावली-न्यायामृतादिग्रंथेषु प्रतिपादितं द्रष्टव्यं॥

श्लोके 'कर्माणि' इत्यत्र द्वितीयायाः अनुपपत्तिरालोच्या समाधेयाच॥ कर्तरि तृच्प्रत्यये कर्मणां कर्ताऽहमिति षष्ठ्या भाव्यं, तृन्प्रत्ययेतु नानुपपत्तिः। "नलोकाव्ययनिष्ठाखलर्थतृणां" इति षष्ठीनिषेधात्॥ कर्माणिप्रति मन्यते इति योजना विवृत्यनुमता॥

**तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।**
**गुणा गुणेषु वर्तन्त इति मत्त्वा न सज्जते॥२८॥**

वि ॥ एवमविद्वान्करोति चेत् विद्वान्कथमित्याह ॥ तत्त्वविदिति ॥ गुणकर्मविभागयोः गुणानामिच्छादिभगवद्गुणानां सत्त्वादिप्रकृतिगुणानां,प्रकृतिविकारतया प्रकृत्युपसर्जनभूतचक्षुरादीन्द्रियशरीरमनसां चान्योन्यमुक्तविधया विभागस्य, तथा कर्म च स्वतन्त्रभगवत्कर्तृकं तदायत्तजीवकर्तृकं विकाररूपप्रकृतिकर्तृकं चेति कर्मविभागस्य । तत्त्ववित्तु तत्त्वज्ञानी तु । गुणाः भगवदिच्छादयः गुणेषु जीवस्वभावकर्मादिषु प्रेरकत्वेन वर्तन्ते । भगवदिच्छाद्यनुसारेण च गुणा इन्द्रियाणि गुणेषु शब्दादिविषयेषु वर्तन्ते । अतो जीवस्य न क्वापि स्वातन्त्र्यमिति मत्त्वा न सज्जते । स्वात्मनः कर्तृत्वाभिमानेन संसारमग्नो न भवतीत्यर्थः ॥

शं ॥ यः पुनर्विद्वान् ॥ तत्त्वविदिति ॥ तत्त्ववित्तु महाबाहो । कस्य तत्त्ववित्, गुणकर्मविभागयोर्गुणविभागस्य कर्मविभागस्य च तत्त्वविदित्यर्थः । गुणाः करणात्मकाः गुणेषु विषयात्मकेषु वर्तन्ते नात्मेति मत्वा न सज्जते सक्तिं न करोति।

रा ॥ गुणकर्मविभागयोः सत्त्वादिगुणविभागे तत्तत्कर्मविभागे च तत्त्ववित्, गुणास्सत्त्वादयः स्वगुणेषु स्वेषु कार्येषु वर्तन्तइति मत्त्वा गुणकर्मसु अहं कर्तेति न सज्जते ॥

विचारः

('गुणा गुणेषु वर्तन्ते' इत्यत्र प्रथमान्तगुणशब्द. इन्द्रियपरः सप्तम्यन्तो विषयपरः इति यच्छांकरैर्व्याख्यातं तन्नास्माकमनिष्टं ॥ यत्तु पराभिमतं इन्द्रियाण्येव विषयेषु प्रवर्तन्ते । न तत्रात्मनः किंचिदपि संबन्धः इति) (तदसत् । अचेतनस्य स्वत.प्रवृत्तेरप्रामाणिकत्वात् ॥

( गुणाः इन्द्रियाणि, गुणेषु विषयेषु इति व्याख्याने प्रथमान्तसप्तम्यन्त-पदद्वयस्यापि गौणार्थत्वं प्रसज्यते इत्याक्षिप्य प्रथमान्तो गुणशब्दः सत्वादि-प्रसिद्धपरत्वेन मुख्यार्थः, सप्तम्यंतस्तु उपचारात्सत्वादिगुणकार्यपर इत्याह देशिकः ॥ यद्वेति सप्तम्यन्तपदस्याप्युपचरितार्थत्व विहाय अप्रधाना-र्थत्वं स्वीकृत्य कारणस्य प्राधान्यात् कार्यस्य च तदपेक्षया गुणत्वात् गुणे-ष्विति कार्यस्य ग्रहणमुचितमित्युपपादितवान् ॥ सत्वादिगुणाः स्वस्वानियत-कार्येषु प्रवर्तन्ते इत्यर्थोऽपि नास्माकमनिष्टः )(यदीश्वरजीवयोः कर्तृत्वं निषिध्य सत्वादिगुणानां स्वतः स्वकार्येषु प्रवृत्तिरभिप्रेता तत्रैवास्ति विप्रतिपत्तिः । ईशप्रेरणया सात्विकादिजीवस्वभावमपेक्ष्य सत्वादयः स्वस्वकार्यजनका इत्य-र्थस्य निर्दुष्टत्वेनास्मदभिमतत्वात् । यत्तु गुणशब्देनेन्द्रियादिग्रहणे औपचारि-कत्वेनानौचित्यं शङ्कितं देशिकेन, तद्दुर्बलं । इन्द्रियाणि विषयेषु वर्तन्ते इत्यर्थस्य प्रकृतोपयुक्तत्वेन विवक्षितत्वादीषदुपचारोऽपि सोढव्यो भाति ॥ वस्तुतस्तु 'शब्दाद्या इन्द्रियाद्याश्च सत्वाद्याश्च शुभानिचे'ति गुणशब्द इन्द्रियवाचको ज्ञेयः )( तथाच गुणा इत्यनेन सत्वादीनां इन्द्रियाणां च ग्रहणं संभवति । किंच भगवज्ज्ञानेच्छादीनां स्वातन्त्र्येण प्रवर्तकाणां धर्मा-णामपि गुणशब्देन ग्रहणमुचितं । नात्रामुख्यार्थत्वशङ्कावकाशः । गुणशब्दोऽत्र धर्मपरः । अतः गुणाः भगवदिच्छादयो गुणेषु जीवस्वभावकर्मादिषु प्रेर-कत्वेन वर्तन्ते इति व्याख्यातं विवृत्याचार्येण ॥

अत्र इन्द्रियाणि विषयेषु प्रवर्तन्तां सत्वादयो वा स्वकार्येषु प्रवर्तका भवेयुः । एतत्प्रमेयविशेषज्ञाता तत्ववित्कथंनाम न सज्जते इति तु विचार्यं ॥ असक्तौ प्रयोजकं किमित्याकांक्षायां, जीवं, ईश्वरेच्छादयः स्वस्वभावः स्वकर्मादीनि सत्वादिगुणाः इन्द्रियादयश्च प्रवर्तयन्तीति तस्य पारतंत्र्यं यस्सम्यग्जानाति तत्ववित्, स एव न सज्जते इति गीताभिप्रेत श्रीमदाचार्यभाष्यप्रतिपादितं समाधानं ॥ जीवपारतंत्र्येश्वरस्वातंत्र्यानुसन्धानं प्रकरणाद्बहिष्कृत्य यदि व्याख्यायते, यथाकृत परैः, तदनुचितं वाऽनुपयुक्तं वा भवतीति द्रष्टव्यं ॥

अथ 'गुणकर्मविभागयोः तत्ववित्' इत्यत्र व्याख्यानानेकत्वं किंचित्सूच्यते । 'तत्ववित्' इति समस्तपदान्तर्गततत्वशब्देन 'गुणकर्मविभागयो'रित्यस्य षष्ठ्यन्तस्यान्वयेऽसामर्थ्यमाशङ्क्यैव विभागयोरिति विषयसप्तम्यन्तत्वमाह देशिकः ॥ 'देवदत्तस्य गुरुकुल'मित्यादिबहुप्रयोगदर्शनाच्छंकितानुपपत्तिर्नीरसा भाति ॥

'गुणकर्मविभागयो'रित्यत्र द्विवचनप्रयोजनं अन्वेषणीयं । गुणानां कर्मणां चान्योन्यं यो भेदः तं यो वेत्तीत्यर्थे विभागयोरिति द्विवचनमसंगतम् । गुणकर्मणोरन्योन्यभेदस्यैकत्वात् । प्रतियोग्यनुयोगिभेदेन भेदद्वये संभवत्यपि अन्यतरज्ञानेनैव सक्त्यभावसिद्धौ उभयज्ञानस्य सक्त्यभावप्रयोजकत्वोक्तिश्चायुक्ता ॥ अतो वक्तव्यं, नात्र गुणकर्मणां परस्परं भेदो विवक्षितः किंतु गुणविभागस्य कर्मविभागस्य च ज्ञानं असक्तिं प्रति प्रयोजकमिति ॥ न केवलं द्विवचनानुपपत्त्या एवं व्याख्येयं । किंतु गुणानां कर्मणां परस्परं वैलक्षण्ये ज्ञातेऽपि असक्तिं प्रति तादृशज्ञानमात्रस्यानुपयुक्तत्वात् इत्यतोऽपि ॥ विवक्षितो गुणविभागो यथा, प्रवर्तकाः गुणाः प्रधानाप्रधानत्वेन द्विविधाः । तत्र भगवदिच्छादयः प्रधानाः अप्रधानास्तु सत्वादिगुणाः, प्रकृतिविकारतया प्रकृत्युपसर्जनतया शरीरेन्द्रियमनांसि तथा जीवस्वभावादयश्च ॥ कर्मविभागो

यथा, स्वतन्त्रभगवत्कर्तृकं कर्म मुख्यं, गौणतया तदायत्तजीवकर्तृकं कर्मामुख्यं । अतिगौणं जडकर्तृकं कर्मचामुख्यं ज्ञेयं । एवं गुणावान्तरप्रभेदज्ञाने कर्मावान्तरप्रभेदज्ञाने च जाते सति नायं मन्ता स्वस्वातन्त्र्यभ्रमवान् भवेदिति भावः)।

("यस्मात्स्वतंत्रकर्तृत्वं विष्णोरेव च नान्यगं ।
तदधीनं स्वतंत्रत्वं स्थावरापेक्षयैव तु ॥
जीवस्य विकृतिर्नाम कर्तृत्वं जडसंश्रयं ।
पुमान्दोग्धा च गौर्दोग्ध्री स्तनो दोग्धेतिवत्क्रमात् ॥" इति.

ब्र. तर्क. उक्त. ता. प्रकाशसंहितायां—

"मन्यते तत्वविद्विष्णोर्गुणा इच्छादयस्तु ये ।
स्वाभाविकेषु जीवस्य कामाद्येषु सदैव तु ॥
प्रेरकत्वेन वर्तन्ते स्वातंत्र्यं मम न क्वचित् ॥
इति मत्वा न सक्तः स्यात्प्रीतोऽस्य भवति प्रभुः" इति ॥

'(गुणकर्मविभागयो'रित्यत्र द्विवचनप्रयोजनाय गुणकर्मविभागज्ञानस्यासक्तिप्रयोजकत्वसंपादनाय च बहुधाऽद्वैतव्याख्यातारः परस्परप्रत्याख्यानपूर्वं यतन्ते ॥

"कस्य तत्ववित् , गुणविभागस्य कर्मविभागस्य च तत्वविदित्यर्थः" इति शङ्करभाष्यं ॥

(इदं व्याख्यानं मधुसूदनस्तिरस्करोति । "अस्मिन्पक्षे गुणकर्मणोरित्येतावतैव निर्वाहे विभागपदस्य प्रयोजनं चिन्त्यं" इति ॥ विभागपदप्रयोजननिरूपणावसरे शङ्करभाष्यस्यार्थमाहोत्कर्षदीपिकाकारः, "अस्यायमर्थः, नाहं कार्यकरणसंघातात्मेति गुणेभ्य आत्मनो विभागः । न मे कर्माणीत्यात्मनस्तेभ्यो विभागः । गुणकर्मभ्यां विभक्तात्मसाक्षात्कारवान् ।

तथाच नायमहङ्कारविमूढात्मा, नापि कर्मण्यासक्तो, येनाहं कर्तेति मन्येत। विभागपदाभावेत्वयमर्थो न लभ्यते" इति ॥ अत्रोच्यते । गुणकर्मणोस्तत्वं यो वेत्तीत्येतावता अस्यार्थस्य कुतो न लाभः संभवेत् । गुणकर्मणोः प्राकृतत्व हि पूर्वश्लोके स्पष्टमुक्तं। तयोरनात्मधर्मत्वेन ज्ञाने सति सक्तिर्नश्यतीत्यर्थस्य सुलभत्वात् । अतः विभागपदं व्यर्थमिति मधुसूदनाक्षेपस्तदवस्थो भाति । किंच कथंचिद्विभागपदसार्थक्येऽपि विवक्षितं विभक्तत्वं आत्मानुयोगिक इति व्याख्यानं कथमक्षरार्थो भवतीति चिन्त्यं ॥ विभागशब्देन विभक्तत्वापरपर्यायो भेद उच्यते इतिपक्षमस्वरसाद्विहाय मधुसूदनः प्रकारान्तरेण व्याचष्टे । तथाहि, "गुणाः देहेन्द्रियान्तःकरणानि अहङ्कारास्पदानि, कर्माणि च तेषां व्यापारभूतानि ममकारास्पदानि । गुणकर्मेति द्वन्द्वः । विभज्यते सर्वेषां जडानां विकारिणां भासकत्वेन पृथग्भवतीति विभागः, स्वप्रकाशज्ञानरूपोऽसङ्ग आत्मा । गुणकर्म च विभागश्चेति द्वन्द्वः । तयोर्गुणकर्मविभागयोर्भास्यभासकयोर्जडचैतन्ययोर्विकारिनिर्विकारयोस्तत्वं याथात्म्यं यो वेत्ति सः" इति ॥ तथाच विभागशब्देन कर्मव्युत्पत्त्याऽऽत्मानं गृहीत्वा अनात्मात्मनोर्वैलक्षण्यज्ञाता तत्वविद्विवक्षित इत्यर्थ उक्तः ॥ अयमर्थस्तिरस्कृतः उत्कर्षदीपिकायां, "गुणकर्मेत्यस्यैकपदत्वे अल्पाच्त्वादभ्यर्हितत्वाच्च विभागपदस्य पूर्वं निपातापत्तेः, छान्दसत्वनिपातप्रकरणानित्यत्वयोराश्रयणस्य भाष्योक्तरीत्या सत्यां गतौ अनुचितत्वात् । विभागपदस्य प्रसिद्धमर्थं परित्यज्याप्रसिद्धार्थकल्पनायाः क्लिष्टकल्पनायाश्चान्याय्यत्वात्" इति ॥ शङ्करभाष्यं मधुसूदनीयं चानूद्यातृप्त इव नीलकण्ठः स्वाभिमतं तृतीयं पन्थानमनुसृत्याह, "यस्तत्ववित्सः गुणा गुणेषु वर्तन्ते इति मत्वा गुणविभागे कर्मविभागेच न सज्जते इति योजना । गुणानां सत्वरजस्तमसां विभागः बुद्ध्यहङ्कारज्ञानेन्द्रियकर्मेन्द्रियविषयरूपेण विभज्यावस्थानं, तस्मिन्न सज्जते इदमहमिति न मन्यते। एतेन कर्मविभागोऽप्यावश्यकत्वेन व्याख्यातः।अन्यथा चिदात्मन्येवाऽऽदानादि-

कर्तृत्वं दुःखादिमत्वं चापतति । तथाचात्मानात्मनोर्याथात्म्यज्ञः व्यावृत्तेष्वहंकारादिषु तत्कर्मसुचाभिमानादिषु, कुसुमेषु सूत्रमिवानुवर्तमानमात्मानं तेभ्यः पृथग्भूतं जानन्, गुणाः धीचक्षुरादयः गुणेषु दुःखरूपादिषु वर्तन्ते नत्वात्मेति मत्वा न सज्जते । अहमेव हस्तादिसंघातरूपो ममैवेदमादानादिकं कर्मेति न सक्तो भवतीत्यर्थः" इति ॥ इदं नीलकण्ठीयव्याख्यानञ्च निरस्तमुत्कर्षदीपिकाकृता, "गुणकर्मणोर्न सज्जत इत्येतावतैव निर्वाहे विभागपदवैयर्थ्यापत्तेः ॥ तथाचेत्यादिग्रन्थस्य स्वव्याख्यानाननुरूपत्वाच्च" इति ॥ पश्यत नीलकण्ठीयं व्याख्यानं व्याहतं । यतस्तथाचेत्यादिग्रन्थः शङ्करभाष्यार्थमेवोपादत्ते । तत्पूर्वो ग्रन्थस्तु शांकरव्याख्यानपथं विहाय योजनांतरमालंब्य प्रवृत्तः । उपक्रमोपसंहारयोरेवं भिन्नत्वे सति तथाचेतिनिगमनमनुचितं । विभागशब्दसार्थक्यंच नोपपादितं नीलकण्ठेन । अतः सुलग्नमुत्कर्षदीपिकोक्तं दूषणं भाति ॥

यद्यपि शङ्करभाष्ये मधुसूदनीयेचानुपपत्तिं पश्यन् गुणकर्मविभागयोरित्यत्र गुणेष्ववान्तरविभागः कर्मस्ववान्तरविभागश्चेति द्वौ विभागौ विवक्षिताविति द्विवचनसार्थक्याय यतमानो नीलकण्ठो बुद्धिमान् । तथापि विभागशब्दस्य प्रयोजनं उपपादयितुं न समर्थोऽभूत् । यतस्तस्य व्याख्याने गुणेषु न सज्जते कर्मसु नसज्जते इत्येव पर्यवसितार्थो भवति । यतश्च तदुक्तरीत्या गुणकर्मावान्तरप्रभेदज्ञानस्य सक्तिराहित्यप्रयोजकत्वं नोपपादितम् ॥

(तस्मादत्र श्रीमदाचार्यव्याख्यानमेवोत्कृष्टं । यतः स्वतंत्रास्वतंत्रगुणविभागे ज्ञाते हि विद्वान् स्वातंत्र्य मत्वा न सज्जते । स्वतंत्रास्वतंत्रकर्मविभागे च ज्ञाते सत्येव हि कर्मस्वसक्तिस्संभवति ॥ अनेन परिष्कारेण विभागशब्दप्रयोजनं विभागयोरिति द्विवचनस्य सार्थक्यं च सिद्धम् ॥)

प्रकृतेर्गुणसंमूढास्सज्जन्ते गुणकर्मसु ।
तानकृत्स्नविदो मन्दान्कृत्स्नविन्न विचालयेत् २९)

वि ॥ स्वात्मनः स्वतन्त्रकर्तृतां मन्यमानाः अविद्वांसः ज्ञानिना बोधनीया इत्यतआह ॥ प्रकृतेरिति ॥ प्रकृतेरीश्वरस्येच्छादिगुणैः कर्तृभूतैः, प्रकृतेर्जडस्य कार्यभूतसत्वादिगुणैर्निमित्तैः, प्रकृतेर्जडस्य विकारभूतगुणेष्विन्द्रियेषु संमूढाः ममैवैतानि करणानि इति तेषु स्वातन्त्र्याभिमानिनः। अत एव गुणकर्मसु गुणेषु शब्दादिविषयेषु सज्जन्ते स्नेहातिशयवन्तो भवन्ति । स्वकर्मसु च सज्जन्ते ॥ स्वातन्त्र्यभ्रमवन्तो ये तानकृत्स्नविदः गुणकर्मविभागाज्ञान् मन्दान् अयोग्यजनान् स्वयं कृत्स्नविज्ज्ञानी न विचालयेत् । गुणकर्मसु सङ्गं त्याजयित्वा सन्मार्गे न वर्तयेदित्यर्थः । 'शब्दाद्या इन्द्रियाद्याश्च सत्वाद्याश्च शुभानिचे'त्यादेः गुणशब्दोऽनेकार्थो ध्येयः ॥

शं ॥ ये पुनः ॥ प्रकृतेरिति ॥ प्रकृतेः गुणैः सम्यङ्मूढाः सम्मोहितास्सन्तः सज्जन्ते, गुणानां कर्मसु गुणकर्मसु वयं कर्म कुर्मः फलायेति । तान् कर्मसंगिनोऽकृत्स्नविदः कर्मफलमात्रदर्शिनो मन्दान् मन्दप्रज्ञान् कृत्स्नविदात्मवित् स्वयं न विचालयेत् । बुद्धिभेदकरणमेव चालनं तन्न कुर्यादित्यर्थः ॥

रा ॥ अकृत्स्नविदस्त्वात्मदर्शनाय प्रवृत्ताः प्रकृतिसंसृष्टतया प्रकृतेर्गुणैर्यथावस्थितात्मनि संमूढाः, गुणकर्मसु क्रियास्वेव सज्जन्ते न तद्विविक्तात्मस्वरूपे । अतस्ते ज्ञानयोगाय न प्रभवन्तीति कर्मयोगएव तेषामधिकारः । एवंभूतांस्तान् मन्दानकृत्स्नविदः कृत्स्नवित् स्वयं ज्ञानयोगावस्थानेन न विचालयेत् । ते किल मन्दाः श्रेष्ठजनाचारानुवर्तिनः कर्मयोगादुत्थितमेनं दृष्ट्वा कर्मयोगात्प्रचलितमनसो भवेयुः । अतश्श्रेष्ठस्स्वयमपि कर्मयोगे तिष्ठन्नात्मयाथात्म्यज्ञानेनात्मनोऽकर्तृत्वमनुसंदधानः, कर्मयोगएवात्मावलोकने निरपेक्षसाधनमिति दर्शयित्वा तानकृत्स्नविदो जोषयेदित्यर्थः ॥ ज्ञानयोगाधिकारिणोऽपि ज्ञानयोगादस्यैव ज्यायस्त्वं पूर्वमेवोक्तं । अतो व्यपदेश्यो लोकसंग्रहायैतमेव कुर्यात् । प्रकृतिविविक्तात्मस्वभावनिरूपणेन गुणेषु कर्तृत्वमारोप्य कर्मानुष्ठानप्रकार उक्तः ॥ गुणेषु कर्तृत्वानुसंधानं चेदं-आत्मनो न स्वरूपप्रयुक्तमिदं कर्तृत्वं, अपि तु गुणसंपर्ककृतमिति प्राप्ताप्राप्तविवेकेन गुणकृतं इत्यनुसंधानम् ॥

विचारः

अत्रोक्ताः मंदाः अयोग्याः, न तु कर्मयोगाधिकारवंतः । रामानुजाचार्यस्तु अकृत्स्नविदो मन्दा इति कर्मयोगाधिकारिणो विवक्षिताः, कृत्स्नविदिति ज्ञानयोगाधिकार्युक्त इत्यभिप्रैति ॥ अनेन हि 'कर्माणि सक्ताः' 'अविद्वांसः' 'अज्ञानां कर्मसंगिनां' 'अहंकारविमूढात्मा कर्ताऽहमिति

मन्यते: ' इति एतत्प्रकरणपठितास्सर्वेऽपिशब्दा: कर्मयोगाधिकारिपरा इति व्याख्यातं । तदानुगुण्येन तद्विपरीतबोधका: विद्वदादिशब्दा: ज्ञानयोगाधिकारिणमाहुरिति च व्याख्यातं ॥ कर्मयोगाधिकारिणा अज्ञादिशब्दैरुपालंभस्य बीजं किमित्याकाङ्क्षायां तदीयो देहात्मभ्रम: इति रामानुजाभिमतमुत्तरं । एतेषामेवं भ्रान्तत्वेऽपि तदनुष्ठीयमानानि कर्माणि साधूनि । तन्मार्गस्साधु: न तु निषिद्ध: । अतएव ते तस्मान्मार्गान्न चालनीया: [ विद्वानेव स्वाधिकृतज्ञानयोग विहाय पूर्वोक्तस्य मार्गमनुसरेत् ॥ एतेन न केवलं लोकसंग्रहो भविष्यति । किंतु स्वस्मै ज्ञानयोगाकृतायापि निष्प्रमादत्वसुकरत्वांतर्गतज्ञानत्वादिविशेषिततया ज्ञानयोगादुपादेयतरेण कर्मयोगेन श्रेयो भवेत् इति तस्याशय: ॥ अत्रेदं चिन्त्यते । ज्ञानयोगादप्युत्तम कर्मयोग स्वाधिकारोचितमनुतिष्ठन्त: पुरुषा: ' अविद्वास: अज्ञा: कर्मसंगिन: अहंकारविमूढा: ' इत्यादिनिन्दाप्रतिपादकशब्दै: कुत उक्ता इति संदेहो न निवर्तते । यद्युच्यते देहात्मभ्रमवंत इति निन्दोक्तिरुपपद्यते इति तर्हि तादृशभ्रान्तानां कर्मयोगे कथमधिकार उपपद्यते । कथ परमपामरा: कर्मयोगे अधिकृतास्स्यु: । काम्यकर्मिणस्सकाशादेतेषां कर्मयोगाधिकारवतां वैलक्षण्य च न विद्येत । किंच उक्तंहि कर्मयोगस्यान्तर्गतज्ञानत्वं ज्ञानयोगनैरपेक्ष्येणोत्कृष्टत्वंच । देहात्मभ्रममपि यो न जितवान् तस्य कर्मयोगाधिकारेऽङ्गीकृते सति कर्मयोगस्यान्तर्गतज्ञानत्वं नाममात्रं इति पर्यवस्यति । तस्मादविद्वत्वादिपदैरुपालब्ध: केवलमज्ञ: विरक्तिभक्त्यादिकमलब्ध्वा फलेच्छया कुर्वाण: इत्यवगम्यते ]।

अविद्वदादिशब्दै: देहात्मभ्रमवंतो विवक्षिता इत्युक्त्वा शाङ्करास्तावदचेतनानामेव कर्तृत्वं न चेतनस्येति मन्यन्ते ॥ तथाहि शङ्करानन्दव्याख्यानं प्रकृतश्लोकस्य, " प्रकृते: गुणेषु कार्येषु देहेन्द्रियादिषु अहंबुद्ध्या संमूढा: तदात्मतामापन्ना: पामरा:, स्वयं गुणकर्मसु गुणै: श्रवणादिभिर्वागादिभि: क्रियमाणेषु कर्मसु श्रवणदर्शनवचनादानभोजनादिषु, अहमेव श्रोता

द्रष्टा वक्ताऽऽदाता कर्ता भोक्तेति सज्जन्ते अभिनिवेशं कुर्वन्ति" इति ॥ एतेन गुणानां ज्ञानचिकीर्षाप्रयत्नलक्षणकर्तृत्वं वदद्भिः कापिलमतमालंबितं इति प्रदर्शितं देशिकेन ॥ कर्तृत्वं द्विविधं स्वाभाविकं औपाधिकंच। स्वाभाविकं मुक्तावस्थायामपि नापैति। औपाधिकं संसारदशायां उपपद्यते यत् गुणसंपर्ककृतं। गुणेषु कर्तृत्वमारोप्य ज्ञानी कर्माऽऽचरेत्। गुणेषु कर्तृत्वानुसन्धानं नाम—नात्मस्वरूपप्रयुक्तमिदं कर्तृत्वं किंतु गुणसंपर्ककृत इति ज्ञानं इति रामानुजभावः॥ एवमुपपादितं गुणकर्तृत्वानुसंधानं कथंचिन्नास्माकमनिष्टं भवेत्। यतः ईश्वरेच्छादिभि. जीवस्वभावादिभिः सत्वादिभिस्तत्कार्यैश्च वशीकृतो जीवः परतंत्रो विद्यते कर्मसु। यतश्च गुणकर्तृत्वमनुसंदधानः स्वपारतंत्र्यं जानीयात्। रामानुजभाष्येतु गुणशब्दः ईश्वरेच्छादिसंग्राहकत्वेन न व्याख्यातः। यदि तथा व्याख्यातं, तदा तत्परिष्कृतं गुणकर्तृत्वानुसंधानं निर्दुष्टं स्यात् ॥

अयोग्याः न बोधनीयाः। कुत इत्याकाङ्क्षायां शास्त्रेषूक्तं पापमयोग्योपदेशात्। यथोदाहृतं गीतातात्पर्ये,

"तेष्वयोग्येषु तत्वज्ञस्तत्वं नातिप्रकाशयेत्।
वदेद्विवादरूपेण नोपदेशात्मना क्वचित् ॥

सभ्यरूपेण वा ब्रूयात्पृष्टेऽव्यक्तिकृदेव वा।
बुद्ध्वाऽप्यसौ यतो नित्यं स्वभावानुगचेष्टितः ॥
स्वभावं यान्ति भूतानि निग्रहः किं करिष्यति ॥" इति.

प्र. संहितायाम् ॥

अयोग्याश्चेन्न प्रकाशयेत्, अन्यथा परीक्ष्य प्रकाशयेत् इति भाव उक्तो न्यायदीपिकायां ॥

'कृत्स्नवित्' इति सर्वज्ञः प्रतीयते। एतेन रुद्रादीनामपि व्यावृत्तिरिति न वक्तव्यं। अल्पज्ञापेक्षया बहुज्ञस्य भगवदुक्तस्य विवक्षितत्वात्॥ परे तु कृत्स्नाकृत्स्नशब्दौ आत्मानात्मपरतया व्याकुर्वन्ति॥ यथा मधुसूदनः, "अनात्मनः सावयत्वादनेकधर्मवत्त्वाच्च केनचिद्धर्मेण केनचिदवयवेन वा विशिष्टे तस्मिन्नेकस्मिन्घटादौ ज्ञातेऽपि धर्मान्तरेणावयवान्तरेण वा विशिष्टः स एवाज्ञातोऽवशिष्यते तदन्यश्च पटादिरज्ञातोऽवशिष्यते। कृत्स्नस्त्वद्वय आत्मैव। तज्ज्ञाने कस्यचिदवशेषस्याभावात्" इति॥ अहो अयं भ्रमः। येन घटादयः साकल्येन ज्ञातुमशक्याः आत्मा तु शक्यः, इति पर्यवस्यति॥

'प्रकृतेर्गुणसंमूढास्सज्जन्ते गुणकर्मसु' इत्यत्र द्वेधा योजना संभाविता। (१) प्रकृतेर्गुणैः संमूढाः गुणकर्मसु सज्जन्ते इत्येका। (२) गुणैः: संमूढाः प्रकृतेर्गुणकर्मसु सज्जन्ते इत्यपरा॥

प्रथमयोजनायां प्रकृतिशब्दस्य समासान्तर्गतेनोपसर्जनभूतेन गुणपदेनान्वयो बोद्धव्यः। नित्यसापेक्षत्वात् गुणशब्दस्य नासामर्थ्यं॥ द्वितीययोजना नीलकन्ठाश्रिता। "गुणैरहंकारादिभिः स्वस्मिन्नध्यस्तैः सम्मूढाः एकीभावेनाभेदाध्यासेन मूढास्तु, प्रकृतेः प्रकृतिसंबंधिषु गुणेषु देहादिषु, कर्मसु गमनादिषु च सज्जन्ते। अहमय ब्राह्मणो ममैवेद यज्ञादिकं कर्मेति सज्जन्ते" इति॥ प्रकृतिशब्दस्य गुणकर्मस्वित्युक्तगुणपदेनान्वयो न शंकरभाष्यसंमतः। गुणशब्दाभिहितदेहादीनां कर्मशब्दाभिहितगमनादीनां प्राकृतत्वोक्तौ स्वारस्यं न ज्ञायते। अतएव नीलकण्ठमुत्कर्षकारः प्रत्याचष्टे। "देहेन्द्रियाद्यासक्तेः 'गुणसंमूढाः' इत्यनेनैवोक्तत्वात् प्रकृतेरित्यस्य गुणकर्मस्वित्यनेन संबन्धस्य प्रयोजनशून्यत्वादि"ति॥ एवं द्वितीययोजनां तिरस्कृत्य प्रथमामाश्रित्य गुणकर्मसक्तिंप्रति प्रकृतेर्गुणसंमोहस्य हेतुत्वमभिप्रयन्ति मधुसूदनादयः॥

'प्रकृतेर्गुणैस्सम्मूढाः' इत्यत्र प्रकृतिशब्देन मायाशक्तिमादाय तदीय-गुणैर्विकारैः कार्यकारणरूपैः सम्यङ्मूढाः स्वस्वरूपास्फुरणेन तानेवात्मतया मन्यमानाः' इत्युत्कर्षकारेण निरूपितं॥ प्रकृतेर्गुणैः सत्वादिभिः संमूढाः इति व्याख्यातं श्रीधरेण । तद्दूषितं चानेन, 'प्रकृतेः क्रियमाणानि गुणैरित्यत्रे-न्द्रियैरिति स्वोक्त्यननुरूपमिदमि'ति ॥ अत्र 'गुणशब्देन सत्वादिग्रहणं न युक्तं' इति यद्दूषितं, तत्र निमित्तं न ज्ञायते । सत्वादिगुणैर्जायमानस्य संमोहस्यापि प्रकरणसङ्गतत्वात् । वस्तुतस्तु प्रकृतिशब्देन ईश्वरजीवस्वभाव-जडप्रकृतीनां विवक्षैवोचिता । यथा निरूपितं 'प्रकृतेः क्रियमाणानी'ति श्लोकव्याख्याने ॥ तदीयगुणैरीश्वरेच्छादिभिः जीवस्वभावादिधर्मैः जडप्रकृति-कार्यभूतसत्वादिगुणैः निमित्तैः संमूढा इत्यर्थः, तथा पुनः प्रकृतेः जडप्रकृतेः विकारभूतगुणेषु इन्द्रियेषु सम्मूढाः ममैवैतानि करणानि इति चार्थः ॥

'गुणकर्मसु' इत्यत्र गुणानां कर्मसु गुणकर्मसु इति शङ्करभाष्ये विग्रहः प्रदर्शितः । गुणेषु कर्मसु च सज्जन्ते इति द्वंद्वाश्रयणपूर्वं व्याख्या-नेतु उभयत्रासक्तिरूपाधिकार्थस्य लाभो भवति ॥ अतो द्वन्द्वपरिग्रह एव युक्तः इति श्रीमदाचार्याशयः ॥ गुणेषु कर्मसु इति व्युत्पत्तावधिकार्थलाभद्रष्ट्रा नीलकण्ठेनापि सा आश्रिता द्रष्टव्या ॥

'सज्जन्ते' इति गुणेषु शब्दादिषु स्नेहातिशय उच्यते । कर्मसु स्वातंत्र्यभ्रमः ॥ देहात्मैक्यभ्रममूलैवासक्तिर्विवक्षितेति यन्नीलकण्ठाद्यभिप्रेतं तच्चिन्त्यं ॥ सूचितयोजनाद्वये प्रथमा विवृत्याचार्यानुमतेति स्फुटम् ॥

यदेतत्प्रकरणारंभे 'न बुद्धिभेदं जनयेदि'त्युक्तं । प्रकृतश्लोके तावत् 'कृत्स्नविन्न विचालये'दिति । अनयोः प्रतिपाद्यभेदः परीक्षणीयः । अज्ञाः कर्मसङ्गिनः इति पूर्वं ये विवक्षिताः त एव मूढाः अकृत्स्नविदः मन्दाः इत्युच्यन्ते वा उतान्ये वेति संदिह्यते । वाक्यार्थपर्यालोचनायां

विवक्षाभेदोऽवगम्यते । तथाहि, पूर्वश्लोकस्यायं भावः—स्वयं कर्म न करोतीति कर्मण्येवासक्तानामज्ञानिनामपि कर्मणः क्षयिफलत्वाद्भवद्भिः कर्म न कर्तव्यमिति ज्ञानी। कर्मण्यनादरं न जनयेत् । किंतु स्वयमप्रमत्तस्सन् कर्माण्यपि सम्यगाचरन् ज्ञानी अज्ञानपि कर्माणि सेवयेत्। स्वेन क्रियमाणानि कर्माणि दृष्ट्वा तेऽपि यथा कर्माणि कुर्युस्तथा प्रवर्तेत इति ॥ एतेन विवक्षिता अज्ञाः योग्याः कर्मसङ्गिनः इति गम्यते यच्छ्रेयसे ज्ञानिनामप्याचारो विहितः ॥ प्रकृते श्लोके मूढाः अकृत्स्नविदः मन्दाः इत्युक्तास्त्वयोग्या दृश्यन्ते ये कृत्स्नविदाऽनादरणीया उक्ताः । आचारप्रत्यक्षद्वारा अथवोपदेशमुखेन येषां सन्मार्गयापनमनुचितमुक्तं ॥ यद्यपि मन्दादिशब्दाः योग्यायोग्यसाधरणाः स्युः। अत एवोक्तं न्यायदीपिकायां, "अयोग्याश्चेन्न प्रकाशयेत् । अन्यथा परीक्ष्य प्रकाशयेदिति भावः" इति ॥ पूर्वं 'जोषये'दित्युक्त्वा अत्र 'न विचालये'दिति तद्विपर्यासकथनस्यालोचने पूर्वं योग्याः ज्ञानहीनाः परामृष्टाः इहत्वयोग्याः ज्ञानहीना इत्यूह्यते ॥ किंच 'न बुद्धिभेद'मित्यत्राज्ञैराचरितव्यं कर्म सत्कर्मेति ज्ञायते। तद्बुद्धिभेदो न साधुः। प्रकृते तु श्लोके प्रकृतिधर्ममूढैरनुष्ठीयमानं कर्म, यस्मात्प्रच्यावनं ज्ञानिनः प्रतिषिद्धं तदसाध्वित्येव वक्तव्यं। यतः ईश्वरेच्छादिभिर्धर्मैः स्वस्वभावादिभिर्धर्मैः सत्वादिगुणैश्च प्रेरिततया कृतं कर्म कर्तृदौर्जन्यमहिम्नाऽनर्थावहमेव भवेत् । अतः गुणकर्मसु सङ्गं त्याजयित्वा दुर्जनं ज्ञानी न प्रवर्तयेत्सन्मार्गे इति भावः॥ दुष्टास्सन्मार्गे न प्रवर्तनीया इत्यस्य दुर्योधनोपाख्यानमेव भवितुमर्हति उदाहरणं॥ उक्तं भारते—

'प्रकृत्या पापसत्वश्च तुल्यचेताश्च दस्युभिः ।
ऐश्वर्यमदमत्तश्च कृतवैरश्च पाण्डवैः ॥
दीर्घमन्युरनेयश्च पापात्मा निकृतिप्रियः ।
म्रियेतापि न भज्येत नैव जह्यात्स्वकं मतं' इति ॥ आह

पितरं प्रति सुयोधनः,

"मयाऽभिमन्त्रितः शश्वज्जातवेदाः प्रशाम्यति ।
विदार्यमाणां वसुधां गिरीणां शिखराणि च ॥
लोकस्य पश्यतो राजन् स्थापयाम्यभिमन्त्रणात्
देवासुराणां भावानामहमेकः प्रवर्तिता ॥
नैव देवा न गन्धर्वा नासुरा नच राक्षसाः ।
शक्तास्त्रातुं मयाऽऽदिष्ट सत्यमेतद्ब्रवीमि ते ॥" इति उद्योगपर्वे ६० ॥

**मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।**
**निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः॥३०**

वि ॥ एवमविद्वत्कर्मतो विद्वत्कर्मणोऽनभिमानेनानुष्ठानरूपवैलक्षण्यमुक्त्वेदानीं तवापि ज्ञानित्वात्तथैवानुष्ठेयं कर्मेत्याह ॥ मयीति ॥ अध्यात्मचेतसा, आत्मानं परमात्मानं मां अधिकृत्य स्थितमध्यात्मं च तच्चेतश्च तदध्यात्मचेतः तेनेति वा । अधि अधिकः सचासावात्मा चाध्यात्मा। अध्यात्मनि चेतोऽध्यात्मचेतः तेनेति वा ॥ सर्वाधिकपरमात्मभूतमन्निष्ठमनसा निराशीः विष्णुभक्तिज्ञानाद्यन्यकामरहितः, निर्ममः कर्मण्यहमेव स्वातन्त्र्येण करोमीति स्वतन्त्रकर्तृताभिमानहीनो भूत्वा, सर्वाणि कर्माणि मयि संन्यस्य भगवान् कृष्णएव मयि स्थित्वा सर्वकर्माणि करोतीति

ज्ञात्वा, तानि च श्रीकृष्णपूजारूपाणीति मयि समर्प्य विगतज्वरः त्यक्तशोकः सन् युध्यस्वेति। तदुक्तं—"नाहं कर्ता हरिः कर्ता तत्पूजा कर्मचाखिलमि"त्यादि॥

शं॥ कथं पुनः कर्मण्याधिकृतेनाज्ञेन मुमुक्षुणा कर्म कर्तव्यमिति, उच्यते॥ मयीति। मयि वासुदेवे परमेश्वरे सर्वज्ञे सर्वात्मनि सर्वाणि कर्माणि संन्यस्य निक्षिप्याध्यात्मचेतसा विवेकबुद्ध्याऽहं कर्तेश्वराय भृत्यवत्करोमीत्यनया बुद्ध्या। किंच निराशीस्त्यक्ताशीर्निर्ममो ममभावश्च निर्गतो यस्य तव, स त्वं निर्ममो भूत्वा युध्यस्व, विगतज्वरो विगतसंतापो विगतशोकस्सन्नित्यर्थः॥

रा॥ इदानीमात्मनां परमपुरुषशरीरतया तन्नियाम्यत्वस्वरूपनिरूपणेन भगवति पुरुषोत्तमे सर्वात्मभूते गुणकृतं च कर्तृत्वमारोप्य कर्मकर्तव्यतोच्यते॥

मयि सर्वेश्वरे सर्वभूतान्तरात्मभूते सर्वाणि कर्माण्यध्यात्मचेतसा संन्यस्य, निराशीर्निर्ममश्च विगतज्वरो युद्धादिकं सर्वं चोदितं कर्म कुरुष्व॥ आत्मनि यच्चेतस्तदध्यात्मचेतः आत्मस्वरूपविषयेण श्रुतिशतसिद्धेन ज्ञानेनेत्यर्थः। 'अन्तः प्रविष्टश्शास्ता जनानां' 'सर्वात्मा' 'अन्तः प्रविष्टं कर्तारमेतं' "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद। यस्यात्मा शरीरं। य आत्मानमन्तरो यमयति। स ते आत्माऽन्तर्याम्यमृतः" इत्येवमाद्याः श्रुतयः परमपुरुषप्रवर्त्यतच्छ-

रीरभूतमेनमात्मानं, परमपुरुषं च प्रवर्तयितारमाचक्षते। स्मृतयश्च 'प्रशासितारं सर्वेषां' इत्याद्याः 'सर्वस्य चाहं हृदि सन्निविष्टो मत्तःस्मृतिर्ज्ञानमपोहनं च' 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया' इति वक्ष्यते। अतो मच्छरीरतया मत्प्रवर्त्यात्मस्वरूपानुसन्धानेन सर्वाणि कर्माणि मयैव क्रियमाणानि इति मयि परमपुरुषे संन्यस्य, तानि च केवलं मदाराधनानीति कृत्वा तत्फले निराशीः, तत एव तत्र कर्मणि ममतारहितो भूत्वा विगतज्वरो युद्धादिकं कुरुष्व। स्वकीयेनात्मना कर्त्रा स्वकीयैश्चोपकरणैस्स्वाराधनैकप्रयोजनाय परमपुरुषस्सर्वेश्वरस्सर्वशेषी स्वयमेव स्वकर्माणि कारयतीत्यनुसंधाय कर्मसु ममतारहितः, प्राचीनेनानादिकालप्रवृत्तानंतपापसञ्चयेन कथमहं भविष्यामीत्येवंभूतान्तर्ज्वरविनिर्मुक्तः, परमपुरुषएव कर्मभिराराधितो बंधान्मोचयिष्यतीति सुखेन कर्मयोगमेव कुरुष्वेत्यर्थः॥ 'तमीश्वराणां परमं महेश्वरं तं दैवतानां परमं च दैवतं' 'पतिं विश्वस्य' 'पतिं पतीनां' इत्यादिश्रुतिसिद्धं हि सर्वेश्वरत्वं सर्वशेषित्वं च। ईश्वरत्वं नियन्तृत्वं, शेषित्वं पतित्वं॥

विचारः

(श्लोकमवतारयति मधुसूदनः "इदानीमज्ञस्यापि मुमुक्षोरमुमुक्षवपेक्षया भगवदर्पणं फलाभिसंध्यभावं च विशेषं वदन्नज्ञतयाऽर्जुनस्य कर्मा-

धिकारं द्रढयति" इति॥ अत्रार्जुनस्याज्ञत्वेन ग्रहणमसत्। निरूपितमिदं प्रागेव॥

अज्ञो द्विविधः अमुमुक्षुः मुमुक्षुश्च इति विभज्य अज्ञमुमुक्षुष्वर्जुनं शाङ्करा गृह्णन्ति। तस्य मुमुक्षुत्वेन परिग्रहोऽपि केवलं दयाप्रेरितो भाति॥

(अर्जुनस्य कर्माधिकारं द्रढयतीत्युक्तं। कोऽयं कर्माधिकारः पराभ्युपगतः। सहि आत्मानभिज्ञत्वे सति कर्मणिरतत्वं। तत्रार्जुनस्य दृढस्थित्यै मूढानुष्ठानेन भाव्यं। किमिति भगवदर्पणादिकमत्राकृष्यते। किंच सक्तत्वेनाविद्वान् दूषितः। असक्तत्वेन तत्ववित् प्रशंसितः। निन्दाप्रशंसयोर्भावस्तु लोकप्रसिद्धः उपदेश्येन प्रशंसितपक्ष आश्रयणीय इति। अतो वाक्यार्थः, भवानर्जुनोऽपि तत्वविदिवाचरितुमर्हतीति स्फुटः। 'तत्ववित्तु महाबाहो' इति यद्विद्वत्क्रियमाणं उक्तं तदेवात्रोपसंहारभूते 'मयी'ति श्लोके व्यक्तीकृतमित्युचितं॥ अतः श्लोकस्य विवृत्याचार्यावतारिका—'इदानीं, तवापि ज्ञानित्वात्तथैवानुष्ठेयं कर्मेत्याह' इति)।

(प्रकारांतरेणोपपादयति श्लोकभावं शंकरानंदः। "अत्रायमभिप्रायः, सर्वमिदमहंच ब्रह्मैवेति परावरैकत्वविषयकाप्रतिबद्धापरोक्षज्ञानवानाधिकारिको ब्रह्मविदत्रोक्तरीत्या लोकहितार्थं कर्म कुर्याज्जीवतएव मुक्तत्वादस्य परतारणमेव प्रयोजनं।(परोक्षज्ञानी चेत् आत्मा देहादिभिन्नस्तद्द्रष्टृत्वाद्घटद्रष्टृवदिति स्वस्य देहादिभिन्नत्वज्ञानेन यौक्तिकेन, नाहंकर्ता कारयितेत्यकर्तृत्वबुध्या 'मायामात्रमिद द्वैत' इत्यादिश्रुतिबलेन इदं सर्वं मिथ्या मायाकार्यत्वादैन्द्रजालिकवदित्यादियुक्तिबलेन च, कर्ता कार्यं करणंच सर्वं मिथ्यैवेति कर्त्रादेः सर्वस्य मिथ्यात्वमेव पश्यन्, सर्वत्र निराशीर्निर्ममो भूत्वा लोकहितार्थं कर्म कुर्यात्। तेन चित्तपरिपाको ज्ञानं मोक्षश्च सिध्यति। लोकोपकारश्चास्य तरणं तारणंचोभयमप्युपपद्यते)।(अनात्मज्ञश्चेत् परिग्रहे ममतारहितः कर्म-

फलानपेक्षश्च भूत्वा श्रौतानि स्मार्तानिच सर्वाणि ईश्वरार्पणबुद्ध्या स्वार्थमेव कुर्यात् । तेन चित्तशुद्धिस्तया ज्ञानं मोक्षश्चास्य सिध्यति" इति ॥

(एतेन अधिकारिणां अपरोक्षज्ञानिपरोक्षज्ञान्यनात्मज्ञानित्वेन त्रैविध्यं विवक्षितं गम्यते । तत्र प्रथमद्वितीयौ सर्वमिथ्यात्वदृश्वानौ । तावीश्वरं न स्मरतः ॥ तृतीयस्तु अनात्मज्ञः, यो ममताहीनः फलत्यागी सन् स्वार्थमेव ईश्वरमाराधयति इत्युक्तं ज्ञायते ॥ अत्रोच्यते । यदुक्तमंते 'स्वार्थमेव कुर्या'-दिति, तस्याभिप्रायो न स्फुटः । कुतएवं निर्बन्धः । अनात्मज्ञत्वेन हेयत्वात्त-दाचारो नानुसर्तव्य इति चेत्, कथमयं ममताहीनः संगरहितः ईश्वरार्पण-बुद्धिमान् हेयो भवेत् । यदाऽयं निराशीर्निर्ममो भूत्वा भगवदर्पणबुद्ध्या कर्म करोति, तदा तदाचारेण परोऽप्युद्धृतो भवेदिति परसंतारणंच कुतस्तस्योद्देशो न भवेत् ॥

('मयि सर्वाणि' इति पद्यं तृतीयवर्गतयोक्तानात्मज्ञं प्रति प्रवृत्तं इति अस्य व्याख्यातुराशयो भाति ॥ विस्तरतः सर्वमिथ्यात्वाद्यद्वैतराद्धान्तं 'वेदाविनाशिन' मित्यादिबहुग्रन्थेन श्रुत्वाऽप्यर्जुनः द्वितीयवर्गभूतपरोक्षज्ञा-निष्वपि गणनानर्ह इति शोच्यते । अस्य व्याख्यातुरभिप्राये तत्वविदित्युक्तः निरूपितवर्गत्रये कुत्रान्तर्भवति, तच्च न ज्ञायते । अयं अपरोक्षदृग्वा परोक्षदृग्वा अनात्मज्ञोवेति सन्देहो जायते । ईश्वराराधनबुद्ध्या सङ्गहीनस्सन् यः कर्म करोति सोऽपि यद्यनात्मज्ञः, तत्वविदिति श्लोके स परामर्शमर्हेदेव। कुतो नेति न ज्ञायते। तस्मादेतादृशाशयनिरूपणं कर्मयोगिनिन्देश्वरनिन्दागर्भितं स्वोत्प्रे-क्षामूलं इत्युपेक्ष्यम् ।)

(युध्यस्वेत्युपलक्षणया सर्वकर्मणां विहितानां ग्रहणमुचितं ॥ मधुसूद-नस्तु युद्धाख्यस्यैव विवक्षामाभिप्रैति । एवं अभिप्रयन् श्लोकस्थेषु चतुर्षु विशेषणेषु "संन्यस्य, निराशीरितिद्वयं सर्वकर्मसाधारणं । निर्ममत्वं त्यक्त-शोकत्वं च युद्धमात्रे प्रकृतं द्रष्टव्यं, अन्यत्र ममताशोकयोरप्रसक्तत्वात्"

इत्याह ॥ इदं, 'तच्चिन्त्यं' इत्युत्कर्षदीपिकायामेव प्रत्याख्यातं । 'सर्वस्मिन् कर्मणि ममेदमिति ममत्वस्य निष्फले कष्टसाध्ये वा कर्मणि ज्वरस्य च प्रसक्तत्वात् । शोकादेर्निवृत्त्यर्थमेव 'सिद्ध्यसिद्ध्योस्समो भूत्वे'ति भगवतोक्तत्वाच्च' इति ॥

युध्यस्वेति नियोगः प्रकरणविशेषसमाप्तिं सूचयति । प्रायश एवमेतत् । लोकसंग्रहाद्यर्थंहि कर्मणः कर्तव्यत्वं उपदिष्टमस्मिन्प्रकरणे । तद्धि'मयि सर्वाणी'ति प्रकृतपद्येनोपसंहृतं । उपसंहारस्य प्रायशः प्रागुक्तप्रमेयजातसंग्राहकतया दृष्टत्वेन, कर्मकर्तुरध्यात्मचेतस्त्वं कर्मणो भगवति समर्पणं क्व पूर्वं प्रस्तुतमित्यन्वेषणे श्रीमदाचार्यव्याख्यानरीत्या (२६) 'युक्तः' (२७) 'प्रकृतेः' इति शब्दाभ्यां भगवति मनोयोगः, प्रकृष्टकृतिमत्वात् भगवानेव मुख्यकर्तेत्यर्थश्च प्रसक्तो दृश्यते । परव्याख्यानेतु भगवति कर्मन्यासस्य पूर्वं सर्वथा प्रसक्तिर्नाधिगम्यते । हरिः कर्ता इत्यनुसन्धानं नाम कर्मन्यासः । प्रकृतेः क्रियमाणानित्यादिकंतु अद्वैतव्याख्यातृभिः अचेतनस्यैव कर्तृत्वं नत्वात्मन इत्यर्थस्य बोधकतया व्याख्यातं । आत्मनः कर्तृत्वाभावे आत्मत्वाविशेषाद्धरेरपि नोपपद्यते कर्तृत्वं । एवंहि तत्त्वविदनुसन्धत्ते । एवमनुसन्धाने कृष्णे कर्मसमर्पणस्य संगतिर्नसंगच्छते । तस्मात् उपक्रमोपसंहारार्थपर्यालोचनायां प्रकृतिशब्दाभिधेय ईश्वरः स्वतन्त्रकर्ता अतस्तस्मिन् समर्पणं न्याय्यमित्येव प्रकरणार्थो द्रष्टव्यः ॥

'विगतज्वरः' इति युद्धे प्रसक्तशोकस्य ग्रहणमुचितं । तन्मात्रपरत्वेतु न निर्बन्धः । "प्राचीनेनानादिकालप्रवृत्तानन्तपापसंचयेन कथमहं भविष्यामीत्यन्तर्ज्वरः" इति रामानुजभाष्यं । साधूक्तं तत् ॥

'मयि सन्यस्य' 'निर्ममः' इति परस्परं गतार्थता न शङ्कनीया । मयि स्थित्वा श्रीकृष्णः कर्माणि करोति । मम कर्माणि तत्पूजारूपाणि

इति ज्ञानं सन्यासो विवक्षितः । अहं न कर्तेति ज्ञानं निर्ममत्वं । अनयोर्भेदः स्फुटः ॥

"नाहं कर्ता हरिः कर्ता तत्पूजा कर्मचाखिलं ।
तथाऽपि मत्कृता पूजा तत्प्रसादेन नान्यथा ॥
तद्भक्तिस्तत्फलं मह्यं तत्प्रसादः पुनःपुनः ।
कर्मन्यासो हरावेवं विष्णोस्तृप्तिकरस्सदा" इति गीतातात्पर्ये ॥

कर्मणां परमेश्वरे संन्यासो नाम तदात्मकत्वविज्ञानं इति शाङ्कराः । तथाहि शङ्करानन्दः, "'ब्रह्मार्पणं ब्रह्म हविः'इति वक्ष्यमाणलक्षणया प्रत्यग्दृष्ट्या सर्वं ब्रह्मैवेति दर्शनेन कर्माणि मयि सर्वं ब्रह्मैवेति प्रविलाप्य' इति ॥ अशब्दत्वात्प्रमाणविरुद्धत्वादिदं सन्यासपदार्थनिरूपणं उपेक्ष्यं । कर्माणि परमेश्वरप्राप्तये कल्पितानीत्यध्यात्मचेतश्शब्दव्याख्यानावसरे केनचिदुक्तं चातिमन्दं ॥

अध्यात्मचेतसा निराशीरिति योजना ज्ञेया । अध्यात्मचेतस्त्वं निराशिष्ट्वे हेतुः ॥ यद्यपि निराशीः इत्यस्य त्यक्ताशीरिति व्याख्यानमुचितं । विष्णुभक्तिज्ञानादीनां कामस्य विहितत्वात् तदन्यकामरहितः इति हि प्रकृतार्थः। अध्यात्मचेतसा मयि संन्यस्य इति योजनायां तु गतार्थता दुष्परिहरा स्यात् । अध्यात्मचेतस्त्वस्य प्रायशो भगवदर्पणबुद्धिरूपत्वात् ॥

'अध्यात्मचेतसा' इति पदं बह्वर्थगर्भितं । आत्मानमधिकृत्य यत्तदध्यात्मं । तच्च तच्चेतश्च इत्यव्ययीभावकर्मधारयाश्रयणेन आत्मशब्दस्यानेकार्थत्वात् अर्थविशेषानादाय च बह्वर्थगर्भो व्यक्तः ॥ 'आत्मा चित्ते धृतौ यत्ने धिषणायां कळेवरे । परमात्मनि जीवेऽर्के हुताशनसमीरयोः' इति हैमः ॥

(१) आत्मानं परमात्मानं अधिकृत्य स्थितं चेतः । अयं मुख्याभिधेयः प्रकरणस्यातिसंगतः ।

(२) आत्मानं समीरं अधिकृत्य इति वा ।

(३) आत्मानं जीवं, अधिकृत्य तदुद्धाराय चेतः इति वा ॥

(४) आत्मानौ जीवपरमात्मानौ, तावधिकृत्य तयोः पारतन्त्र्यस्वातन्त्र्यापेक्षया चेतः हृदयं, भक्तिरिति यावत् ॥

(५) अथवा आत्मा धैर्यं, तमधिकृत्य धैर्येण युतेन चेतसा। 'धीरस्तत्र न मुह्यती'त्युक्तेः ॥

(६) अथवा आत्मा स्वभावः, तमधिकृत्य सात्विकादिस्वभावानुगुणचेतसा ॥

(७) अथवा अधि अधिकः, सचासौवात्माच अध्यात्मा। तस्मिन् चेत. सर्वाधिकपरमात्मभूतमन्निष्ठमनसा इत्यर्थः। पश्यत विवृतिं, रामानुजभाष्यञ्च ॥

(८) अथवा (यथोक्तं नीलकण्ठीये) आत्मानमधिकृत्य प्रवृत्तं शास्त्रं। तत्र प्रवणेन चेतसा। शाकपार्थिवादिवन्मध्यमपदलोपी समासः ॥

(एतैर्व्याख्यानैरध्यात्मचेतसः पुरुषस्य भगवद्भक्ति-गुरुभक्ति-सांख्यापरनामकजैवज्ञान-जीवेशनीचोच्चताज्ञानानि, तथा अभिमानराहित्ये सति धैर्यं शास्त्रश्रद्धेत्यादयः प्रतीता भवन्ति। एवमन्येऽप्यदुष्टा अर्था अनुसंधेयाः ॥

चेतसः अध्यात्मत्वविशेषणेन अधिभूतं अधिदैवं च चेतः व्युदस्तं भवति। अधिभूतं हि क्षरो भावः। अधिदैवं चेतस्तु इन्द्रियतद्देवताभिमुखं विरक्तिविरोधीत्युपेक्ष्यम् ॥

ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ३१

वि ॥ विद्वांस एवं कर्म कुर्वन्तीत्येतावता मयाऽप्युक्तविधया कर्म कार्यमिति कुत इत्यतः स्वोक्तस्य करणे अकरणे च फलमाह। ये मे इत्यादिश्लोकद्वयेन ॥ ये मानवाः श्रद्धावन्तः मद्वाक्येष्वास्तिक्यबुद्धिमन्तः, अनसूयन्तः कष्टे कर्मणि प्रवर्तयतीति मयि दोषदृष्टिमकुर्वन्तःसंतः, इदं पूर्वश्लोकोक्तरीत्या कर्मानुष्ठानरूपं मे मतं नित्यमनुतिष्ठन्ति। तेऽपि कर्मभिर्निवृत्तकर्मभिर्मुच्यन्ते। ज्ञानद्वारेति योज्यं। किमुतापरोक्षज्ञानिनो मुच्यन्तइतिकैमुत्यसूचानार्थोऽपिशब्दः। एतत्सूचनं च प्रासङ्गिकं ध्येयं ॥

शं॥ यदेतन्मतं कर्म कर्तव्यमिति सप्रमाणमुक्तं तत्तथा। ये मे इति ॥ ये मे मदीयमिदं मतमनुतिष्ठन्त्यनुवर्तन्ते मानवाः मनुष्याः श्रद्धावन्तः श्रद्दधाना अनसूयन्तोऽसूयां च मयि गुरौ वासुदेवेऽकुर्वन्तो, मुच्यन्ते तेऽप्येवंभूताः कर्मभिर्धर्माधर्माख्यैः ॥

रा ॥ अयमेव साक्षादुपनिषत्सारभूतोऽर्थ इत्याह ॥ ये मानवाश्शास्त्राधिकारिणोऽयमेव शास्त्रार्थ इत्येतन्मे मतं निश्चित्य तथाऽनुतिष्ठन्ति। ये चाननुतिष्ठन्तोऽप्यस्मिन् शास्त्रार्थे श्रद्दधाना भवन्ति। ये चाश्रद्दधाना अप्येवं शास्त्रार्थो न

संभवतीति नाभ्यसूयन्ति, अस्मिन् महागुणे शास्त्रार्थे दोषमनाविष्कुर्वन्तो भवंतीत्यर्थः । ते सर्वे बंधहेतुभिरनादिकालारब्धैस्सर्वैः कर्मभिर्मुच्यन्ते ॥ तेऽपि कर्मभिः इत्यपि शब्दादेषां पृथक्करणं इदानीमननुतिष्ठन्तोऽप्यस्मिन् शास्त्रार्थे श्रद्दधाना अनभ्यसूयवश्च, श्रद्धया चानसूयया च क्षीणपापा अचिरेणेममेव शास्त्रार्थमनुष्ठाय मुच्यन्त इत्यर्थः ॥

विचारः

('मुच्यन्ते तेऽपि कर्मभिः' इति कर्मयोगिनां फलमिह कथ्यते । कर्मानुष्ठातॄणां यदि ज्ञानद्वारा मोक्षो भवति तदा किं वक्तव्यमपरोक्षज्ञानिनां अर्जुनादीनामिति कैमुत्यद्योतकः 'अपि' शब्दः । जातापरोक्षत्वेन पाप स्यात् मोक्षो न भवेत् इत्यर्जुनेन किंचिदपि न शङ्कनीयं इत्यभिप्रायः )( कर्मभिः निवृत्तकर्मभिरित्यर्थः )( अस्मिन् श्लोके 'अपि' इति शब्दः प्रथमप्रतीतौ दुर्घटः । अपकर्षबोधकत्वे सति समुच्चयं बोधयति । अन्ये मुच्यन्ते तेऽपि मुच्यन्ते इत्युक्तौ तेऽपीत्युक्तानां अपकर्षः स्फुटः । मोचनविषयत्वं एतेषां अन्येषां चेति च स्फुटं । के अन्ये यैस्समुच्चय उक्तः इत्याकाङ्क्षायां अपरोक्षज्ञानिनः इत्युत्तरं श्रीमध्वाभिमतं )(अपरोक्षज्ञानित्वे सत्यनुष्ठाता केवलपरोक्षज्ञानित्वे सत्यनुष्ठातुस्सकाशादुत्कृष्ट इत्येतत्सुगमम् )

(कर्मभिर्मुच्यंते )( कर्मभिः धर्माधर्माख्यैरित्यादाय कर्मबंधान्मुच्यन्ते इत्यद्वैतव्याख्यातारोऽभिप्रयंति । तृतीयायाः पंचम्यर्थत्वमिह चिन्त्यं । कथंचित्संभवेऽपि इष्टपुण्यनाशोऽनुचित इति प्रागेव निरूपितं स्मर्तव्यं )( तृतीयार्थस्य यथाश्रुतस्य परिग्रहे ज्ञानवत्कर्मणोऽपि मोक्षसाधनत्वमुच्यते इत्यन्यथा प्रतीतेर्भवत्यवकाशः )(कर्मणः स्वातंत्र्येण मोक्षसाधनत्वं वा ज्ञानकर्मसमुच्चय-

स्य साधनत्वं वा न प्रामाणिकं। 'नान्यः पंथा अयनाय विद्यते' इति श्रुतिः कर्मणः स्वतंत्रसाधनत्वं निषेधति। समुच्चयवादोऽपि प्रागेव तत्रतत्र निराकृतः॥

"निवृत्तादीनि कर्माणि ह्यपरोक्षेशदृष्टये।
अपरोक्षेशदृष्टिस्तु मुक्तौ किंचिन्न मार्गते॥

सर्वं तदन्तराधाय मुक्तये साधनं भवेत्।
नकिंचिदन्तराधाय निर्वाणायापरोक्षदृक्॥" इति नारायणाष्टाक्षरकल्पवचनं गीताभाष्योदाहृतं। एतेन समुच्चयनियमो निराकृतो द्रष्टव्यः॥ अतएव कर्मभिरित्यनेन 'अपि'शब्दस्य योजना नाभिमता। तेऽपि ज्ञानद्वारा मुच्यन्ते किमुत त्वादृशा अपरोक्षज्ञानिन इति कैमुत्यार्थे न दोषो विद्यते॥

वक्तव्यांशस्यापरिसमाप्तावपि मध्ये मुच्यन्ते इति फलकथनस्यासांगत्यं न शंकनीयं। फलस्य प्रासंगिकत्वेन प्रसक्तत्वात्॥ यथोपपादितं श्रीनिवासतीर्थीये, "विद्वदविदुषोः कर्मभेदोक्तौ विद्वांस एवं कुर्वन्तीत्येतावतैव त्वया न कार्यं। किंतु मदुक्तकरणाकरणयोः फलमप्यस्तीति प्रमेयस्य स्मृतत्वात्। स्मृतस्यचोपेक्षानर्हत्वरूपप्रसंगसङ्गत्येदं फलमुक्तं" इति॥

यद्यपि समुच्चयपक्षो नाश्रितोऽद्वैतव्याख्यानेषु, तद्राद्धान्तविरोधात्। तथापि तत्र 'अपि'शब्दसार्थक्यं न तैरुपपादितम्॥

रामानुजाचार्यव्याख्याने तु अनसूयावस्था प्रथमा, श्रद्धा द्वितीयावस्था, अनुष्ठानं तृतीयावस्था इत्यधिकारिषु पर्वभेदमादाय अनुष्ठाता मुच्यते, तदूनत्वेऽपि श्रद्धावान्मुच्यते, तदूनत्वेऽपि अनसूयावान्मुच्यते, इत्याशयो निरूपितः॥ यथोक्तं तात्पर्यचन्द्रिकायां, "ननु सम्भवत्येकवाक्यत्वे वाक्यभेदश्च

नेष्यते इति, नावैकवाक्यत्वं सम्भवति, अपिशब्दानन्वयात् । अपिशब्दो-ह्यत्रानुष्ठातृभि स्सहाधिकार्यन्तरसमुच्चयपरोवा अनुष्ठातॄणामपकर्षपरोवा स्यात् । तत्र ज्ञानयोगिनां समुच्चयस्सम्भवन्नपि अत्रानपेक्षितः कर्मयोगप्रशंसाप्रकरणा-नुचितश्च । ज्ञानयोगिभ्यः कर्मयोगिनामपकर्षसूचनंत्वत्रात्यन्तविरुद्धं । नित्य-मनुष्ठातॄणां श्रद्धावंतोऽनसूयन्त इति विशेषणाभिधानं च निरर्थकं । नहि नित्यमनुतिष्ठन्तोऽश्रद्दधाना असूयन्तश्च भवेयुः । अवस्थात्रयविषयत्वे तु समुच्चयपरतया वा अर्वाचीनावस्थापकर्षपरतयावा शक्यः 'अपि'शब्दो नेतु-मिति अनुष्ठातॄणां श्रद्धानसूयामात्रवतांच तुल्यफलत्वेऽनुष्ठानविधायकशास्त्रवै-यर्थ्यं स्यात् इत्याशंक्य, भाष्यं, इदानीं अननुतिष्ठन्तोऽप्यस्मिन् शास्त्रार्थे श्रद्द-धाना अनभ्यसूयवश्च, श्रद्धयाचानसूययाच क्षीणपापा अचिरेणेममेव शास्त्रार्थमनुष्ठाय मुच्यन्त इत्यर्थः इति" ॥ उच्यते । अत्रैकवाक्यत्वमेव युक्तं, यच्छब्दतच्छब्दक्रियापदानामेकत्वात् । अन्यथा'यो नःपिते'तिवत् यच्छब्दावृत्तिर्वा । 'यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधां' इतिवत् तच्छब्दावृत्तिर्वा क्रियाऽऽवृत्तिरेववा स्यात् । अतो वाक्यभेदो न युक्तः ॥ संभवति चैकवाक्यत्व । डम्भादिप्रयुक्त-नित्यानुष्ठानव्यावृत्त्यर्थं श्रद्धावन्तः अनसूयन्तः इति विशेषणद्वयं सन्नन्तं ॥ यच्चोक्तं 'अननुतिष्ठन्तोऽपि श्रद्धया अनसूययाच क्षीणपापाः' इति तदप्यत्यन्तायुक्तं । नहि अननुष्ठानजं पापं श्रद्धादिमात्रेण नश्यति । अत्र अनसूयाश्रद्धाभ्यां सहकृतत्वेन विशेषितस्यानुष्ठानस्य मोचनसाधनत्वेऽ-भिप्रेते दोषो न ज्ञायते । एवमेकवाक्यतायां संभवन्त्यां तन्निषेधायोपन्यस्तं युक्तिजातं न प्रत्याययति ॥ यत्तु समुच्चयोवा अपकर्षोवा स्यादिति विकल्प्य दूषितं, तच्च चिंत्यं । द्वावपि समुच्चयापकर्षौ विवक्षिताविति चेददोषात् । यद्यपि ज्ञानयोगिनां समुच्चयो न सुरसः । अपरोक्षज्ञानिनां कैमुत्यगर्भित-समुच्चयस्य तु संगतत्वं प्रतिपादितं । कर्मयोगप्रकरणे ज्ञानमाहिम्नः प्रस्तावो

नोचितः इति कोऽयं निर्बन्धः ॥ यद्यपि ज्ञानयोगिभ्यः कर्मयोगिनामपकर्षो नात्राभिप्रेतः । वस्तुतस्तु ज्ञानयोगिनः कर्मयोगिभ्य उत्तमा एव । तथापि अत्रापरोक्षज्ञानिनामुत्कर्षो विवक्षित इति न काऽप्यनुपपत्तिः ॥ यत्तूक्तं नित्यमनुष्ठातॄणां श्रद्धावन्तोऽनसूयन्त इति विशेषणाभिधानं निरर्थकमिति, तदपि चिंत्यं । अनसूयाश्रद्धाऽनुष्ठानानां सामानाधिकरण्यस्य साधनत्वेन विवक्षोपपत्तेः ॥

'नित्यमि'ति अनुष्ठानश्रद्धानसूयानां विशेषणं भवितुमर्हति । अथवा नित्यमिति मतविशेषणं । यथोक्तं मधुसूदनेन, 'नित्यं वेदबोधितत्वेनानादिपरंपरागतं आवश्यकं' इति ॥

(श्रद्धाविरहितं केवलं डांभिकमनुष्ठानं निष्फलमिति भगवदाशयस्सुगमः । तस्मात् 'सम्भवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यते' इति न्यायेनैकवाक्यतया योजनमेवोपपन्नं भाति । यद्यपि 'धर्मश्श्रुतो वा दृष्टो वा स्मृतो वा कथितोऽपि वा । अनुमोदितो वा राजेन्द्र पुनाति पुरुषं सदा ॥' इति भारतवचनानुसारेण श्रद्धाया अनसूयायाश्च प्रत्येकं स्यान्नाम फलं । तथापि अनसूयाश्रद्धानुष्ठानानां मिलितानांच मोचकमहाज्ञानं प्रति साधनत्वं प्रतिषेधानर्हं भातीत्यास्तां विस्तरः ॥

'मानवा' इति ॥ एतेन शूद्रा न ग्राह्याः देवा अपि ग्राह्याः, मानवशब्दस्य सर्वाधिकारिसंग्राहकत्वादिति रामानुजाशयः । अधिकारिसंग्राहक इति साधूक्तं ॥ शूद्राणां निष्कामानुष्ठाननिषेधे तु गमकं चिन्त्यते । शूद्राणामपि अमंत्रकपंचमहायज्ञादावधिकारः शूद्रकमलाकरादौ विहितः । तत्रानुष्ठानेन सच्छूद्र इति चोक्तं ॥

ये मे मतमनुतिष्ठन्ति श्रद्धावंतोऽनसूयन्तः त एव मानवाः । अन्ये पशव इति वा भावः ॥

ये अनुतिष्ठन्ति श्रद्धावन्तोऽनसूयन्तः ते मानवा भूत्वा मुच्यन्ते इतिवा। मानवाः अपरोक्षज्ञानिन इत्यर्थः । परोक्षज्ञानिनो वा । मानं प्रमाणं, वं शास्त्रं येषां इति तथोक्तिः । मा प्रमाणं अनस्य वं शास्त्रमितिवा, श्रीमदाचार्यशास्त्रावलंबिनः ॥

( इदं मतं ' इति । इदमित्यव्यवहितपूर्वप्रकरणोक्तस्य परामर्शः स्फुटः ॥ सर्व कर्म विष्णवे समर्पणीयमिति मतं । पूर्वोक्तस्य सर्वस्य विवक्षापि नासङ्गता भाति । सङ्गराहित्येन कर्म अनुष्ठेयमिति मतं विवक्षितं । मतं शासनं, मतं सम्मतं, इत्यादयः प्रसिद्धा अप्यर्थाः प्रकृतसङ्गता भवन्ति ॥)

'श्रद्धावंत' इति । श्रीकृष्णवचने आस्तिक्यबुद्धिमन्तः। शास्त्राचार्योपदिष्टेऽदृष्टार्थे विश्वासः श्रद्धोच्यते । केवलप्रत्यक्षानुमानाभ्यामदृष्टवस्तुविषयकप्रत्ययो नोपपद्यते । अतः आगमस्य प्रामाण्यमंगीकार्यं ॥ आप्तवाक्ये विश्वासाभावे सुज्ञानं नाप्यते । अननुभूतेऽप्यर्थे एवमेतदित्याचार्योपदेशे सति विश्वासविशेषो यदि भवेत् तर्ह्यास्तिक्यबुद्धिरभिवर्धते । तेनैव पथा ज्ञानवृद्धिरिति सन्मार्गप्रयाणं मन्तव्यं ॥ श्रद्धाया महिमा उक्तः आग्नेये—

"श्रुतिमात्ररसाःसूक्ष्माः प्रधानपुरुषेश्वराः ।
श्रद्धामात्रेण गृह्यन्ते न करेण न चक्षुषा ॥

कायक्लेशैर्न बहुभिस्तथैवार्थस्य राशिभिः ।
धर्मःसंप्राप्यते सूक्ष्मः श्रद्धाहीनैस्सुरैरपि ॥

श्रद्धा धर्मः परः सूक्ष्मः श्रद्धा ज्ञानं हुतं तपः
श्रद्धा स्वर्गश्च मोक्षश्च श्रद्धा सर्वमिदं जगत ॥

सर्वस्वं जीवितं वाऽपि दद्यादश्रद्धया यदि ।
नाप्नुयात्तत्फलं किंचिच्छ्रद्धा दानं ततोऽभवत् ॥
एवं श्रद्धान्वयास्सर्वे सर्वधर्माः प्रकीर्तिताः ।
केशवः श्रद्धया गम्यो ध्येयःपूज्यश्च सर्वदा " इति ॥

श्रद्धाशब्दः आदरे शुद्धौ विश्वासे चित्तप्रसादेच श्रूयते ॥

ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतं ।
सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ॥ ३२ ॥

वि ॥ ये तु एतन्मे मतं अभ्यसूयन्तः कष्टं कर्मेति दोषदृष्टिमंतस्संतः नानुतिष्ठन्ति, तानचेतसः विवेकशून्यान्, अतएव ज्ञातव्यसर्वज्ञानविषये विमूढान् विशेषेण मिथ्याज्ञानिनः, अत एव नष्टान् नरकाद्यनर्थभाजो, विद्धि जानीहि ॥

शं ॥ येत्विति ॥ ये तु तद्विपरीता एतन्मे मतमभ्यसूयंतो नानुतिष्ठंति नानुवर्तन्ते मे मतं, सर्वेषु ज्ञानेषु विविधं मूढास्ते सर्वज्ञानविमूढास्तान्विद्धि जानीहि, नष्टान् नाशङ्गतानचतसोऽविवेकिनः ॥

रा ॥ भगवदभिमतमौपानिषदमर्थमननुतिष्ठतामश्रद्दधानानामभ्यसूयतां च दोषमाह ॥ ये त्वेतत्सर्वमात्मवस्तु

मच्छरीरतया मदाधारं मच्छेषभूतं मदेकप्रवर्त्यमिति मे मतं नानुतिष्ठन्ति, नैवमनुसंधाय सर्वाणि कर्माणि कुर्वते, ये च न श्रद्दधते, ये चाभ्यसूयन्तो वर्तन्ते । तान् सर्वेषु ज्ञानेषु विशेषेण मूढांस्तत एव नष्टानचेतसो विद्धि । चेतःकार्यं हि वस्तुयाथात्म्यनिश्चयः, तदभावादचेतसो विपरीतज्ञानास्सर्वत्र विमूढाश्च ॥

विचारः

(पूर्वश्लोकेऽनसूयया श्रद्धयाचानुष्ठातॄणां मोक्षमन्वयमुखेनोक्त्वा व्यतिरेके दोषमाह । येत्विति ( अत्र अभ्यसूयतां अननुतिष्ठतामनर्थः कण्ठोक्त्या निरूपितः । अश्रद्दधानानामपि प्रसक्तत्वेनाभ्यसूयोक्तिरश्रद्धोपलक्षिकेत्याशयोऽवगम्यते । इदं देशिकेनाप्यङ्गीकृतं । एतेन यत्पूर्वश्लोकव्याख्याने देशिकेन निरूपितं, अनसूया श्रद्धा अनुष्ठानं चेत्यवस्थात्रयं विवक्षितमिति, तदतीव दुर्बलं प्रतिपद्यते । तेनोक्तप्रकारेण भिन्नवाक्यतया योजना यदि भगवदभिमता स्यात्, तर्ह्यश्रद्धामपि कण्ठतोऽवक्ष्यत् इति भाति । यदित्वेकवाक्यत्वेनैवाभिप्रायः, तदोपलक्षणयाऽन्यतमस्य यस्य कस्यचित् परामर्शो नाऽनुपपन्नः )।

(पूर्वश्लोकार्थेऽस्मिंश्चावस्थात्रयाशयविषये रामानुजभाष्यमनुसरति वेङ्कटनाथः । अनुसरन्नन्यमपीह वाक्यभेदं विशेषेण दर्शयति । इदमस्याकूतं, ये नानुतिष्ठन्ति ते सर्वज्ञानविमूढाः, ये अभ्यसूयन्तः ते नष्टाः, ये अश्रद्दधानाः ते अचेतसः, इति क्रमेणान्वयः इति )( अत्रोच्यते । किमित्येवं क्रम उत्प्रेक्षित.। यथाश्रुतक्रमादपि व्यत्यस्तत्वात् येऽभ्यसूयन्तस्ते सर्वज्ञानविमूढाः, ये नानुतिष्ठन्ति ते नष्टाः, इति क्रमावलंबने काऽनुपपत्तिः । अनुष्ठातारः अभ्य-

सूयन्तो वा नाचेतसः, किंत्वश्रद्दधाना एवाचेतसः इति को निर्बन्धः ॥ किंच दोषत्रययुतानां प्रत्येकं मिलित्वाच, अनर्थत्रयं प्रत्येकं मिलित्वा वा संभवतीत्युक्तौ का हानिः । अवस्थात्रयपक्षनिरूपको रामानुजाचार्योऽपि प्रकृते श्लोके वेङ्कटनाथवत्क्रमशो विभागं नाश्रयते इत्ययमाशय उपेक्ष्यः ॥ रामानुजोक्त-'मत'शब्दार्थस्य अनुष्ठेयत्वं न संभवति । नैवमनुसन्धाय सर्वाणि कर्माणि कुर्वन्ति इत्युक्ते अध्याहारदोषः ॥

एतन्मे मतमिति । किमिदं मतं विवक्षितमिति निरूपणावसरे प्रवृत्तं रामानुजभाष्यं, "सर्वमात्मवस्तु मच्छरीरतया मदाधारं मच्छेषभूतं मदेकप्रवर्त्यमिति मतं" इति । इदं विशिष्टाद्वैतपरिभाषेति ज्ञायते ॥ परमात्मनस्सर्वभिन्नत्वे सति सर्वान्तर्यामित्वं सर्वाधारत्वं स्वातंत्र्येण सर्वकर्तृत्वादिकं यद्यभिप्रेतं तत्प्रामाणिकं । यदित्वनेन ब्रह्मणो जगदुपादानत्वमभिप्रेतं तदप्रामाणिकं । प्रकृते त्वेतन्मे मतमित्युक्तं भगवदर्पणबुद्ध्या सङ्गराहित्येन कर्मानुष्ठेयं इत्येव मतं परामर्शार्हं भवति । नतु ब्रह्मपरिणामवादादिकं ॥ 'ईश्वरार्थं कर्म कर्तव्यमिति मदनुशासनं मे मतमित्यनेनोक्तं' इति श्रीधरव्याख्यानं निर्दुष्टम् ॥

'अचेतस' इति । विचेतसः अविवेकिनः विपरीतज्ञानाः उच्यन्ते । चेतसःकार्यं हि विवेकः । कार्यादर्शनात्कारणं नास्तीत्युपचारः । अचेतस इत्यतस्ते सर्वज्ञानविमूढाः । सर्वज्ञानविमूढत्वान्नरकाद्यनर्थप्राप्त्या नष्टा भवन्ति । एवं अचेतस्त्वविमोहनाशानां हेतुहेतुमद्भावो द्रष्टव्यः । अयमाशयो विवृत्याचार्यमधुसूदनयोस्संमतः ॥

'सर्वज्ञानविमूढान्' — नीलकण्ठीयव्याख्यानं "सर्वशब्द ईश्वरवाची । 'सर्वं समाप्नोषि ततोऽसि सर्वः' इति निर्वचनात् । तस्य ज्ञाने विषये विशेषेण मूढान् । पारोक्ष्येणापि ते ईश्वरमजानंतो देहमात्रनिष्ठास्तान्"

इति ॥ अत्र सर्वशब्दस्य प्रकरणान्तरोदितनिर्वचनं पुरस्कृत्य ईश्वरमात्र-परतया व्याख्यानस्यौचित्यं दुर्गमम् ॥

सर्वज्ञानविमूढानित्यस्येदमुक्तं मधुसूदनीये, "सर्वत्र कर्मणि, ब्रह्मणि सगुणे निर्गुणेच यज्ज्ञानं, तत्र विविधं प्रमाणतः प्रमेयतः प्रयोजनतश्च मूढान्" इति ॥ अत्र सगुणे निर्गुणे इत्यद्वैतपरिभाषा । इमामुपेक्ष्यावशिष्टं कथंचिन्निर्दुष्टं भवेद्व्याख्यानं ॥ वस्तुतोहि श्रीकृष्णमतं विद्विषन्तस्सन्तो ये नानुतिष्ठन्ति ते कर्मज्ञान-ब्रह्मज्ञानशून्याः । कर्माणि हि स्वतन्त्रभगवत्कर्तृकाणि परतन्त्रजीवस्वभावादिप्रेरिततया जीवकर्तृकाणि, जडप्रकृतिविकारभूतसत्वादिकार्येन्द्रियविषयनियतानि । एतद्विभागमजानन्तः कर्माज्ञानिनः भगवद्ज्ञाश्च भवेयुः, कर्तृत्वे तत्स्वातन्त्र्यापरिज्ञानात् । भगवद्वाक्यं प्रमाणमित्यजानन्तः भगवदभिमतं कर्मयोगाख्यं प्रमेयमजानन्तः, काम्याकाम्ययोः प्रयोजनं चाजानन्तः, प्रमाणतः प्रमेयतः प्रयोजनतश्च मूढा एव । एवमभिप्राये सति मधुसूदनीयं साधु भाषितं गृह्येत ॥ अतएव विवृत्याचार्येण 'ज्ञातव्यसर्वज्ञानविषये' इत्युक्तं । कर्मयोगिभिर्ज्ञातव्यं खलु रागद्वेषादिपरित्यागपूर्वकं ईश्वरार्पणबुध्या कर्म अनुष्ठेयमिति । एतज्ज्ञाने कर्मब्रह्मोभयविज्ञानमंतर्भूतं वर्तते ॥

सर्वज्ञानविमूढानित्यस्येदं देशिकव्याख्यानं, "यथावस्थितात्मस्वरूपानभिज्ञतया अहंममेत्यादिषु सर्वेषु ज्ञानेषु ज्ञातव्यवस्तूनां यथावस्थितस्वरूपप्रकारानभिज्ञान्" इति ॥ इदमत्र चिन्त्यते । देहात्मभ्रमो नात्र साक्षाद्विवक्षितो भाति । कर्मणि क्रियमाणे स्वास्वातन्त्र्यं ईश्वरस्वातन्त्र्यं ये न जानंति ते मूढा इत्येव विवक्षा साक्षात्सङ्गता दृश्यते । 'प्रकृतेः क्रियमाणानि' 'तत्वविच्च महाबाहो' इत्याद्येतत्प्रकरणे विद्वदविदुषोर्ये ज्ञानाज्ञाने निरूपिते तयोरेवैताभ्यां श्लोकाभ्यां परामर्शः उचितो द्रष्टव्यः ॥

सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥३३

वि ॥ यदि त्वन्मतानुष्ठाने मोक्षः अन्यथा तु नाशः तर्हि ते मतं किमिति लोको नानुतिष्ठतीत्यत आह॥ सदृशमिति ॥ प्रकृतिशब्दोऽत्र पूर्वसंस्कारार्थः सन् तत्कार्यरागद्वेषोपलक्षकः । ज्ञानवानपि मन्मतकरणाकरणयोरिष्टानिष्टज्ञानवानपि । स्वस्याः प्रकृतेः स्वकीयपूर्वसंस्कारकार्यरागद्वेषयोः सदृशमनुगुणमेव चेष्टते, कर्म करोति । किमुताज्ञ इत्यपेरर्थः ॥ ननु मनोनिग्रहे स्वभावानुगतचेष्टोपरितिः स्यादित्यत आह । प्रकृतिमिति ॥ प्रकृतिं स्वभावं यान्ति प्राणिनः। तत्र मनोनिग्रहः किं करिष्याति । न किमपीत्यर्थः ॥ तदुक्तं, "बुध्वाऽप्यसौ यतो नित्यं स्वभावानुगचेष्टितः। स्वभावं यान्ति भूतानि निग्रहः किं करिष्यती"ति। यद्वा मन्दान्न विचालयेदित्ययोग्येषु तत्त्वबोधो न कार्य इत्युक्तं तत्कुत इत्यत आह । सदृशमिति ॥ प्रागिवार्थः । तत्त्वोपदेशेनोत्पन्नज्ञानवानपि स्वभावानुगुणचेष्टावानेव भवति । न तूपदेशजन्यज्ञानानुरूपचेष्टावानपि भवति । अतस्तत्र तत्त्वोपदेशो व्यर्थ इति भावः ॥

॥ शं ॥ कस्मात्पुनः कारणात्त्वदीयं मतं नानुतिष्ठन्तः परधर्माननुतिष्ठन्ति स्वधर्मं च नानुवर्तन्ते । त्वत्प्रातिकूलाः

कथं न बिभ्यति त्वच्छासनातिक्रमदोषात्, तत्राह ॥ सदृशमिति । सदृशमनुरूपं चेष्टते । कस्याः, स्वस्याः स्वकीयायाः प्रकृतेः । प्रकृतिर्नाम पूर्वकृतधर्माधर्मादिसंस्कारो वर्तमानजन्मादावभिव्यक्तः 'सा प्रकृतिः' । तस्याः सदृशमेव सर्वो जन्तुर्ज्ञानवानपि, किं पुनर्मूर्खः । तस्मात्प्रकृतिं यांति भूतानि निग्रहः किं करिष्यति मम वाऽन्यस्य वा । दुर्निग्रहा प्रकृतिरिति वाक्यशेषः ॥

रा ॥ एवं प्रकृतिसंसर्गिणस्तद्गुणोद्रेककृतं कर्तृत्वं, तच्च परमपुरुषायत्तमित्यनुसन्धाय कर्मयोगयोग्येन ज्ञानयोगयोग्येन च, कर्मयोगस्य सुशकत्वादप्रमादत्वादन्तर्गतात्मज्ञानतया निरपेक्षत्वात्, इतरस्य दुश्शकत्वात्सप्रमादत्वात् शरीरधारणाद्यर्थतया कर्मापेक्षत्वात्कर्मयोग एव कर्तव्यः । व्यपदेश्यस्य तु विशेषतस्स एव कर्तव्य इति चोक्तं ॥ अतःपरमध्यायशेषेण ज्ञानयोगस्य दुश्शकतया सप्रमादतोच्यते ॥ प्रकृतिविविक्तमीदृशमात्मस्वरूपं, तदेव सर्वदाऽनुसन्धेयमिति च शास्त्राणि प्रतिपादयन्तीति ज्ञानवानपि स्वस्याः प्रकृतेः प्राचीनवासनायास्सदृशं प्राकृतविषयेष्वेव चेष्टते । कुतः? प्रकृतिं यान्ति भूतानि । अचित्संसृष्टा जन्तवोऽनादिकालप्रवृत्तवासनामेव यान्ति । तानि वासनानुयायीनि भूतानि शास्त्रकृतो निग्रहः किं करिष्यति ॥

विचारः

भगवन्मतस्यान्वयव्यतिरेकाभ्यामेवमुत्कर्षे प्रतिपादिते सति सर्वेऽपि लोकाः किमिति नानुतिष्ठन्तीति शङ्कायां श्लोकः प्रवृत्त इति विवृत्याशयः । तथा शाङ्कराणां च । विवृत्याचार्येण प्रकारान्तरेणापि श्लोकोऽवतारितः । तथाहि, 'यद्वा मन्दान्कृत्स्नविन्न विचालयेदित्ययोग्योपदेशो विदुषा न कार्य इत्युक्तस्य निमित्तमिहोच्यते' इति । तथाच स्वभावस्य बलवत्त्वेनायोग्यं प्रत्युपदेशो व्यर्थ इति भावः ॥

प्रकृतिर्बलीयसीत्यतो मुमुक्षवः प्रकृत्यनुकूलं कर्मयोगमनुतिष्ठन्तु, न तु प्रकृतिप्रतीपं ज्ञानयोगमिति श्लोकाशयं रामानुजाचार्य आह ॥ अस्मदर्थे तथा शाङ्करेच, पूर्ववासनातत्कार्यरागद्वेषपरवशः सन्नयं विवेक्यप्यसन्मार्गे प्रसभं हृतः इति शोको ध्वनितः ॥ रामानुजार्थेतु प्रकृत्यनुयायित्वं न शोकस्थानं । अपितु गुण इति गृहीतं भाति । विवेकी ज्ञानयोगी च वासनामार्गमेवानुधावन् सुशकेन कर्मयोगेनोद्धृतो भवेदित्यनेन वासनानुसरणं उचितमित्युक्तं भवति ॥ अत्रेदं चिन्त्यं । 'सदृशं चेष्टते' इति सामान्यवचनेन जीवानां स्वपूर्वसंस्काराद्याकृष्टत्वं गम्यते । पूर्वसंस्कारस्य नियमेन कर्मयोगानुकूलभूतं सात्विकत्वं न शक्यते वक्तु । राजसतामससंस्कारयोः प्राबल्ये सति तमनुसरन् कथं नाम शास्त्रज्ञः सदाचारो भवेत् इति । किंच केवलं प्रकृतिबलनिरूपके श्लोके कर्मयोगस्य सुशकत्वं ज्ञानयोगस्य दुश्शकत्वं क्वोच्यते । अस्य प्रमेयविशेषस्याक्षरारोहस्सुतरां न संभवतीति भाति ॥

'सदृशं चेष्टते' 'प्रकृतिं यान्ति' इति स्वरूपकथनपूर्वकं 'निग्रहः किं करिष्यती'ति निग्रहव्यर्थतायां निरूपितायां, कर्मयोगाधिकारी तथा ज्ञानयोगी व्यपदेश्योवा सदृशं चेष्टतां, सर्वाणि भूतानि प्रकृतिं यान्तु, इति विधिः कथमुपपद्यते ॥

(यदुक्तं 'अतःपरमध्यायशेषेण ज्ञानयोगस्य दुश्शकतया सप्रमादतोच्यते' इति )(तच्चिन्त्यं। सदृशमिति श्लोके ज्ञानयोगस्य दुश्शकताप्रस्तावो नैव दृश्यते। इतःपरं आध्यायान्तं प्रायश इन्द्रियजयप्रकारो निरूपितः। यदि स्यादिन्द्रियजयनिरूपणं ज्ञानयोगप्रकरणमात्रसवद्धं, यदिच स्यात्तत्वं, इन्द्रियाणि ज्ञानयोगिनैव जेयानि कर्मयोगिनस्तु तदाशा नास्त्येवेति, तर्हि स्यात्कथंचिदध्यायशेषप्रतिपादितेन्द्रियजयो ज्ञानयोगदौर्घट्यज्ञापकः। नैवं हि तत्वं। सिध्यसिध्योस्समत्वं हि योगः। इदं कर्मयोगिनोऽप्युक्तं हि लक्षणं। कर्मयोगिनः इन्द्रियनिग्रहस्यानपेक्षायां कार्मिकर्मयोगिनोः को भेदः।)

(तयोर्न वशमागच्छेत्तौह्यस्य परिपंथिनौ' इति वचनं कर्मयोगिपरं नेति कुत्रोक्तं। 'तस्मात्त्वमिन्द्रियाण्यादौ नियम्ये'तिच विधिः किं ज्ञानयोगिमात्रपरः॥तस्मात् शास्त्रज्ञानी विवेक्यपि प्रकृतिमनुसराति, प्रकृतेरतिवलिष्ठत्वात्। अतः कर्मयोगो ज्ञानयोगो भक्तियोगोवा दुर्घटः॥ मया यथोपदिष्टं तथा करणाकरणयोः फलानर्थयोर्विद्यमानयोर्ज्ञातयोरपि जनानां प्रकृतिनिग्रहे शक्त्यभावादेव सदृशं चेष्टन्त इत्येव श्लोकभावो ज्ञातव्य.)॥

(प्रकृतिशब्देन पूर्वसंस्कारो गृह्यते इत्यत्र न विवादः। जीवस्वभावश्च गृह्यते इति वक्तव्यं। जनास्तावल्लोके नानाबुद्धिप्रयत्नेच्छावन्तो विविधरूपभोगभाग्यधनैश्वर्यादिसंपन्नाः सुखदुःखादिकं वैविध्येनानुभवंति। एतन्निमित्तान्वेषणे यौक्तिकास्तावत् प्रवृत्ताः। 'पितुर्गुणा मातृजातिस्सुतानां' इति न्यायमेव दृढमालंब्य पश्चिमदेशीया हूणाः लोकस्थसर्ववैषम्यमुपपादयितुमुद्यताः। पिता बुद्धिमान् अतस्सुतोऽपि। पिता रूपी अतस्सुतोऽपीति ते अनुमिन्वंति। ते जन्मान्तरानङ्गीकारिणः। परीक्षायांतु इदं युक्तिकथनं व्यभिचरितं दृश्यते। यतो दृष्टसर्वसादृश्यवैषम्यादीनां उपपत्तिरेतेन न सङ्गच्छते। अतः जन्मान्तराङ्गीकारिभिः पूर्वकर्मसंस्कारादिकंच नियामकं इत्यभ्युपगतं। अत

एव प्रत्यग्रजातः शिशुर्जन्मान्तरस्तनपानादीष्टसाधनत्ववासनया प्रवर्तते। पित्रादिगुणस्वपूर्वजन्मवासनाभ्यामपि सर्वं दृष्टदौर्घस्त्यं नोपपन्नं भवतीति श्रीमदाचार्येण जीवस्वभावः अधिकोऽङ्गीकृतः। अयंहि परमनियामकः। यतो दुर्योधनवत्स्वभावे दुष्टे सति निग्रहस्सुतरां न किमपि करिष्यति। अत एवोक्तं प्रकाशसहितायाम्॥ "बुध्वाऽप्यसौ यतो नित्यं स्वभावानुगचेष्टितः। स्वभावं यान्ति भूतानि निग्रहः किंकरिष्यती"ति॥ 'प्रकृतिर्नाम प्राग्जन्मकृतधर्माधर्मज्ञानेच्छादिसंस्कारो वर्तमानजन्मन्यभिव्यक्तः सर्वतो बलवान् "तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञाच" इति श्रुतिप्रमाणकः' इति मधुसूदनीये॥ इदं नास्माकमनिष्टं॥ शाङ्करास्तथा रामानुजाचार्यश्च स्वभावानुगतजीवत्रैविध्यं नाङ्गीकुर्वन्ति॥

(ज्ञानवानपि प्रकृतेस्सदृशं चेष्टते इत्युक्तं गीतायां। विवक्षितो ज्ञानवान् 'नित्यनिरन्तरब्रह्मनिष्ठानिर्मूलितसर्ववासनाग्रन्थि'रित्याह शङ्करानन्दः॥ इदं चिंत्यं। अनसूयया श्रद्धयाऽनुष्ठानंहि भगवन्मतं विवक्षितं, यदतिक्रमस्य सदृशमित्यनेन युक्तिरुच्यते। कुतस्सर्वे न कर्मयोगिनो भवंतीत्याकाङ्क्षायां प्रकृतेर्बलवत्त्वादितिह्युत्तरं॥ अद्वैतसाक्षात्कारवतः कर्मयोगातीतस्य पारंगतस्यानुष्ठाननिर्बन्धाभावेन तद्विषये कुतोऽयं नानुतिष्ठतीति प्रश्नोऽनुपपन्नः। एवमनुपपत्तिं पश्यन्निव शङ्करानन्दः 'कर्तव्य कर्म संन्यस्य स्थाणुवत्किमिति ज्ञानी तूष्णी नास्ते' इति प्रश्नाशयमाह॥ तूष्णींभावमाश्रयेतेत्येव भगवन्मतं स मन्यते॥ इदमतिमन्दं भाति। संन्यस्येत्यस्य तूष्णीं भूत्वेत्यर्थः 'युध्यस्व विगतज्वरः' इति तत्रैवोक्तं विरुणद्धि॥ किंच सदृशं चेष्टते इत्यनेन ब्रह्मज्ञानिकृतशरीरयात्रापेक्षिताहारादिसंपादकव्यापारो विवक्षित इति शङ्करानन्दो वक्ति॥ इदं च चिन्त्यं। शरीरयात्रानुकूलव्यापारे कृते का हानिः। तस्यानिषिद्धत्वात्। तमप्यकर्तुं कुतो निग्रहः कर्तव्यः। शुकादयो भोजनमीषत्कुर्वन्तीत्यनेन कुतश्शोकस्संभावितः। तस्माल्लोकदौष्ट्यमादाय सन्मार्गे

विद्यमाने सति कापथे कुतो गच्छति जन इत्यस्यैवोत्तरं श्लोकेन दीयते इति वक्तव्यं । अतः प्रकृतो ज्ञानवान् नापरोक्षज्ञानी, किंतु शास्त्राद्यभ्यासबलेन भगवन्मतकरणाकरणयोरिष्टानिष्टज्ञानवान् विवेकीति गम्यते । तस्य पूर्ववासनादिकं यदि प्रतीपं तर्हि सोऽपि तेनापहृतो भवतीति भावः ॥

'निग्रहः किं करिष्यती'त्यत्र 'मम वाऽन्यस्य वा' इति शङ्करभाष्यं ॥ यदि वासनादिकमन्यथाकर्तुमीश्वरः इच्छन्नपि न समर्थः, तस्य ऐश्वर्यहानिः प्रसज्येत । अतो निग्रह इत्यस्य 'शास्त्रकृतनिग्रहः' इति रामानुजभाष्यं ॥ स्वभावे बलवति सति केवलं मनआदीन्द्रियमात्रनिग्रहो व्यर्थ इत्याशयः । प्रकृतेर्बलवत्त्वेऽपि किमितीश्वरेण न सा निगृह्यते इत्याकांक्षायां ईश्वरो न समर्थः इत्युत्तरं न, किंतु स नेच्छतीति । भगवान् खलु स्वभावपूर्वकर्मवासनाद्यपेक्ष्यैव प्रवर्तयति । एवमेव हि तस्य संकल्पः । प्रकृतेर्दुर्निग्रहत्वं भगवदैश्वर्यं न विरुणद्धि । प्रकृतेर्दुर्निग्रहत्वस्यापि भगवन्निर्मितत्वात्तदधीनत्वाच्च ॥

प्रकृतेर्बलिष्ठत्वे निग्रहस्य व्यर्थत्वे च प्रकाशसंहितावचनमुदाहृतं न विस्मर्तव्यं । किंचैवमुक्तं शिशुपालेन भीष्मं प्रति सभापर्वणि,

"प्रकृतिं यान्ति भूतानि कुलिङ्गशकुनिर्यथा (इति भा. स. ६४)
मा साहसमितीदं सा सततं वाशते किल ।
साहसं चात्मनाऽतीव चरन्ती नावबुध्यते ॥
सा हि मांसार्गलं भीष्म मुखात्सिंहस्य खादतः ।
दन्तान्तरविलग्नं यत्तदादत्तेऽल्पचेतना ॥" (इति भा. स. प. ६७)

अत्र पक्षी विवेक्यपि निगृह्यापि प्रकृतिं यातीति दर्शितं द्रष्टव्यम् ॥

**इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।**
**तयोर्न वशमागच्छेत्तौ ह्यस्य परिपंथिनौ ॥३४॥**

वि ॥ यदि सर्वाणि भूतानि स्वभावानुगुणमेव चेष्टन्ते, निग्रहोऽकिंचित्करः । तर्हि मयि सर्वाणीत्यत्रेतिकर्तव्यतापूर्वं कर्मविधानं, 'ये मे मतमि'त्यादिना तस्य फलोक्तिश्च व्यर्थेत्यत आह ॥ इन्द्रियस्येति ॥ जात्येकवचनं । इन्द्रियाणां चक्षुरादीनामर्थेषु रूपादिषु, इन्द्रियाणां रागद्वेषौ अनुकूले रागः, प्रतिकूले द्वेषश्चेत्येवं रागद्वेषौ व्यवस्थितौ अवश्यं भाविनौ । लोभमोहमदमत्सराणामुपलक्षणं । प्राधान्याद्द्वयोरेवोक्तिः । तदनुरूपा च प्राणिनां चेष्टेति निग्रहोऽकिंचित्करो यद्यपि । तथापि तयोः रागद्वेषयोः । रागादिषड्वर्गवशं न गच्छेत् नाप्नुयात् । कुतः, हि यस्मादस्य श्रेयोर्थिनः तौ परिपंथिनौ, श्रेयोविघातकौ पापहेतुत्वात इत्यर्थः ॥ निग्रहात्सद्यः फलाभावेऽप्यतिप्रयत्नवतो भवत्येव फलमिति भावः ॥ उक्तं हि 'संस्कारो बलवानेषः' इत्यादि । एतच्च योग्यजनविषयं ध्येयं ॥

शं ॥ यदि सर्वो जंतुरात्मनः प्रकृतिसदृशमेव चेष्टते न च प्रकृतिशून्यः कश्चिदस्ति, ततः पुरुषकारस्य विषयानुपपत्तेः शास्त्रानर्थक्यप्राप्ताविदमुच्यते ॥ इंद्रियस्येति । इंद्रियस्येन्द्रियस्यार्थे सर्वेन्द्रियाणामर्थे शब्दादिविषये, इष्टे रागोऽनिष्टे

द्वेष इत्येवं प्रतीन्द्रियार्थं रागद्वेषाववश्यंभाविनौ, तत्रायं पुरुषकारस्य शास्त्रार्थस्य च विषय उच्यते। शास्त्रार्थे प्रवृत्तः पूर्वमेव रागद्वेषयोर्वशं नागच्छेत् । या हि पुरुषस्य प्रकृतिः सा रागद्वेषपुरस्सरैव स्वकार्ये पुरुषं प्रवर्तयति तदा स्वधर्मपरित्यागः परधर्मानुष्ठानं च भवति । यदा पुनः रागद्वेषौ तत्प्रतिपक्षेण नियमयति तदा शास्त्रदृष्टिरेव पुरुषो भवति न प्रकृतिवशः। तस्मात्तयोर्वशं न गच्छेत् ॥ यतस्तौ ह्यस्य पुरुषस्य परिपंथिनौ श्रेयोमार्गस्य विघ्नकर्तारौ तस्कराविवेत्यर्थः ॥

रा ॥ प्रकृत्यनुयायित्वप्रकारमाह ॥ श्रोत्रादिज्ञानेन्द्रियस्यार्थे शब्दादौ, वागादिकर्मेन्द्रियस्यार्थे वचनादौ, प्राचीनवासनाजनिततदनुबुभूषारूपो रागोऽवर्जनीयो व्यवस्थितः। तावेवं ज्ञानयोगाय यतमानं नियमितसर्वेन्द्रियं स्ववशे कृत्वा प्रसह्य स्वकार्येषु संयोजयतः। ततश्चायमात्मस्वरूपानुभवविमुखो विनष्टो भवति । ज्ञानयोगारंभेण रागद्वेषवशमागम्य न विनश्येत् । तौ रागद्वेषौ ह्यस्य दुर्जयौ शत्रू ज्ञानाभ्यासं वारयतः ॥

विचारः

'सदृशं चेष्टते' 'निग्रहः किं करिष्यती'त्यनेन प्रकृतेरजेयत्वमुक्तमिवाभाति। तस्यास्सर्वथा तथात्वे विधिनिषेधशास्त्रं व्यर्थमापद्येत। रागद्वेषयोर्न वशमागच्छेदित्यनुशासनं न संगच्छेत । तस्माद्विरोधपरिहाराय प्रयतितव्यम् ॥

अत्राह मधुसूदनः, "या हि पुरुषस्य प्रकृतिः सा बलवदनिष्टानुबन्धित्वज्ञानाभावसहकृतेष्टसाधनत्वज्ञाननिबन्धनं रागं पुरस्कृत्यैव शास्त्रनिषिद्धे कलंजभक्षणादौ प्रवर्तयति। तथा बलवदिष्टसाधनत्वज्ञानाभावसहकृतानिष्टसाधनत्वज्ञाननिबन्धनं द्वेषं पुरस्कृत्यैव शास्त्रविहितादपि सन्ध्यावन्दनादेर्निवर्तयति॥ तत्र शास्त्रेण प्रतिषिद्धस्य बलवदनिष्टानुबन्धित्वे ज्ञापिते सहकार्यभावात्केवलं दृष्टेष्टसाधनताज्ञानं मधुविषसंपृक्तान्नभोजन इव तत्र न रागं जनयितुं शक्नोति। एवं विहितस्य शास्त्रेण बलवदिष्टानुबन्धित्वे बोधिते सहकार्यभावात्केवलमनिष्टसाधनत्वज्ञानं भोजनादाविव तत्र न द्वेषं जनयितुं शक्नोति। ततश्चाप्रतिबद्धं शास्त्रं विहिते पुरुषं प्रवर्तयति निषिद्धाच्च निवर्तयतीति शास्त्रीयविवेकविज्ञानप्राबल्येन, स्वाभाविकरागद्वेषयोः कारणोपमर्देनोपमर्दान्न प्रकृतिर्विपरीतमार्गे पुरुषं शास्त्रदृष्टिं प्रवर्तयितुं शक्नोतीति न शास्त्रस्य पुरुषकारस्य च वैयर्थ्यप्रसङ्गः॥ तयो रागद्वेषयोर्वशं नागच्छेत्। तदधीनो न प्रवर्तेत निवर्तेत वा। किंतु शास्त्रीयतद्विपक्षज्ञानेन तत्कारणविघटनद्वारा तौ नाशयेत्" इति॥ एतेनेदमुक्तं ज्ञायते। यद्यपि प्रकृतेर्बलमुक्तमतीतेन श्लोकेन। प्रकृतिः पूर्वसंस्कारमात्रं। निस्सहाया प्रकृतिर्वस्तुतो न बलीयसी, रागसहाया द्वेषसहाया च क्रमेण सा पुरुषमविहिते प्रवर्तयति विहितान्निवर्तयति च। रागो द्विदलगर्भितः। अनिष्टसाधनत्वज्ञानाभावपूर्वकेष्टसाधनत्वज्ञाननिबन्धनः। द्वेषश्च द्विदलगर्भितः। इष्टसाधनत्वज्ञानाभावपूर्वकानिष्टसाधनत्वज्ञाननिबन्धनः। दलद्वयेऽन्यतरस्याभावे कार्यभूतरागस्य द्वेषस्य वा नोत्पत्तिः। एवं सति शास्त्रमविहितेऽनिष्टसाधनत्वज्ञानविरहं परिहरति, अतो न रागः। विहिते इष्टसाधनत्वज्ञानविरहं परिहरति, अतो न द्वेषः। एवं रागद्वेषयोश्शास्त्रबलाद्गर्भ एव स्रावे सति संस्कारमात्रात्मिका प्रकृतिर्दुर्बला सती जिता भवतीति॥ इदमत्र वक्तव्यं। प्रकृतेस्स्वतो दुर्बलत्वे 'सदृशं चेष्टते स्वस्याः प्रकृतेः' 'निग्रहः किं

इति वचनं परमगौणमापद्यते । रागद्वेषसहकृता प्रकृतिरेव बलीयसीति श्लोकात्तावगम्यते । निग्रहस्याकिंचित्करत्वस्य स्पष्टमुक्तावपि शास्त्रेण रागद्वेषहारिणा प्रकृतिजयोऽनुपद्मुक्त इति व्याहृतिः स्फुटा भाति ॥ शास्त्रमप्येव निग्रहेण प्रकृतिजयं संपादयतीत्यतः ईश्वरस्यान्यस्य वा महात्मनो निग्रहोऽपि स्यादेव महान् समर्थः ॥ एतेन 'निग्रहः मम वा अन्यस्य वे'ति शङ्करभाष्यमरम्यमापद्यते । अतः पूर्वश्लोकार्थेन प्रकृतस्य मधुसूदनीय संगत्युद्भावनं चिन्त्यं ॥ मधुसूदनवाक्यान्येवात्र विषये वेङ्कटनाथोऽनुलिखति )( इदमत्र श्रीधरनिरूपितं । "अयं भावः । विषयस्मरणादिना रागद्वेषावुत्पाद्यानवहित पुरुषमनर्थेऽपि गम्भीरे स्रोतसीव प्रकृतिर्बलात्प्रवर्तयति । शास्त्रं तु ततः प्रागेव विषयेषु रागद्वेषप्रतिबन्धके परमेश्वरभजनादौ प्रवर्तयति । गम्भीरस्रोतःपातात्पूर्वमेव नावमाश्रित इव नानर्थं प्राप्नोति" इति )( अत्र प्रकृतिशब्देन संस्कारमात्रग्रहणे गमकं दुर्गमं । तत्कार्यरागद्वेषादीनां तेनैव संग्रह उचितः । अन्यथा प्रकृत्याः पूर्वश्लोकोक्तातिबलं न घटेत । स्वभाववाचकत्वस्य च प्रसिद्धेः सोऽप्यर्थो न परित्याज्यो भाति । यः स्वभाववासनातत्कार्यैराकृष्टः स शास्त्रेऽपि न प्रवर्तेत ॥ रागद्वेषोदयात्पूर्वमेव शास्त्रं नौरिव तमुद्धरतीति युक्तिरन्योन्याश्रयदूषिता भवति ॥

(अत्रेदं श्रीमदाचार्याकूतं । प्रकृतिः स्वभावो वा पूर्वसंस्कारजन्यरागादयो वा । सा दुर्निग्रहैव । तर्हि शास्त्रं व्यर्थमिति चेन्न । यद्ययमधिकारी स्वभावतो न तामसः, यदि चायं संस्कारजन्यारिषड्वर्गमात्रजितः । तर्हि महता प्रयत्नेन तानरीन् परिभावयेत् । तं प्रति विधिनिषेधशास्त्रं सार्थकं । यद्यस्य स्वभावोऽपि दुष्टः तर्हि निग्रहोऽकिंचित्करः । रागादिकं न स जयेन्महतापि प्रयत्नेनेति ) अत एवोक्तं विवृत्त्याचार्येण, 'एतच्च योग्यजनविषयं ध्येय'मिति । महाप्रयत्नं विना रागद्वेषाद्युपलक्षकप्रकृतिशब्दाभिधेयस्संस्कारः दुर्जय इत्यनेन 'निग्रहः किं करिष्यती' ति वचनं निर्दुष्टं भवति ॥ निग्रहः किं करिष्यति ? बहुकालानु-

ष्ठितमहाप्रयत्नेन क्रमेणेषदीषत्फलावहो भवतीति यावत् ।। अत्र प्रमाणं 'संस्कारो बलवानेष ब्रह्माद्या अपि तद्वशाः । तथापि सोऽन्यथाकर्तुं शक्यतेऽतिप्रयत्नतः' इति ।।

(ज्ञानयोगस्य दुश्शकत्वोपपादनाय प्रवृत्तोऽयं श्लोकः तथाऽऽध्यायान्त श्लोकाश्चेति मन्वानो रामानुजाचार्यो, "रागद्वेषौ ज्ञानयोगाय यतमानं नियमितसर्वेन्द्रियं स्ववशे कृत्वा प्रसह्य स्वकार्येषु संयोजयतः । ज्ञानयोगारम्भेण रागद्वेषवशमागम्य न विनश्येत् । तौ रागद्वेषौ ह्यस्य दुर्जयौ शत्रू ज्ञानाभ्यास वारयतः" इत्याह।। एतदाशय उक्तो देशिकेन, "तयोर्न वशमागच्छेदित्येतत् नतावद्रागद्वेषनिषेधमात्रपरं, तदाह्यौचित्याज्ज्ञानयोगांगविधानं स्यात् । तच्च ज्ञानयोगानादरणीयताप्रकरणासंगतं । कर्मयोगारंभे तु चिराभ्यस्तसजातीयविषयेषु प्रवृत्तेर्न रागद्वेषयोर्बलात्कार इति भावः" इति ।। अत्रोच्यते ।। इदं ज्ञानयोगानादरणीयताप्रकरणमिति प्रथमोऽस्य भ्रमः । कर्मयोगे रागद्वेषविजयस्य नावसर इति वा तस्य सौलभ्यमितिवा यदभिप्रेत सोऽपि भ्रमएव । रागद्वेषयोर्ज्ञानयोगकर्मयोगयोरुभयोरपि शत्रुत्वात् ज्ञानयोगाय यतमानमेव रागद्वेषौ बाधेते इत्युक्तमसत् । यतस्तौ कर्मयोगिनमपि बाधेते ।। तयोर्न वशमागच्छेदित्यस्य ज्ञानयोगं नारभेतेत्यर्थस्तु क्लिष्टः । तौह्यस्येत्यत्र अस्य ज्ञानयोगिनः इति परामर्शो दुर्गमः । इत्यास्तां ।।

श्लोके 'इन्द्रियस्येन्द्रियस्ये'ति द्विर्वचनं वीप्सायां । सर्वेन्द्रियाणामित्यर्थः। व्यवस्थिताविव्यवश्यंभावित्वं उक्त । रागद्वेषावित्यरिषड्वर्गोपलक्षकःशब्दः ।। 'रागद्वेषादयो मुक्तिघंठापथे लुंटाकवदवस्थिताः' इति सुष्टूक्तं देशिकेन ।। तौह्यस्य परिपंथिनावित्यत्र हिशब्देन वासनामात्रस्य प्रबलत्वेऽपि दुर्वासनाकार्यकामक्रोधलोभमोहमदमात्सर्याणामेव तत्वज्ञानपरिपन्थित्वं इत्युक्तं भवति ।।

**श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।**
**स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ३५ ॥**

वि ॥ (ज्यायसीचेदित्यत्रार्जुनेन कर्मैव न कार्यं, तत्रापि नरकाद्यनर्थहेतुरागद्वेषोपेततया घोरं युद्धाख्यं कर्म तु नैव कार्यमिति कृताक्षेपद्वयमध्ये प्राथमिको 'लोऽकेस्मिन्नि'त्यादिनोत्तरितः । द्वितीयस्त्वधुना 'युध्यस्व विगतज्वरः' 'तयोर्न वशमागच्छेदि'त्याद्युक्त्या स्मारितस्सन् परिह्रियते ॥ श्रेयानिति ॥ स्वधर्मः स्ववर्णाश्रमोचितो धर्मः । विगुणः अङ्गहीनोऽपि । स्वनुष्ठितात् सर्वांगसाकल्येन कृतात्परधर्मादन्यवर्णाश्रमोचितधर्मादपि श्रेयानधिकतरः । कुतः, स्वधर्मे युद्धादौ निधनमपि श्रेयः श्रेष्ठतरं । परधर्मः वर्णाश्रमान्तरधर्मस्तु भयावहः, निषिद्धत्वात् । अनर्थप्रापको यतोऽत इत्यर्थः ॥

शं ॥ तत्र रागद्वेषप्रयुक्तो मन्यते शास्त्रार्थमप्यन्यथा परधर्मोऽपि धर्मत्वादनुष्ठेय एवेति, तदसत् । श्रेयानिति ॥ श्रेयान् प्रशस्यतरः स्वो धर्मः विगतगुणोऽप्यनुष्ठीयमानः, परधर्मात् स्वनुष्ठितात् साद्गुण्येन संपादितादपि । स्वधर्मे स्थितस्य निधनं मरणमपि श्रेयः परधर्मे स्थितस्य जीवितात् । कस्मात्, परधर्मो भयावहः नरकादिलक्षणं भयं आवहति इति ॥

रा ॥ अतस्सुशकतया स्वधर्मभूतः कर्मयोगो विगुणोऽप्यप्रमादगर्भः प्रकृतिसंसृष्टस्य दुश्शकतया परधर्मभूतात्

ज्ञानयोगात् सगुणादपि किंचित्कालमनुष्ठितात् सप्रमादाच्छ्रेयान् । स्वेनैवोपादातुं योग्यतया स्वधर्मभूते कर्मयोगे वर्तमानस्यैकस्मिन् जन्मन्यप्राप्तफलतया निधनमपि श्रेयः । अनन्तरायहततयाऽनन्तरजन्मन्यप्यव्याकुलकर्मयोगारम्भसम्भवात् । प्रकृतिसंसृष्टस्य स्वेनैवोपादातुमशक्यतया परधर्मभूतो ज्ञानयोगः प्रमादगर्भतया भयावहः ॥

विचारः

'तत्किं कर्मणि घोरे मां नियोजयसि' इत्यत्र सति शुद्धकाम्ये यत्यादिधर्मे स्वायत्ते विवक्षाभेदेन काम्याकाम्यभूते वैकल्पिके कर्मणि युद्धाख्ये किं मां नियोजयसि इत्येकः प्रश्नः । तत्र वैकल्पिकनियोगेऽपि मां घोरेऽवर्जनीयकामक्रोधादिकलुषिते युद्धाख्ये कुतो नियोगः ? उक्तं नु भवता 'ध्यायते' इत्यादिना कामादीनां नाशहेतुत्वं । युद्धं खलु कामाद्युद्रेकहेतुः इति द्वितीयः प्रश्नः, इति व्याख्यातं स्मर्तव्यं ॥ तत्राद्यस्य प्रश्नस्य 'लोकेऽस्मिन्नित्यादिना एतावत्पर्यन्तं उत्तरं दत्तं, जनकप्रियव्रतादिवदाधिकारिकपुरुषत्वादर्जुनेन वैकल्पिकं कर्मापि निष्कामनया कर्तव्यमिति ॥ अधुना द्वितीयप्रश्नस्योत्तरं दीयते ॥ अयं भावः, यद्यपि कामाद्युद्रेकहेतुर्युद्धं तथापि त्वं युध्यस्व विगतज्वरः रागद्वेषयोर्वशं नागच्छ । महता प्रयत्नेन इदं संभवति । त्वमत्राधिकारिकः पुरुषः । कुतो महता प्रयत्नेन कामादीन् जित्वा अस्मिन्नेव युद्धाख्ये मार्गे मया स्थातव्य इत्याकांक्षायां वदामि 'श्रेयान्स्वधर्मो विगुणः' इति ॥

अत्र स्वधर्मः क्षत्रगृहस्थधर्मः युद्धं । परधर्मः भिक्षाटनं यतिधर्मः । ईषदवर्जनीयरागादियुतत्वेऽपि युद्धमेव प्रशस्यतरमर्जुनस्य । नत्वन्योऽसंभावितताद्दशदोषोऽपि । अत उक्त विगुणोऽपि स्वधर्मः श्रेयानिति ॥

(अतएव प्रेषितः संदेशः कुन्त्याह्वस्तनदिवसे—

"भैक्षं विप्रतिषिद्धं ते कृषिर्नैवोपपद्यते ।
क्षत्रियोऽसि क्षतात्त्राता बाहुवीर्योपजीविता ॥
ततो दुःखतरं किन्तु यदहं हीनबांधवा ।
परपिंण्डमुदीक्षे वै त्वां सूत्वा मित्रनन्दनं ॥"

इत्युद्योगप० ॥ 'परधर्मो भयावहः' इत्यनेन परधर्मस्य स्वनुष्ठितत्वेऽपि स्वस्य निषिद्धत्वान्नरकाद्यनर्थप्रापकत्वं विवक्षितं ॥ नचवाच्यं 'श्रेयान्' इति स्वधर्मस्य प्रशस्यतरत्वोक्त्या परधर्मस्य प्रशस्यत्वं ध्वन्यते । यदि निषिद्धत्वेन भयावहः परधर्मः तर्हि प्रशस्यत्वमनुपपन्नमिति ।( उच्यते । श्रेयान् इत्यनेनातिशयितप्राशस्त्यं विवक्षितं । न तु परधर्मस्यापि प्रशस्यत्वं । अथवा परधर्मस्यापि यस्य कस्य विवक्षया शास्त्रविहितत्वेन प्रशस्यत्वाभिप्रायश्च युज्यते इति ॥

धर्माणां वर्णाश्रमविवक्षया स्वकीयत्वं परकीयत्वं च वक्तव्यं इति विवृत्याचार्यस्य शाङ्कराणामप्याशयः । रामानुजाचार्यस्यत्वन्यः ( अयमस्य भावः, 'स्वधर्मः' इत्यनेन कर्मयोग उक्तः । परधर्मः ज्ञानयोगः । ज्ञानयोगः प्रशस्यः कर्मयोगः प्रशस्यतरः । कर्मयोगस्याधिकतरत्वं सुशकत्वादिपूर्वोक्तहेतुभ्यः संभवति । ज्ञानयोगस्य जघन्यत्वं दुःशकत्वादिहेतुभ्यः । स्वकीयो धर्मः स्वधर्मः इति न व्युत्पत्तव्यं । अपि तु स्वशक्यो धर्मः स्वधर्म इति । तथा परशक्यो धर्मः परधर्मः ))(यथोक्तं देशिकेन, 'स्वधर्मपरधर्मशब्दौ प्रशस्यतयाऽनादरणीयतया च प्रकृतकर्मयोगज्ञानयोगविषयौ' इति ॥ कर्मयोगस्तावदात्मसाक्षात्कारादिफलायानुष्ठितश्च काम्यो भवति । स्वर्गादिफलायानुष्ठितं कर्म काम्यमिति किमु वक्तव्यं । आत्मसाक्षात्काराद्यर्थमनुष्ठितः कर्मयोगः विगुणानुष्ठितोऽपि जन्मान्तरे सगुणानुष्ठानद्वारा फलं साधयति । वैगुण्यस्य फलविलम्बमात्रप्रयोजकत्वं काम्यकर्मान्तरवन्न फला-

भावप्रयोजकत्व । ज्ञानयोगस्याविच्छेदेन सगुणानुष्ठाने स्यान्महत्फलं । सप्रमादत्वाद्दुःशकत्वान्नैतत्संभावितं । अतः 'स्वनुष्ठितात्' इत्यस्यातीतार्थप्रत्ययबलात्प्रागनुष्ठितात्पश्चाद्विच्छिन्नादित्यर्थो वाच्यः । कर्मयोगे निधनं श्रेयः । जन्मान्तरे फलस्य संभवात् । ज्ञानयोगस्य तु जन्मान्तरेऽपि न फलं । स्वरूपेण विच्छिन्नस्य कथं जन्मान्तरेऽपि फलं । अतएव ज्ञानयोगो भयावहः। अत्र युक्तयः—(१) परवर्णाश्रमधर्मानुष्ठानस्य दूरतो निरस्तत्वेन तन्निषेधायोगः । (२) परवर्णाश्रमधर्माननुतिष्ठामि इत्यर्जुनेनानुक्तत्वादप्रसक्तमिदं । (३) विवक्षितस्य पुरुषस्य यः परो धर्मो भवति स तस्याविहितत्वादधर्मएव । तस्य धर्मत्वमेव यदा नास्ति प्रशस्यत्वं दूरोत्सारितं ज्ञेयं इत्यादयः इति ]

(अयमुक्तः संग्रहः रामानुजभाष्यदेशिकटीकाभ्यामधिगतो वेदितव्यः। अत्रोच्यते ( स्वशक्यो धर्मः स्वधर्म इति व्याख्यानं क्लिष्टं, प्रसिद्धार्थेनैवोपपत्तेः। धर्मत्वाविशेषेऽपि वर्णाश्रमविवक्षया स्वकीयत्वपरकीयत्वयोरुपपन्नत्वात् ॥ ननूक्तं अन्यवर्णाश्रमधर्मस्य अन्य प्रत्यधर्मत्वमेवेतीति चेन्न । क्षत्रियं प्रति शूद्रधर्मस्याधर्मत्वेऽपि शूद्रं प्रति तस्य धर्मत्वात् परधर्म इत्युक्तेरुपपद्यमानत्वात् । यः शास्त्राविहितः सोऽधर्मः यःशास्त्रविहितः सः धर्म. इति वर्णाश्रमविभागाविवक्षया धर्माधर्मशब्दयोरुपपत्तौ वर्णाश्रमभेदमादायानंतरं स्वपरशब्दौ युज्येते । यदुक्तं परवर्णाश्रमधर्ममनुतिष्ठामि इत्यर्जुनेन नोक्तमिति, तन्न । यतः 'तत्किं कर्मणि घोरे मां नियोजयसी'त्यनेनार्जुनोहि स्वधर्म युद्धं विहाय यत्याश्रमविहितं शुद्धाकाम्यं करोमि इत्युक्तवान् । किंच दुःशकस्य ज्ञानयोगस्य परधर्मत्वेनोक्तिः कथमुपपद्यते। यतः सर्वेषामपि कर्मयोगः सुशकः ज्ञानयोगो दुःशकः। अतः परशब्देन विवक्षितःपुरुषः रामानुजराद्धान्ते न ज्ञायते । 'स्वनुष्ठितात्' इत्यनेन किंचित्कालमनुष्ठित पश्चाद्विच्छिन्नं इत्यर्थश्च बहुक्लिष्टः । भूतार्थस्यापि प्रत्ययस्यातीतकालविवक्षाऽत्र न विद्यते । विच्छेदार्थस्याक्षरलब्धत्वं न सिध्यतीत्ययं केवलमुत्प्रेक्षामूलकः । किंच ज्ञानयोगस्यानादरणीयताप्रकरणमिदमिति

भ्रान्त्वा यत्तस्य जघन्यत्वमुक्तं तदनुपपन्नं । आत्मसाक्षात्काराय कृतः कर्मयोगोऽपि काम्यकर्मेति निरूपणमप्रामाणिकं, ईश्वरभक्तिज्ञानेच्छाया अनिषिद्धत्वात् विहितत्वाच्च । आत्मसाक्षात्काराय कर्मयोगो विगुणानुष्ठितोऽपि जन्मान्तरे सगुणानुष्ठानद्वारा फलं साधयतीति अस्य भावो न सुगमः । एतेन आत्मसाक्षात्कारार्थित्वमेव वैगुण्यं विवक्षितं, अथवा किमप्यन्यदंगवैधुर्यमिति न ज्ञायते । आद्ये तत् वैगुण्यमेव न । साद्गुण्यप्रकारश्च न निरूपितः। आत्मसाक्षात्कारार्थित्वमपि विहाय कर्मयोगः कर्तव्यः तदेव साद्गुण्यमभिप्रेतं इतिवा अन्यद्वेति न ज्ञायते । वैगुण्ये सति कर्मयोगस्य जन्मान्तरफलाधायकत्वे ज्ञानयोगस्यापि दुःशकत्वेन विच्छेदे सति कुतो जन्मान्तरे पुनस्संधानं न संभवेत् । अत्र गमकप्रमाणं नोदाहृतं । इत्येषा दिक् । अलं बहुना ॥

तस्माद्वर्णाश्रमविवक्षयाऽन्यस्य धर्मः अन्यस्यानुचित इत्येवार्थस्साधीयान् । इममर्थं प्रतिपाद्य यद्वेति अन्यमप्याहोत्कर्षदीपिकाकारः, "परेषामिन्द्रियाणां,धर्मात् प्रावृत्तिकात्स्वनुष्ठितात्सुगमत्वेनानुष्ठातुं शक्यादपि,स्वधर्मः आत्मधर्मः अध्यात्मावगतिरूपः, विगुणः प्राकृतगुणवियुक्तः मुक्तिहेतुत्वात्प्रशस्यतरः। तत्र निधनं श्रेयः, अपुनर्भवत्वात् । परधर्मो भयावहः, अविद्यारूपतया संसारपातहेतुत्वात्" इति ॥ एतेनेदमुक्तं ज्ञायते । प्रवृत्तिमार्गान्निवृत्तिमार्गः श्रेयान् । आद्येन संसारः, द्वितीयेन मोक्षः, इति तयोर्वैलक्षण्य । अतो द्वितीयमनुसर इति । इदं 'युध्वस्व विगतज्वरः' इत्यनेन बाधितं । यतोऽस्याद्वैतिनः समये अध्यात्माधिगतिरूपो मार्गः कर्मसामान्यं विरुणद्धि । किंच 'परधर्मः' इत्यत्र परशब्देनेन्द्रियाणां ग्रहणं क्लिष्टं । 'विगुणः' इत्यस्य प्राकृतगुणवियुक्तत्वार्थश्च तथैव । 'निधनं' इत्यस्यापुनर्भवः कथमर्थो भवेत् । बह्वध्याहारादिकलुषितमिदं व्याख्यानमित्युपेक्ष्यते ॥

अर्जुन उवाच—

**अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।**
**अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ३६**

वि ॥ तयोर्न वशमागच्छेदित्यत्रातिप्रयत्नवतः पापहेत्वरिषड्वर्गजयश्शक्य इत्युक्तं । तेषु को बलवान् तं महाप्रयत्नेन जेष्यामीति भावेन पृच्छति ॥ अथेति । मयि संन्यस्य कर्माणीत्यादावुक्तसेतिकर्तव्यताककर्मकर्तव्यतारूपप्रकृतप्रमेये पापहेतुप्रश्नोऽनुपयुक्तः । तथापि तयोर्नवशमागच्छेदित्यर्थे कामाद्यरिषड्वर्गस्य पापहेतुत्वोक्त्या स्मारितं । तेषु प्रबलपापहेतुप्रश्नोऽयं प्रासङ्गिक इति भावेन गीताकृता प्रकृतादर्थादर्थान्तरद्योतकोऽथशब्दः प्रयुक्तः । यद्वा प्रकृतेः क्रियमाणानीत्यत्रेश्वरस्य सर्वप्रेरकत्वोक्त्या तत्प्रेरकत्वस्य, पार्थस्य देवत्वेन देवानां प्रेरकत्वस्य च ज्ञाततया तत्र प्रश्नायोगात् । इन्द्रियस्येत्यत्र रागशब्दितकामाद्यरिषड्वर्गस्य प्रवर्तकत्वोक्त्या परमेश्वरात् देवजाताच्चाथानन्तरं कामादिषट्सु बलवत्प्रश्नोऽयमिति द्योतनादानन्तर्यवाच्ये वायमथशब्दः । तथाचायमर्थः । अथ परमेश्वराद्देवेभ्यश्चानन्तरं, अयं पुरुषः पापाचारमनिच्छन्नपि बलान्नियोजित इव पापं चरति । स कामादिषु केन बलवता प्रयुक्तः प्रेरितश्चरति । हे वार्ष्णेय वृष्णिकुलोद्भवेति ॥

शं ॥ यद्यपि अनर्थमूलं 'ध्यायतो विषयान्' 'रागद्वेषौ' 'तौह्यस्य परिपन्थिनौ' इति चोक्तं । विक्षिप्तमनवधारितं च यदुक्तं, तत्संक्षिप्तं निश्चितं चेदमेवेति ज्ञातुमिच्छन् अर्जुन उवाच । ज्ञाते हि तस्मिन् तदुच्छेदाय यत्नं कुर्यामिति । अथेति ॥ अथ केन हेतुभूतेन प्रयुक्तः सन् राज्ञा इव भृत्यः अयं, पापं कर्म चरति आचरति पूरुषः पुरुषः स्वयमनिच्छन्नपि । हे वार्ष्णेय वृष्णिकुलप्रसूत । बलादिव नियोजितो राज्ञा इवेति उक्तः दृष्टान्तः ॥

रा ॥ अथायं ज्ञानयोगाय प्रवृत्तः पुरुषः स्वयं विषयाननुभवितुमनिच्छन्नपि केन प्रयुक्तो विषयानुभवरूपं पापं बलान्नियोजित इव चरति ॥

विचारः

अत्र पापहेतुगोचरप्रश्नस्य का सङ्गतिरिति विचार्यं । इयं साक्षाद्वा प्रासंगिकीवेति संदिह्यते । किंच पापहेतवो बहुधा निरूपिताः अतीतेषु ग्रन्थेषु । तथाहि द्वितीयाध्याये 'ध्यायतो विषया'नित्यारभ्य 'प्रणश्यती'-त्यन्तेन विषयध्यानसङ्गकामक्रोधसंमोहस्मृतिभ्रंशबुद्धिनाशानां नाशकारणत्वमुक्तं । 'इन्द्रियाणां हि चरता'मित्यनेन विषयभोगैः प्रज्ञाहरणं च प्रतिपादितं । तृतीयाध्याये च 'प्रकृतेः क्रियमाणानि' 'प्रकृतेर्गुणसंमूढाः' 'सदृश चेष्टते' इत्यादिभिर्ज्ञानविरोधमुक्त्वा 'रागद्वेषौ व्यवस्थितौ तयोर्नवशमागच्छेत्तौह्यस्य परिपान्थिनौ' इत्युक्तं । एतेन द्वेषशब्देन क्रोधलोभमोहमदमात्सर्याणां ग्रहणमुचितमिति अरिषडवर्गस्य पापहेतुत्वं उक्तं भवति । एवं पौनःपुन्येन कामादीनां पापप्रवर्तकत्वेनोपदेशे कृतेऽपि अर्जुनः कस्मात्पुनः अथके-

नेति पृच्छतीति संदेहबीजं ॥ अस्योत्तरं शंकरभाष्योक्तमिदं " विक्षिप्तमनवधारितंच यदुक्त, तत्संक्षिप्तं निश्चितं चेदमेवेति ज्ञातुमिच्छन्नर्जुन उवाच" इति ॥

अत्र चिन्त्यते । बहुग्रन्थेनोक्तावपि अर्जुनस्य निश्चयज्ञानाभावे निमित्तं न ज्ञायते । विक्षेपोऽपि निश्चयप्रतिबन्धकतया बहुतरं न दृश्यते । अनवधानचित्तत्वस्य ज्ञापकं न किमप्युत्तरग्रन्थादिना भगवद्वचनेन दृश्यते । भगवच्छिष्यस्यैतादृशमौढ्यकल्पनमनुचितं, अतः शांकरं समाधानमसत् ॥

प्रकारान्तरेण नीलकण्ठः प्रश्नबीजं कल्पयति । 'अयमस्य भावः, पुरुषस्य प्रवर्तकास्तावदीश्वरो वा धर्माधर्मौ वा रागद्वेषौ वा भवितुं योग्याः । तत्र रागद्वेषौ न भवतः, अनिच्छतः पुरुषस्य पापहेतुः कः इति प्रश्नेनेच्छापरपर्यायभूतरागस्य व्युदस्तत्वात् । नापि धर्माधर्मौ, यतो रागद्वेषव्युदासे सति तन्मूलभूतसंस्कारस्य व्युदासः । संस्काराभावे तु धर्माधर्मयोः प्रवर्तकत्व च व्युदस्तं भवति । नापि ईश्वरः प्रवर्तक इत्युचितं, धर्माधर्मसापेक्षतयाहीश्वरः प्रवर्तयति । तदभावेत्वीश्वरस्य प्रवर्तकत्वं च व्युदस्तं । तस्मादेवं सर्वेषु संभावितप्रवर्तकेषु बहिष्कृतेषु सत्सु प्रवर्तकमजानन् कः प्रवर्तक इति पृच्छती'ति ॥ अत्रोच्यते । अनिच्छन्नित्यनेन रागद्वेषयोः प्रवर्तकत्वमर्जुनेनाक्षिप्तं व्युदस्तमिति च यदभिप्रेतं तन्न । यद्येवमाक्षेपोऽभिप्रेतः स्यात् तर्हि भगवान् प्रतिवचनग्रन्थे कामस्य प्रबलारित्वप्रतिपादके अनिच्छन्नित्यनेनाक्षिप्तविरोधस्योपपत्तिमवक्ष्यत् । साच नोक्ता दृश्यते ॥ वस्तुतस्तु इच्छाशब्दोऽनेकभावगर्भितः ॥ यद्यपि इच्छां विना प्रयत्नमात्रमनुपपन्नमिति सामान्यतो व्यवह्रियते । चोरभयेन यदा पुमान् स्वधनं विसृजति तत्र पुंसो धनप्रदाने इच्छाऽस्तीति न वक्तुं शक्यते । इच्छा नामात्राभिलाषविशेषः । चेतनप्रवृत्तिसामान्यमूलं इच्छातु न नियमेनाभिलाषस्वरूपा इति विवेकोऽधिगन्तव्यः । तथाचाभिलाषाभावरूपाया अनिच्छायास्सत्वेऽपि विवेकबलेन

निरुन्धतोऽपि पुरुषस्य निर्बन्धेनैव प्रवृत्तिर्दृश्यते । तस्याः निमित्तबुभुत्सायां अनिच्छन्नित्यनेन व्याहृतिर्न विद्यते । एतेनैव धर्माधर्मयोरप्रवर्तकत्वं ईश्वरस्य चाप्रवर्तकत्वं नाभिप्रैत्यर्जुन इत्यपि स्फुटम् ॥

कश्शत्रुरिति वा शत्रुषु को बलवानिति वाऽर्जुनः पृच्छतीति सन्देहे संभाविते शत्रुव्यक्तिविषयक एव प्रश्न इति नीलकण्ठवदन्ये सर्वेऽपि व्याख्यातारो मन्यन्ते ॥ आह श्रीधरः, 'कामक्रोधौ विवेकबलेन निरुन्धतोऽपि पुरुषस्य पुनः पापे प्रवृत्तिदर्शनादन्योऽपि तयोर्मूलभूतः कश्चित्प्रवर्तको भवेदिति संभावनायां प्रश्नः' इति ॥ नाय शत्रुस्वरूपप्रश्नः । किंतु ज्ञातेषु शत्रुषु प्राबल्यगोचरः प्रश्नः इति श्रीमदाचार्यो मन्यते ॥ 'ध्यायत' इत्यादिग्रन्थेन कामादीनामरित्वं यत्प्रतिपादितं तद्विस्मृतं इति पक्षमुपेक्ष्य कामादीनां सर्वेषां अरित्वमाक्षिप्यान्यं शत्रुं ज्ञातु पृच्छत्यर्जुन इति च पक्षोऽप्युपेक्षणीय इत्यभिप्रयन् कामक्रोधादिषु मध्ये को बलवान् अरिः इति प्रश्नाशयमाह । सावधानेन मनसा ध्यायत इत्याद्युक्तं प्रमेयजातं व्यजानात्, न विस्मृतवांश्चार्जुनः । तेषु परस्परं प्राबल्यदौर्बल्यपरीक्षातु नाद्यावधि कृतेति षट्स्वरिष्वन्यतमप्राबल्यं पृच्छ्यत इत्युक्तौ न काप्यनुपपत्तिः । अत एव मधुसूदनोऽप्याह । 'तत्र किं सर्वाण्यपि समप्राधान्येन कारणानि । अथवैकमेव मुख्यं कारणं इतराणि तु तत्सहकारीणि केवलं इति । अयं मधुसूदनीयसंवादः श्रीमदाचार्यार्थं विशेषतो द्रढयति । अस्मिन्नर्थे 'केन' इत्येकवचनस्य सार्थक्यं सुगमं । अनेकेषु शत्रुषु प्रबलतमस्यैकस्य पृष्टत्वात् ॥

(कर्म कर्तव्यं । कथं कर्तव्यं । एवं कर्तव्यं इति सेतिकर्तव्यताककर्मकर्तव्यताप्रकरणे पापप्रेरकेषु को बलवान् इत्यस्य साक्षात्सङ्गतिर्न विद्यते । परन्त्वस्य स्मारितत्वेनोपेक्षानर्हत्वरूपा प्रासङ्गिकी सङ्गतिः सुवचा । यतः 'रागद्वेषौ व्यवस्थितौ । तयोर्नवशमागच्छेत्तौह्यस्य परिपन्थिना' वित्युक्तेन

परिपन्थित्वे ज्ञाते सति परिपन्थिषु प्राबल्यदौर्बल्यपरीक्षा स्मारिता प्रश्नमूलं भवितुमर्हति ॥

'अथ केने'त्यत्राथशब्दः प्रकृतादर्थादर्थान्तरद्योतकः । "मङ्गलानन्तरारंभप्रश्नकार्त्स्न्येष्वथो अथ" इत्यमरः ॥ प्रश्नार्थको वा कार्त्स्न्यपरोवेति देशिकोऽभिप्रैति ॥ केनेत्यनेन प्रश्नस्य स्फुटत्वात् अथशब्दस्यापि तादर्थ्यं व्यर्थं । कार्त्स्न्यार्थस्त्विहानुपपन्नः । अथवा अथशब्दोऽत्रानन्तर्यार्थिकः । 'प्रकृतेः क्रियमाणानि' इत्यत्र सर्वकर्म प्रतीश्वरस्य स्वतन्त्रकर्तृत्वमुक्तं । ईश्वरः उत्तमः प्रवर्तकः । इन्द्रियाभिमानिदेवानां अधीनप्रवर्तकत्वं च प्रमितं । देवत्वेनेममर्थं स्वयमर्जुनो जानाति । मध्यमप्रवर्तका देवाः । कालनेम्याद्यभिमन्यमानाः कामादयोऽधर्मप्रवर्तकाः । ईश्वरादनन्तरं देवेभ्यश्चानन्तरं येऽधर्मप्रवर्तकाः विद्यन्ते तेषु को बलवानिति प्रश्नाशयः । अथशब्देनेदमुक्तं भवति । प्रवर्तकमीश्वरं न मे वद । तमर्थं जानामि । नापि देवान् प्रवर्तकान् वद । तानपि जानामि । एतदुभयानन्तरं प्रवर्तकतया विद्यमानेष्वाक्तनेषु मम प्रश्नः इति ॥

'केन प्रयुक्तः' इत्यनेन केन प्रबलेनेत्यर्थो विज्ञायते । बलादिवेत्युक्त्याऽयमेवार्थो दृढीकृतः । यथा वा उदकादिकं बलादनिच्छन्तमपि हरति निमज्जयति वा, तथा कामादिषु शत्रुषु कश्चित्प्रबलो भाति, यस्य जयादन्ये स्वत एव पराजीयन्ते इति ॥

ज्ञानयोगस्य दौर्बल्यनिरूपणावसरे विषयभोगस्य ज्ञानयोगशत्रुत्वेन विषयभोगमनिच्छन्तमपि विषयेषु कः प्रवर्तयिता ज्ञानयोगारिरिति संगतिमभिप्रैति रामानुजभाष्य ॥ अथेति प्रश्नः, केनेत्याक्षेपः इति देशिकः प्रदर्शयति । स आह 'सदृशं चेष्टते इत्यादिना वासनानुवर्तित्वमुक्तं । वासनाच चेतनस्येच्छाद्वारेण प्रवर्तिका । एवंचसति ज्ञानयोगमिच्छतस्तद्विरोधितया

विषयानुभवमनिच्छतोऽपि कथं वासना विषयानुभवे प्रवृत्तिहेतुरिति पृच्छति' इति । अत्रेदं वक्तव्यं । पापशब्दस्य विषयानुभवरूपोऽर्थः क्लिष्टः । न हि सर्वोऽपि विषयानुभवो निषिद्धः । निषिद्धत्वमविवक्षित्वा प्रयोग इत्युक्तौ तु पापशब्देन कर्मयोगस्य वा कर्ममात्रस्य वा ग्रहणे निमित्तं न ज्ञायते ॥ इच्छाभावेऽपि कथं केवलवासना विषयानुभवे हेतुरिति प्रश्नश्चेत् इच्छा-वैधुर्येऽपि वासनायास्सामर्थ्यविशेष एव प्रतिवचनेन निरूपणीयः, 'काम एषः' इत्यादि प्रतिवचनं त्वसंबद्धं आपद्यते । किंच विषयानुभवो ज्ञानयो-गस्यैव विरोधी न कर्मयोगस्येति यन्मतं, तदसत् । वस्तुतस्तु निषिद्धविषय-भोगः कृत्स्नस्यापि योगस्य विरोध्येव । इत्यलं विस्तरेण ॥

'वार्ष्णेये'ति सबोधनेन वृष्णिवशेऽवतीर्णेन त्वया तद्वंशप्रसूतकुन्ती-तनयोऽहमनुपेक्षणीय इति क्वचिद्व्याख्यात । 'ब्रह्मविदां ब्रह्मानन्दामृतं वर्ष-तीति वृष्णिः सम्यग्बोध. । तेनावगम्यते इति वार्ष्णेयः परमात्मे'ति शङ्करानन्दः ॥

*श्रीभगवानुवाच-*

## काम एष क्रोध एष रजोगुणसमुद्भवः ।
## महाशनो महापाप्मा विद्ध्येनमिह वैरिणं ॥३७॥

वि ॥ काममूलत्वात्सर्वेषां सएव बलवानित्याह ॥ काम एष इति ॥ एष त्वया पृष्टः पुरुषस्य पापेषु बलवान्प्रवर्तक इत्यनूद्य कामइति विधीयते । एष कामः एष क्रोधः, 'कामा-त्क्रोधोऽभिजायते' इत्युक्तेः कामजत्वात्क्रोधस्य कार्यकारण-

योगोभिश्श्रीणीत मत्सरमित्यादाविवाभेदोपचारेणेयमुक्तिः ॥ सच क्रोधो रजोगुणात्समुद्भवतीति स तथा, कामनिमित्तको रजोगुणपरिणाम इत्यर्थः। क्रोध इत्युपलक्षणं। तथाच कामनिवृत्तौ तन्मूलाः क्रोधादयः पापहेतवो निवर्तयितुं शक्यन्ते इति कामनिवृत्तावेवातिप्रयत्नः कार्य इति भावः॥ कामस्य यावदपेक्षितं दत्त्वा जेतव्यः स इत्यतः कामं विशिनष्टि॥ महाशनः महदशनं भोग्यं विषयो यस्य तथा। महत्पाप्म पापं ब्रह्महत्यादिरूपं यस्मात्स तथा। इह, ऐहिकामुष्मिकपुरुषार्थविषये, एनं कामं, वैरिणं नित्यं अशुभेष्वेव प्रवर्तकतया मोक्षविरोधित्वात् शत्रुभूतं विद्धि जानीहि॥ कामाभिमानी कालनेमिर्ज्ञेयः॥

शं॥ श्रुणु त्वं तं वैरिणं सर्वानर्थकरं, यं त्वं पृच्छसि इति श्रीभगवानुवाच॥ "ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। वैराग्यस्याथ मोक्षस्य षण्णां भग इतीरणा॥" ऐश्वर्यादिषट्कं यस्मिन् वासुदेवे नित्यमप्रतिबन्धत्वेन सामस्त्येन च वर्तते। "उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिं। वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति" उत्पत्त्यादिविषयं च विज्ञानं च यस्य स वासुदेवो वाच्यो भगवानिति॥ काम इति। काम एष सर्वलोकशत्रुर्यन्निमित्ता सर्वानर्थप्राप्तिः प्राणिनां। स एष कामः प्रतिहतः केनचित्क्रोधत्वेन परिणमते। अतः क्रोधोऽप्येष एव। रजो-

गुणसमुद्भवः, रजश्च तत् गुणश्च रजोगुणः । तस्मात्समुद्भवो यस्य सः कामो रजोगुणसमुद्भवो, रजोगुणस्य वा समुद्भवः। कामोह्युद्भूतो रजः प्रवर्तयन् पुरुषं प्रवर्तयति । तृष्णया ह्यहंकारित इति दुःखितानां रजःकार्ये सेवादौ प्रवृत्तानां प्रलापः श्रूयते । महाशनो महदशनमस्येति महाशनो, अत एव महापाप्मा, कामेन प्रेरितो जन्तुः पापं करोति । अतो विद्ध्येनं काममिह संसारे वैरिणम् ॥

रा ॥ अस्योद्भवाभिभवरूपेण वर्तमानगुणमयप्रकृतिसंसृष्टस्य ज्ञानायारब्धस्य, रजोगुणसुमुद्भवः प्राचीनवासनाजनितश्शब्दादिविषयः कामो महाशनः शत्रुः विषयेष्वेनमाकर्षति । एष एव प्रतिहतगतिः प्रतिहातिहेतुभूतचेतनान् प्रति क्रोधरूपेण परिणतो महापाप्मा परहिंसादिषु प्रवर्तयति। एनं रजोगुणसमुद्भवं सहजं ज्ञानयोगविरोधिनं वैरिणं विद्धि ॥

विचारः

प्रवर्तकेषु को बलवानित्यस्योत्तरं काम इति । ननु 'इन्द्रियस्ये'ति श्लोकेन रागद्वेषयोरुभयोर्हि परिपंथित्वमुक्तामिति चेत् क्रोधस्य कामजन्यत्वात् तस्य काम एवान्तर्भावो द्रष्टव्यः । 'कामात्क्रोधोऽभिजायते' इति कारणकार्यभावोऽन्वयमुखेनाधिगम्यते । 'ऋते कामं न कोपाद्या जायन्ते च कथंचन' इति व्यतिरेकमुखेन सएव दृढीकृतः ॥ 'क्रोध एषः' इति क्रोधस्य कामाभेदो विवक्षितः, क्रोधस्य स्वातन्त्र्येण पापप्रवर्तकत्वं नेति यावत् । अन्यथा काम एष क्रोधश्चेत्युक्त्वा विद्धयेताविह वैरिणौ इति भगवानवक्ष्यत् । द्विवचनं

विहायाऽऽध्यायान्तमेकवचनेन एको बलवान् रिपुः पृष्टः स एवोक्तः इति विज्ञायते ॥ तथाहि (श्लो० ३७) महाशनो, महापाप्मा, एनं, वैरिणं । (३८) तेन, एतेन, कामरूपेण । (३९) अस्याधिष्ठान, एषः । (४०) एनं । (४१) कामरूपं दुरासदं (४३) इत्येकवचनप्रयोगाः ॥

क्रोधस्य कामाभेदेऽभिहितेऽपि उपचारेणेयमुक्तिर्द्रष्टव्या । कार्यकारणयोरुपचारेणैक्यव्यपदेशस्तु 'पातालमेतस्य हि पादमूलं' 'ब्राह्मणोऽस्य मुखमासी'दित्यादिप्रयोगेषु सिद्धः ॥ कामक्रोधयोरेकान्तःकरणोपादानत्वेन क्रोधस्य कामाव्यवहितोत्तरकालोत्पन्नत्वरूपानन्तर्याच्च तयोस्सूक्ष्मं भेदं अजानन्तः 'काम एव केनचित्प्रतिहतः क्रोधत्वेन परिणमते' इति शाङ्कराः कामस्य क्रोधोपादानकारणत्वमाहुः । तन्मते उभयोर्गुणत्वेन परस्परोपादानकारणत्वं न सङ्गच्छते ॥ अस्मन्मतेत्वन्तःकरणस्य द्रव्यत्वाद्युक्तमुपादानत्वं ॥

सर्वेषां पापप्रवर्तकाणां मूलभूतः कामः इत्यर्थः शास्त्रेषु सुप्रसिद्धः । आह मनुः—

"अकामस्य क्रियाः काश्चिद्दृश्यन्ते नेह कस्यचित् ।
यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितं" इति ॥

निरूपितश्च भारते कामाख्यद्रुमेण मोहादीनां संबन्धः—

"हृदि कामद्रुमश्चित्रो मोहसंचयसंभवः ।
क्रोधमानमहास्कंधो विधित्सापरिषेचनः ॥

तस्य चाज्ञानमाधारः प्रमादः परिषेचनं ।
सोऽभ्यसूयापलाशो हि पुरा दुष्कृतसारवान् ॥

संमोहचिन्ताविटपः शोकशाखो भयांकुरः ।
मोहिनीभिःपिपासाभिर्लताभिरनुवेष्टितः ॥

उपासते महावृक्ष सुलुब्धास्तत्फलेऽसव. ।
आयसैः संयुताः पाशैः फलदं परिवेष्टय त" इति ॥

तथोक्तंच श्रुतौ (बृहदा) IV 5-6, "काममय एवायं पुरुष इति । स यथाकामो भवति तत्क्रतुर्भवति । यत्क्रतुर्भवति तत्कर्म कुरुते । यत्कर्म कुरुते तदभिसंपद्यते" इति ॥ अत एव कामनिवृत्तौ मोक्षस्य क्रमेण प्राप्तिरुक्ता, "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इति ॥

'कामः' इति गीतोक्त्या तदभिमानिनोऽसुरस्य कालनेमिनोऽपि संग्रहः । गीतोक्तं बलं तस्यासुरस्य ब्रह्मतर्के प्रतिपादित द्रष्टव्य,

'अखिलप्रेरको विष्णुः ब्रह्माद्याः तदवान्तराः ।
असुरा असुरेष्वेव कामादेरभिमानिनः ।

तत्र कामः कालनेमिः सर्व धूममलोल्बवत् ।
शुभमध्याधमजनं क्रमादावृत्य तिष्ठति ॥

महाशनस्य तस्येदं नालन्तेनानलोऽग्निवत् ।
भुंजान इन्द्रियाविष्टो ज्ञानास्त्रेणैव दह्यते' इति ॥

'रजोगुणसमुद्भवः' इति । रजोगुणादुत्पन्नः क्रोधः इत्येवमुच्यते इति विवृत्याशयो भाति । अन्ये व्याख्यातारस्तु कामस्यापीदं विशेषणं मन्यन्ते । अयं तेषामाशयः, राजसो गुणः रागः रंजनात्मिका वैषयिकी सामान्येच्छा । स एव विषयसन्निधाने काममुद्भावयतीति कामो रजोगुणसमुद्भवः । यद्वा क्रिया रजोगुणः । क्रियायाः प्रवर्तकः कामः इति स रजोगुणसमुद्भवः ।

'प्रज्ञान्तु सात्विकीं प्राहुस्तामसीं तु विचित्तताम्

क्रियां तु राजसीं प्राहुर्गुणतत्वविदो बुधाः' इत्युक्त्या क्रियाया राजसत्वं प्रसिद्धं ।

'यत्तु कामेप्सुना कर्म साहङ्कारेण वा पुनः ।
क्रियते बहुलायासं तद्राजसमुदाहृतं॥' इति गीता (VIII 24)॥

'रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥' इति च (XVIII 27)

एतेन रजोगुणादुत्पन्न रजोगुणमुत्पाद्य प्रवर्तकश्चेति द्वेधाव्याख्यातं द्रष्टव्यं ।

(इदमुक्तं मधुसूदनीये, 'यद्यपि तमोगुणोऽपि तस्य कारणं । तथापि दुःखे प्रवृत्तौ च रजस एव प्राधान्यात्तस्यैव निर्देशः । कामोहि विषयाभिलाषात्मकः स्वयमुद्भूतो रजः प्रवर्तयन्पुरुषं दुःखात्मके कर्मणि प्रवर्तयति तेनायमवश्यं हन्तव्यः' इति ॥ रजोगुणादुत्पन्नौ कामक्रोधाविति देशिकस्याप्यभिप्रायः । 'विषयानुभववासनाबीजानां कामक्रोधाद्यंकुरोत्पादने रजोगुणस्सलिलसेकः' इति तद्वाक्यं । किंच यदनेनोक्तं, 'औष्ण्याश्रयदहनसंयोगाद्यथाकरतलादौ स्फोटादिः तथा गुणाश्रयप्रकृतिसंसर्गादात्मनि कामादिः' इति )(तस्याशयो दुर्गमः । कामादीनामात्मीयत्वेनामानसधर्मत्वं मत्वा आत्मधर्माणां प्राकृतरजोगुणात्समुद्भवः कथमित्याक्षेपस्येदं समाधानं देशिकेनाभिहितं ज्ञायते )(इदमत्र चिन्त्यते । कामादीनामन्तःकरणोपादानत्वं हि प्रमितं । यतः, 'प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान्' इति भगवतैव कामानां मनोगतत्वमुक्तमिति ॥

तावत् उपायाश्चत्वारः प्रसिद्धाः सामदानभेददण्डा इति । तत्र दानं निष्प्रयोजनं कामजय इति बोधनाय 'महाशनः' इति

विशेषणं । सामभेदयोर्व्युदासाय 'महापाप्मे'त्युक्तिः । अतो दण्ड एव समुचितः इति मधुसूदनादय उपपादयन्ति ॥ कामस्य यावदपेक्षितदानेन सन्धानमशक्यं,

"यत्पृथिव्यां व्रीहियवं हिरण्यं पशवस्त्रियः ।
एकस्यापि न पर्याप्तं तस्मात्तृष्णां परित्यजेत् ॥
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥"

इति ययातिवचनं भारते ॥ महापाप्मेत्युग्रत्वं गम्यते । अतस्साम-भेदाभ्यां सन्धातुमशक्योऽयं कामः । महत् पाप्म यस्मादिति बहुव्रीहिः । 'काम एषः' इति पापकारणत्वेनोक्त्वा कथं कामो 'महापाप्मे'त्युच्यते इति सन्देहो बहुव्रीह्याश्रयणेन परिह्रियते ॥

'इह वैरिणं' इत्यत्र इहेत्यस्य ऐहिकामुष्मिकपुरुषार्थविषये इत्यर्थः । 'अस्य प्रमादवत्तया बुभुत्सितज्ञानयोगविषये' इति देशिकव्याख्या । ज्ञान-योगस्यानादरणीयतां पुरस्कृत्य प्रकरणस्य तेन व्याख्यातत्वादिहापि तथोक्तिः । कामस्य ज्ञानयोगमात्रविरोधित्वोक्तौ गमकं सुतरां न दृश्यते ॥

कामस्याभिमानी कालनेमीत्यसुरः । अस्य वृत्तान्तः भागवतेऽष्टम-स्कन्धे दृश्यते । असुरेषु भगवताऽमृतपानाद्वंचितेषु देवासुरगणयोर्युद्धं बभूव । असुरवीरेषु बहुषु क्रमेण हतेषु कालनेमी महाप्रतापेन देवगणान-युध्यत् । अन्ततः श्रीहरिणा चक्रेण संहृतो बभूवेति तत्र कथितं । एवमेव हरिवंशेऽपि (ch 47)—

"वीक्षन्ते स्म सुरास्सर्वे भयविक्लवलोचनाः ।
त्रिविक्रमं विक्रमन्त नारायणमिवापरं ॥

अथ विव्यथिरे देवाः सर्वे सेन्द्रपुरोगमाः ।
चिच्छेद बाहुं चक्रेण श्रीधर कालनेमिनः॥ " इति॥ (ch 49)

भगवानेव कालनेमिजेतेत्यनेन 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' इत्युक्तस्य संवादो द्रष्टव्यः ॥

**धूमेनाव्रियते वह्निर्यथाऽऽदर्शो मलेन च ।**
**यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतं॥ ३८॥**

वि ॥ अशुभप्रेरकेषु क्रोधाद्यभिमान्यसुरेषु कामः कथं बलवानित्यत आह । धूमेनेत्यादिश्लोकद्वयेन ॥ वह्निर्यथा धूमेनाव्रियते तथा तेन कामेनेदं उत्तमजीवजातं किंचिदावृतं । यथाचादर्शो दर्पणो मलेनावृतः तथेदं मध्यमजीवजातं तेन कामेनाधिकमावृतं । यथा च गर्भः उल्बेन गर्भवेष्टनचर्मणाऽऽव्रियते आच्छाद्यते, तथेदमधमजीवजातं तेन कामेनात्यन्तमावृतं । त्रिविधस्यापि जीवजातस्य यथायोग्यं यथावत्तया परावरतत्त्वज्ञानप्रतिबन्धकः इत्यर्थः॥

यद्वा इदमित्यनेनेश्वरान्तःकरणजीवाख्यं वस्तुत्रयं ग्राह्यं। वह्निर्यथा धूमेनाव्रियते तथेश्वरो जीवगतकामेनावृतः । प्रकाशरूपोऽप्यग्निर्धूमेनावृतोऽन्यैर्यथा न दृश्यते तथेश्वरः स्वयं सर्वं जानन्नपि नान्यैर्ज्ञायते इत्यर्थः । आदर्शो मलेनेवान्तःकरणं कामेनावृतं। यथाऽऽदर्शो मलेनावृतो मुखाद्यभिव्यक्ति-

हेतुर्न भवति तथा जीवान्तःकरणं कामावृतं सदीश्वरं जीवं वा न प्रकाशयतीत्यर्थः। यथोल्बेनावृतो गर्भः तथा कामेनावृतो जीवः। उल्बेन वेष्टितो गर्भो यथा व्यापाराक्षमस्तथा जीवोऽपि कामेनावृतो नेश्वरादिज्ञाने क्षम इत्यर्थः॥

शं॥ कथं वैरीति दृष्टान्तैः प्रत्याययति। धूमेनेति॥ धूमेन सहजेनाव्रियते वह्निः प्रकाशात्मकोऽप्रकाशात्मकेन, यथावाऽऽदर्शो मलेन च, यथोल्बेन गर्भवेष्टनेन जरायुणाऽऽवृत आच्छादितो गर्भस्तथा तेनेदमावृतम्॥

रा॥ यथा धूमेन वह्निराव्रियते, यथा आदर्शो मलेन, यथाचोल्बेन गर्भः, तथा तेन कामेनेदं जन्तुजातमावृतं॥

विचारः

(धूममलोल्बदृष्टान्तत्रयेण कामस्य पुरुषार्थविरोधित्वकथने सार्थक्यमवधेयं। व्याख्यातृभिर्बहुधा व्यक्तीकृतमेतत्॥ तथाहि, "कामस्य अनादिवासनानुबन्धित्वेन जीवसहजत्वं धूमदृष्टान्तेन ज्ञापितं। धूमोहि वह्निसहजः। (शास्त्रज्ञानादिना पुनःपुनर्निवृत्तावपि कामस्य पुनःपुनरनुवर्तनान्निवृत्तस्यापि पुनःपुनरुपाधिवशादागमं द्योतयितुं आदर्शगतमलदृष्टान्तः) स्वेच्छया निवर्तयितुमशक्यत्व दर्शयितुं तृतीयो दृष्टान्तः। अनादित्वात्पौनःपुन्येनानुवर्तमानत्वात् मोचकान्यसहायाभावे जीवमशक्यमोचनं बध्नातीत्यतः कामो बलवान्" इति देशिकोक्तिः॥

(कामस्य स्थूलत्वस्थूलतरत्वस्थूलतमत्वप्रतिपादनाय दृष्टान्तत्रयमिति मधुसूदनः। "शरीरारंभात्प्रागन्तःकरणस्यालब्धवृत्तिकत्वात्सूक्ष्मः कामः

शरीरारंभकेण कर्मणा स्थूलशरीरावच्छिन्ने लब्धवृत्तिकेऽन्तःकरणे कृताभिव्य क्तिस्सन् स्थूलो भवति। स एव विषयस्य चिन्त्यमानत्वावस्थायां पुनःपुन रुद्रिच्यमानः स्थूलतरो भवति। स एव पुनर्विषयस्य भुज्यमानतावस्थायाम त्यन्तोद्रेकं प्राप्तः स्थूलतमो भवति" इति।

'अत्र धूमेनावृतोऽपि वन्हिर्दाहादिलक्षणस्वकार्यं करोति। मलेनावृत-स्त्वादर्शः प्रतिबिबग्रहणलक्षणस्वकार्यं न करोति, स्वच्छताधर्ममात्रतिरो-धानात्। स्वरूपतस्तूपलभ्यत एव॥ उल्बेनावृतस्तु गर्भो न हस्तपादादि-प्रसारणरूपं स्वकार्यं करोति। न वा स्वरूपत उपलभ्यत इति विशेषः" इति च तेनोक्तं॥

'कामः अप्रकाशस्वरूपः लेपस्वभावः अचेतनश्च। अतः प्रकाशस्व-रूपं निर्मलं चेतनं ज्ञानं आवृणोती'ति शङ्करानन्दः॥

'प्रथमदृष्टान्तेनात्मस्वरूपप्रकाशात्मकत्वं, द्वितीयेन यथावद्विषयस्वरूप-प्रतिभानात्मकत्वं, तृतीयेनोहापोहात्मकत्वं, ज्ञानस्यावृतमि'त्युत्कर्षदीपि-काकारः॥

'दुरुत्सर्गत्वं अकार्यकरत्वं जुगुप्सास्पदत्वं विवक्षितं' इत्यभिनव-गुप्ताचार्यः॥

दृष्टान्तानां परस्परं वैलक्षण्यमपश्यता शाङ्करटीकाकृता आनन्दगिरि-व्याख्याने 'अनेकदृष्टान्तोपादनं प्रतिपत्तिसौकर्यार्थं' इति उक्तं॥ एवं दृष्टान्त-त्रयस्य प्रयोजनं व्याख्यातृभिर्विविधं स्वोत्प्रेक्षामनुसृत्य कल्पितं विद्यते। तत्र 'प्रतिपत्तिसौकर्यार्थ'मित्युक्तिस्तु नीरसा। यतोऽन्यतमदृष्टान्तेनैव विवक्षिता-र्थस्य सिद्धिरनेनाङ्गीकृतप्राया भवति॥

यदुक्तं शंकरानन्देन कामज्ञानयोरचेतनचेतनत्वं, तच्चिन्त्यं। मानस-ज्ञानस्य जडत्वेन चेतनत्वायोगात्॥ श्रीमदाचार्यव्याख्यानं तु, भाष्यटीकृद्यो-

स्वगतमिदं ।(कामो मोक्षस्य विरोधी । कुतः, यतः ईश्वरान्तःकरणजीव-लक्षणं वस्तुत्रयं कामेनावृतं । यथा धूमेनाग्निरावृतः प्रकाशस्वरूपोऽप्यन्येषां न सम्यग्दर्शनाय तथा परमात्मा कामेनावृतः स्वयं सर्वज्ञोऽप्यन्यैर्न ज्ञायते) (यथाऽऽदर्शो मलेनावृतोऽन्यस्य मुखादेरभिव्यक्तिहेतुर्न भवति तथाऽन्तःकरणं परमात्मजीवयोर्व्यक्तिहेतुर्न भवति कामेनावृतं )(यथोल्वेनावृतो बद्धो भवति गर्भस्तथा कामेनावृतो जीवो नेश्वरादिज्ञाने क्षमः । एवं ज्ञेयज्ञानकरणज्ञातृ-प्रतिबन्धकत्वोक्तथा ज्ञानप्रतिबन्धकत्वमुक्तं इति )।( अत्र धूमदृष्टान्तेन ईश्वरो वह्निवदतिरिक्तस्सन् स्वव्यापारादिकमप्रतिबद्धः कुर्वन् परचक्षुषां तिरोभूतमात्र आस्ते इति सूचितं ॥ जीवेश्वरस्वरूपादेर्मनसा ज्ञायमानत्वेन मलकलुषितादर्शवदन्तःकरणे कामोपहते सति आन्तरं वस्तु दृष्ट्यविषयं भवतीति दर्पणदृष्टान्तोऽप्युचितः )(अपरोक्षज्ञानस्य मानसत्वं 'प्रजहाती'ति श्लोकेऽन्यत्रच निरूपितं स्मर्तव्यं)।(जीवस्य कामबद्धत्वं तृतीयदृष्टान्तबोधितं च स्पष्टमेवेति सर्व समंजसं गम्यते॥ अत्र प्रमाणं 'ज्ञानस्य ब्रह्मणश्चाग्नेर्धूमो बुद्धेर्मलं तथा । आदर्शस्याथ जीवस्य गर्भस्योल्बो हि कामकः' इति॥ कामकः कुत्सित-कामः । बुद्धिरन्तःकरणं )( यद्वा उत्तममध्यमाधमजीवस्वभावविवक्षया दृष्टान्तत्रयमुपपद्यते । कामः उत्तम सात्विकं जनं किंचिदेवाभिभवति । मध्यमं ततोऽप्यधिकं । तामसमधिकतरं । अतएव तात्पर्ये उदाहृतं

'तत्र कामः कालनेमी सर्व धूममलोल्बवत् ।
शुभमध्याधमजनं क्रमादावृत्त्य तिष्ठति ॥' इति ))

उक्तं च विष्णुपुराणे, (67, 62)

"विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथाऽपरा ।
अविद्याकर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते ॥
यया क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप सर्वगा ।
संसारतापानखिलानवाप्नोत्यतिसन्ततान् ॥

तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता ।
सर्वभूतेषु भूपाल तारतम्येन वर्तते ॥ "

अतएव ब्रह्मणस्सकाशादुपदेशं प्राप्तावपि इन्द्रविरोचनौ फले वैषम्यमनुबभूवतुः ॥

गीतायां प्रथमश्श्रुतो यथाशब्दः 'धूमेनाव्रियते' इति पूर्ववाक्येन संबध्यते । 'मलेन चे'ति चकारेण यथाशब्दस्याकर्षस्सूचितः । तेनैव चकारेण 'आव्रियते' इति क्रियाया अप्याकर्षो ज्ञायते । 'उल्बशब्देन' जरायुशाब्दितगर्भवेष्टनभूतचर्मविशेष उच्यते ॥

चतुर्थपादे 'तेनेदमावृतं' इत्यत्र इदंपदेन कस्य परामर्शः इत्यत्रास्ति संदेहः । तथाहि, उत्तरश्लोके 'आवृतं ज्ञानमेतेने'त्युक्तत्वात् अत्रापीदंपदेन ज्ञानस्यैव ग्रहणमुचितमिति शङ्करशङ्करानन्दनीलकण्ठाः मन्यन्ते । उत्तरश्लोकव्याख्याने 'ज्ञानमावृत'मित्युक्तेरर्थनिरूपणावसरे शाङ्करकृतं सङ्गत्युद्भावनं न समीचीनमित्युपपादयिष्यते । आस्तां तत् ॥

मधुसूदनोऽपि ज्ञानस्य परामर्शमनुक्त्वा ज्ञायते अनेनेति करणव्युत्पत्त्यभिप्रायेण इदमित्यनेनान्तःकरणमादत्ते । तथा वेङ्कटनाथः "इदं नास्माकमनिष्टं । इदमित्यनेन ईश्वरः अन्तःकरणं जीवजातं च गृह्यते इति भाष्योक्तेः । अन्तःकरणस्य ग्रहणवेलायान्तु मलदूषितादर्शदृष्टान्त एव विवक्षितो नत्वन्याविति द्रष्टव्यम् ॥

केन प्रयुक्तोऽयमिति प्रश्नस्योत्तरत्वेन इदंशब्दबोध्यः 'अयं' इत्यनेन परामृष्ट एव भवितुमर्हति । तस्यैव ह्यावरकस्य पृष्टत्वात् । 'अयं' इति पुल्लिंगत्वेऽपि इदमिति नपुंसकनिर्देशः सामान्यविवक्षया उपपद्यते । इदं जीवजातं इति यावत् । एवमेव व्याख्याति देशिकः । अयमेवाशय उक्तो गीतातात्पर्ये । इदं जीवजातं, उत्तममध्यमाधमाः जनाः इति यावत् ॥

इदंपदेन ज्ञानस्य परामर्शेऽभिप्रेते इदमित्युक्त्वा किं तदित्यस्य प्रश्नान्तरस्यावकाशं प्रदाय ज्ञानं इत्युत्तरं ददावित्युक्तौ गौरवं स्फुटं ॥ 'यथोल्बेनावृतो गर्भस्तथा च ज्ञानमावृतं' इति श्लोकरचनेन विवक्षितार्थसिद्धौ भवन्त्यां कुतो यथादृष्टं प्रयुक्तं इति चिन्त्यते ॥ 'अथ केन प्रयुक्तोऽयमिति' प्रश्नेन को बलवान् शत्रुः । स कथं प्रयोजयतीति सन्देहद्वयं विवक्षितं इति केचिन्मन्यन्ते । सन्देहद्वये प्रथमस्योत्तरं पूर्वप्रकृतश्लोकाभ्यामागत । द्वितीयस्योत्तरमुत्तरश्लोकेन 'आवृतं ज्ञानमेतेने'त्यनेनेति देशिकाशयः ॥

**आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।**
**कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ३९ ॥**

वि ॥ एवं ज्ञेयस्येश्वरादेः, ज्ञानकारणस्य मनसः, ज्ञातुर्जीवस्य, प्रतिबन्धकः काम इत्युक्त्या ज्ञानोत्पत्तिप्रतिबन्धकत्वमुक्तं ॥ इदानीं शास्त्रतो जातमपि ज्ञानं स्वकार्यापरोक्षज्ञानाय न प्रभवतीत्याह ॥ आवृतमिति । ज्ञानिनः शास्त्रजनितज्ञानिनोऽपि ज्ञानं कामावृतं भगवदपरोक्षज्ञानाय न प्रभवति । किमु गुरूपदेशमात्रजज्ञानवत इति सूचनाय ज्ञानिन इत्युक्तं । अन्यथा ज्ञानस्य ज्ञानिसम्बन्धाव्यभिचारात् ज्ञानिन इत्युक्तिर्व्यर्थां स्यात् ॥ केनावृतं ज्ञानमित्यत उक्तं । कामरूपेणेति ॥ रूप्यते निरूप्यतेऽनयेति रूपमाख्या यस्य, तेन कामरूपेण कामाख्येन नित्यवैरिणा सदाऽपकारिणा दुष्पूरेण दुःखेन पूरयितव्येन, न केवलं दुष्पूरः

किंत्वनलेन, न विद्यते अलं तृप्तिर्यस्य सोऽनलः । तेन महतो भोग्यस्य विषयस्य प्राप्तावपि अधिकेच्छयाऽलंबुद्धिहीनेनेत्यर्थः ॥

शं ॥ किं पुनस्तदिदंशब्दवाच्यं यत्कामेनावृतमिति, उच्यते ॥ आवृतमिति । आवृतमेतेन ज्ञानं ज्ञानिनो नित्यवैरिणा । ज्ञानी हि जानात्यनेनाहमनर्थे प्रयुक्तः पूर्वमेवेति । दुःखी च भवति नित्यमेव । अतोऽसौ ज्ञानिनो नित्यवैरी नतु मूर्खस्य । स हि कामं तृष्णाकाले मित्रमिव पश्यंस्तत्कार्ये दुःखे प्राप्ते जानाति तृष्णयाऽहं दुःखित्वमापादितः इति न पूर्वमेव, अतो ज्ञानिन एव नित्यवैरी ॥ किं रूपेण, कामरूपेण । काम इच्छैव रूपमस्येति कामरूपस्तेन दुष्पूरेण, दुःखेन पूरणमस्येति दुष्पूरस्तेनानलेन नास्यालं पर्याप्तिर्विद्यत इत्यनलस्तेन च ॥

रा ॥ आवरणप्रकारमाह ॥ अस्य जंतोः ज्ञानिनो ज्ञानस्वभावस्यात्मविषयं ज्ञानमेतेन कामाकारेण विषयव्यामोहजननेन नित्यवैरिणा आवृतं, दुष्पूरेण प्राप्त्यनर्हविषयेण अनलेन च पर्याप्तिरहितेन ॥

विचारः

कामस्यावरणत्वं धूममलोल्बवदित्युक्तमतीतश्लोकेन । यतः कामः सज्ज्ञानोत्पत्तिं प्रतिबध्नाति ॥ ननु सुज्ञानोत्पत्तिप्रतिबन्धकत्वेऽपि यदि मुमुक्षुरधीतशास्त्रः सन् सम्यक् परोक्षज्ञानं लब्धवान्स्यात्, तं कामः किं

चेन्न । यतः कामो यथा ज्ञानोत्पत्तिं धूममलोल्बवद्विरुणद्धि तथोत्पन्नशास्त्रज्ञानस्य कार्यभूतमपरोक्षमपि विरुणद्ध्येव । 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' इत्युक्तेः । अपरोक्षे जाते तु न कामस्य व्यापारो दृश्यते । तावत्पर्यन्तं धूममलोल्बवद्यथाबलं पुरुषार्थप्रतिरोधं करोति । एतेन ज्ञानोत्पत्तिप्रतिबन्धविषयः अतीतः श्लोकः । उत्पन्नशास्त्रज्ञानस्य स्वकार्यभूतापरोक्षविरोधित्वविषयः प्रकृतश्लोकः इति विवेकेन पौनरुक्त्यशंकाऽपोदिता द्रष्टव्या ॥

शांकरास्तु 'तथा तेनेदमावृतं' इति पूर्वश्लोके इदंशब्दवाच्यं किं इति शंकायां परामर्शविषयमाह प्रकृतं पद्यं इति मन्यन्ते । तन्न । 'अथ केन प्रयुक्तोऽयं' इत्यत्र 'अयं' इति शब्दोदितः यः पुरुषः स एव इदंशब्दवाच्यो भवतीति प्रागेव प्रदर्शितत्वात्, कामः किमावृणोतीति शंकाया एव प्रकरणेनानुत्थानाच्चैतदयुक्तं । अतः प्रकृतश्लोकावतारः श्रीमध्वाचार्येणान्यथा प्रदर्शितः । अतएव देशिकोऽप्याह 'किं तदावृतमित्याकांक्षाया अपि कथंताकांक्षा युक्ते'ति । कथंता तु श्रीमदाचार्योक्तरीत्या परोक्षज्ञानोत्पत्तिविरोधेन वा परोक्षज्ञानफलभूतापरोक्षविरोधेन वा संभवतीति ज्ञेयं ॥

'आवृतं ज्ञान'मित्यत्र ज्ञानमन्तःकरणं विवक्षितमिति मधुसूदनः । इदमुपेक्ष्यमिति प्रत्याख्यातं उत्कर्षदीपिकायां । तत्रोक्तं, 'यत्तु ज्ञायतेऽनेनेति ज्ञानमन्तःकरणं इति तदुपेक्ष्यं, ज्ञानविज्ञाननाशनमित्यनुरोधेनात्रापि विवेकज्ञानग्रहणस्यौचित्यात्' इति ॥ ज्ञानशब्देन विवेकज्ञानं गृह्यते इति प्रायशस्सर्वे शाङ्करा मन्यन्ते । लौकिकविवेकज्ञानस्य शब्दादिविषयविषयकस्य कामेनानावरणादत्र विवक्षितं ज्ञानं आत्मविषयं इति रामानुजाशयः । ज्ञानसामान्यस्याविवक्षितत्वाच्छास्त्रजनितं ज्ञानमभिप्रैति भगवान् इति श्रीमध्वः ॥

'ज्ञानिनः' इत्यस्य 'ज्ञानं' इत्यनेन वा 'नित्यवैरिणे'त्यनेन वाऽन्वय इति विचार्यं । ज्ञानिनो नित्यवैरिणा कामरूपेण ज्ञानं आवृतमिति योजनायां कामस्य ज्ञानिवैरित्वं सिध्यति न तु मूर्खवैरित्वं । अयं शाङ्करः पक्षः ।

यथाऽऽह मधुसूदनः, 'अज्ञो हि विषयभोगकाले कामं मित्रमिव पश्यन्स्तत्कार्ये दुःखे प्राप्ते वैरित्वं जानाति कामेनाहं दुःखित्वमापादित इति । ज्ञानी तु भोगकालेऽपि जानात्यनेनाहमनर्थे प्रवेशित इति । अतो विवेकी दुःखी भवति भोगकाले च तत्परिणामेचानेनेति ज्ञानिनोऽसौ नित्यवैरीति सर्वथा तेन हन्तव्य इत्यर्थः' इति ॥ एतदसङ्गतं । कामोहि ज्ञान्यज्ञान्युभयवैरी वक्तव्यः । वैरित्वं खल्वपकारित्व । तच्च ज्ञान्यपेक्षया मूर्खेऽधिकं । नहि मूर्खस्तं नानुसन्धत्त इत्येतावता तन्नास्ति । एको भोगकालेऽप्यनुसन्धत्ते। अन्यस्तु परिणाम एवेति वैलक्षण्यं कामस्य ज्ञानिमात्रवैरित्वसाधनाय वा वैरस्य नित्यत्वज्ञापनाय वा न प्रयोजकं । यथाऽन्तःप्रविष्टं गरलं पुरुषानुसन्धानेऽननुसन्धाने च स्ववैर साधयति । कामोऽप्येवमेवाचरतीति तस्य नियतवैरित्वं स्फुटम् ॥

ज्ञानिनो नित्यवैरिणा इति योजनामेवाश्रित्य देशिक आह । 'ज्ञानिन इत्यत्रेनिप्रत्ययस्य श्रुतिसिद्धस्वाभाविकसम्बन्धपरत्वप्रदर्शनायावरणस्यौपाधिकत्वद्योतनाय प्रयोगः' इति । तथाच ज्ञानिनः ज्ञानस्वभावस्य मूर्खामूर्खविवक्षां विना कामो वैरीत्युक्तो भवति ॥ यद्वेति प्रकारान्तरेणापि नित्यवैरित्वमुपपादयति देशिकः, 'नित्यसंसारिसद्भावपक्षेचास्य केषुचिदात्मसु नित्यवैरित्वं सिद्धं' इति ॥

सर्वेषां नित्यवैरिणा कामरूपेण ज्ञानिनो ज्ञानं आवृतं इति श्रीमदाचार्ययोजना ॥ एतेन ज्ञानिन एव शत्रुरयं नत्वज्ञानिनः इत्यनिष्टस्य नावकाशः । परन्तु ज्ञानस्य ज्ञानिसम्बन्धाव्यभिचारात्, जडस्य ज्ञानायोगात् व्यावर्त्याभावे सति ज्ञानिन इति ज्ञानविशेषणं व्यर्थं इति शङ्का परिहार्या ॥

उच्यते। ज्ञानिन इत्यस्य प्रयोजनं विवृतावुक्तं। ज्ञानिन इत्यनेन सम्यक् शास्त्रजनितज्ञानवानुच्यते। अपरोक्षज्ञानिव्युदासायैतत् । स तु न

कामाद्बाधितः इति प्रमितं । यथोक्तं "कामकारेण चैके" इतिब्रह्मसूत्रे । एतद्भाष्ये "कामभक्षाः कामवादाः कामेनैवेम देहमतिसृज्याथ परात्परमीयुरनारंभणं" इत्युदाहृतं प्रमाणं ॥ किंच ज्ञानिनोऽपि ज्ञानं आवृतमित्यनेन किम्वज्ञानिनः इति कैमुत्यं द्योतितं । एवमुभयावरणे बोधिते कामस्य सर्ववैरित्वं च सेत्स्यति ॥

'कामरूपेण' इति । कामाख्येनेत्यर्थः । कामः इच्छा, सैव रूपं यस्येति कालनेमिग्रहणं चोचितं । 'काम्यत इति कामो विषयः । तमेव सर्वत्र गोचरयति । न किंचिद्बुध्यतीति शंकरानन्दः' ॥

'दुष्पूरेणेति' दुखेन पूरयितव्येनेत्यर्थः । 'अयोग्येषु दुर्लभेषु प्रवृत्तिहेतुना' इति देशिकः । 'तृष्णा खनिरगाधेय दुष्पूरा केन पूर्यते । या महद्भिरपि क्षितैः पूरणैरेव खन्यते' इति दुष्पूरत्वं सिद्धं ॥

'अनलेन' । न विद्यते अलं तृप्तिः यस्य भोग्यैर्लब्धैरलंभावरहित इति देशिकः । साधनावस्थायां दुःखहेतुत्वमुक्तं दुष्पूरेणेत्यनेन, भोगावस्थायां तदनलेनेत्यनेनेति विवेकः अनलशब्देनाग्निमादाय प्रदर्शितो वेंकटनाथेन । दुष्पूरेणेति तद्विशेषणं कृत्वा चशब्दं इवार्थं व्याख्याय केचिद्दुष्पूराग्निवत्काम आस्त इति व्याचक्षते इति ॥

**इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।**
**एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनं ॥ ४० ॥**

वि ॥ यदर्थमर्जुनेन पापप्रवर्तकेषु बलवान् पृष्टः उत्तरितश्च । तस्य बलवतः कामस्य शत्रोर्वधार्थमधिष्ठानमाह ॥

इन्द्रियाणीति ॥ अस्य कामाख्यशत्रोरिन्द्रियाणि चक्षुरादीनि मनो बुद्धिश्चाधिष्ठानं । प्राधान्यज्ञापनाय मनोबुद्ध्योः पृथगुक्तिः । अधिष्ठानतां व्यनक्ति ॥ एतैरिति ॥ एतैर्मनोबुद्धीन्द्रियैर्विषयसंसृष्टैरेष कामाख्यशत्रुर्ज्ञानमावृत्य ज्ञानजन्म प्रतिबद्ध्येति वा, जातमपि ज्ञानं कार्याक्षमं कृत्वेति वाऽर्थः । देहिनं जीवं विमोहयति ॥

शं ॥ किमधिष्ठानः पुनः कामो ज्ञानस्यावरणत्वेन वैरी सर्वस्येत्यपेक्षायामाह । ज्ञातेहि शत्रोरधिष्ठाने सुखेन शत्रुनिबर्हणं कर्तुं शक्यत इति॥ इन्द्रियाणीति। इन्द्रियाणि मनो बुद्धिश्चास्य कामस्याधिष्ठानमाश्रय उच्यते । एतैरिन्द्रियादिभिराश्रयैर्विमोहयति । विविधं मोहयत्येष कामो ज्ञानमावृत्याच्छाद्य देहिनं शरीरिणं ॥

रा ॥ कैरुपकरणैरयं काम आत्मानमाधितिष्ठतीत्याह । अधितिष्ठत्येभिरयं काम आत्मानामितीन्द्रियाणि मनो बुद्धिरस्याधिष्ठानं । एतैरिन्द्रियमनोबुद्धिभिः कामाधिष्ठानभूतैर्विषयप्रवणैर्देहिनं प्रकृतिसंसृष्टं ज्ञानमावृत्य विमोहयति विविधं मोहयति आत्मज्ञानविमुखं विषयानुभवपरं करोतीत्यर्थः ॥

विचारः

'मनःषष्ठानीन्द्रियाणी'ति वक्ष्यमाणोक्तथा मनसोऽपि इन्द्रियत्वेन बुद्धेरपि मनस्यन्तर्भावस्य वक्तु शक्यत्वात् मनोबुद्ध्योः पृथग्ग्रहणं तयोः

प्राधान्य ज्ञापयति। इन्द्रियशब्दोऽत्र गोबलीवर्दन्यायेन बाह्येन्द्रियपरः। मनः संकल्पात्मकं, बुद्धिरध्यवसायात्मिका। अधिष्ठानं आश्रयः। अधितिष्ठत्येभिरात्मानं इत्युपकरणार्थो वा। देहिनं देहाभिमानिनं इति मधुसूदनः॥ ज्ञानमावृत्येत्र पूर्व 'तथा तेनेदमावृतं' 'आवृतं ज्ञानमेतेन' इति यथाऽऽवरणप्रकारो निरूपितस्स एवात्र ग्राह्यः, तथाच परोक्षज्ञानं प्रतिरुणद्धि, उत्पन्नेऽपि परोक्षज्ञाने तत्कार्यमपरोक्षज्ञानं प्रतिबध्नाति इत्युभयथाऽऽवरणप्रकारो द्रष्टव्यः॥ अत्रावृतं ज्ञानं न स्वरूपभूतं। किंतु वृत्तिज्ञानं मानसमवगन्तव्यं। अतएव ज्ञानजन्म प्रतिबध्य वा जातमपि ज्ञानं कार्याक्षमं कृत्वेति वाऽर्थ इत्याह विवृत्याचार्यः॥ अत्रोक्तं नीलकंठीये, "अयमर्थः, इन्द्रियमनोबुद्धयःकामेनाधिष्ठिताः बाह्यार्थप्रवणा भवन्ति। तैश्च तथाभूतैरय कामो ज्ञान चिदाकाशरूपमादर्शतलप्रख्यं, यत्र योगिनो व्यवहितं विप्रकृष्टमतीतमनागतं वा पश्यन्ति तत् मलेनादर्शमिवावृत्य देहिनं देहाभिमानिनं विशेषेण मोहयति—विशब्दाद्देहाभिमानशून्यं योगिनमपि व्युत्थानावस्थायां किंचिन्मोहयतीति गम्यते" इति॥ (अस्मिन्व्याख्याने 'ज्ञानं चिदाकाशरूप'मित्युक्तं चिन्त्यं। जन्यज्ञानस्य विवेकस्यैव ग्रहणमुचितमित्यन्ये शाङ्करा अपि वदन्ति। 'ज्ञानविज्ञाननाशन'मित्यनन्तरश्लोके वक्ष्यमाणज्ञानशब्दसमानार्थत्वमेवेहाप्युचितं इति। यथाहोत्कर्षदीपिकाकारः, 'यत्तु ज्ञानं चिदात्मकमिति तन्न, उक्तयुक्तेः' इति॥ आदर्शमलदृष्टान्तश्चान्तःकरणपर इति प्रागेवोक्तः। 'ज्ञानस्य ब्रह्मणश्चाग्नेर्धूमो बुद्धेर्मलं तथा। आदर्शस्याथ जीवस्य गर्भस्योल्बो हि कामकः' इति॥)

(यच्चोक्तं नीलकण्ठीये योगिनमपि व्युत्थानावस्थायां मोहयतीति तदपि न। प्रकरणानौचित्यात्। प्रकरणं तु परोक्षज्ञानावरणपरमिति स्फुटं। असंप्रज्ञातसमाध्यधिकारी योगीतु जितकामो न व्युत्थानावस्थायामपि मुह्यति। यथा प्रपंचितं द्वितीयाध्याये स्थितप्रज्ञप्रकरणे॥

'विमोहयतीत्य'स्य ' स्वतन्त्रमात्मानमाक्रम्य परतन्त्रं करोती'ति यद्दे-शिकेनोक्तं तदपि न । आत्मनः कदापि स्वातन्त्र्याभावात् । आत्मशब्देन परमात्मविवक्षायान्तु काममोहस्य वा पारतन्त्र्यस्य वा सर्वथाऽयोगात् ॥

इन्द्रियमनोबुद्धीनां व्यापारः, "आत्मानं रथिनं विद्धि शरीरं रथमेव च । बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च । इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् " इति श्रुतिप्रसिद्धः । कालनेमी तु अस्मात्सारथिं प्रग्रहं हयांश्चाधितिष्ठन् स्ववशीकरणेन रथिनं कूपे पातयिष्यतीति शत्रु-दुर्गाणि श्लोकेन दर्शितानि । यद्धरणेन वियोगेन च शत्रुर्विनश्यति ॥

अत्रार्थे चतुर्थस्कन्ध (25 ch) भागवतोक्ता पुरंजनकथा स्मर्तव्या । बुद्धिर्हि प्रमदात्वेन तत्र वर्णिता । यस्याः स्वाधीनो जीवो नश्यतीति । अनेनोपाख्यानेन बुद्धेः प्राधान्यं, कालनेमिना बुद्धौ गृहिणीस्थानीयायां जितायां सत्यां सकुटुंबं सर्वनाशः संभवतीति ज्ञायते । उक्तं भागवते—

" मनुष्याणान्तु जीवानामभिमानी पुरंजनः ।
ददर्श नवभिर्द्वारैः पुरीं लक्षितलक्षणां ॥

यदृच्छयाऽऽगतां तत्र ददर्श प्रमदोत्तमां ।
भृत्यैर्दशभिरायान्तमिकैकशतनायकैः ॥

पंचशीर्षाहिना गुप्तां प्रतीहारेण सर्वतः ।
अन्वेषमाणामृषभमप्रौढां कामरूपिणीं ॥

सुनासां सुदतीं बालां सुकपोलां वराननां ।
समविन्यस्तकर्णाभ्यां बिभ्रतीं कुण्डलश्रियं ॥

पिशङ्गनीवीं सुश्रोणीं श्यामां कनकमेखलां ।
पद्भ्यां क्वणद्भ्यां चलतीं नूपुरैर्देवतामिव ॥

स्तनौ व्यंजितकैशोरौ समवृत्तौ निरन्तरौ ।
वस्त्रान्तेन निगूहन्ती व्रीडया गजगामिनी " इति ॥

अत्रायमध्यात्मार्थः सङ्कोचेन दशेन्द्रियविषयाद्यभिमुखी बुद्धिः वर्णिता ॥

(दशभिर्भृत्यैः दशेन्द्रियैः, पंचशीर्षाहिना पंचप्राणैः, सुनासां अभिमाननासिकां, सुदतीं विषयवृत्तिलक्षणदन्तां, सुकपोलां बाह्यान्तरवृत्तिमतीं, वराननां उत्तमचेष्टां, कर्णाभ्यां संकल्पविकल्पभेदेन द्वाभ्यां मनोरूपाभ्यां कुण्डलश्रियं विषयेषु परिवर्तनश्रियं, पिशङ्गनीवीं, पिशङ्गविषयोपरक्ता नीवी आच्छादनवृत्तिः तद्वतीं । सुश्रोणीं सुष्ठ्वाश्रयवृत्तिमतीं, श्यामां तमोगुणप्रचुरां, कनकमेखलां रजोगुणलक्षणसुवर्णकांचीं, पद्भ्यां रजस्तमोविकृतवृत्तिविशेषाभ्यां, नूपुरैः शिशुकलभाषादिलक्षणैः, गजगामिनी गजवदूर्ध्वमूलाधारादायान्तीं इत्यादिः॥ इमां बुद्ध्याख्यप्रमदां कामकलुषितां जीवोऽन्वेति मोहितः । यथा तत्रैव निरूपितम्—

"महिषी यद्यदीहेत तत्तदेवान्वर्तत ।
क्वचित्पिबन्त्यां पिबति मदिरां मदविह्वलः ॥

अश्नन्त्यां क्वचिदश्नाति जक्षन्त्यां सह जक्षति ।
क्वचिद्गायति गायन्त्यां रुदन्त्यां रुदति क्वचित् ॥

क्वचिद्धसन्त्यां हसति जल्पन्त्यामनुजल्पति ।
क्वचिद्धावति धावन्त्यां तिष्ठन्त्यामनुतिष्ठति ॥

अनुशेते शयानायामन्वास्ते क्वचिदासतीं " इति ।)

किंकृतवान् पुरंजनः—

'पस्पर्श पादयुगलमाह चोत्संगलालितां' इति ।

एतेन गीतायां मनोबुद्ध्योः प्राधान्येन पृथगुक्तिस्सार्थिकेति व्यक्तम् ॥

तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।
पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनं ॥४१॥

वि ॥ हि यस्मात् हे भरतर्षभ त्वमिन्द्रियाण्यादौ नियम्य विषयसङ्गतान्यकृत्वा, सङ्गतत्वे वा मनोबुद्ध्योर्विषयस्पर्शमकृत्वा तयोर्विषयसंस्पर्शेऽपि क्षोभमप्राप्येति वाऽर्थः ॥ ज्ञानविज्ञानयोर्नाशनं यस्मात्तं पाप्मानं पापहेतुमेनं कामं प्रजहि हतं कुरु । हताधिष्ठानो हि शत्रुर्नाशयितुं शक्य इति प्रसिद्धिद्योतको हिशब्दः । इन्द्रियजयः कामहननोपाय इति भावः ॥

शं ॥ यत एवं ॥ तस्मादिति ॥ तस्मात्त्वमिन्द्रियाणि आदौ पूर्वमेव नियम्य वशीकृत्य भरतर्षभ पाप्मानं पापाचारं कामं प्रजहि परित्यज । एनं ज्ञानविज्ञाननाशनं, ज्ञानं शास्त्रतः आचार्यतश्च आत्मादीनां अवबोधः । विज्ञानं विशेषतः तदनुभवः । तयोः ज्ञानविज्ञानयोः श्रेयःप्राप्तिहेत्वोः नाशनः नाशकः । तं नाशनमात्मनः परित्यजेत्यर्थः ॥

रा ॥ यस्मात्सर्वेन्द्रियव्यापारोपरतिरूपे ज्ञानयोगे प्रवृत्तस्यायं कामरूपश्शत्रुः विषयाभिमुख्यकरणेनात्मनि वैमुख्यं करोति, तस्मात्प्रकृतिसंसृष्टतयेन्द्रियव्यापारप्रवणस्त्वमादौ मोक्षोपायारंभसमय एवेन्द्रियव्यापारानुरूपे कर्मयोगे इन्द्रियाणि नियम्य एनं ज्ञानविज्ञाननाशनं, आत्मस्वरूपविषयस्य

ज्ञानस्य तद्विवेकविषयस्य च नाशनं पाप्मानं कामरूपं वैरिणं प्रजहि नाशय ॥

विचार.

एनं प्रजहि इति प्रधानाविधिः। एनमिति कामस्य तदभिमानिनः कालनेमिनः परामर्शः । प्रजहि इति वा प्रजहिहि इति वा पदच्छेदः । आद्यस्य मारयेत्यर्थः । द्वितीयस्य परित्यजेत्यर्थः । 'ओ हाक् त्यागे' इति धातुव्याख्यानमस्मिन्नर्थेऽनुसंधेयं । 'जहि शत्रुं महाबाहो' इत्यध्यायान्ते प्रयोगमनुसृत्य जहीत्येव पदच्छेद उचितो भाति ॥

जहीति पदच्छेदे 'हि' इत्यनन्तरशब्दो यस्मादित्यर्थ बोधयित्वा पाप्मा ज्ञानविज्ञाननाशनं इति विशेषणयोर्हेतुगर्भत्वं द्योतयति । हताधिष्ठानोहि शत्रुर्नश्यतीति प्रसिद्धिद्योतको हिशब्दः । शङ्करभाष्ये परित्यागार्थत्वमुक्तं दृष्ट्वा मधुसूदनवेंकटनाथौ प्रजहिहि इति पदविभागं शङ्करसम्मतं मत्वा तमपि निर्दुष्टं मन्वाते । उत्कर्षदीपिकाकारस्तु 'जहि' इत्यस्यैव परित्यागार्थत्वं शङ्करभाष्याभिमतं इत्यादायाध्यायान्तिमश्लोकेऽपि 'जहि' इत्यस्यापि परित्यागपरत्वमाह । नहि कामस्य खड्गादिना शिरश्छेदनं संभवतीति कामवधः परित्यागरूप एवेत्ययमभिप्रैति ।'इन्द्रियाणि पराण्याहु' रित्यत्र शंकरभाष्ये "आदौ नियम्य कामं जहीत्युक्तं" इत्यनुवादः उत्कर्षदीपिकानुकूलः ।

कुतः परित्याज्यः हन्तव्यो वेति शंकायां 'पाप्मानं' 'ज्ञानविज्ञाननाशन'मित्युक्तं । कालनेमिनः पापिष्ठत्वादेवमुक्तिः । आप्नोति व्याप्नोति पापिनं इति पाप्मन् (आप् +मनिन्) । कामोहि धूममलोल्बवत्पापिनं व्याप्नोति । पापमूलत्वात्पाप्मेत्युक्तिर्वा । 'शरीरजैः कर्मदोषैर्याति स्थावरतां

नरः । वाचिकैः पक्षिमृगतां मानसैरन्त्यजातितां ' ॥ इतिमनुः ॥ ज्ञानविज्ञान-नाशनमिति पाप्मत्वं उपपादितं ॥

(ज्ञानं शास्त्राचार्यजनितं परोक्षज्ञानं, विज्ञानं अपरोक्षज्ञानं, इति शांकराः । नेदमस्माकमनिष्टं । ' तथा तेनेदमावृतं ' ' आवृतं ज्ञानं ' ' ज्ञान-मावृत्य ' इत्यत्र ज्ञानशब्देन शास्त्रज्ञानापरोक्षज्ञानयोर्यथायोगमस्माभिर्विवक्षायाः प्रदर्शितत्वात् )( उक्तं शान्तिपर्वणि " न विना ज्ञानविज्ञाने मोक्षस्याधिगमो भवेत् " इति ॥

(२) ' ज्ञानं परोक्षं शास्त्रादिजन्यं । विज्ञानं निदिध्यासनं ' इति ॥

(३) ' ज्ञानं आत्मविषय, विज्ञानं शास्त्रीयं'इति च श्रीधरः ॥ " मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयो"रित्यमरोक्तमस्य साधकं भाति । इमं पक्षमरुचिग्रस्तत्वेन निराहोत्कर्षदीपिकाकारः । अरुचिबीज ज्ञानं विवेक-ज्ञानमिति पूर्वं स्वेन व्याख्यतमिति ॥

(४) विज्ञानं कर्म यथोक्तं मेदिन्यां । तथाच ज्ञानकर्मविनाशकः काम इत्यर्थः ॥

(५) ज्ञानं मनः । ज्ञायतेऽनेनेति व्युत्पत्त्या । विज्ञानं बुद्धिः । ' बुद्धिन्तु सारथि विद्धी'त्युपक्रम्योपसंहारे ' विज्ञानसारथिर्यस्तु ' इति श्रुता-वुक्तेः बुद्धिपरत्वं निर्दिष्टं ॥

(६) यद्वा ' देवादीनान्तु यज्ज्ञानं विज्ञानमिति कीर्तितं ' इत्युक्तो ज्ञानविज्ञानविवेकः ॥

(७) अथवा यथोक्त देशिकेन ' आत्मस्वरूपतद्विवेकविषयत्वादपौन-रुक्त्यं । विज्ञानं विविच्य ज्ञानं । व्यावृत्ततया ज्ञानमित्यर्थः॥ प्रत्यग्ज्ञानानन्द-त्वादिविशिष्टमात्मनः स्वरूप ॥ अणुत्वनित्यत्वज्ञातृत्वभोक्तृत्वकर्तृत्वादिभेदको

धर्मवर्गोऽत्र विवेकः। यद्वा देहातिरिक्तः कश्चिदात्माऽस्तीत्येतावत्स्वरूपमिह विवक्षितं। प्रत्यक्त्वादयोऽप्यणुत्वादिवद्विवेकनया विवक्षिताः। अथवा तत्सर्वं स्वरूपं, विवेको विवेककरणं शास्त्रं। ततः प्रमेयं प्रमाणं चोक्तं भवति' इति॥

(कामहननं कर्तव्ये सति कस्तस्योपाय इत्याकांक्षायां इन्द्रियनियमनमेवोपाय इति पूर्वार्धोक्तिः। 'नियम्य विषयसंगतान्यकृत्वा, संगतत्वेऽपि मनोबुध्योर्विषयस्पर्शमकृत्वा, तयोर्विषयसंस्पर्शेऽपि क्षोभमप्राप्येति वाऽर्थः' इति विवृतिः॥)

अत्र बुद्धिमनसी तत्वे इन्द्रियेचेति शास्त्रीयो विभागो न विस्मर्तव्यः॥ महत्तत्वजन्या तैजसोपचिता बुद्धिस्तत्वं। एवं मनः अपि तत्वं, चतुर्विंशतितत्वेष्वन्तर्भूतं। इमे बुद्धिमनसी इन्द्रिये अपि वैकारिकाहंकारजन्ये। 'मनो बुद्धिरहंकारश्चित्तं चेतने'ति वैकारिकेन्द्रियाण्यान्तराणि प्रसिद्धानि॥ (अत्र मनस्संकल्पात्मकं। बुद्धिर्निश्चयरूपा। अहंकारः अस्वरूपे स्वरूपमतिः। चित्तं स्मरणहेतुः। चेतना चेतसो व्याप्तिः इति पदार्थविदः)(वैकारिकबुद्धिमनसोरन्तरिन्द्रियत्वेन गीतायां 'इन्द्रियाणी'त्यनेन तयोर्ग्रहणमनुचितं)। (केचित्तु 'आदा'विति पदेन बाह्येन्द्रियाणां प्रथमं निग्रहस्सूचित इत्यादाय तदेव पदं बुद्धिमनसोः क्रमेण पश्चान्निग्रहो भविष्तयीति सूचयतीत्यभिप्रयन्तः) ('इन्द्रियाणी'त्यनेन बाह्येन्द्रियाण्येव गृण्हन्ति (शंकरानन्दमधुसूदनादयः)॥ संकल्पाध्यवसाययोर्बाह्येन्द्रियप्रवृत्तिद्वारैवानर्थहेतुत्वात्। इन्द्रियेषु वशीकृतेषु मनोबुद्धयोरपि वशीकरणं सिध्यतीति तेषामाशय.। 'आदा'विति गीतोक्तिर्बहुधा व्याख्याता॥)

'आदौ मोहनात्पूर्वं कामनिरोधात्पूर्वमिति वे'ति मधुसूदनः। मनोबुद्धिनियमनात्पूर्वमिति शङ्करानन्दः)(यथोक्तं तद्व्याख्याने, "इन्द्रि-

याण्यादावित्युक्तिः मनोबुद्ध्योर्नियमनं सूचयति । नियमविधावादिपदस्यानन्तर-कृत्यद्योतकत्वात् । सत्यामन्तर्विषयाचिन्तायामिन्द्रियनिग्रहस्य विफलत्वात् । 'मनस्तु पूर्वमादद्यात्कुमीनमिव मत्स्यहा' इति वचनाद्वस्तुदर्शने मनस एव करणत्वाच्च । अतः इन्द्रियनियमनानन्तरमेव मनोबुद्ध्योरपि निग्रहः कर्तव्य एव" इति )॥ इदञ्चिन्त्यं । अयमाशयोऽरम्यो भाति । यतः इन्द्रियाणीत्यनेनैव मनोबुद्ध्योःग्रहणसंभवे आदिपदसामर्थ्यात्तस्य संग्रहः क्लिष्टः । किंच 'कर्मेन्द्रियाणि संयम्ये'त्यादिना मनोनिग्रहस्यैवेन्द्रियनिग्रहादतिप्रधान्यं कथितं इत्यतः प्रकृते इन्द्रियमनोनियमनयोः पौर्वापर्यविवक्षा किंचिद्व्याहता भाति )। 'आदौ मोक्षोपायारंभसमये' इति यद्रामानुजाचार्येण व्याख्यातं तत्सङ्गतं दृश्यते ॥

'तस्मात्त्वमिन्द्रियाणी'त्यत्र 'तस्मात्' इति पूर्वोक्तयुक्तिजातस्य परामर्शः, इन्द्रियेषु कामस्याधिष्ठितत्वादित्यस्य वा ॥

'त्वं' इत्यनेनार्जुनस्य प्रकृतिसंसृष्टत्वं, ज्ञानयोगानधिकारित्वे सति कर्मयोगाधिकारित्वं सूचितमिति रामानुजाभिप्रायः । इदं क्लिष्टं भाति । एवमर्जुनापकर्षो न न्याय्यः ॥

---

**इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।**
**मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥ ४२॥**

वि ॥ शत्रुहनने आयुधरूपं ज्ञानं 'एवं बुद्धे'रित्युत्तरश्लोके वक्तुं ज्ञानविषयमाह ॥ इन्द्रियाणीति ॥ शरीरादिन्द्रियाणि पराणि, उत्कृष्टानीत्यर्थः । 'इन्द्रियेभ्यः पराह्यर्थाः अर्थेभ्यश्च परं मनः' इत्यध्याहारेण योजना ध्येया । तथा 'यो बुद्धेः

परतस्तु सः' इत्यत्र 'बुद्धेरात्मा महान्परः । महतः परमव्यक्तं योऽव्यक्तात्परतस्तु सः' इत्यपि ध्येयं । स परमात्मेत्यर्थः॥ 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यादिकाठकश्रुतेः । अस्या अर्थस्तु 'देवेभ्य इन्द्रियात्मभ्यो ज्यायांसोऽर्थाभिमानिनः । सोमवित्तपसूर्याप्या अश्व्यग्नीन्द्रेन्द्रसूनवः । यमो दक्षश्चेन्द्रियेशाः सौपर्णी वारुणी तथा ॥ उमेति चार्थमानिन्यस्तिस्रो ह्विद्येकदेवताः । मनोभिमानिनो रुद्रवीन्द्रशेषास्त्रयोऽपि तु ॥ श्रेष्ठा अर्थाभिमानिभ्यस्तेभ्यो बुद्धिः सरस्वती । तस्या ब्रह्मा महानात्मा ततोऽव्यक्ताभिधा रमा । तस्यास्तु पुरुषो विष्णुः पूर्णत्वान्नैव तत्समः' इत्यादिकाठकभाष्यात्' तथा 'सर्वेभ्यः प्रवरा देवाः' इत्यादितात्पर्यवाक्याच्चावसेयः ॥

शं ॥ इन्द्रियाण्यादौ नियम्य कामं शत्रुं जहीत्युक्तं । तत्र किमाश्रयः कामं जह्यात् इति, उच्यते ॥ इन्द्रियाणीति । इन्द्रियाणि श्रोत्रादीनि पंच, देहं स्थूलं बाह्यं परिच्छिन्नं चापेक्ष्य, सौक्ष्म्यान्तस्स्थत्वव्यापित्वाद्यपेक्षया पराणि प्रकृष्टानि आहुः पण्डिताः । तथा इन्द्रियेभ्यः परं मनः संकल्पविकल्पात्मकं । तथा मनसस्तु परा बुद्धिः निश्चयात्मिका । तथा यः सर्वदृश्येभ्यः बुध्यन्तेभ्यः अभ्यन्तरः, यं देहिनमिन्द्रियादिभिराश्रयैर्युक्तः कामः ज्ञानावरणद्वारेण मोहयतीत्युक्तं । स बुद्धेर्द्रष्टा पर आत्मा ॥

रा० ॥ ज्ञानविरोधिषु प्रधानमाहु ॥ ज्ञानविरोधे प्रधानानीन्द्रियाण्याहुः । यत इन्द्रियेषु विषयव्यापृतेषु आत्मनि ज्ञानं न प्रवर्तते । इन्द्रियेभ्यः परं मनः, इन्द्रियेषूपरतेष्वपि मनसि विषयप्रवणे आत्मज्ञानं न संभवति । मनसस्तु परा बुद्धिः, मनसि वृत्त्यन्तरविमुखे विपरीताध्यवसायप्रवृत्तौ सत्यां ज्ञानं न प्रवर्तते । सर्वेषु बुद्धिपर्यन्तेषु उपरतेष्वपीच्छापर्यायः कामो रजस्समुद्भवो वर्तते चेत् स एवैतानीन्द्रियादीन्यपि स्वविषये वर्तयित्वा आत्मज्ञानं विरुणद्धि । तदिदमुच्यते 'यो बुद्धेः परतस्तु सः' इति । बुद्धेरपि यः परः स काम इत्यर्थः ॥

विचारः

(अभिमान्यभिमन्यमानतारतम्यपुरस्सरं विष्णोस्सर्वोत्तमत्वज्ञानं कामविजये आयुधरूपमिति प्रतिपादनाय तारतम्यक्रमोऽत्र निरूप्यते)। 'असंगज्ञानासिमादाय तरति पारं' इत्युक्तेः ॥ अत्रोक्तं तारतम्यं काठकोपनिषदर्थ एवेति रामानुजाचार्यं विना सर्वेऽभ्युपयन्ति । उक्तं कठवल्यां—

"इन्द्रियेभ्यःपराह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥"

इति । गीतोपनिषदोस्तावत् किंचिद्वैलक्षण्यं दृश्यते । उपनिषदि अर्थानां इन्द्रियेभ्यः परत्वमुक्तं । गीतायांतु वैपरीत्येन इन्द्रियाणां शरीराद्यर्थे-

भ्य:परत्वमित्येकं वैलक्षण्यं । उपनिषदि बुद्ध्यनन्तर पुरुषात्पूर्व महानात्मा ततःपरं अव्यक्तं इति तत्वद्वयमभिहितं । गीतायां तु अस्य द्वयस्यानुक्ति-र्दृश्यते । इदमपरं वैलक्षण्यं । अत्र द्वितीयस्य समाधान सुघटं । यतः इन्द्रियमनोबुद्धीनां पूर्वप्रकृतत्वेन प्रतीतिसौकर्यार्थं तेषामेव ग्रहणमुचितं । सङ्क्षेपतस्तद्ग्रहणेऽपि बुद्धिशब्देन महत्तत्वाव्यक्ते उपलक्ष्येते । दिश· प्रदर्शि-तत्वाद्वेदानुगुण्येनावान्तरव्यक्तीनां ग्रहणस्यौचित्यान्न काप्यनुपपत्तिरिति ॥

आद्य वैलक्षण्यमनेकधा समाहितं गम्यते । तथाहि । उत्कर्षदीपि-कायां 'श्रुत्यनुसारेणेन्द्रियेभ्यः पराह्यर्था इति वक्तव्येऽपि एवं भगवत उक्ति. सफलापूर्वपुरुषपरत्वप्रतिपादनायाः श्रुतेरफलार्थादिपरत्वाभिधाने तात्पर्या-भावज्ञापनार्थेति मन्तव्यं' इति। आह मधुसूदनः 'अत्रात्मनः परत्वस्यैव वाक्यतात्पर्यविषयत्वादिन्द्रियादिपरत्वस्याविवक्षितत्वात्, इन्द्रियेभ्यः पराह्यर्था इति स्थानेऽर्थेभ्यः पराणीन्द्रियाणीति विवक्षाभेदेन भगवदुक्तं न विरुध्यते' इति ॥ उक्तं गीतातात्पर्यन्यायदीपिकयोः । (गी. ता.) ''नचेन्द्रियेभ्यः पराह्यर्थाः' 'रुद्रोऽहंकृतिरूपकः' इत्यादिविरोधः.

सर्वाभिमानिनो देवाः सर्वेऽपि ह्युत्तरोत्तरं ।
आधिक्यं वक्तुमेवैषां पृथक्स्थानमुदीर्यते ॥
आधिक्यक्रम एवात्र शास्त्रतात्पर्यमिष्यते ।
स्थानेषु त्ववरेषां च परे सन्ति नचेतरे ॥
तथापि पितुरर्थो यः पुत्रस्याप्युपचर्यते ।
अव्यक्तादिपदार्थानां सर्वे तदभिमानिनः ॥ " इति ।'

न्यायदीपिकायांच 'अनेनेन्द्रियादिभ्य इन्द्रियाभिमानिभ्योऽधमानां, उत्तमानां सौपर्ण्यादीनां चार्थाभिमानित्वात्सौपर्ण्यादिविवक्षया इन्द्रियेभ्योऽर्था-

नामुत्तमत्वं श्रुतिराह ) इदन्तु वाक्यं (गीतायां) शिवसुतविवक्षयाऽर्थेभ्य इन्द्रियाणामुत्तमत्वं वक्तीत्यविरोधः' इति )। तथाच विवक्षाभेदेनार्थानामवरत्वं उत्तमत्वं च संगच्छते इत्याशयः। शरीरादिभ्य इन्द्रियाणि पराणीत्युक्तौ इन्द्रियाणां प्रकाशकत्वान्तरत्व-सूक्ष्मत्व-व्यापकत्व-कारणत्वप्रवर्तकत्वेभ्यः परत्वं। शरीरादेस्तु प्रकाश्यत्वबाह्यत्वस्थूलत्वव्याप्यत्वकार्यत्वप्रवर्त्यत्वेभ्यः अवरत्वं इति शांकराः ।)

(श्रुतावर्थानामिन्द्रियापेक्षया प्राधान्यं च विवक्षान्तरेणोपपद्यते। विषयसन्निधौ वश्येन्द्रियस्याऽपि इन्द्रियाणां दुर्निग्रहत्वात्। स्त्रीपुंसभेदमजानताऽपि ऋश्यश्रृंगेणोक्तं हि गणिकास्त्रियं विवक्षित्वा.

('इच्छामि तस्यान्तिकमाशु गंतु
तंचेह नित्यं परिवर्तमानं।
गच्छामि तस्यान्तिकमेव तात
का नाम सा ब्रह्मचर्या च तस्य' इति ॥ वनपर्व. ११४॥

इन्द्रियार्थमनोबुद्धिमहदव्यक्तानां नीचोच्चताया निमित्तं युक्तिश्च तेषां सृष्टिलयक्रमानुसधानेनावगम्यते। उक्तं शान्तिपर्वणि,

"यतस्सृष्टानि तत्रैव तानि यान्ति पुनः पुनः।
महाभूतानि भूतेभ्यः सागरस्योर्मयो यथा॥
यस्माद्यदभिजायेत तत्तत्रैव प्रलीयते।
लीयन्ते प्रतिलोमानि सृज्यन्ते चान्तरात्मना॥
अनुलोमेन जायंते लीयन्ते प्रतिलोमतः" इति॥

श्रुतिगीतयोर्देवतातारतम्यमनुसृत्य च नीचोच्चताऽभिप्रेतेति व्यक्तं। अत्रार्थे काठकभाष्यं विवृत्युदाहृतं द्रष्टव्यं। किंच—

"सर्वेभ्यः प्रवरा देवा इन्द्राद्या इन्द्रियात्मकाः ।
तेभ्यो मनोभिमानी तु रुद्रस्तस्मात्सरस्वती ॥

बुद्ध्यात्मिका ततो ब्रह्मा महानात्मा परः स्मृतः ।
अव्यक्तरूपा लक्ष्मीश्च वराऽतोऽतो हरिः स्वयं ॥

न तत्समोऽधिको वेति ह्यानुपूर्वी प्रकीर्तिता ।
यथाक्रमप्रबोधेन नाश्याः कामादिशत्रवः ॥

प्राप्यते च परं स्थानं विष्णोरतुलमंजसा ।" इति गीतातात्पर्यनिर्णयोदाहृतं प्रमाणं च ॥

उत्तमाधमयोर्बिम्बप्रतिबिम्बभावश्चानुसन्धेयः । यथोक्तं भारततात्पर्यनिर्णये,

'आभासकोऽस्य पवनः पवनस्य रुद्रः
शेषात्मको गरुड एव च शक्रकामौ ।

वीन्द्रेशयोस्तदपरे त्वनयोश्च तेषा-
मृष्यादयः क्रमश ऊनगुणाश्शतांशात् ॥' इति ।

एवं स्त्रीणामप्युत्तमोत्तमप्रतिबिंबत्वं विद्यते । अधमदेवाः पुमांसोऽप्युत्तमदेवस्त्रीप्रतिबिंबभूताः स्युः ॥ किंच नियतगुरुशिष्यभावेन च तारतम्यमुपपद्यते । मनुष्योत्तमानां ऋषयो नियतगुरवः । ऋषीणां ऋषयो देवाश्च । देवानां स्वोत्तमदेवाः । इति नियमः ॥ शिष्यस्वरूपं सम्यग्ज्ञात्वा तद्योग्यविशिष्टभगवद्रूपविशेषविषयकविद्योपदेशकर्तारो नियतगुरवः ॥

गीतायां महत्तत्वाव्यक्तयोःकंठतोऽनुक्तत्वेन किमित्युपलक्षणया वाऽध्याहारेण वा तयोराकर्ष इति न मंतव्यं । श्रुत्युक्ततारतम्यविशेषाणां ज्ञानस्यैव महाफलत्वात् । महत्तत्वाभिमानी जीवोत्तमो विरिंचः । तन्माहात्म्यमवश्य-

मनुसन्धेयं । अव्यक्तस्याभिमानिनी लक्ष्मीः । सा श्रीभूदुर्गारूपैर्महाकार्यं निर्वहति । श्रीः सत्वगुणप्रेरिका । भूः रजसः । दुर्गा तमोगुणस्य । तामसात्पांचपर्वणी अविद्या जाता । तस्याः मोहमहामोहतामिस्रान्धतामिस्रतमांसि प्रभेदाः । तथा जीवाच्छादिकापरमाच्छादिकाशैवलामायाश्च । तस्माल्लक्ष्मीतत्वस्यानुपेक्ष्यत्वं स्फुटं । अत एव 'विश्वस्थितिप्रलयसर्गमहाविभूतिवृत्तिप्रकाशनियमावृतिबन्धमोक्षाः । यस्या अपांगलवमात्रत ऊर्जिता सा श्रीर्यत्कटाक्षबलवत्यजितं नमामि'॥ इति द्वादशस्तोत्रे ॥ केचित्तारतम्यज्ञानस्यामुख्यत्वं वदेयुः । तदसत् । उक्तं गारुडे 'अपौरुषेयवेदेषु वेदेषु चैव हि । सर्वत्र ये गुणाः प्रोक्ताः संप्रदायागताश्च ये । सर्वैस्तैस्सह विज्ञाय ये पश्यन्ति परं हरिं । तेषामेव भवेन्मुक्तिर्नान्यथा तु कथंचन ॥' इति । अतः अव्यक्तमाहात्म्यज्ञानपूर्वकं विष्णोस्तदाधिकत्वमवश्यं ज्ञेयम् ॥

'मानुषादिविरिंचान्तं तारतम्यं विमुक्तिगं । ततो विष्णोः परोत्कर्षं सम्यग्ज्ञात्वा विमुच्यते' इति शान्तिपर्वणि ॥

गीतायां 'यो बुद्धेः परतस्तु सः' इत्युक्तौ 'सः' इत्यनेन परामर्शविषयः कः इत्यत्रास्ति विचारः ॥ 'यः सर्वदृश्येभ्यो बुद्ध्यन्तेभ्योऽभ्यन्तरो, यं देहिनं इन्द्रियादिभिराश्रयैर्युक्तः कामो ज्ञानावरणद्वारा मोहयतीत्युक्त स बुद्धेर्द्रष्टा पर आत्मे'ति शङ्करभाष्यं । 'ज्ञानमावृत्य देहिनं' (V 40) इत्यत्र 'देहिनं' इत्यस्येहानुषग इति शाङ्कराणामाशयः । यद्यपि जीवपरमात्मैक्यराद्धान्ते स्याज्जीवस्य सर्वोत्तमत्वं । तथापि 'देहिनं' इति संसारी हि विवक्षितः । उल्बेन गर्भ इव कामबद्धः काममोहितश्च । तज्ज्ञानेन मोक्षो भवतीति कथं नाम वक्तुं शक्यते । 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' इत्युक्तेः श्रीनारायणापरोक्षादेव हि रागस्य निवृत्तिरवगम्यते । 'अविज्ञाय परं मत्तो जयः कामस्य वै कुतः' इति चोक्तमन्यत्र ॥ तस्माज्जीवज्ञानान्मुक्तिरनुपपन्नेतीदं व्याख्यानमुपेक्ष्यम् ॥

'सः' इत्यनेन कामो विवक्षित इति रामानुजाचार्यो मन्यते ॥ अस्मिन्प्रकरणे इन्द्रियमनोबुद्धिकामानां चतुर्णां वैरित्वं उक्तं इति मत्वा 'सर्वेषु बुद्धिपर्यन्तेषूपरतेष्वपि इच्छापर्यायः कामः रजःसमुद्भवो वर्तते चेत् स एवैतानीन्द्रियादीन्यपि स्वविषये वर्तयित्वा आत्मज्ञानं विरुणद्धि इति बुद्धेः परः कामः' इति रामानुजभाष्यं ॥ इदं चिन्त्यं । इन्द्रियादिचतुर्णां विरोधित्वं नेह प्रकृतं । कामस्यैकस्यैवारिषड्वर्गे प्रधानत्वेनोक्तत्वात् । अर्जुनप्रश्ने उत्तरेच एकस्यैव विवक्षा प्रागेव प्रतिपादिता द्रष्टव्या । इन्द्रियमनोबुद्धीनामधिष्ठानत्वकथनंच नैतद्विरुद्धं । यतस्तत्राप्यस्मदीयदुर्गाक्रमणेन कामस्यैव प्राबल्यं निरूपितं । यदि कामो बहिष्कृतः तर्हि इन्द्रियमनोबुद्धयो ह्यस्माकं श्रवणादिद्वारा ज्ञानसंपादने परमानुकूला भवेयुः । दुष्टसहवासे हि ताः प्रतिकूलाः । उक्तं हि श्रुतौ—

"मनोहि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेवच ।
अशुद्ध कामसङ्कल्पं शुद्धं कामविवर्जितं ॥
मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतं" इति ॥

किंच कामज्ञानेन कामहननं कथं स्यात् । सहि ज्ञानमावृत्य तिष्ठति । अन्यसहायं विना कामजयोऽशक्य इति गम्यते । केवलं कामः प्रबल इत्युपदेशेन जयोपायो नोपदिष्टो भवेत् । कामस्वरूपं तु प्रपंचितमेव प्रागेव बहुग्रन्थेनेतीह पुनः कामो बुद्धेः पर इति वचनस्य न सङ्गतिः स्फुटा ॥

किंच कामो मनोधर्म इति 'कामस्सङ्कल्पः' इत्यादिश्रुतिप्रसिद्धः । मनोधर्मस्य मनसस्तदुत्तमबुद्धेश्चोत्तमत्वं व्याहतं ॥ किंच 'आहुः' इति गीतायाः, श्रुतय आहुरिति व्याख्यातव्यत्वे किमिति कठवल्लीसंवादो रामानुजदेशिकाभ्यामुपेक्ष्यते ॥ विद्यमानं किंचिद्वैलक्षण्यं तु समाहितं प्रागेव ॥

'सः' इत्यनेनात्मा गृह्यते इति पक्षमनूद्य देशिको वक्ति । 'आत्मनो नियन्तव्यत्वेनैतत्प्रकरणे न विवक्षा । तथासति आत्माऽपि अधिष्ठानतया व्यपदिश्येत । तत्र मोहनीयतया व्यपदिष्टः' इति ॥ आत्मनो नियन्तव्यत्वं को ब्रूते । नियन्तव्यस्यैव परामर्श उचित इति च न संगच्छते ।

'आहुः' इत्यस्य कर्तृवाचकपदमन्वेषमाणो देशिकः श्रुतीर्विहाय मन्वादीनादाय मनुवाक्यमुदाहरति ॥

'इन्द्रियाणां हि चरतां यद्येकं क्षरतीन्द्रियं । तेनास्य क्षरति प्रज्ञा दृतेः पादादिवोदकं ॥' इति ॥

अत्र पश्यन्तु बुधाः कठवल्लीवाक्यं । यद्गीतायाःपरमानुगुणं वर्तते । मनुवाक्यं तु इन्द्रियमनोबुद्धीनां तारतम्यप्रसक्तिमपि न करोति ॥

किंच कठवल्ल्यामुक्तं 'विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदं' इति (III 9) ॥ एतेन विष्णुज्ञानमेव बन्धमोचनशक्तिमदिति ज्ञायते । एवंसति शाङ्करा रामानुजीयाश्च विष्णुपरामर्शं हित्वाऽन्यान्वेषणपराः किमिति भ्रमन्त इति न ज्ञायते । 'सः' इति विष्णोर्ग्रहणे गीतास्थशब्देन औपनिषदपरामर्शः प्रसज्येत स न युक्तो विप्रकृष्टत्वादिति देशिकेन भीतं ज्ञायते । अस्य समाधानं सुवचं । 'यो बुद्धे'रिति यच्छब्देनोक्तस्य स इत्यनेन परामर्शः । परमात्मेति विधेयाकारः श्रुत्यनुसारेण । अतो न काप्यनुपपत्तिः इति ॥

तस्माद्वेदानुगुण्येन 'रसोऽप्यस्ये'ति वचनानुगुण्येन च श्रीनारायणज्ञानेन कामो जेतव्य इत्येव परमरमणीयः पक्षः आश्रयणीयः ॥

श्रीमध्वाभिमतं तारतम्यमसहमानो वेंकटनाथः मद्वाचार्यव्याख्यानमत्र तुच्छमिति निराकृतवान् ॥ स आह, 'यत्त्वत्र माध्वव्याख्यानं । इन्द्रियादिशब्दैस्तत्तद्देवता विवक्षिताः । तथाच लोके इन्द्रियदेवताः सर्वतः श्रेष्ठा'

ततो मनोभिमानी रुद्रः । तस्मात्सरस्वती बुद्ध्यभिमानिनी । ततो ब्रह्मा महानात्मा । ततोऽव्यक्तरूपा लक्ष्मीः । ततो विष्णुः इति । तत्तुच्छं । एवं सति पादेन्द्रियाभिमानिविष्ण्वपेक्षया मनोभिमानिरुद्रस्य श्रेष्ठत्वप्राप्त्या कीलोत्पाटिवानरन्यायापातात् । पाददेवतायाः विष्णोः द्वादशादित्यान्तर्गतविष्णुरूपत्वान्न मूलविष्णोरपकर्ष इति चेत्तर्हि मनोदेवताया रुद्रस्याप्येकादशरुद्रान्तर्गतरुद्ररूपत्वान्न मूलरुद्रस्यापकर्ष इति कुतो न मन्यसे । किंच त्वदुक्तदेवतातारतम्ये न तावत् 'इन्द्रियाणि पराणि' इत्यादिकमेव वाक्यं प्रमाणं । एतस्य व्याख्यातत्वात् । इन्द्रियादिशब्दानां स्वार्थपरत्वे संभवति तदभिमानिदेवतापरत्वकल्पनस्यान्याय्यत्वाच्च । नाप्यन्यत्प्रमाणमस्तीति पाषंडगजकेसरिण्यस्माभिः प्रपंचितमित्यास्तां तावत्' इति ॥

(इदमतिमन्दं । रुद्रस्यापकर्षमाह श्रीमध्व इत्याग्रहमूलमिदं दूषणं इति स्फुटं । पाददेवतात्वेऽपि विष्णोरुत्कर्षः मनोभिमानित्वेऽपि रुद्रस्यापकर्षः कथमित्ययमाक्षिपति । स्थानविशेषमात्रेणोत्कर्षापकर्षनियमनं श्रीमदाचार्यो वक्तीति अस्य प्रथमो भ्रमः ।) उदाहृत खलु गीतातात्पर्ये । 'सर्वाभिमानिनो देवाः सर्वेऽपि ह्युत्तरोत्तरं । आधिक्यं वक्तुमेतेषां पृथक्स्थानमुदीर्यते ॥ स्थानेषु त्ववरेषां च परे सन्ति नचेतरे ॥' इति ॥ एतेन उत्तमानां अवरस्थानत्वं युज्यते । अधमानान्तु नोत्तमस्थानं इति सप्रमाणं कथितमाचार्यमतं न दृष्टमनेन दूषकेणेति ज्ञायते ॥

( किञ्च मनोभिमानित्वेनैव रुद्रस्यापकर्ष उच्यतेऽस्माभिरिति द्वितीयोऽस्य भ्रमः । अनन्तानि हि प्रमाणानि तत्र तत्राचार्योदाहृतानि रुद्राद्विष्णोरुत्तमत्वे । इन्द्रियादिशब्दानां स्वार्थपरत्वमस्माभिर्निषिद्धमित्यन्योऽस्य भ्रमः । यतः स्वार्थपरत्वं सम्भवति देवतापरत्वं च । केवलं कुड्यात्कूसूल उत्तमः इति परिज्ञानेन कथं स्यात्कामजयो मोक्षो वा । नहि श्रीनारायणोऽचेतनप्रपञ्चादुत्तम इति ज्ञानमलं निश्रेयसाय । का नाम शरणागतिः । उक्त हि,

"सर्वोत्तमत्वविज्ञानपूर्वं तत्र मनः सदा ।
सर्वाधिकप्रेमयुक्तं सर्वस्यात्र समर्पणं ॥
अखण्डा त्रिविधा पूजा तद्वत्यैव स्वभावतः ।
रक्षतीत्येव विश्वासः तदीयोऽहमिति स्मृतिः ॥
शरणागतिरेषा स्याद्विष्णौ मोक्षफलप्रदा " इति ॥

तथाच चेतनाचेतनसर्वप्रपंचोत्तमत्वविज्ञानमावश्यकं इति यथाऽचेतनतारतम्यं सङ्गतं तथाभिमानिदेवतातारतम्यं सङ्गतमेव ॥

यस्स्वकपोलकल्पितस्य पाषण्डगजकेसरिणः परामर्शः कृतः, तस्य ग्रन्थस्य विद्वद्भिरश्रुतदृष्टपूर्वत्वादयमुपेक्षितः ॥

किंच इन्द्रियादिदेवतानां विवक्षा नात्रासङ्गतेति नीलकण्ठमधुसूदनावपि ज्ञापयतः । उक्तं नीलकण्ठीये, 'तथाच कौषीतकिनः समामनन्ति ब्राह्मणे 'प्राणेभ्यो देवा देवेभ्यो लोकाः' इति ॥ व्युच्चरन्तीत्यनुषज्यते । प्राणेभ्य इन्द्रियेभ्यो देवाः तदधिष्ठात्र्यो देवता उत्पद्यन्ते । देवेभ्यश्च लोका भूतभौतिका उत्पद्यन्ते इति श्रुत्यर्थः' इत्युक्तं ॥ मधुसूदनीये, ''मनो महान्मतिर्ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः' इति वायुपुराणवचनात् महतो हैरण्यगर्भबुद्धेः परमव्यक्त'मित्यादि ॥ एवं स्वयूथ्यैरप्यधिष्ठातृदेवतानां श्रुतिगीतयोः परामर्शे निरूपिते यदुक्तं वेङ्कटनाथेन 'इन्द्रियाणि पराण्याहु'रिति श्लोकव्याख्यानावसरे 'एवं सति पादेन्द्रियाभिमानिविष्णवपेक्षया मनोभिमानिरुद्रस्य श्रेष्ठत्वप्राप्त्या कीलोत्पाटिवानरन्यायापाता'दिति, तत् अस्मत्सिद्धान्तानभिज्ञानमूलं वा दुराग्रहमूलं वा छलोत्तरं । नह्यस्माभिः विष्णोरभिमानित्वं कुत्राप्युक्तं । अभिमानित्वं नाम पराधीनस्वामित्वं । तत्तु स्सर्वेश्वरस्य नास्माभिरङ्गीकृतं । किंतु रमादीनामेव । अत एवोक्तं भाग-

वततात्पर्ये । 'पाददेवस्तु यज्ञोऽन्यस्तं प्रविश्य हरिः स्वयं । सर्वं विधारयन् देहे वर्ततेऽनन्तशक्तिधृत्' इति ॥

'विष्णोर्द्वादशादित्यान्तर्गतविष्णुरूपत्वान्न मूलविष्णोरपकर्ष इति चेत्तर्हि मनोदेवताया रुद्रस्याप्येकादशरुद्रान्तर्गतरुद्ररूपत्वान्न मूलरुद्रस्यापकर्ष इति कुतो न मन्यसे' इति, तदपि छलमेव । नहि विष्णुद्वयं कुत्राप्यस्माभिरङ्गीकृतं । किंतु उपेन्द्रमूलरूपिविष्णुरेव द्वादशादित्यान्तर्गतः। नचैतावता तस्यापकर्षः । नहि कृष्णादिरूपेण मनुष्यान्तर्गतत्वमात्रेण तस्यापकर्षः । यच्चोक्तं देवतातारतम्ये यदि गीताश्लोक एव प्रमाणं । सचान्यथा व्याख्यातः इति तच्चायुक्तं । अस्य श्लोकस्य कठवल्लीश्रुत्यनुसारित्वात् श्रुत्यनुसारेणार्थो वक्तव्यः। श्रुतौच 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गति'रित्युक्तथा पुरुषनाम्नो विष्णोस्सर्वोत्तमत्वं प्रतिपाद्यमिति स्पष्टं ज्ञायते । अतो गीताश्लोकस्याप्यन्यार्थकत्वमयुक्तम् ।

(यच्चोक्तं इन्द्रियादिशब्दानां देवतापरत्वमन्याय्यमिति तदप्ययुक्तं । अभिमान्यधिकरणन्यायेन 'आपोऽब्रुवन्' 'मृदब्रवी'दित्यादाविव अभिमानिष्वेव मुख्यत्वात् । अभिमन्यमानवाचकशब्देनाभिमानिव्यवहारस्य श्रुतिस्वभावत्वाच्च । जडपरत्वे वैयर्थ्याच्च । अन्यथा 'आपः पुनन्तु' 'तिलाः पुनन्तु मे पापं' इत्यादावपि अभिमानिपरत्वं न स्यात् । तथात्वेच 'असदचेतनायोग्यान्यनुपास्यान्यफलत्वविपर्ययाभ्या'मिति सङ्कर्षणसूत्रविरोधः । प्रमाणान्तराणिच तत्र तत्रोदाहृतानि द्रष्टव्यानि ॥

एवं बुद्धेः परं बुध्वा संस्तभ्यात्मानमात्मना।
जहि शत्रुं महाबाहो कामरूपं दुरासदं ॥४३॥

वि ॥ एवं तारतम्यान्तगतत्वेन ज्ञेयमुक्त्वा तज्ज्ञानमाह। एवमिति ॥ एवमुक्तदिशा बुद्धेर्महतोऽव्यक्ताच्च परं बुध्वा आत्मानं मनः आत्मना बुद्ध्या संस्तभ्य निश्चलं कृत्वा, दुरासदं दुःखेनासादनीयं, निवर्तनीयमिति यावत्। कामरूपं शत्रुं जहि हतं कुरु हे महाबाहो इति ॥

शं ॥ एवमिति। एवं बुद्धेः परं परमात्मानं बुध्वा ज्ञात्वा संस्तभ्य सम्यक् स्तंभनं कृत्वा आत्मानं, स्वेनैवात्मना संस्कृतेन मनसा सम्यक् समाधाय इत्यर्थः। जहि एनं शत्रुं हे महाबाहो कामरूपं दुरासदं दुःखेन आसदः आसादनं प्राप्तिः यस्य तं दुरासदं दुर्विज्ञेयानेकविशेषं इति ॥

रा ॥ एवं बुद्धेरपि परं कामं ज्ञानयोगविरोधिनं वैरिणं बुध्वा, आत्मानं मनः, आत्मना बुद्ध्या, कर्मयोगे अवस्थाप्य एनं कामरूपं दुरासदं शत्रुं जहि नाशयेति ॥

विचारः

कामरूपं शत्रुं जहीत्यनेन कामपरमेव वाक्यमिति न मन्तव्यं। तदभिमान्यसुरस्य कालनेमिनोऽपि विवक्षायाः सम्भवात् ॥ अत्र हरिवंशवचनं स्मर्तव्यम् ॥

"पंच तं नाभ्यवर्धन्त विपरीतेन कर्मणा।
वेदो धर्मः क्षमा सत्यं श्रीश्च नारायणाश्रया ॥

क्षिप्यमाणोऽसुरेन्द्रेण न चुकोप गदाधरः ।
क्षमाबलेन महता सस्मितं वाक्यमब्रवीत् ॥
यदा तस्य सुपर्णस्य पतिता मूर्ध्नि सा गदा ।
तदाऽगमत्पदा भूमिं पक्षी व्यथितविग्रहः ॥
स्रग्दाममालाविततं कामगं कामरूपिणम् ।
क्षेपाणाद्यस्य मुह्यन्ति लोकास्सस्थाणुजङ्गमाः ॥
चिच्छेद बाहुचक्रेण श्रीधरः कालनेमिनः" इति ॥

एतेन श्रीहरिप्रसादमात्रसाध्यः कामजय इत्यवगम्यते। बुद्धेः परो विवक्षितस्साक्षी जीव इति शांकरःपक्षः । कामः इति रामानुजाचार्यस्य । पक्षद्वयेऽसामंजस्यमतीतश्लोकव्याख्याने निरूपितं द्रष्टव्यम् ॥

सर्वागमानां विष्णूत्कर्षे तात्पर्यं मन्वाना आस्तिकाः विष्णोरिह परामर्शस्य स्वारस्यमनुमोदेरन् । इन्द्रियमनोबुध्यादितारतम्यप्रकरण एवाव्यवहिते पूर्वस्मिन्मन्त्रे ह्युक्तं 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदं' इति॥ 'आत्मना आत्मान संस्तभ्ये'त्यत्र 'आत्मना स्वेनैवे'ति शंकरभाष्यं । स्वेनैव स्वस्य समाधानं कथं भवेदिति न स्पष्टमवगम्यते ॥

(सर्वतः पर आत्मा निर्विकारः करणत्वेन विवक्षाया अनर्हः इत्यभिप्रयन् उत्कर्षदीपिकाकारस्तु आत्मनेत्यस्य 'संस्कृतमनसा बुध्या वे'ति व्याख्यानमाश्रयते । द्वितीयान्तात्मशब्दं मनःपरत्वेन व्याचष्टे । एतदेव खलु श्रीमध्वव्याख्यानं

(आत्मज्ञानस्य कामहननोपायत्वनिरूपणावसरे आह शङ्करानन्दः, 'विशिष्य विषयग्रहणमेव कामाविर्भूतिकारणं । सर्वत्र ब्रह्मदृष्ट्या तदग्रहणमेव कामविनाशहेतुः, अतः सर्वं ब्रह्मैव पश्यन् कामं निर्मूलयेत्यर्थः' इति)॥

इदमत्र चिन्त्यते । पापहेतोः कामस्य विजयो हि प्रसक्तः । सर्वजगन्मूला-

विद्याया उच्छेदस्येह संगतिर्दुर्घटा । कथं स्यात्संसारच्छेद इति कथं स्यान्मोक्ष इति वा न पृष्टमर्जुनेन, भूमौ विद्यमानेन कर्मिणा कर्मणि क्रियमाणे सति विवेकिनापि यत्पापं प्राप्यते तस्य को हेतुरिति प्रश्ने कृते सर्वजगन्नाशोपायस्योत्तरस्यापृष्टोत्तरत्वमापद्यते इति )।

किंच य. सर्वं ब्रह्मैव पश्यन् विरमति सहि ज्ञानयोगी परराद्धान्ते )( कर्मयोगमुपक्रम्यास्मिन्कर्मयोगाभिधेऽध्याये ज्ञानयोगोपदेशेनोपसंहारः कथं संगच्छते । अत्राह शङ्करानन्दः ‘मोक्षहेतोर्ज्ञानयोगस्यैव प्राधान्यं कर्मयोगस्योपसर्जनतयैवेत्यध्यायस्य ज्ञानयोगपर्यवसायित्वात्तत्परत्वमेव’ इति ॥ तथाच यद्यप्ययमध्यायः कर्मयोगाभिधः । तथापि ज्ञानयोगाध्याय इत्येव वस्तुतो द्रष्टव्यः इत्याशयः कथितो भवति )( एवमाशयकथनमरम्यं । यतः शङ्करानन्देनैवमभिप्रेतेऽपि स्वयूथ्या उत्कर्षदीपिकाकारादय आहुः ‘उपायः कर्मनिष्ठाऽत्र प्राधान्येनोपसंहृता । उपेया ज्ञाननिष्ठा तु तद्गुणत्वेन कीर्तिता’ इति )( एतेन गुणप्रधानभावेऽपि स्वव्यूह एव मतभेदो ज्ञायते । अध्यायनामान्वर्थकत्वेनोपदिष्टं कर्मकर्तव्यत्वं यथा न व्याहतं, न तिरस्कृतं च भवेत्, यथा वा एकवाक्यता न चालिता अपि तु दृढीकृता स्यात्, तथाहि व्याख्यानं रम्यं । ‘कर्म कर्तव्यं । कामस्तु पापहेतुत्वाद्वर्जनीयः । भगवति कर्म समर्पणीयं । भगवज्ज्ञानेन तत्प्रसादात्कामोऽपनेष्यते’ इति व्याख्याने तु कर्मयोगोपदेशो दृढीकृतो भवति । न किंचिदपि विचालितः ॥ तस्माद्वैष्णवधर्मस्य कर्मयोगस्य विष्णुभक्तिद्वारा इन्द्रियजयाख्यं फलं भवतीति सर्वं समंजसं ॥

इति श्रीमत्पद्मनाभाचार्यविरचितायां भावचन्द्रिकायां तृतीयोऽध्यायः समाप्तः ॥

# चतुर्थोऽध्यायः ।

*श्रीभगवानुवाच—*

**इमं विवस्वते योगं प्रोक्तवानहमव्ययं ।**
**विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ १ ॥**

वि ॥ पूर्वाध्याये नियतं कुरु कर्मत्वमित्यादिना किंचिद्विवृतस्य निवृत्तकर्मणः, तथा यो बुद्धेः परतस्तु सः इत्यादिना तारतम्यान्तगत्वेनोक्तविष्णोस्तज्ज्ञानस्य च विस्तरेण निरूपणमत्राध्याये क्रियते ॥ एवं ज्ञात्वा कृतं कर्मेत्यतः प्राक्तनग्रन्थेन बुद्धेः परस्य विष्णोर्माहात्म्यमुच्यते । श्रेयान् द्रव्यमयाद्यज्ञादित्यतः पूर्वेण निवृत्तस्य कर्मणोऽन्यस्माद्भेदः निवृत्तकर्मण्येवोपासनायज्ञादिरूपेण भेद इत्येवं कर्मविस्तारोक्तिः । शेषेण ज्ञानमाहात्म्योक्तिरिति विवेकः ॥ मयि सर्वाणीत्युक्तनिवृत्तकर्मलक्षणज्ञानोपायानुष्ठानाननुष्ठानाभ्यां ये मे मतमित्यादिनाऽर्थानर्थयोरुक्तया अवश्यमनुष्ठेयमित्युक्तं । पुनस्तदनुष्ठाने रुच्युत्पादनाय पूर्वानुष्ठितश्चायं धर्म इत्याह ॥ इममित्यादित्रयेण ॥ अव्ययफलत्वादव्ययं । इमं योगं मयि सर्वाणीत्यनेनोक्तं निवृत्तकर्मलक्षणं ज्ञानोपायं, विवस्वते

आदित्याय, सच स्वपुत्राय मनवे श्राद्धदेवाय, सच मनुः स्वपुत्रायेक्ष्वाकवे ॥

शं ॥ यो योगः अध्यायद्वयेनोक्तः ज्ञाननिष्ठालक्षणः संन्यासः कर्मयोगोपायः, यस्मिन्वेदार्थः परिसमाप्तः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च । गीतासु च सर्वासु अयमेव योगो विवक्षितो भगवता। अतः परिसमाप्तं वेदार्थं मन्वानः तं वंशकथनेन स्तौति भगवान्॥ इममिति । इमं अध्यायद्वयेनोक्तं योगं विवस्वते आदित्याय सर्गादौ प्रोक्तवान् अहं, जगत्परिपालयितॄणां क्षत्रियाणां बलाधानाय । तेन हि योगबलेन युक्तास्सर्वथा भवन्ति ब्रह्म परिरक्षितुं । ब्रह्मक्षत्रे परिपालिते जगत् परिपालयितुमलं । अव्ययमव्ययफलत्वात् । न ह्यस्य योगस्य सम्यग्दर्शननिष्ठालक्षणस्य मोक्षाख्यं फलं व्येति । सच विवस्वान्मनवे प्राह । मनुः इक्ष्वाकवे स्वपुत्रायादिराजायाब्रवीत् ॥

रा ॥ तृतीयेऽध्याये प्रकृतिसंसृष्टस्य मुमुक्षोस्सहसा ज्ञानयोगेऽनधिकारात्कर्मयोग एव कार्यः । ज्ञानयोगाधिकारिणोऽप्यकर्तृत्वानुसंधानपूर्वककर्मयोग एव श्रेयानिति सहेतुकमुक्तं। शिष्टतया व्यपदेश्यस्य तु विशेषतः कर्मयोग एव कार्य इति चोक्तं ॥ चतुर्थेनेदानीमस्यैव कर्मयोगस्य निखिलजगदुद्धारणाय मन्वन्तरादावेवोपदिष्टतया कर्तव्यतां द्रढयित्वा, अन्तर्गतज्ञानतयाऽस्यैव ज्ञानयोगाकारतां प्रदर्श्य, कर्मयोग-

स्वरूपं तद्भेदाः कर्मयोगे ज्ञानांशस्यैव प्राधान्यं चोच्यते । प्रसङ्गाच्च भगवदवतारयाथात्म्यमुच्यते ॥ योऽयं तवोदितो योगः स केवलं युद्धप्रोत्साहनायेदानीमुदित इति न मंतव्यं, मन्वन्तरादावेव निखिलजगदुद्धारणाय परमपुरुषार्थलक्षण-मोक्षसाधनतयेमं योगमहमेव विवस्वते प्रोक्तवान्, विवस्वांश्च मनवे, मनुरिक्ष्वाकवे इति ॥

विचारः

('मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा । निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः' इति पूर्वाध्यायोपदेशः प्रकृताध्यायस्य बीजं । कामादिवर्जनपूर्वं ईश्वरार्पणबुद्ध्या कर्माचरणं हि कर्मयोगः । कामजयार्थं विष्णुज्ञानमावश्यकं इति प्रतिपादितं । भगवति कर्मसमर्पणायापि भगवत्तत्व-ज्ञानं आवश्यकं । अतः भगवन्महिमोक्तिस्साक्षात्सङ्गता । इयं प्रकृताध्याये 'एवं ज्ञात्वे'तिश्लोकात्प्राक्तनेन ग्रन्थेन कृता द्रष्टव्या ) ( प्रसङ्गाद्भगवन्मा-हात्म्यवर्णनं कृतमित्याह रामानुजाचार्यः ) ( कर्मयोगनिरूपणावसरे साक्षा-द्भगवतस्सङ्गतौ सम्भवन्त्यां प्रासङ्गिकत्वोक्तिर्नीरसा दृश्यते । बुद्धेः पर इत्युक्तः काम इति रामानुजाचार्येण व्याख्यातत्वात् भगवान्न प्रकरणार्थ इति तेन चिन्तितं भाति । 'मयि सर्वाणि' इत्यनेन भगवतस्सङ्गतिस्तु नालोचिता ज्ञायते ।)

('एवं ज्ञात्वे'ति श्लोकात् 'श्रेयान्द्रव्ये'त्यन्तं निवृत्तधर्मस्यान्यधर्माद्विशेषः निवृत्तधर्मेष्ववान्तरप्रभेदाश्च निरूप्यन्ते (15-33) )

('श्रेयान्द्रव्ये'ति श्लोकादाध्यायान्तं ज्ञानमाहात्म्यं कथ्यते । तद्धि यो-गसामान्येऽन्तर्भूतं फलंच ) ( कर्मयोगस्यान्तर्गतज्ञानत्वेन यस्तस्मिन्नन्तर्गतो

ज्ञानांशः तस्यैव प्रपंचनमध्यायान्तिमभागे विवक्षितमिति रामानुजाचार्यो मन्यते । कर्मयोगस्यान्तर्गतज्ञानत्वं यदस्य मतं तत्प्रामाणिकं । परन्तु कर्मयोगान्तर्गतज्ञानांशस्यैव विवक्षा तत्र कृतेत्यस्य गमकं चिन्त्यते । यतः कर्मयोगज्ञानयोगभक्तियोगानां अन्तर्गतज्ञानत्वं ज्ञानोपायत्वंच तत्त्वं ॥

'मयि संन्यस्ये'त्युपदिश्य 'ये मे मत'मित्यादिना अनुष्ठानस्य फलं इतरस्यानर्थं च भगवानुक्तवान् ॥ 'मे मतं' इत्यस्य प्रपंचनेन प्रकृतोऽध्याय आरभ्यते इमं विवस्वत इति । यतो भगवान् स्वयमेव प्राचीनेभ्यो निवृत्तधर्ममुपदिदेश ॥

धर्मस्य तावत्प्राचीनत्वमुत्कृष्टशिष्येभ्यः उत्कृष्टैरुपादिष्टत्वं उत्कृष्टैरनुष्ठितत्वं च गुणाः । एतत्सर्वमत्र विवक्षितं । यतो भगवान् विवस्वदादीन्प्रतीमं मोक्षार्थमुपदिदेश । एतेन वक्तृश्रोतृप्रसंगानुकूल्यं लब्धं । अनेनार्जुनं प्रत्युपदेशस्याप्यानुकूल्यत्रयं गम्यते । 'भक्तोऽसि मे सखाचेती'ति हि वक्ष्यते ॥

पूर्वमेव जनकादिदृष्टान्तेन निवृत्तधर्मस्यावश्यमनुष्ठेयत्वमुक्तमिति पुनर्विवस्वदाद्यनुष्ठानदृष्टान्तस्य पौनरुक्त्यं न शङ्कनीयं । पूर्वं गृहस्थकर्मार्जुनेन न त्याज्यमित्यस्य दृष्टान्तो विवक्षितः । इहतु सर्ववर्णाश्रमसाधारणनिवृत्तधर्मानुष्ठाने सदाचारोऽस्तीत्युच्यते । अनयोर्भेदः स्फुटः ॥

'इमं योगमि'त्यत्र योगशब्देन कर्मयोगो वा ज्ञानयोगो वा द्वयं वा विवक्ष्यत इति व्याख्यानेषु विचारः कृतः ॥ 'ज्ञाननिष्ठालक्षणः सन्न्यासः कर्मयोगोपायः, यस्मिन्वेदार्थः परिसमाप्तः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च । गीतासु सर्वास्वयमेव योगो विवक्षितो भगवता ' इति शङ्करभाष्यं । अत्रोक्तौ प्रवृत्तिनिवृत्तिलक्षणार्थे वेदार्थः समाप्त इति वचनं असंगतं । कृत्स्नस्यापि वेदस्य परममुख्यवृत्त्या भगवद्गुणोत्कर्षप्रतिपादकत्वात् । किंच प्रवृत्तिलक्षणो धर्मः

कर्मयोगः निवृत्तिलक्षणो ज्ञानयोग इत्यस्य भाष्यस्याशयो ज्ञायते )( यथोक्तं तट्टीकाकृताऽऽनन्दगिरिव्याख्याने 'प्रवृत्त्या लक्ष्यते ज्ञायते कर्मयोगो, निवृत्त्या च लक्ष्यते ज्ञानयोग इति विभागः' इति )( इदमनुपपन्नं । प्रवृत्तकर्मणो योगत्वस्यैवानुपपत्तेः । प्रवृत्तं कर्म हि काम्यं । निष्कामं ज्ञानपूर्वं कर्म निवृत्तं इति मनुरप्याह । अस्यैव कर्मयोग इत्यभिधाचोचिता )( किंच इमं योगमित्यनेन ज्ञाननिष्ठालक्षणः सन्न्यास एव प्राधान्येनोच्यते इति शङ्कराचार्याभिप्रायस्तच्छिष्यैराविष्कृतः । मोक्षैकप्रयोजनस्य ज्ञानयोगस्यैव परामर्श वक्ति शङ्करानन्दः । नीलकण्ठस्तु इममित्यनेन कर्मयोगस्य परामर्श उचितं मत्वाऽऽह, 'संध्योपासनादिनिर्विकल्पकसमाध्यनुष्ठानान्तं कर्मयोगं ज्ञाननिष्ठोपसर्जनं पारिव्राज्यानधिकारिणां राज्ञामेव योग्यं' इति )( इदंतु निराहोत्कर्षदीपिकाकारः 'अस्मिन्व्याख्याने द्वितीयाध्यायार्थस्येदंशब्देनाग्रहणप्रसङ्गः । नचेष्टापत्तिः । अध्यायद्वयोक्तेऽर्थेऽप्रामाण्यशङ्का मा भूदिति विद्यावंशसंप्रदायं दर्शयति इममित्यादिनेति स्वोक्तिविरोधात् । एतेन राज्ञामेव योग्यमित्यपि प्रत्युक्तं । अध्यायद्वयेन प्रतिपादिते वेदार्थेऽग्रे विस्तरेण वक्ष्यमाणे ब्राह्मणादियोग्यताभावप्रसङ्गात्' इति ॥ एतन्निरासे 'इमं' इत्यनेन कर्मयोगग्रहणे द्वितीयाध्यायार्थस्याग्रहणप्रसङ्गो योऽभिहितः स भ्रममूलो भाति । द्वितीयाध्याये कर्मयोगस्य विस्तरेण प्रपंचितत्वात् । 'अनधिकारिणां राज्ञां' इति नीलकण्ठीयवचनन्तु सुष्टु प्रत्याख्यातम् ॥)

(ज्ञानयोगस्य सन्न्यासस्य वा परामर्श एवेदंशब्देन कार्यः इति शाङ्करव्याख्यानं न प्रत्याययति । 'ये मे मतं' इत्यत्र भगवन्मतं भगवत्समर्पणबुद्ध्या कर्मानुष्ठानं इति ज्ञायते । अस्यैव कर्मयोगत्वात् । विवस्वदाद्युपदिष्टोऽर्थस्स भवितुमर्हत्येव । अतः शङ्करभाष्यमपि विहाय यन्नीलकण्ठेन कर्मयोगो गृहीतः तद्युक्तं गम्यते ॥)

'योगमव्ययं' इत्युक्तौ अव्ययत्वं शाश्वतफलमूलत्वेनोपपद्यते। अव्ययवेदमूलत्वात्तथोक्तिरिति केचित्। अविच्छिन्नसंप्रदायत्वेनानादित्वविवक्षयोपपत्तिमाह नीलकण्ठः॥ इयं 'स कालेनेह महता योगो नष्टः' इति वक्ष्यमाणेन किंचिद्व्याहता प्रतीयेत। तथापि उपदेशनाशयोः प्रवाहतो नित्यत्वेन नीलकण्ठीयं वचनं उपपन्नं भवेत्। न व्येति फलं यस्मात् इति अव्यभिचारिफलं इति वा॥

विवस्वच्छब्देनान्येषां मनूनां चोपलक्षणया ग्रहणमुचितं। यथाऽऽह मधुसूदनः 'यद्यपि प्रतिमन्वन्तरं स्वायंभुवमन्वादिसाधारणोऽयमुपदेशः। तथापि सांप्रतिकवैवस्वतमन्वन्तराभिप्रायेणादित्यमारभ्य संप्रदायो गणितः' इति॥

स्वायंभुव-स्वारोचिषो-त्तम-तामस-रैवत-चाक्षुष-श्राद्धदेव-सावर्णि-दक्ष-सावर्णि-ब्रह्मसावर्णि-धर्मसावर्णि-रुद्रसावर्णि-वेदसावर्णी-न्द्रसावर्णयो मनवः। वैवश्वतमनुः श्राद्धदेवः॥ 'विवस्वते सर्ववेदात्मने' इति देशिकः। विवः तेजः तद्वान् विवस्वान्। 'विवस्वांस्तु सुरे सूर्ये' इत्यभिधानात्। अनेन ब्रह्मरुद्रादीनां ग्रहणमप्युचितं। ये भगवता पुनः पुनरुपदिष्टाः। प्रमाणमुदाहृतङ्गीतातात्पर्ये—

'ब्रह्मरुद्रेन्द्रसूर्याणां यद्दत्तं विष्णुना पुरा।
पंचरात्रात्मकं ज्ञानं व्यासोऽदात्पाण्डवेषु तत्॥
तेषामेवावतारेषु सेनामध्येऽर्जुनाय च।
प्रादाद्गीतेति निर्दिष्टं सङ्क्षेपेणायुयुत्सवे॥
यथा कुर्वन्ति कर्माणि यथा जानन्ति देवताः।
सर्वे कार्तयुगाश्चैव नृपाश्च मनुपूर्वकाः॥
ज्ञातव्यं चैव कर्तव्यं यथा सर्वैर्मुमुक्षुभिः।
त्रेतादित्रिषु जातैश्च गीतायां तदुदाहृतं॥

पाण्डवाद्याः क्षेमकान्ताः करिष्यन्ति च जानते ।
तथैव तेन गीतायाः नास्ति शास्त्रं समं क्वचित् ॥
वेदार्थपूरकं ज्ञेयं पंचरात्रं यतोऽखिलं ।
तत्संक्षेपश्च गीतेयं तस्मान्नास्याः समं क्वचित्" । इति ब्रह्मवैवर्ते ॥

एवं परंपराप्राप्तमिमं राजर्षयो विदुः ।
स कालेनेह महता योगो नष्टः परन्तप ॥ २ ॥

वि ॥ राजानश्च ऋषयश्चेति वा राजर्षयो राजश्रेष्ठाः निमिप्रभृतयः स्वपित्रिक्ष्वाकुप्रभृतिभिर्विदुरिति वा । अत्र प्रवचनवेदनशब्दैर्विवस्वदादीनामनुष्ठानमप्युपलक्ष्यं । अद्यतनानामज्ञाने कारणमाह ॥ स इति ॥ हे परन्तप शत्रुतापन । स च योगः महता कालेन इह लोके नष्टः अदर्शनं गतः ॥

शं ॥ एवमिति । एवं क्षत्रियपरंपराप्राप्तं इमं राजर्षयः राजानश्च ते ऋषयश्चेति राजर्षयो विदुः इमं योगं । स योगः कालेन इह महता दीर्घेण नष्टः विच्छिन्नसम्प्रदायः संवृत्तः । हे परन्तप, आत्मनः विपक्षभूताः परा इत्युच्यन्ते तान् शौर्यतेजोगभस्तिभिः भानुरिव तापयति इति परंतपः शत्रुतापन इत्यर्थः ॥

रा ॥ इत्येवं संप्रदायपरंपरया प्राप्तमिमं योगं पूर्वे राजर्षयो विदुः । स महता कालेन तत्तच्छ्रोतृबुद्धिमान्द्यादिनष्टप्रायोऽभूत् ॥

विचारः

(अत्र योगशब्देन निवृत्तधर्म उक्तः । इमं निवृत्तधर्ममाधुनिकाः किं न जानते इत्याकांक्षायां महता कालेन नष्ट इत्याह ॥ कालदैर्घ्येण गुरुपरंपरासंप्रदायविच्छेदो जात इति यावत् ॥ अनेन ज्ञानतिरोभावे गौतमशापादिकारणस्य न विवक्षाभावो द्रष्टव्यः । प्रथितं खलूपाख्यानं । एकदा दुर्भिक्षसमये ऋषयस्सस्यादिभूयिष्ठं गौतमाश्रमं गत्वा बहुकालं तत्रोषित्वा, पुनः सुभिक्षे प्राप्ते सति स्वदेशगमनाय गौतमे प्रार्थितेऽप्यनुज्ञाया अलाभेन वञ्चनार्थं उमागणेशोद्बोधेन च प्रवृत्ता बभूवुः । योगबलात्ते कृत्रिमां गां ससर्जुः । सा व्रीहिमध्ये स्थित्वा सस्यमादत् । दण्डं गृहीत्वा गौतमस्तां किंचिदताडयत् । सा तदा सहसा ममार । ऋषयस्तावज्झटिति प्रयाणमकुर्वन् गोहन्त्राश्रमे न स्थातव्यमिति । स्वपापपरिहारार्थं गोरुज्जीवनार्थं च तपसा गौतमो गंगां निनाय । सेयं गोदावरीति ख्याता दक्षिणगंगा । ततो ध्यानबलेन ऋषिकृतं विप्रलंभं जानन् तेषां ज्ञाननाशो भूयादिति शशाप इति । अत एवोक्तं,

"नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगे स्थितं ।
किंचित्तदन्यथा जातं त्रेतायां द्वापरेऽखिलं ॥
गौतमस्य ऋषेश्शापाज्ज्ञाने त्वज्ञानतां गते ।
सङ्कीर्णबुद्धयो देवाः ब्रह्मरुद्रपुरस्सराः ।
शरण्यं शरणं जग्मुर्नारायणमनामयं ॥" इत्यादि ॥)

(तथाच गौतमशापस्य स्वहतगोनिर्मातृमात्रविषयत्वेऽपि ब्रह्मादीनां अभिभवशून्यत्वेऽपि लोकस्य संप्रदायप्रवर्तकाभावेन कालतश्चाज्ञानप्राप्तिः ॥

'राजर्षयः' इति । ऐश्वर्यसंपत्ती राजत्वं । सूक्ष्मार्थनिरीक्षणक्षमत्वं ऋषित्वं । राजानश्च ते ऋषयश्चेति निमिनाभागादयो राजर्षयो गृह्यन्ते । राजानश्च ऋषयश्चेति व्युत्पत्त्या, जनकादयो राजानः "सनकादयो ऋषयः इति वा । राजर्षयः राजश्रेष्ठा इति वा । राजर्षयः अविदुरिति वा पदच्छेदः । ज्ञातवन्त इत्यर्थः । 'सिजभ्यस्तविदिभ्यश्च' इति लडो झेर्जुस् । 'ऋष गतौ वधे । ऋष ज्ञाने इति' च धातुपाठः । ऋषति हन्ति ज्ञानेन संसारमिति ऋषिः । 'ऋषयः संयतात्मानः' इति मनुः ।

'सप्त ब्रह्मर्षिदेवर्षिमहर्षिपरमर्षयः । कांडर्षिश्च श्रुतर्षिश्च राजर्षिश्च क्रमावराः' इति रत्नकोशः । इदं मत्स्यपुराणगतं महर्षिनिरूपणं,

'भृगुर्मरीचिरत्रिश्च अङ्गिराः पुलहः क्रतुः ।
मनुर्दक्षो वसिष्ठश्च पुलस्त्यश्चेति ते दश ॥
ब्रह्मणो मनसा ह्येते उत्पन्नाः स्वयमीश्वराः ।
परत्वेनर्षयस्तस्माद्भूतास्तस्मान्महर्षयः ॥" इति ॥ तेषां पुत्राणां

तपसैव ऋषित्वं ॥

**स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।**
**भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमं ॥३॥**

वि ॥ कुतः प्रोक्त इत्यत उक्तं । भक्तोऽसीत्यादि । हिशब्दो हेतौ । भक्तत्वादिहेतुना हि यतः ते प्रोक्तोऽत एतद्रहस्यं उत्तमं चेति । हि यतो रहस्यं उत्तमं चातो भक्तत्वात्ते प्रोक्तः अवश्यानुष्ठानायेति वा । कर्मणैव हि संसिद्धिमित्यत्र गृहस्थ-

धर्मस्त्वया नत्याज्य इत्यत्र जनकादिज्ञान्याचार उक्तः। अत्रतु निवृत्तकर्मानुष्ठाने महदाचारः प्रमाणत्वेनोच्यत इति न तेन गतार्थत्वं शंक्यं ॥

शं ॥ दुर्बलानजितेन्द्रियान् प्राप्य नष्टं योगमुपलभ्य, लोकं चापुरुषार्थसंबन्धिनं ॥ स इति। स एवायं मया ते तुभ्यं अद्य इदानीं योगः प्रोक्तः पुरातनः। भक्तोऽसि मे सखा चासीति। रहस्यं हि यस्मात् एतदुत्तमं, योगज्ञान-मित्यर्थः ॥

रा ॥ स एवायमस्खलितस्वरूपः पुरातनो योगः सख्ये-नातिमात्रभक्त्या च, मामेव प्रपन्नाय ते मया प्रोक्तः सप-रिकरस्सविस्तरमुक्तः। मदन्येन केनापि ज्ञातुं वक्तुं चा-शक्यं। यत इदं वेदान्तोदितमुत्तमं रहस्यं ज्ञानम् ॥

विचारः

'रहस्यं ह्येतदुत्तमं' इति नपुंसकनिर्देशेन योगशास्त्रोक्तनिखिलप्रमेय-जात सामान्येन विवक्षितं। उत्तमं श्रेष्ठं। उत्तमरहस्यत्वेनानर्हेषु प्रकटना-योग्यत्वं सूचितं। 'इदं ते नातपस्काये' ति गीतान्ते वक्ष्यते। तथाच मन्त्रवर्णः 'विद्या ह वै ब्राह्मणमाजगाम गोपाय मां सेवधिष्टेऽहमस्मि। अनार्यकायाऋज-वे शठाय न मां ब्रूयाः ऋजवे ब्रूहि नित्यं ॥' इति ॥

एवमतिगोप्यत्वे कुतः अर्जुनायोपदिदेश इत्याकांक्षायामाह 'भक्तोऽसि मे सखाचे'ति। भक्तिसख्योभयविशिष्टः अधिकारी भवानिति तव योग्यत्वं मत्वा मया प्रोक्त इत्यर्थः। अत एवोत्तमरहस्यत्वं उपपन्नं। उत्तमरहस्यत्वादवश्यानुष्ठे-

यत्वं च ज्ञापितं भवति । 'सखा चेति' इत्यत्र इतिशब्दो हेतौ । समानवयाः स्निग्धस्सहायः सखा । शास्त्रजन्यमाहात्म्यज्ञानपूर्वकसुदृढस्नेहवत्त्वादर्जुनः श्रीकृष्णभक्तः । अत एव 'शाधि मां त्वां प्रपन्नं' इति शरणं गतो बभूवार्जुनः ॥

अत्र स्वहृदयस्य हरिहरसाम्यप्रतिपादनस्योचितमवसरं मत्वा शङ्करानन्द आह, ''यथा शिवमयो विष्णुरेवं विष्णुमयश्शिवः' इति शिवकेशवयोरभेदश्रवणाच्छिवरूपं मामेव बहिरन्तरमायया श्रद्धया भजस्यतो मे भक्तोऽसि' इति । शिवकेशवयोरभेदस्याताात्त्विकत्वात्तं पुरस्कृत्याशयकथनमप्रामाणिकं ॥

श्रीकृष्णेऽर्जुनस्य साक्षाद्भक्तिविवक्षया उपपत्तौ सम्भवन्त्यां कुतोऽयं शिवाभेदक्लेशः । श्लोकस्य पूर्वार्धे 'ते' इति युष्मच्छब्दस्य 'कर्तृत्वभोक्तृत्वभ्रमेण मुह्यमानाय तुभ्यं' इत्यर्थ उक्तश्शङ्करानन्देन । यद्यर्जुनो भगवद्भक्तः सखाचोत्तमरहस्योपदेशार्हः तर्हि तस्योक्तरीत्या भ्रान्तत्वं नोपपद्यते ॥

'स एवायं' इति सावधारणप्रत्यभिज्ञया पुरातनाद्यतनयोरुपदेशयोस्समानाकारत्वं सूच्यते । उक्तं हि ब्र. वैवर्ते—

'ब्रह्मरुद्रेन्द्रसूर्याणां यद्दत्तं विष्णुना पुरा ।
पञ्चरात्रात्मकं ज्ञान व्यासोऽदात्पाण्डवेषु तत् ॥
तेषामेवावतारेषु सेनामध्येऽर्जुनाय च ।
प्रादाद्गीतेति निर्दिष्टं संक्षेपेणायुयुत्सवे ॥" इति ॥

अर्जुन उवाच—

अपरं भवतो जन्म परं जन्म विवस्वतः ।
कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४॥

वि ॥ मयि सर्वाणीत्यत्र हरेः पूज्यत्वं अर्जुनस्य पूजकत्वमित्युक्तं । तथा तस्यैव स्वतन्त्रकर्तृत्वमन्यस्य तदधीनकर्तृत्वमुक्तं (एवं पूज्यपूजकत्वादिना तत्राभिप्रेतं जीवेश्वरभेदं प्रमाणेन ज्ञातुं पृच्छति । अपरमित्यादिना )। एवं च नत्वेवाहमित्यादिना सर्वप्रकारेणोत्पत्तिनाशराहित्यं भगवतः श्रुतवान्, कथमेवमपरं पश्चात्तनं भवतो जन्मेति पृच्छतीति चोद्यानवकाशः ॥

शं ॥ भगवता विप्रतिषिद्धं उक्तमिति मा भूत्कस्य चिद्बुद्धिः इति परिहारार्थं चोद्यमिव कुर्वन् अर्जुन उवाच ॥ अपरमिति । अपरं अर्वाक् वसुदेवगृहे भवतो जन्म, परं पूर्वं सर्गादौ जन्म उत्पत्तिः विवस्वतः आदित्यस्य । तत् कथमेतद्विजानीयामविरुद्धार्थतया यस्त्वमेवादौ प्रोक्तवान् इमं योगं, स एवेदानीं मह्यं प्रोक्तवानसीति ॥

रा ॥ अस्मिन्प्रसङ्गे भगवदवतारयाथात्म्यं यथावज्ज्ञातुमर्जुन उवाच ॥ कालसंख्ययाऽवरमस्मज्जन्म तत्समकालं हि भवतो जन्म, विवस्वतश्च जन्म कालसंख्यया परं, अष्टाविंशातिचतुर्युगसंख्यासंख्यातं । त्वमेवादौ प्रोक्तवानिति कथमेतदसम्भावनीयं यथार्थं जानीयां । ननु जन्मान्तरेणापि

वक्तुं शक्यं, जन्मान्तरकृतस्य महतां स्मृतिश्च युज्यत इति नात्र कश्चिद्विरोधः। नचासौ वक्तारमेनं वसुदेवतनयं सर्वेश्वरं न जानाति, यत एवं वक्ष्यति 'परं ब्रह्म परं धाम पवित्रं परमं भवान्। पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुं॥ आहुस्त्वामृषयस्सर्वे देवर्षिर्नारदस्तथा। असितो देवलो व्यासस्स्वयं चैव ब्रवीषि मे' इति॥ युधिष्ठिरराजसूयादिषु भीष्मादिभ्यश्चासकृच्छ्रुतं 'कृष्ण एव हि लोकानामुत्पत्तिरपि चाव्ययः। कृष्णस्य हि कृते भूतमिदं विश्वं चराचरं' इत्येवमादिषु। कृष्णस्य हि कृते इति कृष्णस्य शेषभूतमिदं कृत्स्नं जगदित्यर्थः। अत्रोच्यते। जानात्येवायं भगवन्तं वसुदेवसूनुं पार्थः। जानतोऽप्यजानत इव पृच्छतोऽयमाशयः, निखिलहेयप्रत्यनीककल्याणैकतानस्य सर्वेश्वरस्य सर्वज्ञस्य सत्यसङ्कल्पस्यावाप्तसमस्तकामस्य कर्मपरवशदेवमनुष्यादिसजातीयं जन्म किमैन्द्रजालादिवन्मिथ्या उत सत्यं। सत्यत्वे च कथं जन्मप्रकारः, किमात्मकोऽयं देहः, कश्च जन्महेतुः, कदा च जन्म, किमर्थं च जन्मेति, परिहारप्रकारेण प्रश्नार्थो विज्ञायते इति॥

विचारः

(अर्जुनं निमित्तीकृत्य लोकोपकारायहि कृतोऽयङ्गीतोपदेशः। अतः सामान्यजनानां सम्भावितानि प्रश्नोत्तराणिच गीतायां दृश्यन्ते॥)

(यद्यप्यर्जुनो भगवन्माहात्म्यं अवतारानन्त्यादिकंच व्यजानादेव। तथापि सामान्यजनसम्भावितसंशयमादाय प्रश्न उपपद्यते। किंच मानुषान्नभोजनाद्युपाधितश्च ज्ञानस्यैषत्तिरोभावोऽपि युज्यते।) (अन्यदप्यस्ति निमित्तं यथोक्तं 'जानन्तोऽपि विशेषार्थज्ञानाय स्थापनाय च। पृच्छन्ति साधवो यस्मात्तेन पृच्छसि पार्थिव' इत्याग्नेये)।

(रामानुजाचार्यं विनाऽन्ये सर्वेऽपि 'अपरं' इति पाठमाश्रिताः। असौतु 'अवरं' इति पठति। अर्थेतु न दृश्यते भेदः।)

(अत्र परशब्दः कालिकविप्रकृष्टत्वं बोधयति। सर्गादौ विवस्वानभूत्। भवांस्त्विदानींतनः। कालिकसामानाधिकरण्याभावे कथमुपदेशस्सङ्गच्छत इत्याशयः)। ('अपरं विहीनं मनुष्यत्वात्। परं उत्कृष्टं देवत्वा'दिति मधुसूदनेन व्याख्यातं)। इदं चिन्त्यं। यतः कालिकवैयधिकरण्यस्यैवाभिप्रेतत्वं 'कथं त्वमादौ प्रोक्तवा'निति आदिशब्देन ज्ञापितं)। (आहच देशिकः (परावरशब्दाभ्यां न देवमानुषत्वरूपजातिवैषम्यमुच्यते। तस्योपदेशविरोधित्वाभावात्। देवानामपि देवत्वेन च कृष्णस्य विदितत्वात्। जन्मशब्दस्य जननवाचितया साक्षाज्जातिवाचकत्वाभावात्। 'आदा'विति कालविरोधस्यच व्यक्तमुक्तत्वात्। 'बहूनि मे व्यतीतानि' 'यदा यदा' 'युगे युगे' इत्येवमादिरूपस्योत्तरस्य कालविरोधपरिहाररूपत्वात्' इति)।

(अथ 'कथमेतद्विजानीयां' इति प्रश्नाशयो विचार्यः। कालभेदमादाय विरोधस्तु स्फुटः। 'नत्वेवाह' इत्यादिना भगवतश्चतुर्विधनाशराहित्यं खलु प्रागेवोपदिष्टं। तेन भगवतः पूर्वमप्यवतरणं नाज्ञातं स्यादर्जुनेन। तस्मादन्येऽप्याशया. प्रश्नस्योह्या भवन्ति)। ('मयि सर्वाणि' इति योगसारकथनावसरे भगवतः पूज्यत्वं योगिनः पूजकत्व चाभिप्रेतं। एतेन भगवन्माहात्म्यं साक्षात्प्रकरणसंगतमभवत्। नतु प्रसंगेन। चतुर्विधनाशशून्यत्वेन भगवन्तं जानन्नपि जीवपूज्यत्वादिप्रयोजकमाहात्म्यविशेषान्भगवन्मुखादेव स्फुटीकर्तुं

पृच्छतीति भावः। किंच जीवस्य पूजकत्वे भगवद्वैषम्यमुक्तमभूत्। वैषम्य-निमित्तानि च ज्ञातुमिच्छतीत्याशयः। यद्यपि भगवन्माहात्म्य, जीवपारतंत्र्याल्पत्वाज्ञत्वादिकमपि, यथासंभवं ज्ञातमतीतैर्ग्रन्थैः। तथापि ज्ञानविशेष-लाभाय सर्वप्रमाणमूलाद्भगवन्मुखात्प्रकटीकरणायैतद्गोचरप्रश्नः। प्रश्नभावो न केवल प्रश्नाक्षरैरवगम्यते। अपितु प्रतिवचनाक्षरैश्चानुमीयते। प्रति-वचने तावत् अनन्तजन्मवत्त्वे सति स्वस्य सर्वज्ञत्वं अर्जुनस्याज्ञत्वं, स्वस्य इच्छा-धीनावतारवत्त्वं, धर्मस्थापनायावतरणं, दुष्टनिग्रहशिष्टपरिपालनादीनि, अवतार-प्रयोजनानि इति महात्म्यविशेषाः, तच्छून्यत्वेन जीवस्यापूर्णत्वादयश्च निरूपि-ताः। एतेन भगवज्जीवयोः भेदनिबंधनः पूज्यपूजकभावो व्यंजितः। जन्मानि कीदृशानि, उपदेष्टृत्वं कथं, सर्वज्ञत्वं विना विवस्वच्छब्दोक्तब्रह्मरुद्रेन्द्रादीना-मुपदेशस्यायोगात्। अवताररूपाणि किमात्मकानि, कदा स्वीक्रियन्ते, आप्त-कामेन किमर्थं गृह्यन्ते, इत्याद्यभिप्रायाः 'कथमेतद्विजानीया'मित्यत्र गर्भिताः स्युः॥

(प्रश्नाशयमाह मधुसूदनः। 'एतद्देहावच्छिन्नस्य तव देहान्तरावच्छेदेन वा आदित्यं प्रत्युपदेष्टृत्वं, एतद्देहेन वा) नाद्यः। जन्मान्तरानुभूतस्यासर्वज्ञेन स्मर्तुमशक्यत्वात्। अन्यथा ममापि जन्मान्तरस्मरणप्रसंगः, तव मम च मनुष्यत्वेनासर्वज्ञत्वाविशेषात्) नापि द्वितीयः। सर्गादाविदानींतनस्य देहस्यासद्भावात्। तदेवं देहान्तरेण सर्गादौ सद्भावसंभवेऽपीदानींतनस्मरणा-नुपपत्तिः। अनेन देहेन स्मरणोपपत्तावपि सर्गादौ सद्भावानुपपत्तिरित्यसर्व-ज्ञत्वानित्यत्वाभ्यां द्वावर्जुनस्य पूर्वपक्षौ' इति) अत्र जन्मान्तरस्याभावाद्वा जन्मान्तरानुभूतस्य स्मृत्ययोगाद्वेति प्रश्नोत्थानबीजं) जातापरोक्षस्यातीत-गीतोपदेशलब्धज्ञानस्यार्जुनस्य विषये न प्रत्याययति। अज्ञलोकसामान्य-विवक्षया भगवतः परमनित्यत्वसर्वज्ञत्वयोर्भगवन्मुखेनैव प्रकटीकरणार्थं पप्रच्छेति स्यात्)

अर्जुनः श्रीकृष्ण परब्रह्मेति व्यजानादित्येव रामानुजाचार्योऽपि मन्यते । जानतोऽप्यजानत इव पृच्छत आशयस्तु एवं उपपादित । श्रीकृष्णस्य 'जन्म किमैन्द्रजालादिवन्मिथ्या, उत सत्यं । सत्यत्वेच कथं जन्मप्रकारः । किमात्मकोऽयं देहः । कश्च जन्महेतुः । कदाच जन्म । किमर्थं च जन्मेति परिहारक्रमेण प्रश्नार्थो विज्ञायते इति' इति ॥

इदमनूद्य निराह वेंकटनाथः । विश्वरूपदर्शनात्प्राक् श्रीकृष्णं परब्रह्मेत्यर्जुनो न जज्ञावित्यस्याशयः । आह, "आदित आरभ्यैवार्जुनस्य भगवति ब्रह्मत्वनिश्चये परब्रह्मैव स्वसहायार्थं निजरथमधितिष्ठतीति निश्चयवतस्तस्य 'यद्वा जयेम यदि वा नो जयेयु'रिति संदेहायोगाच्च ॥ किंच त्वया सर्वेश्वरस्य मानुष्यजन्म किं मिथ्याभूत किंवा सत्यमिति प्रश्नार्थो वर्णितः । तत्र न तावदयमर्थः प्रश्नश्लोकाक्षरैरवगम्यते । नाप्युत्तरश्लोकाक्षरारूढोऽयमर्थः । न च बहूनि जन्मानि व्यतीतानीत्युक्त्या जन्मसत्यत्व प्रतीयत इति युक्तं । ऐन्द्रजालिकेन पुनः पुनः सृष्टोपसंह्रियमाणेषु गजादिषु बहवो जाता इत्यादिव्यवहारात् । अजोऽपि सन्नात्ममायया सम्भवामीत्युत्तरश्लोके जन्मनो मायिकत्वप्रदर्शनेन मिथ्यात्वस्यैवोक्तेश्च । जन्मनस्सत्यत्वे तद्विरोध्यजन्मनो मिथ्यात्वेन तत्सत्यत्वप्रतिपादकानां 'अजो नित्य·' इत्यादीनामप्रामाण्यप्रसङ्गाच्च । जन्मवन्मरणस्यापि सत्यत्वापाताच्चेति धिगेतदमाङ्गल्यमशब्दार्थव्याख्यानं" इति ॥

अत्रोच्यते । विश्वरूपदर्शनानन्तरमेवार्जुनस्य ज्ञानोदय इत्युक्तं भ्रममूल । 'न त्वेवाह'मिति श्लोकव्याख्यानेऽप्ययमाशयोऽनेन वर्णितः। एतद्ग्रन्थे तस्य निरस्तत्वान्निरासं पश्यन्तु । ज्ञानिनोऽप्यर्जुनस्य कुतः प्रश्न इति तु 'जानन्तोऽपी'त्यादिना प्रागेव समाहितं ॥ श्रीकृष्णजन्म सत्य वा मिथ्या वेति प्रश्नाशयः उपपन्नो वा स्यान्न स्याद्वा ॥ नायमक्षराल्लभ्यत इति वेङ्कटनाथीय दूषणं कथञ्चिल्लग्नं भवेत् ॥ परन्तु नचेत्यादिग्रन्थेन श्रीकृष्णाद्यवताराणां

यन्मिथ्यात्वमुक्तं तत्तुच्छं। सत्यगजादिसर्जनेऽसमर्थो हि ऐन्द्रजालिकं कृत्रिमं कुरुते। अचिन्त्यशक्तिमतो भगवतस्तु न मायाप्रपञ्चसर्जनेऽवसरोऽस्ति। 'संभवाम्यात्ममायये'ति श्लोकस्यार्थो नानेन परिज्ञातः। मिथ्यात्वं न वक्तव्यं श्लोकः। तत्वार्थस्तु तत्र विचार्यते। अजो नित्य इत्यादिवचनैर्जन्ममरणयोर्मिथ्यात्वं यदभिप्रेतं तदतीव मन्दं। जीवविषये जन्ममृती सत्ये एव। ईश्वरविषयेतु प्रादुर्भावो जनिः तिरोभावो मृतिः। ईश्वराचिन्त्यशक्त्या दर्शनगोचरत्वागोचरत्वे सम्भवतः। अजन्मप्रतिपादकाः श्लोकाहि स्वरूपत आत्मनो नित्यत्वमाहुः। देहयोगवियोगौ तु न निषेधन्ति॥ देहयोगवियोगाख्यजनिमृत्योरसत्यत्वं न वदंति किंत्वनित्यत्वं। नित्यत्वसत्यत्वयोरैक्यभ्रममूलं दूषणं इति स्फुटं। अवताराणामैन्द्रिजालिकत्वे श्रीकृष्णस्यापि मिथ्यात्वाद्गीतोपदेशो न कृत इति पर्यवस्याति। अस्मिन्पक्षे 'अजो नित्यः' इत्यादीनां कुतःप्रामाण्यं सेत्स्यति। यदनित्यं तन्मिथ्येत्यद्वैतपरिभाषामाश्रित्य तदनंगीकारिणं रामानुजाचार्यं प्रति दूषणाभिधानं न युक्तं। नहि नित्यत्वसत्यत्वयोर्वा मिथ्यात्वानित्यत्वयोर्वा व्याप्तिं रामानुजाचार्योऽभ्युपगच्छति। नवा सा व्याप्तिरिहैव वेंकटनाथेन सयुक्तिकं प्रसाधिता। रामानुजाचार्यवत् स्वयूथ्येनाभिनवगुप्ताचार्येणाप्युक्तं, 'अर्जुनो भगवत्स्वरूपं जानन्नपि लोके स्फुटीकर्तुं'पृच्छति इति॥ एवं शङ्करानन्दोऽप्यभिप्रैति 'श्रीकृष्णस्य परमेश्वरत्वं तन्मुखेनैव प्रथयितव्यमित्याशयेनार्जुन उवाच' इति। एकादशाध्यायात्प्रागर्जुनः श्रीकृष्णं कंचिन्महापुरुषममन्यत, तदनन्तरमेव परब्रह्मेत्यमन्यतेत्यर्थो वेङ्कटनाथकल्पितोऽप्रामाणिकस्सर्वैरन्यैरुपेक्षितो द्रष्टव्यः॥

श्रीभगवानुवाच—

**बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।**
**तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ॥ ५ ॥**

वि ॥ अत एव विदितप्रश्नाभिप्रायो भगवान् 'तव चे'ति 'न त्वं वेत्थे'ति पराक्त्वाज्ञत्वयोरुक्तिं कृतवान् । अन्यथा 'बहूनि मे व्यतीतानि जन्मानी'त्येतावता प्रश्नपरिहारात्तव चेत्याद्युक्तिर्व्यर्था स्यादिति ज्ञेयम् ॥

शं ॥ या वासुदेवेऽनीश्वरासर्वज्ञशङ्का मूर्खाणां तां परिहरन् श्रीभगवानुवाच । यदर्थो ह्यर्जुनस्य प्रश्नः ॥ बहूनीति । बहूनि मे मम व्यतीतान्यतिक्रान्तानि जन्मानि तव च, हे अर्जुन तान्यहं वेद जाने सर्वाणि, न त्वं वेत्थ जानीषे । धर्माधर्मादिप्रतिबद्धज्ञानशक्तित्वात् । अहं पुनर्नित्यशुद्धबुद्धमुक्तस्वभावत्वादनावरणज्ञानशक्तिरिति वेदाहं परंतप ॥

रा ॥ अनेन जन्मनस्सत्यत्वमुक्तं, 'बहूनि मे व्यतीतानि जन्मानि' इति वचनात्, 'तव च' इति दृष्टान्ततयोपादानाच्च ॥

विचारः

जीवेशयोरस्वातन्त्र्यस्वातन्त्र्यपूजकत्वपूज्यत्वादिवैषम्यज्ञानद्वारा भगवन्माहात्म्यस्य पृष्टत्वेन भगवानर्जुनाज्ञत्वं स्वसार्वज्ञ्यं च वक्ति । यद्यपि 'बहूनि मे व्यतीतानी'ति जन्मबहुत्वविषयमुत्तरं प्रश्नस्य साक्षात्समाधानत्वेन संगतं । तथापि 'नत्वेवाहं' इत्यादिनोपदिष्टत्वेनातीतजन्मसद्भावो नापूर्व-

प्रमेयविशेष इति वक्तुं शक्येत । तस्मात् स्वसार्वज्ञादिमाहात्म्यप्रतिपादने प्रतिवचनस्य मुख्याशयो दृश्यते । तादर्थ्येन जन्मानन्त्योक्तिः सार्थिका ॥ सर्वज्ञत्वासर्वज्ञत्ववैषम्यस्य स्फुटीकरणार्थं उभयोर्जन्मानन्त्येन साम्यं विशिष्योक्तं भाति । यद्वा जन्मबाहुल्येनोभयोः साम्येऽपि मम जन्मानि व्यतीतानि विशेषतोऽतिक्रान्तानि उत्कृष्टानि । न तवेव कर्मवश्यत्वादिनाऽपकृष्टानि । देशतो गुणतश्च निरवधिकानि । यथोक्तं 'सहस्रशीर्षा पुरुषः' इत्यादिश्रुतिस्मृतीतिहासादिषु । एवं व्यतीतजन्मत्वान्मम सर्वज्ञत्वमुपपद्यते । न तवेति यावत् । 'बहूनि' इत्यस्यासंख्यानीत्यर्थः ॥

अर्जुनानुबन्धिपूर्वजन्मनोऽप्रसक्तेः 'तवचे'त्यत्र चकारस्यैवार्थत्वमाह रामानुजाचार्यः ॥ एतन्नरम्यं । 'नत्वेवाह'मित्यत्रेश्वरदृष्टान्तेन जीवनित्यत्वं प्रसाधितं । प्रकृते जीवजन्मबहुत्वदृष्टान्तेनेश्वरजन्मबहुत्वं साध्यते इत्युक्तौ स्वारस्याभावात्, दृष्टान्तस्याल्पत्वाच्च । अतः प्रसंगाज्जीवजन्मानन्त्यमनूद्य साम्यनिषेधे तात्पर्यकथनमेव रम्यं दृश्यते ॥

(तवेत्यन्येषां जीवानामुपलक्षकं ॥ अहं त्वं अन्ये इत्यनेन जीवेश्वरभेदो जीवानां परस्परभेदश्च सूचितः ॥ उपलक्षणायामस्वारस्यं मत्वा तवेति जीवैक्याभिप्रायेणोक्तिरिति मधुसूदनीयोक्तं ॥ श्रीकृष्णस्यापि जीवाभिन्नत्वेनैक्यविवक्षायां मे तवेति च प्रत्यक्पराक्त्वे न वक्तव्ये । प्रत्यक्त्वपराक्त्वे तु भेदनिबन्धने । अतो भेदएवाभिप्रायो वक्तव्यः ॥

अवताराणां सत्यत्वप्रतिपादनाय बहूनि जन्मानीत्युक्तं इति रामानुजभाष्यं । इदमतीतश्लोकव्याख्याने वेङ्कटनाथेन निरस्तं द्रष्टव्यं । यतः प्रश्नोत्तराक्षरालब्धत्वं स्फुटं ॥ अत्रोपपादितं देशिकेन, 'सत्यत्वे हि बहुत्वातीतत्वादीनि स्वरसानि जन्मानीति चोक्तं । न जन्मप्रतिभासा इति । तवचेत्यपृष्टस्यार्थस्योपादानमप्येतत्सत्यत्वदृष्टान्ताभिप्रायमन्तरेण न घटते । न चार्जुनस्य जन्म मिथ्या, तस्य वा तथात्वप्रतिभासः । यथा तव जन्म तथा

मम जन्मानि सत्यानीत्यर्थः ' इति ।। एतस्यार्थस्य वाचनिकत्वं दुर्घटं। दृष्टान्तदार्ष्टान्तिकभावश्च प्रत्युक्तः अन्यथाप्युपपत्तेरुक्तत्वात् ॥

जीवजन्मानि कर्मफलभोगाय बहूनि। ईश्वरजन्मानितु सृष्टिस्थिति-संहारनियमनज्ञानाज्ञानबन्धमोक्षनिर्वर्तनार्थं स्वेच्छया संभवन्ति। अनन्तावतारेषु धर्मपरिपालनं कृतं ज्ञानोपदेशश्च ।। धर्मखड्गस्य विष्णुना प्राप्तत्वमुक्तं शान्तिपर्वणि ॥ ' विष्णुर्मरीचये प्रादात् '।

" मनवे सूर्यपुत्राय ददुः खड्गं सुविस्तरं।
असिना धर्मगर्भेण पालयस्व प्रजा इति ॥
मनुः प्रजानां रक्षार्थं क्षुपाय प्रददावसि।
क्षुपाज्जग्राह चक्ष्वाकुरिक्ष्वाकाश्च पुरूरवाः ॥ " इति

(ch. 166-167)

विवस्वच्छब्देन ब्रह्मादीनामपि विवक्षितत्वात्तेषामुपदेशार्थं बहुरूप-ग्रहणमुपपद्यते ॥

गीतायां द्वितीयार्धे श्रीकृष्णसार्वज्ञमितरनिषेधपूर्वं कथितं। वेदेत्युत्तम-पुरुषप्रयोगादेव कर्ता लभ्यते। अहेयत्वादहं भगवान्। अहमित्यनेन सर्वज्ञत्वे युक्तिरुक्ता भवति ।। लोके तावत्केचन जातिस्मरा योगिनः श्रूयन्ते पुराणेषु। यथा नहुषोऽजगरावस्थायां भमिगलनवेलायां स्वपूर्वजन्म सस्मारेति श्रूयते (वनपर्वणि भारते)। जडभरतोऽपि मृगजन्मनि प्राग्जन्मज्ञान्यभूदितिच उक्तं भागवते (III 32-10) ॥ गर्भवासी जीवः प्रसवात्प्रागतीतं स्मरतीति ॥

" तत्र लब्धस्मृतिर्दैवात् कर्मजन्मशतोद्भवं। स्मरन्दीर्घमनुश्वासं गर्भे किन्नाम विन्दते ॥ " इति। एवं जीवानामपि जन्मान्तस्मरणे संभवति सति श्रीकृष्णे को विशेष इत्यत उक्तं तानीति, सर्वाणीति, वेदेतिच। तानीत्यनेन स्वजन्मानि, अर्जुनादिसर्वजन्मानिच विवक्षितानि ।। जातिस्मराः खलु

प्रायशस्स्वजन्मान्येव स्मरेयुः । नत्वन्येषामतीतजन्मानि जानीयुः । अतो भगवतो विशेषः । जीवो न कोऽपि सर्वाणि जन्मानि स्वस्य वाऽन्यस्य वा जानीयात् । श्रीकृष्णस्तु कृत्स्नतो जानातीति विशेषः ॥ किंच जीवानामतीतस्यानुभूतस्य ज्ञानं स्मरणरूपं । ईश्वरस्यतु सर्वं साक्षात्काररूपमिति विशेषो 'वेदे'त्यनेन ज्ञायते । साक्षादनुभवरूपेणाहं ज्ञातवानिति यावत् ॥

(अर्जुनस्य पूजकत्वेनावरत्वसमर्थनाय 'न त्वं वेत्थे'त्युक्तिः। सर्वज्ञत्वासर्वज्ञत्वविवक्षया वैषम्यं प्राधान्येनाभिप्रेतमिति तथोक्तिः॥

(शाङ्करव्याख्याने श्रीकृष्णार्जुनयोर्वैषम्यनिरूपणावसरे धर्माधर्मादिप्रतिबद्धज्ञानशक्तित्वादर्जुनो न वेत्तीत्युक्तं ॥ आहोत्कर्षदीपिकाकृच्च 'धर्माधर्मप्रतिबद्धज्ञानशक्तित्वात् न जानासीत्येतत्सूचनार्थमेव 'अर्जुन' 'परंतप' इति संबोधनद्वयं । हे अर्जुन शुद्धधर्मवत्वाच्छुद्ध, हे परंतप परमात्मानं अन्यान्वा अधर्मेण तापयति इति तथा विवक्षणात्' इति ॥ अत्रेदं वक्तव्यं । धर्मेण ज्ञानप्रतिबन्धः कथं शास्त्रीयो भवेत् । परंतपेत्यनेनाधर्मेण परमात्मतापनं यदर्जुनस्योक्तं तत्क्लिष्टं इति ॥

('अर्जुन' 'परंतप' इति शब्दयोरन्येऽपि गूढाशयाः कैश्चित् प्रदर्शिताः । यथाह मधुसूदनः, 'हे अर्जुन, श्लेषेणार्जुनवृक्षनाम्ना संबोधयन्नावृतज्ञानत्वं सूचयति । हे परंतप, परं शत्रुं भेददृष्ट्या परिकल्प्य हंतुं प्रवृत्तोऽसीति विपरीतदर्शित्वाद्भ्रान्तोऽसीति सूचयति । तदनेन संबोधनद्वयेनावरणविक्षेपौ द्वावप्याज्ञानधर्मौ दर्शितौ' इति ॥ अत्रार्जुनस्य वृक्षसाम्यमतिक्लिष्टमित्युपेक्ष्यं ॥ द्वैतबुद्ध्या शत्रुं निर्माय त हन्तीति परंतपशब्दव्याख्यान चाप्रामाणिकं। नह्यर्जुनो दुर्योधनादीन्परिकल्प्य योद्धुमुद्यतः । तथासति श्रीकृष्णोऽपि द्वैत बुद्ध्याऽर्जुनं परं शिष्यं परिकल्प्य तस्मै गीतार्थमुपदिदेशेति तस्यापि क्षिप्तबुद्धित्वं स्यात् ॥

वृक्षवज्ज्ञानशून्य इत्युक्तं भावमसहमान इवाह वेङ्कटनाथः, 'सार्वज्ञाभावेऽपि न लोकसाधारणस्त्वमज्ञः । किंतु दैवसंपदाभिजातस्सत्वप्रधानः । इत्याश्वासनमर्जुनेति संबोधनेन व्यज्यते' इति ॥ अयं भावो नानिष्टः ॥ यतस्स्वनामनिर्वचनं कृतमर्जुनेनैव विराटपर्वणि उत्तरकुमारं प्रति । 'पृथिव्यां चतुरन्तायां वर्णो मे दुर्लभः समः । करोमि कर्म शुद्धं च तेन मामर्जुनं विदुः ॥' इति ॥

**अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।**
**प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥ ६ ॥**

वि ॥ जन्मान्यतीतानि चेत्तर्हि न जननमरणराहित्यमीश्वरत्वं वा तव स्यात् । तथाचाविनाशित्वित्युक्तविरोधः इत्यत आह अजोऽपीति । देहतोऽप्युत्पत्तिहीनोऽपि अव्ययोऽविनाशी आत्मा स्वरूपं देहश्च यस्य सोऽव्ययात्मा सन्नपि भूतानामीश्वरस्सन्नपि संभवामीत्यन्वयः ॥ स्वरूपतो देहतश्चानादिनित्यस्य कथं जनिरित्यत उक्तं ॥ प्रकृतिमधिष्ठायेति । प्रकृतिशब्दः प्राकृतपरः । प्राकृतान्प्रकृतिजान्वसुदेवादीनधिष्ठायानुप्रविश्यात्ममायया स्वेच्छया स्वज्ञानेन वा संभवामि प्रादुर्भवामि । अतो जात इति लोकस्य भ्रान्तो व्यवहार इति भावः । यद्वा स्वां स्वकीयां मदधीनां प्रकृतिं तमोरूपामधिष्ठाय आश्रित्य संभवामि । संभूतो जात इति भ्रम-

विषयो भवामि लोकस्येत्यर्थः ॥ स्वाधीनप्रकृत्या वसुदेवादिदेहान्निर्माय तेष्वनुप्रविश्य प्रादुर्भवकरणे किं प्रयोजनमित्यतोऽप्युक्तं स्वां प्रकृतिमधिष्ठायेति । स्वस्वभावमनुसृत्य संभवामीति । देवस्यैष स्वभाव एव न प्रयोजनापेक्षेति भावः । (एतेन जीवजन्मविलक्षणजन्मवत्त्वाद्धरेः पूज्यत्वादिना जीवभेद उपपादित इति ज्ञेयम् ) ॥

शं ॥ कथं तर्हि तव नित्येश्वरस्य धर्माधर्माभावे जन्म इति, उच्यते । अजोऽपीति । जन्मरहितोऽपि सन् तथा अव्ययात्मा अक्षीणज्ञानशक्तिस्वभावोऽपि सन् , तथा भूतानां ब्रह्मादिस्तंबपर्यन्तानां ईश्वरः ईशनशीलः अपि सन् , प्रकृतिं मम वैष्णवीं मायां त्रिगुणात्मिकां, यस्याः वशं सर्वमिदं जगद्वर्तते यया मोहितं जगत् सत् स्वमात्मानं वासुदेवं न जानाति । तां प्रकृतिं स्वामधिष्ठाय वशीकृत्य संभवामि । देहवानिव भवामि जात इवात्ममायया, आत्मनः मायया न परमार्थतो लोकवत् ॥

रा ॥ अजत्वाव्ययत्वसर्वेश्वरत्वादिसर्वं पारमेश्वरं प्रकारमजहदेव स्वां प्रकृतिमधिष्ठाय आत्ममायया संभवामि । प्रकृतिः स्वभावः स्वमेव स्वभावमधिष्ठाय, स्वेनैव रूपेण स्वेच्छया सम्भवामीत्यर्थः । स्वस्वरूपं हि 'आदित्यवर्णं तमसः परस्तात्' 'क्षयन्तमस्य रजसः पराके' 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' 'तस्मिन्नयं पुरुषो मनोमयः'

'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि' 'भारूपस्सत्य-सङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामस्सर्वगन्धस्सर्वरसः' 'माहारजनं वासः' इत्यादिश्रुतिसिद्धं । आत्ममायया आत्मीयया मायया । मायावयुनं ज्ञानमिति ज्ञानपर्यायोऽत्र मायाशब्दः । तथाचाभियुक्तप्रयोगः, 'मायया सततं वेत्ति प्राणिनां च शुभाशुभं' इति । आत्मीयेन ज्ञानेन आत्मसङ्कल्पेनेत्यर्थः । अतोऽपहतपाप्मत्वादिसमस्तकल्याणगुणात्मकत्वं सर्वैमैशं स्वभावमजहत्, स्वमेव रूपं देवमनुष्यादिसजातियसंस्थानं कुर्वन्नात्मसंकल्पेन देवादिरूपस्संभवामि ॥ तदिदमाह 'अजायमानो बहुधा विजायते' इति श्रुतिः । इतरपुरुषसाधारणं जन्माकुर्वन् देवादिरूपेण स्वसंकल्पेनोक्तप्रक्रियया जायत इत्यर्थः ॥ 'बहूनि मे व्यतीतानि जन्मानि तव चार्जुन । तान्यहं वेद सर्वाणि' 'तदात्मानं सृजाम्यहं' 'जन्मकर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः' इति पूर्वापराविरोधाच्च इति ॥

विचारः

(द्वितीयाध्याये तावत् 'अविनाशि त्वि'त्यादिग्रन्थेषु भगवतश्चतुर्विधनाशराहित्यं प्रतिपादितं, 'अनित्यत्वं देहहानिः दुःखप्राप्तिरपूर्णता । नाशश्चतुर्विधः प्रोक्तस्तदभावो हरेस्सदा ॥' इति प्रमाणात् स्वरूपतो देहतश्च नित्यत्वं प्रसाधितं । दुःखाभावेन अपूर्णताराहित्येन च सर्वेश्वरत्वं चोपपन्नं । स्वरूपतो देहतश्चानादित्वाव्ययत्वयोस्सर्वेश्वरत्वस्य चान्यैरपि गीतोक्तैः प्रमाणैः कथितत्वात् ॥ 'बहूनि मे व्यतीतानी'त्युक्ते लब्धावसरोऽर्जुनः आक्षिपति—यदि

तव जन्मान्यतीतानि तर्हि भवान्नाजः नाव्ययः नेश्वरश्च स्यात्। अजत्वनित्यत्वेश्वरत्वधर्माणां व्यतीतजन्मत्वेन व्याघातात् इति। एतदाक्षेपशांतये भगवान् स्वाजत्वाव्ययत्वेश्वरत्वान्यनुवादद्वारा पूर्वार्धश्लोकेन दृढीकृत्य द्वितीयार्धेन समाधत्ते॥

ब्रह्मादिजीवसंघाद्वैलक्षण्यज्ञापनाय प्रकरणस्य प्रवृत्तिर्ज्ञेया। 'भूतानामीश्वरः' इति भवनधर्माणां ब्रह्मादीनां सकाशादुत्तमत्वं द्योतितं भवति॥ यद्यपि ईशनशीलत्वं ईश्वरशब्दप्रवृत्तिनिमित्तं, "स्थेशभासपिसकसो वरच्" इति ईशशब्दाद्वरच्प्रत्यये ईश्वरः इति रूपनिष्पत्तेः। ईशनशीलत्वन्तु नेह विवक्षितोऽर्थः। इह विवक्षितं ईश्वरत्वं तु द्वितीयार्धोक्तस्य संभवस्य विरोधीत्यभिप्रायः 'सन्' इति पदेन सूचितः। यतः ईश्वरस्सन्नपि संभवामि इति योजनया ईश्वरत्वसंभवयोर्विरोधे प्रतीते सति उपपत्तिवचनेन विरोधः समाधीयते। ईशनशीलत्वार्थेतु विरोधप्रतीतेर्नावकाशः। ईशनशीलानामपि ब्रह्मादीनामुत्पत्तिमरणदर्शनेन विरोधायोगात्। तस्मात् 'ईशेभ्यो ब्रह्मरुद्रश्रीशेषादिभ्यो यतो भवान्। वरोऽत ईश्वराख्या ते मुख्या नान्यस्य कस्यचित्' इति ब्रह्मवैवर्ते॥ 'ईशस्समर्थ इत्युक्तस्तद्वरत्वात्त्वमीश्वरः' इति च॥ उक्तरीत्या ईश्वरत्वादीश्वरः। वरशब्दयोगे पंचमीसमासो नोपपन्न इति वा ईशवर इति भवितव्ये अकारलोपेन ईश्वरः इति रूपमनुपपन्नमिति वा न शंकनीयं। यतः आगमबलादेव समासाकारलोपावनुमन्तव्यौ। ब्रह्माद्युत्तमस्य ब्रह्माद्यवृत्तिनिरवधिकानुत्पत्त्या भाव्यं। यत्र सर्वेश्वरत्वं तत्र न संभवाख्याऽपूर्णतेति व्याप्त्या अहं ईश्वरः संभवामिच इत्युक्तयोः व्याहितिर्ज्ञेया॥

एवं अजोऽव्यय इत्युक्तिभ्यांच संभवामीत्यस्य विरोधोऽवगन्तव्यः। जीववैलक्षण्यं चैताभ्यां विवक्षितं। अज इत्यस्य संभवामीत्यनेन शाब्दो व्याघातः स्फुटः। य उत्पद्यते स नश्यतीति व्याप्तेः अव्ययत्वसंभवयोः सुगमः। अजाव्ययशब्दाभ्यां यदि स्वरूपस्यैवोत्पत्तिनाशाभाव-

विवक्षा तर्हि जीवादुत्कर्षो नाविष्कृतो भवेत् । जीवस्वरूपस्याप्यजत्वादव्ययत्वात् । अतः स्वरूपतो देहतश्चाहमजोऽव्ययः इत्येव वचनाशयो मन्तव्यः । अत्र गमकं विद्यते । यतः अव्यय इत्येतावन्मात्रमनुक्त्वा अव्ययात्मेत्युक्तं गीतायां । अव्ययः आत्मा देहोऽपि यस्येत्यव्ययात्मा । आत्मशब्देन स्वरूपदेहयोरुपादानं विवक्षितं । स्वरूपस्य देहस्याप्यव्ययत्वोपपादनेनाजत्वमपि साहचर्यात्स्वरूपस्य देहस्य चेति गम्यते । आत्मस्वरूपानादित्वं तु सर्वसममिति न तद्विषय आक्षेपः परिहारोवा संभवति । अव्ययात्मेत्यत्रात्मशब्दोऽप्यन्यथा व्यर्थः । उक्तंहि 'नहि जातो न जायेयं न जनिष्ये कदाचन । क्षेत्रज्ञः सर्वभूतानां तस्मादहमजः स्मृतः ॥' इति भारते ॥

एतादृशस्य जनिः कथमुपपद्यते इति शंका द्वितीयार्धे समाहिता, प्राकृतान्वसुदेवादीननुप्रविश्य स्वेच्छया स्वज्ञानेन वा भगवान् जात इति प्रतीयते । प्रकृतिं तमोरूपां दुर्गाभिमन्यमानां आश्रित्य लोकस्य जात इति भ्रमविषयो भवति भगवानिति यावत् । तथाच प्रकृतिशब्दो जातत्वभ्रमस्य निमित्तकारणं उपादानकारणंच वक्तीत्यर्थः । वसुदेवादयो भ्रान्तेर्निमित्तं कारणं । तमोगुणात्मकप्रकृतिविशिष्टं मनः भ्रान्त्युपादानं ॥

यथोक्तं । "महदादेश्च माता या श्रीर्भूमिरिति कल्पिता ।
विमोहिका च दुर्गाख्या ताभिर्विष्णुरजोऽपि हि ।
जातवत्प्रथते ह्यात्मचिद्बलान्मूढचेतसां" इति ॥

प्रकृतिं स्वामित्यनेन वसुदेवादिप्राकृतानां दुर्गाभिमन्यमानाया मोहिकायास्तमोरूपायाश्च भगवदधीनत्वं ज्ञायते । 'द्रव्यं कर्म च कालश्च स्वभावो जीव एवच । यदनुग्रहतस्सन्ति न संति यदुपेक्षया ॥' इत्युक्तेर्द्रव्यशब्दितप्रकृतेर्भगवन्नियम्यत्वं स्फुटं । स्वामित्यनुक्तौ कर्मवश्यजीववत्प्रकृतिवश्यत्वं स्यादीश्वरस्य । एवं प्रकृतिशब्दार्थे गृहीते आत्ममाययेत्यत्र मायाशब्दो न प्रकृ-

तिवाची, पुनरुक्तिप्रसंगात्। अतो मायेति इच्छा ज्ञानं वोच्यते। ‘केतुः केतश्चित्तिश्चित्तं मतिः क्रतुर्मनीषा माया इति प्रज्ञाया नामधेयानि’ इत्याभिधानं। एवमेव रामानुजाचार्यैर्व्याख्यानं मायेत्यस्य। ‘मायावयुनं ज्ञानं’ इति वेदनिघंटु दर्शयति देशिकः।

यद्वा प्रकृतिशब्देन प्राकृता वसुदेवादयो निमित्तकारणानि गृह्यन्ते। आत्ममाययेति मायाशब्देन भ्रमोपादानं मोहकप्रकृतिर्गृह्यते इति च व्याख्या युज्यते। तस्मान्मायेत्यनेन ज्ञानेच्छासंकल्पा बोध्यन्ते मोहिका तमोरूपा प्रकृतिर्वेत्यवधेयं।

अथवा प्रकृतिशब्दस्स्वभावपरः। स्वां प्रकृतिं स्वस्वभावं इत्यर्थः। स्वशब्दः स्वरूपवाची। स्वभाव इत्यत्रापि स्वाख्यो भावः स्वभावः। भावशब्दस्तु संबन्ध्याशंकानिवृत्तये। स्वस्वभाव इतितु स्वस्वरूपमितिवदुपचारत्वाशंकां निवर्तयति। अस्मिन्नर्थे मायाशब्द इच्छावाचकः। उक्तंहि ‘स्रष्टृत्वादिस्वभावत्वात्स्वेच्छया विष्णुरव्ययः। सृष्ट्यादिकं करोत्यद्धा स्वयंच बहुधा भवेत्’ इति नारायणश्रुतौ। तथाच पूर्वार्धोक्ताजत्वादीनां संभवामीत्यनेन विरोधः परिहृतः। विष्णोस्संभवस्य केवलं प्रादुर्भावरूपत्वात्। उक्तं भागवते दशमे—

‘प्रादुरासीद्यथा प्राच्यां दिशीन्दुरिव पुष्कलः’ इति।

‘समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशोद्धृतभूतसर्गः।
इच्छागृहीताभिमतोरुदेहस्संसाधिताशेषजगद्धितोऽसौ’॥ इति

वि. पुराणे। उक्तं च संग्रहेण तात्पर्यनिर्णये।

‘स्त्रीपुंप्रसंगात्परतो यतो हरिः प्रादुर्भवत्येष जनं विमोहयन्।
अतोमलोत्थोऽयमितिस्म मन्यते जनोऽशुभः पूर्णगुणैकविग्रह॥’ इति

(मायाशब्दस्येच्छापरत्वं न सहते वेङ्कटनाथः । उक्तमनेन 'न च संभवाम्यात्ममाययेत्यत्र मायाशब्दः संकल्पवाचीति रामानुजोक्तं, इच्छावाचीति माध्वोक्तं वा युक्तं । त्रिगुणात्मकप्रकृतावेव मायाशब्दस्य श्रुतिस्मृत्योः प्रसिद्धत्वात् । प्रसिद्धार्थे संभवत्यप्रसिद्धार्थस्वीकारायोगात् । अजोऽपि सन्मायया संभवामीत्यजत्वविरुद्धजन्मोपपादनार्थं प्रयुक्तेन मायापदेन प्रसिद्धमायारूपार्थानुक्तौ तद्विरोधपरिहारालाभाच्च)( 'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद । सर्वभूतगुणैर्युक्तं नच मां द्रष्टुमर्हसि ॥' इति मोक्षधर्मवचनपर्यालोचनया चोक्तरीत्यैवास्य व्याख्यातव्यत्वाच्च' इति ॥ उक्तरीतिश्शंकरभाष्यमनुसरति । तद्विचारोऽग्रे क्रियते)।

(अत्र यदुक्तमनेनेच्छावाचकत्वस्य श्रुतिस्मृत्यप्रसिद्धत्वं तदज्ञानमूलं । यतो मायाशब्दस्य प्रज्ञानामसु पाठःप्रसिद्धः । स्पष्टमभ्युपगतश्चायमानन्दगिरिटीकायां । श्रीधरीयेच मायाशब्दः इच्छापरतया व्याख्यातः 'विशुद्धोर्जितसत्वमूर्त्या स्वेच्छयाऽवतरामि' इति)( यच्चान्यदुक्तं मायाशब्दस्य स्वोक्तार्थानुक्तौ अजत्वादेः संभवामीत्यनेन विरोधो न परिहृतो भवतीति, तदपि मन्दं । स्वाधीनप्रकृतिमता निरंकुशस्वेच्छामात्रसाध्यप्रवृत्तिमताच प्रादुर्भावाख्यस्य संभवस्याचिन्त्याद्भुतशक्तिनिर्वाह्यत्वेन विरोधस्य शांतेरुपपन्नत्वात् ॥ मायाशब्दार्थेषु स्वाभिप्रेतेनैव केनाचिदर्थेन विरोधस्य परिहरणीयत्वे को निर्बन्धः । मोक्षधर्मवचनमुदाहृतमन्यथोपपत्तिमर्हति, भगवदिच्छयैव भगवान्नारदऋषिगोचरो बभूवेति)।

(अत्र भगवद्देहविषये केचिद्विप्रतिपद्यन्ते । भगवद्देहास्सत्या वा मिथ्या वा, किमात्मकास्ते इत्यादि तैर्विचारितं)(अत्र शांकरव्याख्यानेषु मतभेदो दृश्यते ॥ शंकरभाष्ये भगवतो देहानंगीकृत्य देहानां मायिकत्वमुक्तं । अन्यैर्देहएव निषिद्धः । तथाहि शंकरभाष्यं 'प्रकृतिं मम वैष्णवीं मायां वशीकृत्य देहवानिव भवामि जात इवात्ममायया, न परमार्थतो लोकवत्' इति )इदं

रुपपादितं, 'नित्यो यः कारणोपाधिर्मायाख्योऽनेकशक्तिमान् । सएव भगवद्देह इति भाष्यकृतां मतं ॥' इति ) (यथाचोक्तं मधुसूदनीये ॥ 'विचित्रानेकशक्तिमघटमानघटनापटीयसीं स्वां स्वोपाधिभूतामाधिष्ठाय चिदाभासेन वशीकृत्य संभवामि' तत्परिणामविशेषैरेव देहवानिव जात इवच भवामि । अनादिमायैव मदुपाधिभूता । यावत्कालस्थायित्वेन च नित्या जगत्कारणत्वसंपादिका मदिच्छयैव प्रवर्तमाना विशुद्धसत्वमयत्वेन मम मूर्तिः । अतोऽनेन नित्येनैव देहेन विवस्वन्तंच त्वां च प्रतीमं योगमुपदिष्टवानित्युपपन्नं' इति ) भगवज्जन्म प्रातिभासिकं न परमार्थतः इत्युक्तमानन्दगिरिटीकायां )

(अत्रोच्यते । भगवद्विग्रहस्य यदचेतनप्रकृतिपरिणामत्वमगीकृतं तदसत् । यतो विशुद्धसत्वमयत्वं नापकर्षं निवारयति । 'न भूतसंघसंस्थानो देहोऽस्य परमात्मनः' इत्युक्तं हि भारते । 'न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसंभवा' इति वायुपुराणे वाराहेच ।)

(२) शंकरभाष्ये यदुक्तं 'न परमार्थतो लोकवत्' इति तस्यार्थो दुर्घटः। लोकानां जन्मनोऽपि तन्मते मिथ्यात्वात् । अतः परमार्थशब्दः परमार्थत्वाभिमानपरः इत्यानन्दगिरिराह । देहस्य तात्विकत्वातात्विकत्वविचारे ज्ञान्यज्ञानिवैषम्यबीजभूताभिमानतद्भावयोस्संगतिर्न दृश्यते )।

(३) ('मदिच्छयैव प्रवर्तमानां' इत्यादिवाक्यंच दुर्घटं । तन्मते निर्गुणस्येच्छादिविरहात् )। (अतो भगवतः प्राकृतशरीरित्वं शरीराणां मिथ्यात्वं, जन्मशब्दस्य जन्मप्रतिभासवाचित्वं, व्यतीतशब्दस्य बाधपरत्वं, मायागृहीतस्य सर्वज्ञत्वं, मायिकस्य विग्रहस्य नित्यत्वं, त्रिगुणप्रसूतस्य दिव्यत्वं, इत्यादिव्याघाता द्रष्टव्याः ।)

(शंकरभाष्याभिमतप्राकृतमायिकविग्रहत्वमतमुल्लंघ्य केचिदन्यथा पद्यं व्याचक्षते ) (तदनुवदति मधुसूदनः स्वस्यापि संमतत्वेन, ) (अन्येतु परमेश्वरे

देहिदेहभावं न मन्यन्ते । किंतु यश्च नित्यो विभुः सच्चिदानन्दघनः भगवान्वासुदेवः परिपूर्णो निर्गुणः परमात्मा सएव तद्विग्रहः । नान्यःकश्चिद्भौतिको मायिको वेति ' इति । अस्मिन्नर्थे सप्रमाणं योजनां च प्रदर्शयति । तथाहि, 'स्वां निजस्वरूपामित्यर्थः ' स भगवःकस्मिन् प्रतिष्ठितः स्वे महिम्नि ' इति श्रुतेः । स्वरूपमधिष्ठाय स्वरूपावस्थित एव सन् संभवामि देहिदेहभावमन्तरेणैव देहिवद्व्यवहरामि । निर्गुणे शुद्धे सच्चिदानन्दघनरसे मयि भगवति वासुदेवे देहदेहिभावशून्ये तद्रूपेण प्रतीतिर्मायामात्रं ' इति ॥ इमं पक्षं मधुसूदनानुज्ञातं निराचष्टे उत्कर्षदीपिकाकृत् । तथाहि, ' तत्रेदमवधेयं । परमेश्वरे देहदेहिभावो नास्तीत्युक्तिः मायया देहदेहिभावो न वस्तुत इत्यङ्गीकुर्वतां भाष्यकृतां मतेन प्रतिकूला । यदि परमात्मैव विग्रहः स किं साकार उत निराकारः । आद्ये निर्गुणस्य परिणाम उत विवर्तः । नाद्यः । निर्विकारस्य विकाररूपपरिणामायोगात् । अन्यथा तस्यानित्यत्वं स्यात् । द्वितीये मायाया विवर्तसाधिकाया आवश्यकत्वेन न मायिक इत्युक्तिरनुपपन्ना । न द्वितीयः । सर्वाकारशून्यः पुनश्च विशेषाकारेण गृह्यत इति विग्रह इति वदतो व्याघातात् । किंच विग्रहः किं हस्तपादादिमान् उत तद्रहितः । आद्ये हस्तादयोऽपि किं दृश्या उतादृश्याः । आद्ये विग्रहस्य भूतकार्यत्वाभावान्मायिकत्वमवश्यमभ्युपेयं । न द्वितीयः । भक्तानां तद्दर्शनाद्यनापत्तेः । नन्वदृश्या अपि मायया दृश्या इति चेत्तर्हि किं परमाण्वादिवददृश्या उत ब्रह्मरूपेण । आद्ये योगिनामक्षगोचराः स्युः । द्वितीये हस्तादयोऽवयवास्तद्वान् विग्रह इति कृतमुक्तिमात्रेण स्वशिष्यबन्धनेन । नद्वितीयः । तद्रहितो विग्रहश्चेति व्याघातात् । अत अशरीरी परमात्मा सर्वेश्वरो मायानियंता साधकानुग्रहार्थं स्वमायया लीला विग्रहं गृहीत्वा जातइव विग्रहवानिव भातीति श्रुतिस्मृतीतिहासपुराणाद्यनुगृहीतं सर्वज्ञानां भाष्यकृतां मतं शरणीकरणीयं ' इति ॥ अत्रोच्यते । यदनेन स्वाचार्यभाष्यप्रातिकूल्यमुक्तं तत्स्याद्वा न स्यात् । एको वदति देहदेहिभावे

नास्तीति। अपरो वदति स वस्तुतोऽस्ति किंतु मायिकइति । एवंचेत् देहदेहि-भावस्य मायिकत्वेन मिथ्यात्वे स नास्तीत्येवोक्तं भवतीति मतयोर्भेदो नावगम्यते । यदि शंकराचार्यतच्छिष्ययोर्वस्तुतो मतभेदोऽस्ति तर्हि स स्वव्यूहेऽपि मायामतस्य तात्त्विकत्वं प्रचालयति । अस्तामेतत् ॥ उत्कर्षदीपिकायां विकल्पबाहुल्येन परमात्मस्वरूपमेव तद्विग्रहः इति पक्षो यो निराकृतः स निरासो न प्रत्याययति । यतः परमात्मनः साकारत्वे बाधकं न दृश्यते । निर्गुणस्य परिणामो विवर्तो वा इति विकल्प्योभयं च दूषितं। तन्न, अप्राकृतस्य विग्रहस्य प्रकृतिपरिणामं विवर्तंच विना अन्यथाप्युपपत्तेः । यच्च विग्रहस्य हस्तपादादिमत्त्वं वेतरद्वेति विकल्प्य सावयवत्वदृश्यत्वपक्षयोर्दूषणमुक्तं। तदपि न, विग्रहस्य भूतकार्यत्वं मायिकत्वं च विनाप्युपपत्तेः। चिदानन्दविग्रहस्याचिन्त्याद्भुतशक्तिमत्त्वमहिम्ना सावयवत्वस्य दृश्यत्वस्य च युक्तत्वात् । शांकरास्तावन्मायया अघटमानघटनापटीयसीं शक्तिं वदन्तः परमात्मनस्तां नाभ्युपयन्तीत्याश्चर्य ।

अवताररूपाणां प्राकृतत्वं शंकरभाष्योक्तं विहाय मार्गान्तरमाश्रयते नीलकंठः । तदाशयस्संग्रहेण तद्वाक्यैरेवोच्यते "देहान्निष्कृष्टस्याजत्वाव्ययत्वे नत्वेवाहं जातु नासं इत्यत्र साधिते । इहतु देहविशिष्टस्यैव ते उच्येते । ईश्वरोऽपीत्यनेन देहान्निष्कृष्टस्यास्मदादेरपीश्वरत्वं 'तत्वमसि' 'अहं ब्रह्मास्मि' इत्यादिश्रुतिप्रसिद्धं। अतो देहविशिष्टस्यैवाजत्वनित्यत्वे दृढीक्रियेते । अन्यथाऽनीश्वरत्वप्रसंगात् । नह्यादित्यान्तर्यामिणःपरमेश्वरस्य हिरण्यश्मश्रुत्वादिविशिष्टो देहो जन्मव्ययवानिति वक्तुं शक्यं, अकर्मजत्वात् । भगवतश्शरीरं न भौतिकं, विराट्सूत्रात्मातिरिक्तस्य भौतिकस्याभावात् । तस्माद्युक्तमजोऽपि सन्निति"।

ननु तर्हि भगवच्छरीरस्य किमुपादानं । अविद्येति चेन्न, परमेश्वरे तदभावात् । जीवाविद्येति चेन्न शुक्तिरजतादेरिव तुच्छत्वापत्तेः । चिन्मात्रं चेन्न । चितः साकारत्वायोगात् । तथात्वे वा तस्यातीन्द्रियत्वापत्तिः। तस्मात् किमालंबो

वद्देहः इति चेच्छृणु—(अहं स्वां प्रत्यगनन्यां प्रकृतिं प्रत्यक्चैतन्यमेवेत्यर्थः । तदेवाधिष्ठाय, नतूपादानान्तरं । आत्ममायया स्वीयमायया संभवामि । यथा कश्चिन्मायावी स्वयं स्वस्थानादप्रच्युतस्वभावोऽप्यदृश्यो भूत्वा स्थूलसूक्ष्मभूतान्यनुपादायैव केवलया मायया द्वितीयं मायाविनं स्वसदृशमेव सूत्रमार्गेण गगनमारोहन्तं सृजति । एवमहं कूटस्थचिन्मात्रोऽग्राह्यः स्वमायया चिन्मयमात्मनः शरीरं सृजामि । तस्य बाल्याद्यवस्थाश्च सूत्रारोहणवद्दर्शयामि । एतावांस्तु विशेषः । लौकिकमायावी मायामुपसंहरन् द्वितीयं मायाविनमप्युपसंहरति । अहंतु तामनुपसंहरन् स्वविग्रहमपि नोपसंहरामि । तस्मात्सिद्धं परमेश्वरस्य मायामयं शरीरं नित्यमिति । एकेनैव देहेन विवस्वन्तमुपदिश्य त्वामप्युपदिशामीति ॥ ‘ देवानां कार्यसिध्यर्थमाविर्भवति सा यदा । उत्पन्नेति तदा लोके सा नित्याप्यभिधीयते ॥ ’ इत्यन्यत्र ” इति )॥

अस्मिन्नीलकंठीगवाक्ये देहविशिष्टस्यैव भगवतोऽजत्वनित्यत्वे भगवतो देहश्चिन्मात्रस्वरूपो नित्यश्चेति भाषितं यत्साधूक्तं तत् )\ तत्वमसीत्यादिकमादाय सर्वेषामस्मदादीनां चेश्वरत्वं यदुक्तं तदसत् । लौकिकमायाविदृष्टान्तश्चासंबद्धः । निगमने यदुक्तं परमेश्वरस्य मायामयं शरीरं इति तदपि व्याहतमप्रामाणिकंच ॥

\ अत्र शंकरभाष्यविरुद्धमंशं निराहोत्कर्षदीपिकाकारः—“ हिरण्यश्मश्रुत्वादिविशिष्ट आदित्यान्तर्यामिदेहएव यदि कृष्णादिदेहः स्यात्तर्हि तथैव प्रतीयेत नतु मेघश्यामत्वादिलक्षणः ॥ यदपि यथा कश्चिदित्यादि तदपि न । भगवता वासुदेवेनैवादौ चतुर्भुजं विग्रहं प्रदर्श्य पुनर्द्विभुजं रूपं प्रदर्शितं । तदपि तिरोधाय पुनस्तदपि प्रकटितमिति प्रसिद्धेः । अन्यथा परमेश्वरदेहानां मोहिन्यादिरूपाणां अनन्तानां युगपत्प्रतीत्यापत्तेः । ईश्वरदेहाभिप्रायेणार्जुनस्य प्रश्नो न । परमात्मनो वास्तवदेहस्याभावात् । तस्मात् त्वमपि कश्चिदसर्वज्ञोऽनीश्वरो जीव एव तवादित्यं प्रत्युपदेष्टृत्वं विरुद्धमिति मूर्खाणामभिप्रायेणार्जुनस्य

शंका । अहं जीववद्धर्माधर्मादिपारतंत्र्याभावादजोऽव्ययात्मा भूतानामीश्वरः । एतादृशोऽपि सन् प्रकृतिं स्वामाधिष्ठाय स्वमायया संभवामि इत्युत्तरमित्यलं विस्तरेण" इति ॥

(अस्मिन्नुत्कर्षदीपिकाकारकृतनीलकंठीयनिरासे यल्लौकिकमायाविदृष्टान्तदूषणं तत्साधु । यतो भगवान् स्वविग्रहं स्वेच्छयोपसंहरति प्रकाशयतिच । अन्यानि निरासवाक्यानि त्वसंगतानि । यतः सूर्यान्तर्गतहिरण्यस्मश्रुत्वविशिष्टदेहः कृष्णदेहाद्भिन्नइति योऽस्य निरासकस्याशयस्स न प्रामाणिकः । 'नेह नानाऽस्ति किंचने'त्युक्तप्रकारेण भगवद्देहानां भगवता परस्परंच सर्वात्मना भेदाभावस्य तात्विकत्वात् ॥

(विग्रहप्रतीतौ हिरण्यवर्णत्वस्याग्रहादिभदेस्तु यादृशो विग्रहःप्रतीयेतेति भगवदिच्छा तादृशो दृश्यते, नान्यः इतीश्वरसंकल्पापेक्षया उपपद्यते ॥ यदुक्तं परमात्मनो वास्तवदेहाभावादिति तन्न । 'सहस्रशीर्षा पुरुषस्सहस्राक्षः सहस्रपात्' इत्यादिबहुप्रमाणैस्सकलकल्याणगुणपूर्णदिव्यमंगलविग्रहो भगवानिति यतः श्रूयते ॥

(अत्रायं संग्रहः॥ भगवच्छरीरं प्राकृतं अवास्तवं प्रातिभासिकं इति शांकरः पक्षः ॥ तदप्राकृतं चिदानन्दादिस्वरूपं । दृष्टिगोचरस्तु विग्रहः प्रातिभासिक इत्यन्ये ), तथाच विग्रहस्य प्रातिभासिकत्वे उभयाभ्युपगते सति स विग्रहः प्राकृतो वा चिन्मयो वेति विचारेण को लाभः ॥ सत्यत्वेहि कीदृशोऽयं विग्रह इति विचारस्सार्थको भवेत् ॥ किंच शांकरभाष्याभिमतः प्राकृतविग्रहत्वपक्षः किमिति परित्यक्तो मधुसूदनादिभिरिति बुधैरालोचनीयं ॥ (अप्राकृतसुन्दरविग्रहप्रतिपादकश्रुतिस्मृतियुक्तिभ्यो भीतास्सन्तः प्राचीनं स्वगुरुमतमपि विहायाधुनिकास्तावदस्मदाचार्योक्तरीत्या चिदानन्दविग्रहं भगवन्तमाहुरित्यूह्यते ॥ तथापि वाङ्मात्रेण स्वाभिलषितं मायाशब्दमवलंब्य व्यवहरंति । तस्मात् भगव-

देहास्सत्याः नित्याश्च अप्राकृताः स्वेच्छयाऽऽविष्कृताः तिरोभाविताः सर्वथा मूलरूपाद्वा परस्परं वा भेदशून्याः इति श्रीसर्वज्ञाचार्यमतमेव समंजसं । इत्यलं पल्लवेन ॥

**यदायदा हि धर्मस्य ग्लानिर्भवति भारत ।**
**अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहं॥७॥**
**परित्राणाय साधूनां विनाशाय च दुष्कृतां ।**
**धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ ८ ॥**

वि० ॥ किंच स्वप्रयोजनाभावेऽपि लोकापेक्षितधर्माधर्मस्थापनोत्सादनाद्यर्थमवतार इति संभवकालोक्तिपूर्वकमाह ॥ यदेत्यादि श्लोकद्वयेन । युगेयुगे इति धर्महान्यधर्मवृद्धिकाल इत्यर्थः । अवतारं विना साधुपरित्राणादिसंभवेऽपि लीलयैवावतारद्वारा परित्राणादिकं स्वभावादेव तस्येति ज्ञेयम् ॥

शं॥ तच्च जन्म कदा किमर्थं चेति । उच्यते । यदायदा हि धर्मस्य ग्लानिः हानिः वर्णाश्रमादिलक्षणस्य प्राणिनामभ्युदयनिःश्रेयससाधनस्य भवति भारत, अभ्युत्थानं उद्भवः अधर्मस्य । तदा तदा आत्मानं सृजामि अहं मायया ॥ ७ ॥

किमर्थं ॥ परित्राणाय इति ॥ परित्राणाय परिरक्षणाय साधूनां सन्मार्गस्थानां विनाशाय दुष्कृतां पापकारिणां ।

किंच धर्मसंस्थापनार्थाय धर्मस्य सम्यक् स्थापनं धर्मसंस्थापनं तदर्थं संभवामि युगेयुगे प्रतियुगम् ॥ ८ ॥

रा ॥ जन्मकालमाह । न कालनियमोऽस्मत्संभवस्य, यदायदा हि धर्मस्य वेदोदितस्य चातुर्वर्ण्यचातुराश्रम्यव्यवस्थयाऽवस्थितस्य कर्तव्यस्य ग्लानिर्भवति। यदायदा च तद्विपर्ययस्याधर्मस्याभ्युत्थानं, तदाऽहमेव स्वसंकल्पेनोक्तप्रकारेणात्मानं सृजामि ॥ ७ ॥

जन्मनः प्रयोजनमाह॥ साधव उक्तलक्षणधर्मशीला वैष्णवाग्रेसरा मत्समाश्रयणे प्रवृत्ता मन्नामकर्मस्वरूपाणां वाङ्मनसागोचरतया मद्दर्शनाद्विना स्वात्मधारणपोषणादिकमलभमानाः क्षणमात्रकालं कल्पसहस्रं मन्वानाः प्रशिथिलसर्वगात्रा भवेयुरिति मत्स्वरूपचेष्टितावलोकनालापादिदानेन तेषां परित्राणाय तद्विपरीतानां विनाशाय च, क्षीणस्य वैदिकस्य धर्मस्य मदाराधनरूपस्याराध्यस्वरूपदर्शनेन स्थापनाय च देवमनुष्यादिरूपेण युगे युगे संभवामि । कृतत्रेतादियुगविशेषनियमोऽपि नास्तीत्यर्थः ।

विचारः

यदायदेत्यनेन कालनियमो नास्तीति सूच्यते। युगेयुगे इत्युक्तं च धर्महान्यधर्मवृद्धिकालपरं ।

आह देशिकः ' कृतत्रेतादियुगविशेषनियमोऽपि नास्ति । जीववत्पुण्यापुण्यविपाककृतो वा मन्वन्तरमहाकल्पादिरूपो वा कालनियमो नास्ति',

इति ॥ ' वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदां । आचारश्चैव साधूनामात्मनो रतिरेवच ' ॥ इति मनुः॥ धारकत्वाद्धर्मो भगवान् । तस्य सज्जनमनस्सु यदा तिरोभावस्तदा भगवानवतराति । धर्मशब्दो वेदपरश्च । वेदस्यासुरदौष्ट्येनादर्शने सति मत्स्याद्यवताररूपैर्वेदमुद्धारेति श्रूयते । हयग्रीवरूपं हि वेदशिरस्कमिति वर्णितं भारते । इदमस्य भगवतो विश्वरूपं—

" कृत्वा हयशिरःशुभ्रं वेदानामालयःप्रभुः ।
तस्य मूर्धा समभवत् द्यौःसनक्षत्रतारका ॥

केशाश्चास्याभवन्दीर्घाः रवेरंशुसमप्रभाः ।
कर्णावाकाशपाताले ललाटं भूतधारिणी ॥

गंगासरस्वती पुण्ये भ्रुवावास्तां महाद्युती ।
चक्षुषी सोमसूर्यौ ते नासा संध्या पुनस्मृता ॥

ओंकारस्त्वथ संस्कारो विद्युज्जिह्वाच निर्मिता ।
दन्ताश्च पितरो राजन् सोमपा इति विश्रुताः ॥

गोलोको ब्रह्मलोकश्च ओष्ठावास्तां महात्मनः ।
ग्रीवाचास्याभवद्राजन् कालरात्रिर्गुणोत्तरा " इति ॥

धर्मस्य ग्लानिः अधर्मस्याभ्युत्थानं यदेत्यनेन धर्मग्लानिमपि न सहे, किंपुनर्विच्छेदं । अधर्मस्योद्गममात्रमपि न सहे किमुत शाखानुशाखतामिति ध्वन्यते ' इति देशीको दर्शयति

(भगवदवतारविग्रहाणां भगवदभिन्नत्वं नित्यसिद्धत्वं सच्चिदानन्दाद्यात्मकत्वं लीलागृहीतत्वादिकंच अतीतश्लोकव्याख्याने सूचितमिहाप्यनुसंधेयं ॥ ' आत्मानं सृजामि ' इत्युक्तौ ' सृजामि ' इत्येतत् ' संभवामी 'त्यनेनैकार्थं । आविर्भवामि इति यावत् ।)

रामानुजाचार्यमते अवताररूपाणामनित्यत्वमुक्तमिति ज्ञायते । यदाह देशिकः, "आत्मानं सृजामि इत्येतन्न तावत्स्वरूपविषयं, तस्य नित्यत्वात् । आत्माश्रयादिप्रसंगाच्च । नापि जीवविषयं । तस्य प्रकारणासंगतत्वात् । नाप्याद्यविग्रहविशिष्टस्वात्मविषयं । तस्यापि रूपस्य नित्यत्वात् । अतोऽवतारविग्रहविशिष्टस्वात्माऽत्र 'आत्मानं' इति निर्दिश्यते " इति । इदं चिन्त्यं । यथा भगवत्स्वरूपं नित्यं तथा विग्रहस्य तदभेदेन नित्यत्वात् । आत्माश्रयुत्वादिशंङ्कातु न कर्तव्या । अघटितघटनाशक्तिनिर्वाह्याहि विग्रहाः सच्चिदानन्दमयाः । तेषामनित्यत्वं न वक्तुं शक्यते । अन्यथा अन्यत्रादृष्टं चिदानन्दमयत्वं च न युज्येत । येन प्रमाणेनावताररूपाणि कथ्यन्ते तेनैव तेषामप्राकृतत्वं नित्यत्वं मूलरूपादभिन्नत्वं च ज्ञायते । वन्ह्यौष्ण्यवद्धर्मिग्राहकप्रमाणसिद्धः पदार्थान्तरेऽदृष्टश्च प्रकारो न तर्कबाध्य इति हि सर्वसम्मतो न्यायः इति ॥

आत्मशब्देन देह उच्यते इति वेङ्कटनाथमधुसूदनावाहतुः । विग्रहवन्तं भगवन्तमनभ्युपयन्तोऽन्ये शाङ्कराः इममर्थं प्रत्याचक्षते । 'मायया आत्मानं स्वं सृजामि जन्मवन्तमिव प्रदर्शयामि' इत्युत्कर्षदीपिकाकारः । अतोऽसौ मधुसूदनीयं निराचष्टे 'आत्मानं देहं सृजामि । नित्यसिद्धमेव सृष्टमिव प्रदर्शयामीति केचित् (म. सू.) । तन्न । परमेश्वरस्य देहः किं तस्मादन्य उतानन्यः । नाद्यः । तस्यासत्वाद्यापत्या सच्चिदादिरूपत्वस्वीकारविरोधात् । द्वितीयेऽपि स देहः किं परिच्छिन्न उतापरिच्छिन्नः । आद्ये ईश्वरस्य नित्यमेव परिच्छिन्नत्वं स्यात् । तथाच देहस्य नित्यसिद्धत्वं वदद्भिः परमेश्वरस्यासत्वसंपादनेन मूलोच्छेद एव संपादितः । न द्वितीयः । अपरिच्छिन्नः पुनरवयवसमूहः परिमिताकारो देह इति वदतो व्याघातात्' इति । अत्रोच्यते । आत्मानं देहं सृजामि प्रदर्शयामीति मधुसूदनीयं निर्दुष्टं । तन्निरासस्त्वसंगतः । पारमेश्वरदेहस्य भगवताऽत्यन्ताभेदे बाधका-

भावात् । देहोऽप्यपरिच्छिन्नः । अपरिच्छिन्नस्यावयवसमूहयुतपरिच्छिन्नविग्रहत्वेन जनदृष्टिगोचरत्व तदिच्छामूलं । विशेषाख्यविचित्रपदार्थसामर्थ्येनाभिन्ने वस्तुनि भेदव्यवहार उपपद्यते । भगवदचिन्त्यशक्तिबलादपरिच्छिन्नस्य परिच्छेदवत्तया प्रदर्शनं संभवति । अजस्य जनिमत्वेन भ्रमगोचरत्वं तमोगुणाभिमानिन्याः दुर्गायाः कार्यमिति प्रागेव निरूपितमत्रधेयं ॥

(परित्राणाय साधूनामित्यनेनावतारप्रयोजनान्युक्तानि ।)। शिष्टरक्षणदुष्टनिग्रहधर्मस्थापनानि त्रीणि प्रयोजनानि। क्वचित् व्यासावतारेषु धर्मस्थापनमात्रं कृतं स्यात् । क्वचित्प्रयोजनद्वयस्य लाभः । क्वचित्त्रयाणामपि इति यथायोगं विवेकः )।

साधूनां लक्षणं पाद्मपुराणोक्तमनुसंधेयं । यदुक्तं——

'यथालब्धेऽपि संतुष्टः समचित्तो जितेन्द्रियः ।
हरिपादाश्रयो लोके विप्रस्साधुरनिन्दकः ।
निर्वैरस्सदयश्शांतो दंभाहंकारवर्जितः ।
निरपेक्षस्सुनिर्वीतरागःसाधुरिहोच्यते ।
लोभमोहमदक्रोधकामादिरहितस्सुखी ।
कृष्णांघ्रिशरणस्साधुस्सहिष्णुस्समदर्शनः ।' इति

मत्स्याद्यवतारैश्शिष्टरक्षणदुष्टनिग्रहधर्मसंस्थापनानि कृतानि किंचित्सूच्यन्ते ॥ तथाहि—

मत्स्यावतारे ... हयग्रीववधः
सत्यव्रतरक्षण
वेदलाभः धर्मस्थापनं

कूर्मावतारे ... असुरजयः
देवरक्षणं
मंदरोद्धारः

| | | |
|---|---|---|
| वाराहे | ... | हिरण्याक्षवधः |
| | | क्षित्युद्धारः |
| नारसिंहे | ... | हिरण्यकशिपुवधः |
| | | प्रह्लादरक्षणं |
| वामनावतारे | ... | बलिदमनं |
| | | इन्द्रोद्धारः |
| भार्गवे | . | क्षत्रवधः |
| | | कश्यपादीनां भूदान |
| रामावतारे | ... | रावणादिवधः |
| | | सर्वपालनं |
| | | धर्मस्थितिर्विशेषतः |
| कृष्णावतारे | ... | कंसादिवध· |
| | | पांडवरक्षणं |
| | | गीताद्युपदेशादन्यथाच धर्मसंस्थापनं विशेषतः |
| बुद्धावतारे | ... | दैत्यमोहः |
| | | सुरबोधः |
| कल्क्यवतारे | ... | दुष्टवधः |
| | | सत्ययुगप्रवर्तन |

'पुनः कृतयुगं कृत्वा धर्मान्संस्थाप्य पूर्ववत् । कलिव्यालं सन्निरस्य प्रयास्ये स्वालयं विभो' इति ब्रह्माणं प्रति कल्क्यवतारात्पूर्वं भगवद्वचनं । एवमेवान्यावतारेषु च दृश्यन्ते ॥

( अवतारप्रयोजनावश्यकतादिनिरूपणावसरे केचिदवतारमकृत्वा परित्राणादिकं कर्तुं श्रीहरिरसमर्थ इतीवाशयं वदन्ति । भक्ताभिलषितं प्रति यदाऽऽह देशिकः, 'नह्यपवर्गसुखादिवदवतारमन्तरेण स्वसंकल्पमात्रेणैव तद्दातुं शक्यमिति भावः' इति )( मच्छेषभूतमाराधनं मयैव हि स्थापनीयं। अनुष्ठानमुखेनोपदेशमुखेन च धर्मप्रवर्तनं व्यासादिद्वारापि शक्यं' इतिच )( अत्रेदं वक्तव्यं । स्वसंकल्पमात्रेण सर्वमप्यतिशयितमर्थं भगवान् दातुमीष्टे। अन्यथाऽनीश्वरत्वप्रसंगात् । यद्यपि दुष्टनिग्रहशिष्टरक्षणधर्मसंस्थापनानि संकल्पादेव निर्वर्तयितुं शक्तएव हरिः । तथापि अवतारादिकं तस्य लीला तस्य स्वतंत्रेच्छा इत्येव वक्तव्यं । यदुक्तं व्यासादिद्वारेति तदसत् । अस्मिन्मते व्यासस्य भगवदवतारत्वं नाभ्युपगतं भाति । ये तं केवलं ऋषिं मन्यन्ते तैर्बहुप्रमाणविरोधो नालोचितः )( शाङ्करास्तु व्यासं नारायणावतारं मन्यन्ते )( 'मच्छेषभूतमाराधनं मयैव हि स्थापनीयं' इत्युक्तेर्यदि संकल्पमात्रेण तस्यानिर्वाह्यत्वेऽभिप्रायः तर्हि तदसत् । भगवत्संकल्पाशक्यस्याविद्यमानत्वात् । 'इच्छामात्रं प्रभोः सृष्टि'रित्याद्युक्तेः )

(साधुपरित्राणदुष्कृन्नाशधर्मसंस्थापनेषूक्तेषु त्रयाणामपि भगवदवतारप्रयोजनत्वेन न विवक्षा कृता । किंतु एकस्य वा द्वयोर्वा विवक्षा ज्ञातव्येति केचित् )(यदाह देशिकः (इदमुक्तं शारीरकभाष्ये । साधवो ह्युपासकाः। तत्परित्राणमेवोद्देश्यं । आनुषंगिकस्तु दुष्कृतां विनाशः । संकल्पमात्रेणापि तदुपपत्तेः । दुष्कृतामपि विनाशो नात्यन्तविनाशः । किंतु वैपरीत्यहेतुभूतराक्षसप्रभृतिशरीरग्रन्थ्यादिनिवर्तनं । तन्निवृत्तौ च तेषामपि धार्मिकत्वं संभवेदिति धर्मसंस्थापनपर्यवसितः' इति )( एतदप्यसत् । दुष्कृन्नाशस्य संकल्पमात्रसाध्यत्वे परित्राणस्य तदसाध्यत्वं कुतोऽवगम्यते । यदप्युक्तं दुष्टनाशस्तेषां धर्मे प्रवर्तनायेति तदयोग्यविषये न वक्तुं शक्यते ॥

श्रीधरोऽपि प्रयोजनत्रयपक्षमवजानाति 'धर्मस्य स्थापनार्थाय साधुरक्षणं पापिनाशश्च क्रियते' इति। त्रिषूक्तप्रयोजनेष्वेकस्य वा द्वयोर्वा ग्रहणमुचितं मन्यते। इदमाकूतं प्रत्याख्यातमुत्कर्षदीपिकायां । तथाहि । 'तच्चिन्त्यं । धर्मसंस्थापनेन साधूनां रक्षणस्य पापिनां नाशस्य चासिद्धेः । यथा वसुदेवगृहेऽवतीर्णेन श्रीकृष्णेन गीताद्युपदेशेन धर्मस्थापनं, युधिष्ठिरादिपरिपालनेन साधुपरित्राणं, कंसादिमारणेन दुष्कृतां विनाशः, इति प्रयोजनत्रयमेव संपादितं । नहि गीतोपदेशमात्रेण तत्र तत्र कृतमर्जुनसंरक्षणं तत्तदुपायैः कर्मनाशश्च सिध्यतीति दिक् । एतेन साधुरक्षणेन दुष्टवधेनच धर्मं स्थिरीकर्तुमिति (नीलकण्ठीयं) प्रत्युक्तं । नहि वसुदेवादिरक्षणेन कंसादिवधेन च कस्यचिद्धर्मस्य स्थापनं भवति । धर्मस्थापनहेतुभूतैतत्कर्मद्वयाकर्तुर्व्यासावतारस्य धर्मस्थापनार्थस्य वैयर्थ्यापत्तेश्च ॥ तथाच कदाचिदेकस्मै कदाचिद्वाभ्यां कदाचित्सर्वस्मै प्रयोजनाय भगवदवतरणमिति ध्येयं' इति ॥

अस्मिन्प्रयोजनपरिसंख्यानविचारे गीतायां त्रयाणामुक्तावपि यथायथमनन्तप्रयोजनानि भगवदवतरणस्य ज्ञेयानीति भाति । संक्षेपतस्सर्वसंग्रहार्थमेव त्रयाणामुक्तिरिति हार्दं गम्यते । साधुरक्षणं दुष्टनाशः धर्मस्थापनं इति त्रीण्यपि परस्परं संबद्धानि । तेष्वेकस्य लाभे इतरयोः प्रायशो लाभः संपद्यते । व्यासावतारेऽपि सर्वाणि च प्रयोजनानि लब्धान्येव ॥

भगवत्संकल्पासाध्यानि कानिचित्फलानि कानिचित्तु तत्साध्यानीति यो विभागो रामानुजाचार्यदेशिकाभ्यामुक्तः स न तात्विकः इत्यभिप्रायेण श्रीमध्व आह—'लीलया स्वभावेन च यथेष्टचारी । तथाह्युक्तं 'देवस्यैष स्वभावोऽयं' 'लोकवत्तु लीलाकैवल्यं' 'क्रीडतो बालकस्येव चेष्टां तस्य निशामय' इति ॥

एतेनाचिन्त्यशक्तिं भगवल्लीलाकैवल्यं विशेषाख्यपदार्थबलं च पुरस्कृत्य सर्वे संशयाः परिहरणीयाः ॥ भगवद्विग्रहाणां वा ज्ञानबलक्रियाशक्तीनां

वा न किंचिदप्यूनत्वं वक्तव्यं । यद्व्याख्यानमेवं भगवदुत्कर्षं वक्ति तदेव रम्यमवगन्तव्यम् ॥

**जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।**
**त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन॥९॥**

वि ॥ एवं स्वभावादेवावतारादिस्वव्यापारमुक्त्वा तज्ज्ञानफलमाह । जन्मेति । एवमुक्तप्रकारेण दिव्यमलौकिकं मे जन्म कर्म च तत्त्वतो यथावत्तया यो वेत्ति, स ज्ञानी देहं त्यक्त्वा पुनर्जन्म नैति प्राप्नोति किंतु मामेति । अत्र जन्मकर्मरूपैकदेशज्ञानेन मुक्त्युक्तिर्योग्यगुणज्ञानोपलक्षणार्था ज्ञेया ॥

शं ॥ जन्म इति ॥ तज्जन्म मायारूपं कर्म च साधूनां परित्राणादि मे मम दिव्यं अप्राकृतं ऐश्वरं, एवं यथोक्तं यो वेत्ति तत्वतः तत्वेन यथावत्। त्यक्त्वा देहं इमं पुनर्जन्म पुनरुत्पत्तिं नैति न प्राप्नोति । मामेति आगच्छति। स मुच्यते अर्जुन ॥

रा ॥ एवं कर्ममूलहेयत्रिगुणप्रकृतिसंसर्गरूपजन्मरहितस्य सर्वेश्वरत्वसार्वज्ञसत्यसंकल्पत्वादिसमस्तकल्याणगुणोपेतस्य साधुपरित्राणमत्समाश्रयणैकप्रयोजनं दिव्यं अप्राकृतं मदसाधारणं मम जन्म चेष्टितं च तत्वतो यो वेत्ति, स वर्त-

मानं देहं परित्यज्य पुनर्जन्म नैति । मामेव प्राप्नोति । मदीयदिव्यजन्मचेष्टितयाथात्म्यविज्ञानेन विध्वस्तसमस्त-मत्समाश्रयणविरोधिपापोऽस्मिन्नेव जन्मनि यथोदितप्रकारेण मामाश्रित्य मदेकप्रियो मदेकचित्तो मामेव प्राप्नोति ॥

विचारः

(एवं कर्मेत्यनेन साधुत्राणादिकं विवक्षितं । एवं जन्मेत्यनेन भूत्वैवा-प्राकृततया भवनादिकं गम्यते । दिव्यं इति जन्मकर्मणोरलौकिकत्वं अप्राकृत-त्वं चोच्यते । तत्वतः इत्यनेन यथावज्ज्ञानं विवक्षितं । मिथ्यात्वादिज्ञानव्यु-दासाय तथोक्तिः । जन्मकर्मणोरनारोपितस्वरूपत्वज्ञानमावश्यकं इति यावत् । यद्वा तत्वं ब्रह्म । उक्तं भागवते "वदन्ति तत्तत्वविदस्तत्वं यज्ज्ञान-मद्वयं । ब्रह्मेति परमात्मेति भगवानिति शब्द्यते" ॥ इति भा. (I 3-11)

तत्वतः ब्रह्मत्वेनेत्यर्थः । ये अवताराणां अपूर्णत्वं प्राकृतत्वं भगव-द्भिन्नत्वं मायिकत्वं वा वदंति न ते तत्वं विदुरित्यर्थः ॥ यद्वा तत्वं स्वभावः। जन्म कर्मच भगवत्स्वभावादेव संभवति न तु प्रारब्धादिप्रेरणयेति ज्ञानिनो विदुरित्यर्थः । एवं तत्वं विहाय जन्म कर्मच अदिव्यं प्राकृतं यः वेत्ति स मां नैति, किंतु पुनर्जन्मैव एति इति वा योजना ॥

(भगवज्जन्मकर्मज्ञानमात्रेण मुक्तिर्भवतीति गीतोक्तिः इतरप्रकारक-भगवद्विशेष्यकज्ञप्तेरावश्यकतां न निषेधतीति ज्ञेयं । मुक्त्यर्थं जन्मकर्मणो-र्ज्ञानस्यावश्यकत्वं तु पद्यं दृढं कथयतीति गम्यते ॥ यो जन्म कर्मच वेत्त्येव स जन्म नैति इति जन्मकर्म ज्ञात्वैव मुक्तिर्नान्यथा इत्ययोगव्यवच्छेदोऽभि-मतः। नतु जन्मकर्मज्ञानेनैव मुक्तिर्नान्येन गुणपूर्णत्वज्ञानेन भगवत्प्रसादादिना इत्यन्ययोगव्यवच्छेदोऽभिमतः । शंखः पांडुरएव इत्ययोगव्यवच्छेदस्यो-

दाहरणं । तद्धि पांडुरत्वं यावच्छंकयोगीति बोधयति । न तु शंखादन्येषां पाण्डुरत्वं निषेधति )। पार्थ एव धनुर्धरः इत्यन्ययोगव्यवच्छेदस्योदाहरणं )। अयोगव्यवच्छेदाभिप्राये सति हि प्रमाणान्तराणि जन्मकर्माण्यज्ञानमाहात्म्यप्रतिपादकान्यविरुद्धानि भवन्ति ॥

उक्तं हि कौर्मे "वेदाद्युक्तं तु सर्वं यो ज्ञात्वोपास्ते सदा हि मां।
तस्यैव दर्शनपथं यामि नान्यस्य कस्यचित् ॥" इति ॥

तथैवगारुडे,

"अपौरुषेयवेदेषु विष्णुवेदेषु चैव हि ।
सर्वत्र ये गुणाः प्रोक्ताः संप्रदायागताश्च ये ॥
सर्वैस्तैस्सह विज्ञाय ये पश्यन्ति परं हरिं ।
तेषामेव भवेन्मुक्तिर्नान्यथातु कथंचन ॥" इति ॥

न केवलमुपलक्षणसामर्थ्येन किन्तु योग्यसर्वगुणोपासनादिकं 'तत्वतः' इति विशेषणेन चाधिगम्यते । उक्तं हि,

"एकं च तत्वतो ज्ञातुं विना सर्वज्ञतां नरः ।
न समर्थो महेन्द्रोऽपि तस्मात्सर्वत्र जिज्ञसेत् ॥" इति स्कान्दे ॥

अन्यत्र च "एको भावस्तत्वतो येन दृष्टः सर्वे भावास्तत्वतस्तेन दृष्टाः ॥" इति (प्र. दी.) ॥ तत्वतः फलपरिमाणेयत्ताविशेषवत्त्वेन कालदिगदृष्टरूपनिमित्तवत्त्वेनादृष्टाश्रयैतादृशपुरुषविशेषप्रयोजनाय निर्मितत्वादिना रूपेण इत्यर्थः ॥

(ननु सर्ववेदाद्युक्तज्ञानपूर्वकोपास्तौ सर्वेषामधिकाराभावादपरोक्षज्ञानाभाव एव प्रसज्यत इति चेत् उक्तमनुव्याख्याने—

('यथाशक्त्यखिलान्वेदान्विज्ञायोपासनं भवेत् ।
तत्राखिलस्य विज्ञप्तिः सम्यक् ब्रह्मण एव हि ॥
तदन्येषां यथायोगमखिलज्ञप्तिरिष्यते ॥" इति ॥)

क्वचित्कतिपयगुणोपास्त्या मोक्ष इति क्वचिदन्यगुणोपास्त्या मोक्ष इत्यापाततो विरोधबोधकानि वाक्यानि यत्र दृष्टानि तत्र समुच्चयमाभिप्रेतं मत्वैकवाक्यता संपादनीया ॥ अयं न्यायो ब्रह्मवैवर्ते कथितः—

"येषां गुणानां ज्ञानेन मुक्तिरुक्ता पृथक् पृथक् ।
वेदेषु चेतिहासेषु सा तेषां समुच्चयात् ॥
एवमेव शमादीनां नान्यथा तु कथंचन ॥" इति ॥

एतेनैव न्यायेन 'पुनर्जन्म नैति' इति गीतायामुक्तावपि स्वयोग्य-साधनपूर्त्यौपयिकावश्यलभ्यजन्मान्तराणि न निषिद्धानीति ज्ञेयं ॥

(रामानुजाचार्यस्तु 'त्यक्त्वा देहं पुनर्जन्म नैती'त्यस्य 'वर्तमानं देहं परित्यज्ये'त्यर्थमाह ॥ उपपादितमेतत् देशिकेन पूर्वपक्षसिद्धान्तविवरणेन। तथाहि, (देहं परित्यज्येत्युक्ते प्रारब्धकर्मपर्यवसानदेहं परित्यज्येति साधारण-प्रतीतिः स्यात्। तद्व्यवच्छेदाय वर्तमानदेहं परित्यज्येत्युक्तं। (स्वाचार्यभाष्ये) (ननु वर्तमानदेहं परित्यज्येत्याद्ययुक्तं प्रारब्धकर्मावसाने हि मोक्षश्शारीरके निर्णीतः। प्रारब्धस्यच कर्मणः कियन्ति जन्मानि साध्यानीति न नियमः। व्यासादिष्वनियमदर्शनात्। नच जन्मकर्मज्ञानमात्रान्मोक्षः। दीर्घकालनै-रन्तर्यादरसेवनीयदुष्करतरकर्मज्ञानानुगृहीतोपासनशास्त्रार्थनैरर्थक्यप्रसंगादिति चेत् दिव्यजन्मचेष्टितज्ञानेनोपासनविरोधिनां समस्तानां पापानां निवृत्तत्वात् अस्मिन्नेव जन्मनि जन्मान्तरारंभकपापांशप्रशमनसमर्थपुष्कलोपासननिष्पत्तेर्न जन्मान्तरपरिग्रहः' इति )। अत्रेदं चिन्त्यते। प्रारब्धावसानदेहो विवक्षित इत्यत्र पूर्वपक्षोपपादनं सयुक्तिकं कृतं। सिद्धान्तेन न समाहितं ज्ञायते। नह्यस्ति नियमः प्रारब्धानामेकेनैव जन्मना मुमुक्षुः क्षयं संपादयितुं समर्थः इति। ज्ञानिनोऽपि बहूनि जन्मानि प्रारब्धक्षयार्थमपेक्षितानि स्युः। अव-शिष्टेऽवश्यभोक्तव्ये प्रारब्धे जन्मकर्मज्ञान्येकस्मिन्नेवानुभवन्मुक्तो भवतीत्यस्य

गमकं न दृश्यते ।। यत्तु 'व्यासादिष्वनियमदर्शनात्' इत्युक्तं तत्र व्यासाद्याज्ञां विना देशिकस्य भावो न ज्ञायते । एकस्मिन्नेव जन्मनि व्यासः प्रारब्धमतिचक्रामेत्याशयो वा तदर्थं बहूनि जन्मानि जग्राहेत्याशयो वेति न स्फुटमवगम्यते । उभयथापि तस्य भ्रम एव ।। व्यासस्य साक्षान्नारायणत्वेन प्रारब्धावशत्वात् ।।

प्रारब्धशेषे सति कथं स्याद्वर्तमानदेहात्यये मुक्तिरित्यनुपपत्तेर्भीत इव श्रीधरः 'देहं' इत्यस्य 'देहाभिमानं' इति व्याख्याति । अयं नाक्षरार्थ इत्युपेक्ष्यः । अनुपपत्तिस्त्वन्यथा परिहृता द्रष्टव्या ।।

शाङ्करेषु भगवदवतारविग्रहविषये विद्यमानो मतभेदः प्रागेव प्रदर्शितः ।। मधुसूदननीलकण्ठौ तमप्राकृतं मन्येते । यथोक्तं मधुसूदनीये प्रकृतश्लोकव्याख्यानेऽपि 'मूढैर्हि मनुष्यत्वभ्रान्त्या भगवतोऽपि गर्भवासादिरूपमेव जन्म स्वभोगार्थमेव कर्मेत्यारोपितं । परमार्थतः शुद्धसच्चिदानन्दघनरूपत्वज्ञानेन तदपनुद्याजस्यापि मायया जन्मानुकरणं अकर्तुरपि परानुग्रहाय कर्मानुकरणमित्येवं यो वेत्ति स मां वासुदेवं सच्चिदानन्दघनमेति' इति ।।

अन्येतु भगवच्छरीरं प्राकृतं शुद्धसात्विकं मायिकं च मन्यन्ते । एव

न्दः प्राकृतशरारजन्मकमज्ञानान्मुक्त्युक्तमसहमानस्सन्नद्वैतमतानुकूल्येन श्लोकाक्षराणि योजयति । इदमस्य व्याख्यानं 'इतरानपेक्षया स्वात्मनि स्वयमेव स्वप्रकाशेन दीव्यते प्रकाशते इति दिव्यं निर्विशेषचिदेकरसं परं ब्रह्म । दिविति दिव धातोः क्विबन्तं रूपं । तस्मिन् दिवि परे ब्रह्मणि पूर्णानन्दैकघनेऽद्वितीये सर्वाधिष्ठाने प्रतीता या प्रकृतिर्यच्च प्राकृतं मे जन्म शरीरं, यच्च तत्कृतं कर्म, तदेतत्सर्वं तत्वतः अध्यात्मदृष्ट्या परिशील्य दिव्यं दिवो ब्रह्मणः स्वरूपं दिव्यं चैतन्यं तन्मात्रमेवेत्येवं यो वेत्ति साक्षाद्विजानाति, स सर्वस्य ब्रह्ममात्रत्वदर्शी विद्वानिमं देहं विद्वद्देहं त्यक्त्वा

पुनर्जन्म नैति न तु पुनर्जायते किंतु मामेति । सच्चिदानन्दैकरसं मां ब्रह्मैव प्राप्नोति । विदेहमुक्तिं गच्छतीत्यर्थः ' इति ॥

एतेन 'दिव्यं' इत्यस्य तन्त्रन्यायेनाभ्यासो विवक्षितो दृश्यते । दिव्यं ब्रह्मेत्येकोऽर्थः । दिव्यं प्राकृतं इत्यपरोऽर्थः । ब्रह्म गृहीत्वा प्राकृतं जन्म कर्म तिरस्कृत्य विद्वान्विदेहमुक्तिमाप्नोतीत्यर्थ उक्तो भवति । इदं क्लिष्टं प्रकरणाविरुद्धम-शब्दार्थव्याख्यानं चेत्युपेक्ष्यं ॥ अवतारज्ञानस्य ह्यत्र फलमुच्यते । अवतारस्य तिरस्कारः कथं प्रकरणार्थो भवेत् । ' जन्म कर्म च यो वेत्ती 'त्युक्ते जन्म कर्मच यो जहातीत्यर्थः कथं भवेच्छब्दार्थः ॥ किंच 'मां' इति श्लोकान्ते विद्य-मानस्य ब्रह्मेति कथमद्वैतवादिनाऽर्थ उच्येत ॥ श्रीकृष्णोहि न निर्विशेषं ब्रह्म । किन्तु मायावच्छिन्न ईश्वरः । न च तज्ज्ञानेनैतन्मते विदेहमुक्तिः संभवेत् ॥ किंचात्र प्रकृतिप्रत्ययनिष्पत्तिक्लेश स्वव्यूहस्थ इत्यभिमानेन वेङ्कटनाथो नावलोकयतीति भाति ॥ यदीदं व्याख्यानमभून्माध्वं तर्हि स्यादाक्रोशमानेना-स्मत्प्रत्याख्यानं । इत्यलं विस्तरेण ॥

**वीतरागभयक्रोधाः मन्मया मामुपाश्रिताः ।**
**बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ १० ॥**

वि ॥ एवं ज्ञात्वा मुक्ताः संति किमित्यतः सन्तीत्याह ॥ वीतरागेति । तज्ज्ञानस्य मुक्तिहेतुत्वं कुत इत्यतो वाऽऽह ॥ वीतेति । अपगतरागभयक्रोधाः मन्मयाः मत्प्रधानाः, अह-मेव प्रधान इति जानंतइति यावत् ॥ यद्वा मन्मयाः मत्प्रचु-राः मामेव सर्वभूतेषु सत्ताप्रतीत्यादिप्रदं जानन्त इति

यावत् । मामुपाश्रिताः मदेकशरणाः बहवो ज्ञानाख्यतपसा ज्ञानेन तपसा चेति वा, पूताः दग्धकर्माणः, मद्भावं मयि सायुज्यलक्षणं भावं स्थितिं आगताः प्राप्ताः ॥

शं ॥ न एष मोक्षमार्ग इदानीं प्रवृत्तः । किं तर्हि पूर्वमपि ॥ वीतरागइति । वीतरागभयक्रोधाः, रागश्च भयं च क्रोधश्च वीता विगता येभ्यः ते । मन्मयाः ब्रह्मविदः ईश्वराभेददर्शिनः, मामेव च परमेश्वरं उपाश्रिताः केवलज्ञाननिष्ठा इत्यर्थः बहवः अनेके, ज्ञानतपसा ज्ञानमेव च परमात्मविषयं तपः तेन ज्ञानतपसा पूताः, परां शुद्धिं गतास्सन्तः, मद्भावं ईश्वरभावं मोक्षं, आगताः समनुप्राप्ताः । इतरतपोनिरपेक्षज्ञाननिष्ठा इत्यस्य लिंगं ज्ञानतपसा इति विशेषणं ॥

रा ॥ तदाह मदीयजन्मकर्मतत्त्वज्ञानाख्येन तपसा पूता बहव एवं संवृत्ताः । तथाच श्रुतिः । 'तस्य धीराः परिजानन्ति योनिं' इति धीरा धीमतामग्रेसराः । एवं तस्य जन्मप्रकारं जानंतीत्यर्थः ॥

विचारः

(उक्तार्थदार्ढ्यार्थं प्रपंचनपरोऽयं श्लोकः । एतेन शंकाद्वयस्य समाधानं लभ्यते ॥ (१) एवं ज्ञात्वा मुक्तास्संति किं इत्येका । संतीत्यस्यास्समाधानं । (२) जन्मकर्मज्ञानस्य मुक्तिहेतुत्वं कुत इति च द्वितीया शंका । उक्तज्ञानस्येन्द्रियजयभक्तिज्ञानादिसंपादकत्वेन मोक्षसाधनत्वमुपपद्यते इति समाधानं ॥

(अतीतश्लोकव्याख्याने जन्म कर्म च वेत्तीत्यनेनोपलक्षणया वा अयोगव्यवच्छेदाभिप्रायेण वा अन्यप्रकारकभगवद्विषयकज्ञानानां संग्रहः उक्तः )('मन्मयाः मामुपाश्रिताः ' इत्युक्त्या भगवद्ध्यानभक्त्यादिकंच मोक्षसाधनत्वेनातीतश्लोकेऽपि विवक्षित इति सूचितं भवति )

(ये भगवन्तं साधुरक्षकं भजन्ते न ते स्वयोगक्षेमाय यतन्ते । न वा रागभयक्रोधाक्रान्तचित्ता भवन्ति । रागो विषयेषु प्रीतिः । भयं स्वानर्थशङ्का । क्रोधः स्वपरपीडाहेतुरभिज्वलनं । ते वीता येभ्यस्ते )( प्रह्लादस्यात्र दृष्टान्तत्वेनानुसंधाने श्लोकार्थः स्फुटीभवति )( असौ हि वीतरागभयक्रोध इति भगवदुक्तेस्सम्यग्विषयोऽत्रगम्यते । यतः क्रीडनकादिषु रागशून्योऽभूत्। पित्राऽतीव तर्जितेऽपि न भीतः। अन्ततः क्रोधमकृत्वा 'तस्मात्पिता मे पूयेत दुरन्ताद्दुस्तरादघात् ' इति नृसिंहं प्रार्थयामास )

एतादृशाः वीतरागभयक्रोधाः ज्ञानिनः मामुपाश्रिताः मन्मयाश्च भवन्ति यथा प्रह्लादः )

(" न्यस्तक्रीडनको बालो जडवत्तन्मनास्तथा ।
कृष्णग्रहगृहीतात्मा न वेद जगदीदृशं ॥
आसीनः पर्यटन्नश्नन् शयानः प्रपिबन् ब्रुवन् ।
नानुसंदध एतानि गोविन्दपरिरंभितः ॥ " इति ॥)

(मामुपाश्रिताः मदेकशरणा इत्यर्थः । मन्मयाः अहमेव प्रधान इति जानन्तः । मत्प्रचुरा इति वा । मामेव सर्वभूतेषु सत्ताप्रतीत्यादिप्रदं जानन्तः। " मयं प्रधानमुद्दिष्टं प्राधान्यं यैर्हरेर्मतं । भगवन्मयास्तु विज्ञेयास्ते मुच्यन्ते न चापरे " इति ब्रह्म. वै. )

(एते भक्ताः ज्ञानतपसा पूता भवन्तीत्यर्थः । ज्ञानमेव तपः ज्ञानतपः। ज्ञानंच तपश्चेति वा द्वंद्वैकवद्भावः )( तपःशब्दः आलोचने व्रतादिकर्मणि

क्षुत्पिपासाशीतोष्णादिद्वंद्वसहने प्रायश्चित्ते धर्मेच प्रयुज्यते । "मनसश्चे-न्द्रियाणांच ऐकाग्र्यं परमं तपः ।" इत्यभियुक्तवचनं ॥ "स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः । तद्धि तपस्तद्धि तपः" इत्यादिश्रुत्युक्तं चानुसंधेयं । शारीरवाचिकमानसतपांसि गीतोक्तानिच द्रष्टव्यानि—

"देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवं ।
ब्रह्मचर्यमहिंसाच शारीरं तप उच्यते ॥

अनुद्वेगकरं वाक्यं सत्य प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥

मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते" इति ॥

जितेन्द्रियाः मन्मयाः मामुपाश्रिताः ज्ञानतपसा पूतास्सन्तः मद्भावं लभन्ते इत्युक्तं । मद्भावं सायुज्यलक्षणं मोक्षं लभन्त इत्यर्थः । मयि भावः स्थितिः मद्भावः । 'मन्मयाः' 'मद्भावमागताः' इति वचनाभ्यां अद्वैतं विवक्षितमिति शांकरा मन्यन्ते । अथेदं विचार्यते ।

'मन्मयाः' इत्यस्य 'ब्रह्मविदः ईश्वराभेददर्शिनः' इति शंकरभाष्यं । न केवलमिदं समन्वितशास्त्रार्थविरुद्धं अपित्वशब्दार्थत्वेनोपेक्ष्यं । यतो मयटः प्राधान्यं प्राचुर्य चार्थः प्रसिद्धः । तादात्म्यार्थकत्वेऽपि अभेददर्शनं न शब्दार्थः । मदेकचित्ताः इत्यर्थस्य च निर्दुष्टत्वेन ग्राह्यत्वं संभवति । नीलकण्ठोऽपि 'मन्मयाः मदेकप्रधानाः' इति व्याचष्टे । 'मदेकचित्ताः' इति श्रीधरः । 'मदेकचित्ता वे' ति मधुसूदनः ॥ 'मद्भावं मत्तादात्म्यं' इति शांकरेषु केचित् । 'मद्भावं मद्विषयं भावं रत्याख्यं प्रेमाणं वे'ति मधुसूदनः ॥

इदमत्र वक्तव्यं। श्रीमदाचार्यवत् श्रीधरः 'मद्भावं' इत्यस्य 'मत्सायुज्यं' इत्यर्थमाह। तादात्म्यस्याप्रामाणिकत्वान्मद्रूपत्वार्थो न साधुः॥ 'मद्भावमागताः' इत्यस्यातीतश्लोकोक्तेन 'मामेति' इत्यनेनैकार्थ्य उचितं॥ अतः सारूप्यसालोक्यसामीप्यसायुज्याख्यमोक्षप्राप्तिरेव विवक्षिता द्रष्टव्या॥

अत्रोक्तं वेङ्कटनाथीये। 'मद्भावमागता इत्यनेन मामेति इति पूर्वश्लोकोक्तभगवत्प्राप्तिस्तद्भावापत्तिरूपैव। नतु देवदत्तस्य ग्रामप्राप्तिवत्तत्संबंधरूपेति दर्शितं। तेनच मोक्षप्रकरणे श्रूयमाणानां ब्रह्मप्राप्तिवचनानां ब्रह्मभावापत्तिरेवार्थ इति भगवतोऽभिप्रायो विज्ञायते' इति॥ इदं न प्रत्याययति। मामेति' इत्येतदानुगुण्येन 'मद्भावमागताः' इत्यस्य वेङ्कटनाथोक्तवैपरीत्येन व्याख्याने बाधकाभावात्। किंचाद्वैतमते न हि मुक्तिरीश्वरतादात्म्यप्राप्तिः। किंतु निर्गुणपरब्रह्मत्वप्राप्तिः। ईश्वरोह्यपरब्रह्म तन्मते। अतो 'मामेति मद्भावमागताः' इत्युभयमपि तन्मताभिमतं मोक्षं न वक्ति। इदं मनसि निधायेव मधुसूदनश्रीधराभ्यां स्वाचार्यव्याख्यानमुल्लंघितं भाति॥

श्रीधरीयमनूद्य निराहोत्कर्षदीपिकाकारः। 'यत्तु मन्मयाः मदेकचित्ताः भूत्वा मामेवोपाश्रितास्संतो मत्प्रसादलभ्यं यदात्मज्ञानंच तपश्च, तत्परिपाकहेतुस्स्वधर्मः। तयोः। द्वंद्वैकवद्भावः। तेन पूताः शुद्धाः निरस्ताज्ञानतत्कार्यमलाः मद्भावं सायुज्यं प्राप्ता इति॥ तत्रेदं बोध्यं। मन्मयशब्दार्थत्यागे कारणाभावात् तच्छब्दार्थानुरोधेन मामुपाश्रिता इत्यस्यापि भाष्योक्तव्याख्यानमेव सम्यक् इति। यदपि यदात्मज्ञानं चेत्यादि तदपि न, समुच्चयप्रसङ्गात्' इति॥

अत्रोच्यते। श्रीधरीयेऽत्र दोषो न दृश्यते। मन्मयशब्दस्य ईश्वराभेददर्शिपरत्वं खल्वक्षरालब्धार्थः। प्राधान्य प्राचुर्य च शब्दार्थ इत्यविवादं। तस्मान्न श्रीधरेण शब्दार्थः परित्यक्तः। किंतु शङ्कराचार्येणैव। यच्च 'समुच्चयप्रसङ्गा-

दिति दूषितं तदपि न। ज्ञानेन कर्मणा च पूता इत्युक्ते समुच्चयवादस्य का सङ्गतिः। न हि कर्माख्यतपसा मुमुक्षोः पूतत्वे किमप्यसाङ्गत्यं विद्यते। मोक्षस्य ज्ञानैकसाध्यत्वमतंच नैतद्विरुणद्धीत्युत्कर्षदीपिकाकृतनिरासोऽनुचितः। एतेन स्वव्यूहकलहेन 'मन्मयाः' मद्भावमागताः' इति वचने नाद्वैतसाधके इति विज्ञायते। अलं बहुना प्रस्तुतमनुसरामः॥

(गीताश्लोकस्य निर्दुष्टोऽर्थोऽन्योऽपि प्रतीयते। तथाहि। वीतरागभयक्रोधाः विशेषेण प्राप्तरागभयक्रोधाः अजितेन्द्रियाः मन्मयाः अहंकारभरिताः मां लक्ष्मीं धनादिकं उपाश्रिताः आलंबमानाः बहवः अज्ञाः तपसा अपूतास्सन्तः मद्भावं मज्ज्ञानं नागताः न प्राप्ताः इति। अत्र भावं ज्ञानं इति व्याख्यातं। बहवः अज्ञाः न तपसा अपूताः इति पदच्छेदश्च कृतः॥)

**ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहं।**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः॥११**

वि॥(ननु सामान्यतो विष्णुं सर्वोत्तमं ज्ञात्वा अन्य देवताः पितृंश्चेष्ट्वाऽन्ते तत्कर्म विष्णौ समर्पयन्ति ये त्रैविद्याः, तेषामपि मोक्षश्चेत् को विशेषस्त्वामुपाश्रितानामित्यतो न ज्ञानिनां त्रैविद्यानां च फलसाम्यं, तत्तत्सेवानुसारेणैव मोक्षस्वर्गरूपभिन्नफलदानात्। सेवायाश्च वैषम्यादितो न वैषम्यादिदोष इति भावेनाह। ये यथेति। ये ज्ञानिनः त्रैविद्या वा यथा येन प्रकारेण मोक्षेच्छया मद्यजनप्रकारेण

स्वर्गादीच्छया अन्यदेवतायजनप्रकारेण मां प्रपद्यन्ते तांस्तथैव तत्तद्भजनानुसारेणाहं भजामि मोक्षस्वर्गफलदानेन सेवे॥ न गुणभावेनेत्यर्थः। फलतारतम्यहेतुरयं॥ ज्ञानिभ्यस्त्रैविद्यानां सेवायां विशेषः किंप्रकार इत्यत आह। ममेति॥ हे पार्थ सर्वशः सर्वे ज्ञानिनः त्रैविद्याश्च मनुष्या मम वर्त्मानुवर्तन्ते। मम तत्कर्मकर्तृत्वात्तद्यागीयहविरादिभोक्तृत्वान्मम वर्त्मानुवर्तिन एव सर्वे इत्यर्थः॥

शं॥ तव तर्हि रागद्वेषौ स्तः। येन केभ्यश्चिदेवात्मभावं प्रयच्छसि न सर्वेभ्यः इति, उच्यते। ये यथा येन प्रकारेण येन प्रयोजनेन यत्फलार्थितया मां प्रपद्यन्ते, तान् तथैव तत्फलदानेन भजामि अनुगृह्णाम्यहं, तेषां मोक्षं प्रत्यनर्थित्वात्। न ह्येकस्य मुमुक्षुत्वं फलार्थित्वं च युगपत्संभवति। अतः ये यत्फलार्थिनः तान् तत्फलदानेन, ये यथोक्तकारिणस्तु अफलार्थिनः मुमुक्षवश्च तान् ज्ञानप्रदानेन, ये ज्ञानिनः संन्यासिनः मुमुक्षवश्च तान् मोक्षप्रदानेन, तथा आर्तान् आर्तिहरणेन, इत्येवं यथा प्रपद्यन्ते ये तान् भजामीत्यर्थः। न पुनः रागद्वेषनिमित्तं मोहनिमित्तं वा किंचिद्भजामि। सर्वथाऽपि सर्वावस्थस्य मम ईश्वरस्य वर्त्म मार्गं अनुवर्तन्ते मनुष्याः। यत्फलार्थितया यस्मिन् कर्मण्यधिकृताः ये प्रवर्तन्ते ते मनुष्या अत्रोच्यन्ते हे पार्थ सर्वशः सर्वप्रकारैः॥

रा ॥ न केवलं देवमनुष्यादिरूपेणावतीर्य मत्समाश्रयणापेक्षायां परित्राणं करोमि, अपितु ये मत्समाश्रयणापेक्षा यथा येन प्रकारेण स्वापेक्षानुरूपं मां संकल्प्य प्रपद्यन्ते समाश्रयन्ते। तान् प्रति तथैव तन्मनीषितप्रकारेण भजामि मां दर्शयामि। किमत्र बहुना सर्वे मनुष्याः मदनुवर्तनैकमनोरथा मम वर्त्म मत्स्वभावं सर्वं योगिनां वाङ्मनसागोचरमपि स्वकीयैश्चक्षुरादिकरणैस्सर्वशस्स्वापेक्षितैस्सर्वप्रकारैरनुभूयानुवर्तन्ते ॥

विचारः

(केषांचिद्भगवद्भक्तानां मुक्तिर्भवतीत्युक्त्या त्रैविद्यानां किं मुक्तिर्दीयते वा नवा। आद्ये ज्ञानिनः को विशेषः। नेति पक्षे वैषम्यनिमित्तं कीदृशमित्याद्याक्षेपाः समाधेया इति प्रकृतं 'ये यथे'ति पद्यं प्रवृत्त)। त्रैविद्या नाम सामान्यतो विष्णुं सर्वोत्तमं ज्ञात्वा अन्यदेवादीनिष्ट्वा अन्ते विष्णौ तत्समर्पयन्तः। त्रिविधा विद्या त्रिविद्या तामधीयते विदंति वा त्रैविद्याः वेदत्रयापातार्थविद इति यावत् ॥)

(त्रैविद्याहि काम्यकर्मिणः न सम्यक् भगवन्तं जानान्ति। न तत्प्रीत्यर्थमेव कर्म कुर्वन्ति। न भगवतस्सर्वकर्तृत्वभोक्तृत्वे जानन्तः। अन्यदेवताश्चोपासते। 'चातुर्वर्ण्यं मया सृष्ट' मित्युक्तमर्थमजानानाः पितरं भगवन्तं विहायान्यदेवताः यजन्ते इत्यनेन तेषां महाफलानर्हत्वं उपपन्नम् ॥ तस्मान्न तेभ्यो मुक्तिं ददाति भगवान्। अदानेऽपि योग्यं फलं तेभ्यो ददातीति न वैषम्यनैर्घृण्ये। ये मुक्तिमपेक्षन्ते योग्याः ते भगवन्तं भगवदेकप्रधानाः तदेकचित्ताः तमुपाश्रिताः ज्ञानतपसा पूताः सन्तः साक्षान्नत्वन्यदेवतारूपेण भजेयुरित्यर्थः ॥

(अत्र शङ्का ।'यान्ति देवव्रता देवान्पितॄन्यान्ति पितृव्रताः। भूतानि यान्ति भूतेज्याः यान्ति मद्याजिनोऽपि मां। ' इत्याद्युक्तप्रकारेणान्यदेवतोपासकास्स्वोपास्यदेवताभ्यः फल लभेरन्निति न तेषां विष्णुप्रसादेन कृत्यं । अतः कथमुक्तं त्रैविद्यानपि यथा प्रपद्यन्ते तथा भजामीति श्रीकृष्णेनेति । इयं शङ्का द्वितीयार्धेन परिहृता । अन्यदेवतोपासका अपि मदधीना एवेति भगवान् वक्ति। यतस्सर्वकर्मप्रेरकः सर्वकर्मफलभोक्ताच भगवानेव ॥ उक्तं ह्यन्यत्र गीतायां ॥

"येप्यन्यदेवता भक्ताः यजन्ते श्रद्धयाऽन्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकं ॥
अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेवच ।
नतु मामभिजानन्ति तत्वेनातश्च्यवन्ति ते " इति ॥

एतेनान्यदेवतानां फलदानयोग्यता स्वातन्त्र्येण नास्तीति स्फुटं । किंच इंद्रादीनाहूय फले प्रार्थिते सति 'यो देवानां नामधा एक एवे'-त्यादि प्रमाणैः श्रीहरिरेव फलदानायायास्यति । यतः इन्द्रादिसर्वशब्दवाच्यो हरिरेव ॥

(ब्रह्मसूत्रेषु कर्मादीनां फलप्रदत्वशक्तिः प्रतिषिद्धा ! ' ॐ फलमत उपपत्तेः ' ॐ (III 2-39 भा०) कर्मापेक्षत्वात्फलदानस्य तदेव ददातीति न वाच्यं । ईश्वरात्फलं भवति । नह्यचेतनस्य स्वतः प्रवृत्तिः ॥ ॐ श्रुतत्वाच्च ॐ ॥ (भा.) ' विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणं । तिष्ठमानस्य तद्विदः ' इति ॥ दातुः हविर्दातॄणां यजमानानां पूजकानां रातिः प्रियः फलप्रदः, तिष्ठमानस्य स्वास्मिन्मनसा वर्तमानानां, तद्विदः ब्रह्मज्ञानिनां परायणं परमप्रियं इति ॥)

ॐ धर्मं जैमिनिरतएव ॐ ॥ (भा.) यतः फलं तदेव कर्म ईश्वराद्भवति । एषह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते । एष उ एवासाधु कर्म कारयति तं यमधो निनीषते ॥

ॐ पूर्वंतु बादरायणो हेतुव्यपदेशात् ॐ ॥ उभयोः फलकारणत्वेऽपि पर एव कर्मप्रवर्तकः । पुण्येन पुण्यं नयति पापेन पापमिति हेतुव्यपदेशात् " इति ॥ पूर्वं ब्रह्म ॥ किंच न केवलं भगवतः सर्वकर्तृत्वात्सर्वफलभोक्तृत्वात्सर्वशब्दवाच्यत्वात्सर्वे त्रैविद्या भगवद्धर्मानुवर्तिनः । अपितु सामान्यतो विष्णुसर्वोत्तमत्वाज्ञाने तेषां त्रैविद्यत्वमेव न सेत्स्यति । विष्णौ समर्पणं विनाऽन्यदैवतपूजाऽपि स्वर्गादिफलं तेभ्यो न ददातीति स्मर्यते आग्नेये 'अन्यदैवतपूजापि यस्मिन्नंते समर्पिता । स्वर्गादिफलहेतुस्स्यान्नान्यथा तं भजेद्धरिं ॥' इति ।)

"(त्रैविद्यानां यद्यपि न मुक्तिं ददामि तथापि तदभिप्रेतं स्वर्गादिकं ददामि" इति प्रमेयदीपिकावाक्ये )(न मुक्तिं ददामी'ति प्रतीकमादाय कृष्णाचार्येण स्वटिप्पण्यां नित्यसंसारिणां लिङ्गभङ्गात्मकमुक्तिरस्ति वा न वेति विचारितं )( अत्र महत्सु पक्षद्वयं विद्यते इति ज्ञायते । कृष्णाचार्यमतं पठ्यते ॥ "(न मुक्तिं ददामी 'ति )( नचात्र विज्ञानेनात्मयोग्येन निजरूपे व्यवस्थितिरिति नित्योपलब्धिसूत्रभाष्यविरोधः)(तत्र नित्यसंसारिणां मिश्रज्ञानेन स्वरूपाविर्भावस्य स्फुटप्रतीतेः स्वरूपाविर्भावस्यैव मुक्तित्वादिति वाच्यं )( रूपं अनुरूपं योग्यमित्येव निजरूपपदेन स्वयोग्यफलस्य विवक्षितत्वात् । 'सामान्यैर्येत्वविज्ञेयाः विशेषा मम गोचराः । देवादीनां तु तज्ज्ञानं विज्ञानमिति कीर्तितं ॥' (इति प्रमाणबलेन विज्ञानपदस्य विशेषज्ञानार्थत्वात् । नित्यसंसारिणांच सुखदुःखात्मकसंसारफलस्य मिश्रज्ञानजन्यत्वात् )( यदिच तेषां स्वस्वरूपाविर्भाव एव तदा वक्तव्यं । स मुक्तिपदवाच्यो न वा )( नाद्यः ।;

(चेतनस्य द्वयं भोग्यं संसारो मुक्तिरेवच।
संसारस्त्रिविधस्तत्र स्वर्गो मध्यमधस्तथा।
(मुक्तिश्च द्विविधा तत्र सुखं नित्यं तथापरं। नित्यदुःखमिति ज्ञेयं)

इत्याद्यनुव्याख्याने मुक्तिद्वित्वोक्तिविरोधात्। न च द्वित्वोक्तिरुपलक्षणं। मुक्तेः पृथक्त्वेन संसारोक्त्ययोगात्। 'मुक्तिर्हित्वान्यथारूपं स्वरूपेणव्यवस्थिति'रित्युक्तमुक्तिलक्षणस्यातिव्याप्तिप्रसङ्गात्)। किंच तेषांस्वरूपाविर्भावपक्षे "मध्यमामानुषा ये तु सृतियोग्याः सदैवहि।" 'त्रिदिवनिरयभूगोचरान्नित्यबद्धान्' इत्यादिविरोधः)। (न च सुखदुःखभोगो बंधादिशब्दार्थः स च लिङ्गभङ्गात्प्राग्वैषम्येण पश्चात्तु साम्येनेति न विरोध इति वाच्यं। "भूतबन्धोहि बन्धः। भूतबन्धस्तु संसारो मुक्तिस्तेभ्योविमोचनं।" इति भाष्यतद्गृहीतस्मृतिविरोधात्। शास्त्रे शास्त्रीयार्थस्यैव ग्राह्यत्वात्। एतेन 'मध्यममानुषाणां नित्यमानन्दादीनामुपलब्धिर्दुःखाद्युपलब्धिश्च समैवस्या' दिति तत्वप्रकाशिकाविरोधोप्यपहस्तितः। तस्या आवरणसद्भाव एव तात्पर्यात्। 'अतोस्त्येवावरण'मित्युपसंहारात्। मध्यमानामप्यावरणनिवृत्तौ तात्पर्ये तु 'भगवत्प्रसादेन तन्निवृत्तिश्चे'त्युत्तरवाक्यविरोधात्। मध्यमानां भगवत्प्रसादाभावादिति दिक्' इति)।

भगवतो वैषम्यदोषस्य परिहारकतया श्लोकं अवतारयंति शांकराः। यथा मधुसूदनः॥ (' ननु ये ज्ञानतपसा पूता निष्कामास्ते त्वद्भावं गच्छन्ति। येत्वपूताः सकामास्ते न गच्छन्तीति फलदातुस्तव वैषम्यनैर्घृण्ये स्यातामिति। नेत्याह ये यथेति ' इति ॥ श्लोकार्थनिरूपणावसरे 'चतुर्विधा भजंते मां जनास्सुकृतिनोऽर्जुन। आर्तो जिज्ञासुरर्थार्थी ज्ञानिच भरत' चतुर्णामधिकारिणां स्वयोग्यफलं ददातीति समाधानमुक्तं.

(ईश्वरस्य पक्षपाताशङ्कापरिहारकतयैव शङ्करानन्दोऽपि व्याचष्टे। अयमाह। " (द्वे रूपे वासुदेवस्य व्यक्तं चाव्यक्तमेवच। अव्यक्तं ब्रह्मणो-

रूपं व्यक्तमेतच्चराचरं'। इति स्मरणादव्यक्तं निर्विशेषं परं ब्रह्म। व्यक्तं तु मायोपाधिकं। अपरं ब्रह्म सकार्यं। एवं व्यवस्थितं मत्तत्वं विज्ञाय परं ब्रह्मविदोऽपि वा तत्तत्फलार्थिनो ये जनाः मामेवं द्वेधास्थितं परमात्मानं यथा प्रपद्यन्ते। ज्ञानयोगेन वाप्यन्यथा वा येन प्रकारेणोपासते॥ एवं ज्ञानकर्मयोगफलप्रदाने समभावेन मयि स्थिते सत्यपि शास्त्रज्ञास्तदनुसारिणो ये मनुष्या ब्राह्मणादयो मुमुक्षवः ते सर्वे ममेश्वरस्याभिमतं श्रुतिस्मृतिविहितं वर्त्म कर्ममार्गमेवानुवर्तन्ते। यद्वा ममेश्वरस्य कृतेर्विषयभूतं कर्ममार्गमनुवर्तन्ते, विशिष्यकर्मैव कुर्वतीत्यर्थः"॥ इति। अत्रेदं वक्तव्यं। अव्यक्तं परं ब्रह्म व्यक्तं अपरं ब्रह्मेति विभागोऽप्रामाणिकः। 'द्वे रूपे' इति प्रमाणं न याथार्थ्येन व्याख्यातं। यतः परब्रह्मवासुदेवयोर्नकिंचिदपि वैषम्यं प्रमाणार्थः। ज्ञानयोगः परब्रह्मविषयः। कर्मयोग ईश्वरविषयः इति योऽनेनाशय उक्तस्सोप्यप्रामाणिकः। यतः श्रीकृष्ण एव ज्ञानयोगकर्मयोगयोर्विषयः। काष्ठा चेति श्रुतिस्मृत्यादिसर्वप्रमाणैरधिगम्यते॥ यदुक्तं कर्मयोग एव श्रीकृष्णाभिमतः न ज्ञानयोग इति तन्न। श्रीकृष्णस्य योग्यतानुगुणं योगत्रयस्याभिमतत्वात्॥ यदप्यनेन द्वितीयार्धं व्याख्यातं ब्राह्मणादयः कर्मैव कुर्वन्तीति तदतीव मन्दं। ममवर्त्मेत्यनेन कर्मयोगस्य वा कर्मणो वा ग्रहणस्यानौचित्यात्॥ ज्ञानयोगकर्मयोगयोः फले समतया विद्यमानेपि मनुष्याः कर्मरताः इत्यर्थस्य गमकं युक्तिर्वा न दृश्यते। तस्मादिदं व्याख्यानमसत्॥

नीलकंठस्तु 'परित्राणायसाधूनां विनाशायच दुष्कृतां' इति श्लोकमादाय वैषम्यमुपपादयति। ननु साध्वसाध्वोस्त्राणविनाशौ कुर्वतस्तव वैषम्यनैर्घृण्ये स्तः' इति तस्यावतारिका। श्लोकार्थश्चैवमुक्तः। "यथा शत्रुत्वेन मित्रत्वेन वा प्रपद्यन्ते तेन प्रकारेणानुसरामि। ये तु भक्तिध्यानप्रणिधानात्मकं मम वर्त्मानुवर्तन्ते तान् तथाऽहं अनुवर्ते। ततश्च मद्बिंबभूते प्राणिजाते यथा

यः प्रीतिं द्वेषं वा करोति तस्मिन् प्रतिबिंबभूते अहमपि तथैव प्रीतिं द्वेषं च करोमि। बिंबपूजापरिभवौ प्रतिबिंबएव संक्रामतः। अतो न मम वैषम्यनैर्घृण्येस्तः" इति।

इदं व्याख्यानं प्रत्याख्यातमुत्कर्षदीपिकायां। एतैरर्थान्तरं वर्णनीयमितिव्यग्रचित्तैः मामुपाश्रिताः यजन्ते इति पूर्वोत्तरग्रंथानुसारी प्रपद्यन्ते भजामि इत्यनयोर्यथाश्रुतार्थः परित्यक्तः' इति। मम वर्त्मेत्यस्य भक्तिज्ञानार्थकत्वंच क्लिष्टं॥ अयमर्थः येऽनुवर्तन्ते तानहमनुवर्ते इति चाध्याहारकलुषितः॥

सर्वं फलं भगवत उदेतीत्यर्थं पुरस्कृत्य 'फलमतउपपत्ते' रित्यादिप्रमाणानुसारेण द्वितीयार्धव्याख्यानं यन्मधुसूदनेनाप्याश्रितं तदेव रम्यं इत्यलं।

रामानुजाचार्यस्तु श्लोके फलवैषम्यस्य परामर्शं नानुमोदते। इदं पद्यं अवताररूपप्रदर्शनेन भगवतो भक्तसौलभ्यमेव प्रतिपादयतीत्यस्याशयः। वैषम्यसमाधानपरं व्याख्यानं च देशिको निराह। 'अत्र यथाभिलषितफलप्रदानेन पक्षपातपरिहारार्थत्वं परोक्तं पूर्वोत्तराभ्यां नात्यंतसंगतं। चातुर्वर्ण्यमित्यादिनाऽर्थतः पुनरुक्तिश्च' इति। इदं दूषणं न संगच्छते। पूर्वोत्तरसंगतेर्निरूपितत्वात्। चातुर्वर्ण्यमित्यनेन त्रैविद्यानामल्पफलत्वे उपपत्तिरुक्तेति पुनरुक्तिशंका च समाहिता द्रष्टव्या।

कृष्णावतारवृत्तान्तेनार्चावतारवृत्तान्तोऽपि श्लोके संगृहीत इति देशिको मन्यते। श्लोके 'भजामी'ति पदं 'मां दर्शयामि' इति व्याख्यातं। 'वर्त्मेति स्वासाधारणविग्रहचेष्टासौशील्यादिस्वभावसमुदायो बोध्यते'। इत्युक्तं। मनुष्या अनुवर्तन्त इत्यस्य 'योगपरिशुद्धमनसा वाङ्मनसागोचरमपि मांसचक्षुषो मनुष्याः बाह्येन्द्रियैरनुभवन्ति' इत्यर्थ उक्तः। 'प्रियतमपितृपुत्रसुहृद्भ्रातृभृत्यसारथित्वादिरूपाणि अर्चावताररूपाणि च सर्वश इत्यनेन विवक्षितानि।'

अत्रैषा दिक्
परिगृहीतं तदप्रामाणिकं । एतादृशस्यावतारविशेषस्य श्रुतिस्मृत्योरप्रसिद्धेः । भगवत्प्रतिमायाश्चिदानन्दाद्यात्मकत्ववर्णनं चानुचितं ।। यद्यपि ईशानुग्रहः स्यात्क्वचित्स्वावताररूपप्रदर्शनरूपः यो भक्तविशेषेण वसुदेवादिनाऽभिलषितो भवेत् ॥ भजामीत्युक्तो भगवदनुग्रहस्तादृश एवात्र विवक्षित इति तु को निर्बन्धः । वर्त्म अनुवर्तन्ते इत्यस्य भगवद्रूपदर्शनस्पर्शालंकरणयात्रोत्सवाद्यानन्दमनुभवंतीत्यर्थः क्लिष्टः । यद्यपि वसुदेवादिप्रार्थनया पुत्रत्वादिकमूढ्वा स्वदर्शनाद्यानन्ददानेन तथा प्रपन्नान् भगवान् भेजे ॥ (शमन्तकोपाख्याने जाम्बवता श्रीरामचन्द्ररूपे ध्याते सति तद्रूपं दर्शयामास श्रीकृष्णः । प्रपन्नेष्वेतादृशानुग्रहविशेषः कृत इत्यर्थोऽत्र नास्माकमनिष्टः ॥ तथापि यथा प्रपद्यन्ते तथा भजामि इति सामान्योक्तेरवताररूपप्रदर्शनमात्रार्थकत्वं दुर्गमं ।। ज्ञानित्रैविद्ययोस्सेवाफलवैषम्योपपादकतया यद्भगवत्पादैर्व्याख्यातं तदेव पद्यमुख्यप्रतिपाद्यं ज्ञेयम् ॥

## काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।
## क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥१२॥

वि ॥ एतावान् विशेषः ॥ अहमेव सर्वयज्ञानां भोक्ता प्रेरकश्च । तदेतज्ज्ञात्वा भागवताः निष्कामाः मामेव यजन्ते । त्रैविद्यास्ते तत्त्वमजानानाः कर्मणां सिद्धिं काङ्क्षन्तः अन्यदेवता इह यजन्त इति ।( ननु मम वर्त्मानुवर्तन्ते

इति यत्सर्वकर्मकर्तृत्वं सर्वकर्मभोक्तृत्वं चोक्तं। तत्र सर्वकर्मकर्तृत्वं जीवानामस्वातन्त्र्यदर्शनात्सिद्धं। यज्ञादिभोक्तृत्वं कुतो मानाज्ज्ञेयमित्यत आह क्षिप्रं हीति। यस्मान्मानुषे लोके कर्मजा सिद्धिः कर्मजं फलं क्षिप्रं शीघ्रं भवति। तस्मान्मम वर्त्मानुवर्तन्ते। सर्वयज्ञभोक्तेति यावत्। भगवतः सर्वयज्ञभोक्तृत्वादेव तत्फलमिह यजमानस्य क्षिप्रमुपलभ्यते नान्यथा 'तस्मात्तेधनसनयः' 'फलमत उपपत्तेः' इति श्रुतिसूत्रादिना हरेरेव फलदातृत्वादिति भावः॥ (यद्वा त्रैविद्यानामन्यदेवतायाजित्वात्कथमुच्यते मां प्रपद्यन्त इत्यतः इह लोके अन्यदेवतायजन्तः यज्ञकर्मणां सिद्धिं कांक्षन्तः सर्वशो मनुष्यास्त्रैविद्या अन्ते मयि तत्कर्मसमर्पणेन मम वर्त्मानुवर्तन्ते वैष्णवमार्गमेवानुसृता भवन्ति॥(कुत एतत् हि यस्मात्कर्मजासिद्धिरिहलोके क्षिप्रं भवति अत इति। अन्यथा तन्नस्यादिति भावः॥

शं॥ यदि तव ईश्वरस्य रागादिद्वेषाभावः तदा सर्वप्राणिषु अनुजिघृक्षायां तुल्यायां सर्वफलप्रदानसमर्थे च त्वयि सति वासुदेवस्सर्वं इति ज्ञानेनैव मुमुक्षवस्सन्तः कस्मात्त्वामेव सर्वे न प्रतिपद्यन्ते इति। शृणु तत्र कारणं कांक्षन्त इति॥ कांक्षन्तः प्रार्थयन्तः कर्मणां सिद्धिं फलनिष्पत्तिं यजन्ते इह अस्मिन् लोके देवताः इन्द्रा-

न्नाद्याः अथ योऽन्यां देवतां उपास्ते अन्यः असौ अन्यः अहमस्मि इति न स वेद यथा पशुरेवं स देवानां इति श्रुतेः )॥

तेषां हि भिन्नदेवतायाजिनां फलाकांक्षिणां क्षिप्रं शीघ्रं हि यस्मात् मानुषे लोके मनुष्यलोके हि शास्त्राधिकारः । क्षिप्रं हि मानुषे लोके इति विशेषणात् । अन्येष्वपि कर्मफलसिद्धिं दर्शयति भगवान् । मनुष्यलोके वर्णाश्रमादिकर्माधिकारः इति विशेषः । तेषां च वर्णाश्रमाधिकारिणां कर्मिणां फलसिद्धिर्भवति कर्मजा कर्मणो जाता ॥

रा ॥ इदानीं प्रासङ्गिकं परिसमाप्य प्रकृतस्य कर्मयोगस्य ज्ञानाकारता प्रकारं वक्तुं तथाविधकर्मयोगाधिकारिणो दुर्लभत्वमाह ॥

सर्वे एव पुरुषाः कर्मणां फलं कांक्षमाणाः इन्द्रादिदेवतामात्रं यजन्ते आराधयन्ति ॥ नतु कश्चिदनभिसंहितफलः इन्द्रादिदेवतात्मभूतं सर्वयज्ञानां भोक्तारं मां यजते । कुत एतत् ॥ यतः क्षिप्रमस्मिन्नेव मानुषे लोके कर्मजा पुत्रपश्वन्नाद्यादिसिद्धिर्भवति । मनुष्यलोकशब्दस्स्वर्गादीनामपि प्रदर्शनार्थः । सर्वे एव लौकिकाः पुरुषा अक्षीणानादिकालप्रवृत्तानन्तपापसंचयतयाऽविवेकिनः क्षिप्रफलाकांक्षिणः पुत्रपश्वन्नाद्यस्वर्गाद्यर्थतया सर्वाणि कर्माणीन्द्रादिदेवताराधनमात्राणि कुर्वते ॥ न तु कश्चित्संसारोद्वि-

मद्धृदयोमुमुक्षुरुक्तलक्षणं कर्मयोगं मदाराधनभूतमारभत इत्यर्थः ॥

विचारः

(द्वादशोयं श्लोकः पूर्वश्लोकेनैकादशेनान्वितो वा न वेति संदिह्यते । नेत्याह रामानुजाचार्यः । आद्यपक्षं स्वीकुर्वन्ति अन्ये व्याख्यातारः श्रीमध्वादयस्सर्वे )।

(रामानुजाचार्याशयः संग्रहेणार्थतोनूद्यते । तथाहि ।।(प्रासंगिकं अवतारप्रकरणं पूर्वश्लोकेनसमाप्तं । इतःपरं कर्मयोगस्यान्तर्गतज्ञानत्वनिरूपणं आरभ्यते । तत्रापि ज्ञाननिरूपणात्प्राक् उपोद्घाततया द्वादशादिभिः षड्भिः पद्यैरधिकारिविशेषाः कर्मस्वरूपंच प्रतिपाद्यन्त इति विवेकः ।(प्रकृते श्लोके कर्माधिकारिविशेषपरेऽन्यदेवतोपासकाः काम्यकर्मिणः क्षिप्रफलप्रलुब्धा मनुष्याश्चोच्यन्ते ॥ अतीतश्लोकस्यार्चाद्यवतारमात्रपरत्वात् काम्यफलाकांक्षावतां न तत्रान्वयसंभवः )(देवाहि फलं ददते । क्षिप्रं च ददते ॥ यथोक्तं वेदे '(वायव्यं श्वेतमालभेत भूतिकामो वायुर्वैक्षेपिष्ठादेवतावायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति' इति)। अस्य रामानुजीयोर्थः । (वायुः देवता यस्य सोयं वायव्यः । सच श्वेतवर्णः । तं आलभेत । संस्पृशेत् । यागार्थमुपाकुर्यात् ॥ वायव्येन यजेत इति यागः कल्पनीयः । वायोरतिशयेन क्षिप्रगामिदेवत्वात् । तस्यापेक्षाश्वेतपशुष्विति प्रियत्वाद्वायोः ॥ असाधारणेन भागधेयेन वायुमेवोपधावति समीपं प्राप्नोति ॥ सेवते । तेन तुष्टस्स वायुरेवैनं यजमानं भूतिं ऐश्वर्यं गमयति इति ))

(अस्मिन् रामानुजीयार्थे प्रकरणान्तरत्वकल्पनपूर्वकं यः पूर्वश्लोकार्थेनान्वयविश्लेषः कृतः स नास्माभिरङ्गीक्रियते । यच्च वाय्वाद्यन्यदेवतानां स्वातंत्र्येण फलप्रदानसामर्थ्यं अभिप्रेतं दृश्यते तच्च नोपादीयते ।)।

(श्रीमध्वस्तु प्रकृतं पद्यमतीतश्लोकेन साक्षादनुबद्धं मन्यते । इहान्यदेवतायजन्तः सिद्धिं काङ्क्षतस्संतः ममवर्त्मानुवर्तिनः इति योजना तेनाभिप्रेता )(वर्त्मानुवर्तनप्रकारः 'क्षिप्रंही'त्युत्तरार्धश्लोकेन प्रपंचितः इत्यपि तस्य भावः )( काङ्क्षंत इति कर्तृवाचकं पदं अनुवर्तंत इति क्रियापदेन संयोज्यैकवाक्यतां वदंतो न केवलं माध्वाः अपि तु शङ्करानन्दनीलकण्ठौ च ।)( एतेषु परस्परमाशयभेदस्त्वनुपदं वर्ण्यते । श्रीकृष्णवर्त्मानुवर्तनप्रकारनिरूपकतयैव प्रकृतं पद्यमिमावपि व्याचक्षाते )( शङ्कराचार्यमधुसूदनौ तु पूर्वपद्येनान्वयं किंचित्पश्यन्तावपि तव वर्त्म किं सर्वेप्यनुवर्तन्ते उत नकेचित् इति विकल्पं पुरस्कृत्य कैश्चिन्नानुवर्तितं इत्यभिप्रायेणाननुवर्तने कारणं प्रकृतश्लोकेनोच्यते इति व्याचक्षाते )( तथाच 'सर्वशः' इति पूर्वश्लोकोक्तशब्दार्थस्यापवादप्रदर्शनपूर्वकमपवादस्य निमित्तमिह कथ्यते इति तयोर्भावः । एतेन शांकरेषु पक्षद्वयमधिगम्यते )(श्रीकृष्णवर्त्मानुवर्तनप्रकार इहोच्यत इत्येकः । श्रीकृष्णवर्त्माननुवर्तनहेतुरुच्यत इत्यन्यः । इति )( क्रमादेतद्विचार्यते ॥

उक्तेषु श्रीमध्वशंकरानन्दनीलकंठेषु शंकरानंदः कर्मयोगस्य चित्तशुद्धिद्वारा ज्ञानयोगद्वारा च श्रीकृष्णवर्त्मत्वात् कर्मयोगिनां भगवद्वर्त्मानुवर्तनामिह विवक्षितमित्यभिप्रैति । अयमस्य व्याख्यानसंग्रहः 'यंजतः' इन्द्रादिप्रसादसिद्धये आज्यादिहविषाऽऽराधयन्तः पंडिताः कर्मणां श्रद्धाभाक्तिभ्यां नियमेनानुष्ठितानां श्रौतादीनां सिद्धिं अनुष्ठानेन लब्धां सत्वशुद्धिलक्षणां कांक्षन्तः मम वर्त्मानुवर्तन्ते इति पूर्वेणान्वयः । हि यस्मात्कारणान्मानुषे लोके कर्मभूमौ कर्मजा वैदिककर्मानुष्ठानसंपन्ना सिद्धिः चित्तशुद्धिलक्षणा शीघ्रं भवति । यज्ञैराराधितानां देवानां प्रसादाच्छीघ्रमेव मनःप्रसीदतीत्यर्थः )( मानुषे लोके सिद्धिरित्युक्तेर्मनुष्यलोक एव चातुर्वर्ण्यं चातुराश्रम्यं कर्मविधिश्च । नास्त्यन्यलोक इति सूचितं भवति ' इति )( अनेन शंकरानन्दीयेन यदभिप्रेतं कर्मयोगोपपादकमिदं पद्यमिति तच्चिन्त्यं । सिद्धिं कांक्षन्तइति फलेच्छवस्त्रैविद्याहि

स्पष्टमुक्ता ज्ञायन्ते॥ चित्तशुद्धिः भगवत्समर्पितकर्म विना देवयजनमात्रेण भविष्यतीत्यर्थे तु न मानं विद्यते॥ किंच चित्तशुद्धिर्निष्कामकर्मफलं नतु काम्यस्येति भाति॥ 'यामिमा'मित्यादिबहुग्रन्थेन काम्यस्य निन्दितत्वात्॥ फलार्थिभिर्यद्देवयजनं अनुष्ठीयते तस्य यागस्य चित्तशुद्धिप्रदत्वं वा कर्मयोगत्वं वा न संभवति॥

(अथ नीलकंठीयाभिप्रायः संगृह्यते। कर्मणां सिद्धिं इत्यनेन काम्यकर्मफलं न तु निष्कामकर्मजा चित्तशुद्धिर्विवक्षिता। काम्यफलस्य क्षिप्रं लभ्यमानत्वात्। चित्तशुद्धेस्त्वतथात्वेन जनैरुपेक्षितत्वात्। ये क्षिप्रफलकामिनस्ते देवताः इन्द्रादीन्यजन्ते॥ तथापि ते श्रीकृष्णवर्त्मानुवर्तिनएव। "येप्यन्यदेवताभक्ताः" इत्युक्तत्वात् इति॥ अत्रोच्यते। कर्मशब्देन काम्यग्रहणमस्माकं सम्मतं। यदनेनोक्तं देवताः काम्यफलं क्षिप्रं ददत इति तत्र श्रीमदाचार्याशयो भिद्यते। यतः परमवैष्णवाग्रेसरआचार्यः क्षिप्रफलदातृत्वं भगवतो विष्णोरेवांगीकरोति न देवतानां। प्रार्थितं फलं स्वर्गादिकं वा स्यादैहिकं वा। यदि कर्मी विष्णौ स्वकृतं समर्पयेत्तदैव यथाकथंचिदपि फलं लभेतेति प्रमितत्वात्॥ यथोक्तमाग्नेये "अन्यदैवतपूजापि यस्मिन्नन्ते समर्पिता। स्वर्गादिफलहेतुः स्यान्नान्यथा तं भजेद्धरिं॥" इति॥)

(मधुसूदनीये तु किमिति सर्वे भगवन्तं न प्रपन्नाः किमिति तद्वर्त्मनानुवर्तन्ते केचित् इत्याक्षेपे सति अज्ञानप्रतिहतत्वात्सकामाः देवान्यजन्ते इति समाधानं अभिप्रेतं। "कर्मजं फलं क्षिप्रं भवति। ज्ञानफलं त्वन्तःकरणशुद्धिसापेक्षित्वान्न क्षिप्रं भवती"ति चोक्तं॥ तथाचेह भगवद्वर्त्मानुवर्तनं न दृढीकृतं। किंतु कैश्चिदप्रपत्तौ तेषां लोभादिकमेव निमित्तमित्युक्तं भवति। अयमेव शांकरभाष्यस्याप्यभिप्रायः॥

(अत्रायं संग्रहः । नूतनमिदं प्रकरणं । पूर्वश्लोकपर्यन्तं प्रासंगिकमवतारनिरूपणं कृतं ॥ इन्द्रादीनिष्ट्वा सकामाः क्षिप्रं फलं लभन्ते । इति रामानुजार्थः ॥)

(कर्मयोगस्य परंपरया पुरुषार्थहेतुत्वात् "मम वर्त्मानुवर्तन्ते" इति कर्मयोगिनः प्रति प्रवृत्तं पद्यं इति शंकरानन्दः ॥) (काम्यकर्मिणःप्रति प्रवृत्तमिदं पद्यं तेषामपि भगवद्वर्त्मानुवर्तित्वं बोधयतीति नीलकंठश्रीमध्वयोराशयः। श्रीमध्वव्याख्याने विशेषांशा अधिका अप्युक्ताः ॥) (सर्वकर्ता भगवानित्यतस्सर्वेपि तद्वर्त्मानुयायिनः इत्यंशो जीवास्वातंत्र्यात्सिद्धः इति ॥)

(सर्वकर्मफलभोक्ता भगवानित्यस्मादपि हेतोस्सर्वे तद्वर्त्मानुयायिनइत्युक्तं । तत्तूपपत्तिमपेक्षते । इयमुपपत्तिः "क्षिप्रं हि" इत्यर्धे द्रष्टव्या । (यस्मात्क्षिप्रं फलं लभ्यते । अतोन्यथानुपपत्त्या भगवानेव तद्ददातीति गम्यते। (तथैव हि स्मर्यते । पश्यन्तूदाहृतमाग्नेयवाक्यं । तथैव च श्रुतिः । छान्दोग्ये "तद्यइमे वीणायां गायन्ति । एतं ते गायंति । तस्मात्ते धनसनयः ।" इति॥ (अस्यार्थः य इमे गायका वीणायां तद्राजादिकमुद्दिश्य गायंति । ते एतं तदन्तर्गतं भगवन्तमुद्दिश्यैव गायंति । कुतः यस्मात्ते धनसनयो धनलाभवंतस्तावद्भवंति। 'षणलाभ' इति धातोः । इति॥ किंच 'फलप्रदो वासुदेवोऽखिलस्य' 'फलमतउपपत्ते' रित्यादिभिः प्रमाणैश्च श्रीहरेर्यज्ञभोक्तृत्वाभावे फलमेव न प्राप्यतेत्यवगम्यते ॥) (कुचेलपृथुकभोजनमिहप्रमाणं । एतत्सर्वं 'क्षिप्रंही' त्यत्र 'ही' त्यनेन लब्धमित्याशयः ॥) (श्रीमदाचार्यव्याख्यानएव 'सर्वशः' इति पूर्वपद्योक्तस्य सर्वथाऽसंकुचितार्थत्वं लभ्यते । इंद्रादीनां निरवधिकेश्वरत्वंच निवारितं । श्रीहरेरेवोत्कर्षश्च विशेषेण प्रकाशितः । इति ज्ञेयं॥

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययं ॥१३॥

वि ॥ भगवद्भजनं विना कुतो न फलमित्यतो वा ज्ञानिनामिव त्रैविद्यानामपि कुतो न महाफलमित्यतो वा तस्य पितृत्वात्पितरं परित्यज्यान्यदेवतायाजिनां फलप्राप्तिरेव नास्ति कुतो महाफलप्राप्तिरिति भावेनाह । चातुर्वर्ण्यमिति ॥ चत्वारो वर्णाश्चातुर्वर्ण्यं ॥ चतुर्वर्णादिभ्यः स्वार्थउपसंख्यानमित्युक्तेः स्वार्थेष्यञ् ॥ यद्वा चतुर्णां वर्णानां समूहश्चातुर्वर्ण्यं ॥ विचित्रा हि तद्धितगतिरिति समूहार्थे ष्यञ् । गुणकर्मविभागशः सत्वादिगुणविभागेन कर्मविभागेन च चातुर्वर्ण्यं चतुर्वर्णसंघो मया सृष्टः ॥ जनाः सात्विकसात्विकाः राजससात्विकाः तामससात्विकाश्चेति त्रिविधाः । तत्र राजससात्विकानामेव ग्रहणं । राजसास्तु नरा विप्रा इत्यष्टादशतात्पर्योक्तेः । सात्विको ब्राह्मणइत्याद्ये तद्भाष्योक्तेश्च ॥ तथाचातिसत्वाधिक रजोगुणयुक्ताः ब्राह्मणाः ॥ किंचित्सत्वाधिक रजोगुणयुक्ताः क्षत्रियाः । तमोपेक्षयाधिकं समसत्वं यद्रजस्तद्युक्ता वैश्याः । रजोपेक्षयाधिकतमउपेतः तमोपेक्षयाधिकसत्वोपेतश्च शूद्रइति गुणविभागकृतो ब्राह्मणादिवर्णः ॥ ब्राह्मणादियोग्यकर्मविभागस्तु अष्टादशाध्याये शमो दम इत्यादि श्लोकत्रयेण वक्ष्यते ॥ ननु यथा भवान्

सर्वस्य कर्ता तथा तवाप्यन्यः कर्तास्ति किमित्यत आह तस्येति ॥ तस्य चातुर्वर्ण्यस्याव्ययं कर्तारं मां विद्धि । तथा अकर्तारमपि कर्त्रन्तरहीनमपि विद्धि ॥ मेऽन्यः कर्ता नास्तीत्यपि विद्धीत्यर्थः ॥ यद्वा यदि त्वया चत्वारो वर्णाः सृष्टाः तर्हि कर्तृत्वाज्जीववत्तवापि कर्मलेपः स्यादित्यतः कर्मलेपाभावं न मामित्यादिना वक्तुं लेपाभावे हेतुं तावदाह । तस्येति । तस्य कर्तारमपि मां जीवविलक्षणकर्तृत्वादकर्तारं कर्तृत्वहीनं विद्धीति ॥

शं ॥ मानुषएव लोके वर्णाश्रमादिकर्माधिकारः नान्येषु लोकेषु इति नियमः किं निमित्तइति ॥ अथवा वर्णाश्रमप्रविभागोपेताः मनुष्याः मम वर्त्मानुवर्तन्ते सर्वश इत्युक्तं ॥ कस्मात्पुनः कारणान्नियमेन तवैव वर्त्मानुवर्तन्ते नान्यस्येति ॥ उच्यते चातुर्वर्ण्यमिति । चत्वारएव वर्णाः चातुर्वर्ण्यं मया ईश्वरेण सृष्टं उत्पादितं 'ब्राह्मणोस्य मुखमासीत्' इत्यादिश्रुतेः गुणकर्मविभागशः गुणविभागशः कर्मविभागशश्च । गुणाः सत्वरजस्तमांसि ॥ तत्र सात्विकस्य सत्वप्रधानस्य ब्राह्मणस्य शमोदमस्तपः इत्यादीनि कर्माणि । सत्वोपसर्जनरजःप्रधानस्य क्षत्रियस्य शौर्यतेजः प्रभृतीनि कर्माणि । तमउपसर्जनरजःप्रधानस्य वैश्यस्य कृष्यादीनि कर्माणि । रजउपसर्जनतमःप्रधानस्य शूद्रस्य शुश्रूषैव कर्म । इत्येवं गुणकर्मविभागशः चातुर्वर्ण्यं मया सृष्टमित्यर्थः । तच्चेदं

चातुर्वर्ण्यं नान्येषु लोकेषु अतो मानुषे लोके इति विशेषणं । हन्त तर्हि चातुर्वर्ण्यस्य सर्गादेः कर्मणः कर्तृत्वात्तत्फलेन युज्यसे । अतो न त्वं नित्यमुक्तः नित्येश्वरश्चेति, उच्यते । यद्यपि मायासंव्यवहारेण तस्य कर्मणः कर्तारमपि संततं मां परमार्थतः विद्धि अकर्तारं । अत एवाव्ययं असंसारिणं च मां विद्धि ॥

रा ॥ यथोक्तकर्मयोगारंभविरोधिपापक्षयहेतुमाह ॥ चातुर्वर्ण्यप्रमुखं ब्रह्मादिस्तंबपर्यन्तं कृत्स्नं जगत् सत्वादिगुणविभागेन तदनुगुणशमादिकर्मविभागेन च विभक्तं मया सृष्टं । सृष्टिग्रहणं प्रदर्शनार्थं । मयैव रक्ष्यते मयैव चोपसंह्रियते । तस्य विचित्रसृष्ट्यादेः कर्तारमप्यकर्तारं मां विद्धि ॥

विचारः

भगवतः चातुर्वर्ण्यकर्तृत्वेनोत्कर्षोऽनेन श्लोकेन गम्यते । चातुर्वर्ण्यसृष्ट्युपादानं भगवान् सर्वकर्ता अतस्तज्ज्ञानेन पापं नष्टं भवतीति कर्मयोगाय यतमानं प्रति ज्ञापयितुं अयं श्लोक इति रामानुजाशयः । अतस्तस्यावतारिका तद्भाष्ये ‘ यथोक्तकर्मयोगारम्भविरोधिपापक्षयहेतुमाह ’ इति । चातुर्वर्ण्यशब्देन कृत्स्न जगद्विवक्षितमिति सृष्टमित्यनेन स्थितिसंहारयोरपि संग्रह इति च स मन्यते ॥ “ वैषम्यनैर्घृण्यपरिहारप्रस्तावाय व्यष्टिसृष्ट्युपादानं ” इत्याह देशिकः । अत्र चिन्त्यते पापक्षयस्येह संगतिर्न ज्ञायते इति । वैषम्यनैर्घृण्यपरिहारोऽभिप्रेत इति नास्माकमनिष्टं । यतो ज्ञानिनामिव त्रैविद्यानामपि कुतो न महाफल इत्याक्षेपस्य अहं गुणकर्मानुसारेण चातुर्वर्ण्यमसृजं । त्रैविद्यास्तु गुणादिभिरवरास्तस्मात्तेषां न तत्र योग्यता । सर्वकर्तारं

मां परित्यज्यान्यदेवतास्ते भजन्ते ॥ अतोऽपि न महाफलयोग्याः, इति श्लोकाभिप्रेतं समाधानं ॥ किंच श्रीहरिभजनं विनाऽन्यदेवतोपासकानां त्रैविद्यानां फलमात्रमपि न संभवति । महाफलं तु दूरोत्सारितमित्युक्तं पुरस्तात् ॥ कुत एवं फलाभावः इत्याक्षेपस्यापीदं समाधानं द्रष्टव्यं ॥ यतो वर्णधर्माणां त्रैविद्यादिभिः क्रियमाणानां सर्वेषां अहमेव नियन्ता नेतरदेवताः याः फलप्रदानसमर्था इति भ्रान्त्या पूजिताः इत्युत्तरं श्लोकेनाभिप्रेतं ॥

"अन्यदेवताभक्ता अपि कस्मात्पुनः कारणात्तवैव वर्त्मानुवर्तन्ते नान्यस्येत्यत आह" इति नीलकण्ठीयावतारिका ॥ परिहाराशयश्चानेनोक्तः "यतश्चातुर्वर्ण्यं गुणकर्म मया सृष्टं ततोन्यदेवतानामपि मदुत्थत्वात्पुत्रप्रीत्या पितुरिव तत्प्रीत्या ममैव तृप्तिरस्तीत्यर्थः ॥ अथवा अन्यदेवताभक्ता अपि मदुक्तकर्मकारित्वान्मद्भक्ता एवेति भावः" इति ॥ इयमस्यश्लोकस्य श्रीधरीयावतारिका "ननु केचित्सकामतया प्रवर्तन्ते केचिन्निष्कामतयेति कर्मवैचित्र्यं । तत्कर्तॄणां च ब्राह्मणादीनां उत्तममध्यमादिवैचित्र्यं कुर्वतस्तव कथं वैषम्यं नास्तीत्याशङ्क्याह ।" इति ॥

एव निरूपणेष्ववान्तरविवक्षाभेदे सत्यपि सामान्यतो भावैक्यं द्रष्टव्यं । यतः "फलप्रदो वासुदेवोऽखिलस्य" इत्युक्तरीत्या स्वयोग्यतानुगुणं फलं स ददातीत्यतो न वैषम्यादिकं अस्य शङ्कनीयं इति फलितोऽर्थः ॥

चातुर्वर्ण्यमिति ॥ चत्वारो वर्णाः चातुर्वर्ण्यं स्वार्थेष्यञ् । अथवा चतुर्णां वर्णानां समूहः चातुर्वर्ण्यं समूहार्थेष्यञ् । विचित्राहितद्धितगतिरितीदमुपपन्नं ॥

गुणकर्मविभागशः इति ॥ गुणविभागशः कर्मविभागशः इत्यर्थः ॥ गुणविभागः सत्त्वरजस्तमोगुणप्राचुर्याप्राचुर्यादिकमनुसृत्य, कर्मविभागः शमादिकमनुसृत्य । प्रपंचयिष्यते चैतदग्रे ॥

(इदमत्र नीलकंठोक्तं "चतुर्णां वर्णानां हितं चातुर्वर्ण्यं। गुणाश्च-कर्माणि चेति गुणकर्म, द्वन्द्वैकवद्भावः। कर्माण्यग्निहोत्रादीनि, गुणाश्च-द्रव्यदेवतारूपाः। विभागशः साधारणासाधारणविभागेन॥ तथाहि)(दानज-पादिकं सर्वसाधारणं। अग्निहोत्रादिकं त्रैवर्णिकस्यैव, न शूद्रस्य॥ राजसू-यादिकं राज्ञएव, नेतरेषामिति विभागो दृश्यते।" इति)(इदमनेनोक्तं भवति। अहं गुणान् कर्माणिच विभज्य वर्णानां हितं कृतवान्। अतस्सर्वे मदनुयायिनः इति)(अत्रोच्यते, एतेन वैषम्यं न परिहृतं भवति। यतः यदि लोकस्वभावस्य वा योग्यताया वा फलानुरूपगुणानां वा कर्मणां वा न परामर्शः तर्हि किमिति केभ्यश्चित्फलदानं केभ्यश्चिन्न दानं केषांचिदुच्चत्वं केषांचिन्नीचत्वं इत्याक्षेपस्य समाधानं न गम्यते पद्याक्षरैः॥ विभागं कृतवानिति केवलं स्वरूपकथनं नीरसं। गुणकर्माण्यनुसृत्य चातुर्वर्ण्यसृष्टिं कृतवानित्यभिप्राये तु वैषम्यपरिहारस्य लब्धत्वादर्थपौष्कल्यं स्फुटं। अतो नीलकंठीयं न रम्यं भातीति)(अन्ये व्या-ख्यातारस्सर्वेऽपि गुणविभागशः कर्मविभागश इत्येव व्याचक्षते॥(अयं कर्म-विभागो विवक्षितः। तथाहि॥

"(ब्राह्मणक्षत्रियविशां शूद्राणांच परंतप।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः॥

शमोदमस्तपश्शौचं क्षान्तिरार्जवमेव च।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजं॥

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनं।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजं॥

कृषिगोरक्षवाणिज्यं वैश्यकर्म स्वभावजं।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजं॥")

इति गीतासु गुणप्रपंचनं कृतं। भारते अश्वमेधपर्वणि (३७ अ)

"संमोहोऽज्ञानमत्यागः कर्मणामविनिर्णयः।
स्वप्रस्तंभो भयं लोभः शोकः सुकृतदूषणं॥
अस्मृतिश्चाविपाकश्च नास्तिक्यं भिन्नवृत्तिता।
अकृते कृतमानित्वमज्ञाने ज्ञानमानिता।
अमैत्री विकृतो भावो ह्यश्रद्धा मूढभावना॥"

इत्यादिकं तमोगुणकार्यं॥ "अतत्वे तत्वदर्शी यस्तमसस्तञ्च लक्षणं।" इति (३५-३८, अ)॥

रजोगुणस्य—

"इदं मे स्यादिदं मे स्यात्स्नेहो गुणसमुद्भवः।
नृत्यवादित्रगीतानां प्रसङ्गा ये च केचन॥
सर्वे एते गुणा विप्रा राजसास्संप्रकीर्तिताः।
त्रिवर्गनिरतानित्यं धर्मोऽर्थः काम इत्यपि॥
कामवृत्ताः प्रमोदन्ते सर्वकाम समृद्धिभिः।" इत्यादयः।

लोके सत्वरजस्तमोगुणाः मिश्रा एव दृश्यन्ते। यथोक्तं तत्रैव (४०)

"अविच्छिन्नानि दृश्यन्ते रजस्सत्वं तमस्तथा।
अन्योन्यमनुरज्यन्ते ह्यन्योन्यानुजीविनः॥
संहत्य कुर्वते यात्रां सहितास्संघचारिणः।
दृष्ट्वात्वादित्यमुद्यन्तं कुचोराणां भयं भवेत्॥
अध्वगाः परितप्येयुरुष्णतो दुःखभागिनः।
आदित्यस्सत्वमुद्दिष्टः कुचोरास्तु तथा तमः।
परितापोध्वगानांच रजसोगुण उच्यते"॥ इति॥

(चातुर्वर्ण्यं द्विविधं । औपाधिकं स्वाभाविकं च । पितुर्वर्णस्सुतस्येति योनिकृतं आद्य । गुणकर्मानुसृतं द्वितीयं ) (औपाधिकं ब्राह्मणत्वादिकं अनुपयुक्तं अकिंचित्करंच । यदाह प्रह्लादः ।

" विप्राद्द्विषड्गुणयुतादरविन्दनाभ-
पादारविन्दविमुखाच्छ्वपचं वरिष्टं ।
मन्ये तदर्पितमनोवचनात्मगेह-
प्राणः पुनाति सकलं न तु भूरिमानः ॥ " इति ॥

" यथाकाष्टमयो हस्ती यथा चर्ममयो मृगः ।
यश्च विप्रोऽनधीयानः त्रयस्ते नामधारकाः ॥
योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमं ।
सजीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः । " इति मनुः ।

उक्तंच वनपर्वणि भारते ॥

" सत्यं दान क्षमा शीलमानृशंस्यं तपो घृणा ।
दृश्यन्ते यत्र नागेन्द्र स ब्राह्मण इति स्मृतः ॥
शूद्रे तु यद्भवेल्लक्ष्यं द्विजे तच्च न विद्यते ।
नैव शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ॥ " (वन० भारते अ० १०८)

" न योनिर्नापि संस्कारो न श्रुतं न च संततिः ।
कारणानि द्विजत्वस्य वृत्तमेव तु कारण । " इति च ।

(परावसुर्भरद्वाजसुतः केवलमौपाधिको ब्राह्मणः । दुर्योधनस्तादृशः क्षत्रियः । विदुरधर्मव्याधकनकदासादयस्तथा शूद्राः ) (स्वाभाविकं ब्राह्मण्यादिकं सत्वादिगुणाननुधावति । तच्च वैष्णवत्वेन शमादिभिश्च समनियततया व्याप्तं । नारदीये )।

"वैष्णवास्सात्विका एव तामसा एव चापरे ।
दौर्लभ्यसुलभत्वेन तेषां वर्णादिभिन्नता ॥

स्वाभाविको ब्राह्मणादिः शमाद्यैरेव भिद्यते ।
योनिभेदकृतो भेदो ज्ञेय औपाधिकस्त्वयं ।" इति (गी०ता)

जीवास्त्रिविधाः सात्विका राजसा तामसाः इति । तत्र सात्विका देवाः । राजसा मनुष्याः । तामसा असुराः ॥ अत्र प्रसङ्गाद्देवेषु चातुर्वर्ण्यमस्ति वा न वेति विचारः किंचित्क्रियते । अत्रोक्तं शान्तिपर्वणि ॥

"आदित्याः क्षत्रियास्तेषां विशश्च मरुतस्तथा ।
अश्विनौ तु स्मृतौ शूद्रौ तपस्युग्रे समास्थितौ ॥

स्मृतास्त्वाङ्गिरसा देवाः ब्राह्मणा इति निश्चयः ।
इत्येतत्सर्वदेवानां चातुर्वर्ण्यं प्रकीर्तितं ।" इति ॥ उक्तं च बृहद्भाष्ये ॥

"विष्णोर्ब्राह्मणजातिस्सन् ब्रह्मा जज्ञे स्वयंभुवः ।
इतोग्रे जगतस्तस्मात्क्षत्रजातिरजायत ॥

वायुस्सदाशिवोऽनन्तो गरुडश्शक्र एव च ।
कामश्च वरुणश्चैव सोमस्सूर्यो यमस्तथा ॥

एवमाद्याः क्षत्रियास्तु देवानां ब्रह्मनिर्मिताः ।
विवस्वादिन्द्रवरुणविष्णुभ्योन्येदितेस्सुताः ॥

रुद्रादन्ये तथा रुद्राः वायोरन्ये च वायवः ।
अग्नेरन्ये च वसवो वैश्या इत्येव कीर्तिताः ॥

एक एव हरेर्जातः परिवारविवर्जितः ।
वाय्वादीन् क्षत्रियान् सृष्ट्वा पुनरल्पपरिग्रहः ॥

इच्छन् बहुपरीवारं वैश्यान्देवान्ससर्ज ह ।
ततो बहुतरानिच्छन्शूद्रदेवान्ससर्ज ह ॥
अश्विनौ पृथिवी चैव कालमृत्यव एव च ।
शूद्रदेवास्समुद्दिष्टाः देववर्णा इति स्मृताः । " इति ॥

एतेन देवेषु चातुर्वर्ण्यमस्तीति प्रतीयते । न्यायदीपिकाटिप्पण्यां तूक्तं । " जीवास्त्रिविधाः । सात्विका राजसास्तामसाश्च । तत्र देवासुरयोः सात्विकतामसयोश्चातुर्वर्ण्याभावाद्राजसेषु तत्संभवात्तत्रायं विचारः । " इति ॥ अयं विरोधो देवेषु चातुर्वर्ण्यमभिमन्यमानविभागविवक्षयैवेत्यादाय परिहरणीयो भाति । तदुक्तं बृहद्भाष्ये ॥

" ब्रह्माग्निना सहैवास्ते देवेष्वथ नरेषुच ।
ब्राह्मणेन सहैवास्ते ब्रह्मा शुभचतुर्मुखः ॥
क्षत्रजात्यभिमानी तु पवनो देवराजभिः ।
सुपर्णशेषरुद्राद्यैर्मानुषेषु च राजभिः ॥
वैश्यजात्यभिमानीच नासिक्यो वायुरूर्जितः ।
वाय्वादिभिस्सहैवास्ते देवेष्वथ नरेषुच ॥
विड्भिश्शूद्राभिमानीच निरृतिर्देवतासुच ।
नासत्ययोःपृथिव्यांच शूद्रेष्वेवतु मानवे ॥
सर्वजात्युत्तमो ब्रह्मा यतो विप्राग्निसंस्थितः । " इति । एवमेवसत्तत्वरत्नमालायां चाभिमानितारतम्यमुक्तं ॥

एवं विरोधे परिहृते सति चातुर्वर्ण्यं मनुष्योत्तमेष्वेवेति पर्यवस्यति ॥ " राजसास्तु नरास्तत्र विप्राराजससात्विकाः । " इत्युक्तरीत्या सर्वेषां मनुष्याणां राजसत्वेन तेषु पुनस्सात्विकराजसतामसत्वेन त्रैविध्यं ज्ञेयं ॥ एतेषु सात्विकाः राजससात्विका इति यावत् । मुक्तियोग्याः । राजसाः नित्यसंसा-

रिणः त्रैविद्याः । तामसास्तमोयोग्याः । अत्र प्रथमोक्तेषु शुद्धसात्विककिंचिद्रजोयुक्तसात्विकसमरजोयुक्तसात्विकसत्वात्किंचिदूनतमोयुक्तसात्विक इति ब्राह्मणक्षत्रियवैश्यशूद्राणां विवेकः ।। एतेषां चतुर्वर्णगतानां सात्विकानां वैष्णवत्वं साधारणो धर्मः ।। अनुप्रविष्टगुणत्रयभागेषु किंचित्तारतम्याद्वर्णवैचित्र्यं । नित्यसंसारिणस्त्रैविद्यास्तु न राजससात्विकाः । किंतु राजसराजसाः ।

(गीतायां चातुर्वर्ण्यमित्यत्र त्रैविद्यब्राह्मण्यादिकमन्तर्भूतं वा न वेति सन्दिह्यते )( प्रमेयदीपिकायां विरुद्धवत्प्रतीयमानं वाक्यद्वयं संदेहबीजं । प्रस्तुतानि वाक्यान्यन्यैस्सह विचार्यन्ते । तथाहि ।।

(१) गुणकर्मविभागशश्चातुर्वर्ण्यं सृष्टं इति गीता । सर्वे शब्दास्सावधारणाभवंतीति न्यायेन गुणकर्मविभागशएव चातुर्वर्ण्यविभागः इत्यनया प्रतीयते ।।

(२) अत्र श्रीमदाचार्यभाष्यवाक्यं " सात्विको ब्राह्मणः । सात्विकराजसः क्षत्रियः । राजसतामसोवैश्यः । तामसः शूद्र इति गुणविभागः " इति । अयं मुक्तियोग्यविभाग इति स्फुटं ।)

(३) " राजससात्विकेष्वेवायं विभाग इति ज्ञातव्यं " इत्यस्यभाष्यस्य प्रमेयदीपिकावाक्यं ।।

(४) " स्वाभाविको ब्राह्मणादिश्शमाद्यैरेव भिद्यते " इति नारदीय वचनमाचार्योदाहृतं गीतातात्पर्ये । एततत्प्रमाणवाक्यगतात् एव शब्दात् गीतायामपि गुणकर्मविभागश एव चातुर्वर्ण्यं सृष्टमिति योजना उचिता दृश्यते । एतेषां विरुद्धत्वेन वक्ष्यमाणं चिन्तनीयं । तथाहि ।।

(५) उक्तं प्रमेयदीपिकायां व्याख्यानारंभे " यस्मादहमेव चातुर्वर्ण्यस्य कर्ता त्रैविद्याश्च तदन्तर्भूताः । तस्मात्स्वपितरं मां परित्यज्यान्यदेवता-

यजन्तः कथं महाफलभाजो भवेयुरित्यर्थः । " इति ।। यदि त्रैविद्यानां चातुर्वर्ण्यशब्देन न संग्रहः तर्हि महाफलालाभे तेषां पितृपरित्यागाख्ययुक्तेरलाभः प्रसज्यते ॥

एवं सति पठितेषु वाक्येषु तृतीयपंचमयोः प्रमेयदीपिकावाक्ययोर्विरोधपरिहारार्थं टिप्पणीकृद्भ्यां श्रीनिवासतीर्थकृष्णाचार्याभ्यां कृतः परिष्कारो लिख्यते । उक्तं श्रीनिवासतीर्थीये । " उपलक्षणं चैतत् । त्रैविद्यमात्राविष्णोर्थे सर्वाधिक्ये ससंशयाः । अन्याधिक्यं न मन्यन्ते श्रीशाद्राजसराजसाः ॥ " इत्यादिप्रमाणानुसारेण राजसराजसादयोऽपिग्राह्याः । अन्यथा " यस्माच्चातुर्वर्ण्यस्याहमेवकर्ता त्रैविद्याश्च तदन्तर्भूता " इत्याद्यसंगत स्यादिति मंतव्यं । इति । इमं भावबोधोक्तत्वेनानूद्याह कृष्णाचार्यः । " अन्ये तु राजससात्त्विकेष्विव राजसराजसेषु त्रैविद्येष्वपि वर्णविभागोऽस्ति । इयांस्तु विशेषः । भाष्योक्तः स्वाभाविकवर्णविभागः । अयंतु औपाधिकवर्णविभागः । योनिभेदकृतत्वात् । तथाच 'चातुर्वर्ण्यस्याहमेवकर्ते' त्यत्र स्वाभाविकौपाधिकभेदेन द्विविधमपि चातुर्वर्ण्य ग्राह्यं । तत्रच त्रैविद्यानामन्तर्भावात् न विरोधः इत्याहुः " । इति ॥

एतेनायमाशयोऽधिगम्यते । स्वाभाविकं औपाधिकंच चातुर्वर्ण्य मया सृष्टं । औपाधिकब्राह्मण्यादिमंतस्त्रैविद्याः मां पितरं परित्यजन्ति ।। स्वाभाविकचतुर्वर्णभाजां राजससात्त्विकाना मुक्तियोग्यानां विभागं गुणकर्मविभागश एवाहं करोमि । अतएते महाफलाय प्रभवन्तीति ॥

द्वितीयार्धे श्रीकृष्णः स्वं कर्तारं अकर्तारंचाह । शांकरास्तावदिदमद्वैतसाधकं मन्यन्ते । कर्तृत्वाकर्तृत्वयोर्व्याहतयोरन्यतरमिथ्यात्वं विनानुपपद्यमानत्वात् कर्तृत्वं मिथ्या इतरत्परमार्थतस्सदिति । इदमुपपादित वेंकटनाथीये । " तर्हि विषमस्वभावजगत्सृष्टिकर्तृत्वेन तव वैषम्यनैर्घृण्ये

प्रसज्येयातां ॥ तत्राह । तस्येति ॥ विषमस्वभावस्य जगतो व्यवहारदृष्ट्या कर्तारमपि परमार्थदृष्ट्या अकर्तारं विद्धि । तत्र हेतुगर्भविशेषणं । अव्ययमिति । त्रिविधपरिच्छेदराहितमित्यर्थः । विषमजगत्स्रष्टृत्वस्य मयि वास्तवत्वे हि तत्प्रयुक्तवैषम्यनैर्घृण्यदोषप्रसक्तिः । तदेव मिथ्येति कुतस्तत्प्रयुक्ततद्दोष-शंकेति भावः ॥ अत्र कर्तारमप्यकर्तारं विद्धीति भगवतैव जगत्कर्तृत्वस्य प्रतिपन्नोपाधावभावप्रतियोगित्वरूपमिथ्यात्वस्य कण्ठरवेणोक्त्या जगत्कर्तृत्व-समानयोगक्षेमाणां जगदुपादानत्वजगदीश्वरत्वजगदन्तर्यामित्वादीनां अन्येषा-मपि ब्रह्मधर्माणां मिथ्यात्वे इदमेव लिंगमिति निर्विशेषब्रह्मवादजयदुंदुभिरयं श्लोकः । " इति ॥

अत्रोच्यते । यदनेन तथा मधुसूदनेन च वैषम्यादिपरिहारकतया द्वितीयार्ध उत्थापितं तन्मन्दं ॥ "वैषम्यनैर्घृण्येन सापेक्षत्वात्तथा हि दर्श-यति" इति ब्रह्मसूत्रोक्तन्यायेन जीवानां तत्तद्योग्यताकर्मादिकमनुसृत्य फलं ददातीति भगवान्न विषम इत्येव शास्त्रीयसमाधानस्योचितत्वात् । एवमेव हि "समः प्रियः सुहृद्ब्रह्मन्" इति भागवतसप्तमारम्भे प्रश्नमुत्थाप्य समाहितं ॥ किंच भवान् विषमञ्जगत्ससर्ज अतो विषमः इत्याक्षेपे कृते अहं नासृजमिति समाधानं स्वोक्तं सृष्टिकर्तृत्वं विरुणद्धीति एतत् भगवन्तमतीवापकर्षति । प्रत्यक्षतो दुष्टं बालं प्रति अरे किमिति दौष्ट्यमाचरसीति प्रश्नस्य देवानां प्रियो बालो हि वदति स्वकृतापला-पेन नाहं किमपि कृतवानिति ॥ यदि चातुर्वर्ण्यं न वस्तुतस्सृष्टं भगवता तर्हि कागतिराक्षेपाणां यच्छमनायाद्वैतव्याख्यातृकरीत्या चातुर्वर्ण्य-सृष्टिरभिहिता । शङ्करभाष्य खलु (१) मानुषएवलोके वर्णाश्रमादि कर्माधिकारः इति नियमः किं निमित्तः ॥ (२) सर्वे तव वर्त्मानुवर्त-न्ते इत्येतत्कुतः इत्याक्षेपद्वयस्य समाधानरूपं चातुर्वर्ण्यसृष्टिवचनं इत्यभि-प्रैति । चातुर्वर्ण्यसृष्टेरवास्तवत्वे उक्ताक्षेपावसमाहिताविति तदवस्थौ भवतः ॥

(व्यवहारदृष्ट्या व्यावहारिकाक्षेपाणां व्यावहारिकसर्जनप्रतिपादनेन व्यावहारिकं समाधानं दत्तं ।( अकर्तारमित्यनेन तु परमार्थतः कर्तृत्वं निवारितमित्युक्तौ च परमार्थतो निषेधस्यात्र सङ्गतिर्न दृश्यते । कर्तृत्वस्यावास्तवत्वे संविदि बहुमानवान्मया सृष्टमित्येव नावक्ष्यत् ॥

(जगत्कर्तृत्वं हि भगवतो माहात्म्यमावहति । अकर्तृत्वं खल्वपकर्षं संपादयति । कर्तेत्युत्कृष्टस्थानमारोहयन् किमिति झटिति निम्नस्थाने पातयिष्यति वेङ्कटनाथः ।( तस्मादकर्तारमित्यनेनापि यथा भगवतउत्कर्षच्युतिर्न भवेत् तथैव व्याख्येयं ।( गुणकर्मविभागश इत्यनेनैव वैषम्यशंकायाः परिहारे प्राप्ते सति तस्याः द्वितीयार्धोत्थापकत्वेन पुनरुज्जीवनमसंगतं । अत एव नीलकण्ठोऽन्यथोत्थापयति द्वितीयार्धं ॥ "यद्येवं त्वं न स्वसंततितर्पणेन स्वाज्ञाकरणेन प्रीयसे तदर्थंच त्वया चातुर्वर्ण्यं सृष्टं तर्हि महान्संसारीत्वमसीत्याशंक्याह" इति ॥ किंच परमार्थदृष्ट्या अकर्तृत्वं न केवलं श्रीकृष्णस्य ॥ अपितु अर्जुनस्यापि समानं । तथान्येषामपि । ततो मां अकर्तारं विद्धीत्युक्तौ को विशेषः । यदि अकर्तृत्वं भगवत एव नत्वर्जुनादेस्तर्ह्येवहि तन्माहात्म्यसंपादकं भवेन्नान्यथा ।( यत्तु प्रतिपन्नोपाधावभावप्रतियोगित्वं कण्ठरवेणोक्तमित्युक्तं तदभ्रममूलकं । "अकर्तारं" इत्यस्य शास्त्रसम्मत्यान्यथोपपाद्यमानत्वात् ।( तथाहि । अव्ययं चतुर्विधनाशरहितं कर्तारं मां विद्धि । न मे कर्ता अन्योऽस्ति । अतोऽहं अकर्तेति ज्ञेयः । अहं कर्त्रन्तरसहायरहितः । स्वतन्त्रत्वादमितशक्तिमत्वादेक एव करोमि । अहं न ब्रह्मादिवत्कर्ता । किंतु विलक्षणः । अतोऽहं अकर्ता । "न मां कर्माणि लिपन्ति" इत्यनुपदं मम वैलक्षण्यं वदिष्यामीति श्रीमदाचार्याभिमतार्थानां निर्दुष्टत्वेन निर्विशेषपरब्रह्मवादिनां जयदुन्दुभिः पराजयमेव घोषयति । न तु जयं । "तनुर्विद्याक्रियाकृतिः" इति प्रमाणं भगवत्तनोः ज्ञानात्मककर्तृत्वोपेताकारवत्त्वं प्रतिपादयति ।

जीवकर्तृत्वं त्वहंकारात्मकं । अतो भगवान्कर्ताप्यकर्ता ॥ "कर्तापि भगवान् विष्णुरकर्तेतिच कथ्यते ॥ तस्य कर्ता यतो नान्यः स्वतन्त्रत्वात् आत्मनः ॥ " इति नारदीयवचनं । लोके हि कर्तृत्वं अभिनिवेशसंयुतमेव दृष्टं भगवांस्तु "विश्वकर्माविमनाः" इत्युक्तप्रकारेणाग्रहशून्यः । अतस्तस्य कर्तृत्वं लोकविलक्षणमिति अकर्तृत्वसंज्ञामर्हति । परब्रह्मणो निष्क्रियत्वादि दुराशा "अचलोयं सनातनः ।" इत्यादिग्रन्थव्याख्यानेषु "अतश्च न मायामयं" इत्यादिभाष्यटीकाग्रंथेष्वपाकृता द्रष्टव्या ॥

प्रकृते श्लोके निर्विशेषपरब्रह्मजयदुंदुभिवादनाय श्रीधरोऽपि नानुकूलो भाति । अस्येदमत्र व्याख्यानं । "कर्तारमपि फलतोऽकर्तारमेव मां विद्धि । तत्र हेतुः अव्ययं, आसक्तिराहित्येन नाशरहितं ।" इति । इदं निर्दुष्टं । यतः पूर्णकामत्वेन फलेच्छया न भगवान् प्रवर्तते । अविद्यमानं फलं च भगवान्नाप्नोति । विश्वकर्माविमना इत्युक्तरीत्याऽऽग्रहहीनोऽपि भगवानव्ययः आसक्तिहीनः लेपविधुर इति यावत् । रामानुजाचार्योऽपि "अकर्तारं" इत्येतद्विचित्रकर्तारमिति व्याचष्टे । तस्मादत्र जयदुन्दुभिस्स्यान्निश्शब्दइति वेङ्कटनाथो बोधनीयः ॥

**न मां कर्माणि लिंपन्ति न मे कर्मफले स्पृहा ।**
**इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥ १४**

वि ॥ ततः किमित्यत आह न मामिति ॥ जीवविलक्षणक्रियावत्त्वेनाकर्तृत्वान्मां कर्माणि न लिंपन्ति । किंच

(जीवानां कर्मलेपे अभिनिवेशो हेतुः न च मेऽसावस्तीत्याह। न मे कर्मफले स्पृहेति॥ फलप्राप्तिपर्यन्तं मनोविक्षेपशब्दितोऽभिनिवेशः कर्मफले मे नास्ति॥ अतोऽपि न लिंपन्ति कर्माणीत्यर्थः)(कैमुत्येनापि स्वस्य कर्मालेपमाह इतीति। कर्मलेपो मे नास्ति॥ तत्फले स्पृहापि नेत्येवं मां योऽभिजानाति सोऽपि कर्मभिर्न बध्यते। किम्वहमिति। इति योऽभिजानातीति वाच्ये मामिति पुनर्वचनं स्वस्य ईश्वराभेदाभिप्रायेण स्वात्मानमुद्दिश्य न मां कर्माणि लिंपन्तीत्यादि यो जानातीति जीवाभेदप्रतीतिनिरासाय मां योऽभिजानाति न स्वात्मानामिति)

शं॥ येषां तु कर्मणां कर्तारं मां मन्यसे परमार्थतस्तेषां अकर्तैवाहं। यतः नेति॥ न मां तानि कर्माणि लिंपन्ति। देहाद्यारंभकत्वेनाहंकाराभावात्॥ न च तेषां कर्मणां फलेषु मे स्पृहा तृष्णा॥ येषां तु संसारिणामहं कर्तेत्यभिमानः कर्मसु स्पृहा तत्फलेषुच तान्कर्माणि लिंपन्तीति युक्तं। तदभावान्न मां कर्माणि लिंपन्तीत्येवं योऽन्योऽपि मां आत्मत्वेनाभिजानाति। नाहं कर्ता न मे कर्मफले स्पृहेति स कर्मभिर्न बध्यते। तस्यापि न देहाद्यारंभकाणि कर्माणि भवन्तीत्यर्थः॥

रा॥ कथमित्यत्राह॥ यतः इमानि विचित्रसृष्ट्यादीनि [कर्म]णि मां न लिंपन्ति न मां संबध्नन्ति। न [illegible]

नि तानि देवमनुष्यादिवैचित्र्याणि सृज्यानां पुण्यपापरूप-कर्मविशेषप्रयुक्तानि इत्यर्थः । अतः प्राप्ताप्राप्तविवेकेन विचित्रसृष्ट्यादेर्नाहं कर्ता । यतश्च सृष्टाः क्षेत्रज्ञाः सृष्टिलब्धकरणकलेबराः सृष्टिलब्धं भोग्यजातं फलसंगादिहेतुस्वकर्मानुगुणं भुंजते ॥ सृष्ट्यादिफले कर्मफले च तेषामेव स्पृहेति न मे स्पृहा । तथाह सूत्रकारः । वैषम्यनैर्घृण्येन सापेक्षत्वादिति । तथाच भगवान्पराशरः । 'निमित्तमात्रमेवायं सृज्यानां सर्गकर्मणि । प्रधानकरणीभूताः यतो वै सृज्यशक्तयः । निमित्तमात्रं मुक्त्वेदं नान्यत्किंचिदपेक्षते ॥ नीयते तपतां श्रेष्ठ स्वशक्त्या वस्तु वस्तुतां ' इति । सृज्यानां देवादीनां क्षेत्रज्ञानां सृष्टेः कारणमात्रमेवायं परमपुरुषः । देवादिवैचित्र्ये तु प्रधानकारणं सृज्यभूतक्षेत्रज्ञानां प्राचीनकर्मशक्तयएव । अतो निमित्तमात्रं मुक्त्वा सृष्टेः कर्तारं परमपुरुषं मुक्त्वा इदं क्षेत्रज्ञवस्तु देवादिविचित्रभावे नान्यदपेक्षते । स्वगतप्राचीनकर्मशक्त्यैव हि देवादिवस्तुभावं नीयत इत्यर्थः ॥ एवमुक्तेन प्रकारेण सृष्ट्यादेः कर्तारमप्यकर्तारं सृष्ट्यादिकर्मफलसंगरहितं च यो मामभिजानाति स कर्मयोगारंभविरोधिभिः फलसंगादिहेतुभिः प्राचीनकर्मभिर्न संबध्यते मुच्यते इत्यर्थः ॥

विचारः

(पूर्वश्लोके प्रकृतमपि विस्मृत्येवाकृतं श्रीमध्वदूषणमस्मिन् श्लोके साग्रहं करोति वेङ्कटनाथः )(एवमयं वदति । (यत्त्वत्र माध्वव्याख्यानं तस्य कर्तारं

मामकर्तारं कर्तृरहितं विद्धीत्यर्थः । यद्वा कर्तारमपि मां जीवविलक्षणकर्तृत्वादकर्तारं विद्धि । इति ॥ अत्राद्यव्याख्याने कर्तृत्वस्य कर्तृराहित्यरूपेणाकर्तृत्वेन सह विरोधाप्रसक्तेः कर्तारमपि इति विरोधार्थकस्य 'अपि' शब्दस्यानुपपत्तिः । कर्तारमकर्तारमपि विद्धीत्यपि शब्दस्य समुच्चयार्थकत्वे व्यवहितान्वयदोषः । यथाश्रुतान्वये च संभवति दूरान्वयो न न्याय्यः । द्वितीयव्याख्याने तु अकर्तारमिति सामान्यतः कर्तृत्वनिषेधस्य जीवसाधारणकर्तृत्वनिषेधपरत्वेन संकोचकल्पनं दोषः ॥ किंच न मां कर्माणि लिपन्तीत्युत्तरश्लोके कर्मलेपाभावेन कर्तृत्वसामान्यस्यैव निषेधावगमात्तद्विरोधः । अपि च कर्तारमपि मां विद्ध्यकर्तारमिति स्वरसतः प्रतीयमानः कर्तृत्वाभावरूपोऽर्थः कुतस्त्यज्यते ॥ ब्रह्मणि विश्वकर्तृत्वस्य शास्त्रप्रसिद्धेरिति चेत् । तदकर्तृत्वस्यापि निष्फलं निष्क्रियं इत्यादिशास्त्रप्रसिद्धिं किं न पश्यसि ॥ हेयक्रियाकर्तृत्वस्यापि ब्रह्मणि रामायणभारतादिशास्त्रप्रतिपन्नत्वेन तन्निषेधस्याप्ययोगात् । अथ शोकादिकर्तृत्वं मायामात्रमिति शास्त्रेणैव प्रतिपन्नमिति चेत् विश्वकर्तृत्वमपि मायामात्रमिति, अतोन्यदार्तं मायामात्रमिदं द्वैतमद्वैतं परमार्थतः इत्यादिशास्त्रप्रतिपन्नं कुतो न जानीषे । येनैवं दुराग्रहेण गीताशास्त्रमात्मानं च नाशयसि । विस्तरस्त्वद्वैतपंजरे द्रष्टव्यः ।' इति ॥ अत्रोच्यते । शमितोऽपि दुन्दुभिः पुनराग्रहेण वैयात्याध्द्वन्यत इव भाति । अभिहितानां दूषणानां दुर्बलत्वात् कर्त्रन्तरहीनं इत्यपि मां विद्धि इति व्याख्याने यच्छङ्कितं अपि शब्दवैयर्थ्यं तदयुक्तम् ॥

(कर्ता खलु कर्त्रन्तरवान् लोके दृष्टः । यथा कुलालः स्वपितुर्जातस्सन् परतन्त्रो दण्डचक्रादिकमालम्ब्य कालादृष्टादिकं प्रसादयन्प्रवर्तते ॥ तथा यदि त्वं कर्ता तर्हि त्वया परतन्त्रेण भाव्यं । सर्वस्वातन्त्र्यस्य कर्तृत्वेन विरोधात् । इति सव्याप्तिकं पूर्वपक्षे सति विरोधं 'अपि' शब्देनाङ्गीकृत्य स्वस्वातन्त्र्यं परिरक्षितुं अकर्तृत्वमुक्त्वा लेपाभावमुत्तरश्लोकेन प्रसाधयतीत्याशयस्य निर्दे-

ष्टत्वात् । एतेन विरोधार्थकः अपि शब्दः उपपन्नो भवति । यथाश्रुतान्वया-परित्यागान्न दूरान्वयदोषः । प्रमाणसिद्धयोरुभयोर्विरोधे एकस्य मिथ्यात्वेन विरोधपरिहारो न मीमांसकरीतिः । किंतु बालक्रीडा । अत्रोक्तं युक्तिमल्लि-कायां । 'गृष्टयोर्मिथो विरोधेतु हत्वैकामपराङ्मुखीं । विरोधशांतिं कः कुर्या-द्विना म्लेच्छकुमारकं ॥' इति ॥ हेयकर्तृत्वराहित्यखंडनंत्वनुक्तोपालंभः ।

यच्च द्वितीयव्याख्याने संकोचाख्यो दोष इति तदपि न । कर्ता अकर्ता इति विरुद्धाभिधाने विरोधपरिहारोन्यतरसंकोचेन वक्तव्यः इत्युभयसमं । कर्तेति सामान्यतो निर्देशेकृते कर्तृत्वं मायिकं इत्यभिप्रायकल्पने किं नास्ति संकोचः। भगवति विद्यमानं कर्तृत्वं न लोकदृष्टसदृशं । भगवतः अकर्तेति नाम इतिच निरुक्तमागमे । "कर्ताऽपि भगवान्विष्णुरकर्तेति च कथ्यते । तस्य कर्ता यतो नान्यः स्वतंत्रत्वात्परात्मनः" ॥ इति नारदीये । वेङ्कटनाथो हि संक्षिप्तराघवेन्द्रतीर्थीयविवृतिमेवावलोक्य दूषयति । श्रीमध्वभाष्यं गीतातात्पर्यं वा न पश्यतीति भाति । यत्तु "न मां कर्माणि" त्यत्र कर्तृत्वसामान्यस्यै-व निषेधोऽवगम्यत इत्युक्तं तद्भ्रममूलं । कर्तृत्वस्य मिथ्यात्वं यद्यभिप्रेतं कुतस्तथा नोक्तं । स्वायत्तेशब्दप्रयोगे अहं न कर्ता। निर्धर्मकत्वात् इति वा प्रतीतस्य कर्तृत्वस्य मिथ्यात्वादिति वा कुतो नोक्तं । तद्विहाय लेपरा-हित्यं स्पृहाराहित्यंच यत उक्तं ततोऽवगम्यते भगवान् लेपरहितः स्पृहारहितः कर्ता । कर्तृत्वाकर्तृत्वोक्त्योर्विरोधपरिहारएवमेवावगन्तव्यो नान्यथा मिथ्या-त्वादिकल्पनाक्लेशेनेति । किंच यदनेन पृष्टं कुतः प्रतीयमानोऽर्थः अकर्तृत्वरूप-स्त्यज्यते इति । तत्प्रतिबन्दीद्वारापरिह्रियते । कुतस्त्वया कर्तारं मां इति कर्तृ-रूपोऽर्थः स्फुटं प्रतीयमानः परित्यज्यत इति। शास्त्रे मिथ्यात्वस्य प्रतिपादित-त्वादिति चेत् तव भ्रम एवैवं शास्त्रं त्वामपि नाशयतीति सुवचं। "निष्क्रि-यं" इति प्राकृतक्रियाराहित्यं बोधयति । "अद्वैतं परमार्थतः" इति श्रुति-र्भगवतस्समाधिकराहित्यं घोषयति । रामायणभारतकथाविवक्षया परब्रह्म-

णदृशोकारोपस्तु न सङ्गतः । तत्रैव जनव्यामोहनार्थं विडंबनमात्रं कृतं इति प्रपंचितत्वात् । यावदद्वैतपंजरं नास्मद्दृष्टिपथमायास्यति तदवधि विस्तरस्तूपेक्ष्यते ॥ प्रस्तुतमनुसरामः । अकर्तृत्वप्रपंचनपरतया सर्वेऽपि स्वस्वमतानुगुण्येन "न मा" मिति श्लोकं व्याचक्षते ॥ अकर्तृत्वं कर्तृत्वं उभयमपि तथ्यं इति श्रीमध्वरामानुजाचार्यौ वदतः । कर्तृत्वं मिथ्येति शाङ्कराः । सत्यत्ववादी रामानुजाचार्यस्तु न वेङ्कटनाथेन दुराग्रहशून्येन निष्पक्षपातिना प्रत्याख्यातः । कुत एतत् ॥

अयं रामानुजदेशिकयोराशयः । "कर्तृत्वं मुख्य सत्यं च । अकर्तृत्वं वैषम्यप्रयोजकत्वाभावादुच्यते । अनादिवासनाद्यनुरूपं प्रवर्तयन् तत्तत्पुण्यपापानुगुणं फलं हि भगवान्प्रयच्छति । न तु स्वेच्छानुरूपं । नापि स्वातंत्र्यमात्रेण विषमं फलं ददाति न च स्वप्रयोजनार्थं परान् पीडयति । अतो जगत्सर्जननिमित्तमात्रं हरिः । प्राचीनकर्मद्येव कारणं तत्र । एतेनाभिन्ननिमित्तोपादानत्वं भगवतो न विरुद्धं । एवं श्लोकद्वयेन यथोक्तकर्मयोगारंभविरोधिपापक्षयहेतुरुक्तः" इति ॥ अत्रोच्यते ॥ भगवन्माहिमात्रोक्त इत्यत्र नास्माकं विवादः । भगवज्ज्ञानेन पापक्षयो भवतीति च स्फुटं । कर्मयोगारंभविरोधिदुरितस्यैवात्र विवक्षित्वस्य त गमकं न ज्ञायते । "कर्मभिर्न स बध्यते" इति मुक्तयाख्यफलस्य कंठरवेणोक्तेस्संकोचस्योक्तस्योपपत्तिरन्वेषणीया ॥ यच्चाभिप्रेतं विष्णुर्जगदुपादानकारणं निमित्तं चेति तदयुक्तं । ब्रह्मोपादानत्ववादस्याप्रामाणिकत्वात् । निमित्तोपादानयोरभेदे मानं न प्रपंचितं । अयं वादः अन्यत्र निरस्तः ॥

यद्यपि कालादृष्टकर्मगुणादीनादाय भगवानविषमः फलं ददाति । तस्य सर्वविषये स्वतंत्रेच्छत्वं तु न हीयते । यस्तु रामानुजभाष्ये तट्टीकायां [...]ां च जगद्व्यापारे न भगवान् धुरंधरः अपितु कालकर्मादीनि भार निर्वहन्तीति भावः प्रकटितः स विष्ण्वपकर्षक इत्युपेक्ष्यते ॥

(जीवाद्भगवन्तमयं श्लोको विशिनष्टीति शाङ्कराणामाशयस्स्फुटः)(जीवस्स्वं कर्तारं मन्यते अतो लिप्तस्सन् स्पृहादिभिर्बद्धस्संसरति। भगवांस्तु कर्तृत्वाभिमानहीनः फलेषु स्पृहाहीनः सन्नकर्ता)(यो यो जीवस्स्वं अभिमानादित्यागेनाकर्तारं ब्रह्माभिन्नं मन्यते स सर्वोऽप्यकर्ता मुक्तश्च इति शाङ्कराणामाशयः)(अत्रोच्यते)(गीतापद्ये 'मां मे मां' इति त्रिरुक्तिरवलोकनीया। लेपाभावः स्पृहाभावः ज्ञानविषयत्वञ्च श्रीहरिमुद्दिश्योक्तं न जीवान्प्रतीति स्फुटं)। न च वाच्यं जीवेश्वरयोरभेदात्सर्वेषां वस्तुतोऽकर्तृत्वं सिध्यतीति)(श्लोके द्वितीयार्धगतः मां शब्दोऽस्यार्थस्य गलग्राही विज्ञेयः)("न मां कर्माणि लिपन्ति न मे कर्मफले स्पृहा। इति स्वं यो विजानाति कर्मभिर्न स बध्यते" इति यदि भगवदुक्तिस्स्यात्तदैव शाङ्करविवक्षितार्थसिद्धिः कथञ्चित्स्यात्)(यतो यद्येवं पाठः तदा प्रथमार्धमुपासकमननप्रकारानुवादरूपं इत्यादाय स्वात्मज्ञानेन मुक्तो भवतीति व्याख्यानस्यावकाशो विद्येत)(यथाश्रुतं तु पद्यं "इति मां योऽभिजानाति" इति श्रीकृष्णस्यैव ज्ञेयत्वेनोक्त्या स्वात्मविषयकानुसंधानं बहिष्करोति)(किं च कर्तृत्वं मिथ्येति हृदि निधाय तद्बोधनार्थं लेपस्पृहयोर्निषेधे प्रयोजनं चिन्त्यं॥ लेपादिशून्यःस्याद्विलक्षणकर्ता। लेपादिराहित्यहेतुना कर्तृत्वस्य मिथ्यात्वं तु कथं सिद्ध्येत्)॥

(किंच परमार्थतो लेपादिराहित्यं यदि कर्तृत्वामिथ्यात्वेनैव व्याप्तं। तर्हि जीवोऽप्यकर्तैव। तस्यापि वस्तुतो लेपाभावात्। एवं सति लेपस्पृहयोः पारमार्थिकयोर्जीवेप्यभावेन श्रीकृष्णस्य जीवाद्विशेषो यः श्लोकाशयत्वेन परैरभ्युगतः स दुर्घटः)(न च वाच्यं निर्लिप्तत्वादिकं भगवान् जानाति न तु जीवः, अतो विशेष इति)(अनुसन्धानवैधुर्येणाहमकर्ता लेपादिशून्य इत्यर्थबोधकशब्दस्य पूर्वश्लोके वा प्रकृते वा अदर्शनात्)॥

(यथाश्रुतव्याख्याने पक्षपातिनश्शाङ्कराः कथमशब्दार्थमभिमानसदसद्भावाभ्यां विशेषं सहेरन्।

किंच मिथ्यावस्तुनो मिथ्यात्वज्ञानेन हि मोक्षः। यथा लेपो मिथ्या तथा लेपाभावोऽपि मिथ्या। स्पृहाभावोऽपि तथैव। तथाच लेपाभावं स्पृहाभावं च मिथ्येति यो जानाति सोऽपि मुक्तो भवेत्। एतेन भगवतो लेपस्पृहे प्रसज्येयातां। न हीदं परकीयाणामिहेष्टं। तस्मात् श्लोकद्वितीयार्धे "मां" इत्यस्य स्वतत्वं इति शङ्करानन्दव्याख्यानमसत्। प्रथमार्धे श्रीकृष्णस्य सर्वथाकर्तृत्वभोक्तृत्वे प्रतिषिद्धे इति मधुसूदनीयं चासत्। कर्तृत्वस्य मिथ्यात्ववादमिहाविवक्षित्वा नीलकण्ठश्रीधरावपि प्रकारान्तरेण व्याचक्षाते। यथा नीलकण्ठः "मां यतः कर्माणि न लिंपन्ति अतोऽहं कर्ताप्यकर्ता यथा न मे फले स्पृहा अतोऽहं निर्लिप्तः। फलेच्छुर्हि कर्तृत्वाभिमानी भवति। कर्तृत्वाभिमानी खलु लिप्यते" इति। आह श्रीधरः "विश्वसृष्ट्यादीनि कर्माणि मां न लिंपन्ति। आसक्तं न कुर्वन्ति। निरहङ्कारत्वात्। आप्तकामत्वेन मम कर्मफले स्पृहाभावाच्च। मां न लिपन्तीति किं वक्तव्यं यतः कर्मफले स्पृहाराहित्येन मां योऽभिजानाति सोऽपि कर्मभिर्न बध्यते। मम निर्लेपत्वे कारणं निरहङ्कारत्वनिस्पृहत्वादिकं जानतस्तस्याप्यहङ्कारशैथिल्यात्" इति॥

अत्र श्रीधरीयव्याख्यानं विवृत्याचार्योक्तमनुसरतीति बुधैर्द्रष्टव्यं॥ ज्ञानिनोऽपि कर्माबन्धश्चेत् किमुवक्तव्यमीश्वरस्येति कैमुत्यं सुरसमुभाभ्यां प्रदर्शितं॥ जीवकर्तृत्वमाहंकारिकं न तथैश्वरं कर्तृत्वं इति च प्रमेयविशेषस्समानः॥ आप्तकामत्वेन स्पृहाभावः नतु स्पृहाया मिथ्यात्वेनेत्याशयोऽपि रम्यः। यद्यप्युत्कर्षदीपिकाकारो नीलकंठश्रीधरौ दूषयति। तथापि स्वाचार्यभाष्यमननुसृत्य प्रकारान्तरेणेमौ व्याख्यातवन्तावित्येव दूषणबीजं भातीति तत्कृतो निरास उपेक्षणीयः। ये वेङ्कटनाथीयकृतश्रीमध्वोपालंभेनाकृष्टमनसः श्रीमदाचार्यं दुराग्रहकलुषितं मन्येरन् तान् श्रीधरोक्तिः प्रत्याययेत्तोषयेच्च। यतोऽद्वैतपक्षपातिनावपि ताविह मिथ्यात्ववादं विहाय श्लोकार्थं सम्यगुपपादितवन्तौ॥

एवं परकीयव्याख्यानेषु विचारितेषु सत्सु अथ भगवत्पादाशयस्संक्षेपतस्संगृह्यते । अकर्तृत्वादेव भगवतो न कर्मलेपः । स्पृहाभावाच्च न कर्मलेपः । स्पृहेत्यनेनाभिनिवेश उच्यते । कर्मफले तत्प्राप्तिपर्यन्तं मनसो यो विक्षेपस्सोऽभिनिवेशः । जीवानां कर्मलेपे अभिनिवेशः आहंकारिककर्तृत्वं क्रियायाः प्राकृतत्वं चेत्यादि कारणं । नैतानि कारणानि भगवति संभवन्तीति लेपाभावोक्तिरुपपन्ना ॥

"आकांक्षन्नपि देवोऽसौ नेच्छते लोकवत्परः। नह्याग्रहस्तस्यविष्णोर्ज्ञानं कामो हि तस्यतु" इत्युक्त्या भगवतः इच्छासद्भावेऽपि अभिनिवेशराहित्यं ज्ञायते । विष्णोर्ज्ञानं यथामिथ्याप्रत्ययरूपं न भवति तथा तस्यकामोऽप्यभिनिवेशरूपो नेति प्रमाणवाक्याद्गम्यते ॥

यो जानाति स न बध्यते इति यत्तद्घटितवाक्याज्जीवबहुत्वं ज्ञायते । कालस्यानन्तत्वादितः प्रागेव सर्वमुक्तिः स्यादित्येकजीववाद्याक्षेपे सति जीवानन्त्यश्रुतिरुदाहृता भाष्ये श्रीनिवासतीर्थीयेच ॥ "अनागता अतीताश्च यावंतः सहिताः क्षणाः । अतीतानागताश्चैव यावंतः परमाणवः । ततोऽप्यनन्तगुणिताः जीवानां राशयःपृथक्" इति ॥

भगवत्पादव्याख्यानेहीतरव्याख्यानेभ्य इयान्विशेषः । केचिद्भगवन्तं सर्जनादौ वाङ्मात्रेण स्वतन्त्रं कुर्वन्ति । केचिदचेतनप्रायं कुर्वाणास्सर्जनादीन् मूलत उच्छिन्दन्ति । केचित् भगवज्ज्ञानी स्वयं स्वमेव निर्लिप्तमनुसंदधानो मुच्यते इत्युपपादयन्ति । एतेषु न कोऽपि श्रीमदाचार्यवत् श्रीकृष्णमाहात्म्यज्ञानेनोद्धारो भवतीति निष्टंकं व्याख्यातीति विशेषः ॥

एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतं ॥ १५ ॥

वि ॥ यदि ज्ञानी कर्मभिर्न बध्यते तर्हि ममापि ज्ञानित्वात्कर्मबंधाभावरूपमुक्तिसत्त्वात्कथं कर्मविधानमित्यतो ज्ञानिनामप्यधिकमोक्षाकांक्षया कर्मकरणे आचारोऽप्यस्तीत्याह ॥ एवमिति ॥ प्राक् जनकादीनां विवस्वदादीनां च विद्यमानमपि ज्ञानित्वं भगवतो न विवक्षितं । अत्र तु विवक्षितमिति न तेन पौनरुक्त्यं शंक्यं ॥ पूर्वैः मुमुक्षुभिः ॥ आक्वेः तच्छीलतद्धर्मतत्साधुकारिष्विति तत्साधुकारिण्युप्रत्ययः। अधिकमोक्षेच्छावद्भिरेवं उक्तप्रकारेण हरिं ज्ञात्वापि कर्म कृतं ॥ तस्मात् त्वमपि पूर्वैः कृतं पूर्वतरं ततोऽपि पूर्वभावि कर्म कुर्विति ॥

शं ॥ नाहं कर्ता न मे कर्मफले स्पृहेति । एवमिति । एवं ज्ञात्वा कृतं कर्म पूर्वैरप्यतिक्रान्तैर्मुमुक्षुभिः ॥ कुरु तेन कर्मैव न तूष्णीमासनं नापि संन्यासः कर्तव्यः तस्मात्त्वं पूर्वैरप्यनुष्ठितत्वाद्यद्यनात्मज्ञस्त्वं तदात्मशुद्ध्यर्थं तत्त्वविच्चेल्लोकसंग्रहार्थं पूर्वैर्जनकादिभिः पूर्वतरं कृतं नाधुना कृतं निर्वर्तितम् ॥

रा० ॥ एवं मां ज्ञात्वा विमुक्तपापैः पूर्वैरपि मुमुक्षुभिरुक्तलक्षणं कर्म कृतं । तस्मात्त्वमुक्तप्रकारमद्विषयज्ञान-

विधूतपापः पूर्वैर्विवस्वन्मन्वादिभिः कृतं पूर्वतरं पुरातनं तदानीमेव मयोक्तं वक्ष्यमाणाकारं कर्मैव कुरु ॥

विचारः

"ज्ञात्वा कृतं कर्मे"त्युक्त्या ज्ञानोत्तरं पूर्वैः कर्मानुष्ठितं इत्यर्थः प्रतीयते ॥ मुक्तावानन्दाभिवृद्ध्यर्थमपरोक्षज्ञानानन्तरं कर्मानुष्ठीयते ॥ "कर्मणैव हि संसिद्धिं" इति "इमं विवस्वते योग"मिति च शिष्टाचारस्य प्रमाणतयोदाहृतत्वात्किं पुनराचारस्यकथनं इत्याकाङ्क्षा विवृतौ समाहिता। प्राक् ज्ञानात्पूर्वं ज्ञानार्थं क्रियमाणं कर्म प्रति जनकाद्याचार उदाहृतः। इह ज्ञानानन्तरं मोक्षानन्दाधिक्यायानुष्ठेयं कर्मप्रति प्राचीनाचार उच्यते। इति न पौनरुक्त्यशंकावकाशः। यद्यपि जनकादयोऽपरोक्षज्ञानिनएव ॥ तथापि तेषां ज्ञानित्वमविवक्षित्वा प्रागुक्तिः। इह तादृशानामपरोक्षज्ञानं विवक्षित्वा तदनन्तरकर्मणः परामर्शः इति विशेषः। अर्जुनस्य ज्ञानित्वेऽपि शिष्टाचारपरंपराप्राप्तत्वात् त्वया कर्म कर्तव्यं इत्यसौ बोधनीयः ॥

श्लोके "मुमुक्षुभि"रिति प्रयोगो ज्ञानात्पूर्वं ज्ञानसाधनतया अनुष्ठेयं कर्म विवक्षितं स्यादिति प्रतीतिं जनयति। "ज्ञात्वा कृतं कर्मे"ति तु ज्ञानोत्तरं कर्मेत्यस्य साधकं। जनकादिदृष्टान्तस्य प्रागेवोक्तत्वात् पौनरुक्त्यपरिहारकतयापि ज्ञानोत्तरकर्मविवक्षापक्षः श्रेयान्। तर्हि जिज्ञासुबोधकमुमुक्षुशब्दस्य कागतिरिति वक्तव्यं। उच्यते। मोक्षं साधुकर्तुमिच्छन्ति मुमुक्षन्तीति मुमुक्षवः॥ तैः मुमुक्षुभिरित्यर्थः॥ "आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु ॥" क्विपमभिव्याप्य ये प्रत्यया विहिताः सनाशंसेत्यादिसूत्रेणोप्रत्ययाद्यास्ते तच्छीलाद्यर्थेस्युरित्युक्तत्वादत्र "सनाशंशभिक्षउ"रिति सूत्रेण उप्रत्ययः। सन्घटितत्वान्मुमुक्षुशब्दस्य। तथाचापरोक्षज्ञानोत्तरं निवृत्तकर्मानुष्ठानेन भगवदिच्छारूपावरणापगमे हि यावत्स्वरूपानन्दभोगो भवतीत्येवं मोक्षं साधुकर्तुमिच्छवो मुमुक्षवः ॥

एवं मुमुक्षुशब्दार्थे परिष्कृते ज्ञानोत्तरं कर्म विवक्षितमिति व्याख्यानं सुगमं। ज्ञानात्पूर्वभाविकर्म तदुत्तरभाविकर्मचेह विवक्षितं स्यादिति शाङ्करव्याख्यानेषूक्तं। ज्ञात्वेत्यत्र परोक्षज्ञाने गृहीतेसति मुमुक्षुर्जिज्ञासुर्भवति। अपरोक्षज्ञाने गृहीते मुमुक्षुशब्देन मुक्तः लोकसंग्रहाय प्रवृत्तो मुमोचयिषुर्गृह्यते इति तेषामाशयः। अपरोक्षज्ञानिपक्षमेवावलंबते शङ्करानन्दः। "अत एव मुमुक्षुभिर्मुक्तैः मुमोचयिषुभिः। इदं गर्भितणिजन्तं रूपं।" इत्याह॥ यदस्माभिरानन्दवृद्ध्यर्थमित्युक्तं तत्स्थाने लोकसंग्रहार्थमित्युक्तं परैः। इदं च नानिष्टमस्माकं॥

"एवं ज्ञात्वे" त्यत्र एवमा, कस्य परामर्श इति विचार्यं। एवं शब्दोहि पूर्वोक्तप्रकारपरामार्शी। "न मां कर्माणि" इति श्लोकोक्तस्य परामर्श इति च स्फुटं। पूर्वश्लोकव्याख्यानएव भावभेदस्य प्रदर्शितत्वेन तदनुगुणं एवं शब्दार्थेऽपि भावभेदो ज्ञायते। तथाहि। ज्ञानी स्वमेव निर्लिप्तं निःस्पृहं मन्येत वा उत श्रीकृष्णं तथा मन्येत वेति विप्रतिपत्तिः। स्वमेव तथा मत्वा मुच्यते इति शांकराः। परयन्तु शंकरानन्दोक्तं "एवं ज्ञात्वा अहंबुध्यादिसाक्षी प्रत्यगेवास्मि देहेन्द्रियादिभ्यो भिन्नः सन् देहेन्द्रियकृतैः कर्मभिर्न बद्धः इत्यात्मनो देहेन्द्रियादिभ्यो भिन्नत्वं देहादिकृतकर्मणामबंधकत्वंच एवं उक्तरीत्या विज्ञाय" इति। श्रीमध्वरामानुजौतु स्वस्वविषयकज्ञानेन नोत्थितिर्भवेदित्यतः परमात्मविषयकज्ञानमेवात्रैवं शब्देन परामर्शमर्हतीति मन्येते। पूर्वश्लोक एवं "इति मां योऽभिजानाति" इत्यत्र मां इत्यभ्यासः परव्याख्यानगलग्राहीति प्रदर्शितं द्रष्टव्यं॥

किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।
तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात्
॥ १६ ॥

वि ॥ कुर्वीति कर्तव्यतयोक्तकर्मस्वरूपं वक्तुं तत्र जिज्ञासाजननाय कर्मणो दुर्ज्ञेयत्वमाह । किमिति ॥ अकर्मपदेन कर्माभावो विरुद्धकर्म च ग्राह्यं । अत्र कर्मविषये कवयोऽपि मोहिताः विभ्रमवन्तः । तर्हि किं तत्स्वरूपं ब्रूहीत्यत आह । तदिति । तस्मात्कवीनामपि मोहविषयत्वादिति वा यत्कर्तव्यत्वादिनोक्तं तत्कर्मेति वा ते जिज्ञासवे प्रवक्ष्यामि । यज्ज्ञात्वाऽशुभात्कर्मबन्धान्मोक्ष्यसे तत्कर्मेति वा ॥ कर्म प्रवक्ष्यामीत्यकर्मविकर्मणोरप्युपलक्षणं । अनुष्ठेयतया प्राधान्यात्कर्मेत्येवोक्तं । यद्वा ते कर्मेत्यत्राकारप्रश्लेषेणाकर्मेत्यपि पदच्छेदो ज्ञेयः ॥

शं० ॥ नन्वत्र कर्म चेत्कर्तव्यं त्वद्वचनादेव करोम्यहं । किं विशेषितेन पूर्वैः पूर्वतरं कृतमिति । उच्यते । यस्मान्महद्वैषम्यं कर्मणि ॥ कथं । किं कर्म इति । किं कर्म किं चाकर्म इति कवयो मेधाविनः अप्यत्र अस्मिन् कर्मादिविषये मोहिताः मोहं गताः ॥ तत् अतः ते तुभ्यं अहं कर्म अकर्म च प्रवक्ष्यामि यत् ज्ञात्वा विदित्वा कर्मादि मोक्ष्यसेऽशुभात् संसारात् । नचैवं त्वया मन्तव्यं कर्म नाम देहादि-

चेष्टा लोकप्रसिद्धं । अकर्मनाम तदक्रिया तूष्णीमासनं किं तत्र बोद्धव्यमिति ॥

रा ॥ वक्ष्यमाणस्य कर्मणो दुर्ज्ञानतामाह । मुमुक्षुणानुष्ठेयं कर्म किं रूपं अकर्म च किं ॥ अकर्मेति कर्तुरात्मनो याथात्म्यज्ञानमुच्यते ॥ अनुष्ठेयं कर्म तदन्तर्गतं ज्ञानं च किंरूपमित्युभयत्र कवयः विद्वांसोऽपि मोहिताः यथावन्न जानन्ति । एवमन्तर्गतज्ञानं यत्कर्म तत्ते प्रवक्ष्यामि यत् ज्ञात्वानुष्ठाय अशुभात् संसारबन्धान्मोक्ष्यसे कर्तव्यकर्मज्ञानं ह्यनुष्ठानफलम् ॥

विचारः

[शङ्कराचार्यः श्लोकस्योत्थानं "पूर्वैः पूर्वतरं कृतं" इति वचनमालंब्योपपादयति ।]

कर्म प्रवक्ष्यामि यज्ज्ञात्वानुष्ठेयं । कर्मशब्देनाकर्मविकर्मणोरुपलक्षणया ग्रहणं । अकर्मविकर्म च हेयत्वेन ज्ञेयमात्रं नानुष्ठेयं । ज्ञात्वेति गीतोक्तिः कर्माकर्मविकर्मसाधारणा । ज्ञात्वानुष्ठेयं ज्ञात्वा परित्याज्यमिति यथा संभवं योजना ग्राह्या । तदिति तस्मादित्यर्थे । कर्माकर्मविकर्मणां दुर्विज्ञेयत्वादित्यर्थः । अथवा यत्तदोर्नित्यसंबन्धात् यज्ज्ञात्वेत्युक्तयच्छब्दप्रतिशिरस्कतया तदित्युक्तिः । अथवा कर्तव्यत्वेनोक्तस्य तदित्यनेन परामर्शः ।। त्रयमपि वृत्त्यां सूचितं द्रष्टव्यं । कवीनामपि कर्मविषये मोहस्त्वग्रे व्यक्तीकरिष्यते ।। कर्मशब्दस्य चलनं सामान्यतो ज्ञातोऽर्थः । तद्विरुद्धं अकर्मेत्युच्यते । नैतदत्र कुरु कर्मेति विहितं अनुष्ठेयं काम्यादिकं कर्मेत्युच्यते । वेदोक्तं स्मार्तं वा ।

संन्यासः अकर्मेत्युच्यते । इदमपि कर्तव्यत्वेन नेह प्रकृतं । एवमादिबाह्यविध्यं हृदि निधाय कर्मयोगानुकूलानुष्ठानत्यागविधानार्थं जिज्ञासामुद्दीपयन् कर्मादिदुर्ज्ञेयत्वमाह भगवानिति फलितोऽर्थः ॥

**कर्मणोह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।**
**अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ १७**

वि ॥ कर्मादिस्वरूपज्ञानमावश्यकमितिभावेनाह ॥ कर्मणोहीति । पूर्वस्मात्कर्माकर्मपदयोरनुवृत्तिः ॥ कर्मणः सकासादकर्म कर्माकरणं विरुद्धकर्म च विविच्य बोद्धव्यं । विकर्मणोनिषिद्धकर्मणश्च कर्माकर्म च विविच्य बोद्धव्यं ॥ अकर्मणश्च कर्म विकर्म च विविच्य बोद्धव्यं ॥ कुत इत्यत आह । गहनेति ॥ पूर्वत्र दुर्ज्ञेयत्वोक्तावपि तच्छापादिप्रबलनिमित्तं न भवति किंतु स्वभावतएवेति वक्तुं गहना कर्मणो गतिरिति पुनर्वचनं ॥ यद्वा कर्म प्रवक्ष्यामीति प्रतिज्ञातं कर्मादिस्वरूपमाह ॥ कर्मणोहीति । अत्र कर्म नः इति विकर्म नः इति अकर्म नः इति पदविभागः ॥ ब्रह्माण इन्द्रोपयाहि विद्वानित्यत्र ब्रह्माण इत्यस्येव भिन्नपदस्यापि न इत्यस्यरेफोत्तरस्य णत्वं ध्येयं । तेन रषाभ्यां नो णः समानपद इत्युक्तावपि छान्दसं णत्वमत्र ध्येयं ॥

(कर्म नो मत्तोभवतीति विकर्म अकर्म च नो मत्तो भवतीत्येवं योजना) (कर्मादिस्वरूपं न स्वतन्त्रं किंतु भगवदधीनं बोद्धव्यमित्यर्थः)। (नः इति बहुवचनं बहुरूपत्वात्) (एवं रूपेण कर्मस्वरूपज्ञानं दुःशकमित्याह। गहनेति। एतच्च श्रोतुरधिकादरजननायोक्तम्॥

शं॥ कस्मात्। उच्यते। कर्मण इति। कर्मणश्शास्त्रविहितस्य हि यस्मादप्यस्ति बोद्धव्यं। बोद्धव्यं चास्त्येव विकर्मणः प्रतिषिद्धस्य। तथा अकर्मणश्च तूष्णीं भावस्य बोद्धव्यं अस्तीति त्रिष्वप्यध्याहारः कर्तव्यः यस्माद्गहना विषमा दुर्ज्ञेया। कर्मण इति उपलक्षणार्थं। कर्मादीनां कर्माकर्मविकर्मणां गतिर्याथात्म्यं तत्वं इत्यर्थः॥

रा॥ कुतोऽस्य दुर्ज्ञानतेत्यत्राह—

यस्मान्मोक्षसाधनभूते कर्मस्वरूपे बोद्धव्यमस्ति। विकर्मणि च नित्यनैमित्तिककाम्यरूपेण तत्साधनद्रव्यार्जनाद्याकारेण च विविधतामापन्नं कर्म विकर्म। अकर्मणि ज्ञाने च बोद्धव्यमस्ति। गहना दुर्विज्ञाना मुमुक्षोः कर्मणो गतिः। विकर्मणि बोद्धव्यं। नित्यनैमित्तिककाम्यद्रव्यार्जनादौ कर्मणि फलभेदकृतं वैविध्यं परित्यज्य मोक्षैकफलतयैकशास्त्रार्थत्वानुसन्धानं तदेतत् व्यवसायात्मिका बुद्धिरेका इत्यत्रैवोक्तामिति नेह प्रपंच्यते॥

विचारः

कर्मणः विकर्मणः अकर्मणः इति पंचमीप्रयोगात् अन्योन्यवैलक्षण्यं तेषां बोद्धव्यमित्यर्थो लभ्यते । अन्येतु षष्ठीप्रयोगत्वेनादाय संबंधसामान्येषष्ठी-इति मन्यन्ते । बोद्धव्यमित्यस्यानन्तरं अस्ति इति सर्वत्राध्याहारं वक्ति शंकर-भाष्यं । 'तत्वं अस्ति' इति पदद्वयस्याध्याहारं मन्यन्ते तच्छिष्याः । कर्मणि अकर्मणि विकर्मणिच वेद्याः प्रमेयविशेषास्संतीति तेषामाशयः ॥

अकर्मशब्देन कर्माभावः विकर्मशब्देन प्रतिषिद्धं निन्दितं वा कर्मोच्यत इति श्रीमध्वाभिप्रायः । एवमेवाभिप्रयन्ति शाङ्कराश्च । तौ शब्दावन्यथा व्याचष्टे रामानुजाचार्यः । अकर्मेत्यसौ ज्ञानमाह ॥ विकर्मेति विविधं कर्म । कर्माभावस्य प्रतिषिद्धकर्मणोवात्रानुपयोगं मन्यते । कर्मण इत्यनेन मोक्षसाधनं कर्म गृह्णाति । विकर्मशब्देन नित्यनैमित्तिककाम्य-भेदेनकर्मवैविध्यं साधनद्रव्यार्जनादिबाहुविध्यंच विवक्षितमित्यभिप्रैति ॥ "गहना कर्मणो गतिः" इति कर्मण एव गहनगतित्वोक्त्या नात्रो-पलक्षणया विकर्माकर्मणोर्ग्रहणमुचितमिति देशिको दर्शयति । तथाच विकर्मज्ञानयोर्बोद्धव्यत्वेपि दुर्ज्ञेयत्वं नास्तीत्याशयोऽवगम्यते । इदं सर्व चिन्त्यं । अकर्मशब्देन ज्ञानस्य ग्रहणमनुचितं । कर्मेति मोक्षसाधन-सर्वकर्मणां गृहीतत्वात् विकर्मशब्देन पुनर्नित्यनैमित्तिककर्मणोर्ग्रहणं व्यर्थं । नित्यनैमित्तकयोर्निष्कामनयानुष्ठानेसति मोक्षसाधनत्वात् । गहनगतित्व-निरूपणावसरे व्याख्यानेनैव कर्मवैविध्यस्योपपादनसंभवात् "विकर्मे"ति स्वपदेनोपादानं नीरसं । अन्यथा यथा कर्मणि वैविध्यं दृश्यते तथा ज्ञानेपि वैविध्यस्य वक्तुं शक्यत्वेन तद्वैचित्र्यबोधकस्यापि पदस्य प्रयोगः प्रतीक्ष्यः स्यात् ॥ यन्मतं कर्माभावस्य विरुद्धकर्मणश्च प्रकृतानुपयुक्तत्वं तदयुक्तं । परित्याज्यांशज्ञानं विना सत्कर्मज्ञानस्यासिद्धेः । गहनगतित्वं कर्मण एवेत्यभिप्रायश्च न युक्तः । कर्मणो गहनत्वेनाकर्मविकर्मणो

रपि गहनत्वात्। अकर्मशब्देनात्मयाथात्म्यज्ञानपरिग्रहे तु तस्य गहनत्वं प्रसिद्धं। "किं कर्म किमकर्मेति कवयोऽप्यत्रमोहिताः" इति अकर्मविषयेऽपि कविमोहस्योक्ततया तदानुगुण्येन गहनगतित्वं तस्याप्यभिप्रेतं इत्येव वर्णनीयं। तस्मात्कर्माकर्मविकर्मशब्दैः सत्कर्मकर्मत्यागदुष्कर्मणामेव ग्रहणमुचितं। अन्यच्च गमकं वक्ष्यते। इत्यलं पल्लवितेन।

"सिद्धे सत्यारम्भो नियमार्थ" इति न्यायेन कर्माकर्मविकर्मणां ज्ञातव्यत्वोक्तिरिह नियमसूचनार्था। कर्मादिज्ञानेन मोक्षो लभ्यते। नान्येनेति नियमः। यथोक्तं। "अज्ञात्वा भगवान् कस्य कर्माकर्मविकर्मकं। दर्शनं याति हि मुने कुतोमुक्तिश्च तद्विना" इति गीताभाष्योदाहृत प्रमाणे।

"कवयोऽप्यत्र मोहिताः" "गहना कर्मणोगतिः" इति निर्बन्धोक्तेर्भावो विचार्यः। आपाततः कर्मादीनां दुर्ज्ञेयत्वं सुवचं। कर्मशब्दस्य उत्क्षेपणापक्षेपणाकुंचनप्रसारणभेदेन तार्किकैर्निरूपितत्वात्। संचितप्रारब्धागामिभेदेन सांख्यादिभिर्विवेचितत्वात्। नित्यनैमित्तिककाम्यभेदेनापि विवेकसंभवात्। सात्विकराजसतामसतया वा शुक्लकृष्णकृष्णशुक्लत्वेन च क्वचिद्विभक्तत्वाच्च। शास्त्राणामनेकत्वाच्छास्त्रप्रवर्तकानां बहुविधत्वाद्देशकालयुगाधिकारिवर्णाश्रमवयोवस्थादिभेदेन संकोचव्याकोचाभ्यां कर्मविधेरनेकत्वात्। इत्यादि दौर्घट्यं शङ्करानन्देन प्रदर्शितं। अत्रोक्ताविभागाः किमात्यन्तिकं कविभिर्दुर्ज्ञेया इति चिन्त्यते। एतादृशदौर्घट्यमेव 'कविमोह' 'गहनगति'त्वोक्तीः सार्थकत्वेन निर्वहति किं इति संदिह्यते। नेति नः प्रतीयते। यतः श्रीमध्वस्तात्पर्यनिर्णये 'कर्म नः' इति पदच्छेदमभिप्रयन् मत्तः (भगवतः) कर्मेति व्याख्यातवान्॥ कर्मशब्दस्य धर्मपरत्वात्। धर्मस्य च वेदगम्यत्वाद्भगवदाराधनरूपत्वाच्च। भगवतस्तु दुर्ज्ञेयत्वात् कर्मादीनां दुर्ज्ञेयत्व भगवद्दुर्ज्ञेयत्वानुबन्धीति भाति॥

रागादित्यागपूर्वकमीश्वरार्पणबुद्ध्या कर्मानुष्ठानं कर्मयोगः । अत्र ईश्वरांशस्य परमदुर्ज्ञेयत्वात्कर्मयोगस्यदुर्गमत्वं युज्यते ॥

(परोक्तरीत्या लौकिकशास्त्रबाहुल्यादिनैव यदि दुर्ज्ञेयत्वं घटनीयं तर्हि तन्न कविमोहनायालं इति भाति )( अत्रार्थे भागवते उक्तं एकादशस्कन्धे पठितव्यं तृतीयाध्याये । निमिरुवाचाविर्होत्रं प्रति—

" कर्मयोगं वदत नः पुरुषो येन संस्कृतः ।
विधूयेहाशुकर्माणि नैष्कर्म्यं विन्दते परं ॥

एवं प्रश्नमृषीन्पूर्वमपृच्छं पितुरन्तिके ।
नाब्रुवन् ब्रह्मणः पुत्रास्तत्र कारणमुच्यतां ॥ " इति ॥

अस्य तात्पर्यमाचार्योक्तं—

(' जानन्तोपि हि दुर्ज्ञेयः प्रश्नोऽयं ज्ञानिनामपि ।
इति वेदयितुं ब्रह्मपुत्रानोचुर्निमेः पुरा ॥ इति तत्रंभागवते ।"इति।

आविर्होत्र उवाच—

"(कर्माकर्मविकर्मेति वेदवादो न लौकिकः ।
वेदस्य चेश्वरात्मत्वात्तत्र मुह्यन्ति सूरयः ॥ ४४ ॥

परोक्षवादो वेदोयं बालानामनुशासनं ।
कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथा ॥ ४५ ॥

नाचरेद्यस्तुवेदोक्तं स्वयमज्ञोजितेन्द्रियः ।
विकर्मणाह्यधर्मेण मृत्योर्मृत्युमुपैति सः ॥ ४६ ॥

वेदोक्तमेव कुर्वाणो निस्संगोऽर्पितमीश्वरे ।
नैष्कर्म्यं लभते सिद्धिं रोचनार्थं फलश्रुतिः "॥ ४७ ॥)

इति ॥ "कवयोप्यत्र मोहिताः" "गहना कर्मणो गतिः" इति गीतावचनसंवादित्वेन "तत्र मुह्यन्ति सूरयः" इति भागवतवाक्यमनुसंधेयं ॥ कर्मादीनां दुर्ज्ञेयत्वं च तन्त्रभागवतोक्तं द्रष्टव्यं। विकर्मशब्दोऽधर्मवाचीत्यत्र 'विकर्मणाह्यधर्मेणे"ति भागवतवाक्यं संवादरूपं। एतेन विविधं कर्मविकर्मेति रामानुजभाष्यमरुचिग्रस्तं ज्ञायते ॥ भागवतवाक्ये कर्मविकर्मपदयोर्मध्यपतितस्याकर्मशब्दस्याप्यानुगुण्येन कर्माभावपरत्वं उचितं। इत्यतो विवृतिव्याख्यानमेव समंजसमवगन्तव्यं ॥

**कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः।**
**स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्मकृत्**
**॥ १८ ॥**

वि ॥ कर्मादिस्वरूपं प्रपंचयंस्तद्बोधं स्तौति कर्मणीति। वर्णाश्रमोचितकर्मणि क्रियमाणे सति अकर्म कर्माभावं स्वस्य यः पश्येत्। भगवानेव कर्ता नाहं स्वतन्त्रः। किंतु तदधीनकर्तृशक्तिकस्सन् करोमीति यः पश्येदित्यर्थः॥ अकर्मणि जीवकर्तृककर्मकरणहीने सुप्त्यादौ। जीवस्य कर्माकरणावस्थायामिति यावत्। कर्म यः पश्येत्। जीवव्यापारस्य भावे अभावे च सदा भगवानेव महदादिस्वप्नादौ गजादिकरोतीति पश्येदित्यर्थः ॥ अनेन हरेः परानपेक्षया कर्तृत्वं स्वस्य तदधीनकर्तृत्वं ज्ञात्वा वर्णाश्रमविहितानुष्ठानं कर्मेत्युक्तं भवति॥

(एतेन कर्माकरणमकर्म निषिद्धं कर्म विकर्मेत्युक्तप्रायं। कर्मादिबोधं स्तौति स इति॥ य एवं पश्येत्स बुद्धिमान् ज्ञानी। प्रशंसायां मतुप्। स एव युक्तः ज्ञानोपायवान्। स एव कृत्स्नकर्मकृत्। स्वयोग्यकृत्स्नकर्मफलस्य ज्ञानस्य मोक्षस्य प्राप्तप्रायत्वादिति भावः। यद्वा करश्शब्दः सकारान्तः कर्मविधिवाची। तेन मीयते विषयीक्रियत इति कर्म। उपपदस्य टिलोपो मातेः कनिन्प्रत्ययः। "करोऽस्मिन्मीयत इति कर्म जीव उदाहृतः" इति निर्वचनात्। विधिबद्धत्वात्कर्मशब्दार्थो जीवः। कर्मविधेस्तत्फलस्य चाभावादकर्मपदेनेश्वरो ग्राह्यः। तथाच कर्मणि विधिबद्धे जीवे अस्वातन्त्र्याद्धेतोरकर्म कर्माभावं यः पश्येत्। तथाऽकर्मणि विष्णौ कर्म यः पश्येत् सर्वकर्मकर्तृत्वात्तदीयमेव सर्वकर्मेति पश्येत्सबुद्धिमान् ज्ञानीत्येवं प्राग्वदेव स्तुतिपरतार्थस्य ध्येया॥

शं॥ किं पुनस्तत्वं कर्मादेर्यद्बोद्धव्यं वक्ष्यामीति प्रतिज्ञातं। उच्यते। कर्मणीति॥ कर्मणि क्रियते इति कर्म व्यापारमात्रं तस्मिन्कर्मणि अकर्म कर्माभावं यः पश्येदकर्मणि च कर्माभावे (कर्तृतंत्रत्वात्प्रवृत्तिनिवृत्त्योः वस्त्वप्राप्यैव हि सर्वएव क्रियाकारकादिव्यवहारोऽविद्याभूमावेव) कर्म यः पश्येत्पश्यति स बुद्धिमान् मनुष्येषु सयुक्तो योगी कृत्स्नकर्मकृत् समस्तकर्मकृच्च स इति स्तूयते कर्माकर्मणोरितरेतरदर्शी। ननु किमिदं विरुद्धमुच्यते। कर्मण्यकर्म यः

पश्येदित्यकर्मणि च कर्मेति । न हि कर्माकर्म स्यादकर्मवा कर्म । तत्र विरुद्धं कथं पश्येद्द्रष्टा ॥ न, अकर्मैव परमार्थतः सत् कर्मवदवभासते । मूढदृष्टेर्लोकस्य तथा कर्मैवाकर्मवत् ॥ तत्र यथाभूतदर्शनार्थमाह भगवान् ॥ कर्मण्यकर्म यः पश्येदित्यादि ॥ अतो न विरुद्धं । बुद्धिमत्त्वाद्युपपत्तेश्च बोद्धव्यमिति च यथाभूतदर्शनमुच्यते । नच विपरीतज्ञानादशुभान्मोक्षणं स्याद्यज्ज्ञात्वा मोक्ष्यसेऽशुभादिति चोक्तं ॥ तस्मात्कर्माकर्मणीविपर्ययेण गृहीते प्राणिभिस्तद्विपर्ययग्रहणनिवृत्त्यर्थं भगवतो वचनं 'कर्मण्यकर्म यः' इत्यादि । न चात्र कर्माधिकरणमकर्मास्ति, कुण्डे बदराणीव । नाप्यकर्माधिकरणं कर्मास्ति, कर्माभावत्वादकर्मणः ॥ अतो विपरीतगृहीते एव कर्माकर्मणी लौकिकैर्यथा मृगतृष्णिकायामुदकं शुक्तिकायां वा रजतं । ननु कर्मैव सर्वेषां न क्वचिद्व्यभिचरति । तन्न । नौस्थस्य नाविगच्छन्त्यां तटस्थेष्वगतिषु नगेषु प्रतिकूलगतिदर्शनात् । दूरेषु चक्षुषासन्निकृष्टेषु गच्छत्सु गत्यभावदर्शनात् । एवमिहाप्यकर्मण्यहं करोमीति कर्मदर्शनं कर्मणि चाकर्मदर्शनं विपरीतदर्शनं येन तन्निराकरणार्थमुच्यते । कर्मण्यकर्म यः पश्येदित्यादि । तदेतदुक्तप्रतिवचनमप्यसकृदत्यन्तविपरीतदर्शनभाविततया मोमुह्यमानो लोकः श्रुतमप्यसकृत्तत्त्वं विस्मृत्य मिथ्याप्रसंगमवतार्यावतार्य चोदयतीति

पुनःपुनरुत्तरमाह भगवान्दुर्विज्ञेयत्वं चालक्ष्य वस्तुनः ॥ 'अव्यक्तोयमचिन्त्योयं' 'न जायते म्रियते' इत्यादिनात्मनि कर्माभावः श्रुतिस्मृतिन्यायप्रसिद्धउक्तो वक्ष्यमाणश्च। तस्मिन्नात्मनि कर्माभावेऽकर्मणि कर्मविपरीतदर्शनमत्यन्तनिरूढं यतः 'किं कर्म किमकर्मेति कवयोप्यत्र मोहिताः।' देहाद्याश्रयं कर्मात्मन्यध्यारोप्याहं कर्ता ममैतत्कर्म मयास्य फलं भोक्तव्यं इति च। तथाहं तूष्णीं भवामि येनाहं निरायासोऽकर्मा सुखी स्यामिति कार्यकरणाश्रयव्यापारोपरमं तत्कृतं च सुखित्वमात्मन्यध्यारोप्य न करोमि किंचित्तूष्णीं सुखमासमित्यभिमन्यते लोकः॥ तत्रेदं लोकस्य विपरीतदर्शनापनयनायाह भगवान् कर्मण्यकर्म यः पश्येदित्यादि ॥ अत्र च कर्म कर्मैव सत् कार्यकारणाश्रयं कर्मरहितेऽविक्रिय आत्मनि सर्वैरध्यस्तं यतः पंडितोऽप्यहं करोमीति मन्यते । अत आत्मसमवेततया सर्वलोकप्रसिद्धे कर्मणि नदीकूलस्थेष्विव वृक्षेषु गतिप्रातिलोम्येनाकर्मकर्माभावं यथाभूतं गत्यभावमिव वृक्षेषु यः पश्येदकर्मणि च कार्यकरणव्यापारोपरमे कर्मवदात्मन्यध्यारोपिते तूष्णीमकुर्वन् सुखमासं इत्यहंकाराभिसंधिहेतुत्वात्तस्मिन्नकर्मणि च कर्म यः पश्येत् । यएवं कर्माकर्मविभागज्ञः सबुद्धिमान् पंडितो मनुष्येषु सयुक्तो योगी ॥ कृत्स्नकर्मकृच्च सोऽशुभान्मोक्षितः कृतकृत्यो भवतीत्यर्थः ॥

अयं श्लोकोऽन्यथा व्याख्यातः कैश्चित्। कथं। नित्यानां किल कर्मणामीश्वरार्थेऽनुष्ठीयमानानां तत्फलाभावादकर्माणि तान्युच्यन्ते गौण्या वृत्त्या॥ तेषां चाकरणमकर्म। तच्च प्रत्यवायफलत्वात्कर्मोच्यते गौण्यैव वृत्त्या। तत्र नित्ये कर्मण्यकर्म यः पश्येत् फलाभावाद्यथा धेनुरपि गौरगौरुच्यते क्षीराख्यं फलं न प्रयच्छतीति तद्वत्॥ तथा नित्याकरणेत्वकर्मणि कर्म यः पश्येन्नरकादिप्रत्यवायफलं प्रयच्छतीति। नैतद्युक्तं व्याख्यानमेवं ज्ञानादशुभान्मोक्षानुपपत्तेर्यज्ज्ञात्वा मोक्ष्यसेऽशुभादिति भगवतोक्तं वचनं बाध्येत॥ कथं॥ नित्यानामनुष्ठानादशुभात्स्यान्नाम मोक्षणं। न तु तेषां फलाभावज्ञानात्। न हि नित्यानां फलाभावज्ञानमशुभमुक्तिफलत्वेन चोदितं नित्यकर्मज्ञानं वा न च भगवतैवेहोक्तं। एतेनाकर्मणि कर्मदर्शनं प्रत्युक्तं। नह्यकर्मणि कर्मेति दर्शनं कर्तव्यतयेह चोद्यते। नित्यस्य तु कर्तव्यतामात्रं। न चाकरणान्नित्यस्य प्रत्यवायो भवतीति विज्ञानात्किंचित्फलं स्यात्। नापि नित्याकरणं ज्ञेयत्वेन चोदितं। नापि कर्माकर्मेति मिथ्यादर्शनादशुभान्मोक्षणं बुद्धिमत्त्वं युक्तता कृत्स्नकर्मकृत्त्वादि च फलमुपपद्यते स्तुतिर्वा। मिथ्याज्ञानमेव हि साक्षादशुभरूपं कुतोन्यस्मादशुभान्मोक्षणं॥ न हि तमस्तमसोनिवर्तकं भवति। ननु कर्माणि यदकर्मदर्शनमकर्मणि वा कर्मदर्शनं

न तस्मिन्मिथ्या ज्ञानं। किं तर्हि गौणं फलभावाभावनिमित्तं न कर्माकर्मविज्ञानादपि गौणात्फलस्य श्रवणात्॥ नापि श्रुतहान्यश्रुतपरिकल्पनायां कश्चिद्विशेषो लभ्यते। स्वशब्देनापि शक्यं वक्तुं नित्यकर्मणां फलं नास्त्यकरणाच्च तेषां नरकपातः स्यादिति। तत्र व्याजेन परव्यामोहरूपेण कर्मण्यकर्म यः पश्येदित्यादिना किं॥ तत्रैवं व्याचक्षाणेन भगवतोक्तं वाक्यं लोकव्यामोहार्थमिति व्यक्तं कल्पितं स्यात्। न चैतच्छद्मरूपेण वाक्येन रक्षणीयं वस्तु॥ नापि शब्दान्तरेण पुनःपुनरुच्यमानं सुबोधं स्यादित्येवं वक्तुं युक्तं॥ कर्मण्येवाधिकारस्ते इत्यत्र हि स्फुटतरउक्तार्थे न पुनर्वक्तव्यो भवति। सर्वत्र च प्रशस्तं बोद्धव्यं च कर्तव्यमेव॥ न निष्प्रयोजनं बोद्धव्यमित्युच्यते। न च मिथ्याज्ञानं बोद्धव्यं भवति॥ तत्प्रत्युपस्थापितं चावस्थाभासं॥ नापि नित्यानामकरणादभावात्प्रत्यवायभावोत्पत्तिर्नासतो विद्यते भाव इति वचनात्कथमसतः सज्जायेत इति च दर्शितं। असतस्सज्जन्मप्रतिषेधादसतः सदुत्पत्तिं ब्रुवताऽसदेव सद्भवेत् सच्चासद्भवेदित्युक्तं स्यात्। तच्चायुक्तं सर्वप्रमाणविरोधात्। न च निष्फलं विदध्यात्कर्मशास्त्रं दुःखरूपत्वात्। दुःखस्य च बुद्धिपूर्वकतया कार्यत्वानुपपत्तेः। तदकरणे च नरकपाताभ्युपगमेऽनर्थायैवोभयथापि करणे अकरणे च शास्त्रं निष्फलं कल्पितं स्यात्। स्वाभ्युपगमविरोधश्च नित्यं निष्फलं

कर्मेत्यभ्युपगम्य मोक्षफलायेति ब्रुवतः। तस्माद्यथाश्रुत-एवार्थः कर्मण्यकर्मेत्यादेः। तथाच व्याख्यातोऽस्माभिः श्लोकः॥

रा॥ कर्माकर्मणोर्बोद्धव्यमाह। अकर्मशब्देनात्र कर्मेत-रत्प्रस्तुतमात्मज्ञानमुच्यते। कर्मणि क्रियमाणएवात्मज्ञानं यः पश्येत्। अकर्मणि चात्मज्ञाने वर्तमानएव यः कर्म पश्येत्। किमुक्तं भवति। क्रियमाणमेव कर्मात्मयाथात्म्यानु-संधानेन ज्ञानाकारं यः पश्येत्. तच्च ज्ञानं कर्मयो-गान्तर्गततया कर्माकारं यः पश्येदित्युक्तं भवति। क्रियमाणे हि कर्मणि कर्तृभूतात्मयाथात्म्यानुसंधानेन तदुभयं संपन्नं भवति। एवमात्मयाथात्म्यानुसंधानगर्भं कर्म यः पश्येत् स बुद्धिमान् कृत्स्नशास्त्रार्थवित् मनुष्येषु स युक्तः मोक्षायार्हः स एव कृत्स्नकर्मकृत कृत्स्नशास्त्रार्थकृत्॥

विचारः

(अयं श्लोकः कूटश्लोकेष्वेक इव भाति। ये लेखकगणेशमोहनार्थं रचिता इति भारतोपोद्घाते कथिताः। अत एव श्लोकस्य प्रथमार्धव्याख्याने बाहुविध्यमवगम्यते।)

"(कुरु कर्मैवे"ति विधिना प्रकरणारम्भः "कवयोप्यत्र मोहिताः" "गहना कर्मणो गतिः" इति विषयस्य दुर्ज्ञेयत्वकथनं। "कर्म प्रवक्ष्यामी"ति प्रतिज्ञा॥ एते न विस्मर्तव्याः प्रकृतश्लोकार्थविचारे॥ कैश्चित्कर्मकर्तव्यता-

प्रकरणमिदं इत्यर्थं विस्मृत्येव श्लोको व्याख्यातः । अतस्स आरम्भ एवात्र स्मारितः । अधिकमग्रे वक्ष्यते ॥

(ननु कर्माकर्मज्ञानी स्तूयते इति श्लोकेन गम्यते । प्रवक्ष्यामीति प्रतिज्ञानुसारेण कर्माकर्मस्वरूपं तु नाद्यापि प्रपंचितं । स्वरूपकथनानन्तरं खलु तज्ज्ञानवतः स्तुतिः कर्तव्या । अतः कथमुपपद्यते अन्यथोक्तिरिति चेत् अविहितस्य स्तुत्ययोगाद्वाक्यभेदेन कर्मादिकं प्रतिपाद्य तत्स्तुतिः क्रियते इत्येव वाक्यार्थः । वाक्यभेदो यथा । यच्छब्दद्वयपरित्यागेन कर्मण्यकर्म पश्येत् अकर्मणि च कर्म पश्येत् इति विधायकमेकं वाक्यं । पश्चाद्यत्तच्छब्दयोगेनेदमेवानुवादरूपमपरं वाक्यमिति ।

(ईश्वरस्वातन्त्र्यं जीवपारतन्त्र्यं च प्राधान्येन श्लोकार्थ इति श्रीमध्वव्याख्यानं । द्वेधाऽयमर्थो लभ्यते । कर्मणि क्रियमाणेसति नाहङ्करोमि अपि तु भगवान्स्वतन्त्रः कर्ता इति मत्वा स्वस्य स्वतन्त्रकर्तृत्वाभावेन स्वकर्तृककर्माभावं यः पश्येदिति प्रथमपादार्थः । सुषुप्तौ जीवस्य निष्क्रियत्वेन तदापि भगवान् जागर्तीति जीवकर्माकरणावस्थायां च भगवद्व्यापारसद्भावं यः पश्यतीति द्वितीयपादार्थः । "य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः ।" इति हि श्रुतिः । यद्वा कर्मशब्दो जीववाची । "करोस्मिन्मीयत इति कर्मजीव उदाहृतः । विधिशब्देनामितत्वादकर्म भगवान्हरिः ।" इति नारदीये (गी. ता.)। कर इति सकारान्तोऽदृष्टवाची क्रियावाची वा । प्रसिद्धश्च जीवे कर्मशब्दः पञ्चरात्रे । अकर्म भगवान् । विधिबद्धे जीवे स्वतन्त्रकर्माभावं विध्यबद्धे स्वतन्त्रे हरावकर्माभिधे स्वतन्त्रं कर्म यः पश्यतीति पादद्वयार्थः

(एतेन स्वातन्त्र्यास्वातन्त्र्यविवक्षया विध्यबद्धत्वबद्धत्वविवक्षयाच कर्मण्यकर्माकर्मणिकर्मेत्युक्तमिति पर्यवसितं । प्रथमव्याख्याने द्विवारं पठितः

अकर्मशब्दः कर्माभावपरः। द्वितीयव्याख्याने प्रथमोऽकर्मशब्दः कर्माभावपरः। द्वितीयः श्रीहरिपरः। इति विवेकः॥

उक्तयोः प्रथमं गीताभाष्यगतं व्याख्यानमनूद्य निराह वेङ्कटनाथः। "यच्चात्र माध्वव्याख्यानं कर्मणि क्रियमाणेसति अकर्म विष्णोरेव कर्म सदाहं चित्प्रतिबिंबः स्वातन्त्र्येण न किंचित्करोमीति स्वस्य कर्माभावं पश्येत् इति, तत्तुच्छं। किं कर्म किमकर्मेति इति अकर्मणश्च बोद्धव्यं इति च पूर्वश्लोकयोः कर्माभाववाचिनएवाकर्मशब्दस्यात्र प्रत्युक्तस्य तदैकार्थ्यौचित्येन विष्णुकर्मवाचित्वायोगात्। तस्यकर्तारमपि मां विद्ध्यकर्तारं इति भगवदुक्त्या विष्णोरपि वस्तुतः कर्मासंभवाच्च।" इति। अयं निरासोभ्रममूलः। अकर्मेत्यत्र अकारोविष्णुवाचीत्यस्माभिर्व्याख्यातामिति भ्रान्त्वा दूषणमुक्तं भाति। न तथा श्रीमध्वभाष्यं प्रमेयदीपिकायां व्याख्यातं। न किंचित्करोमीति स्वस्य कर्माभावं पश्येदिति वाक्येन अकर्मशब्दः कर्माभावपरत्वेन व्याख्यातोऽवगम्यते। 'विष्णोरेव कर्म' इति वचनं तु प्रपञ्चनार्थं प्रवृत्तं। एतेन अकर्मशब्दस्य यदैकार्थ्यभङ्गो दोषत्वेनाभिहितः तदयुक्तं। सर्वत्रकर्माभावार्थस्यापरित्यक्तत्वात्। यच्च विष्णोरपि वस्तुतः कर्मासंभववचनं तदपि भ्रममूलमेव। निर्विशेषपरब्रह्मवादस्य जयदुंदुभिः "तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययं" इति श्लोक इति मत्वानेन विष्णोर्निष्क्रियत्वमुच्यते। अयं दुंदुभिः प्रागेव मूकीकृतो द्रष्टव्यः।

अस्य श्लोकस्य शाङ्करभाष्यं विस्तरतः स्वमतं प्रसाध्य वृत्तिकारव्याख्यान प्राचीनं प्रत्याचष्टे। श्रीधरस्तु तत्परित्यज्यान्यथा व्याख्यातवान्। मधुसूदननीलकण्ठशङ्करानन्दास्त्वीषदनुसरन्ति स्म॥

आह मधुसूदनः "कर्मणि ज्ञानकर्मणि दृश्ये जडे सद्रूपेण स्फुरणरूपेण चानुस्यूतं सर्वभ्रमाधिष्ठानमकर्मावेद्यं स्वप्रकाशचैतन्यं परमार्थदृष्ट्या यः पश्येत्। तथा अकर्मणि च स्वप्रकाशे दृग्वस्तुनि कल्पितं कर्म दृश्यं माया-

मयं न परमार्थसत्, दृग्दृश्ययोः संबन्धानुपपत्तेः। 'यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति । सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥' इति श्रुतेः ॥ एवं परस्पराध्यासेऽपि शुद्धं वस्तु यः पश्यति । मनुष्येषु मध्ये स एव बुद्धिमान्नान्यः।" इति ॥( इदं मधुसूदनीयमसङ्गतमेवेति नीलकण्ठो निराह "कर्म कुरु कर्म प्रवक्ष्यामीत्यनुष्ठेयकर्मप्रस्तावे तत्वज्ञानानवसरात् । 'नापि कर्तुरीप्सिततमं कर्म' इति पारिभाषिक्या कर्मसंज्ञया दृश्यस्य कर्मशब्दार्थत्वं ग्रहीतुं शक्यं॥ तस्याः घुटिभादिसंज्ञानामिवागमार्थनिर्णयानर्हत्वात्" इति )॥( मधुसूदनीयं निराहोत्कर्षदीपिकाकारोऽपि "तदुपेक्ष्यं । ज्ञानकर्मणो घटादिरूपस्याप्रस्तुतत्वात् । एवं ज्ञात्वेत्यादिनोपक्रम्य किंकर्मेत्यनेन तत्र वैषम्यं प्रदर्श्य तस्य कर्मणो बोद्धव्यं तत्वमस्तीति निरूप्यानेनश्लोकेन तत्कथनस्योचिततत्वेन ज्ञानकर्मणोऽकर्तव्यस्य वर्णनमसङ्गतमिति दिक् ।" इति )॥ एतेन शङ्करानन्दीयमपिप्रत्युक्तं । यदत्रोक्तं "क्रियते सृज्यते इति कर्म ब्रह्मकार्यं महदादिस्थूलांतं जगत् । तस्मिन् कर्मणि सर्वत्र जगति अकर्म न विद्यते यत्र कर्म तदकर्म । 'निष्फलं निष्क्रियं' इति श्रवणान्निष्क्रियं परं ब्रह्म यः पश्येत् । प्रतीतं प्रपंचं सर्वं ब्रह्मैव यः पश्येदित्यर्थः । अकर्मण्युक्तलक्षणे ब्रह्मणि कर्मचोक्तलक्षणं जगद्यः पश्येद्ब्रह्मविवर्तत्वेन स्वतस्सत्ताभावाद्रजतं शुक्तिमिव सलिलं मरुमिव जगत्सर्वं ब्रह्मैव यः पश्यतीत्यर्थः" इति )॥

(अत्राध्यासवर्णनस्यासाङ्गत्यं स्वकीयाभ्यां नीलकण्ठोत्कर्षदीपिकाकृद्भ्यां चाभ्युगतमिति अर्धंतावदवसितं नो भारस्य )। येनकेनापि प्रकारेणाध्यासप्रक्रिया श्लोकाक्षरेषु प्रवेष्टव्येत्याग्रहश्चात्र स्फुटः । कर्मेत्यनेन कृत्स्नजगद्ग्रहणे प्रमाणं नोक्तमन्यतरेणापि ॥ इह यदि कर्मशब्दो जगद्वाची तर्हि अतीतेषु त्रिषु च श्लोकेषु स एवार्थो वर्णनीयः । कुरुकर्मेत्यत्रे जगद्वाचित्वमसंबद्धं । तथैव किं कर्म किमकर्म कर्मप्रवक्ष्यामीत्यत्रच । तथैव कर्माकर्मविकर्मशब्दानां अव्यवहितातीते श्लोके जगद्वाचित्वमनुचितं )॥

(शंकरभाष्यं संक्षेपेणानूद्य नीलकण्ठस्तु विस्तरेण स्वाभिप्रेतार्थमन्यथा कथयति ॥ ग्रंथविस्तरभयात्तस्याशयमात्रं संगृह्यते ) गहना कर्मणोगतिरित्युक्तस्य प्रपंचनं " कर्मण्यकर्म यःपश्येत्स बुद्धिमान् " इत्यंशः । तत्ते कर्म प्रवक्ष्यामीत्यस्य प्रपंचनं " अकर्मणि च कर्म यः पश्यति स युक्तः " इति वाक्यं । एवं विभज्य कर्मणि कर्माकर्मविकर्मरूपे अकर्म शास्त्रदृष्टया तद्वैपरीत्यं पश्यति बुधः इत्यर्थः । यथा यागः श्रद्धाहीनेन कृतोऽप्यकृतएव ॥ दांभिकेन कृतो विकर्मणि पर्यवस्यति । एवमौदासीन्यमकर्मापि शक्तस्यार्तपरित्राणाभावात् विकर्म भवति । विकर्मापि हिंसा शास्त्रीययागे सत्कर्मभवतीत्यादयो दृष्टान्ताः । तथाच लोकदृष्टया कर्मादिकं शास्त्रदृष्टया विपरीते पर्यवस्यतीति कर्मणः गतिः पर्यवसानं गहना । अथ द्वितीयपादार्थः। तत्ते कर्मप्रवक्ष्यामीत्यत्र कर्माकर्मणोः प्रवचनं प्रतिज्ञातं । अस्य व्याख्यानं 'अकर्मणि कर्मच यः पश्येत्स युक्तः' इति । अकर्मणि स्पन्दशून्ये कूटस्थे ब्रह्मणि कर्म सस्पन्दं बाह्यं वियदादि आन्तरं प्रमात्रादिकं आधाराधेयभावेन उपादानोपादेयभावेन अधिष्ठानाध्यस्तभावेन वा पश्यन्तः शास्त्रविदः कर्माणि कुर्वन्तीति योगयुक्ताः। इति । यद्वा कर्माकर्मणी वक्तव्यत्वेन बोद्धव्यत्वेन चोपक्षिप्यात्र तयोर्लक्षणप्रदर्शनमुचितं । अतो यदकर्मणाविशेषित तदेव कर्म नान्यदिति कर्मलक्षणं । यच्च कर्मणाविशेषितं तदेवाकर्म । अक्षरार्थस्तु कर्म यज्ञादिकं ससाधनं, तत्राकर्म स्पन्दशून्यं कूटस्थं ब्रह्म यःपश्येत् कर्मतदंगेषु ब्रह्मदृष्टिमध्यस्येत् अहंक्रतुरित्युक्तप्रकारेण । अकर्मणि प्रत्यकचेतने स्पन्दात्मकं कर्माध्यस्त । अकर्मण्यध्यस्तं कर्त्रादि तत्त्वमसीति वाक्याद्बाधित्वाऽकर्मतत्वप्रतिपात्तिः । इति ॥)

(अत्रोच्यते । यदनेन विभक्तं " गहना कर्मणोगति " रित्यस्य प्रपंचनरूपः "कर्मण्यकर्मे" त्यंशः इत्यादि तत्केवलमुत्प्रेक्षामूलं । गमकस्याभावादनुक्तत्वाच्च । गहनगतित्वात्प्रवक्ष्यामिति प्रवचनप्रतिज्ञायाः पूरणं कृत्स्नतः

श्लोकात्कृतं इत्येवोचितमित्युक्तविभागक्लेशोऽनुपपन्नः ॥ किंच लोकदृष्ट्या उचितमनुचितवा कर्म शास्त्रदृष्ट्या विपरीतमेवेति को नियमः । क्वचिंत्स्यात्क्वचिन्नस्यात् । शास्त्रमेव शरणं शास्त्रमनुसृत्य कर्तव्यमिति बोधनाय कर्मणि अकर्मपश्येदित्युक्तिः दुर्घटा । कर्मशब्देन कर्माकर्मविकर्मणां ग्रहणं अकर्मशब्देन तेष्वेकैकस्य विपरीतस्य ग्रहणं । इतिचानुचितं । प्रायपाठश्च विरुणद्धि ॥ द्वितीयपादव्याख्यानंच क्लिष्टं । अस्पन्दे ब्रह्मणि जगतः अधिष्ठितत्व हि विवक्षितमित्यस्याशयः ॥ एवं सति " कर्मकुरु " " कर्मप्रवक्ष्यामीत्यनुष्ठेयकर्मप्रस्तावे तत्वज्ञानानवसरात् " इति कुतोऽनेन मधुसूदनीयमेतदर्थप्रतिपादकमेव दूषितं । कर्मशब्दस्य वियदादिप्रमात्रादिजगद्वाचित्वमनुचितं प्रकरणविरुद्धमेव । परंप्रत्याख्याय दूषितव्याख्यानमनुसृत्य स्वयंपुनर्व्याख्यासीति विस्मयो जायते ॥ यद्वेत्यस्य द्वितीयव्याख्याने परस्पराध्यासनिरूपकाणि वाक्यानि यदि बहिष्कृतानि तदा उक्तार्थो भागश उपादेयः कथंचित्स्यात् । यदकर्मणाविशेषितं तत्कर्मेत्युक्तं । अकर्मा श्रीहरिः । तत्प्रीत्यर्थं कृतं तेन विशेषितमेव कर्म नान्यत् इत्यर्थः साधुः। कर्मविशेषितमेवाकर्मेत्यस्योपपादनेत्वध्यास प्रक्रियाऽऽकृष्टा ॥ अध्यासस्य श्लोकारोहस्तु सुतरां दुर्घटः । इति ॥

अथ शङ्करभाष्यार्थः किंचिद्विचार्यते ॥ आत्मनोऽकर्तृत्वं संघातस्यैव कर्तृत्वमिति भावयता कर्माणि कर्तव्यानीति तस्याशयः । देहेन्द्रियान्तःकरणादिभिः क्रियमाणेसति कर्मणि किमायातं निष्क्रियस्यात्मनः इति प्रथमपादाभिप्रायः ॥ अकर्मणि लोकदृष्ट्या यत्कर्माभावत्वेन गृहीतं तत्र वस्तुतः कर्म विद्यते इति द्वितीयपादाशयः ॥ अस्येदं तदीयानां निरूपणं "यथा निगूढांगुलिमुष्टौ बहिःक्रियाभावेप्यन्तरंगुलीनां मुकुलीभावसिद्धेः कारणभूतांगुलिनिरोधनक्रिया विद्यते, यथा निमीलितचक्षुषः बहिर्दर्शनक्रियाभावेऽपि पक्ष्मनिरोधनक्रिया विद्यते, तथा तूष्णीमवस्थायामपि नाहं किंचित्करोमीति कर्तुराग्रहरूपा मानसीक्रिया विद्यत एव ।" इति ॥

अत्रोच्यते । आत्मनो निष्क्रियत्वात् कर्मण्यकर्मदर्शनं स्यान्मोचकं । अकर्मणि चक्षुर्निमीलनादिषु कर्मदर्शनं तु कथं स्यान्मोचकं । देवदत्तः उपरतबहिष्क्रियोऽप्यान्तरक्रियावानेव विद्यते इत्यनुसन्धानवान् किमिह बुद्धिमान् युक्तः कृत्स्नकर्मकृत् इति स्तूयते । किंचाकर्मणीत्यस्य सर्वव्यापारोपरमेऽक्षरार्थेसति बहिर्व्यापारोपरममात्रं तेन विवक्षितं इत्युक्तेर्गमकं नास्ति । बाह्यकर्माभावविवक्षया यद्यकर्मणोऽनात्मधर्मत्वमभिप्रेतं कुतोनोक्तं तथा । किमनया कुटिलयाऽकर्मापि कर्मेति प्रसाधनयेति । उक्तानि शाङ्करव्याख्यानानि ब्रह्मजगतोरधिष्ठानाध्यस्तत्वं पुरस्कृत्य प्रवृत्तानीह कर्मकर्तव्यतोपदेशप्रकरणे संगतानि न भवन्तीत्यालक्ष्य यौक्तिकः श्रीधरोऽन्यथा व्याख्याति । कर्मणि परमेश्वराराधनलक्षणे कर्मणि विषये अकर्म कर्मेदं न भवतीति यः पश्येत् । तस्य ज्ञानहेतुत्वेन बन्धकत्वाभावात् । अकर्मणि विहिताकरणे कर्म यः पश्येत् ॥ प्रत्यवायापादकत्वेन बंधहेतुत्वा"दिति । एतेन कर्माकर्मशब्दौ बन्धाबन्धसाधनपरावित्युक्तं भवति । अयं किंचित्प्राचीनवृत्तिकारव्याख्यानमनुसरतीति भाति यच्छङ्करभाष्येऽपव्याख्यानत्वेन निराकृतं । वृत्तिकारस्त्वाह । "कर्मणि नित्ये कर्मणि अकर्म फलाभावात् यः पश्येत् यथा धेनुरपि गौरगौरित्युच्यते क्षीरं न प्रयच्छतीति । नित्याकरणे अकर्मणि च कर्म यः पश्येन्नरकादिप्रत्यवायफलं प्रयच्छतीति स बुद्धिमा"नित्यादि । एतत्प्रायशस्सर्वैश्शाङ्करैः प्रत्याख्यातं दृश्यते । परंतु निरासकेभ्योऽध्यासशिरस्केभ्यो व्याख्यानेभ्यो वृत्तिकारपरिष्कार उपादेयतरोऽवगम्यते । अयं हि तैः कृतो निरासः । (१) नित्यादीनां कर्मणां अबन्धकत्वबन्धकत्वज्ञानं कथं मोक्षसाधनं । (२) करणाभावरूपस्याकर्मणः प्रत्यवायहेतुत्वमनुपपन्नं । 'कथमसतस्सज्जायेते'ति श्रुतेः । (३) नित्यकर्मणां फलं नास्ति । अकरणाच्च तेषां नरकपातः स्यात् इति स्वशब्देन वक्तुं शक्ये कुतएवं गीतावाक्यगतिः । इति । इदं दूषणत्रयमपि सुलभसमाधानं । आद्यं

यथा । बन्धकत्वादिज्ञानं परम्परयासाधनं भवितुमर्हति । विहितानुष्ठाना-विहितत्यागाभ्यां चित्तशुद्धिं तत्वज्ञानं च लब्ध्वोद्भूतो भवतीति न कोऽपि विरोधः ॥ द्वितीयं यथा । अभावस्य भाववत्पदार्थविशेषत्वमज्ञात्त्वेव परकीयैः कृतं 'कथमसतः' इति श्रुत्युपादानं अभावासतोर्विवेकापरिज्ञान-मूलमित्युपेक्ष्यते ॥ अकरणस्य प्रत्यवायहेतुत्वं च शास्त्रप्रसिद्धं । एतेन यन्मधुसूदनेनात्र कल्पितं । "न सन्ध्यावन्दनादिपरित्यागो दुरितावहः । किंतु तत्कर्तव्यतावेलायां यद्व्यापारान्तरमनुष्ठीयते तत् भावरूपं प्रत्यवायं जनयतीति ॥ तदपि प्रत्युक्तं । अकरणस्य साक्षात्प्रत्यवायहेतुत्वे बाधका-भावात् ॥ तृतीयं यथा । स्वशब्देन वक्तुं शक्ये इति शङ्का तु निरासकैः स्वस्व-भाष्याद्युपर्यपर्यि प्रतिष्ठिता विद्यते इत्यालक्ष्य समाधेया वर्तते । आत्मा न कर्ता देहेन्द्रियादिकमेव कर्तृ इत्यादिस्पष्टवचन कुतो न प्रयुक्तं इति शङ्कर-भाष्योपर्यप्युक्त दूषणं तिष्ठति । एवमन्येषु व्याख्यानेषु च ॥ अत्र "यस्तूभयो-स्समोदोषस्सनैकतरेणोद्भावनीयः" इति न्यायो विस्मृत इवाभाति ॥ कूट-श्लोकोयमिति सर्वेषामपि हृद्यं स्यात्समाधानम् ॥

(एवं वृत्तिकारनिरासे समाहिते सति नित्यकर्मणामबन्धकत्वादिकमादाय-श्लोकः प्रवृत्त इति पक्षो नातिहेयो दृश्यते ॥ भगवत्पूजात्वेनाबन्धकत्वादिक-मादाय व्याख्यातवान् श्रीधरः ॥ स्वतन्त्रकर्तृत्वादिकमादायेश्वरजीवयोः कर्माकर्मणी उक्ते इति श्रीमध्वः ॥

अथायं प्रथमाद्यर्थसंग्रहः ॥

१. (श्रीमध्वः (a) कर्मणि विहितानुष्ठाने (गी. भा.) अकर्म जीवस्याकर्तृत्वं अस्वतन्त्रत्वात् । अकर्मणि=जीवव्यापाराभावदशायां च कर्म=भगद्व्यापारं ॥ (b) कर्मणि जीवे अकर्मणि=विष्णौ (गी. ता.) कर्म सर्वव्यापारं ॥

२. श्रीधरः ॥ कर्मणि विहिते भगवदाराधनरूपे नित्यादौ वा ॥ अकर्म=अबन्धकत्वं ॥ अकर्मणि=विहिताकरणे कर्म=बन्धकत्वं पापं ॥

३. मधुसूदनः ॥ (*a*) कर्मणि=विहिते प्रतिषिद्धे वा अकर्म=अभिमानाभावेसति अबन्धकत्वं अकर्मणि=कर्माभावे अकरणे अभिमानेसति कर्म बन्धं ॥ (*b*) यद्वा कर्मणि दृश्ये अकर्म=अधिष्ठानं स्वप्रकाशं ब्रह्म ॥ अकर्मणि ब्रह्मणि कर्म=जगत् अध्यस्तं ॥

४. शङ्करानन्दः ॥ (*a*) कर्मणि चेष्टामात्रे अकर्म कर्माभावं ॥ अकर्मणि देहेन्द्रियव्यापारोपरमलक्षणे तूष्णीमवस्थायां कर्म क्रियां; (*b*) यद्वा कर्मणि ब्रह्मकार्ये सृज्यते इति जगत् ॥ अकर्म=निष्क्रियं ब्रह्म सर्वं ब्रह्मैवेति ॥ अकर्मणि ब्रह्मणि कर्म=जगत् ॥

५. नीलकण्ठः ॥ (*a*) कर्मणि कर्माकर्मविकर्मसु, अकर्म=तत्तद्विपरीतं शास्त्रदृष्ट्या ॥ अकर्मणि ब्रह्मणि कर्म=जगत्; (*b*) यद्वा कर्मणि यज्ञादिके ससाधने अकर्म ब्रह्म ॥ 'अहं क्रतुः' ॥ अकर्मणि ब्रह्मणि कर्म जगत् ॥ अकर्म विशेषितं कर्म कर्मविशेषितं अकर्म इति द्वयोर्लक्षणं ॥

६. शङ्करभाष्यं ॥ कर्मणि=व्यापारमात्रे अकर्म कर्माभावं। कर्मणोऽनात्मधर्मत्वात् अकर्मणि च बाह्यव्यापारोपरतौ च कर्म=आन्तरव्यापारं ॥

७. वृत्तिकारः ॥ कर्मणि=नित्यादौ अकर्म फलाभावादबन्धकत्वं ॥ अकर्मणि=नित्याद्यकरणे कर्म=बन्धकत्वं नरकादिप्रत्यवायं प्रयच्छतीति ॥

८. रामानुजभाष्यं ॥ कर्मणि विहितानुष्ठाने अकर्म ज्ञानं। अकर्मणि ज्ञाने कर्म क्रियां। कर्मयोगस्य ज्ञानकर्मगर्भितत्वादेकैकस्याप्यन्याकारत्वेनोक्तिरिति ॥

अथ द्वितीयार्धं किंचिद्विचार्यते। यः पश्येत्स बुद्धिमान् इति कोऽर्थ-भेद इति शङ्कायां "बुद्धिमान्" इति मतुपा ज्ञानिप्रशंसाऽवगम्यते। "भूम-निन्दाप्रशंसासु भवन्ति मतुबादयः" इत्युक्तेः॥

बुद्धिमान् युक्तः कृत्स्नकर्मकृत् इति प्रथमार्धोक्तस्य पश्यतः स्तुतिर-वगंतव्या। कृत्स्नकर्मफलस्य स्वयोग्यस्य प्राप्तप्रायत्वात्सर्वाकरणेऽपि कृत्स्न-कर्मकृदित्युक्तिरुपपद्यते इति श्रीमध्वः। सर्वतस्संप्लुतोदकस्थानीये कर्माणि सर्वफलानामन्तर्भावात् "यावानर्थ" इत्युक्तन्यायेन कृत्स्नकर्मकृद्भवतीति श्रीधरः। यद्वा कृत्स्नानि सर्वाणि यदृच्छयाप्राप्तान्याहारादीनि कर्माणि कुर्वन्नपि युक्त एव सः। कलञ्जभक्षणादिकमपि न तस्य दोषायेत्यपि श्रीधरः। "सर्वेषां श्रौतानां स्मार्तानां इतरेषांच पुण्यकर्मणां कर्ता भवति। सर्वाणि सर्वलोकैः कृतानि पुण्यकर्माण्यनेन कृतानि भवन्ति" इति शङ्करानन्दः। ज्ञानिना अन्यकृतसुकृतानिच लभ्यन्ते इत्येतदात्मैक्यवाद-मालंब्योक्तमित्युपेक्ष्यम्। अयं पक्षान्तरमप्याह "कृत्स्नानि अनेक-कल्पार्जितानि सञ्चितान्याधुनिकजन्मकृतान्यपि प्रवृत्तफलानि कर्माणि नानायोनिप्रापकाणि स्वयाथात्म्यविज्ञानखड्गेन कृन्तति छिनत्तीति कृत्स्न-कर्मकृत्" इति॥

नीलकण्ठस्तु "बुद्धिमान्" "युक्तः" "कृत्स्नकर्मकृत्" इति विशेष्यत्रयस्य भावं अन्यथा स्फोरयति। कर्माकर्मविकर्माख्ये कर्मणि शास्त्रतो वैपरीत्यं पश्यन् बुद्धिमान् इत्युच्यते। स्पन्दशून्ये ब्रह्मणि सस्पन्दं बाह्यं आन्तरंच प्रपंचं अकर्मणि कर्म यः पश्येदित्युक्तरीत्या पश्यन्पुरुषः 'युक्तः' इत्यच्यते। विद्यांचाविद्यांचेति ईशावास्योपनिषदि ज्ञानकर्मणोस्स-मुच्चयस्योक्तत्वात् इहापि प्रथमार्धश्लोके अकर्मणिचेति चकारः प्रयुक्तः। एतेन यदि पुरुषः केवलं बुद्धिमान् नासौ कृत्स्नकर्मकृत्। यदिच केवलं

युक्तो नासौ कृत्स्नकर्मकृत् । बुद्धिमत्त्वयुक्तत्वयोस्समुच्चये तु कृत्स्नकर्मकृद्भवतीत्यस्याभिप्रायः । पक्षान्तरमप्याह ॥ "यद्वा द्विविधं कर्मणि कर्मदर्शनं परोक्षमपरोक्षंच । तत्राद्यवान् ज्ञानकर्मसमुच्चयानुष्ठाता बुद्धिमानुच्यते ॥ अपरोक्षमपि द्विविधं । उपास्यसाक्षात्काररूपं तत्वसाक्षात्काररूपंच ॥ तत्राद्यमपि व्याकृताव्याकृतरूपोपास्यभेदेन द्विविधं । तत्रापि व्याकृतं सूत्रं कार्यं । तद्दर्शी विगतदेहाहंकारत्वाद्योगशास्त्रे विदेह उच्यते । अव्याकृतं कारणं । तद्दर्शी प्रकृतिलयउच्यते । अनयोरुपासनयोस्संभवासंभवसंज्ञयोस्समुच्चयो विधीयते "अन्यदेवाहुः संभवात्" इत्यादिना । सोयं युक्त इत्युच्यते । अस्याप्यग्रे कर्तव्यमवशिष्टमस्तीति नायमपि कृत्स्नकर्मकृत् । किंतु यस्य कर्मबाधेनाकर्मदर्शनं मुख्यमस्ति सएव कृतकृत्यत्वान्मुख्यः कृत्स्नकर्मकृदिति । एतेष्वाद्यो मनुष्येषु देहाभिमानिष्वेव बुद्धिमानित्यक्रान्तदर्शित्वादकविरेव । मध्यमौ क्रान्तदर्शिनावपि तत्वविषये मूढत्वात्कवयोऽप्यत्र मोहिता इत्युक्तौ । एतयोर्व्यवधानेनाशुभान्मुक्तिः । उत्तमस्तुजीवन्नेवाशुभान्मुक्त इति श्लोकार्थः प्रतिभाति" ॥ इति । एतेन बुद्धिमत्त्वं युक्तत्वं चैकीभूय कृत्स्नकर्मकृद्भवतीत्येकोर्थः । बुद्धिमत्त्वं युक्तत्वं कृत्स्नकर्मकृत्त्वं इति पर्वभेदमादाय पूर्वस्मादुत्तरं उत्कृष्टं सोपानं इत्यपरोर्थश्चोक्तो भवति । अत्रेदं वक्तव्यं । सर्वमिदमतिक्लिष्टं भाति ॥ "विद्यांचाविद्यांचे" ति श्रुत्या ज्ञानकर्मणोः समुच्चयः पुरुषार्थसाधनं इति यदुक्तं तद्भ्रममूलं । समुच्चयस्य मोक्षहेतुत्वं हि शांकराणामत्यसम्मतं । विद्यया देवलोकः अविद्यया कर्मणा पितृलोकः इति हि शांकरव्याख्यानं ईशावास्यमंत्रस्य । यद्ययं मंत्रोक्तो देवलोकार्हो विद्यावान् तर्हि अविद्यावान् केवलं कर्मी पितृलोकार्हः । "अकर्मणि कर्म पश्यन्युक्तः" इति गीतोक्त इति वक्तव्यं । ब्रह्माध्यस्तं जगत्पश्यतः किं पितृलोकप्राप्तावेव ललाटरेखा । मन्त्रे विद्यायास्सकाशादविद्याया जघन्यत्वेपि वैपरीत्येन युक्तस्य बुद्धिमतस्सकाशादुत्तमत्वं कुतो नीलकण्ठेन व्याख्यातं । "यज्ञा-

त्वा मोक्ष्यसेऽशुभात्" इति मोक्षसाधनप्रवचनं प्रतिज्ञाय देवलोकपितृलोकप्रापककाम्यकर्मप्रवचनकरणेन प्रतिज्ञाभंगश्च स्फुटः । विद्याविद्याशब्दितदेवतोपासनकर्मणोस्समुच्चयः कृत्स्नकर्मकृत्वेनाभिप्रेतां जीवन्मुक्तिं कथं नाम संपादयेत् ॥ यद्वेत्युक्तं द्वितीयव्याख्यानं क्लिष्टतरं अयुक्तं च । "संभूतिं च विनाशं चे"तीशावास्यमन्त्रार्थापरिज्ञानमूलमिदं । संभूतिशब्दो हि शङ्करभाष्ये हिरण्यगर्भपरो व्याख्यातः । असंभूतिरविद्याऽव्याकृताख्या कामकर्मबीजेतिच । अणिमादिसिद्ध्यर्थं हिरण्यगर्भोपास्तिः । प्रकृतौ सुषुप्त्यर्थमव्याकृतोपास्तिरिति विवेकोऽपि तदीयग्रन्थेषूपपादितः । सम्भूतिशब्दं कार्यब्रह्मपरतया असंभूतिशब्दं कारणप्रकृतिपरतया प्रथमं व्याख्याय "संभूतिं च विनाशंचे"ति मन्त्रे तु सम्भूतिशब्दः असंभूतिपरः इत्यपूर्वव्याकरणानुसारेण व्याख्यातं च शांकरैः ॥ आस्तां तथापि तद्व्याख्यानं समीचीनं । अकर्मणि ब्रह्मणि कर्म जगत् अध्यस्तं इति पश्यन्युक्तशब्दाभिहितः कथं नाम कारणप्रकृतिकार्यप्रकृत्युपासको भवेत् ॥ अणिमादिसिद्ध्यर्थं वा प्रकृतौ लयार्थं वा उपासकोह्यज्ञः ॥ अकर्मणि कर्म यः पश्यति सतूक्तप्रकारेण ब्रह्मदर्शी ॥ तस्मान्मन्त्रगीतयोरैकार्थ्यं पररीत्या दुर्घटं ॥ उपनिषदि कार्यप्रकृत्युपासकस्य कारणप्रकृत्युपासकस्य च "अन्धन्तमः प्रविशन्ती"ति महाननर्थ उक्तः ॥ इमावुपासकौ क्रान्तदर्शिनौ युक्तः इति गीतायां स्तुताविति नीलकण्ठआह । अहो गीताश्रुत्योरेकवाक्यता । तस्माद्बुद्धिमान् युक्तः कृत्स्नकर्मकृदिति प्रशंसात्रयमपि पूर्वार्धोक्तज्ञानिनएकस्यैव विवक्षितमिति समीचिनं ॥ सहि स्वपारतंत्र्यं ईश्वरस्वातंत्र्यं च जानन् ईश्वरं स्वतंत्रकर्तारं स्वं तदधीनकर्तारं च ज्ञात्वा विहितमनुष्ठायाकर्मविकर्मणीपारित्यज्य युक्तस्सन्नपरोक्षं लब्ध्वा स्वयोग्यसंपूर्णमुक्त्याख्यं फलमाप्नोति । अतः श्रीमदाचार्योक्तएव श्लोकार्थो विज्ञेयः ॥

यस्य सर्वे समारंभाः कामसंकल्पवर्जिताः ।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः॥१९

वि ॥ न केवलं कर्तृत्वाभिमानत्यागेन वर्णाश्रमोचितकृत्स्नकर्मकृत्त्वं । किंतु कामादिपरित्यागेनापि भाव्यमिति भावेन कर्मस्वरूपमेव प्रपंचयति यस्येत्यादिश्लोकपंचकेन । यस्य पुंसः सर्वे समारंभाः सर्वकर्मोपक्रमाः कामसंकल्पवर्जिताः । कामः फलेच्छा । अनेनेदं स्वर्गादि साधयिष्यामीति संकल्पः। ताभ्यां हीनाः। तं ज्ञानाग्निदग्धकर्माणं। हरेरेव स्वतंत्रकर्तृत्वं ज्ञात्वा पश्चात्स्वस्य स्वातंत्र्येण कर्माभावज्ञानित्वं ज्ञानाग्निदग्धकर्मत्वं । तादृशं बुधाः ज्ञानिनः पंडितं तत्वज्ञानिनमाहुः॥

शं ॥ तदुक्तकर्मादौ अकर्मादिदर्शनं स्तूयते यस्येति । यस्य यथोक्तदर्शिनः सर्वे यावन्तः समारंभाः सर्वाणि कर्माणि समारभ्यन्त इति समारंभाः कामसंकल्पवर्जिताः कामैः तत्कारणैश्च संकल्पैर्वर्जिताः मुधैव चेष्टामात्रा अनुष्ठीयंते प्रवृत्तेन चेत् लोकसंग्रहार्थं निवृत्तेन चेत् जीवनमात्रार्थं ॥ तं ज्ञानाग्निदग्धकर्माणं कर्मादौ अकर्मादिदर्शनं ज्ञानं तदेवाग्निस्तेन ज्ञानाग्निना दग्धानि शुभाशुभलक्षणानि कर्माणि ह्यस्य । तमाहुः परमार्थतः पंडितं बुधाः ब्रह्मविदः॥

रा ॥ प्रत्यक्षेण क्रियमाणस्य कर्मणो ज्ञानाकारता कथमुपपद्यते इत्यत्राह । यस्य मुमुक्षोस्सर्वे द्रव्यार्जनादिलौकिककर्मपूर्वकनित्यनैमित्तिककाम्यरूपकर्मसमारंभाः कामवर्जिताः फलसंगरहिताः संकल्पवर्जिताश्च प्रकृत्या तद्गुणैश्चात्मानमेकीकृत्यानुसंधानं संकल्पः प्रकृतिवियुक्तात्मस्वरूपानुसंधानयुक्ततया तद्रहिताः तमेवं कर्मकुर्वाणं पंडितं कर्मांतर्गतात्मयाथात्म्यज्ञानाग्निना दग्धप्राचीनकर्माणमाहुः तत्वज्ञाः । अतः कर्मणो ज्ञानाकारत्वमुपपद्यते ॥

विचारः

"तत्ते कर्म प्रवक्ष्यामी"ति प्रतिज्ञातार्थ एव प्रपंच्यते यस्येत्यादिपंचभिः श्लोकैः ॥

ईश्वर एव स्वतन्त्रकर्ता अहं जीवस्तु परतन्त्रः अतो नाहङ्करोमि स्वातन्त्र्येणेत्यनुसन्धानं बुद्धिमल्लक्षणं इति। कर्मस्वरूपनिरूपणावसरे प्रथमं "कर्मण्यकर्मे"ति श्लोकेन प्रसाध्य। तदनन्तरं प्रकृतादिपञ्चभिर्नकेवलं कर्तृत्वानभिमानः किंतु कामसकल्पवर्जनं च कर्मयोगस्वरूपत्वेन ज्ञातव्यं इत्युच्यते॥ अतीतश्लोकार्थेन यस्येत्यादि पंचश्लोक्यर्थं च मिलित्वा सत्कर्मस्वरूपे ज्ञाते सति कामादित्यागपूर्वकं ईश्वरार्पणबुद्ध्या कर्मानुष्ठानं कर्मयोग इत्यर्थोऽधिगम्यते ॥

परे तु विदुषां कर्मदर्शनं यस्येत्यादिकैः षड्भिः श्लोकैः स्तूयते इत्याहुः। ब्रह्मार्पणं ब्रह्महविरित्युक्तार्थस्य कर्मस्वरूपप्रपंचनानन्तर्भाव एवोचित इत्यभिप्रायेण श्रीमदाचार्यैः पंचश्लोकीमेव प्रतिज्ञातकर्मप्रपंचपरत्वेनाह ॥ इममर्थं श्रीधरोऽपि गृह्णाति ॥ "स्पष्टयति यस्येत्यादि पंचभिः ।" इत्यवतारिकया ।

इमं श्लोकं जीवन्मुक्तपरतयैव प्रायशस्सर्वे शाङ्करा व्याकुर्वते ॥ अत एव शङ्करभाष्यं "मुधैव चेष्टामात्रा अनुष्ठीयन्ते प्रवृत्तेन चेल्लोकसंग्रहार्थं निवृत्तेन चेज्जीवनमात्रार्थं ।" इति ॥ एवं शङ्करानन्दोऽपि "तं जीवन्मुक्तं पण्डा कल्याणी सर्वत्र ब्रह्ममात्रावगाहिनी अखण्डात्मिका वृत्तिः अस्य सञ्जातेति पण्डितः" इति ॥ मधुसूदनोऽपि संचितागामिकर्मनाशविवक्षया ज्ञानाग्निदग्धकर्माणं इति पदं व्याख्याय "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्" (IV-1-13) इति ब्रह्मसूत्रं प्रमाणयति ॥

एवं अपरोक्षज्ञानिमात्रपरतया श्लोकव्याख्याने गमकं तु न दृश्यते । कामसङ्कल्पवैधुर्येण कर्मणां कर्ता हि कर्मयोगी । भगवदर्पणज्ञानं तस्य कर्माण्यबन्धकानि करोतीति वाक्यार्थस्य निर्दुष्टत्वात् ॥ अपरोक्षज्ञान्येवात्र विवक्षितः तस्य दह्यमानं कर्म प्राचीनमेवेत्यादिकल्पनं क्लिष्टं ॥ श्रीधरवेङ्कटनाथौ तु श्लोकं आरुरुक्ष्वारूढोभयविवक्षया व्याचक्षाते ॥ आह वेङ्कटनाथः ॥ "आरुरुक्षुविषये समारम्भाः कर्माणि कामसङ्कल्पेन फलेच्छया वर्जिताः । तं बुधाः पण्डितमाहुः ॥ तत्र हेतुः यतस्तैस्समारंभैर्जातेन ज्ञानाग्निना दग्धानि कर्माणि यस्य तं ॥ आरूढविषये तु यस्य परमार्थदर्शिनः सर्वे लौकिका वैदिका वा समारम्भाः वृथाचेष्टामात्ररूपा भवन्ति ॥ ज्ञानीहि प्रवृत्तश्चेल्लोकसंग्रहार्थं निवृत्तश्चेज्जीवनार्थं चेष्टते" इति ॥

तथाच शांकरेषु केचिदारूढजीवन्मुक्तपर एवेति वदंति । अन्येत्वारुरुक्ष्वारूढोभयपर इति वदन्तीति ज्ञायते ॥ वस्तुतस्तु जिज्ञासुकर्मयोगिपरत्वं समीचीनं भाति । अधिकं "ज्ञानाग्निदग्धकर्माणं" इति पदव्याख्याने सूच्यते ॥

समारंभा इति । कर्मोपक्रमा इति विवृत्यां ॥ आरभ्यंत इत्यारंभाः कर्माणि इति शांकराः । देहेन्द्रियव्यापारा इति शंकरानन्दः । द्रव्यार्ज-

नादिलौकिककर्मपूर्वकनित्यनैमित्तिककाम्यरूपकर्मसमारंभाः इति रामानुजा-चार्यः ॥॥

(कामसंकल्पवर्जिता इति कामशब्दः फलेच्छावाचीति सर्वेभ्युपयन्ति। संकल्पशब्दस्त्वनेकधा व्याख्यातः । कामितस्य सम्यक्त्वबुद्धिः संकल्पः इति शंकरानन्दः । कामस्यहेतुः संकल्पः इति शंकरादयः । "( संकल्पप्रभवान्कामान्" इति तेषां गमकं । रामानुजदेशिकयोराशयस्त्वेवं ज्ञायते ॥ "(संकल्पोऽत्र न कर्मानुष्ठानसंकल्पः । तदभावेऽनुष्ठानायोगात् । नापि फल-संकल्पः कामशब्देनकृतकरत्वात् । 'सं' इत्येकीकारे 'कल्पः' भ्रान्ति-ज्ञानं ॥ प्रकृत्या देहरूपेण परिणतया एकीकरणं नाम गुणहेतुके कर्मविशेषे स्वहेतुत्वानुसंधानं । प्रकृतिगुणभूतानां सत्वरजस्तमसां देवत्वमनुष्य-त्वादिसन्निवेशानां स्थौल्यकार्श्यशुक्लकृष्णादीनांच स्वात्मानंप्रति गुणत्वे नानुसन्धानं । एतेनास्वे गृहादौ स्वमिति बुद्धिरपि संगृहीता ।" इति)। ( तथाच देहात्मैक्यभ्रमः संकल्प इत्युक्तं भवति )। अतः कामसंकल्पवर्जिताः इत्यस्य कामं विहाय आत्मानं देहभिन्नं ज्ञात्वेत्यर्थ उक्तो भवति)॥( अनेनेदमह साधयिष्यामीति स्वस्वातन्त्र्यज्ञानपूर्वकोभिमानस्संकल्प इति श्रीमध्वाशयः । ((पश्यन्तु विवृतिं) यत्तु देशिकेन "(संकल्पोत्रनकर्मानुष्ठानसंकल्पः । तदभावे अनुष्ठानायोगात् ।" इत्युक्तं तन्न )।( स्वतन्त्रकर्तृत्वानुसन्धानं विनाप्यनुष्ठानस्य संभवात् यत्तु देवत्वादिकं केवलं दैहिकं नस्वारूपिकं । इत्यनेनाभिप्रेतं तद्बहुप्रमाणविरुद्धं ॥ यद्यपि कृष्णोऽहं कृशोहं इत्यादयो भ्रमा एव । तेषा-मिह संकल्पशब्देन विवक्षातु क्लिष्टा। कामशब्दसहपठिततया संकल्पशब्दस्य तदनुबन्धिनः कर्तृत्वाभिमानस्यैव ग्रहणस्यौचित्यात् । किंच रामानुजव्या-ख्यानरीत्या अतीतश्लोकोहि कर्मणोज्ञानाकारतां ज्ञानस्य कर्माकारतां चाह। तस्योपपत्त्यर्थं खलुप्रवृत्तं "यस्ये"ति पद्यं । आत्मनोदेहाभिन्नत्वज्ञानं ज्ञान-कर्मणोरितरेतराकारतावादस्यानुकूलं कथं भवेत् । किंच कथं नाम देहात्मभेद-

ज्ञानं प्राचीनकर्माणि दहेत्। तर्हि भगवत्प्रपत्तिर्व्यर्था प्रसज्येत या "सर्वधर्मा"नित्यादिनोक्ता बहुमानिता परकीयैरपि। तस्मात् "अनेनेदं स्वर्गादिसाधयिष्यामीति संकल्पः।" इति विवृत्युक्तं समीचीनं। अहंकारो ह्यनर्थहेतुरिति तत्रतत्रोच्यते। यथान्यत्र गीतासु,

"इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथं।
असौ मया हतश्शत्रुर्हनिष्ये च परानपि॥
आढ्योभिजनवानस्मि कोऽन्योस्ति सदृशो मया।
यक्ष्ये दास्यामि मोदिष्ये इत्यज्ञानविमोहिताः॥" इति॥

(ज्ञानाग्निदग्धकर्माणमिति॥ अत्र दाहकज्ञानप्रकारः "कर्मण्यकर्म यः पश्ये"दित्युक्तः इति प्रायशस्सर्वैरभ्युपगम्यते। तत्रत्यव्याख्यानवैचित्र्यमनुसृत्येहापि ज्ञानप्रकारो बहुधोपपाद्यते॥ कर्मणां मिथ्यात्वदर्शनं ज्ञानशब्देन विवक्षितमिति शाङ्करा मन्यन्ते॥ शंकरानन्दस्तु कर्मण्यकर्मदर्शनं अविवक्षित्वाऽऽशयमाह॥ "यद्यद्धि कुरुते जंतुस्तत्तत्कामस्य चेष्टितं इति न्यायात्कर्मसु प्रवृत्तेः कारणं कामस्तत्कारणं संकल्प एव॥ आरम्भाणां तद्वर्जितत्वे स्वार्थं परार्थं वा विदुषः प्रवृत्तिरनुपपन्नासती शरीरयात्रामात्रावशिष्टा। सापि तात्कालिकी। तत्रापि कामाद्यभावाद्वेगवर्जिता ज्ञानाग्निनिदग्धा च भवतीति सूचितं भवति" इति। कर्मयोगान्तर्गतयाथात्म्यज्ञानं विवक्षितमिति रामानुजाचार्यः। जीवास्वातन्त्र्येश्वरस्वातन्त्र्यज्ञानं इति श्रीमध्वः॥

(दग्धकर्मत्वोक्त्याऽपरोक्षदग्धपुण्यपापादीनि विवक्षितानि इति मधुसूदनः। दग्धप्राचीनकर्माणीति रामानुजाचार्योऽपि॥ निर्मूलिताशेषसोपाधिकविहिताविहितकर्माणीति शङ्करानन्दः। दग्धकर्मेत्यत्र कर्मशब्देन "तदधिगम उत्तरपूर्वाघयो"रिति ब्रह्मसूत्रोक्तप्रकारेण (IV-1-13) संचितागामिकर्माण्येवाभिप्रेतानि यान्यपरोक्षज्ञानमात्रनिवर्त्यानि इत्येषां आशयः स्फुटः।

प्राचीनकर्माण्यविवक्षित्वा यान्यद्यैव क्रियन्ते तानि कर्माणि भगवद्भक्तथादिभिः शुद्धीक्रियमाणान्याग्रहाद्यकलुषितानि जिज्ञास्वनुष्ठितानि विवक्षितानि स्युरित्युक्तौ बाधकं न दृश्यते ॥ यदि ज्ञानशब्देनापरोक्षमेव ग्राह्यं तर्हि "तद्यथैषिकातूलमग्नौ प्रोतं प्रदूयतैवं हैवास्य सर्वे पाप्मानः प्रदूयन्ते" इति छान्दोग्योक्तप्राचीनकर्माणि ग्राह्यानि भवन्ति । कर्मण्यकर्मेत्युक्तं स्वास्वातंत्र्यपूर्वकश्रीहरिस्वातंत्र्यज्ञानं तु कर्मयोग्यपरोक्षज्ञान्युभयसमं । तस्माज्जिज्ञास्वनुसन्धानस्य तत्कार्यभूतकर्मशुद्ध्यादिकस्य चात्र बहिष्कारे निमित्तं नास्तीति भाति ॥ अतएव वाक्यं प्रमेयदीपिकायां "मिथ्यात्वज्ञानेन कर्मणामुपमर्दो ज्ञानाग्निदग्धकर्मत्वं इति व्याख्यानमसत् । परमेश्वरस्यैव कर्तृत्वं ज्ञात्वा स्वस्य स्वातन्त्र्येण कर्माभावज्ञानमेव ज्ञानाग्निदग्धकर्मत्वं ।" इति ॥

**त्यक्त्वा कर्मफलासंगं नित्यतृप्तो निराश्रयः ।**
**कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः॥२०**

वि ॥ कामसंकल्पवर्जितत्वमात्रेण न कर्मस्वरूपं पूर्णं । किंतु कर्मफलस्नेहत्यागेनापि भाव्यमित्याह ॥ त्यक्त्वेति । कर्मणि फले चासङ्गं स्नेहं च त्यक्त्वा नित्यतृप्तो निराश्रयः नित्यतृप्तनिराश्रयभगवत्सरूपोऽस्मीति ज्ञानवान् । कर्मण्यभिप्रवृत्तोऽपि स नैव किंचित्करोति स्वातंत्र्याभावात् । अनिराश्रय इति वा पदविभागः । भगवदाश्रयत्वादनिराश्रयइत्यर्थः

शं ॥ यस्तु कर्मादौ अकर्मादिदर्शी सः अकर्मादिदर्शनादेव निष्कर्मा संन्यासी जीवनमात्रार्थचेष्टस्सन् कर्मणि न प्रवर्तते । यद्यपि प्राग्विवेकतः प्रवृत्तः । यस्तु प्रारब्धकर्मा सन् उत्तरकालं उत्पन्नात्मसम्यग्दर्शनः स्यात् स सर्वकर्मणि प्रयोजनमपश्यन् ससाधनं कर्म परित्यजत्येव ॥ स कुतश्चित् निमित्तात् कर्मपरित्यागासंभवे सति कर्मणि तत्फले च संगरहिततया स्वप्रयोजनाभावात् लोकसंग्रहार्थं पूर्ववत्कर्मणि प्रवृत्तोऽपि नैव किंचित्करोति ज्ञानाग्निदग्धकर्मत्वात् । तदीयं कर्माकर्मैव संपद्यते इत्येतमर्थं दर्शयिष्यन्नाह । त्यक्त्वेति ॥ त्यक्त्वा कर्मस्वभिमानं फलासंगं च । यथोक्तेन ज्ञानेन नित्यतृप्तः निराकांक्षो विषयेष्वित्यर्थः । निराश्रयः आश्रयरहितः ॥ आश्रयो नाम यदाश्रित्यपुरुषार्थं सिसाधयिषति । दृष्टादृष्टेष्टफलसाधनाश्रयरहित इत्यर्थः । तेनैवंभूतेन स्वप्रयोजनाभावात् ससाधनं कर्म परित्यक्तव्यमेवेति प्राप्ते ततो निर्गमासंभवात् लोकसंग्रहचिकीर्षया शिष्टविगर्हणपरिजिहीर्षया वा पूर्ववत् कर्मण्यभिप्रवृत्तोऽपि निष्क्रियात्मदर्शनसंपन्नत्वात् नैव किंचित्करोति सः ॥

रा ॥ एतदेव विवृणोति ॥ कर्मफलासङ्गं त्यक्त्वा नित्यतृप्तो नित्ये स्वात्मन्येव तृप्तो निराश्रयः अस्थिरप्रकृतावाश्रयबुद्धिरहितो यः कर्माणि करोति स कर्मण्याभिमुख्येन प्रवृ-

त्तोऽपि नैव किंचित्कर्म करोति । कर्मापदेशेन ज्ञानाभ्यासमेव करोतीत्यर्थः ॥

विचारः

विवक्षितस्य कर्मयोगिनस्समारंभाः कामसंकल्पवर्जिताः इत्युक्तं । प्रकृतश्लोके "त्यक्त्वा कर्मफलासंगं" इत्युक्तिस्तमेवार्थं बोधयत्युतात्रास्ति कश्चिद्विशेष इत्यालोचनीयं ॥ कामो हि फलेच्छा ॥ अनेनेदं साधयिष्यामीति तु सुङ्कल्पः ॥ "कर्मफलासङ्गं" इत्यत्र कर्मणां यत्फलं तस्मिन्नासङ्गः स्नेहइति व्युत्पत्तौ कामवर्जिता इत्यनेनैकार्थ्यं ॥ कर्मणि फलेचासङ्गं इति विग्रहे तु कर्मणि आ सम्यक् संगः इदं करिष्ये इति स एव संकल्पः फलासंगश्च कामः इति कामसंकल्पवर्जन एव पर्यवस्यति ॥ इयं शंका समाधेया ॥ अत्र "न च कामसंकल्पाभावेनालं । आसङ्गं स्नेहं च त्यक्त्वा" इत्याचार्यभाष्यं । "नैतावता कर्मस्वरूपं संपूर्णमित्यर्थः" इति प्रमेयदीपिका ॥ एतेन कामसंकल्पशब्दाभ्यामनुक्तोऽर्थः कर्मफलासङ्गरूपः उक्त इत्यतो न पौनरुक्त्यं इति समाहितमिवाभाति । उक्तहेतुभ्यो नेदमुपपद्यते । यतः कामसंकल्पौ पर्यायत्वात्कर्मफलासङ्गस्वरूपौ ॥ एवं सति भाष्याशयो द्वेधा वर्णितः ॥ उक्तं श्रीनिवासतीर्थीये । "सङ्कल्पत्यागमात्रेणालं । किं कामत्यागेनेत्याकांक्षायां न तावन्मात्रेणालं किंतु कामत्यागोऽप्यपेक्षितः इति नियम्यते ॥ सिद्धे सत्यारंभो नियमार्थः ।" इति ॥ अनेनेदमुक्तं भवति "कर्मफलासंगं" इत्यस्य तत्पुरुषाश्रयेण कर्मणां फलं कर्मफलं । तस्मिन् स्नेहं इत्यर्थो लभ्यते । स एव कामः । तत्त्यागो यद्यपि पूर्वमुक्त एव "कामवर्जिता" इत्यनेन ॥ कामत्यागसंकल्पत्यागयोर्मध्ये एकेनैव संकल्पत्यागेन किं नालं इत्याकांक्षायां नालं किन्तु कामत्यागोऽप्यपेक्षित इत्युत्तरं । अत एव गीतायां "कर्मफलासङ्गं" इति कर्मफलस्यैवोक्तिः। पुनरारंभन्यायेन नियमोऽधिगम्यते ॥ इति ॥ भाष्यं चानुगुण्येन व्याख्येयं ॥—

"(न च कामसंकल्पाभावेनालं—" इत्यस्यायमर्थः ॥ कामस्य संकल्पः कामसंकल्पः कामस्य चिकीर्षितस्य कर्मणः संकल्पः अहमेतेन साधनेनेदं कर्म करिष्ये इति कामितसंकल्पाभावमात्रेण नालं । किन्तु कर्मफलेच्छाभावेनापि भाव्यं इति ॥ कृष्णाचार्यटिप्पण्यान्तु गीताया भाष्यस्य चाशयः प्रकारान्तरेणावगम्यते । उक्तं ॥ "स्वातंत्र्येणकर्माभावज्ञानमेवेति । न चास्यैव संकल्पत्यागरूपत्वात्संकल्पवर्जिता इत्यनेन पुनरुक्तिरितिवाच्यं । संकल्पत्यागस्य स्वातन्त्र्येण कर्तृत्वभ्रमाभावरूपत्वात् । स्वातन्त्र्येण कर्माभावज्ञानस्य तु इदमन्यगृहं मम तु स्वातन्त्र्येण गृहं नास्ति इतिवत्तत्तद्वस्तुस्वामित्वाभावज्ञानरूपत्वात्तयोश्च महावैलक्षण्यादिति—" इति ॥ अनेनेदमुक्तं भवति । "कर्मफलासङ्गं इत्यस्य कर्मणि फले चासङ्गं इति व्युत्पत्तिः । एकप्रधानतत्पुरुषापेक्षयोभयप्रधानद्वन्द्वस्य समासतः प्राबल्यात् । कर्मासङ्गस्तु न संकल्पसमानार्थः । यतः स्वस्वामित्वभ्रमरूपः कर्मासङ्गः, स्वकर्तृत्वभ्रमरूपः संकल्पः इत्यनयोर्वैलक्षण्यं ॥ तस्मात्संकल्पवर्जिता इत्यनेन न पौनरुक्त्यं ॥ कामवर्जिता इत्युक्त्या तु प्रकृतश्लोकीयः 'फलासङ्ग' इत्यंशः पुनरुक्त इति स्यात्—सिद्धे सतीति न्यायेन कामत्यागस्यावश्यकर्तव्यत्वनियमसूचनाय पुनरुक्तिरुपपन्ना ॥ भाष्यवाक्यं चानुगुण्येन योज्यं ॥ तस्यार्थः । कामसंकल्पयोरभावमात्रेण नालं इति । संकल्पसहकृतकामत्यागमात्रेण नालं । किन्तु कर्माभावज्ञानसहकृतकामत्यागेनापि भाव्यं इति यावत् ॥ कर्माभावज्ञानन्तु न सङ्कल्पत्यागरूपं । अपितु स्वस्वामिताभ्रमपरित्यागरूपं । तथाच पूर्वश्लोकप्रकृतश्लोकयोरयं विशेषः । पूर्वत्र संकल्पत्यागउक्तः । अत्रतु स्वस्वामिताभ्रमाभावरूपकर्मासङ्गत्यागरूपोधिकांशः इति। एतेन कर्मण्यासङ्गः संकल्प इत्यभ्युपगम्य श्रीनिवासतीर्थीयपरिष्कारः। कर्मासङ्गो न सङ्कल्पः किन्त्वन्यः इत्यादाय कृष्णाचार्यपरिष्कारोऽवगम्यते ॥ "नैतावताकर्मस्वरूपं संपूर्णं" इति प्रमेयदीपिकावाक्यं कृष्णाचार्यव्या-

ख्यानं द्रढयति । गृहक्षेत्रादिसाधनकलापस्वामिताभ्रमरूपकर्मासङ्गत्यागा-ख्येनाधिकांशेन कर्मस्वरूपं पूरणीयं इति तद्व्याख्यानस्य प्रमेयदीपिकानुसरणात् ॥ विवृत्याचार्यस्तु भाष्याक्षराण्यनुसरतीति तदाशयो न स्फुटः । कर्मणां फलं तस्मिन्नासङ्ग इति विग्रहः श्रीनिवासतीर्थीयस्यानुकूलः । विवृत्याचार्यस्तु "कर्मफलस्नेहत्यागेनापि भाव्यं" इति श्लोकमवतार्य "कर्मणि फलेच स्नेहं" इति कर्मफलासङ्गशब्दं व्याख्यातवान् । अतः स्यात्तस्याशयः कृष्णाचार्यवदिति भाति ।

कामसंकल्पवर्जिता इत्यनेन पौनरुक्त्यमशङ्कमाना एव परे व्याचक्षते॥ (१) कर्मण्यासङ्गं कर्तृत्वाभिमानं फले आसङ्गं भोगाभिलाषं च त्यक्त्वेति, मधुसूदनः (२) (*a*) कर्माणि फलन्ति यत्रासङ्गे इति वा, (*b*) कर्माणिफलतीति वा, (*c*) स्वयं कर्मणां फलत्वाद्वा, (*d*) कर्मफलं देहः तत्रासङ्गं इति वेति व्याख्याय कर्ता भोक्ता वक्ता श्रोता द्रष्टाहमिति तत्तादात्म्यं त्यक्त्वेत्याशयमाह शङ्करानन्दः। देहेन्द्रियादीनामेव कर्तृत्वं नात्मनः इति स्वराद्धान्तेनेत्थं व्याख्यानं॥ अद्वैतसाक्षात्कारानन्तरं क्रियमाणं कर्माकर्म संपद्यत इत्यर्थप्रदर्शनायायं श्लोक इत्यभिप्रयन्ति शाङ्कराः )( मधुसूदनस्त्वन्यथावतारयति—"भवतु ज्ञानाग्निना प्राक्तनानामप्रारब्धकर्मणां दाहः । आगामिनां चानुत्पत्तिः । ज्ञानोत्पत्तिकाले क्रियमाणं तु पूर्वोत्तरयोरनन्तर्भावात्फलाय भवेदिति भवेत्कस्यचिदाशङ्का । तामपनुदति" इति । अनयैवदिशा नीलकण्ठोऽपि "ननु प्रायश्चित्तेनेव ज्ञानाग्निना पूर्वकर्मदाहेऽपि क्रियमाणं तत्फलाय भवेदित्यत आह ।" इति । इदं दूषितमुत्कर्षदीपिकायामेव "ज्ञानोत्पत्तिकाले इत्यस्य किं ज्ञानोत्पत्तिक्षण इत्यर्थ उत ज्ञानसाधनानामनुष्ठानकाल इति । आद्ये पापादेरसंभवः । द्वितीये तत्कर्मणः पूर्वकर्मण्यन्तर्भावः इति शङ्काया अनुत्थानात् । अत एव तस्य नाशो वा विश्लेषो वा व्यासेन पृथङ् न सूत्रितः ।" इति ॥ अयं निरासो मधुसूदननीलकण्ठयोरवतारिकां प्रत्याख्यातीति तत्र न नो भारः ।

यत्तूक्तं शाङ्करमाकूतं ज्ञानोत्तरं क्रियमाणं कर्माकर्मैवेति दर्शनाय श्लोक इति तदपि न। ज्ञानाग्निदग्धकर्मत्वोक्त्या, तदधिगम इति बादरायण-सूत्रोक्त्या च ज्ञानोत्तराणां कर्मणां अश्लेषस्योक्तत्वात्। वस्तुतस्तु "ज्ञानाग्निदग्धकर्माणं" इत्युक्तिः परोक्तरीत्या नापरोक्षज्ञानिमात्रपरा इति प्रागेव निरूपितं द्रष्टव्यं। कामसङ्कल्पवर्जनपूर्वं कर्मानुष्ठाय यः ज्ञानाग्निदग्धकर्मा स आरुरुक्षुरपि भवेदिति श्रीधरवेङ्कटनाथाद्याशयश्च तत्रैव प्रदर्शितः। किंच कर्मफलासङ्गत्यागी कर्मयोगी जिज्ञासुर्भवेदित्यर्थे न काप्यनुपपत्तिर्दृश्यते। नच वाच्यमपरोक्षदृशएव कर्माकर्मसंपद्यते न तु कर्मयोगिन इति। स्वास्वातन्त्र्यज्ञानविवक्षया तथोक्तेरुपपन्नत्वात्। नापि नित्यतृप्तत्वनिराश्रयत्वोक्तिर्बाधतइति शङ्कनीयं। तया नित्यतृप्तनिराश्रयभगवत्सारूप्यचिन्तनस्य विवक्षितत्वात्। नित्यं तृप्तः इति गौण्यापि प्रायो विरुद्धकामादिविधुरं कर्मयोगिनं प्रति उक्तेः संभवात्। अकारप्रश्लेषेण अनिराश्रयइति पदच्छेदे तु भगवदाश्रयइत्यर्थः सिध्यति॥ नित्यं तृप्तः नित्यतृप्तइत्यर्थं तिरस्कृत्य नित्ये स्वात्मन्येव तृप्तइत्यर्थमाह देशिकः। यो जीवः परमात्मानं विहाय स्वात्मन्येव रतः तस्य ज्ञानित्वमतिदुर्घटं॥ नित्येन ब्रह्मणैवतृप्त इति शङ्करानन्दः। नित्येन निजानन्देनैव तृप्त इति श्रीधरः। स्यादेतदनयोर्व्याख्यानं यदि पद्यं जीवन्मुक्तिमात्रपरं। तत्र विचारस्तु कृतः। नित्यतृप्तः विषयेषु निराकांक्षः इति शङ्करभाष्यं। एवं मधुसूदनश्चाह। अस्मिन्नर्थे कर्मफलासंगं त्यक्त्वेत्यनेन गतार्थत्वं तु न समाहितं। नहि यः कर्तृत्वाभिमानं भोगाभिलाषंच त्यक्तवान् स विषयेष्वाकांक्षावान् स्यात् यच्छमनायनित्यतृप्त इत्युक्तिः सार्थिका भवेत्॥ तस्मान्नित्यतृप्तेश्वरसरूपोऽस्मीतिहेतोरहमपि तथाविधः किंत्वविद्यया तथा न प्रतीयते इति जानन्नित्यतृप्त इत्युच्यते इति श्रीमदाचार्यव्याख्या॥ निराश्रय इति॥ (१) आश्रयोनाम सः यदाश्रित्य पुरुषार्थं सिसाधयिषति॥ दृष्टादृष्टेष्टफलसाधनाश्रयरहितो निराश्रय इति

शङ्करभाष्यं । प्राकृतसाधनकलापमनाश्रित्य तिष्ठन्निति यावत् (२) येन ससाधनं कर्म पुमानाश्रयति इति शङ्करानन्दः । सतुकामः । तथा च निराश्रयः निष्काम इति यावत् (३) योगक्षेमार्थमाश्रयणीयरहितः इति श्रीधरः (४) आश्रयो देहादिः । निराश्रयः देहाद्यभिमानरहितः इति मधुसूदनः (५) अहंकाराद्याश्रयेण खलु कर्म क्रियते । निराश्रयः निरहंकारः इति नीलकण्ठः (६) अस्थिरप्रकृतावाश्रयबुद्धिरहितः इति रामानुजाचार्यः । (७) निराश्रयभगवत्स्वरूपः इति वा, अनिराश्रयः इति वेति । विवृतिव्याख्यानं ॥

"कर्मण्यभिप्रवृत्तोऽपि" इति द्वितीयार्धं "कर्मण्यकर्म यः पश्ये"दित्यस्य प्रपंचनरूपं । कर्तृत्वे स्वातन्त्र्याभावादकर्मत्वं तस्येति श्रीमध्वाशयः । आभिमुख्येन प्रवृत्तोऽपि कर्मापदेशेन ज्ञानाभ्यासमेव करोति इति रामानुजाचार्यः । जीवन्मुक्तो व्युत्थानदशायां कर्माणि वैदिके लौकिके वाभिप्रवृत्तोपि प्रारब्धवशाल्लोकदृष्ट्या अभितः साङ्गोपाङ्गानुष्ठानाय प्रवृत्तोपि, स्वदृष्ट्या नकरोति इति मधुसूदनः । तथैव शङ्करानन्दोऽपि । लोकसंग्रहार्थं पूर्ववत्कर्मण्यभिप्रवृत्तोऽपि निष्क्रियात्मदर्शनसंपन्नत्वात् न करोतीति शंकराचार्यः ॥ अस्य क्रियमाणमपि कर्म न फलाय प्रभवतीति नीलकण्ठः ॥

तथाच कर्ममिथ्यात्वविवक्षया जीवन्मुक्तस्याकर्तृत्वं इति शाङ्करः पक्षः। कर्मणां ज्ञानाकारत्वविवक्षया तथोक्तिरिति रामानुजीयः पक्षः। कर्मणि कर्तुरस्वातन्त्र्याभिप्रायेण गीतोक्तिरिति श्रीमध्वः । मिथ्यात्वज्ञानाकारत्वपक्षौ प्रागेव विचारितावित्यलं ॥

निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥२१॥

वि ॥ कामसंकल्पादित्यागोपायमाह । निराशीरिति । आत्मा मनः ॥ यतौ नियतौ चित्तात्मानौ यस्य स यतचित्तात्मा भूत्वा निराशीः निष्कामः त्यक्तसर्वपरिग्रहश्च भवतीत्यर्थः ॥ मनोनिग्रहेणैव कामादित्याग इति भावः ॥ परिग्रहत्यागोनाम देहेन्द्रियादिपरिग्रहे अभिमानत्यागो ज्ञेयः । केवलं शारीरं शरीरयात्रार्थं ॥ यद्वा केवलं कामादिरहितं शारीरं शरीरेन्द्रियादिकरणकं कर्म कुर्वन् किल्बिषं कर्मबन्धं नाप्नोति ॥ नैव किञ्चित्करोतीति प्रागुक्तस्य कर्मणां मिथ्यात्वादिति विपरीतभ्रमनिरासाय नाप्नोति किल्बिषमिति तदभिप्रायोऽत्र गौण्या वृत्या वर्णितः ॥

शं ॥ यः पुनः पूर्वोक्तविपरीतः प्रागेव कर्मारंभात् ब्रह्मणि सर्वान्तरे प्रत्यागात्मनि निष्क्रिये संजातात्मदर्शनः स दृष्टादृष्टेष्टविषयाशीर्विवर्जिततया दृष्टादृष्टार्थे कर्मणि प्रयोजनमपश्यन् ससाधनं कर्म संन्यस्य शरीरयात्रामात्रचेष्टो यतिः ज्ञाननिष्टो मुच्यते इत्येतमर्थं दर्शयितुमाह । निराशीरिति । निराशीः निर्गता आशिषः यस्मात्सः निराशीः । यतचित्तात्मा चित्तं अन्तःकरणं आत्मा बाह्यःकार्यकारणसंघातः तौ उभावपि यतौ संयतौ येन सः ॥ त्यक्तसर्वपरि-

ग्रहः त्यक्तः सर्वः परिग्रहः येन सः॥ शारीरं शरीरस्थितिमात्र-प्रयोजनं केवलं तत्रापि अभिमानवर्जितं कर्म कुर्वन् नाप्नोति न प्राप्नोति किल्बिषं पापं अनिष्टरूपं॥ मुमुक्षोरनिष्टरूपत्वात् धर्मोऽपि किल्बिषमेव॥ तस्मात्ताभ्यां मुक्तो भवति॥ संसारान्मुक्तो भवति इत्यर्थः॥

'शारीरं केवलं कर्म' इत्यत्र किं शरीरनिर्वर्त्यं शारीरं कर्म अभिप्रेतं—आहोस्वित् शरीरस्थितिमात्रप्रयोजनं शारीरं कर्मेति। किंचातः यदि शरीरनिर्वर्त्यं शारीरं कर्म यदि वा शरीरस्थितिमात्रप्रयोजनं शारीरमिति। उच्यते। यदा शरीरनिर्वर्त्यं कर्म शारीरं अभिप्रेतं स्यात् तदा दृष्टादृष्टप्रयोजनं कर्म प्रतिषिद्धमपि शरीरेण कुर्वन् नाप्नोति किल्बिषं इति ब्रुवतो विरुद्धाभिधानं प्रसज्येत। शास्त्रीयं च कर्मदृष्टादृष्टप्रयोजनं शरीरेण कुर्वन्नाप्नोति किल्बिषं इत्यपि ब्रुवतः अप्राप्तप्रतिषेध-प्रसङ्गः। शारीरं कर्म कुर्वन्निति विशेषणात् केवलशब्दप्रयोजनाच्च वाङ्मनसाभ्यां निर्वर्त्यं कर्म विधिप्रतिषेधविषयं धर्माधर्मशब्दवाच्यं कुर्वन् प्राप्नोति किल्बिषं इत्युक्तं स्यात्। तत्रापि वाङ्मनसाभ्यां विहितानुष्ठानपक्षे किल्बिषप्राप्तिवचनं विरुद्धमापद्येत। प्रतिषिद्धसेवापक्षेपि भूतार्थानुवादमात्रमनर्थकं स्यात्। यदा तु शरीरस्थितिमात्रप्रयोजनं शारीरं कर्माभिप्रेतं भवेत्तदा दृष्टादृष्टप्रयोजनं कर्म विधिप्रतिषेधगम्यं शरीर-वाङ्मनोनिर्वर्त्यं अन्यत् अकुर्वन् तैरेव शरीरादिभिः शरीर-

स्थितिमात्रप्रयोजनं केवलशब्दप्रयोगात् 'अहं करोमि' इत्यभिमानवर्जितं शरीरादिचेष्टामात्रं लोकदृष्ट्या कुर्वन् नाप्नोति किल्बिषमिति। एवं भूतस्य पापशब्दवाच्यकिल्बिषप्राप्त्यसंभवात् किल्बिषं संसारं न प्राप्नोति॥ ज्ञानाग्निदग्धसर्वकामत्वात् अप्रतिबन्धेन मुच्यतएवेति पूर्वोक्तसम्यग्दर्शनफलानुवाद एवैषः। एवं 'शारीरं केवलं कर्म' इत्यस्यार्थस्य परिग्रहे निरवद्यं भवति॥

रा॥ पुनरपि कर्मणो ज्ञानाकारतैव विशोध्यते—निराशीः निर्गतफलाभिसन्धिः यतचित्तात्मा यतचित्तमनाः त्यक्तसर्वपरिग्रहः आत्मैकप्रयोजनतया प्रकृतिप्राकृतवस्तुनि ममतारहितः यावज्जीवं केवलं शारीरमेव कर्म कुर्वन् किल्बिषं संसारं नाप्नोति। ज्ञाननिष्ठाव्यवधानरहितकेवलकर्मयोगेनैवं रूपेणात्मानं पश्यतीत्यर्थः॥

विचारः

[अस्मिन्प्रकरणे कर्तारं प्रति कृत्स्नकर्मकृत् (१८) सर्वेसमारंभाः (१९) कर्मण्यभिप्रवृत्तः (२०) कुर्वन्नाप्नोति (२१) कृत्वापि (२२) यज्ञायाचरतः कर्म (२३) इति प्रतिश्लोकं अभ्यासेन कर्मकरणोक्तिर्द्रष्टव्या][अनया न यतिरत्र विवक्षितः किन्तु कर्मयोगीति ज्ञायते][किंच कर्मणि निमग्नोऽपि यथा कर्ता न लिप्तो भवेत्तथोपाय उपदिश्यते इत्यपि स्फुट गम्यते][अयं कर्ता न कर्ता कुतः? कामसंकल्पवर्जनात् कर्मफले आसङ्गत्यागात् यतचित्तात्मत्वेनाशापरिग्रहराहित्यात् इत्यादीनि कारणानि क्रमेणोक्तानि द्रष्टव्यानि][तथाच कर्तुरकर्तृत्वप्रयोजकं कामादिवर्जनं इति प्राप्ते कामादिवर्जनस्य क उपाय इति जिज्ञा-

सा जायते——स उपायः प्रकृते निराशीरिति श्लोके उच्यते। तथाहि॥ फलेच्छाहि कामः यद्वर्जनं कामसंकल्पवर्जिता इत्यनेनोक्त। कामवर्जनमेव निराशीरित्यनेनानूदितं॥ संकल्पासङ्गौ त्वभिमानरूपौ॥ अभिमानो हि कर्म-स्वातन्त्र्यभ्रमनिरूपितकर्तृत्वरूपो वा, शोभनाध्यासनिमित्तकस्नेहरूपो वा, ममतातिशयहेतुकाविवेकरूपदेहादिस्नेहरूपो वा भवति॥ एतेष्वाद्यः कर्तृत्वाभिमानः संकल्पः। द्वितीयस्तृतीयश्चातीतश्लोकोक्तः कर्मफलासङ्गः॥ एतौ संकल्पासंगौ प्रकृते श्लोके परिग्रहशब्देनोक्तौ॥ "पर्याप्तौ च परीवार आलवाले परिच्छदे। पत्नीस्वीकारशपथमूल्येष्वपि परिग्रहः॥" इति वैजयन्ती॥ अत एव 'परिग्रहत्यागोऽनभिमानं' इति श्रीमदाचार्य-भाष्यं। तथाच 'निराशी'रिति कामवर्जनमनूद्य 'त्यक्तसर्वपरिग्रह' इत्यनेन संकल्पासंगत्यागावनूद्य तयोः कामवर्जनसंकल्पासंगवर्जन-योरुपायं 'यतचित्तात्मे'त्यनेन भगवानभिधत्ते॥ 'यतचित्तात्मे'त्यत्रा-त्मशब्दः न शरीरेन्द्रियादिपरः किन्तु मनः परः यथा रामानुजा-चार्येणापि व्याख्यातं॥ तर्हि चित्तपदेनैकार्थ्यं इति न शङ्कनीयं॥ यतो मनः पंचधा व्यपदिश्यते। 'मनो बुद्धिरहंकारश्चित्तं चेतने'ति श्रुते-श्चित्तं अन्तःकरणप्रभेदः। अन्तःकरणनिग्रहेणैव कामसंकल्पासङ्गानां वर्ज-नस्य संभवात् यतचित्तात्मेत्युपायाभिधानं उपपन्नं भवति॥ उपायबोध-नार्थमुपेयानुवादस्तु न पुनरुक्तत्वदोषकलुषितः। इति प्रथमार्धगतपदत्रयं सार्थकम्॥

द्वितीयार्धे केवलमितिपदं कर्मणि वर्जनीयत्वेनोक्तान् सकामत्वादीन् व्युदस्यति। केवलं शारीरं कामादिरहितं इति यावत्। अथवा केवलं शारीरं इत्यनेन शरीरधारणोपयुक्तत्वमात्रमुच्यते। 'कुर्वन्नाप्नोति किल्बिष' इति वाक्यं 'नैव किंचित्करोति सः' इत्युक्तस्याभिप्रायमाह। कर्ता न किंचित्करोति——कुतः कर्तृत्वेपि, कर्मभ्यः संभावितस्य पापस्याप्राप्तेः इति

फलितोऽर्थः ॥ न किंचित्करोतीत्यस्य न किल्बिषं प्राप्नोतीत्यर्थस्तु गौण्या लभ्यते ॥ कर्माकर्तरिकिल्बिषाप्राप्तिरूपो यो गुणस्तादृशस्याभिमानत्यागेन कर्मकर्तर्यपि साम्यात् कर्मणि प्रवृत्तोऽपि नैव किंचित्करोतीति गौणीवृत्तिः ॥

[शाङ्करेषु 'यस्य सर्वे समारंभाः' इत्यारभ्य श्लोका आरुरुक्ष्वारूढोभयपराः इति श्रीधरवेङ्कटनाथवेवाभिप्रेतः ॥ इतरे शङ्करादयस्तु साक्षात्कृताद्वैतब्रह्माणं प्रति प्रवृत्ता इति वदन्ति ॥ अत्र शङ्कराचार्याशयः संक्षेपेणोच्यते ॥ यस्येति पद्यं लोकसंग्रहाय प्रवृत्तं कर्म कुर्वाणं, शरीरयात्रार्थं निवृत्तं कर्म कुर्वाणं च मुधैव चेष्टामात्रपरं ब्रह्मज्ञानिनं आह ;॥ त्यक्त्वेति पद्यं (२०) प्रारब्धवशाल्लोकसंग्रहाय प्रवृत्तकर्मकुर्वाणं प्रति कर्मालेपमाह । प्रकृतं निराशीरिति पद्यंतु, शरीरस्थितिमात्रार्थमवर्जनीयं कर्म कुर्वन्यतित्वमूढा भिक्षाटनं कृत्वा कालं यो नयति तस्य कैमुत्येन पापाश्लेषं वक्ति इति ॥ एतदभिप्रायानुगुण्येन पद्याक्षराणि व्याख्यातानि ॥ शारीरं इत्यस्य शरीरनिर्वर्त्यं इत्यर्थं तिरस्कृत्य शरीरस्थितिमात्रप्रयोजनं इत्यर्थं आश्रितः ॥ त्यक्तपरिग्रहः इत्यत्र परिग्रहशब्देन दारादिकं गृहीत्वा, श्लोकस्य यतिपरत्वं च द्रढयन्ति शङ्करानन्दादयः ॥ अत्रोच्यते ॥ श्लोकस्य यतिमात्रपरत्वं यदभिप्रेतं तदसत् ॥ परिग्रहशब्दस्य पत्नीवाचकत्वं विनाप्युपपत्तेः ॥ निघण्टुश्चोदाहृतो द्रष्टव्यः ॥ यद्यपि शारीरं इत्यस्य शरीरनिर्वर्त्यं इत्यर्थो दूषितश्शङ्करभाष्ये ॥ दूषणाभिधानन्तु न सङ्गतं ॥ त्रयो हेतव उक्ता दृश्यन्ते ॥ अस्मद्वाक्येन ते संगृह्यन्ते ॥ (१) शरीरनिर्वर्त्यं कर्म प्रतिषिद्धं यदि स्यात् तेन पापाप्राप्तिश्शास्त्रविरुद्धा ॥ (२) शरीरनिर्वर्त्यं शास्त्रीयं कर्मविवक्षितं चेत् तस्य पापाजनकत्वोक्तिरप्राप्तप्रतिषेधरूपा प्रसज्यते (३) केवलं शरीरनिर्वर्त्यं न पापावहं इत्युक्त्या वाङ्मनसकर्मणां प्रतिषिद्धानां विहितानां च पापजनकत्वमर्थादुक्तं भवति ॥ न हि तद्युक्तं ॥ इति ॥ इमानि

दूषणानि न संगच्छन्ते ॥ साक्षात्कृताद्वैतब्रह्मणो विदुषो ज्ञानोत्तर-कृतं कर्म प्रतिषिद्धं वा विहितं वा किं कुर्यात् ॥ शास्त्रीयं कर्म शरीरनिर्वर्त्यं स करोतीत्यभिप्रायेऽपि बाधकंच न दृश्यते । ननूक्तः अप्राप्तप्रतिषेध-प्रसङ्गाख्यो दोष इति न शङ्कनीय । किल्बिषशब्देन कर्मबन्धस्य विवक्षित-त्वात् ॥ शास्त्रीयस्यापि कर्मणः कामनयानुष्ठाने कर्मबन्धस्य प्रसक्तत्वात् कामनाया अनेन बुद्धिमता वर्जितत्वादसौ कर्माचारेण कर्मबन्धं नाप्नोती-त्यर्थः सुगमः ॥ किंच विहितं वा प्रतिषिद्धं वा कर्म विवक्षितं इति विकल्प्याद्येऽप्रसक्तप्रतिषेधः द्वितीये शास्त्रविरोधः इति यद्दूषितं तच्छङ्कर-भाष्याभिमते शरीरयात्रार्थं केवलं कर्म विवक्षितमित्यर्थेऽपि समानं । यतश्श-रीरयात्रामात्रनिर्वाहकं कर्म विहितं वा प्रतिषिद्धं वा स्यात् ॥ अत्रापि निषिद्धं कुर्यादित्यर्थं स्वयं वक्ष्यति यदृच्छेत्युत्तरश्लोकव्याख्याने ॥

वस्तुतस्तु मुमुक्षुकर्मसु, यत्प्रातिषिद्धं तत्पापावहमेव । यत्तु शास्त्रीयं किन्तु कामनयानुष्ठितं तद्बन्धाख्यं किल्बिषं जनयति ॥ यत्तु शास्त्रीयं निष्कामनया योगयुक्तेन समनुष्ठितं तत्कर्म न कर्मबन्धाख्यं वान्यद्वा किल्बिषं जनयतीति विवेकः ॥

यस्तु तृतीयो दोषउक्तः वाङ्मनससर्वव्यापाराणां पापावहत्वं उक्तं भवतीति सोपि न सङ्गतः ॥ 'शारीरं केवलं' इत्यनेन कामादिमानस-दोषमात्रव्युदासे तात्पर्यात् ॥ "निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः" इति पूर्वार्धप्रसक्तमानसदोषव्युदासस्यैवोचितत्वाच्च ॥ तस्माच्छरीरनिर्वर्त्यं इत्यर्थस्य प्रत्याख्याने प्रापकं न दृश्यते ॥ "शरीरस्थितिमात्रार्थं" इत्यर्थस्तु नास्माकमनिष्टः ॥ प्रत्याख्यातॄणां शाङ्कराणां हृदयन्तु श्लोको ब्रह्मविद्यतिपरः न कर्मयोगिपरः इति । तथा निर्बन्धे तु न निमित्तं गम्यते इत्युपपादितं । लोकसङ्ग्रहाय ज्ञानिकृतं प्रवृत्तकर्म न दोषाय भवतीत्यतीतं पद्यं । प्रकृतन्तु

शरीरयात्रामात्रनिर्वाहकं निवृत्तं कर्मभिक्षाटनादि न पापावहं यद्यतिः करोति इति प्रतिपादयतीति पूर्वोत्तरश्लोकयोः सङ्गत्युद्भावनं शाङ्करव्याख्यानेषु कृतं केवलमुत्प्रेक्षामूलं ज्ञायते।॥

(श्रीधरस्तु शारीरं इत्यस्यार्थद्वयमाह ॥ मुमुक्षुपक्षे शरीरमात्रनिर्वर्त्य—कर्तृत्वाद्यभिनिवेशरहितं कर्मेत्यर्थः ॥ आरूढपक्षे शरीरनिर्वाहमात्रोपयोगि-कर्मेत्यर्थ इति )।

(इयं नीलकण्ठीयावतारिका व्याख्या च श्लोकस्य ॥ "नन्वेतस्माद्गौणात्कर्मकरणादकरणं मुख्यमेव तद्वरमित्याशङ्क्य गृहस्थस्य तत्प्रत्यवायावहमिति व्यतिरेकमुखेनाह * * * ॥ स्त्र्यादिपरिग्रहरहितः योगैश्वर्यमप्यनिच्छन् समाधिकालनिरुद्धबाह्यान्तरवृत्तिः व्युत्थानकाले भिक्षाटनादि कुर्वन्नाप्नोति किल्बिषं । यस्तु सपरिग्रहः स निराशीरपि यतचित्तात्मापि केवलं शारीरं कर्म कुर्वन्नपि—विहिताकरणकिल्बिषं प्राप्नोत्येवेत्यर्थः" इति )

(शारीरं कर्म कुर्वन्निति विशेषणं यतेरेव न तु गृहस्थस्य)। यो हि गृहस्थस्सपरिग्रहस्स तु विहितं कर्म सर्वं कुर्यान्न केवलं शरीरस्थितिमात्रप्रयोजनं कर्म । अन्यथा प्रत्यवैतीति नीलकण्ठाशयः )। उच्यते )। त्यक्तसर्वपरिग्रह इत्यनेन यत्याश्रमस्यैव विवक्षा इति को निर्बन्धः ? )(शारीरं केवलं इत्यनेन शरीरस्थितिमात्रप्रयोजनं कर्मैव विवक्षितमिति च को नियमः ?)। त्यक्ताभिमानाः पुरुषा ग्रहस्था वा यतयो वा स्वोचितं किंचिद्वा बहु वा कर्म कुर्वाणाः कर्मबन्धं नाप्नुवन्तीत्यर्थेऽनुपपत्तिः का ? )। यद्ययं देवदत्तो जनकवन्नारदवद्वा साक्षात्कृतब्रह्मा, तर्हि शरीरस्थितिमात्रं कर्म करोति ।। यदित्वयं जिज्ञासुः कर्मयोगी तर्हि अन्तःकरणं निगृह्य कामादीन्वर्जयित्वा केवलं बाह्यव्यापारान्यथाविध्यनुष्ठाय बन्धं परिहरतीत्यर्थ एव समीचीनोऽवगम्यते। इति ॥

शारीरं केवलं कर्म यतिभिः कर्तव्यं भिक्षाटनाद्येव विवक्षितं इत्यादाय विहितकर्मणः सकाशात्पापप्रसक्तेरसंभवेन कथं तत्प्रतिषेधो युज्यते इत्याशङ्क्य शङ्करानन्दः समाधत्ते ॥ "क्वचिदभिशस्तादिभ्योपि भिक्षाग्रहप्रसङ्गात्स्यादेव किल्बिषं सम्यग्ज्ञानप्रतिबन्धकं यत्तदेव कर्मण्यकर्मत्वदर्शनाग्निना निर्दह्य मुक्तिं प्राप्नोतीत्याशयः ॥ यद्वा "मधु मांसं च मद्यं च तांबूलं तैलमौषधं। त्याज्यान्यष्टौ यतेर्दूरात्तथा कान्ता च काञ्चनं" इत्यतिनिषिद्धमपि शारीरं शरीरस्थितिकारणं यदभावे शरीरं निर्गच्छति श्रवणादि न सिध्यति तच्छारीरं सर्पदंशननेत्ररोगोदरशूलादिमहोपद्रवे औषधसेवालक्षणमौषधवदाशमनादाचरेदिति श्रवणाच्छारीरं कर्म केवलमयत्नासिद्धं कुर्वन् यतिः श्रवणादिशीलः किल्बिषं नाप्नोति ॥ यद्वा शरीरोपाधिकत्वादात्मा शरीरस्तत्प्रापकं कर्मापि श्रवणादिकं शारीरमेव भवति। बाह्यं जपादिकर्म सर्वं परित्यज्यान्तरं केवलं शारीरमेव श्रवणादिलक्षणं कर्म कुर्वन् किल्बिषं दुःखप्रदं संसारबन्धं नाप्नोति" इति ॥ इदं सर्वमयुक्तं ॥ कर्म मिथ्यात्वब्रह्माभेदज्ञानसामर्थ्यादस्याभिशस्तादिभ्यो भिक्षाग्रहप्रसक्तपापं नश्यतीत्याशयकथनस्येह सङ्गतिर्न विद्यते॥ प्रकरणं किल यत्कर्मोत्सर्गतः किल्बिषप्रापकं सत्तदेवाशाभिमानादिपरित्यागसामर्थ्यात्प्रतिबद्धकिल्बिषं भवतीत्यर्थमपेक्षते॥ ब्रह्मज्ञानं वा सर्वमिथ्यात्वज्ञानं वाऽस्य पापं दहतीत्यर्थस्तु कामादिपरित्यागस्य महिमानं न स्फोरयतीति स प्रकरणबाह्य एव॥ शरीररक्षणाय मधुमांसादिसेवनादपि नायं प्रत्यवैतीति धर्मशास्त्रं तु सर्वजन्तुसाधारणं॥ न यतिमात्रपरं॥ नेह भगवान् मनुवद्विहिताविहितकर्मबोधनाय प्रवृत्तः। किन्तूत्सर्गतो बन्धकस्यकर्मणः केनोपायेनाबन्धकत्वं स्यादिति कर्मयोगोपदेशायोद्यतः॥ अस्मिन्प्रकरणे कामत्यागमहिमानमविवक्षित्वा "सर्वान्नानुमतिश्च प्राणात्ययेतद्दर्शनात्" इत्युक्तं न्यायमालंब्याशयकथनं प्रकरणं विरुणद्धि॥ उक्तेषु तृतीयपक्षश्चैवमेवासङ्गतः॥ जपादिसर्वबाह्यं कर्म विहायात्मप्रापकं

श्रवणादिकमेव कुर्वन् मुच्यते इत्युक्तिः प्रकरणप्राप्तस्य कर्म एवंचेदकर्म संपद्यते इति प्रमेयस्य नानुकूला प्रातिकूला वा किंतूदासीना ) ( कर्मस्वरूपप्रवचनप्रतिज्ञां कृत्वा अय कुरुते तथापि न लिप्यते इत्यर्थस्य प्रसाधनायोद्यतस्सन् श्रवणादिकं कुर्वन् मुच्यते इत्यसंबद्धमनपेक्षितं प्रमेयमुपदिदेशेत्याशयो दुर्घटः ) ( यद्यपि श्रवणादीनां महिमा अपारः ॥ तथापीह किल्बिषप्रतिबन्धकं तु मनोनिग्रहानुगृहीतं कामाभिमानादिवर्जनमित्येव वाक्यार्थ उपपन्नः । यथा स्मृतिरुदाहृता वेङ्कटनाथीये—

"अजिह्वः पण्डुकः पङ्गुरन्धो बधिर एव च ।
मुग्धश्च मुच्यते भिक्षुष्षड्भिरेतैर्न संशयः ॥
इदं मृष्टमिदं नेति योऽश्नन्नपिन सज्जति ।
हितं सत्यं मितं वक्ति तमजिह्वं प्रचक्षते ॥
अद्य जातां यथा नारीं तथा षोडशवार्षिकीं ।
स्कन्नवर्षा च यो दृष्ट्वा निर्विकारस्स पण्डुकः ॥
भिक्षार्थमटनं यस्य विण्मूत्रकरणाय च ।
योजनान्नपरं याति सर्वथा पङ्गुरेव सः ॥
तिष्ठतो व्रजतो वापि यस्य चक्षुर्न दारुणम् ।
चतुर्युगाद्भूयं मुक्त्वा परिव्राट् सोन्ध उच्यते ॥
हितं मितं मनो रामं वचः शोकापहं च यत् ।
श्रुत्वा यो न शृणोतीव बधिरः स प्रकीर्तितः ॥
सान्निध्ये विषयाणां च समर्थोऽविकलेन्द्रियः ।
सुप्तवद्वर्तते नित्यं स भिक्षुर्मुग्ध उच्यते" ॥

इति । तस्मान्निगृहीतमनास्सन् निराशीस्त्यक्तसर्वपरिग्रहश्च भूत्वा, कर्माणि कुर्वन्नपि कर्मबन्धं न प्राप्नोतीत्येवार्थस्समीचीनः ॥

**यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः ।**
**समस्सिद्धावसिद्धौ च कृत्वापि न निबध्यते ॥२२॥**

वि ॥ यतचित्तात्मा कीदृशइत्यतस्तस्य लक्षणमाह यदृच्छेति । अप्रयत्नलब्धेन तृप्तिमान् । सुखदुःखलाभालाभादिद्वन्द्वान्यतीतो द्वन्द्वातीतः । विमत्सरः स्वानधीनत्वनिमित्तमनःखेदहीनः । (द्वन्द्वातीतत्वं किंप्रकारमिति जिज्ञासायां तद्विवृणोति ) समइत्यादिना । सिद्ध्यसिद्ध्योरुत्सेकानुत्सेकहीनत्वरूपसमत्वमेव द्वन्द्वातीतत्वमित्यर्थः । (एवं विधः कर्म कृत्वाऽपि तेन न निबध्यतइति । यदृच्छालाभसन्तुष्टत्वादिकं यतचित्तात्मनो लक्षणमित्युक्तं भवति ) ॥

शं ॥ त्यक्तसर्वपरिग्रहस्य यतेः अन्नादेश्शरीरस्थितिहेतोः परिग्रहस्याभावात् याचनादिना शरीरस्थितिकर्तव्यतायां प्राप्तायां "अयाचितमसंक्लृप्तमुपपन्नं यदृच्छया" इत्यादिना वचनेनानुज्ञातं यतेः शरीरस्थितिहेतोरन्नादेः प्राप्तिद्वारमावीष्कुर्वन्नाह यदृच्छेति । यदृच्छालाभसन्तुष्टः अप्रार्थितोपनतो लाभो यदृच्छालाभः तेन सन्तुष्टः सञ्जातालंप्रत्ययः । द्वन्द्वातीतः द्वन्द्वैः शीतोष्णादिभिर्हन्यमानोऽप्यविषण्णचित्तः द्वन्द्वातीतउच्यते । विमत्सरः विगतमत्सरः निर्वैरबुद्धिः समः तुल्यः यदृच्छालाभस्य सिद्धौ असिद्धौ च । यः एवं भूतो यतिः अन्नादेः शरीरस्थितिहेतोर्लाभालाभयो-

स्समो हर्षविषादवर्जितः कर्मादौ अकर्मादिदर्शी यथाभूतात्मदर्शननिष्ठस्सन् शरीरस्थितिमात्रप्रयोजने भिक्षाटनादौ कर्मणि शरीरादिनिर्वर्त्ये नैव किञ्चित्करोम्यहं 'गुणा गुणेषु वर्तन्ते' इत्येवं यदा परिसंचक्षाणः, आत्मनः कर्तृत्वाभावं पश्यन्नैव किंचिद्भिक्षाटनादिकं कर्म करोति, लोकव्यवहारसामान्यदर्शनेन तु लौकिकैरारोपितकर्तृत्वात् भिक्षाटनादौ कर्मणि कर्ता भवति । स्वानुभवेन तु शास्त्रप्रमाणजनितेनाकर्तैव । सएवं पराध्यारोपितकर्तृत्वः शरीरस्थितिमात्रप्रयोजनं भिक्षाटनादिकं कर्म कृत्वापि न निबध्यते बन्धहेतोः कर्मणस्सहेतुकस्य ज्ञानाग्निना दग्धत्वादित्युक्तानुवादएवैषः ।

रा ॥ यदृच्छोपनतशरीरधारणहेतुवस्तुसन्तुष्टः द्वन्द्वातीतः यावत्साधनसमाप्त्यवर्जनीयशीतोष्णादिसहः विमत्सरः अनिष्टोपनिपातहेतुभूतस्वकर्मनिरूपणेन परेषु विगतमत्सरः समस्सिद्धावसिद्धौ च युद्धादिकर्मसु जयादिसिद्ध्यसिद्ध्योस्समचित्तः कर्मैव कृत्वापि ज्ञाननिष्ठां विनापि न निबध्यते न संसारं प्रतिपद्यते ॥

विचारः

अयमपि श्लोकः कर्मणोऽकर्मतां निरूपयन्त्यां पंचश्लोक्यामन्तर्भूतत्वेन कर्मस्वरूपमेव प्रपञ्चयति । कामसंकल्पवर्जनं उपदिष्टं प्रथमतः । तत्कथं स्यादित्याकांक्षायां यतचित्तात्मत्वेन तद्भवेदिति प्रसाधितं । यतचित्तात्मत्वं कीदृशमिति पुनराकांक्षा, "यदृच्छे"ति पद्येन समाधीयते । यो यदृच्छा-

लाभसन्तुष्टः,—द्वन्द्वातीतो विमत्सरः स एव यतचित्तात्मा ॥ किं नाम द्वन्द्वातीतत्वं द्वन्द्वपदस्य संशयादिबहुवाचित्वादित्याकांक्षायां—सिद्ध्यसिद्ध्योस्समत्वं तदित्युक्त ॥ नैव किंचित्करोतीत्युक्तिः कर्ममिथ्यात्वादिभ्रमं जनयेदित्याशंकया तद्व्युदासाय "कुर्वन्नाप्नोति किल्बिषं" इति प्रपंचनत्वेनोक्तं ॥ तत्रापि किल्बिषस्यानेकविधत्वात् किं तदिह विवक्षितमित्याकांक्षायां प्रकृतश्लोके "न निबध्यते" इत्युक्त्या किल्बिषाप्राप्तिरिह बन्धाभावो विवक्षित इति प्रपंचितं द्रष्टव्यं ॥ एवं प्रकरणसङ्गतिः पौर्वापर्यसङ्गतिर्विशेषणविशेष्याणां परस्परसङ्गतिश्च श्रीमदाचार्याभिमता ज्ञेया ॥

शङ्करभाष्ये तु "शारीरं केवलं कर्मे"ति पूर्वतनाकांक्षानिवर्तकत्वेन, "यदृच्छे"ति पद्यमुत्थापितं ॥ "निराशी" रिति पद्यं "यदृच्छे"ति पद्य चोभयं यतिपरं इति तस्य दृढतराशयः ॥ यतिना भिक्षाटने शरीयात्रार्थ कर्तव्ये सति यथा शास्त्रमनुष्ठेयं नान्यथा प्रतिषिद्धाकारेणेति बोधयितुं "यदृच्छे"ति श्लोकः प्रवृत्तइत्यभिप्रयन् श्लोकाक्षराणि योजयतिस्म ॥ अत्रोच्यते ॥ यच्छङ्करभाष्ये कर्तृत्वमारोपितं मिथ्येति विवक्षया बन्धाभाव उपपादितः स न सङ्गतः ॥ कर्मण्यकर्मेत्यत्रैवास्यापव्याख्यानस्य निराकृतत्वात् । दूषणानि तत्रैव द्रष्टव्यानि । श्लोकानां यतिमात्रपरतायां ज्ञापकाभावश्च प्रागेव प्रदर्शितः ॥ जडभरतो हि ब्रह्मचारी निराशीरित्यादिमाहात्म्यसंपन्न एवाभूदिति ज्ञायते ॥ यथोक्त भागवते "यदृच्छयोपासादितमल्पं बहुमिष्टं कदन्नं वाऽभ्यवहरति । सुखदुःखयोर्द्वन्द्वनिमित्तयोरसंभावितदेहाभिमानश्शीतोष्णवातवर्षेषु वृष इवानावृताङ्गः पीनः संहननाङ्गः ॥ कणपिण्याकफलीकरणकुल्माषस्थालीपुरीषादीनमृतवदभ्यवहरति" इति ॥ गृहस्थो रन्तिदेवश्च गीतोक्तविरक्तिमानवगम्यते । उक्तं भागवते IX—18—13— "क्षुत्तृट्श्रमो गात्रपरिश्रमश्च, दैन्यं क्लमः शोकविषादमोहाः । सर्वे निवृत्ताः कृपणस्य जन्तोर्जिजीविषोर्जीवजलार्पणेन ॥" इति ॥

(निराशीरिति पद्यं यदृच्छेति पद्यंच यतिपरं इति शङ्कराचार्याभिप्राये सत्यपि तद्विग्रह एव केचिदन्यथा व्याचख्युः। तथाहि नीलकण्ठो निराशीरिति पद्यं यतिपरं यदृच्छेति तु गृहस्थपरं इत्याह। इयमस्यावतारिका व्याख्या-च। "ननु सपरिग्रहः कुटुंबभरणव्यग्रतया कथं वित्तव्ययायाससाध्यान्य-ग्निहोत्रादीन्यनुतिष्ठेदित्याशंक्याह यदृच्छेति * * * समो यदृच्छालाभेनैवेष्टि-पशुचातुर्मास्यादेर्नित्यकर्मणः सिद्धावसिद्धौ वा निर्विकारः। एवं भूतइष्ट्या-दीनि कृत्वापि तत्फलेन स्वर्गादिना न निबध्यते। अपि शब्दात्तज्जेन प्रत्यवायेन न निबध्यते। बन्धहेतोः कर्मणस्तत्वज्ञानेनैव दाहात्। तथाच स्मृतिः "न्याया-गतधनस्तत्वज्ञाननिष्ठोऽतिथिप्रियः। श्राद्धकृत्सत्यवादीच गृहस्थोपि विमुच्यते" इति। "भाष्येत्वयं श्लोकस्संन्यासिपरत्वेनैव व्याख्यातः" इति। एतेन यच्छङ्करभाष्ये संन्यासिपरत्वेनैव व्याख्यातं तदरम्य इति नीलकण्टेनैवाभ्युप-गतं द्रष्टव्यं। नीलकण्ठोदाहृता स्मृतिश्च यदृच्छालाभसन्तुष्टत्वादिकं गृहस्थ-स्यापि संभवति अनेनासौ मुक्तिं प्राप्नोतीत्यर्थं साधयति॥ ऋतामृताभ्यां जीवनं ब्राह्मणसामान्यस्य विहितं॥ "ऋतमुंछशिल प्रोक्तममृतं स्यादया-चितं" इत्युक्तेर्यदृच्छयालब्धममृतशब्दवाच्यं ब्राह्मणभोग्यं इति सिध्यति॥ "अकृत्वा परसन्तापं अगत्वा खलमन्दिरं। अक्लेशयित्वा चात्मानं यदल्पमपि तद्बहु" इत्यादयोप्यनुसन्धेयाः।

(यच्छङ्करभाष्ये "शारीरं केवलं" इत्युक्तिमाश्रित्य प्रकृतश्लोको-त्थापने, भिक्षाटनादावपि प्रतिषिद्धप्रकाराणि याचनादीनि विहाय, विहित-प्रकारेणैव शरीरं पोषणीयं इत्यभिप्रायेण, यदृच्छेति पद्यं प्रवृत्तमित्याशय उक्तः) सोऽपि शङ्करानन्देनोपेक्षितः। त्यक्त्वेत्यारभ्य क्रमेण त्रिभिः श्लोकैः प्रतिपादितं प्रमेयमयमेवं संगृह्णाति। "परावरैकत्वविज्ञानाग्निनिर्दग्धाविद्यातत्कार्यग्रन्थे-र्जीवन्मुक्तस्य विदुषः शरीरयात्रातिरिक्तं कर्तव्यं कर्म नास्तीति प्रतिपाद्य, निदि-ध्यासोर्यतेर्मौनिनस्त्वन्नतद्दातृविचारमन्तरेण शरीरयात्रां कुर्वतोपि विमुक्तिर्न-

प्रतिबध्यतइत्युक्त्वा जीवन्मुक्तस्याजगरवृत्तेर्यदृच्छाप्राप्तेन जीवनंकुर्वतोपि यतेर्या वृत्तिः सा मुक्तिप्रतिबन्धिका न भवतीतीदानीं प्रतिपादयति श्रीभगवान्" इति । तदानुगुण्येन शब्दार्थंचाह यदृच्छालाभसन्तुष्ट इत्यस्य "प्रारब्धवशात्स्वत एव प्राप्तः साधुना वाऽसाधुना वादत्तः शुद्धोऽशुद्धो वाऽल्पोऽनल्पो वाऽन्नादिस्तेनैव सन्तुष्टः" इति । अस्मिन्व्याख्याने शाङ्कराद्वैषम्यं द्रष्टव्यं । शाङ्करंहि "शारीरं कर्मे"ति सामान्यवचनस्य शास्त्रविरोधभिया विहितकर्मपरत्वेन संकोचाय "यदृच्छे"ति श्लोकप्रवृत्तिरिति निरूपयति ॥ शङ्करानन्दीयंतु अतीतश्लोकः निदिध्यासुपरः यदृच्छेति श्लोकस्त्वजगरवृत्तिजीवन्मुक्तपर इति विवेकमादाय श्लोकयोः प्रतिपाद्यभेदं प्रदर्शयति । किञ्च शाङ्करं गृह्यमाणान्नस्यायाचितत्वेन शुद्धत्वं दर्शयति ॥ इतरत्तु अजगरवृत्तित्वादन्ने असाधुदत्तमिति वा अशुद्धमिति वा दोषौ न शाङ्कितौ । तथाच शाङ्करशङ्करानन्दीययोर्व्याख्यानयोर्वैषम्यं स्फुटं ।

अयमत्र संग्रहः । गृहस्थकर्तव्यकर्माणि तस्य प्रत्यवायावहानि वा स्वर्गादिफलजनकानि वा न भवन्तीति नीलकण्ठीयं । अयाचितत्वेन शुद्धभूतमन्नं स्वीकृत्य यतिश्शरीरयात्रां कुर्यादिति शाङ्करं । यतिष्वजगरवृत्तिमानेवात्र विवक्षितः यस्याशुद्धान्नादिकं न दोषायेति शङ्करानन्दीयं । इति । कुत एवं यौक्तिकानां आश्रमभेदप्रभेदादिकं पुरस्कृत्यैव श्लोका योज्या इति निर्बन्धः । यतिमात्रपरत्वे त्वस्मिन्नुपदेशे अर्जुनस्य सर्वथाऽनधिकारः प्रसज्यते इति नालक्षितमिव परैः ॥ व्याख्यानेषु परकीयेष्वन्योन्यविरोधं विद्यमानमालोच्यापि परे मिथ्यात्ववादस्याकर्षणार्थमेव यतित्वपक्षपातिनस्सन्तः क्लिष्टमर्थं वदन्तीति निश्चीयते ।

अथ श्लोकगतपदानामीषदर्थविचारः क्रियते । द्वन्द्वातीत इत्यनेन सुखदुःखादीनां ग्रहणमुचितमिति विवृतिः । शीतोष्णादीनामिति शङ्कररामानुजाचार्यौ । "द्वन्द्वानि क्षुत्पिपासाशीतोष्णवर्षादीनि अतीतोऽतिक्रान्तः

समाधिदशायां तेषामस्फुरणात् ॥ व्युत्थानदशायां स्फुरणेऽपि परमानन्दाद्वितीयाकर्तृभोक्त्रात्मप्रत्ययेन बाधात् । "तैर्द्वन्द्वैरुपहन्यमानोऽप्यक्षुभितचित्तः" इति मधुसूदनः । अस्मिन्व्याख्याने समाधिस्थस्य ज्ञानिनस्संग्रहोऽनुपपन्नः । "कृत्वापि न निबध्यते" इत्यनेन विरोधात् । कर्तुरकर्मनिरूपणप्रकरणविरोधाच्च ॥

(द्वन्द्वशब्देन शीतोष्णादियुगलजातमविवक्षित्वा भेदबुद्धिगोचरप्रपंचं गृह्णाति शङ्करानन्दः । "द्वन्द्वानि त्वमहमिति इदमद इति इष्टमनिष्टमिति शुद्धमशुद्धमिति द्वैतमद्वैतमित्यादीनि विपरीत ज्ञानान्यतीतः सर्वत्र ब्रह्मदृष्ट्या विनष्टविपरीतदर्शनः" इति तद्वाक्यं ॥ इदमनुचितं । ज्ञानाग्निदग्धकर्माणमित्यादिभिर्गतार्थत्वाद्द्वन्द्वातीतशब्देन भेदमिथ्यात्ववर्णनस्यासाङ्गत्यात् ॥ द्वन्द्वातीत इति परमार्थतोऽभेदर्शी विमत्सरः यदृच्छालाभसन्तुष्टश्च कथनाम भवेदिति सन्दिह्यते ॥ मात्सर्यं खल्वविद्याभूमौ संभावितं । सर्वभेदमिथ्यात्वदर्शिनस्तु मात्सर्यस्य विशिष्यनिषेधः कुतः क्रियते ? यदृच्छालाभो हि व्यावहारिकः । तन्मिथ्यात्वपरिसंचक्षाणस्य संतोषो वा खेदो वा न सभवतीति कुतो विशिष्य तोषोक्तिः । एवं पारमार्थिकव्यावहारिकयोर्भूम्योर्मिथः परिवर्तने नियामकं न दृश्यते ॥ तस्मात् द्वन्द्वशब्दस्सुखदुःखादिप्रसिद्धयुगलजातपर इत्येवयुक्तं । अत एव भागवतोक्तिर्जडभरत प्रति "सुखदुःखयोर्द्वन्द्वनिमित्तयोरसंभावितदेहाभिमानः" इति/

(विमत्सरइत्यत्रापि क्लिष्टं परव्याख्यानं दृश्यते । "अहमेवेद सर्वमिति सर्वस्यस्वात्मत्वेनाधिगतत्वादुत्कृष्टत्वापकृष्टत्वभावनानुपपत्तौ सर्वत्रात्मबुद्धिः" इति शङ्करानन्दीये । अनयैवदिशा "निर्वैर" इति शङ्करभाष्यं । अत्रोच्यते । सर्वस्य स्वात्मत्वदर्शनं भ्रमः । वस्तुषु नीचोच्चताऽभावज्ञानं च मिथ्याज्ञानमेव । अयोग्येषु वैराभावोऽनुचितः ॥ तस्मात्स्वानधीनत्वनिमित्तखेदहीनो विमत्सरइति विवृत्युक्तमेव समीचीनं । इति ॥

यदृच्छालाभेत्यत्र अप्रयत्नलब्धो यदृच्छालाभ इतिं सर्वेष्याचक्षते । "यदृच्छातु तदिच्छास्या" दित्युक्तेर्भगवतः प्राप्तं गृहीत्वा तुष्ट इत्यर्थोप्यबाधितः । अत्र तेन त्यक्तेन भुञ्जीथामागृधः कस्यस्विद्धनं ।" इतीशावास्योपनिषदुक्तं संवादो भवति ॥

(त्यक्तेन दत्तेन गृधः आकाङ्क्षेथाः इत्यर्थः)

**गतसगस्य मुक्तस्य ज्ञानावास्थतचतसः ।**
**यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥ २३ ॥**

वि ॥ विक्षिप्य प्रागुक्तं पिण्डीकृत्य दर्शयति । गतसङ्गस्येति ॥ गतसङ्गस्य फलस्नेहरहितस्य । मुक्तस्य देहाद्यभिमानरहितस्य । स्वातन्त्र्याभिमानहीनस्येति वा । ज्ञानावस्थितचेतसः विष्णुज्ञानेभिनिविष्टचित्तस्य । यज्ञाय विष्णवे तत्प्रीत्यर्थं कर्माचारतः कुर्वतः कर्म प्रविलीयते, बन्धकं न भवतीत्यर्थः । यस्येत्यादिना यत्कामादिवर्जनमुक्तं, तद्गतसङ्गस्येत्यनेन, त्यक्तसर्वपरिग्रह इत्येतन्मुक्तस्येत्यनेन, कर्मण्यकर्मेति नित्यतृप्तइति च ज्ञानावस्थितचेतस इत्यनेन, पिण्डीकृत्य प्रदर्शितं ध्येयम् ॥

शं ॥ त्यक्त्वा कर्मफलासङ्गमित्यनेन श्लोकेन यः प्रारब्धकर्मा सन् यदा निष्क्रियब्रह्मात्मदर्शनसंपन्नः स्यात्तदा तस्यात्मनः कर्तृकर्मप्रयोजनाभावदर्शिनः कर्मपरित्यागे प्राप्ते

कुतश्चिन्निमित्तात्तदसंभवे सति पूर्ववत्तस्मिन्कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति स इति च कर्माभावः प्रदर्शितः। यस्यैवं कर्माभावो दर्शितस्तस्यैव गतसङ्गस्य सर्वतो निवृत्तासक्तेर्मुक्तस्य निवृत्तधर्माधर्मादिबन्धस्य ज्ञानावस्थितचेतसो ज्ञाने एवावस्थितं चेतो यस्य सोयं ज्ञानावस्थितचेतास्तस्य यज्ञाय यज्ञनिर्वृत्त्यर्थमाचरतो निर्वर्तयतः कर्म समग्रं सहाग्रेण कर्मफलेन वर्तत इति समग्रं कर्म तत्समग्रं प्रविलीयते विनश्यतीत्यर्थः ॥

रा ॥ आत्मविषयज्ञानावस्थितमनस्त्वेन निर्गततदितरसङ्गस्य ततएव निखलपरिग्रहविनिर्मुक्तस्य उक्तलक्षणयज्ञादिकर्मनिर्वृत्तये वर्तमानस्य पुरुषस्य बन्धहेतुभूतं प्राचीनं कर्म समग्रं प्रविलीयते निश्शेषं क्षीयते ॥

विचारः

शाङ्करेषु तावदस्य श्लोकस्योत्थापकसङ्गतिर्बहुधा निरूपितावगम्यते । तथाहि ॥ आरुरुक्ष्वारूढोभयविषयतया व्याख्याति श्रीधरः ॥ अन्येत्वारूढपरतयैव व्याचक्षते ॥ आरूढपरत्वपक्षेपि केचिद्यतिपरोयं श्लोक इति केचिद्गृहस्थापरोक्षदृकपर इत्याभिप्रयन्ति ॥ सन्यासिज्ञानिपक्षेपि ये प्रारब्धवशाल्लोक संग्रहार्थं कर्म कुर्वन्ति त एव विवक्षिताः नतु अतिक्रान्तप्रारब्धा जीवन्मुक्ताः केवलं शरीरयात्रार्थं जीवनसाधनमात्रोपयुक्तं कर्मकुर्वाणाः इत्यपरे मन्यन्ते ॥ इमे पक्षाः किंचिदालोच्याः ॥

निराशीरितिपद्यं (२१) यदृच्छेतिपद्यं च (२२) यतिपरं ॥ गतसङ्गस्येति पद्यन्तु जनकप्रभृति गृहस्थज्ञानिपरं इति मधुसूदनाभिप्रायः । "गृहस्थस्य ब्रह्मविदो जनकादेर्यज्ञादिरूपं यत्कर्म तद्बन्धहेतुः स्यादिति भवेत्कस्यचिदाशङ्का ॥ तामपनेतुं "त्यक्त्वाकर्मफलासङ्गं" इत्यादिनोक्तं विवृणोति गतसङ्गस्येति" इति तद्वाक्यं ॥ अत्रेदं वक्तव्यं ॥ त्यक्त्वाकर्मेति श्लोकोह्यनेन व्याख्यात्रा यतिमात्रपर इति न व्याख्यातः । यतिगृहस्थोभयसाधारणे सति गृहस्थोपि न बध्यतइत्यर्थोवगतएव भवति । अतो गृहस्थविषयकः संशयएवानुपपन्नः । तादृशसंशयायोगे तत्परिहारपरत्वेन श्लोकोत्थापनं न युक्तं भाति ॥ किंच प्राचीनकर्मणां दाहेपि उत्तरेषां कर्मणां अश्लेषेपि क्रियमाणतयावर्तमानानां कर्मणां कागतिरित्याक्षेपोहि "त्यक्त्वे"तिपद्यमपानुदत् मधुसूदनीयरीत्या ॥ गतसङ्गस्येति श्लोकस्तु कर्मसमग्रं प्रविलीयते इत्यभिधत्ते ॥ अतः श्लोकयोः प्रतिपाद्यभेदेन व्याख्येयव्याख्यानभावोपि नसेत्स्यति ॥ किंच "गतसङ्गस्ये"तिपद्यप्रतिपाद्योर्थः "त्यक्त्वे"ति पद्यार्थमेव विवृणोतीत्यत्र किंगमकं ॥ "यस्यसर्वे" इति श्लोकार्थं, "निराशी"रिति "यदृच्छे"ति श्लोकयोरर्थंचयथासंभवं विवृणोतीत्युक्तावप्यक्षरानुपपत्तिर्नदृश्यते ॥ न च वाच्यं "यज्ञायाचरतः" इति यज्ञशब्दः श्लोकस्य गृहस्थपरत्वे तन्त्रमिति ॥ यतः यज्ञाय विष्णवे तत्प्रीत्यर्थमिति स्वयं व्याचष्टे ॥ विष्णुप्रीतये कर्माचरणं हि सर्वाश्रमसाधारणं ॥ स्वोत्प्रेक्षां विनाऽमुकः श्लोकः यतिमात्रपरः अमुकस्तु गृहस्थमात्रपर इति विभाजकोपाधिर्न प्रतीयते ॥ अत एव नीलकण्टः यदृच्छेतिपद्यं शङ्करभाष्ये यतिमात्रपरत्वेनगृहीतमपि जनकादिगृहस्थविषयतया व्याकरोत् ॥ यथा तस्य विनानियामकं बिभागोत्प्रेक्षा तथा प्रकृते मधुसूदनस्य न पूर्वश्लोको गृहस्थपरः अपितु गतसङ्गस्येति प्रकृतश्लोक एव तथेति ॥

(शङ्कराचार्य, शङ्करानन्द, वेङ्कटनाथास्तु सर्वेप्यमीश्लोका यतिपरा-इत्यादाय श्लोकानां प्रतिपाद्यभेददर्शनाय यतन्ते ॥ स्थितप्रज्ञा यतयस्तावद्द्वि-विधाः । ज्ञानित्वेननिमित्तेन सर्वकर्मपरित्यागे प्राप्तेपि प्रारब्धवशास्सन्तः कुतश्चिन्निमित्तात्तदसंभवे ये लोकसंग्रहाय शिष्टाचारविहितानि यज्ञादीनि कर्माणि कुर्वन्ति ते एके ॥ अन्येतु यज्ञाद्यकुर्वाणाः केवलं देहधारणोपयुक्तं कर्मैव समाचरन्तः ॥ उक्तवर्गद्वये "निराशी"रितिपद्यं "यदृच्छे"तिपद्यंच द्वितीयवर्गमाहतुः ॥ आद्यवर्गस्थायतयस्तु "त्यक्त्वे"तिपद्येन प्रसक्ताः ॥ (तान्प्रत्येव "गतसङ्गस्ये"तिपद्यं विवरणार्थं पुनः प्रवृत्तं । इत्युक्तानां व्याख्या-तृणां भावः ॥ अत्रापि चिन्त्यते ॥ त्यक्त्वेत्यादीनां सर्वेषां यतिमात्रपरत्वे प्रत्यायकं लिङ्गन्तु नाद्यापिसूचितं ॥ जीवनार्थं कर्ता यतिः लोकार्थं कर्ता यतिः इति विभागस्य ज्ञापकंच नोक्तं कुत्रापि ॥ श्लोकाक्षराणितु सर्वत्र सर्वस्या-प्यवकाशं ददते ॥ अत एवहि स्वन्यूह एव भावभेदोधिगम्यते ॥ किंच गतसङ्गस्येति पद्यं लोकसंग्रहप्रयोजनककर्मकर्तारमेव यतिं प्रतिपादयति न तु देहमात्रधारिणं यतिं इति को निर्बन्धः ? ॥ न च वाच्यं यज्ञायाचरत इति वचनं तन्त्रं इति ॥ शङ्करभाष्यटीकायां आनन्दगिरिव्याख्यायां यज्ञ-पदस्य विष्णुपरत्वेनैव व्याख्यातत्वात् "यज्ञायेति । यज्ञनिर्वृत्त्यर्थं । यज्ञ-शब्दितस्यभगवतोविष्णोर्नारायणस्यप्रीतिसंपत्त्यर्थमिति यावत् ।" इति )

(नीलकण्ठस्तु नोत्थापयति गतसङ्गस्येति श्लोकं शङ्कराचार्य मधुसूदन शङ्करानन्द वेङ्कटनाथवत्त्यक्त्वेति श्लोकमेवालम्ब्य ॥ इदमस्यावतारिका "त्यक्त्वा कर्मफलासङ्गं' इत्यादिना श्लोकत्रयेण विद्वान्कर्माणि कुर्वन्नपि, न करोति । अतो न लिप्यते । लेपाभावाच्च न बध्यते । इत्युक्तं ॥ तत्किं कर्मणां फलदानशक्तिप्रतिबन्धो वा ज्ञानेन क्रियते उत निरन्वयाच्छद-एवेत्याशङ्क्याद्येमुक्तस्यापि पुनः संसारप्रसक्तिं पश्यन् द्वितीयमभ्युपगच्छति 'गतसङ्गस्येति ।' इति ॥ तथाचोक्तश्लोकत्रयाभिहितं अबन्धकत्वं कीदृशं

इत्याक्षेपस्समाधीयते इति तस्याशयः ॥ अयमपि मार्गो न निष्कण्टकः । यतोनेन कृतस्य विकल्पस्य बीजं दुर्गमं ॥ नैव किंचित्करोति—'न किल्बिषं प्राप्नोति—न निबध्यते' इति वचनत्रयं शंकास्पदं—"कर्मसमग्रं प्रविलीयते" इति वचनन्तु शङ्कानास्पदं इति विवेकस्य निर्मूलत्वात् ॥ किंच निष्कामनासामर्थ्यात्कर्मणां फलदानशक्तिप्रतिबन्धो भवतीत्युक्तावपि न बाधकं दृश्यते ॥ यद्यप्यत्रोक्तं "मुक्तस्यापि पुनस्संसारप्रसक्तिस्स्यात्" इति । तत्तु सूक्तिर्न ॥ मुक्तस्यानिष्टफलाश्लेषस्स्यात्—अनावृत्तिस्स्यात् इति ईश्वरनियमात्संसरणस्य दूरोत्सारितत्वात् ॥ किञ्च प्रविलयशब्दोक्तो निरन्वयोच्छेदोपि गौण इति नीलकण्ट एववक्ष्यति—"अयं च क्रियमाणकर्मप्रलयो विद्वद्दृष्ट्यैव । स्वाभाविकस्य तेषां फलजननसामर्थ्यस्य वन्ह्यौष्ण्यवदप्रत्याख्येयत्वात् ॥ अत एव ज्ञानेन पूर्वकर्मणां दाह उत्तरेषामश्लेषः श्रूयते । नतूत्तरेषामपि दाहः * * । 'तस्य पुत्रादायमुपयन्ति । सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यां ।' इति—विदुषोधनस्येव कर्मणामप्यन्यत्र गमनदर्शनान्न तेषां वस्तुवृत्त्या प्रलयोस्तीति ध्येयं" इति ॥ तथाच प्रविलीयते इत्युक्तस्यापि गौणार्थकल्पनया भाव्यं इत्यतो "न करोति" "न लिप्यते ॥" "न निबध्यते" इत्यत्रैवैतादृशगौणाश्रयणेन विवक्षितार्थसिद्धौ संभवन्त्यां, प्रविलीयत इति पुनर्वचनं व्यर्थम् ॥

(तस्मात् "गतसङ्गस्ये"ति पद्यस्य परकीयैः कल्पितं सार्थक्यं न किमपि प्रत्याययति ॥ अतः उपसंहरतीति श्रीमदाचार्यभाष्यं ॥ ज्ञानावस्थितचेतस्त्वस्य "ब्रह्मार्पण"मित्यनेन प्रपंचनादुपसंहारस्येहानवसरात् "विक्षिप्तं पिण्डीकरोति" इति भाष्यवाक्यं व्याख्यातं प्रमेयदीपिकायां ॥ केनपदार्थेन कस्य पदार्थस्य परामर्शो यद्विवक्षया पिण्डीकरणमुपपद्येत इत्याकांक्षायामुक्तं प्रमेयदीपिकायां ॥ यदुक्तं कामादिवर्जनं तदेव गतसङ्गस्येत्यनेनोच्यते ॥ त्यक्तसर्वपरिग्रहइत्येतन्मुक्तस्येत्यनेन ॥ कर्मणीति नित्यतृप्त इति

च ज्ञानावस्थितचेतसइत्यनेन।" इति॥ यदि पिण्डीकरणाख्योपपत्तिर्नाद्रियते तर्हि गतसङ्गस्येत्यादीनां पौनरुक्त्यं परकीयोक्तार्थानादायापि दुष्परिहरं। तथाहि। "गतसङ्गस्य" इत्यस्य "निवृत्तासक्तेः" इति शाङ्करव्याख्याने "कामवर्जिताः" "त्यक्त्वा फलासङ्गं" इत्यादिभिर्गतार्थता-स्फुटा॥ मुक्तस्येति पदं निवृत्तधर्माधर्मबन्धनस्य अहं ममाभिनिवेशविमुक्तस्य निरहङ्कृतेः इत्याद्यर्थाः परोक्ता अपि—"त्यक्त सर्वपरिग्रहः" "ज्ञानाग्निदग्धकर्माणं" "द्वन्द्वातीतः" इत्यादिभिः पुनरुक्ताः॥ "ज्ञानावस्थितचेतसः" इत्यस्य "दृश्यावगाहिन्यावृत्तेः सदा ब्रह्माकारतामेवापादयतः" इति शङ्करानन्दीयं च तद्वीत्यैव "द्वन्द्वीत" इत्यादिबहुपदैर्गतार्थं॥ इत्यलम्॥

"यज्ञायाचरतः" इत्यत्र यज्ञशब्दो विष्णुपरइत्येव व्याख्येयं। यद्यपि "यज्ञाय यज्ञनिर्वर्त्यर्थं" इति शंकरभाष्यं॥ तट्टीकायान्तु "भगवतो विष्णोर्नारायणस्ये"त्यर्थएव स्वीकृतः। मधुसूदनस्तु—"यज्ञाय यज्ञसंरक्षणार्थं। ज्योतिष्टोमादियज्ञे श्रेष्ठाचारत्वेन लोकप्रवृत्त्यै" इति व्याकरोति॥ एवं शङ्करानन्दोपि "श्रौतैः स्मार्तैश्च कर्मभिर्देवान् यजन्तीति यज्ञाः ब्राह्मणादयः। जातावेकवचनं। यज्ञाय लोकहिताय" इत्याह॥ एतेव्याख्यातारः प्रायशस्सर्वेपि यज्ञशब्दस्य विष्णुपरत्वमनुमोदन्ते। तथापि पक्षान्तरान्वेषणपराश्च सन्ति॥ विष्णुप्रीत्यर्थं कर्माचरणं ज्ञानिनः साक्षात्कृतपरब्रह्मणोऽनुपपन्नं गौरवापकर्षहेतुश्चेति तेषां भीतिर्दृश्यते॥ अतएव लोकहितायेति क्लेशयुतमर्थकल्पनं॥ अर्थद्वयमपि हातुमनिच्छन्श्रीधरस्तु सन्धिकरोति। तथाहि॥ "यज्ञाय परमेश्वरार्थं कर्माचरतः सतः समग्रं सवासनं कर्म प्रविलीयते। अकर्मभावमापद्यते॥ आरूढयोगपक्षे यज्ञायेति यज्ञसंरक्षणार्थं लोकसंग्रहार्थमेवकर्मकुर्वत इत्यर्थः" इति॥ अतएव नीलकण्ठोपि विष्णुप्रीतिफलं ज्ञाननिष्ठाप्राप्तिरूपं॥ तद्दशातीतस्याप्तलाभस्य ज्ञानावस्थितचित्तस्य तु

कर्म निष्प्रयोजनं इति मन्यते । अहो अयं भ्रमः । येन विष्णुप्रीतिरपि हेयतया प्रतीयते ॥

( विष्णुप्रीत्यर्थमित्यनुक्त्वा यज्ञायेति प्रयोगेणोत्तरप्रकरणच्छायापातस्सूचितः ॥ उत्तरं हि प्रकरणं बहून्यज्ञविशेषान्निरूपयति ॥ यज्ञशब्देनेह विष्णुग्रहणेप्यभिमन्यमानानांक्रत्वादीनां विवक्षा ध्वन्यते ॥ "यज्ञोविष्णुर्देवता" इति श्रुतिः । "यज्ञेनयज्ञमयजन्तदेवाः" इति च । यदस्तितज्जानातीति यज्ञः । निरुक्तत्वात्तकारलोपः ॥ यज्ञस्वरूपत्वाद्वराहावताररूपिणो विष्णोर्यज्ञवराहाभिधा प्रसिद्धा ॥ उक्तं भागवते III "नमोनमस्तेखिलदेवताद्रव्याय सर्वक्रतवे क्रियात्मने" इति । एवं पुराणान्तरेपि ।

"तस्याङ्गसन्धितोयज्ञाः जातास्तेवैपृथक्पृथक् ।
भ्रूनासासन्धिनाजातो ज्योतिष्टोमो महाध्वरः ॥
हनुश्रवणसन्ध्योस्तु वन्हिष्टोमो व्यजायत ।
एवं यावन्ति यज्ञानि भाण्डानि च हवींषिच ॥
तानियज्ञवराहस्य शरीरादेवचाभवन् ।
एवंयज्ञवराहस्य शरीरं यज्ञतामगात् ॥
यज्ञरूपेण सकलमाप्यायितुमिदंजगत् । "इति ॥

किंच आकूतिसूनोर्विष्णोर्यज्ञनामत्वं प्रसिद्धं भागवतादौ ॥ अयमेवेशावास्योपनिषद्देवता ॥ "स्वायं भुवस्स्वदौहित्रं विष्णुं यज्ञाभिधं मनुः । ईशावास्यादिभिर्मन्त्रैस्तुष्टावावहितात्मना ।" इति ब्रह्माण्डपुराणवचनं "यज्ञो यज्ञपुमांश्चैव यज्ञेशो यज्ञभावनः । यज्ञभुक्चेति पंचात्मा यज्ञेष्विज्योहरिःस्वयं ।" इति भागवततात्पर्योदाहृतं प्रमाणं ॥ एतेन प्रमाणेन यज्ञः यज्ञेशः यज्ञभुक् इति प्रत्येकं भगवन्नामानि ज्ञायन्ते ॥ तथापि नायं यज्ञशब्दोघटादिशब्दवद्रूढः । नवा डित्थादिसब्दवत्सांकेतिकः। किन्तु सर्वयज्ञेशत्वभोक्तृत्वरूपप्रवृत्तिनिमित्त-

पौष्कल्याद्धरौ योगरूढ्या वैशिष्ट्यमाचष्टे ॥ ईशत्वं प्रवृत्तिनिमित्तमिति राजा-जयीत्यादौ स्फुटं ॥ उक्तं भागवततात्पर्ये "क्रियाभिमानाद्यज्ञोसाविन्द्रसूनुः प्रकीर्तितः । यज्ञेशत्वात्स्वयं विष्णुर्यज्ञोरुचिसुतः स्मृतः" इति ॥ भोक्तृत्वं च प्रवृत्तिनिमित्तमिति—"सर्वयज्ञभुजेनमः" इतीशावास्यभाष्यस्य टीकायां प्रतिपादितं द्रष्टव्यम् ॥

**ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।**
**ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ २४ ॥**

वि ॥ एवं तत्तेकर्मप्रवक्ष्यामीति प्रतिज्ञातं कर्मस्वरूपं संक्षेपविस्तराभ्यां प्रतिपाद्य गतसङ्गस्येत्यनेनोपसंहृत्याधुना ज्ञानावस्थितचेतस्त्वं स्पष्टयति, ब्रह्मेति ॥ अर्प्यते समर्प्यते-ऽनेनेत्यर्पणं दर्वीपिटरादि । अर्पणहविरग्नीनां ब्रह्माभेदउच्यते ॥ ब्रह्म च तदर्पणं चेत्यादिव्युत्पत्तेः । तथा समाधिना-सह साहितं कर्म चाग्निहोत्रादि ब्रह्मेति कर्मसमाध्योरपि । तथा ब्रह्मणा हुतमित्यत्रापि प्रायपाठाद्ब्रह्मैव हुतमिति होमस्यापि ब्रह्माभेदः ॥ स तु अर्पणादिसत्ताप्रतीत्यादेर्ब्रह्मा-धीनत्वाभिप्रायेण ॥ त्वदधीनं यतस्सर्वमतस्सर्वो मतो भवानित्यादेः। इति मां योभिजानातीति श्लोकान्ते शेषः । तेनैव ब्रह्म गंतव्यमित्यन्वयः । एतेन ज्ञानावस्थितचेतः पदोक्तं परमेश्वरज्ञानमेवं रूपमिति स्पष्टीकृतं भवति ॥ यद्वा ब्रह्मणाहुतमिति असामानाधिकरण्यनिर्देशप्रायपाठात् ब्रह्म-

ण्यर्पणं ब्रह्मणो हविः ब्रह्मणोऽग्नौ । ब्रह्मणः कर्म । ब्रह्मकर्म न केवलं कर्ममात्रं ब्रह्मणः किन्तु समाधिना सहितं कर्म ब्रह्मणइत्यर्थः । अर्पणादिकं सर्वं तत्स्वामिकमिति यो जनाति तेन ब्रह्म गन्तव्यं इति योजना । एतेन प्राङ्मुक्तपदेनोक्तस्वातन्त्र्याभिमानत्यागः कर्माङ्गमुक्तः स कुत्रकार्यः, त्यक्तस्वातन्त्र्याभिमानं च वस्तु किमधीनं ज्ञेयं, यज्ञायेत्युक्तयज्ञार्थत्वं च किं, इति शङ्कात्रयं निरस्तं । हविरादौ स्वातन्त्र्याभिमानत्यागब्रह्माधीनत्वयोर्विष्ण्वर्पणमेव यज्ञार्थत्वमित्यस्य प्रतीतेरिति ॥

शं० ॥ ब्रह्मेति । कस्मात्पुनः कारणात्क्रियमाणं कर्म स्वकार्यारंभमकुर्वत्समग्रं प्रविलीयते इति । उच्यते ॥ यतः ब्रह्म इति ॥ ब्रह्मार्पणं येन करणेनप्रकारेण ब्रह्मविद्धाविरग्नावर्पयति तद्ब्रह्मैवेति पश्यति, तस्यात्मव्यातिरेकेणाभावं पश्यति, यथा शुक्तिकायां रजताभावं पश्यति ; तद्वदुच्यते ब्रह्मैवार्पणमिति यथा द्रव्यजातं तच्छुक्तिकैवेति ब्रह्म अर्पणमित्यसमस्तेपदे यदर्पणबुध्द्या गृह्यते लोके तदस्य ब्रह्मविदो ब्रह्मैवेत्यर्थः । ब्रह्महविस्तथा यद्धविर्बुध्त्यागृह्यमाणं तद्ब्रह्मैवास्य तथा ब्रह्माग्नाविति समस्तं पदं । अग्निरपि ब्रह्मैवयत्र हूयते ब्रह्मणा कर्ता । ब्रह्मैव कर्तेत्यर्थः । यत्तेन हुतं हवनाक्रियापि तद्ब्रह्मैव यत्तेन गन्तव्यं फलं तदपि ब्रह्मैव ब्रह्मकर्मसमाधिना ब्रह्मैव कर्म ब्रह्मकर्म तस्मिन्समाधिर्यस्य

स ब्रह्मकर्मसमाधिस्तेन ब्रह्मकर्मसमाधिना ब्रह्मैवगन्तव्यं ॥ एवं लोकसंग्रहं चिकीर्षुणापि क्रियमाणं कर्म परमार्थतोऽकर्म, ब्रह्मबुद्ध्युपमृदितत्वात् । तदेवं सति निवृत्तकर्मणोपि सर्वकर्मसन्यासिनः सम्यग्दर्शनस्तुत्यर्थं यज्ञत्वसंपादनं ज्ञानस्य सुतरामुपपद्यते ॥ यदर्पणाद्यधियज्ञे प्रसिद्धं तदस्याध्यात्मं ब्रह्मैव परमार्थदर्शिन इति ॥ अन्यथा सर्वस्य ब्रह्मत्वेऽर्पणादीनामेव विशेषतो ब्रह्मत्वाभिधानमनर्थकं ॥ तस्माद्ब्रह्मैवेदं सर्वमित्यभिजानतो विदुषः सर्वकर्माभावः कारकबुद्ध्यभावाच्च । नहिकारकबुद्धिरहितं यज्ञाख्यं कर्म दृष्टं सर्वमेवाग्निहोत्रादिकं कर्म· शब्दसमर्पितदेवताविशेषसंप्रदानादिकारकबुद्धिमत्कर्त्रभिमानफलाभिसन्धिमच्च दृष्टं नोपमृदितक्रियाकारककर्मफलभेदबुद्धिमत् कर्तृत्वाभिमानफलाभिसन्धिरहितं च । इदन्तुब्रह्मबुद्ध्युपमृदितार्पणादिकारकक्रियाफलभेदबुद्धिमत् कर्मातोऽकर्मैवतत्। तथाच दर्शितं 'कर्मण्यभिप्रवृत्तोपि नैव किंचित्करोतिसः'। 'गुणागुणेषुवर्तन्ते' 'नैवकिंचित्करोमीति युक्तो मन्येत तत्ववित्' इत्यादिभिः ॥ तथाच दर्शयंस्तत्रतत्र क्रियाकारकफलभेदबुद्ध्युपमर्दं करोति ॥ दृष्टा च काम्याग्निहोत्रादौ कामोपमर्देन काम्याग्निहोत्रादिहानिः ॥ तथा मतिपूर्वकामतिपूर्वकादीनां कर्मणां कार्यविशेषस्यारंभकत्वं दृष्टं ॥ तथेहापि ब्रह्मबुद्ध्युपमृदितार्पणादिकारकक्रियाफलभेदबुद्धेर्बाह्यचेष्टामात्रेण

कर्मापि विदुषोऽकर्म संपद्यते ॥ अतउक्तं 'समग्रंप्रविलीयत' इति। अत्रकेचिदाहुर्यद्ब्रह्म तदर्पणादीनि ॥ ब्रह्मैवकिलार्पणादिना पंचविधेन कारकात्मना व्यवस्थितं सत्तदेव कर्म-करोति। तत्र नार्पणादिबुद्धिर्निवर्तते। किंत्वर्पणादिषु ब्रह्म-बुद्धिराधीयते यथा प्रतिमादौ विष्ण्वादिबुद्धिर्यथाच नामादौ ब्रह्मबुद्धिरेवं इति ॥ सत्यमेवमपि स्याद्यादिज्ञानयज्ञस्तुत्यर्थं प्रकरणं न स्यात्। अत्र तु सम्यग्दर्शनं ज्ञानयज्ञशब्दितम-नेकान्यज्ञशब्दितान्क्रियाविशेषानुपन्यस्य 'श्रेयान्द्रव्यम-याद्यज्ञाज्ज्ञानयज्ञः' इति ज्ञानं स्तौति। अत्रच समर्थमिदं वचनं ब्रह्मार्पणमित्यादि ज्ञानस्य यज्ञत्वसंपादनेऽन्यथा सर्वस्य ब्रह्मत्वेऽर्पणादीनामेव विशेषतो ब्रह्मत्वाभिधानमन-र्थकं स्यात् ॥ येत्वर्पणादिषु प्रतिमायां विष्णुदृष्टिवद्ब्रह्मदृ-ष्टिः क्षिप्यते नामादिष्विव चेति ब्रूवते न तेषां ब्रह्मविद्यो-क्तेहविवक्षिता स्यादर्पणादिविषयत्वाज्ज्ञानस्य। नच दृष्टि-संपादनज्ञानेन मोक्षफलं प्राप्यते 'ब्रह्मैवतेनगन्तव्यं' इति-चोच्यते। विरुद्धं च सम्यग्दर्शनमन्तरेण मोक्षफलं। प्राप्यत-इति प्रकृतविरोधश्च। सम्यग्दर्शनं च प्रकृतं 'कर्मण्यकर्म-यः पश्येत्' इत्यत्र ॥ अन्ते च सम्यग्दर्शनस्यैवोपसंहारात्। 'श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः' 'ज्ञानं लब्ध्वा परां शा-न्तिं' इत्यादिना सम्यग्दर्शनस्तुतिमेव कुर्वन्नुपक्षीणोऽध्यायः। तत्राकस्मादर्पणादौ ब्रह्मदृष्टिरप्रकरणे प्रतिमायामिव विष्णु-

दृष्टिरुच्यत इत्यनुपपन्नं । तस्माद्यथाव्याख्यातार्थएवायं श्लोकः ॥

रा० ॥ प्रकृतिवियुक्तात्मस्वरूपानुसन्धानयुक्ततया कर्मणोऽज्ञानाकारत्वमुक्तं । इदानीं सर्वस्य सपरिकरस्य कर्मणः परब्रह्मभूतपरमपुरुषात्मकत्वानुसन्धानयुक्ततया ज्ञानाकारत्वमाह ❀ ❀ ❀ ब्रह्मार्पणमिति हविर्विशिष्यते । अर्प्यतेऽनेनेत्यर्पणं स्रुगादि तद्ब्रह्मकार्यत्वाद्ब्रह्म। ब्रह्म यस्य हविषोर्पणं तद्ब्रह्मार्पणं । ब्रह्महविः ब्रह्मार्पणं हविस्स्वयं च ब्रह्मभूतं, ब्रह्माग्नौ ब्रह्मभूतेग्नौ ब्रह्मणा कर्त्रा हुतमिति सर्वं कर्म ब्रह्मात्मकतया ब्रह्ममयमिति यस्समाधत्ते स ब्रह्मकर्मसमाधिः ॥ तेनैव ब्रह्मकर्मसमाधिना ब्रह्मैव गन्तव्यं । ब्रह्मात्मकतया ब्रह्मभूतमात्मस्वरूपं गन्तव्यं । मुमुक्षुणा क्रियमाणं कर्म परब्रह्मात्मकमेवेत्यनुसन्धानयुक्ततया ज्ञानाकारं साक्षादात्मावलोकनं न ज्ञाननिष्ठाव्यवधानेनेत्यर्थः ॥

विचारः

"यज्ञायाचरतः" इत्यत्र यज्ञशब्दो विष्णुवाचक इति सर्वसम्मतं। तत्प्रीत्यर्थं कर्मण्याचरिते सति समग्रकर्मप्रविलयउक्तः। शास्त्रेषु तु ब्रह्मणि समर्पणं विहितं। कथमेतदितिशङ्कायां विष्णुरेव ब्रह्मेत्यभिप्रेत्य ब्रह्मार्पणमिति ब्रह्मशब्दग्रहणं॥ "सविष्णुराहहि" "तं ब्रह्मेत्याचक्षते" इति पूर्वमीमांसान्तिमसूत्रयोर्विष्णोरेव ब्रह्मशब्दवाच्यत्वं गम्यते॥ किंच, यज्ञायेतिचतुर्थ्या तादर्थ्यं गम्यते। किं नाम यज्ञार्थत्वं इत्याकांक्षायां अर्पणं हविः अग्निः हवनं फलं कर्म समाधिश्च सर्वे ब्रह्माधीना इति बुद्ध्याऽऽचरणं तदित्यभिप्रैति ब्रह्मार्पणमिति॥

किंच मुक्तस्येत्युक्तं अतीतश्लोके ॥ देहाद्यभिमानरहितस्य स्वातन्त्र्याभिमानहीनस्यवेति तद्व्याख्यातं ॥ वैकुण्ठं प्राप्तस्येत्यर्थस्यानौचित्यात् ॥ कर्मण्यकर्मदर्शनात्कर्तव्योऽभिमानत्यागः कस्मिन्विषये इति सन्देहः परिहरणीयः ॥ त्यक्तस्वातन्त्र्याभिमानं वस्तु कस्याधीनं इति च चोद्यं समाधेयं ॥ एतयोश्चोद्ययोरप्युत्तरं ब्रह्मार्पणं इत्यादिना ॥ एतेन हविरादौ स्वस्वामिताभ्रमो न कर्तव्यः तानि सर्वाणि विष्णुमात्राधीनानीत्युक्तं भवति ॥ किंच ज्ञानावस्थितचेतस इत्यस्य विष्णुज्ञानेऽभिनिविष्टचित्तस्येति व्याख्यानं दृश्यते ॥ विष्णुज्ञानप्रकारोवर्णनीयो भवति ॥ तस्य स्पष्टीकरणार्थं यज्ञादिकमादायानुसन्धानप्रकारो वर्ण्यते ब्रह्मार्पणमित्यादिना ॥ एवं यज्ञाय मुक्तस्य ज्ञानावस्थितचेतसः इति पदत्रयोत्थापिताकांक्षापरिहारकत्वेन ब्रह्मार्पणं इति श्लोकस्य सङ्गतिः श्रीमदाचार्योक्ता तात्पर्यभाष्ययोः॥ शाङ्करास्तु समग्रं प्रविलीयते इति प्रतीकं सङ्गत्यर्थमाश्रयन्ते ॥ कर्मणां मिथ्यात्वाद्ब्रह्मदर्शिनां कर्मलयः इति तेषामाशयः ॥ इदमग्रे विचार्यते ॥

अस्मिन्श्लोके अर्पणहविरग्निहुतहोतृकर्मसमाधीनां ब्रह्माधीनत्वरूपं ब्रह्माभिन्नत्वं उच्यते ॥ "ब्रह्मकर्मसमाधिना" इत्यत्र समाधिना सह कर्म ब्रह्म इत्यर्थः ॥ कर्म समाधिश्च ब्रह्मेति यावत् ॥ अन्येतु ब्रह्मकर्मसमाधिनेत्येकं समस्तपदं मन्यन्ते ॥ ब्रह्मविषयस्समाधिर्यस्येति बहुव्रीहिबलात्तेनेत्युक्तज्ञानिविशेषणत्वमाहुश्शाङ्कराः । इदं प्रक्रमविरुद्धमित्युपेक्ष्यं ॥ ब्रह्मार्पणमिति प्रक्रमस्य ब्रह्माभेदप्रतिपादनपरत्वेन तैर्व्याख्यातत्वात्समाधेर्ब्रह्मविषयकत्वव्याख्याने ब्रह्मसमाध्योर्भेदप्राप्त्या प्रक्रमविरोधः स्यात् ॥

"सर्वं कर्म ब्रह्मात्मकतया ब्रह्ममयमिति यस्समाधत्ते स ब्रह्मकर्मसमाधि"रिति रामानुजभाष्यं ॥ "ब्रह्मात्मके कर्मणि समाधिरनुसन्धानं यस्ये"ति देशिकः ॥ "गत्यन्तराभावाद्व्यधिकरणो बहुव्रीहि"रिति च ॥ एवं व्याख्याने कर्मसमाध्योरपि ब्रह्मात्मताप्राप्तिरूपस्वारस्यं विहन्यते ॥ यद्यपि

हुतं इत्यनेन हवनक्रियायाः ब्रह्मत्वं उक्तमेव। तथाप्यनुक्तानां सर्वावान्तर-क्रियाणां संग्राहकस्य कर्मशब्दार्थस्य च ब्रह्मत्वं सुरसं॥ समाधेस्तु ब्रह्मता न सिध्यति बहुव्रीहिपरिग्रहेण॥ अतो व्यस्तपदत्वेन व्याख्यातं श्रीमदाचार्येण "समाधिना सह कर्मापि ब्रह्मैवे"ति॥ एवं चेत्तेनेत्यस्य परामर्शबोधकं विशेषणं न लभ्यते इति शङ्काऽवशिष्यते॥ इति योजानाति तेन ब्रह्मैव गन्तव्यं इति योजनायां नानुपपत्तिः। यत्तदोर्नित्यसंबन्धाच्छेषपूर्ति-स्सुघटा॥ कर्म समाध्योर्ब्रह्मतालाभस्वारस्यार्थमध्याहारः स्सह्यो भवतीति ध्येयम्॥

(ब्रह्मार्पणं, ब्रह्महविः ब्रह्मकर्म इत्युक्तानि समानाधिकरणानि॥ ब्रह्म चतदर्पणं चेति विग्रहेणवा व्यस्तपदत्वेन वा सामानाधिकरण्यं स्फुटं॥ (समानाधिकरणप्रायपाठानुगुण्येन ब्रह्मणाहुतं इत्यस्यापि हुतमेव ब्रह्मेत्यर्थ-उचितः॥ अथवा, ब्रह्मणा हुतं इत्यसामानाधिकरण्यमाश्रित्य ब्रह्मार्पणमित्यादि-शब्दानामप्यसामानाधिकरण्याभिप्रायेण व्याख्यानं च संभवति॥ ब्रह्मण्यर्पणं ब्रह्मार्पणं ब्रह्मणो हविर्ब्रह्महविः ब्रह्मणः कर्म ब्रह्मकर्म इति॥ एवं योजनायां सर्वस्य ब्रह्मस्वामिकत्वं स्फुटं सिध्यति॥ अतीतश्लोकगतमुक्तपदार्थविवरणं च सम्यग्भवति॥

(श्लोकाक्षरव्याख्याने व्युत्पत्तिवैचित्र्यं यत्संभावितं तन्नास्माकमनिष्टं॥ कर्तृकर्मकरणसंप्रदानाधिकरणाख्यपञ्चकारकाणां संग्राहकतया पदानि व्याख्या-तानि परैः॥ तथाहि। ब्रह्मणा इति कर्ता विवक्षितः॥ हविरिति त्यागप्रक्षे-पयोस्साक्षाद्विषयः॥ अग्निरित्यधिकरणं॥ हुतं इति हवनक्रिया त्यागप्रक्षेप-रूपा॥ अर्पणं इत्यत्र अर्प्यतेनेनेति चमसस्रुक्स्रुवादिकं यज्ञसाधनं, जुह्वादि-मन्त्रादि च॥ अर्प्यतेऽस्मै इति देवतारूपं संप्रदानं॥ अर्प्यतेऽस्मिन्नित्यधि-करणं देशकालादि॥ अर्प्यतेऽस्मै फलायेति वा॥ तथाच मन्त्रदेवतादेश-कालादि सर्वं ब्रह्मेति फलितोर्थः॥

सर्वंब्रह्मेत्युक्ते सर्वं मिथ्या ब्रह्ममात्रं सत्यं अधिष्ठानभूतमिति शाङ्करामन्यन्ते ॥ ब्रह्मकार्यत्वाद्ब्रह्मेत्युक्तिरिति रामानुजाचार्यः ॥ तदधीनसत्ताप्रवृत्तित्वाद्ब्रह्मेत्युक्तिरिति श्रीमध्वः ॥ अत्रप्रमाणं ॥

"त्वदधीनं यतस्सर्वमतस्सर्वो मतोभवान् । वदन्ति मुनयस्सर्वे न तु सर्वस्वरूपतः ।" इति पाद्मे ॥

एवमेवाग्रेपि "रसोहमप्सुकौन्तेये" त्याद्युक्त्वा "अहं क्रतुरहं यज्ञः स्वधाहमहमौषधं । मन्त्रोहमहमेवाज्यमहमग्निरहंहुतं ॥" इतीश्वराभेद-उच्यते ॥ IX-16-26

"ब्रह्मार्पण" मित्युक्तब्रह्मस्वामिकत्वानुसन्धानं "दैव" मित्यारभ्य वक्ष्यमाणसर्वविधयज्ञानामपि विहितं ज्ञेयं ॥ तथाहि ॥ अर्जुनकर्तव्ये युद्धमखे, अर्पणं रथाश्वधनुश्शस्त्रादिसाधनानि ब्रह्म ॥ श्रीकृष्णस्वामिकानि ॥ तथा हविर्दुर्योधनादयः । तथाग्निः युद्धं इत्यर्थः भगवदधीनं ॥ यथोक्तं "क्षितिभरमवरोपितुं कुरूणां श्वसन इवासृजदक्षवंशवन्हिं" इति ॥ (भा० I भीष्मस्तुतौ)॥ हुतं हवनं यथावक्ष्यते ॥ "मयैव ते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्" ॥ इत्यादि ॥

एतत्प्रकरणपरमानुकूलतया छान्दोग्योपनिषदुक्तं पञ्चमहायज्ञनिरूपणमादरेण पठनीयं ॥ तत्र हि विद्वत्कर्तृकाग्निहोत्रप्रस्तावे प्राणव्यानापानसमानोदानेभ्यस्स्वाहेत्याहुतिदानं तदानुसन्धानं तेन केषां तृप्तिः तत्फलं इत्यादयो वर्णिताः ॥ तथाहि ॥ अ०—V. खं.-19-1 ॥

"तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयꣳस यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणायस्वाहेति ॥ प्राणस्तृप्यति प्राणे तृप्यति चक्षुस्तृप्यति चक्षुषि तृप्यत्यादित्यस्तृप्यत्यादित्ये तृप्यति द्यौस्तृप्यति दिवितृप्यन्त्यां . यत्किञ्च

द्यौश्चादित्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजयापशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति.

खं २० अथ यां द्वितीयां जुहुयात्तां जुहुयाद्व्यानाय स्वाहेति व्यानस्तृप्यति । व्याने तृप्यति श्रोत्रं तृप्यति श्रोत्रेतृप्यति चन्द्रमास्तृप्यति चन्द्रमसि तृप्यति दिशस्तृप्यन्ति दिक्षुतृप्यन्तीषु यत्किंच दिशश्च चन्द्रमाश्चाधितिष्ठन्ति तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजयापशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ।

खं० २१ अथ यां तृतीयां जुहुयात्तां जुहुयादपानायस्वाहेत्यपानस्तृप्यति । अपाने तृप्यति वाक्तृप्यति वाचि तृप्यन्त्यामाग्निस्तृप्यत्यग्नौ तृप्यति पृथिवी तृप्यति पृथिव्यां तृप्यन्त्यां यत्किंच पृथिवी चाग्निश्चाधितिष्ठतस्तत्तृप्याति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ।

खं० २२ अथ यां चतुर्थीं जुहुयत्तां जुहुयात्समानाय स्वाहेति समानस्तृप्यति । समाने तृप्यति मनस्तृप्यति मनासितृप्यति पर्जन्यस्तृप्यति पर्जन्ये तृप्यति विद्युत्तृप्यति विद्युति तृप्यन्त्यां यत्किंच विद्युच्च पर्जन्यश्चाधितिष्ठत स्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ।

खं० २३ अथ यां पञ्चमीं जुहुयात्तां जुहुयादुदानाय स्वाहेत्युदानस्तृप्यति । उदाने तृप्यति त्वक् तृप्यति त्वचि तृप्यन्त्यां वायुस्तृप्यति वायौ तृप्यत्याकाशस्तृप्यत्याकाशे तृप्यति यत्किंच वायुश्चाकाशश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्जसेनेति ॥

खं०. २४. स य इदमविद्वानाग्निहोत्रं जुहोति यथाङ्गारानपोह्य भस्मनि जुहुयात्तादृक्तत्स्यात् ॥

२. अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति ॥

३. तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवँ हास्य सर्वे पाप्मानः प्रदूयन्ते य एतदेवं विद्वानग्निहोत्रं जुहोति" इति—

पिण्डीकृतमेतद्धरिकथामृतसाराख्यग्रन्थे कानडभाषायां ॥

"जननिपितभूवारिदांबरवेनिपपंचाग्नियलि नारायणनात्रिंशति मूर्तिगळव्यापारव्याप्तिगळिनेनदु दिवसगळेंब समिधगळनु निरन्तरहोमिसुत पावनके पावननेनिप परमन बेडु परमसुखा" ॥

एवमत्रविभागः प्रदर्श्यते प्रतीतिसौकर्यार्थं—

| 1 | 2 | 3 | 4 | 5 |
|---|---|---|---|---|
| नारायण | वासुदेव | संकर्षण | प्रद्युम्न | अनिरुद्ध |
| द्यु | पर्जन्य | धरा | पुरुष | स्त्री |

(१) द्यु (नारानणाधिष्ठित)

| 6 | 7 | 8 | 9 | 10 |
|---|---|---|---|---|
| नारायण | वासुदेव | संकर्षण | प्रद्युम्न | अनिरुद्ध |
| समित् | धूम | आर्चिः | अङ्गार | विस्फुलिङ्ग |
| आदित्य | रश्मि | अहः | चन्द्र | नक्षत्र |

श्रद्धाहविः ॥ ततस्सोमोत्पत्तिः

(२) पर्जन्य (वासुदेव)

| 11 | 12 | 13 | 14 | 15 |
|---|---|---|---|---|
| नारायण | वासुदेव | संकर्षण | प्रद्युम्न | अनिरुद्ध |
| समित् | धूम | अर्चिः | अङ्गार | विस्फुलिङ्ग |
| वायु | अभ्रं | विद्युत् | अशनि | ह्लादनय |

सोमो हविः ॥ वर्षं उत्पद्यते ॥

(३) धरा (संकर्षण)

| 16 | 17 | 18 | 19 | 20 |
|---|---|---|---|---|
| नारायण | वासुदेव | संकर्षण | प्रद्युम्न | अनिरुद्ध |
| \| | \| | \| | \| | \| |
| समित् | धूम | अर्चिः | अङ्गार | विस्फुलिङ्ग |
| \| | \| | \| | \| | \| |
| संवत्सर | आकाश | रात्रि | दिशः | अवान्तरदिशः |

वर्ष हविः ॥ अन्नमुत्पद्यते.

(४) पुरुष (प्रद्युम्न)

| 21 | 22 | 23 | 24 | 25 |
|---|---|---|---|---|
| नारायण | वासुदेव | संकर्षण | प्रद्युम्न | अनिरुद्ध |
| \| | \| | \| | \| | \| |
| समित् | धूम | अर्चिः | अङ्गार | विस्फुलिङ्ग |
| \| | \| | \| | \| | \| |
| वाक् | प्राण | जिह्वा | चक्षुः | श्रोत्र |

अन्नंहविः ॥ रेतउत्पद्यते.

(५) स्त्री (अनिरुद्ध)

| 26 | 27 | 28 | 29 | 30 |
|---|---|---|---|---|
| नारायण | वासुदेव | संकर्षण | प्रद्युम्न | अनिरुद्ध |
| \| | \| | \| | \| | \| |
| समित् | धूम | अर्चिः | अङ्गार | विस्फुलिङ्ग |
| \| | \| | \| | \| | \| |
| उपस्थ | उपमन्त्र | योनि | अन्तर्व्यापार | अभिनन्द |

रेतः हविः गर्भोत्पत्तिः ॥

(एवं द्युपर्जन्यधरापुरुषस्त्र्याख्याग्निषु श्रद्धासोमवर्षान्नरेतांसि हवींषि समर्प्य त्रिंशत्संख्याकभगवन्मूर्तीस्तोषयेदिति संग्रहः ॥ तत्फलंसमस्तदुरितक्षयोऽग्निना इषीकातूलवदिति मन्त्रेणज्ञायते )॥

ब्रह्मेतिपद्यस्यायं शङ्करभाष्यसंग्रहः॥ ब्रह्ममात्रं सत्यं॥ अर्पणहविरग्निहुतादयोमिथ्या रज्जौ सर्पवत्कल्पिताः। तत्र लोकसंग्रहचिकीर्षुणा, ब्रह्मबुध्युपमृदितज्ञानिना, स्रुक्स्रुवादिसमस्तं वस्तु अविद्यमानत्वेनैव दृश्यते। सर्वकर्मसंन्यासिना निवृत्तकर्मणा तु स्वकीयब्रह्मज्ञानमेव सर्वाणि यज्ञसाधनानीति गृह्यते॥ ब्रह्मज्ञानं यज्ञः यज्ञासाधनानि चेत्युक्तिस्तु ज्ञानस्य यज्ञत्वसंपादनद्वारा स्तुत्यर्थत्वेन सार्थिका॥ इति॥

एवं स्वाभिमतमर्थमुक्त्वा प्राचीनं व्याख्यानं प्रत्याख्यातं शङ्करभाष्ये॥ तथाहि। केचिदाहुः ब्रह्मैवार्पणादिना पंचविधेन कारकात्मना व्यवस्थितं सत्सर्वकर्तृ॥ प्रतिमादौ विष्णोरिव ब्रह्मणस्सान्निध्यं सर्वत्रावगम्यते॥ अतो यज्ञसाधनानां न मिथ्यात्वमिति। इदं नोचितं (१) यत उक्तसान्निध्यानुसन्धानपक्षः प्रकरणस्य ज्ञानस्तुतिपरतां विरुणद्धि। (२) यतो यज्ञसाधनेषु प्रतिमायामिव ब्रह्मबुद्धिर्नब्रह्मविद्या। (३) यतः प्रतिमायामिव ब्रह्मबुद्धि-'ब्रह्मैवतेनगन्तव्यं' इत्युक्तमोक्षफल प्रति न साधनं॥ इति॥ एवं परपक्षनिरासपूर्वं स्वपक्षे साधिते सतीदं शाङ्करव्याख्यानं युक्तं वा नवेति विचार्यं। उच्यते। (१) मूले अर्पणहविरादीनां मिथ्यात्वज्ञापकं न किंचिदपिपदं पश्यामः। मिथ्यात्वं पुरस्कृत्य कर्मप्रविलयनिरूपणं निर्मूलं। (२) किंच लोकसंग्रहं चिकीर्षुः कर्माणि ब्रह्मतया पश्यति निवृत्तकर्मा तु वैपरीत्येन ब्रह्म कर्मतया पश्यतीति विवेको योऽभिप्रेतस्तत्र सामंजस्य वा स्वारस्यं वा नप्रतीयते॥ (३) किंच सर्वस्य मिथ्यात्वे सर्वं मिथ्येत्यनुक्त्वा अर्पणं मिथ्या, हविर्मिथ्या, अग्निर्मिथ्या इति विशिष्योक्तिर्व्यर्था। ब्रह्मज्ञानस्य यज्ञत्वसंपादनेन स्तुतिरभिप्रेतेत्युक्तिश्च नप्रत्याययति। यज्ञत्वसंपादनेन कथं ब्रह्मज्ञानस्य पूर्वमविद्यमानोत्कर्षप्राप्तिस्संभवेत्। स्वतस्सिद्धोत्कर्षस्य ज्ञानस्य कर्माभेदसंपादनेन स्तुतिस्तु सुतरां नोपपद्यते॥ (४) यत्तुपरव्याख्यानं दूषितं तदपि चिन्त्यं॥ मिथ्यात्वबुध्यभावे केवलं भगवत्प्रति

मात्वबुद्धौ च प्रकरणस्य ज्ञानस्तुतिपरत्वं नसिध्यतीतिह्याक्षिप्त ॥ तन्न ॥ विना मिथ्यात्वबुद्धिं ज्ञानस्तुत्युपपत्तेः । सत्यवस्तुषु सन्निहितस्संस्तेषां सत्ताप्रवृत्त्यादिप्रदो भगवान् सर्वस्य कर्ता भोक्तेति बुद्धिर्हि ब्रह्ममहिमानमाविष्कृत्य तज्ज्ञानमुत्कर्षयति ॥ नेतरा मिथ्याप्रतीतिः ॥ यच्चाक्षिप्तं अर्पणहविरादिगोचरं ज्ञानं न ब्रह्मविद्येति तदपि न ॥ ब्रह्माधीनताज्ञानसहकृतार्पणादिबुद्धेर्ब्रह्मविद्यात्वोपपत्तेः ॥ ब्रह्मविद्यायां जगत् ईश्वराधीनत्वादिरूपेणापि नस्पुरणीयं इति को निर्बन्धः ॥ ज्ञानी खलु स्वमीश्वरप्रतिबिंबत्वेन जानन् ब्रह्म वेत्ति ॥ तादृशीबुद्धिर्ब्रह्मविद्यैव ॥ यदप्युक्तं अर्पणादिबुद्धिर्नमोक्षसाधनमिति ॥ तदयुक्तं ॥ तस्या उक्तरीत्या ब्रह्मविद्यान्तर्भावादपरोक्षज्ञानद्वारा मोक्षसाधनत्वसंभवात् ॥ नहि "ब्रह्मैव तेन गन्तव्य"मित्युक्तिः सर्वत्र साक्षात्साधनमेव गमयति ॥ यथासंभवं साक्षाद्वा व्यवधानेन वा ब्रह्मगन्तव्यं इत्यर्थस्य निरवद्यत्वात् ।

एवं सत्यपि दोषे, शाङ्करभाष्यपक्षपाती वेङ्कटनाथ आह ॥ "अत्र ब्रह्मार्पणमित्यर्पणादिकारकाणां ब्रह्मातिरेकेणासत्त्वं नोच्यते, किन्तु नामब्रह्मेत्यादिवदर्पणादिषु ब्रह्मदृष्टिः परं इति व्याख्यानस्य भाष्य एव निरस्तत्वात्तदनुवर्तिनो माध्वारामानुजादयोपि भाष्याक्षरैरेव शिक्षणीया इति नास्माभिः प्रयत्यते" इति ॥ कृतविचारेणेदं प्रत्युक्तमवगन्तव्यं ॥ तस्माच्छान्दोग्यादिश्रुत्युक्तपर्यालोचनयान्यप्रमाणपुञ्जबलाच्च श्रीमदाचार्योक्तएवार्थस्समीचीनः ॥

दैवमेवापरे यज्ञं योगिनः पर्युपासते ।
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५ ॥

वि ॥ पूर्वं भगवदधीनकर्तृत्वानुसन्धानपूर्वं तत्प्रीत्युद्देशेन वर्णाश्रमविहितानुष्ठानं कर्मेति सामान्यतः कर्मस्वरूपमुक्तं, तद्यज्ञादिभेदभिन्नमित्याह दैवामिति । दैवं विष्णुं यज्ञं यथा भवति तथा परे केचन योगिनो यतयः पर्युपासते । यज्ञपदमत्रोपासनरूपक्रियाविशेषणं । दैवमेवेत्येवकारोपि क्रिययैवान्वेति । भगवदुपासनमेव यज्ञतयानुतिष्ठन्ति केचिद्यतयइत्यर्थः । एतेनायज्ञस्येत्यादिना यज्ञादिहीनस्य नायं लोकोस्तीति वक्ष्यमाणतया यत्याश्रमविलोपप्रसङ्ग इति शङ्का निरस्ता । तेषामपि भगवदुपासनारूपयज्ञसत्वादिति । यद्वा दैवं यज्ञं इति सामानाधिकरण्यं । यज्ञरूपं भगवन्तं योगिनः पर्युपासते यज्ञत्वेनोपासते । तेषां तथोपासनमेव यज्ञइति भावः । भगवतः स्वानन्दरूपहविर्भोक्तृत्वात्स्वस्यैवाग्निरूपत्वाच्चेति ज्ञेयं । ब्रह्माग्नौ ब्रह्माख्याग्नौ यज्ञेनाग्निहोत्रादियज्ञेन यज्ञं भगवन्तं प्रति जुह्वति । यद्वा ब्रह्माग्नौ यज्ञमग्निहोत्रादिकं यज्ञेनैव यज्ञनामकेन भगवता निमित्तेन जुह्वति समर्पयन्ति । सर्वं यज्ञनामकविष्णवधीनं ज्ञात्वा स्वस्य स्वातन्त्र्याभिमानत्यागेन कृतं कर्म विष्णौ समर्पयन्तीति यावत् । यज्ञेनैवेत्यग्रे सर्वत्रान्वेति ॥

शं० ॥ तत्राधुना सम्यग्दर्शनस्य यज्ञत्वं संपाद्य तत्स्तुत्यर्थमन्येपि यज्ञाउपक्षिप्यन्ते दैवमेवेत्यादिना। दैवमेव देवाइज्यन्ते येन यज्ञेनासौ दैवो यज्ञस्तमेवापरे यज्ञं योगिनः कर्मिणः पर्युपासते कुर्वन्तीत्यर्थः। ब्रह्माग्नौ "सत्यं ज्ञानमनन्तं ब्रह्म" "विज्ञानमानन्दं ब्रह्म" "यत्साक्षादपरोक्षाद्ब्रह्म" "य आत्मा सर्वान्तरः" इत्यादिवचनोक्तमशनायादिसर्वसंसारधर्मवर्जितं "नेति नेति" इति निरस्ताशेषविशेषं ब्रह्मशब्देनोच्यते। ब्रह्म च तदग्निश्च सहोमाधिकरणत्वविवक्षया ब्रह्माग्निः॥ तस्मिन्ब्रह्माग्नौ अपरेऽन्ये ब्रह्मविदोयज्ञं यज्ञशब्दवाच्यआत्मा आत्मनामसु यज्ञशब्दस्य पाटात्तमात्मानं यज्ञं परमार्थतः परमेव ब्रह्म सन्तं बुद्ध्याद्युपाधिसंयुक्तमध्यस्तसर्वोपाधिधर्मकमाहुतिरूपं यज्ञेनैवात्मनैवोक्तलक्षणेनोपजुह्वति प्रक्षिपन्ति। सोपाधिकस्यात्मनोनिरुपाधिकेन परब्रह्मस्वरूपेणैव यद्दर्शनं स तस्मिन्होमस्तं कुर्वन्ति ब्रह्मात्मैकत्वदर्शननिष्ठाः संन्यासिनइत्यर्थः। सोयं सम्यग्दर्शनलक्षणोयज्ञो दैवयज्ञादिषु यज्ञेषूपक्षिप्यते ब्रह्मार्पणमित्यादिश्लोकैः "श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप" इत्यादिस्तुत्यर्थं॥

रा० ॥ एवं कर्मणोज्ञानाकारतां प्रतिपाद्य कर्मयोगभेदानाह। दैवं देवार्चनरूपं यज्ञं अपरे कर्मयोगिनः पर्युपासते सेवन्ते तत्रैव निष्ठां कुर्वन्तीत्यर्थः अपरे ब्रह्माग्नौ यज्ञं

यज्ञेनैवोपजुह्वति ; अत्र यज्ञशब्दोहविस्स्रुगादियज्ञसाधने वर्तते ; "ब्रह्मार्पणं ब्रह्महविः" इति न्यायेन यागहोमयोर्निष्ठां कुर्वन्ति ॥

विचारः

वस्तुसिद्धिरुद्देशलक्षणविभागपरीक्षाभिर्भवतीति न्यायं यथायोगमनुसरन् "किं कर्म" त्यादिना कर्माकर्मोद्दिश्य "कर्मण्यकर्म" त्यादिना भगवदधीनकर्तृत्वानुसन्धानपूर्वं तत्प्रीत्युद्देशेन वर्णाश्रमविहितानुष्ठानं सत्कर्मेति लक्षणमुक्त्वा, परीक्ष्यच, कर्मभेदान्प्रपंचयितुमारभते दैवमिति ॥ अत्र सत्कर्मप्रपंचनप्रकरणे कर्मयोगान्तर्भूतकाम्यकर्माणि न प्रसक्तिमर्हन्ति। निवृत्तकर्मसु, केचन देवतार्चनमानसपूजे एव कुर्वाणाः, केचनाग्निहोत्रं कुर्वाणाविद्यन्ते। उभयवर्गस्था अपि सात्विका इति श्लोकाभिप्रायः॥ दैवं विष्णुं, यज्ञंयथाभवतितथा उपासते इति योजना। यज्ञं इति क्रियाविशेषणं। नपुंसकान्तं। भगवदुपासनमेवयज्ञत्वेनानुतिष्ठन्तीत्यर्थः॥ अथवा यज्ञरूपं भगवन्तं उपासते इति विशेषणविशेष्यभावापन्नसामानाधिकरण्यप्रत्ययेऽपि नोपपत्तिः॥ कुतो भगवान्यज्ञ इत्याकांक्षायां भगवतः स्वानन्दरूपहविर्भोक्तृत्वात्स्वस्यैवाग्निरूपत्वाच्च यज्ञत्वं सुघटं॥ "योगिनः" इति पदेन काम्यकर्मिणइन्द्राद्यर्थं याजकाः न विवक्षिता इति ज्ञायते॥ दैवमेवेत्येवकारेण गृहस्था व्युदस्ताभवन्ति येषा बाह्यकर्माणि शास्त्रेविहितानि॥ यतयो हि चतुर्विधाः। कुटीजबहूदहंसपरमहंसभेदेन॥ यावज्जीवं पुत्रदत्तान्नादः कुटीजः॥ त्रिदण्डीशिखायज्ञोपवीतवान्ग्रामैकरात्रिर्बहूदः॥ यज्ञोपवीतवानेकदण्डीशिखारहितः हंसः॥ शिखायज्ञोपवीतहीनः एकदण्डी परमहंसः॥ एतेषु कुटीजबहूदहंसानां न बाह्यकर्माभावउक्तश्शास्त्रे॥ परमहंसस्तुबाह्यकर्मविधिहीनः॥ स एव विष्णुं यज्ञत्वेनोपासां कर्तुमधिकारीति श्लोके विवक्षितो

भवितुमर्हति ॥ यद्वा यतयस्सर्वेप्यग्निहोत्रादिकर्महीना इत्यादाय श्लोकप्रथमार्धे योगिन इत्यनेनाभिप्रेताः इत्यपिवक्तुं शक्यते ॥ तथाच सर्वे यतयो वा परमहंसा वा विष्णुपूजामेव यज्ञत्वेन संभाव्य कर्तारो भवन्तीति यावत् ॥ एवं यतिमात्रपरं प्रथमार्धमाह श्रीमध्वः ॥ "उपासते" इति मानसपूजायाविवक्षितत्वात् यतिपरत्वं दृढीकृतंभाति ॥ देवार्चनरूपं यज्ञं कर्मयोगिनः सेवन्ते इति रामानुजाचार्याशयः ॥ "देवताभ्यर्चनं चैव समिधाधानमेवच ।" इति नित्यकर्मतया मनुस्मृतौ स्मरणाद्देवतार्चनरूपो यज्ञस्सर्वेषां कर्मयोगिनामविशेषविवक्षयैव सर्वकर्मयोगिपरतामभिप्रैति देशिकः ॥ शाङ्करास्तु इदं श्लोकार्धं काम्यकर्मिपरमाहुः ॥ 'दैव' मितीन्द्रादीन्गृण्हन्ति । तत्प्रीत्यर्थं ये ज्योतिष्टोमादिकं कुर्वते तएव योगिनः इत्युक्ता इति मन्यन्ते ॥ ब्रह्मार्पणमित्यारब्धस्य श्रेयान्द्रव्यमयादित्युपसंहरिष्यमाणस्य ज्ञानस्तुतिप्रकरणस्यानुगुण्येन "ब्रह्माग्नावपरे" इत्युत्तरार्धे ज्ञानं स्तूयते ॥ ज्ञानोत्कर्षप्रदर्शनावसरे तद्विरोधिनः काम्यस्यापकर्षोहि वाच्यइत्याशयेन प्रथमार्धे श्लोके केचन काम्यकर्माणि कुर्वन्तीति वचनं सङ्गतमित्यभिप्रयन्ति ॥ तथाच यतिपरइत्याचार्यः । सर्वनिवृत्तकर्मिपरः इति रामानुजाचार्यः । काम्यकर्मिपर इति शाङ्कराः इति संग्रहः ॥ अत्र काम्यपरत्वपक्षोनुपपन्नः ॥ काम्यकर्मिणः प्रति योगिन इति स्तावकं वचनं विरुद्धं भाति ॥ काम्यकर्मिणामिह प्रस्तावो नोपपद्यते ॥ सत्कर्मनिरूपकत्वात्प्रकरणस्य कर्मप्रभेदानां प्रसक्तावपि विकर्मणां प्रसक्तिर्नसंगच्छते ॥ ज्ञानयज्ञस्तुत्यर्थं प्रकरणमित्यङ्गीकारेपि निन्दितकाम्यापेक्षया लब्धोह्युत्कर्षो न महीयानित्युपेक्ष्यः ॥ द्रव्ययज्ञादिनिवृत्तकर्मापेक्षया ज्ञानयज्ञः श्रेयानित्युत्कर्षवचने उपपन्नेसति तदर्थं काम्यपर्यन्तमनुधावनं व्यर्थं ॥ नहि दैवशब्दो विष्णुपरो न भवितुमर्हति ॥ नापि देवार्चनादिकं मानसपूजावा न यज्ञविशेषाः ॥ तस्मात्प्रक्रमानुरोधेन निवृत्तकर्मिग्रहणमेवोचितम् ॥

निवृत्तंकर्म तन्त्रसाराद्युक्तविधया देवतार्चनरूपं । मानसपूजावा ॥ यथोक्तमेकादशभगवते III "कर्माकर्मविकर्मेति वेदवादोनलौकिकः" इति कर्माकर्मविकर्मस्वरूपकथनमारभ्य "तत्रमुह्यन्तिसूरयः" इति गहनत्वमुक्त्वा क्रमेण प्रतिमार्चनक्रमो वर्णितः॥।

"य आशु हृदयग्रन्थिं निर्जिहीषुः परात्मनः ।
विधिनोपचरेद्देवं तन्त्रोक्तेन च केशवम् ॥ ४८ ॥

शुचिस्सम्मुख आसीनः प्राणसंयमनादिभिः ।
पिण्डं संशोध्य सन्यासकृतरक्षोर्चयेद्धरि ॥ ४९ ॥

अर्चादौ हृदयेवापि यथालब्धोपचारकैः ।
द्रव्यक्षित्यात्मलिङ्गानि निष्पाद्य प्रोक्ष्यचासनम् ॥ ५० ॥

पाद्यार्घ्याचमनीयाद्यैः स्नानवासोविभूषणैः ।
गन्धमाल्याक्षतस्रग्भिर्धूपदीपोपहारकैः ॥ ५१ ॥

साङ्गं संपूज्यविधिवत्स्तवैस्स्तुत्वानमेद्धरिम् ।
आत्मान तन्मयं ध्यायन् मूर्तिं संपूजयेद्धरेः ॥ ५२ ॥

शेषमाधायशिरसि स्वधाम्न्युद्वास्यसत्कृतम् ॥ ५३ ॥

एवमग्न्यर्कतोयादावर्चयेद्धृदयेच यः ।
यज्ञेश्वर स्वमात्मानमाचिरान्मुच्यतेहिसः" इति ॥ ५६ ॥

एतेन प्रतिमार्चन मानसपूजाग्निहोत्राख्यकर्मप्रभेदा उक्ताभवन्ति । गीतायांच तथैवोक्तिर्द्रष्टव्या ॥ दैवमिति श्लोके द्वितीयार्धे गृहस्थकर्मयोगिक्रियमाणाग्निहोत्रं उच्यते ॥ ब्रह्माख्याग्नौ अग्निहोत्रादियज्ञेन भगवन्तं प्रति जुह्वति ॥ यद्वा ब्रह्माग्नौ यज्ञं अग्निहोत्रादिकं यज्ञेनैव यज्ञनामकेन भगवता निमित्तेन समर्पयन्ति ॥ "यज्ञोविष्णुर्देवते"ति श्रुतिः ॥ अत एव "तं यज्ञं

बर्हिषिप्रौक्षन्पुरुषं जातमग्रतः।" इत्यत्र अग्रतो जातं पुरुषं यज्ञं प्रति विष्णुं प्रति बर्हिषि वन्हौ प्रौक्षन् इत्यर्थः॥ "विष्णुं रुद्रेण पशुना ब्रह्मा ज्येष्ठेन सूनुना। अयजन्मानसेयज्ञे पितरं प्रपितामहः" इति श्रुत्यर्थ उक्तः प्रमाणस्मृतौ॥

(इदं द्वितीयार्धं निवृत्तकर्माणं गृहस्थं वक्तीति श्रीमध्वरामानुजौ मन्येते॥ शाङ्करास्तु तन्निवृत्तसंन्यासिपरतया व्याचख्युः॥ यज्ञं इत्यनेन सोपाधिकमात्मानं गृण्हन्ति। अयमेव त्वंपदार्थः॥ ब्रह्माग्नाविति तत्पदार्थ उक्तः॥ निरुपाधिके ब्रह्मणीतियावत्॥ 'यज्ञेन' त्वंपदार्थाभेदेन॥ इत्थंभूतलक्षणे तृतीया॥ यज्ञशब्दस्यात्मनामसु यास्केन पठितत्वात् यज्ञस्सोपाधिकआत्मा॥ यज्ञेन मनसा इति वा॥ सोपाधिकस्यात्मनोनिरुपाधिकेन परब्रह्मस्वरूपेणैव यद्दर्शनं स तस्मिन्होमः॥ अयमेवार्थः प्रतिपादितः शङ्करानन्दीये। तथाहि। "अपरे गृहिभ्योभिन्नाः यतयः ब्रह्माग्नौ अविद्यातत्कार्यदावदाहकत्वात्सोपाधिकात्माहुतिप्रक्षेपस्याधिकरणत्वाच्च परंब्रह्माग्निरुच्यते॥ यज्ञं पामरैरहं भोक्तेति विषयोपभोगैरिज्यते इति यज्ञ आत्मा सोपाधिकः। तं॥ यज्ञेन ब्रह्मास्मीति अहं पदार्थं सोपाधिकवत्प्रतीयमानं विवेकवृत्त्या निर्विशेषं भावयित्वा ब्रह्माभिन्नमनुभवन्तीत्यर्थः॥ यद्वा यज्ञमात्मानं सोपाधिकं यज्ञेन (यज्ञोवै विष्णुः) सोपाधिकेनेश्वरेण सहैव जुह्वति॥ सोपाधिकमीश्वरं सोपाधिकमात्मानं चोभौ तत्तदुपाधिमपोह्यचोभयोरधिष्ठानभूतेन तुरीयेण निर्विशेषेण ब्रह्मणाऽभिन्नौ पश्यन्ति॥ यथा तरङ्गबुदबुदौ तन्नामरूपापोहेन तदाधारभूतसमुद्रेणाभिन्नौ पश्यन्ति तद्वत्।" इति॥)

(अत्रोच्यते, 'यज्ञं' इति सोपाधिकात्मा उच्यते इति क्लिष्टं। यास्कपाठस्तु अप्रसिद्धः॥ आत्मनामसु पाठेसत्यपि सोपाधिकेत्यात्मविशेषणप्रक्षेपस्स्वकल्पितः॥ 'ब्रह्माग्नौ यज्ञं (जीवं) उपजिह्वती'त्येतावतैवनिर्वाहे

"यज्ञेनैवे" त्यधिकोक्तिरुक्तार्थं बाधते ॥ नहि सोपाधिकत्वप्रकारेणैव निरूपाधिके लयः परैरङ्गीकृतः ॥ तत्त्वमसीत्यत्र विरुद्धांशपरित्यागेन हि चिन्मात्रैक्यदर्शनं प्रतिपादितं ॥ एवं प्रकृतेऽपि "यज्ञं ब्रह्माग्ना" वित्यनेन "तत्वमसी"ति वाक्यसमानार्थ उक्तस्स्यात् ॥ यज्ञेनैवेति सावधारणोक्तिरुपाध्यंशविच्छेदं प्रतिबध्नाति ॥) "अहंपदार्थं सोपाधिकवत्प्रतीयमानं विवेकवृत्त्यानिर्विशेषं भावयित्वा" इति शङ्करानन्देन यदुक्तं तद्यज्ञेनेत्यनेन कथं लभ्यतइति चिन्त्यते ॥ प्रत्युत सविशेपत्वभावना तृतीयार्थः स्यात्। नतु निर्विशेषत्वभावना ॥ एवं अस्वारस्याभियैव शङ्करानन्दस्तृतीयान्तं यज्ञशब्दं विष्णुपरत्वेन यद्वेत्यादिना व्याचष्टे। इत्थंभूतलक्षणे तृतीयेति पक्षं विहाय सहयोगे तृतीयेत्यादाय विष्णुनासह इति योजयति ॥ एवंयोजनायां अर्जुनकृष्णयोरुभयोरपि ब्रह्माग्निप्रवेश इत्याशयः ॥ यदत्रेश्वरस्यसोपाधिकत्वं अभिप्रेतं तदप्रामाणिकं ॥ अतस्सूक्तं देशिकेन "अत्राग्नित्वेन कल्पिते ब्रह्मणि यज्ञशब्दनिर्दिष्टं जीवमपूर्वं वा हविष्ट्वेन परिकल्प्य प्रक्षिपन्तीत्यादिपरव्याख्यानानि शब्दवृत्तिपरिक्लेशादेव निरस्तानि" इति ॥

श्रीधरोपि "यज्ञं" इत्यत्र सोपाधिक 'त्वं' पदार्थं विहायान्यथा व्याचष्टे। "ब्रह्मरूपेग्नौ यज्ञेनैवोपायभूतेन ब्रह्मार्पणमित्युक्तप्रकारेण यज्ञमुपजुह्वति। यज्ञादिसर्वकर्माणि प्रविलापयन्तीत्यर्थः" इति ॥ एतेन यज्ञशब्दस्य जीवपरत्वमरम्यामिति स्वव्यूहएवाभिप्रायो विज्ञायते ॥

यत्तु "द्वितीयान्तयज्ञशब्दोहविर्विषयः तृतीयान्तस्तुस्रुगादिविषयः"। इति देशिकेनोक्तं तदपि चिन्त्यं। स्रुगादिनेति यज्ञकरणस्योक्तौ सार्थक्यादर्शनात् ॥ 'यज्ञं' इति द्वितीयान्तशब्देनैव हविरादिसर्वपरिकराणां ग्रहणसंभवात् ॥ तस्माद्द्वितीयान्तेन वा तृतीयान्तेन वा यज्ञनामका विष्णुर्गृह्यतेइत्येव

साधुः ॥ विष्णुंप्रति तत्प्रीत्यर्थमितियावत् । प्रसिद्धेन यज्ञेन ॥ अथवा यज्ञ-नामकेनभगवता निमित्तेन यज्ञं अग्निहोत्रादिक समर्पयन्तीतिपक्षद्वयेऽर्थो वेदितव्यः ॥

**श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।**
**शब्दादीन्विषयानन्ये इन्द्रियाग्निषु जुह्वति ॥२६**

वि० ॥ अन्ये योगिनः श्रोत्रादीनि ज्ञानेन्द्रियाणि संयमाग्निषु जुह्वति । भगवत्पूजात्वेनेन्द्रियनियमनं कुर्वन्ति प्रत्याहारादिना ॥ सर्वं यज्ञाख्यहर्यधीनं न क्वचिदपि स्वातन्त्र्यमिति ज्ञात्वेत्यर्थः । एतदपि ब्रह्मार्पणरूपमेव विवक्षितं । एवमग्रेपि । अत एव वक्ष्यति एवं बहुविधा यज्ञा इतीति ज्ञेयं ॥ अन्ये योगिनः शब्दादीन्शब्दस्पर्शरूपरसगन्धान्विषयान्श्रोत्रादीन्द्रियाख्याग्निषु जुह्वति ॥ यज्ञेनैव यज्ञाधीनं ज्ञात्वा स्वस्वातन्त्र्याभिमानत्यागेन भगवत्पूजात्वेन विषयान्भुञ्जतइत्यर्थः ॥

शं० ॥ श्रोत्रादीनीति । श्रोत्रादीनीन्द्रियाण्यन्ये योगिनः संयमाग्निषु । प्रतीन्द्रियं संयमो भिद्यतइति बहुवचनं । संयमा एवाग्नयस्तेषु जुह्वति इन्द्रियसंयममेव कुर्वन्तीत्यर्थः । "शब्दादीन्विषयानन्ये इन्द्रियाग्निषु जुह्वति" इन्द्रियाण्येवाग्नयस्तेष्विन्द्रियाग्निषु जुह्वति श्रोत्रादिभिरविरुद्धविषयग्रहणं होमं मन्यन्ते ॥

रा० ॥ अन्ये श्रोत्रादीनामिन्द्रियाणां संयमने प्रयतन्ते। अन्ये योगिनः इन्द्रियाणां शब्दादिविषयप्रवणतानिवारणे प्रयतन्ते ॥

विचारः

पूर्वश्लोकाद्यज्ञेनैवेत्यनुषङ्गः। संयमाग्निषु जुह्वति यज्ञेनैव, इन्द्रियाग्निषु जुह्वति यज्ञेनैव, इति। एवमुत्तरश्लोकेऽपि जुह्वतीत्यनन्तरं यज्ञेनैवेति शेषः पूरणीयः ॥ यज्ञाधीनं ज्ञात्वेत्यर्थः॥ एतेन सर्वोऽपि नियमो भगवत्पूजात्वानुसन्धानेन यज्ञतामाप्नोतीति भावः प्रकाश्यते॥

रामानुजाचार्यदेशिकौ श्लोकस्य प्रथमार्धं इन्द्रियनिग्रहपरतया द्वितीयार्धं विषयनिग्रहपरतया व्याचक्षाते॥ विषयस्य नियमनं नाम तत्सन्निधिपरिहारः। ततएवेन्द्रियाणां तत्प्रवणता निवर्तते॥ यथा होमेन हविषो विनाशः क्रियते तद्वदत्र शब्दादेरिन्द्रियेषु विनाशो नाम तत्संबन्धविनाशो विवक्षितः॥ तथाच विषयसन्निधानेपि इन्द्रियसंयमयत्नः प्रथमार्धोक्तो यज्ञः॥ विषयाणामतिबलिष्ठत्वेन तद्दूरीकरणयत्नो द्वितीयार्धोक्तो यज्ञः॥ "इन्द्रियेभ्यः पराह्यर्थाः" इति हि प्रागुक्तं॥ विषयसन्निधेर्बलिष्ठत्वात् विषयाणां इन्द्रियेभ्य उत्तमत्वमभिहितं॥ तस्मादिह गीतायां इन्द्रियनिग्रहः प्रथममुक्तः। ततोविषयनिग्रहः॥ उत्तरश्लोके "आत्मसंयमयोगाग्नौ" विति मनोनिग्रहश्चवक्ष्यते। अर्थेभ्यश्चपरंमन इत्युक्तरीत्या मनोनिग्रहस्य वक्तव्यत्वात्॥ तथाच विषयाभोगविषयात्पलायनरूपयज्ञविशेषौ श्लोकप्रतिपाद्याविति रामानुजदेशिकयोराशयः॥ यद्वेति पक्षान्तरमप्याह देशिकः। "श्रोत्रादीनीत्यत्र विषयसन्निधिपरिहारोविवक्षितः। इहतु (द्वितीयार्धे) सन्निहितानामपि विषयाणामकिंचित्करत्वापादनमिति विभागः।" इति

(अत्रचिन्त्यते । "(इन्द्रियेभ्यः पराह्यर्था" इत्यादितारतम्योक्तिरिहानुपयुक्ता ।( प्रथमार्धे इन्द्रियनिग्रह उक्तः द्वितीयार्धे विषयनिग्रहइति विवेको दुर्घटः ।(इन्द्रियनिग्रहोनाम विषयपरित्यागः । सएव विषयनिग्रहोपीति फलितार्थे, भेदो न दृश्यते ।( किंच इन्द्रियाणां शब्दादिविषयविवक्षयाग्नित्वमुक्तं श्लोके । तेन विषयेन्द्रियसन्निकर्षोभिप्रेतः नतु विषयेभ्यः पलायनमितिगम्यते । अन्यथा विषयवियोगाग्निष्वित्यवक्ष्यत् ।। नत्विन्द्रियाग्निष्विति ।। तथाच द्वितीयार्धश्लोकेन विषयेन्द्रियासन्निकर्षस्य परामर्शो नोचितोभाति । एवमनौचित्यानुसन्धानेनेव देशिको यद्वेतिपक्षान्तरमाश्रित्य प्रथमार्धेन विषयसन्निधिपरिहरो विवक्षितः द्वितीयार्धेन सन्निहितविषयाणां अकिंचित्करत्वं इति व्याचष्टे ।( अयंपरिष्कारः यद्यपिपूर्वस्माच्छ्रेष्ठएव ।( तथाप्यकिंचित्करत्वं कीदृशमिति विचार्यं । यदिविषयास्सर्वथा न भुज्यन्तइत्याशयस्तर्हि "इन्द्रियाग्निषुजुह्वती" त्युक्तस्य हवनस्य निषेधादनुपपत्तिस्तदवस्था ।(अतो यथोचितभोगएव वाक्यार्थः पर्यवस्यतीति भाति ।।

(अतएव विवृत्याचार्यैः प्रथमार्धं प्रत्याहारादिना क्रियमाणमिन्द्रियनिग्रहं प्रतिपादयति द्वितीयार्धंतु भगवत्पूजात्वेन विषयभोगं प्रतिपादयतीत्यभिप्रैति ।। तथाच भगवत्पूजात्वेन विषयाभोगविषयभोगौ क्रमाद्विवक्षिताविति यावत् । अयमेवशङ्करभाष्याशयश्च)।।

(शङ्कराचार्यानुगेषु श्रीधरशङ्करानन्दावेकरीत्या)(मधुसूदननीलकण्ठावन्यरीत्या व्याचक्षाते ।)("ब्रह्माग्नावपरइत्यनेन ब्रह्मविदां कर्तव्यं ज्ञानयज्ञं विधाय अब्रह्मविदां कर्तव्यानि यज्ञान्तराण्याह" तिशङ्करानन्दीयावतारिका ।। श्लोकार्थश्चैवमुक्तः । "( उक्तेभ्योऽन्येत्वब्रह्मविदो मुमुक्षवो नैष्ठिकब्रह्मचर्यादयः इन्द्रियाणि श्रोत्रादीनि वागादीनि च संयमाग्निषु जुह्वति । इन्द्रियनिग्रहरूपं यज्ञं कुर्वन्तीत्यर्थः ।( एतदन्ये गृहिणो मुमुक्षवः स्वधर्मनिष्ठाः शब्दादिविषयाननिषिद्धान्योग्यकालएवेन्द्रियाग्निषु तन्निक्षेपणाधिकरणत्वादि-

न्द्रियाण्येवाग्नयस्तेषु जुह्वति । विषयानुभवनियम एव तेषां यज्ञ-इत्यर्थः ॥" इति ॥ अस्मिन् व्याख्याने "अन्ये" इति द्विरुक्तेनावि द्वब्रह्मचारिगृहिणौविवक्षितावित्यत्र गमकंचिन्त्यं ॥ श्रोत्रादीनीन्द्रियाणीत्यनेन वागादिकर्मेन्द्रियग्रहणमनुचितं । ज्ञानेन्द्रियमात्रविवक्षायाः स्फुटत्वात् ॥ कर्मेन्द्रियाणां उत्तरश्लोके वक्ष्यमाणत्वात् ॥ मधुसूदनस्तु पूर्वश्लोकार्धं समाधिस्थज्ञानिपरतया अन्यार्धं व्युत्थितज्ञानिपरतया व्याचष्टे ॥ "अन्ये प्रत्याहारपराः । संयमाग्निषु । धारणा, ध्यानं, समाधिरितित्रयमेकविषय संयमशब्देनोच्यते ॥ तथाचाह भगवान्पतञ्जलिः "त्रयमेकत्रसंयम" इति ॥ तत्र हृत्पुण्डरीकादौ मनसश्चिरकालस्थापनं धारणा ॥ एवमेकत्र धृतस्य चित्तस्य भगवदाकारवृत्तिप्रवाहोन्तरान्तरान्याकारप्रत्ययव्यवहितोध्यानं ॥ सर्वथा विजातीयप्रत्ययानन्तरितः सजातीयप्रत्ययप्रवाहः समाधिः ॥ चित्तस्यहि पंचभूमयो भवन्ति । क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति ॥ तत्र रागद्वेषादिवशाद्विषयेष्वभिनिविष्टं क्षिप्तं । तन्द्रादिग्रस्तं मूढं । सर्वदा विषयासक्तमपि कदाचिद्ध्याननिष्ठं क्षिप्ताद्विशिष्टतया विक्षिप्तं ॥ तत्र क्षिप्तमूढयोः समाधिशङ्कैव नास्ति ॥ विक्षिप्तेतु चेतसि कादाचित्कः समाधिर्विक्षेपप्राधान्याद्योगपक्षे न वर्तते । किन्तु तीव्रपवनविक्षिप्तप्रदीपवत्स्वयमेव नश्यति ॥ एकाग्रन्तु एकविषयकधारावाहिकवृत्तिसमर्थं सत्वोद्रेकेण तमोगुणकृततन्द्रादिरूपलयाभावादात्माकारवृत्तिः । * * अस्यांभूमौ संप्रज्ञातः समाधिः ॥ तत्र ध्येयाकारावृत्तिरपि भासते । तस्याअपि विरोधे निरुद्धं चित्तमसंप्रज्ञातसमाधिभूमिः ॥ * * अनेन रूपेण सयमानां भेदादग्निष्विति बहुवचनं ॥ तेषु इन्द्रियाणि जुह्वति ॥ धारणाध्यानसमाधिसिध्यर्थं सर्वाणीन्द्रियाणि स्वस्वविषयेभ्यः प्रत्याहरन्तीत्यर्थः ॥ * * तदेवं समाध्यवस्थायां सर्वेन्द्रियवृत्तिनिरोधो यज्ञत्वेनोक्तः ॥ इदानीं व्युत्थानावस्थायां रागद्वेषराहित्येन विषयभोगोयः सोप्यपरो यज्ञइत्याहशब्दादीनिति ॥ * * अन्ये व्युत्थितावस्थाः

श्रोत्रादिभिरविरुद्धविषयग्रहणं स्पृहाशून्यत्वेनानन्यसाधारणं कुर्वन्ति । स एव तेषां होमः ।" इति ॥

इममेव पन्थानं शब्दतोप्याश्रयते वेङ्कटनाथः ॥

अत्र संयमाग्निषु इति वहुवचनेन ज्ञानेन्द्रियाणां पञ्चानां संयमाः पञ्चेति शङ्करभाष्याशयः ॥ मधुसूदनीयेतु धारणाध्यानसमाधिभेदेन संयम-बहुत्वमुपपादितं । अत्र गुरुशिष्ययोर्भेदः स्फुटः ॥

यदि च नेह धारणादय एव साक्षाद्विवक्षिताः किन्तु धारणादिसित्ध्यर्थं ज्ञानेन्द्रियाणां स्वस्वविषयेभ्यः प्रत्याहाराएवोच्यन्ते इति तर्हि "संयमानां भेदादग्निष्विति बहुवचनं" इत्युक्तिविरोधआपद्येत ॥ किंच इन्द्रियाणि संयमाग्निषुजुह्वतीत्युक्तेरिन्द्रियनिग्रहो विवक्षितः ॥ धारणाध्यानसमाधयस्तु चित्तसंयमाः "आत्मसंयमयोगाग्ना" वित्युत्तरश्लोके वक्ष्यमाणाः ॥ अतश्चित्तनिरोधस्येह प्रवेशो न सङ्गच्छते ॥ असंप्रज्ञातसमाधि वक्तुं आन्तर-बाह्यसर्वेन्द्रियव्यापारोपरतिमनुक्त्वा श्रोत्रादिबाह्यपंचज्ञानेन्द्रियसंयममात्र-स्योक्तौ निमित्तं न ज्ञायते ॥ द्वितीयार्धे व्युत्थितग्रहणस्यैवौचित्यं न स्फुटं ॥ तज्ज्ञापकाक्षरादर्शनात् ॥ उत्कर्षदीपिकायां मधुसूदनीयं च निरस्तं । तथाहि ॥ "तच्चिन्त्यं । प्रत्याहाररूपेष्वग्निषु श्रोत्रादीन्द्रियाणां होमस्यात्र-विवक्षितत्वात् । अन्यथा होमाधिकरणस्यालाभात् ॥ ध्यानादीनान्तु मनो-होमाधिकरणत्वादिति दिक्" इति ॥

द्वितीयार्धश्लोकं व्युत्थितकर्तृकविषयभोगपरतया वा अविरुद्धविषय ग्रहणं होमं मन्यन्ते इति वा न व्याख्याति नीलकण्ठः ॥ इयमस्य व्याख्या । "अन्ये विषयेभ्यः प्रत्याहृतकरणाः धारणाध्यानसमाध्यात्मकं मनसः संयमं एकत्रमूलाधाराद्यन्यतमचक्रे कर्तुमशक्ताः समनस्केन्द्रियेषु विषय-वियोगाद्दग्धेन्धनानलवत्स्वयं विलीनेषु येषां समाधिबुद्धिस्तैरिन्द्रियेषु विषया एवोपसंहृताः नत्विन्द्रियादीनि मन आदिषु पूर्वोक्तरीत्या उपसंहृतानि ।"

इति ॥ अत्रोच्यते । विषयवियोगस्यप्रथमार्धोक्तस्यैव पुनर्द्वितीयार्धेनाप्युक्तौ वैयर्थ्यं ॥ शब्दादिविषयाणां इन्द्रियेषु होमो नाम यथोचितभोगएवस्यान्नतु विषयपरित्यागः ॥ यदि इन्द्रियविषययोः वियोगाएवाग्नयो विवक्षिताः किमिति तर्हि तथानोक्तं किमितीन्द्रियाणामेवाग्नित्वमुक्तं ॥ नीलकण्ठीयमुक्तकर्षदीपिकायां निरस्तं च ॥ तथाहि । " एतदसत् ॥ इन्द्रियप्रत्याहाररूपस्य यज्ञस्य श्रोत्रादीनीत्यादिनोक्तत्वेन यज्ञान्तरत्वाभावात् उक्तरीत्या विषयासन्निकर्षाग्नौ इन्द्रियाणि जुह्वतीति वक्तव्यत्वापत्तेश्चेति दिक् " इति ॥ एतेन द्वितीयार्धव्याख्याने यत् रामानुजदेशिकाभ्यां विषयसंबन्धविनाश एव तत्र विवक्षितः इत्यभिप्रेतं तदपि प्रत्युक्तं ॥ यदि तथाशयोभूत्तदा वियोगाग्निष्वित्यवक्ष्यत् । इति ॥

---

**सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।**
**आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥२७**

वि० ॥ अपरे योगिनः सर्वाणीन्द्रियकर्माणि वाक्पाणिपादपायूपस्थरूपकर्मेन्द्रियव्यापारान् तथा प्राणकर्माणि प्राणापानादिव्यापारांश्च आत्मसंयमयोगाग्नौ जुह्वति । आत्मनोमनसः यः संयमः सएव योगउपायः । सएवाग्निः ॥ ज्ञानदीपिते तत्र जुह्वति यज्ञेनैव भगवदधीनताज्ञानपूर्वं स्वातन्त्र्याभिमानत्यागेन मनोनिगृह्य कर्मेन्द्रियादिव्यापारान् भगवत्पूजात्वेन नियच्छन्तीत्यर्थः ॥

शं० ॥ किंच सर्वाणीति । सर्वाणीन्द्रियकर्माणि इन्द्रियाणां कर्माणि इन्द्रियकर्माणि तथा प्राणकर्माणि प्राणो-

वायुराध्यात्मिकस्तत्कर्माण्याकुंचनप्रसरणादीनि तानि चापर- आत्मसंयमयोगाग्नावात्मनि संयमआत्मसंयमः सएव- योगाग्निस्तस्मिन्नात्मसंयमयोगाग्नौ जुह्वति प्रक्षिपन्ति ज्ञानदीपिते स्नेहेनेव प्रदीपिते विवेकविज्ञानेनोज्वलभाव- मापादिते प्रविलापयन्तीत्यर्थः ॥

रा ॥ अन्ये ज्ञानदीपिते मनस्संयमयोगाग्नौ सर्वाणी- न्द्रियकर्माणि प्राणकर्माणि च जुह्वति । मनसइन्द्रिय- प्राणकर्मप्रवणतानिवारणे प्रयतन्त इत्यर्थः ॥

विचारः

(अत्र योगान्तरमाहेति स्फुटं । अन्यथा निष्प्रयोजनपौनरुक्त्यापातात् ॥ (पौनरुक्त्यपरिहाराय सर्वेव्याख्यातारो यतन्ते )( श्रोत्रादीनीतिज्ञानेन्द्रियाणामु- क्तत्वेनेहकर्मेन्द्रियाणां परामर्शउचित इति विवृत्याचार्याशयः )( यद्यपि "इन्द्रियकर्माणि" इति सामान्यवचनंदृश्यते ॥ तथापि अन्यथानुपपत्तेस्सं- कोच आश्रयणीयः)(अतएवदेशिकोप्याह "श्रोत्रादीनां पूर्वमुपादानात्कर्मेन्द्रि- यमात्रनियमनपरोवायं श्लोकः" इति )॥

(आत्मसंयमयोगाग्नावित्येतद्दुर्गमं )( अतएव आत्मशब्दोमनः परइति भाष्ये व्याख्यातं ॥ रामानुजभाष्यमप्यत्रसंवदति ॥ योगः उपायः )( मनस्सं- यमएव योगसाधनत्वादिना योगः )( मनस्संयमस्य वा योगः प्राप्त्यादिः इति- देशिकं व्याख्यानं च निरवद्यं )( अग्नावित्येकवचनं मनस्संयमस्यैक- त्वाभिप्रायेणोचितं )( श्रोत्रादीन्द्रियनिग्रहाणां प्रत्येकंग्रहणेन बहुत्वादतीतेश्लोके अग्निष्विति बहुवचनं )( इन्द्रियाणां नियन्तुर्मनस एकत्वात् आत्मसंयमयो-

गाग्नावित्येकवचनं उपपन्नं ॥ कर्मेन्द्रियकर्माणि वचनादानसंचारोत्सर्गानन्द-व्यापाराः ॥ प्राणकर्माणि प्राणापानव्यानोदानसमानाख्यानां पंचानां कर्माणि। प्राणस्य बहिर्गमनं। अपानस्याधः। व्यानस्य व्यानयनाकुंचनप्रसरणादि। समानस्याशितपीतादीनां सम्यगुन्नयनं। उदानस्योर्ध्वनयनं ॥ "उद्गारेनाग आख्यातः कूर्म उन्मीलनेस्मृतः। कृकरः क्षुतकृज्ज्ञेयो देवदत्तो विजंभणे ॥ न जहाति मृतंचापि सर्वव्यापी धनंजयः" इत्युक्तव्यापारा-अनुसन्धेयाः ॥

"ज्ञानदीपिते" इति विवक्षित ज्ञानं भगवद्विषयकं ॥ मुमुक्षुर्ज्ञानी वा स्वास्वातन्त्र्यंमत्वा भगवत्प्रीत्यर्थमेवान्तरं बाह्यं वा यज्ञं करोति ॥ अत्रोक्त-आन्तरो यज्ञः भगवज्ज्ञानभक्तिभ्यां यद्यदीप्तः तर्हि मुधाश्रमएव भवतीत्य-भिप्रयन्नाह ज्ञानदीपिते इति। अस्मिन्श्लोकेपि यज्ञेनेत्यनुषंगो ज्ञेयः। अर्थश्च पूर्ववत् ॥

अयमत्र रामानुजाचार्यरीत्या पौनरुक्त्यपरिहारसंग्रहः ॥ "इन्द्रियेभ्यः पराह्यर्था अर्थेभ्यश्चपरंमनः" इत्युक्तेः इन्द्रियनिग्रहं अर्थनिग्रहंचोक्त्वा अत्रमनोनिग्रहउच्यते ॥ सर्वाणीन्द्रियकर्माणीत्युक्त्या ज्ञानेन्द्रियकर्मेन्द्रियसर्वव्यापाराणांवा कर्मेन्द्रियव्यापाराणामेववाग्रहणं विवक्षितं ॥ मनोनिग्रहस्य पूर्वमनुक्तस्य विवक्षया पौनरुक्त्यशंकानवकाशः इति ॥ विवृतिरीत्या पूर्वमनुक्तकर्मेन्द्रियप्राणायाममनोनिग्रहाख्ययोगग्रहणैः पौनरुक्त्यशंका परिह्रियते ॥

शाङ्करव्याख्यानेषु पौनरुक्त्यपरिहाराय यत्नाबहवोदृश्यन्ते। तेषां "ब्रह्माग्ना" वित्यारभ्य गतार्थता परिहारमपेक्षते। तत्रैवब्रह्मसाक्षात्कारस्योक्तत्वात् ॥

तेषु शङ्करानन्दो ब्रह्माग्नाविति पद्यं ब्रह्मज्ञानिपरतया तदुत्तराणि पद्यान्यब्रह्मवित्परतया विभजतिस्म ॥ अब्रह्मविदोहि ब्रह्मचारिणो वा

गृहस्था वा यतयो वा वर्तन्ते । ब्रह्मचारिपरः श्रोत्रादीनीत्यर्धश्लोकः । गृहस्थपरः शब्दादीनित्यर्धश्लोकः । अधुना यतिर्वर्ण्यते सर्वाणीत्यनेन । मुमुक्षुष्वब्रह्मवित्सु केचन यतयो ध्याननिष्ठाः प्राणेन्द्रियव्यापारनिरुध्यात्मानमनुभवन्तीत्यर्थमयमाह । अत्रेदचिन्त्यं । आश्रमप्रभेदानादाय श्लोकाः प्रवृत्ता इत्यत्र गमकं न दृश्यते । मुमुक्षुपरा एव श्लोका इत्यत्रापि न तन्त्रमवगम्यते, श्लोकाक्षराणां सर्वसाधारणत्वात् । यान् श्रोत्रादीनीत्यारभ्य श्लोकान् केवलमज्ञानिमुमुक्षुपरान् शङ्करानन्दो मन्यते तानेवात्युत्तमासंप्रज्ञातसमाधिसमर्थब्रह्मज्ञानिपरान्मन्येते मधुसूदनवेङ्कटनाथावित्यतः अमुक एव पक्षे निरवकाशाः श्लोकाः इति वक्तुं न शक्यते । तथाच विनागत्यन्तराभावस्थलं, अन्यत्र सर्वत्र साधारणवचसां साधारणार्थमेव स्वीकृत्य निर्बाधं गतार्थता परिहरणीया ॥ परिहारस्तु विवृत्यनुसरणेन संभवति ।

नीलकण्टस्तु प्रकारान्तरमनुसरति । तद्रीत्या योगिनो द्विविधाः इन्द्रिययोगिनो बुद्धियोगिनश्चेति । इन्द्रिययोगिनां सुप्ताविव प्राणोनुपसंहृत एवास्ते तत्सहचरस्य मनसोनुपसहारात् । बुद्धियोगिनांतु मनसोप्युपसंहारात्तदायत्तस्य प्राणस्याप्युपसंहारो भवतीति विशेषः । एतैरपि नात्मा ज्ञातो नापि तस्मिन्बुद्धिरुपसंहृता । अत एवैतान्प्रकृत्योक्तं वायवीये "बौद्धादश सहस्राणि तिष्ठन्ति विगतज्वराः ।" इति ॥ एवं सति इन्द्रिययोगिनः श्रोत्रादीनीति पूर्वस्मिन्श्लोके उक्ताः । इदानीं सर्वाणीत्यनेन बुद्धियोगिनो विवक्षिताः । आत्मशब्देन बुद्धिरुच्यते । बुद्धियोगिनामपि किंचिदूनत्वाज्ज्ञानदीपिते इति विशेषणोपादानेन सर्वोत्कृष्टाः ब्रह्मज्ञानिन उक्ताः इति नीलकण्ठाशयः । एतेनानात्मज्ञा इन्द्रिययोगिनः श्रोत्रादीनीति श्लोकेन सर्वाणीति श्लोकेन चात्मसंयमयोगाग्नावितिपर्यन्तं विवक्षिताः, ज्ञानदीपित इत्यनेनात्मज्ञाविवक्षिता इत्यभिप्रायकथनेन शङ्करानन्दवदेव भागशोनात्मज्ञपरत्वं भागशस्सम्यज्ज्ञानिपरत्वमुक्तं भवति ॥

शङ्कराचार्यश्रीधरौतु श्लोकेषु परस्परं गतार्थतां न परिहरतः। सामान्यतएव श्लोकान्व्याचक्षाते॥ मधुसूदनवेङ्कटनाथौतु पातञ्जलशास्त्रपरिभाषामनुसृत्य तत्र स्ववेदान्तपरिभाषांच संकलय्य व्याकुर्वतः॥ तयोर्व्याख्यानमनुपदं विचार्यते।

अस्मिन्प्रकरणे संयमशब्दः कोशप्रसिद्धवाचको वा अथवा पातञ्जलोक्तार्थोवेति सन्दिह्यते। अष्टाङ्गयोगपरत्वं नास्माकमात्यन्तिकं विरुद्धं भाति॥ तथाहि। यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधय इत्यष्टौ योगाङ्गानि। यमलक्षणमुक्तं पातञ्जलसूत्रेण "तत्राहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहायमाः" इति॥ II 30। नियमो यथा "शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः।" इति II 32। आसनं यथा "स्थिरसुखमासनं" इति 46। प्राणायामो यथा "तस्मिन्सतिश्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः" इति। एतेषु यमनियमासनानि प्रायः कर्मेन्द्रियानुबन्धीनीन्द्रियकर्माणीति श्लोकाक्षरात्परामृष्टानि। प्राणायामस्तु प्राणकर्माणीत्यनेन परामृष्टः। संयमो नाम धारणाध्यानसमाधयः। "त्रयमेकत्रसंयमः" इति सूत्रादवगम्यते। एतन्मध्यवर्तिनःप्रत्याहारस्याप्युपलक्षणया परामर्शस्सुवचः। प्रत्याहारादिचतुष्टयं मनोनिग्रहेऽन्तर्भवति। प्रत्याहारादीनां लक्षणान्युक्तानि योगशास्त्रे॥ "स्वविषयासंप्रयोगे चित्तस्यस्वरूपानुकारइवेन्द्रियाणां प्रत्याहारः 54॥ देशबन्धश्चित्तस्यधारणा॥ तत्रप्रत्ययैकतानताध्यानं। तदेवार्थमात्रनिर्भासं स्वरूपसून्यमिवसमाधि"रिति। गीतायां प्रथमार्धेन यमादिचतुष्टयमुक्त्वा तेषां प्रत्याहारादिचतुष्टये हवनमुक्तं इत्युक्तौ नात्यन्तिकं बाधकं गम्यते। परन्तु अस्मिन्सात्विकयज्ञप्रकरणे भगवत्स्वातन्त्र्यानुसन्धानं स्वकर्तृत्वाभिमानहानंच मुख्यार्थत्वेन न विस्मरणीयं। इयानेव पातंजलवेदान्तयोर्विशेषः। यत्पतंजलिरीश्वरमभ्युपगम्यापि तस्यनिरवधिकं प्राधान्यं दातुं नेच्छतीव॥ यतोसावीश्वरप्रणिधानं नियमशब्दवाच्यशौचादिपंचस्व-

न्तर्भावयति ॥ अन्यथाच्चवक्ति "ईश्वरप्रणिधानाद्वा" इति सूत्रात् । यथा यमादिभिस्समाधिसिद्धिः तद्वदीश्वरप्रणिधानादपि तत्सिद्धिरित्यभिप्रैति ॥ श्रीमदाचार्यसिद्धान्तेत्वीश्वरप्रणिधानस्यैव सर्वोत्कर्षो दत्तः । ईश्वरप्रणिधानरूपत्वेनैव समाधिरप्यपेक्षणीयो भवति ॥ अत एव 'ज्ञानदीपिते' इति गीतावचनं प्रयुक्तं ॥ यज्ञेनेत्यानुषङ्गिकेणास्यार्थस्यैव दार्ढ्यं लभ्यते ॥ तस्माद्योगशास्त्रनिरूपितानां यमादीनां यथासंभवं पूर्वस्मिन्श्लोके एतच्छ्लोकेच परामर्शो नानुपपन्नो भाति ॥ यद्यपि भाष्ये टीकायां वा नायमर्थः प्रपंचितः । अविरुद्धत्वादिहनिरूपतो वेदितव्यः ॥ अतीतश्लोकव्याख्याने विवृत्याचार्येणोक्तंच ॥ "नियमनं कुर्वन्ति प्रत्याहारादिना" इति ॥ 'आदि' पदेन धारणाध्यानसमाधीनां ग्रहणस्यौचित्याद्योगशास्त्रीयप्रक्रियेह नानुपपन्नेत्यूह्यते ॥

अथमधुसूदनीयं विचार्यते । अयं हि पातंजलप्रक्रियां विस्तरेणेह विनियोजयति ॥ कचिद्भागं विहाय मधुसूदनीयं शब्दत एवविस्तरतो वेङ्कटनाथोनुवदति ॥ तदिहपठ्यते ॥ "योगशास्त्ररीत्या लयपूर्वकसमाधि ततोऽव्युत्थानं च यज्ञद्वयमुक्त्वा ब्रह्मवादिमतानुसारेण बाधपूर्वकसमाधिरूपं यज्ञान्तरमाह—सर्वाणीति ॥ द्विविधः समाधिः लयपूर्वकोबाधपूर्वकश्चेति । तत्रारंभणाधिकरणन्यायेन पञ्चमहाभूतपञ्चतन्मात्राहङ्कारमहत्प्रकृतीनामुत्तरोत्तरस्वस्वकारणातिरेकेणासत्वं ज्ञात्वा प्रकृतेरपि चैतन्येध्यस्ततया तद्व्यतिरेकेणासत्त्वमनुसन्धाय चैतन्यमात्रानुचिन्तनं लयपूर्वकः समाधिः ॥ एवं चिन्तनेपि महावाक्यार्थसाक्षात्काराभावेनाविद्याक्षयविरहात्पुनः प्रपञ्चोत्थितिरस्तीति सुषुप्तिवदयं सबीजः समाधिर्नमुख्यः । मुख्यस्तु तत्त्वमस्यादिमहावाक्यार्थसाक्षात्कारेणाविद्यानिवृत्तौ निःशेषतत्कार्यनिवृत्तेर्निर्बीजो बाधपूर्वकः समाधिः ॥ सोयमनेन श्लोकेनोच्यते । तथाहि । इन्द्रियाणां श्रोत्रादीनां कर्माणि श्रवणदर्शनादीनि । मनोबुद्ध्योरान्तरयोः कर्मणी संकल्पाध्यवसायौ । प्राणादीनां कर्माणि * * अनेन ज्ञानकर्मेन्द्रिय-

प्राणमनोबुद्धिरूपसप्तदशात्मकं लिङ्गशरीरमुक्तं ॥ तच्च सूक्ष्मभूतसमष्टिरूपं हिरण्यगर्भाख्यमिह विवक्षितमिति दर्शयितुं सर्वाणीति विशेषणं ॥ तदेतानि सर्वाण्यपीन्द्रियप्राणकर्माणि आत्मसंयमयोगाग्नौ आत्मविषयकसंयमो धारणाध्यानसंप्रज्ञातरूपः। तत्परिपाकेण योयोगः निरोधापरपर्यायोऽसंप्रज्ञातसमाधिबोधपूर्वकः स एवाग्निः। तस्मिन् ज्ञानदीपिते। ज्ञानं ब्रह्मात्मैक्यसाक्षात्कारः। तेनाविद्यातत्कार्यनाशनेन स्नेहेन प्रदीप इवदीपिते अत्यन्तमुज्वालिते लिंगशरीरमपरे जुह्वति प्रविलापयन्तीत्यर्थः ॥ अत्र सर्वाणीति, आत्मेति, ज्ञानदीपित इति च, विशेषणैरग्नावित्येकवचनेन च पूर्ववैलक्षण्यं सूचितमिति तदनुगुणमित्थं व्याख्यातमित्यनुसन्धेयं ।" इति ॥

( इयं प्रक्रियाऽद्वैतिजनमात्रमनोहरा ॥ यदुक्तं योगशास्त्ररीत्याऽतीतश्लोकः प्रवृत्तः ब्रह्मवादिरीत्यायं श्लोकः इति तदनुपपन्नं ) योगशास्त्रमात्रसम्मतस्य स्वानभिमतस्य यज्ञत्वेन श्रीकृष्णाभिधानस्यासङ्गतेः ॥ यदि श्रोत्रादीनीत्युक्तः स्वानभिमतो यज्ञः "तर्हि सर्वेप्येते यज्ञविदः" "एवं बहुविधायज्ञावितताः ब्रह्मणोमुखे" इत्युपसंहारो नोपपद्यते ॥ तस्माच्छ्रोत्रादीनीत्युक्तस्यापि ब्रह्मवाद्यभिमतयज्ञत्वमेवाभ्युपेयं ॥ किच समाधेस्संप्रज्ञातासंप्रज्ञातभेदेनद्वैविध्यं प्रसिद्धं ॥ लयसमधिः बाधसमाधिः सबीजसमाधिः निर्बीजसमाधिः इत्याद्यप्रामाणिकप्रभेदान्परिकल्प्य श्लोकाक्षरेषु योजनमतिक्लिष्टं भाति ॥ कारणातिरेकणासत्वं वाचारंभणश्रुत्यर्थ इति तु भ्रमः ॥ श्रुतेर्यथावद्व्याख्यानं श्रीमदाचार्यमूलटीकाग्रन्थेषु द्रष्टव्यं ॥ इन्द्रियशब्देन श्रोत्रादीनां ज्ञानेन्द्रियाणां मनोबुध्योश्च संग्रह उचित इत्यपरोभ्रमः ॥ श्रोत्रादिग्रहणपूर्वं प्रागेवयज्ञान्तरस्योक्तत्वात् ॥ यच्चाभिप्रेतं समष्टिरूपस्य हैरण्यगर्भस्याभावचिन्तनं लयसमाधिरिति तदसत् ॥ स्वोत्प्रेक्षामूलत्वात् ॥ लिङ्गभङ्गस्य स्वयत्नेनाभावचिन्तनया वा जायमानत्वं शास्त्रविरुद्धं ॥ ईश्वरप्रसादेनैव जायमानत्वात् ॥ संप्रज्ञातसमाधिपर्यन्तमेव संयमशब्देन ग्राह्यं

असंप्रज्ञातसमाधिस्तु योगशब्दवाच्य इत्यत्र ज्ञापकं चिन्तनीयं ॥ किंच स्यादेतद्यदुक्तं योगशास्त्ररीत्या श्रोत्रादीनीति पद्यं यज्ञविशेषमाह अधुना तु ब्रह्मवादिरीत्या यज्ञ उच्यत इति ॥ "ब्रह्माग्नावपरेयज्ञं" इत्यनेन तु सर्वाणीति श्लोकस्य गतार्थता कथं वार्यते ॥ ब्रह्माग्नावित्यत्र यज्ञशब्दस्य यास्केनात्मनामसुपाठात् सर्वस्यसोपाधिकस्य निरुपाधिके ब्रह्माणि हवनं विवक्षितं इति हि परैर्व्याख्यातम् ॥ अस्य यज्ञस्य सर्वाणीत्युक्तयज्ञाद्यज्ञान्तरत्वं न संभवतीति गतार्थता दुर्वारा ॥ यज्ञसब्दस्यात्मनामसुपाठमादाय आत्मशब्दस्य च जीवे प्रसिद्धेः यज्ञोजीव इति व्याख्यातं ॥ सर्वाणीति श्लोके आत्मसंयमेत्यत्र आत्मशब्देन जीवोगृह्यते वा ब्रह्मवेति सुन्दिह्यते ॥ 'आत्मविषयकः सयमः आत्मसंयमः । तत्परिपाकेण योगः' इति वाक्येन आत्मशब्दो ब्रह्मपरइव भाति ॥ इच्छानुसारेण सोपाधिकनिरुपाधिकयोर्विनिमयस्तु न दोषत्वेनानुसंहितएतैरद्वैतव्याख्यातृभिरित्यलं विस्तरेण ॥

**द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ।**
**स्वाध्यायज्ञानयज्ञाश्च यतयःसंशितव्रताः ॥ २८**

वि० ॥ अपरे द्रव्ययज्ञाः द्रव्यस्य याजकाः । कर्त्रर्थोयं यज्ञशब्दः ॥ तपोयज्ञाः कृच्छ्रचान्द्रायणादितपो हर्यर्पणबुद्ध्या हरौ जुह्वतीति तपोयज्ञाः ॥ भगवत्पूजात्वेन ध्यानं कुर्वन्तीति योगयज्ञाः ॥ विष्णुपूजात्वेन स्वाध्यायमधीयतइति स्वाध्याययज्ञाः । यज्ञेनैवेति सर्वत्रान्वेतीत्युक्तं । तदर्थः

प्राग्वत् । ज्ञानयज्ञाः भगवत्पूजात्वेन श्रवणादि कुर्वन्तीति। संशितव्रताः तीक्ष्णव्रताः यतयोयत्नशीलाः।

शं ॥ द्रव्येति। द्रव्ययज्ञाः तीर्थेषु द्रव्यविनियोगं यज्ञबुद्ध्याकुर्वन्ति ये ते द्रव्ययज्ञाः । तपोयज्ञाः तपः यज्ञः येषान्ते तपोयज्ञाः । योगयज्ञाः प्राणायामप्रत्याहारादिलक्षणोयोगोयज्ञोयेषान्ते योगयज्ञाः । तथा अपरे स्वाध्यायज्ञानयज्ञाश्च स्वाध्यायः यथाविधि ऋगाद्यभ्यासः यज्ञः येषां ते स्वाध्याययज्ञाः । ज्ञानयज्ञाः ज्ञानं शास्त्रार्थपरिज्ञानं यज्ञः येषां ते ज्ञानयज्ञाः । स्वाध्याययज्ञाः ज्ञानयज्ञाश्च यतयः यतनशीलाः संशितव्रताः सम्यक् शितानि तनूकृतानि तीक्ष्णीकृतानि व्रतानि येषांते संशितव्रताः ॥

रा० ॥ केचित्कर्मयोगिनो द्रव्ययज्ञाः न्यायतोद्रव्याण्युपादाय देवतार्चने प्रयतन्ते केचिच्च दानेषु केचिच्च योगेषु केचिच्च होमेषु एते सर्वे द्रव्ययज्ञाः । केचित्तपोयज्ञाः कृच्छ्रचान्द्रायणोपवासादिषु निष्ठां कुर्वन्ति । योगयज्ञाश्चापरे पुण्यतीर्थपुण्यस्थानप्राप्तिषु निष्ठां कुर्वन्ति । इह योगशब्दः कर्मनिष्ठाभेदप्रकरणात्तद्विषयः । केचित्स्वाध्यायाभ्यासपराः । केचित्तदर्थज्ञानाभ्यासपराः । यतयोयतनशीलाः । संशितव्रताः दृढसंकल्पाः ॥

विचारः

(द्रव्ययज्ञा इति । द्रव्यस्ययाजकाः इति विवृतिव्याख्यानं )(तीर्थेषु द्रव्यविनियोग यज्ञबुद्ध्याकुर्वन्त इति शङ्करभाष्यं )\ सत्पात्रेषु नियमेन

श्रद्धया द्रव्यनिक्षेपणरूपो यज्ञ इति शङ्करानन्दीये॥ द्रव्यपूर्वकदेवार्चनदानयागहोमकर्तारो द्रव्ययज्ञा इति रामानुजाचार्याशयः॥ इदमभिप्रैति मधुसूदनः। कर्मद्विविधं श्रौतं स्मार्तंच॥ दैवमेवेति श्लोकेन श्रौतं कर्म इष्टशब्दितं प्रोक्त॥ अन्तर्वेदिदानंच तत्रैवान्तर्भूतं॥ अत्र तु पूर्तदत्ताख्ये कर्मणी उच्येते॥ यथोक्तं—

"वापीकूपतडागादि देवतायतनानिच।
अन्नप्रदानमारामः पूर्तमित्यभिधीयते॥
शरणागतसन्त्राणं भूतानांचाप्यहिंसनम्।
बहिर्वेदिचयद्दानं दत्तमित्यभिधीयते॥" इति।

(२) तपोयज्ञा इति। कृच्छ्रचान्द्रायणादिरूपायज्ञाः। तपोयज्ञास्त्रिविध इत्युक्तमन्यत्रगीतायां XVII अध्याये,

"देवद्विजगुरुप्राज्ञपूजनंशौचमार्जवं।
ब्रह्मचर्यमहिंसा च शारीरंतप उच्यते॥
अनुद्वेगकरं वाक्यं सत्यं प्रियहितंचयत्।
स्वाध्यायाभ्यसनंचैव वाङ्मयंतप उच्यते॥
मनः प्रसादसौम्यत्वं मौनमात्मविनिग्रहः।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते॥" इति॥

(३) योगयज्ञा इति। भगवत्पूजात्वेनध्यानं योगयज्ञः इति विवृत्याचार्यः॥ तीर्थयात्रादिप्राप्तिमन्तः इति रामानुजाचार्यः॥ सङ्गफलत्यागपूर्वकसन्ध्योपासनादिनिर्विकल्पकसमाध्यन्तानां कर्मणामनुष्ठानं तृतीयाध्यायोक्तं योग इति नीलकण्ठः॥ इतरेतुशाङ्कराः पातंजलयोगपरतयार्थमाहुः॥ प्राणायामप्रत्याहारादिलक्षणोयोगोयज्ञो येषांते इति शंकरभाष्यं॥ आसनप्राणा-

यामादिभिः स्वाङ्गैर्युक्तो लक्ष्येचित्तस्थैर्यलक्षणएवयज्ञः इति शङ्करानन्दीयं । अष्टाङ्गयोगेषु, यमनियमासनान्येव योगोत्र विवक्षित इति मधुसूदनादयः ॥ अयमत्रानेनोक्तोविभागः । "श्रोत्रादीनि" इति श्लोकेन प्रत्याहारधारणाध्यानसमाधय उक्ताः । प्रकृतश्लोकेन यमनियमासनान्युक्तानि । शिष्टस्तु प्राणायामः अपान इति समनन्तरश्लोकेन वक्ष्यते इति ॥

(४) स्वाध्याययज्ञा इति ॥ विष्णुपूजात्वेन स्वाध्यायाध्ययनं उक्तमिति विवृत्तिः ॥ वेदपारायणमेवास्माकं यज्ञ इत्यध्ययनविधिं नियमेन कुर्वन्तोविवक्षिता इति शङ्करानन्दीये ॥ अध्ययनविधेरर्थज्ञानपर्यन्तत्वादर्थज्ञानमविवक्षित्वा निरर्थकवेदपाठमादायैव स्वाध्यायशब्दो व्याख्येय इत्येतत्तु चिन्त्यम् ॥

(५) ज्ञानयज्ञा इति ॥ भगवत्पूजात्वेन श्रवणादिकुर्वाणा इति विवृतिः ॥ शास्त्रार्थपरिज्ञानं यज्ञ इति शङ्करभाष्यं । स्वाध्यायार्थस्य पूर्वोत्तरमीमांसाविचारः इति नीलकण्ठः ॥

यतयः इति । यतनशीलाः । मुमुक्षवः । अत्राश्रमविशेषस्य न विवक्षेति सर्वसम्मतम् ॥

संशितव्रता इति । तीक्ष्णव्रता इत्यर्थः । प्रागेवोक्तरीत्या यज्ञेनैवेत्यस्यानुषङ्गस्सर्वत्र न विस्मर्तव्यः । यतो भगवत्पूजात्वेन द्रव्यादियाजका एवात्रोक्ताः ॥

किंच यज्ञशब्द इहकर्तरिप्रयुक्तः याजक इत्यर्थे ॥ संशितव्रता इति विशेषणं द्रव्ययज्ञा इत्यादिभिः पंचभिरन्वीयते ॥ एवमन्वये दृढतरश्रद्धापूर्वं द्रव्ययज्ञाद्यनुष्ठानमुक्तं भवति ॥

अस्मिन्श्लोके पंचयज्ञानामुक्तिर्वा षड्यज्ञानां वेत्यत्राभिप्रायभेदो दृश्यते ॥ "यज्ञपंचकं श्लोकत्रयेणोक्त्वाथैकेनैवश्लोकेन पंचयज्ञानाहे ॥

ति नीलकण्ठीयावतारिका ॥ एवं त्रिभिः श्लोकैः पंचयज्ञानुक्त्वाऽर्धेनैकेन श्लोकेनषड्यज्ञानाह" ति मधुसूदनः ॥ आद्यपक्षे "यतयः संशितव्रताः" इति विशेषणयोस्सर्वत्रान्वयः ॥ द्वितीयपक्षेतु संशितव्रतयतयो याजकान्तराष्षष्ठा इति ज्ञायते ॥ अयमर्थउपपादितो मधुसूदनीये ॥ तथाहि । "यज्ञान्तरमाह—यतयो यत्नशीलः। संशितव्रताः सम्यक् शितानि तीक्ष्णी कृतानि दृढानि व्रतानि येषां ते। संशितव्रतयज्ञाइत्यर्थः ॥ तथाच भगवान्पतंजलिः 'ते जातिदेशकालसमयानवच्छिन्नास्सार्वभौमामहाव्रतं' इति। ये पूर्वमहिसाद्याः पञ्चयमाउक्तास्ता एव जात्याद्यनवच्छेदेन दृढभूमयो महाव्रतशब्दवाच्याः ॥ तत्राहिसा जात्यविच्छिन्ना। यथा मृगयोर्मृगातिरिक्तान्नहनिष्यामीति ॥ देशावच्छिन्ना न तीर्थे हनिष्यामीति । सैवकालावच्छिन्ना यथा न चतुर्दश्यां न पुण्येहनीति ॥ सैवप्रयोजनविशेषरूपसमयावच्छिन्ना यथा क्षत्रियस्य देवब्राह्मणप्रयोजनव्यतिरेकेणनहनिष्यामीति, युद्धंविना न हनिष्यामीतिच ॥ एव विवाहादिप्रयोजनव्यतिरेकेणानृतं न वदिष्यामीति । एवमापत्कालव्यतिरेकेण क्षुद्व्याद्यतिरिक्तं स्तेयं न करिष्यामीतिच ॥ एवमृतुव्यतिरिक्तकाले पत्नीं न गमिष्यामीति, एवंगुर्वादिप्रयोजनमन्तरेण न परिग्रहीष्यामीति यथायोग्यमवच्छेदो द्रष्टव्यः। एतादृगवच्छेदपरिहारेण यदा सर्वजातिसर्वदेशसर्वकालसर्वप्रयोजनेषुभवाः सार्वभौमा अहिसादयोभवन्ति महताप्रयत्नेनपरिपाल्यमानत्वात् तदा ते महाव्रतशब्देनोच्यन्ते ॥ एवं काष्ठमौनादिव्रतमपिद्रष्टव्यं ॥ एतादृशव्रतदार्ढ्येच कामक्रोधलोभमोहानां चतुर्णामपि नरकद्वारभूतानां निवृत्तिः ॥ तत्राहिंसया-क्षमया क्रोधस्य ब्रह्मचर्येण वस्तुविचारेण कामस्य अस्तेयापरिग्रहरूपेण संतोषेण लोभस्य, सत्येन यथार्थज्ञानरूपेण विवेकेन मोहस्य तन्मूलानां च सर्वेषां निवृत्तिरितिद्रष्टव्यं।" इति ॥ अत्रचिन्त्यते। यज्ञशब्दं चतुर्वारप्रयुज्य, षष्ठयज्ञोक्तौ यज्ञशब्दप्रयोगाभावो यज्ञपंचकत्वाविवक्षामेवानुकूलयति ॥

संशितव्रतंनाम पातंजलपरिभाषोक्तं महाव्रतं इत्यत्र ज्ञापकं न दृश्यते। योगयज्ञाइत्यत्रानेन व्याख्यात्रा हि यमनियमासनानि योगशब्देनोच्यन्त-इत्युक्तं। संशितव्रताइत्यनेन पारिभाषिकयमान्तर्भूतानां अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाणामेव ग्रहणमुचितं नतु नियमासनयोर्योगशब्दविवक्षितयोरपीति वैलक्षण्यकल्पनं निर्मूलं भाति। यमाख्यस्य सांशितत्वेन यज्ञान्तरत्वे संशितनियमस्य संशितासनस्यच यज्ञान्तरत्वं वक्तव्यमापद्यते। उपलक्षणयानिर्वाहस्योद्यमेतु न्यायसाम्येन द्रव्ययज्ञतपोयज्ञस्वाध्याययज्ञज्ञानयज्ञानां संशितत्वापेक्षया पृथग्यज्ञत्वं किमितिनोच्यते। किंच यतयः इति विशेषणस्य द्रव्ययाजकादिष्वसंभवेन संशितव्रता इत्यनेनैवान्वय उच्यते उत संभवेपि निमित्तान्तरेण। आद्ये असंभवप्रकारोवर्णनीयः। यतयोह्यत्र यतनशीलाः॥ सार्वप्रकारकयतनशीलानां याजकत्वेन ग्रहणेऽनुपपत्तिर्नज्ञायते॥ पातंजलोक्तमहाव्रतोद्यतानामेव याजकत्वं उचितं नतु द्रव्यादियज्ञप्रयत्नशीलानां इति विवेकस्य गमकन्तु नज्ञायते॥ तस्मात्पातंजलसमानार्थतासंपादनायायंक्लेशः स्फुटः। द्वितीये निमित्तान्तरंवर्णनीयम्॥ योगशास्त्रपरिकल्पितस्यमहाव्रतस्येह प्रवेशाख्यप्रयोजनं विनान्यन्नगम्यते। मधुसूदनीयमुत्कर्षदीपिकायांचप्रत्याख्यातं। यथोक्तं "केचित्त्वनेनविशेषणेन यज्ञान्तरं वर्णयन्ति व्रतयज्ञा इत्यर्थ इति। तेषां कृच्छ्रचान्द्रायणादितप एव यज्ञो येषामिति तपोयज्ञा इत्यस्य व्याख्यानकर्तृणां मते पौनरुक्त्यं यज्ञानांत्रयोदशत्वंचापतति। अपानइत्यादिसर्वश्लोकैकैकयज्ञवर्णनं तु प्रामादिकं। अपरइत्यस्यवारद्वयमुपलब्धेरिति ज्ञेयम्" इति॥

अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे ।
प्राणापानगतीरुद्ध्वा प्राणायामपरायणाः ॥ २९ ॥

वि० ॥ अपरे प्राणायामपरायणाः प्राणापानगतीरुध्द्वा निरुध्य अपाने प्राणं जुह्वति तत्र प्रवेशयन्ति प्राणे चापानं जुह्वति कुंभकस्थाएवेत्यर्थः ॥

शं० ॥ किंच अपाने इति । अपाने अपानवृत्तौ जुह्वति प्रक्षिपन्ति प्राणं प्राणवृत्तिं, पूरकाख्यं प्राणायामं कुर्वन्तीत्यर्थः । प्राणे अपानं तथा अपरे जुह्वति रेचकाख्यं प्राणायामं कुर्वन्तीत्यर्थः । प्राणापानगतीरुद्ध्वा मुखनासिकाभ्यां वायोर्निर्गमनं प्राणस्य गतिः । तद्विपर्ययेणाधोगमनमपानस्य गतिः । ते प्राणापानगतीरुद्ध्वा निरुध्य प्राणायामपरायणाः प्राणायामतत्पराः कुंभकाख्यं प्राणायामं कुर्वन्तीत्यर्थः ॥

रा० ॥ अपरे कर्मयोगिनः प्राणायामेषु निष्ठां कुर्वन्ति; ते च त्रिविधाः पूरकरेचककुंभकभेदेन; अपाने जुह्वति प्राणमितिपूरकः । प्राणेपानमिति रेचकः । 'प्राणापानगतीरुद्ध्वा....प्राणान्प्राणेषु जुह्वति' इति कुंभकः । प्राणायामपरेषु त्रिष्वप्यनुषज्यते नियताहारा इति ॥

विचारः

(पुरुषो हि प्रतिक्षणं वायूच्छ्वासनिश्वासाभ्यां रुधिरशुद्धिं सपाद्य शरीरारोग्येण जीवतीति वैद्यशास्त्रे प्रसिद्धं ॥ अन्तर्वायोर्बहिरुच्छ्वासेन निस्स-

रणे रेचकः । बहिर्वायोरन्तर्निश्वासेन प्रवेशने पूरकः ॥ उच्छ्वासनिश्वास-निरोधेन निश्चलतयावस्थाने कुंभकः ॥ कुंभकस्यैव तत्वतः प्राणायामसंज्ञा ॥ रेचकपूरकौतु कुंभकार्थाविति वस्तुतो न प्राणायामौ ॥ कुंभकस्यैव प्राणाया-मत्वमुक्तं श्रीमदाचार्येण तन्त्रसारे "प्राणापानौ रेचयित्वा पूरयित्वाचकुंभके ॥ स्थितिः प्राणायाम" इति ॥

केचित्तु प्राणायामस्त्रिविधः रेचकः पूरकः कुंभकश्चेति मन्यन्ते । इदमसंगतं ॥ पूरकरेचकयोः कुंभकार्थत्वेन पृथक् प्राणायामत्वाभावात् । तथाचेयं पद्ययोजना । अपरे प्राणायामपरायणाः प्राणापानगतीरुध्वा प्राण-मपानेजुह्वति—अपानं प्राणेजुह्वति—इति ॥ "प्राणायामपरायणाः" इत्यस्य कुभकस्था एवेत्यर्थः ॥ प्राणापानयोः परस्परहवनं तु कुंभकप्राप्तेर्मार्गप्रदर्श-नायोक्तं ॥ एतेन जुह्वतीति क्रियापदं अपरेप्राणायामपरायणाः इत्यनेन संबध्यते । अतः प्रथमार्धं द्वितीयार्धाद्भिन्नं वाक्यं इति भ्रमोव्युदस्तः ॥

अन्येतु प्राणायामस्वरूपमजानानाः श्लोकं रेचकपूरककुंभकाख्य-प्राणायामत्रयपरतया व्याचक्षते ॥ अय तेषामभिसन्धिः॥ अपरे अपानेजुह्वति प्राणं इत्येकं वाक्यं । प्राणेऽपानंजुह्वति इत्यपरं वाक्यं । अपरे प्राणाया-मपरायणाभवन्तीति तृतीयं वाक्यं । एतत्तृतीये वाक्ये जुह्वतीत्यस्यान्वया-योगात् भवन्तीत्यध्याहारः क्रियते ॥ अपानेजुह्वति—प्राणेजुह्वति इत्यत्र जुह्वतीत्यस्यैकीकुर्वन्तीत्यर्थः ॥ प्राणापानशब्दौ तद्वृत्तिपरौ । इति ॥ अत्रो-च्यते ॥ त्रयाणां प्राणायामत्वायोगादिदं व्याख्यानमसत् ॥ एकवाक्यतायां संभावितायां वाक्यभेदकल्पनमन्याय्यं ॥ भवन्तीत्यस्याध्याहारोनुचितः । प्राणापानशब्दयोस्संभवति शक्यार्थे, वृत्तौ लक्षणाकल्पनं चानुचितं—इति ॥

मधुसूदनस्तु भवन्तीत्यध्याहारद्वारा क्रियापदान्वेषणे गौरवं मन्वान-स्समनन्तरश्लोकस्य प्रथमार्धमनेनैव श्लोकेन योजयति ॥ शंकरभा-

ष्याभिमतं प्राणायामत्रयमुल्लंघ्य प्राणायामचतुष्टयमाह मधुसूदनः ॥ अस्यव्याख्यानं वेङ्कटनाथेन शब्दतोर्थतश्चानूदितं इति तत्पुस्तकात्पठ्यते । यथोक्तं "कुंभकोद्विविधः । अन्तरकुंभकोबाह्यकुंभकश्चेति । तत्र पूरकानन्तरं क्रियमाणः श्वासप्रश्वासनिरोधोन्तःकुंभकः । रेचकानन्तरंक्रियमाणस्तु बहिःकुंभकः । सोयंत्रिविधोपि प्राणायामो देशकालसंख्याधिक्येनाभ्यस्यमानो दीर्घसूक्ष्मसंज्ञोभवति । * * * कुंभकेतु यद्यपि देशव्याप्तिर्नावगम्यते । कालसंख्याव्याप्तिरवगन्तव्या ॥ एवं रेचकपूरककुंभकभेदेनोक्तात्प्राणायामत्रयादन्योपिचतुर्थः प्राणायामोस्ति । सोपि कुंभकाख्यएव । तत्ररेचकपूरकापेक्षस्तृतीयः कुंभकः ॥ चतुर्थस्तु तदनपेक्षस्तृतीयकुंभकाभ्यासपाटवजन्मा धारणाख्ययोगांगनिष्पादकः ॥ अत्र निद्रातन्द्रादिदोषयुक्तानां रेचकादित्रयं । तद्रहितानां तु चतुर्थ इति विवेकः । सोयंचतुर्विधः प्राणायामोत्र प्रतिपाद्यते ॥ श्लोकस्यायमर्थः । प्राणायामपरायणाः अपरे नियताहारास्सन्तः प्राणे उच्छ्वासाख्यप्राणवृत्तौ अपानं निश्वासाख्यामपानवृत्तिं जुह्वति प्रक्षिपन्ति ॥ रेचकाख्यप्राणायामं कुर्वन्तीत्यर्थः ॥ तथा अपाने अपानवृत्तौ प्राणं तद्वृत्तिं जुह्वति । पूरकप्राणायामं कुर्वन्तीत्यर्थः ॥ एवं रेचकपूरकोक्त्यैव तदविनाभूतः प्राणापानोभयवृत्तिनिरोधरूपः कुंभकाख्यस्तृतीयः प्राणायामोप्यर्थादुक्तोभवति । एतत्प्राणायामत्रयानुवादपूर्वकं चतुर्थकुंभकप्राणायाममाह ॥ प्राणापानगतीरुध्वाप्राणेषु प्राणानपरे जुह्वति इति ॥ पूरके प्राणगतेरुच्छ्वासस्य निरोधः । रेचकेत्वपानगतेर्निश्वासस्य । कुंभकेतूभयगतिनिरोध इति क्रमेणत्रिष्वपि प्राणापानगतीरुध्वा प्राणेषु बाह्याभ्यन्तरकुंभकाभ्यासनिगृहीतेषु ॥ प्राणान्ज्ञानेन्द्रियाणि प्राणाधीनानि प्राणशब्दवाच्यानिचेति वाजसनेयकादिषुप्रसिद्धं" । इति ॥

अत्रोच्यते ॥ पातंजलाभिमतप्रभेदा एवात्रविवक्षिता इत्यत्र ज्ञापकं न सुगम ॥ किंच "तस्मिन्सतिश्वासप्रश्वासयोर्गतिविच्छेदलक्षणः प्राणायामः"

इतिपातंजलसूत्रेण श्वासप्रश्वासयोरभावोहि प्राणायामइत्युक्तः ॥ नहि रेचकस्य पूरकस्यच प्राणायामत्वमुक्तं ॥ इयहिसूत्रवृत्तिः॥ "सत्यासनजये बाह्यस्य वायोराचमनं श्वासः । कौष्ठयस्यवायोर्निस्सारणं प्रश्वासः ॥ तयोर्गतिविच्छेदे उभयाभावः प्राणायामः" इति ॥ तस्माद्यदभिप्रेतं अपानेजुह्वतीत्यर्धेन रेचकपूरकाख्यप्राणायामावुक्ताविति तत्पातंजलसूत्राक्षरादप्राप्तं गम्यते ॥ किंच अपानेजुह्वतीत्यर्धेनैव कुंभकोऽप्यर्थाल्लभ्यते इति यदुक्तं तदप्ययुक्तं ॥ रेचकपूरकाविनाभूतत्वेनैवार्थात्कुंभकस्य प्रथमार्धेनैव प्राप्तिर्वक्तव्येति को निर्बन्धः । शङ्करभाष्येखलु द्वितीयार्धेनास्यकुंभकस्य प्राप्तिरभिहिता । तत्यागेनार्थिकप्राप्त्युक्तौ युक्तिर्नाधिगम्यते ॥ नचवाच्यं चतुर्थकुंभकस्यपातञ्जलवर्णितस्य प्राप्तिरेवयुक्तिरिति ॥ प्राणापानगतीरुद्ध्वा प्राणायामपरायणाः नियताहाराः प्राणान्प्राणेषुजुह्वतीतियोजनायामपि पातञ्जलोक्तचतुर्थकंभकस्यैवोपादानेऽक्षरानुकूल्यं निरवकाशं न दृश्यते ॥ प्राणायामस्य परोक्तरीत्या चातुर्विध्येन प्राणायामपरायणा इति साधारणवचनस्य चतुर्थकुंभकपरतयासंकोचे गमकं वक्तव्यं । "प्राणापानगतीरुद्ध्वा" इति प्राणापानगतिनिरोधस्तु तृतीयकुंभकस्यापि समानः। अत्र प्राणापानगतिनिरोधोक्त्या पूरकेनिरोधः रेचकेनिरोधः कुंभकेनिरोधः इति निरोधत्रयस्यग्रहणं यदभिप्रेतं तदप्यशब्दार्थत्वादुपेक्ष्यं ॥ नचवाच्यं नियताहाराः इति वचनं चतुर्थकुंभकग्रहणे गमकमिति ॥ आहारनियमाभावे तृतीयस्यापि कुंभकस्यायोगात् ॥ प्राणान्प्राणेषुजुह्वतीत्युक्तिरपि न निरवकाशा। इन्द्रियनिग्रहस्यापि सर्वप्राणायामसाधारणत्वात् । इति ॥

(इमां पातञ्जलप्रक्रियां विस्तरेणकैश्चिदालंबितामुपेक्ष्य शङ्करानन्दो व्याख्याति "अपरे केचन प्राणायामपरायणाः मुमुक्षवः प्राणापानयोर्गती मुखनासिकाभ्यां वायोर्निर्गमप्रवेशौ त्रिकूटे निरुध्य ततोहृदये प्राणेऽपानं तथाऽपानेप्राणं च जुह्वति । प्राणेनापानमपानेन प्राणं च योजयन्त्येकीकुर्वन्ति । तेन सर्वनाडीषुस्थितं पापं सर्वं भस्मीभवतीत्यर्थः" इति ॥ (अत्र श्लोकस्य-

समनन्तरश्लोकार्धेनान्वयो नाश्रित इत्येको विशेषः ॥ प्राणायामपरायणा जुह्वतीत्येकवाक्यतापि संपादिता द्रष्टव्या ॥ कुंभकपदप्रयोगाभावेऽपि, एकीकुर्वन्तीत्यादिशब्दैः कुंभकस्थाएव भवन्तीत्यर्थश्चोक्तप्रायो भाति ॥ तस्मादिदं व्याख्यानं कथंचिद्ग्राह्यं दृश्यते ॥ यस्त्वनेन पक्षान्तरमुक्त—" प्राणेऽपानं जुह्वति—पूरकं कुर्वन्ति ॥ प्रणापानगती रुध्द्वा कुंभकं कृत्वा तथाऽपाने प्राणं जुह्वति—रेचकं कुर्वन्तीति वा योजना " इति । तदसत् ॥ पूरकानन्तरं कुंभकः तदनन्तरं रेचकः इत्यर्थस्यानुपपन्नत्वात् । पूरकरेचकयोर्निरोधं विना कुभकस्यायोगात् ॥ पूरकानन्तरं किंचित्स्तंभनं कृत्वा रेचयन्तीत्युक्तौ प्रमेयविशेषस्यादर्शनात् ॥ तस्माद्विवृत्याचार्यप्रदर्शिता योजनैव समीचीना यया समग्रश्लोकेन कुंभकस्थितिरूपप्राणायामएव विवृतो भवति ॥

प्राणायामपरायणाः' इत्यनेन पातञ्जलानुक्तोऽपि कश्चिद्विशेषोवगम्यते ॥ प्राणायामो द्विविधः । अगर्भस्सगर्भश्चेति ॥ यथोक्तमन्यत्राचार्योदाहृतनारदवाक्ये—

"अगर्भश्च सगर्भश्च प्राणायामो द्विधेयते ।
जपध्यानं विनाऽगर्भस्सगर्भस्तत्समन्वितः ॥" इति ॥

उक्तं च तन्त्रसारे ॥ " प्राणायामः स्मृतिं विष्णोर्विना नियम उच्यते । अधीतिस्मृतियुक्तस्तु निदिध्यासनमेव हि ॥" (१४८) इति ॥ तस्माच्छ्रीमन्नारायणध्यानगर्भितः प्राणायाम एव श्रेयानिति ध्येयं ॥ स एव हि यज्ञसंज्ञां सम्यगर्हति ॥ समनन्तरश्लोकोक्तस्य पापक्षयस्य स खलु हेतुर्भवतीति परायणा इत्यभिधानं सार्थकं ध्वन्यते ॥

रामानुजाचार्योऽपि " अपरे नियताहारा " इत्यनन्तरश्लोकार्धं प्रकृतश्लोकद्वितीयार्धेन योजयति ।

अयं योजनानां संग्रहः ॥ श्रीमध्वस्य ॥ अपरे प्राणायामपरायणाः प्राणापानगती रुद्ध्वा अपाने प्राणं जुह्वति । प्राणेऽपानं जुह्वति । इति ॥ कुंभकस्था एव भवन्तीत्यर्थः

शाङ्कराणां ॥ अपरे अपाने प्राणं जुह्वति । (पूरकं कुर्वन्तीत्यर्थः) अपरे प्राणेऽपानं जुह्वति । (रेचकं कुर्वन्ति) ॥ अपरे प्राणापानगती रुद्ध्वा प्राणायामपरायणाः (कुंभकवर्तिनो) भवन्ति । इति ॥

मधुसूदनस्य—अपरे अपाने प्राणं जुह्वति ॥ प्राणेऽपानं जुह्वति ॥ (एतेन कुंभकवर्तिनश्च संगृहीताः)। अपरे नियताहाराः सन्तः प्राणापानगती रुद्ध्वा प्राणायामपरायणाः प्राणान्प्राणेषु जुह्वति (चतुर्थे कुंभके निमग्ना इति यावत्) इति ॥

रामानुजाचार्यस्य ॥ अपरे नियताहाराः अपाने जुह्वति प्राणं ॥ (पूरकं कुर्वन्ति) अपरे नियताहाराः प्राणेऽपानं जुह्वति । (रेचकं) । अपरे नियताहाराः प्राणापानगती रुद्ध्वा प्राणान्प्राणेषु जुह्वति । (कुंभकं)—इति ॥

शङ्करानन्दस्य ॥ प्राणेऽपानं जुह्वति । (पूरकं)। ततः प्राणापानगती-रुद्ध्वा (कुंभकं) कृत्वा अपाने प्राणं जुह्वति ॥ (रेचकं कुर्वन्ति)—इति । एतासु योजनासु विना श्रीमध्वं—सर्वेप्यन्ये वाक्यभेदेनैव व्याकुर्वते। वाक्य-भेदनिरूपणावसरे त्रिचतुःप्राणायामं पुरस्कृत्य वाक्यानेकत्वकल्पने "प्रा-णायामपरायणा" इत्यस्य क्रियापदमन्वेषमाणाः केचिदस्तिभवत्योस्सर्वत्र संबन्ध-इत्यभिप्रायेण भवन्तीत्यध्याहारमाश्रयन्ते ॥ अन्येतूत्तरश्लोकार्धमाकृष्य योजयन्ति ॥ श्रीमध्वस्तु श्लोके वाक्यैक्यमेव पश्यन् सर्वमपि पद्यं कुंभकस्थमात्रविवरणपरं मत्वा उत्तरश्लोकानुधावनं विनाऽध्याहारादिक्लेश-वैधुर्येण च क्रियाकारकयोजनां यथाश्रुतं प्रदर्शयतिस्म ॥ तस्मादियमेवोपादे-येति स्फुटम्

अपरे नियताहाराः प्राणान्प्राणेषु जुह्वति ।
सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ३० ॥

वि० ॥ अपरे नियताहाराः सन्तः प्राणानिन्द्रियाणि श्रोत्रादीन्द्रियवृत्तीः प्राणेष्विन्द्रियेषु जुह्वति संकुचितवृत्तीन्प्राणान्कुर्वन्ति ॥ नियताहारत्वेनेन्द्रियाणां शक्तिह्रासादिति-भावः । यद्वा प्राणान्वागादीन्द्रियदेवान्मनःप्रभृत्युत्तमदेवाधीनान्ध्यायन्तीत्यर्थः । अस्मिन्पक्षे भगवत्पूजात्वेन नियताहारः पृथग्यज्ञो ज्ञातव्यः । तान्स्तौति । सर्वेऽप्येतइति । यज्ञविदो यज्ञज्ञाः । यज्ञक्षपितकल्मषाः यज्ञानुष्ठाननाशित पापाः ॥

शं० किंच अपरइति । अपरे नियताहाराः नियतः परिमितआहारो येषां ते नियताहारास्सन्तः प्राणान्वायुभेदान्प्राणेष्वेव जुह्वति ॥ यस्य यस्य वायोर्जयः क्रियते इतरान्वायुभेदांस्तस्मिञ्जुह्वति ते तत्र प्रविष्टाइव भवन्ति ॥ सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः यज्ञैर्यथोक्तैः क्षपितो नाशितः कल्मषो येषांते यज्ञक्षपितकल्मषाः ॥

रा० ॥ द्रव्ययज्ञप्रभृतिप्राणायामपर्यन्तेषु कर्मयोगभेदेषु स्वसमीहितेषु प्रवृत्ता एते सर्वे " सहयज्ञैः प्रजास्सृष्ट्वा " इत्यभिहितमहायज्ञपूर्वकनित्यनैमित्तिककर्मरूपयज्ञविदः तन्निष्ठाः तत एव क्षपितकल्मषाः ॥

विचारः

नियताहारा इति ॥ "द्वौ भागौ पूरयेदन्नैस्तोयेनैकं प्रपूरयेत् । मारुतस्य प्रचारार्थं चतुर्थमवशेषयेत्" इति परिमिताहारः शास्त्रविहितः । आहार-संकोचेन श्रोत्रादीन्द्रियवृत्तीरिन्द्रियेषु जुह्वतीत्युक्तं ॥ यद्यपि "श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति" इति इन्द्रियनिग्रहाख्यो यज्ञः प्रागेवोक्तः । तथापि पूर्वं श्रोत्रादीन्द्रियाणां नियमने विषयेभ्यः प्रत्याहारः कारणमुक्तं । अत्र नियताहारत्वंकारणमुच्यते इति न पुनरुक्तत्वस्यावकाशः ॥ "प्राणान्प्राणेषु" इत्यत्र प्राणशब्द इन्द्रियपरः। सर्वथेन्द्रियवृत्तीनां संकोचे शरीरधारणासंभवात् "प्राणशोषादिन्द्रियवृत्तीनां वृत्तिमत्स्विन्द्रियेषु संकोचाज्जुह्वतीत्युच्यते" इति प्रमेयदीपिकायामुक्तं ॥ स्वल्पवृत्तिमत्सु इत्यर्थः । इन्द्रियैर्बहुतरा विषयवृत्तीःपरित्यज्य देहधारणोपयुक्ता एवेन्द्रियवृत्तीः कुर्वन्तीत्येतदेवेन्द्रियवृत्तीनामिन्द्रियेषु संकोच इति च व्याख्यातम् ॥

एतेन शङ्काद्वयं समाहितं वेदितव्यं । (१) प्राणेषु होमः कीदृशः । (२) नियताहारत्वस्य कथं तत्रोपयोगः इति । संकुचितवृत्तीन्प्राणान्कुर्वन्तीत्याद्यस्य समाधानं, आहारनियमेनायं होमो विवक्षितः न तु प्रत्याहारेण इति द्वितीयस्योत्तरं ॥ अतोत्राहारशब्दः क्षुत्पिपासानिवर्तकान्नपानपरः । न तु श्रोत्रादीन्द्रियविषयभूतशब्दादिपरः । अन्यथा श्रोत्रादीनीत्युक्तेन पौनरुक्त्यतादवस्थ्यं स्यात् ॥

प्राणशब्देन वायुरेव बोध्यतेऽत्रेति शङ्कराचार्यो मन्यते । जितवायुष्वजितवायुविशेषान्प्रवेशयन्तीति तदाशयः ॥

प्राणशब्दस्येन्द्रियार्थत्वं मधुसूदननीलकण्ठश्रीधराणां सम्मतं । अयमर्थोऽप्रसिद्ध इति कैश्चिच्चिन्त्यते । "सर्वाण्यपीन्द्रियाणि प्राणाधीनानि प्राणशब्दवाच्यानि चेति वाजसनेयकादिषु प्रसिद्धं" इति प्रदर्शितं वेङ्कटनाथीये ॥ अतोप्रसिद्धिशङ्का नोचिता ॥

(कुंभकप्राणायामं कुर्वन्तीत्यर्थलाभाय अपरे नियताहारा इत्यर्धं पूर्वश्लोकोत्तरार्धेन योजयित्वा व्याचक्षते मधुसूदनादयः॥ नियताहारत्वेन्द्रियनिग्रहयोः कुंभकप्राणायामयज्ञमात्राङ्गत्वेनोक्तौ तु गमकं न ज्ञायते॥ न च वाच्यं कुंभकस्यान्यथा लाभाभावेन गत्यन्तराभावाख्यानुपपत्त्याऽयमर्धश्लोकः पूर्वश्लोकोत्तरार्धेनान्वीयते इति॥ श्रीमद्विवृत्याचार्योक्तरीत्या पूर्वश्लोकेनैव कुंभकस्य सुष्ठु लभ्यत्वात्॥ किंच "प्राणायामयज्ञमाह सार्धेन" इति प्रतिज्ञाय इन्द्रियनिरोधयज्ञं तत्र प्रवेशयति मधुसूदन इति स्वोक्तिविरोधः प्रसज्यते। तस्मात् प्राणायामयज्ञः पूर्वश्लोकेनोक्तः समाप्तश्च। अत्र तु यज्ञान्तरमुच्यते। आहारसंकोचजन्येन्द्रियनिरोधाख्यो यज्ञोऽत्र प्रतिपाद्यः इत्याचार्योक्तभाव एव समीचीनः॥

(अजितान्वायुभेदान्जितेषु वायुभेदेषु जुह्वति तेऽजिता अपि तत्रप्रविष्टा जिता इव भवन्ति इति शङ्कराचार्याशये विशेषार्थानुपलब्धेरेव मधुसूदनादयः प्राणशब्दस्य वायुपरत्व विहायेन्द्रियपरत्वमाहुः॥ वायुषु जिताजितत्वविवेककल्पने ज्ञापकं न दृश्यते। अतीतश्लोकोक्तेभ्यो रेचकपूरककुंभकप्राणायामेभ्यः प्रकृतश्लोकोक्तं वायुविशेषे वाय्वन्तरप्रवेशाख्यं हवनं कथमतिरिक्तं भवतीति शङ्करभाष्ये वा तट्टीकासु वा नोपपादितं॥ तस्मात्प्राणशब्दस्येन्द्रियवाचित्वमत्रयुक्तियुतं भाति॥

(इदमुक्तं नीलकण्ठीये "नियतो निगृहीतः आहारो विषयभोगो यैस्ते नियताहाराः वैराग्यादिमन्तः। प्राणान्—अत्र समनस्केन्द्रियाणि प्राणशब्देन गृह्यन्ते। तान्प्राणेषु मनश्चित्ताहंकारेष्वन्तःकरणवृत्तिभेदेषु जुह्वति प्रविलापयन्ति। इन्द्रियाणि संकल्पात्मके मनसि सहृत्य मनोऽपि स्मरणात्मके चित्ते संहृत्य तदप्यहंकारे सहरन्ति। सचाभिमानरूपोऽहकारोऽभिमन्तव्याभावात्स्वयमेव दग्धेन्धनानलवद्विलीयते" इति॥ अत्र आहारशब्देन सर्वविषयग्रहणे श्रोत्रादीनीत्युक्तप्रत्याहारयज्ञादयं यज्ञःकथं विशिष्यते इति चिन्त्यं। किं च समनस्केन्द्रियाणां मनःप्रभेदभूतमनश्चित्ताहंकारेषु हवनमत्र विवक्षितमिति कथं

ज्ञायते ॥ मनोबुद्धिरहंकारश्चित्तं चेतनेति ह्यन्तःकरणरूपान्तरेन्द्रियप्रभेदाः । तेषु पञ्चसु बुद्धिचेतने परित्यज्य इतरत्रयमात्रे समनस्कानां इन्द्रियाणां लयोक्तिर्निरर्थिका भाति ॥ एवं विभागश्चोत्प्रेक्षामात्रमूलोवगम्यते ॥ प्राणशब्दइन्द्रियवाचक इति यदभिप्रेतं तन्मात्रं निरवद्यं ॥

श्रीधरोऽत्र द्वेधा व्याख्याति ॥ तथाहि । "अपरे त्वाहारसंकोचमभ्यस्यन्तः स्वयमेव जीर्यमाणेष्विन्द्रियेषु तत्तदिन्द्रियवृत्तिलयं होमं भावयन्तीत्यर्थः " इति प्रथमं व्याख्यानं ॥ इदंनास्माकमनिष्टं । निर्दुष्टत्वात् । विवृत्यनुगुणत्वाच्च ॥ अथ पक्षान्तरम् ॥ "यद्वा अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे इत्यनेन पूरकरेचकयोरावर्त्यमानयोर्हंसः सोहमित्यनुलोमतः प्रतिलोमतश्चाभिव्यज्यमानेनाऽजपामन्त्रेण तत्त्वंपदार्थैक्यं व्यतिहारेण भावयन्तीत्यर्थः॥ तदुक्तं योगशास्त्रे "सकारेण बहिर्याति हकारेण विशेत्पुनः। प्राणस्तत्र स एवाहं हंसइत्यनुचिन्तयेत् ॥ " इति ॥ प्राणापानगती रुद्ध्वेत्यनेन तु श्लोकेन प्राणायामयज्ञाअपरैः कथ्यन्ते ॥ तत्रायमर्थः । नियताहाराः कुंभकेन प्राणायामगतीरुद्ध्वा प्राणायामपरायणास्सन्तः प्राणानिन्द्रियाणि प्राणेषु जुह्वति । कुंभके हि सर्वे प्राणा एकीभवन्तीति । तत्रैव लीयमानेष्विन्द्रियेषु होमं भावयन्तीत्यर्थः । तदुक्तं योगशास्त्रे ' यथा यथा सदाभ्यासान्मनसः स्थिरता भवेत् । वायुवाकायदृष्टीनां स्थिरता च तथा तथा ॥ '" इति ॥

इदं व्याख्यानमुत्कर्षदीपिकायां निरस्तं॥ तथाहि । " एतत् भाष्यविरुद्धमपेक्ष्यं । प्रसिद्धार्थपरित्यागबीजभूतानुपपत्त्याद्यनुपलब्ध्या श्रोत्रादीन्द्रियहोमस्य प्रत्याहाररूपेष्वग्निषूक्तत्वेन च पक्षान्तरे श्लोकोत्तरार्धस्य सत्यपि संभवे स्वपूर्वार्धेनान्वयं विहायापरपूर्वार्धेनान्वयस्यान्याय्यत्वेन पूरकरेचकयोरित्यादिग्रन्थस्याक्षरार्थत्वाभावेन च पूरकरेचककुंभकरूपं प्राणायामं कुर्वन्तीति भाष्योक्तस्यैव सम्यक्त्वात् ॥ एतेन प्राणानिन्द्रियाणीत्याद्यपि प्रत्युक्तं ॥ लोकाप्रसिद्धार्थकल्पनापत्तेः ॥ " इति ॥ अत्रोच्यते । अस्मिन्नुत्कर्षकृन्निरासे यत्प्राण-

शब्दस्येन्द्रियपरत्वं दूषितं तदसङ्गतं ॥ वाजसनेयकादिप्रसिद्धेर्वेङ्कटनाथेनापि प्रदर्शितत्वात् ॥ यस्तु हंसस्सोहमित्यादिग्रन्थेनापूर्वार्थः श्रीधरेण प्रकटितः तस्योत्कर्षकृन्निरासस्साधुः ॥ यतस्तस्याक्षरार्थत्वं सुतरां न संगच्छते ॥ श्रीधरो हि "अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे" इत्यर्धेन ब्रह्मात्मैक्यमजपया भावयन्तीत्यर्थमाह ॥ तत्त्वंपदार्थैक्यं कस्य शब्दस्यार्थोत्र भवेदिति चिन्त्यते ॥ (अजपा हि श्वासप्रश्वासयोर्बहिर्गमनागमनाभ्यां हंसस्सोहमित्यक्षरनिष्पादनरूपा ॥ इदं खल्वप्रयत्नोच्चारितं ॥ "एकविंशतिसाहस्रं षट्शताधिकमीश्वरि। जपति प्रत्यहं प्राणी" इत्युक्तेः ॥ "हंसेति सततं मन्त्रं जीवो जपति सर्वदा"। इत्युक्तेश्च ॥ सर्वप्राणिसाधारणोऽयं हंसस्सोहमित्याकारकश्वासप्रश्वासजपः ॥ अनेन सर्वोपि जन्तुरुच्छ्वासं करोति निश्वासचेत्युक्तेन को यज्ञविशेष उच्यते इति न ज्ञायते ॥ श्रीधरोपि यज्ञविशेषोऽनेनोच्यत इति नाभिप्रैतीति भाति । उच्छ्वासनिश्वासाभ्यां ब्रह्मात्मैक्यचिन्तनं कुर्वन्तीति मात्रं वक्ति । ब्रह्मात्मैक्यबोधकाक्षराणि तु न दृश्यन्ते । तत्वमसीत्यस्यात्राकर्पोत्यनुचितः ॥ किंचास्याशयोधिगम्यते ॥ हंसस्सोहमित्यजपयोपासनं न प्राणायामयज्ञः ॥ प्राणायामयज्ञस्तु "प्राणापानगती रुद्ध्वे" त्यनेन पृथगभिधीयते ॥ कुंभके सर्वेन्द्रियाणि लीयन्त-इति तस्यार्थः श्रीधराभिमतः प्रतीयते ॥ प्राणायामभिन्नः केवलोच्छ्वासनिश्वासरूपोऽप्रयत्नव्यापारो यज्ञतां न व्रजेदिति स्फुटं ॥ तस्य हवनत्वेन गीतोक्तिस्तु बाधिता प्रसज्यते ॥ तस्माद्रेचकमात्रं न हवनं विवक्षितं ॥ नापि पूरकमात्रं। हंसस्सोहमित्यजपामन्त्राधिकारिणो जप्तारो नात्र विवक्षिताः ॥ तेपि ब्रह्मात्मैक्यं न कदापि भावयेयुः ॥ तस्य भ्रमत्वात् ॥ अतः कुंभकाख्यो यज्ञः पूर्वश्लोकोक्तो वेदितव्यः ॥ प्रकृतश्लोके तूपवासादिना जायमानः इन्द्रियजयो यज्ञान्तरत्वेनोच्यते इत्येव निर्दिष्टार्थो ज्ञेय इत्यलं ॥

(ननु श्रोत्रादीनीति श्लोकेनेन्द्रियनिग्रहस्य स्फुटं यज्ञत्वेनोक्तेः पुनस्तस्यैव यज्ञान्तरत्वेनोक्तिर्नीरसा ॥ यद्यपि प्रत्याहारजन्यत्वेन तत्रोक्तिरिह तु नियता-

हारजन्यत्वेनेति विवेक उक्तः। तथापि निमित्तभेदमात्रेण नैमित्तिकभेदविवक्षया पृथगभिधानेऽत्र स्वारस्यं न विद्यते। इति शङ्कां तुष्यतु दुर्जनन्यायेनाभ्युपगम्यैव प्रकारान्तरेणापि श्लोको व्याख्यातो गीताभाष्ये। "यच्छेद्वाङ्मनसीप्राज्ञः इत्यादिश्रुत्युक्तप्रकारेण वा" इति। इदं व्याख्यातं प्रमेयदीपिकायां। "यच्छेदिति। वाक् वाचं मनसि यच्छेत्—तन्नियतां ध्यायेत् अवराणामिन्द्रियदेवतानां उत्तमेन्द्रियदेवतानियतत्वचिन्तनं प्रकारार्थः। अस्मिन्पक्षे नियताहारइति पृथक् यज्ञो ज्ञातव्यः।" इति। तथाच आहारनियमएको यज्ञः। इन्द्रियदेवतासु अवराणामुत्तमनियतत्वस्य चिन्तनं अपरो यज्ञ इत्युक्तं भवति॥

प्राणान्प्राणेषु जुह्वतीत्युक्तौ स्वस्य स्वस्मिन्नेव होमः इत्यर्थस्तु बाधितः। एकस्यान्यस्मिन्होम इत्युक्तेर्भेदव्याप्तत्वात्। तस्मादेव हि शङ्करभाष्ये वायुविशेषान्वाय्वन्तरेषु होम उक्त इत्याशयो निरूपितः। भेदानियतप्रभेदान्विना सप्तमी विभक्त्यादीनामनुपपत्तेः। अत एव नीलकण्ठोऽपि इन्द्रियविशेषाणामिन्द्रियान्तरेषु होममाह। अतश्च श्रोत्रादीन्द्रियवृत्तीरिन्द्रियेषु जुह्वतीति विवृत्याचार्यः॥

इन्द्रियविशेषानिन्द्रियान्तरेषु जुह्वतीति यन्नीलकण्ठेन व्याख्यातं तत्कथंचिन्निर्दुष्टं स्यात्। अवरेन्द्रियाणां उत्तमेन्द्रियेषु लयचिन्तनस्य संभवात्। एतस्मात्तु पक्षादवरेन्द्रियदेवतानां उत्तमेन्द्रियदेवतानियतत्वचिन्तनमिह यज्ञत्वेन विवक्षितमिति पक्षः श्रेयान्। देवतातारतम्यस्याप्यवश्यवेद्यत्वाच्चिन्तनीयत्वाच्च॥

श्लोकस्य द्वितीयार्धे नास्ति बहुवक्तव्यं। यज्ञान्विदन्तिजानन्ति विन्दन्ति लभन्ते वेति यज्ञविदो यज्ञानां ज्ञातारः कर्तारश्चेति मधुसूदनः।

यज्ञक्षपितकल्मषाः इत्युक्त्याऽस्मिन्प्रकरणे यज्ञशब्दार्थनिरूपणे तावद्यथा कल्मषक्षयो निष्पद्येत तथा यज्ञशब्दो व्युत्पादनीय इत्यवगम्यते। न हि उरगोपवासादिभिः पापक्षयः कदापि संभवेत्। अतो भगवत्स्वातन्त्र्यानुसन्धानाभावे सति द्रव्यत्यागप्रभृतीनां यज्ञत्वं न निष्पद्यते इति ज्ञेयं॥

यज्ञक्षपितकल्मषाः इत्येतत् सर्वेयज्ञाः कल्मषक्षयायैव भवन्ति न पुनः-साक्षान्मोक्षायेत्यर्थः इति व्याख्यातं नीलकण्ठीये ॥ अत्र ज्ञानयज्ञस्यापि यज्ञेषुक्तत्वात् साक्षाद्वा परंपरया वा यथासंभवं मोक्षसाधनत्वमभिप्रेतं भाति ॥

**यज्ञशिष्टामृतभुजोयान्ति ब्रह्म सनातनम् ।**
**नायं लोकोस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम॥३१**

वि० ॥ एवं यज्ञभेदान्ज्ञात्वाताननुतिष्ठतामननुतिष्ठतां च फलभेदमाह । यज्ञेति ॥ यज्ञे देवतायैदत्तहविश्शेषोऽमृतमुच्यते । तद्भुजः यज्ञानुष्ठातारइति यावत् । सनातनमनादिनित्यं ब्रह्म यान्ति प्राप्नुवन्ति ॥ अयज्ञस्य तु अयं लोकः अल्पसुखोऽपि मानुषो लोको नास्ति ॥ कुतोन्यः स्वर्गादिः ॥ अतोयज्ञाः सर्वथा कार्याइति भावः ॥

शं ॥ एवं यथोक्तान्यज्ञान्निर्वर्त्य यज्ञशिष्टामृतभुजो-यज्ञानां शिष्टं यज्ञशिष्टं यज्ञशिष्टं च तदमृतं च यज्ञशिष्टामृतं तद्भुञ्जत इति यज्ञशिष्टामृतभुजः॥ यथोक्तान्यज्ञान्कृत्वा तच्छिष्टेन कालेन यथाविधिचोदितमन्नममृताख्यं भुञ्जत-इति यज्ञशिष्टामृतभुजो यान्ति गच्छन्ति ब्रह्म सनातनं चिरंतनं मुमुक्षवश्चेत्कालातिक्रमापेक्षयेति सामर्थ्याद्गम्यते । नायं लोकः सर्वप्राणिसाधरणोप्यस्ति यथोक्तानां यज्ञानामेकोपि

यज्ञोयस्य नास्ति सोऽयज्ञस्तस्य कुतोन्यो विशिष्टसाधनसाध्यः कुरुसत्तम ॥

रा० ॥ यज्ञशिष्टामृतेन शरीरधारणं कुर्वन्त एव कर्मयोगे व्यापृताः सनातनं ब्रह्म यान्ति ॥

अयज्ञस्य महायज्ञादिपूर्वकानित्यनैमित्तिककर्मरहितस्य नायं लोकः न प्राकृतलोकः प्राकृतलोकसंबन्धिधर्मार्थ-कामाख्यः पुरुषार्थो न सिध्यति । कुतइतोन्योमोक्षाख्यः पुरु-षार्थः । परमपुरुषार्थतया मोक्षस्य प्रस्तुतत्वात्तदितरपुरुषा-. अयं लोकः इति निर्दिश्यते; सहि प्राकृतः ॥

विचारः

दैवमित्यारभ्य बहुयज्ञानुक्त्वान्वयव्यतिरेकाभ्यां यज्ञस्यकर्तव्यत्वस्थाप नाय यज्ञकर्तारं स्तौति इतरं निन्दति च यज्ञशिष्टेति ।

"अमृतं यज्ञशेषे स्यात्पीयूषे सलिलेघृते । अपाचिते च मोक्षे च नाधन्वन्तरिदेवयोः" इतिमेदनी ॥ यज्ञशिष्टं होमावशिष्टाज्यपुरोडाशादि ॥

अत्र यज्ञशब्देन "दैव" मित्यारभ्योक्तानां यज्ञानां ग्रहणं सुगमं । तेषां कण्ठरवेण श्रुतत्वात् ॥ नीलकण्ठस्त्वाह "सर्वेषामेतेषां मध्येन्यतम-मप्यनुष्ठातुमशक्तं प्रति प्राह यज्ञेति ॥ यज्ञाः पंचमहायज्ञास्तेभ्यः शिष्टमवशिष्ट-मन्नममृताख्यं ये भुंजते तेऽपि चित्तशुद्धिद्वारा सनातनं ब्रह्म यान्ति प्राप्नु-वन्ति ॥ अयज्ञस्य पूर्वोक्तेषुद्वादशस्वन्यतमो वा नित्याः पंच वा यस्य न सन्ति सोऽयज्ञस्तस्यायमपि लोको नास्ति ॥ अन्यः परलोक आत्मलोकोवा कुतोभवेत् । न कुताश्चित् । इत्यर्थः ॥" इति ॥ अत्रोच्यते । उक्तद्वादशयज्ञाशक्तान्प्रकृत्यै-

वेदं पद्यं प्रवृत्तं इत्यत्र गमकं न दृश्यते ॥ पंचमहायज्ञानामुक्तयज्ञेष्वन्तर्भावो न संभवतीति कुतो वक्तव्यं ॥ अयंनीलकण्ठीयभावः प्रत्याख्यातश्चोत्कर्षदीपिकायां । तथाहि । " तच्चिन्त्यं ॥ श्रुतहानेरश्रुतकल्पनायाश्चान्याय्यत्वात् । पञ्चयज्ञानामपि दैवादिश्रौतस्मार्तयज्ञेष्वन्तर्भावाच्च । " इति ॥

"अमृतं यज्ञशेष" इत्युक्त्या भोजनसमये पंचप्राणहुतिकर्तारः आहुत्यनन्तरमवशिष्टमन्नादिकं भुंजानाः अमृतभुजो भवन्ति ॥ तेषां ऐहिकमामुष्मिकं च फलं श्रुतिप्रसिद्धं ॥ " प्रजयापशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेते । " इति हि छन्दोगाः पठन्ति ॥ दैवमेवेत्यत्रोक्तं अग्निहोत्रादिकमाज्यादिकममृतभूतं शेषं प्रयच्छति ॥ द्रव्ययज्ञेपि शेषस्संभावितः ॥ पितृयज्ञशेषभोजनेफलं शास्त्रप्रसिद्धं ॥ भगवन्निवेदितब्राह्मणातिथिगुरुपत्न्यादिभुक्तशेषोप्यमृतमित्युच्यते ॥ सर्वत्र सर्वसारभोक्ता भगवान् । सर्व श्रीकृष्णायार्पितमस्त्वित्यनुसन्धानं आवश्यकं ॥

उक्तयज्ञेषु मानसपूजेन्द्रियनिरोधध्यानस्वाध्यायतपोज्ञानप्राणायामादिषु भुक्तशेषाख्यामृतस्याभावात् किमत्रामृतमिति शंकास्यात् ॥ तस्यास्समाधानममृतशब्दस्य प्रकारान्तरेण व्याख्यानेन सुवचं ॥ यथोक्तं शंकरभाष्ये " अमृतशब्दः कालपर" इति ॥ शंकरानन्देनापि अमृतशब्दोद्वेधाव्याख्यातः । यथोक्तं " यज्ञानुष्ठानानन्तरभावित्वादेतेषामन्नं यज्ञशिष्टं । यज्ञशिष्टत्वादेवामृतं । तद्भुंजत इति यज्ञशिष्टामृतभुजः ॥ यद्वा यज्ञानुष्ठानेन शिष्टोयज्ञशिष्टः । नित्यत्वादमृतः कालः ॥ भोजनसंबद्धत्वादमृतशब्देन काल उच्यते ॥ यज्ञशिष्टो योऽमृतः कालस्तस्मिन्भुंजते ॥ " इति ॥ एवं श्रीधरः " यज्ञान्कृत्वावशिष्टे कालेऽनिषिद्धमन्नममृतरूपं भुंजते " इति ॥

"नायं लोकोस्त्ययज्ञस्ये"त्युक्त्या प्राकृतलोकसंबन्धिधर्मार्थकामाख्यः पुरुषार्थो न सिध्यतीति, ॥ ' कुतोन्यः " इत्युक्त्या मोक्षाख्यः पुरुषार्थो न

सिध्यतीति च अर्थमाह रामानुजाचार्यः ॥ तथाचायं लोक इत्यनेन मोक्ष-व्यतिरिक्तसर्वप्रकारकैहिकामुष्मिकपुरुषार्थास्संगृह्यन्ते इति तदाशयः ॥ अन्ये सर्वेपि अयंलोक इत्यनेन मानुषलोकं गृण्हन्ति ॥ अल्पसुखोपि मानुषोलोको नास्तीति विवृत्याचार्यः ॥ आह च श्रीधरः "अयमल्पसुखोपि मनुष्यलोकोऽयज्ञस्य यज्ञानुष्ठानशून्यस्य नास्ति" इति ॥

नायं लोकइत्यस्य भूमावपि तस्यसुखंनास्तीत्यर्थो विचार्यमाणे सुगमः ॥ च्छान्दोग्येहि "प्रजयापशुभि"रितियाजकस्य प्रजापश्वाद्यभ्युदयोक्त्या इतरस्य तदप्राप्तिर्गम्यते ॥ यो मानवः स्वार्थैकपरस्सन्नकमप्युपकरोति स सर्वनिन्द्यत्वेन हेयो भूत्वा सुखलेशं न लभेत ॥

यद्वा लोकशब्दो देहपरः । यथोक्तं शंकरानन्दीये ॥ 'लोक्यतइति लोको देहः' इति ॥ मानवदेहोपि न तेन प्राप्यते इति यावत् ॥ केवलं-पशुवत्क्षुत्पिपासामात्रनिवर्तनपरत्वात् ॥

एतेनायज्ञनिन्दनेन विदुरवचनं (उद्योगे) स्मर्यते ।

"द्वावंभसिविनिक्षेप्यौ गाढंबध्वा गलेशिलां ।
धनिनंचाप्रदातारं दरिद्रंचातपस्विनम् ॥
षडिमान्पुरुषोजह्याद्भिन्नां नावमिवार्णवे ।
अप्रवक्तारमाचार्यमनधीयानमृत्विजम् ॥
अरक्षितारं राजानं भार्यांचाप्रियवादिनीम् ।
ग्रामकामंचगोपालं वनकामंचनापितम्" इति ॥

तस्मात्स्वस्ववर्णाश्रमधर्ममालोच्य तदनुगुणाचारवन्तो मनुजाः भगवत्प्रीत्यर्थं कर्मकुर्वाणास्सन्तो यज्ञकर्तारो भूत्वा इहामुत्रचमहाफलायकल्पन्त इति निश्चयः ॥

एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे।
कर्मजान्विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥३२॥

वि० ॥ उक्तान्कर्मभेदानुपसंहरति। एवमिति। एवं दैवमित्यादिना श्लोकषट्केनोक्तदिशा मानसिकवाचिकभेदेन बहुप्रकाराः यज्ञाः ब्रह्मणो हरेः मुखे वितताः विस्तृताः तस्य सर्वयज्ञभोक्तृत्वात् ॥ अहं हि सर्वयज्ञानां भोक्तेत्यादेः। श्रोत्रादीत्यादिनोक्तेन्द्रियनियमनादिरूपयज्ञेषु तदाराध्यस्यानुक्तेः ब्रह्मणोऽन्यस्तदाराध्य इति शंकानिरासाय ब्रह्मणोमुखे वितताइत्युक्तं ॥

ननु यज्ञानां बहुविधत्वे ज्ञानयज्ञादिनैवालं किं कर्मात्मकेन युद्धेनेत्यतआह कर्मजानिति ॥ तान् प्रागुक्तान् सर्वान्यज्ञान् कर्मजान् कर्मरूपान् विद्धि जानीहि ॥ मानसवाचिककायिककर्मजान्विद्धि इतिवार्थः ॥ ततः किमत्यत आह एवमिति ॥ मानसिकवाचिकादिसर्वयज्ञाः कर्मात्मका इति जानासि चेत् तर्हि युद्धादिस्वविहितकर्माणि कृत्वैव विमोक्ष्यसे। संसारादात्मानं मोक्तुं (मोचयितु) मिच्छसि। सर्वेषां कर्मजत्वज्ञाने सति मोक्षार्थं युद्धादिकं कर्तव्यमिति तवैवेच्छा भविष्यतीत्यर्थः ॥ सर्वेषां यज्ञत्वे ज्ञानोपासनस्वाध्यायाद्यकर्मरूपयज्ञेनैव भगवत्प्रीतिसिद्धेः किं कर्मात्मकयुद्धेनेति पार्थाभिप्रायस्येदमुत्तरं ज्ञात्वेति ॥ तस्यायं

भावः। युद्धं हित्वा मोक्षार्थं यदुपासनादिकं करिष्यसि तदपि कर्मात्मकमेव। तथाच युद्धत्यागे विहितधर्मत्याग एव कृतः स्यात् न तु कर्मत्यागः। अतएवं जानतः तव विहितं युद्धादिकं न त्याज्यं इति॥ एवमभिप्रायाभावे कर्मजानित्यर्धस्य प्रकृतानुपयोगः स्यात्॥

ननु सत्यमेवमथाप्ययमर्थो लृङन्तशब्देन कथं लभ्यते इति चेत्। नायं लृङन्तः किन्तु मुच्लृमोक्षणइत्यतः सन्नन्तात्कर्मकर्तरिलट्प्रत्यये सति विमोक्ष्यसइति रूपं॥ यद्यपि धातोः कमणईति सन्प्रत्यये सन्यङोरिति द्विर्वचने हलन्ताच्चेति सनः कित्वेन गुणाभावे च मुमुक्ष्येति भाव्यं॥ तथापि गुणाभ्यासलोपौ छान्दसावित्युपेत्य सन्नन्तान्मोक्षशब्दाद्वर्तमाने लडिति लट्प्रत्यये तस्य सिबादेशे कर्मवत्कर्मणा तुल्यक्रियइति सूत्रेण कर्तुः कर्मवद्भावे कर्मकारकनिमित्तयगात्मनेपदच्चिण्वद्भावादिकार्याणि लभतइत्युक्तेर्यकि सत्यतोलोपेमोक्ष्यस इति रूपसिद्धिर्ज्ञेया। लृङंतत्वपक्षे प्ययमर्थः। सर्वेषां कर्मजत्वं ज्ञात्वा तान्यनुष्ठाय मुक्तो भविष्यसीति॥

शं॥ एवमिति। एवं यथोक्ताबहुविधाबहुप्रकारायज्ञा वितताविस्तीर्णाः ब्रह्मणोवेदस्य मुखे द्वारे वेदद्वारेणावगम्यमानाः ब्रह्मणोमुखे वितताउच्यन्ते। तद्यथा वाचि हि प्राणान्जुहुमः इत्यादयः। कर्मजान् कायिकवाचिक-

मानसकर्मोद्भवान् विद्धि। तान् सर्वान् अनात्मजान्। निर्व्यापारो ह्यात्मा। अत एवं ज्ञात्वा विमोक्ष्यसे अशुभात्। न मद्व्यापारा एते निर्व्यापारोऽहं उदासीन इत्येवं ज्ञात्वा अस्मात् सम्यग्दर्शनात् मोक्ष्यसे अशुभात् संसारबन्धनात् इत्यर्थः॥

रा० एवं हि बहुप्रकाराः कर्मयोगाः ब्रह्मणो मुखे वितताः आत्मयाथात्म्यावाप्तिसाधनतया स्थिताः। तानुक्तलक्षणानुक्तभेदान् कर्मयोगान्सर्वान्कर्मजान्विद्धि अहरहनुष्ठीयमाननित्यनैमित्तिककर्मजान् विद्धि। एवं ज्ञात्वा यथोक्तप्रकारेणानुष्ठाय मोक्ष्यसे॥

विचारः

"एवं ज्ञात्वा विमोक्ष्यसे" इतीदं पद्यमुपसंहाररूपं॥ कीदृशस्यज्ञानस्यमोक्षसाधनत्वं उक्तं इति चिन्तनीयं॥ यज्ञाबहुप्रकाराः "दैवमेवापरे" इत्यादिभिष्षट्श्लोकैर्निरूपिताः। "कर्मजान्विद्धितान्सर्वान्" इति यज्ञानांसर्वेषांकर्मजत्वज्ञानं मोक्षसाधनं इत्युक्तंप्रतीयते॥ कथमिदं ज्ञानं साक्षाद्वा परंपरया वा मोक्षहेतुस्स्यादिति शङ्का संभाविता॥ साक्षान्मोक्षहेतुत्वं न केनाप्यभ्युपगम्यते॥ ब्रह्मज्ञानस्यैवतथात्वात्। परंपरासंबन्धनिरूपणावसरेपरित्यागार्थं त्यक्तव्यज्ञानस्यावश्यकत्वेन सर्वेषां यज्ञानां कर्मजत्वं निरूपितं तस्य कर्मरुपस्य नैष्कर्म्यरूपत्वाभावात् हेयत्वेनपरित्याज्यत्वं विज्ञाय संन्यस्य मुमुक्षुः ज्ञानं संपाद्य त्वं मुक्तो भवष्यसीति वाक्याशयमाहुरद्वैतव्याख्यातारः॥ अत्रेयं चिन्ता॥ यज्ञानां युद्धादीनां दूरीकरणार्थं वा उत उपादेयत्वबुद्धिपूर्वमनुष्ठानार्थं वा भगवतायज्ञप्रकरणोपदेशः कृतःइति। "नायंलोकोस्त्य-

यज्ञस्य कुतोन्यःकुरुसत्तमे" त्यव्यवहितपूर्वोक्तिः कर्मणां हेयत्वपक्षं विरुणद्धि ॥ उपादेयत्वपक्षेत्वस्ति भावगांभीर्यं ॥ यतस्संभाविताऽर्जुनाक्षेपस्य द्वितीयार्धं उत्तरं वक्ति। अयमत्राक्षेपस्संभावितः। यज्ञेषुबाहुविध्येसति कुतोहं युद्धाख्ये कर्मयज्ञे नियोजितः। न तूपसनादाविति। उत्तरंतु "कर्मजान्विद्धि तान्सर्वा"निति। सर्वेषांयुद्धोपासनादीनां मानसवाचिकव्यापारेष्वन्तर्भावेन कर्मत्वाविशेषात् युद्धंविहाय उपासनादिपरिग्रहे केवलंस्वधर्मत्यागे पर्यवसानं भवति न तु कर्मत्यागइति। यतस्सर्वेपियज्ञाःकर्माण्येव अतः युद्धमविहाय तद्द्वारा ज्ञानमार्गमनुसर। सर्वेषांकर्मजत्वज्ञानेसति तव स्वयमेव स्वधर्मानुष्ठानद्वारा मोक्षमवाप्तुमिच्छोदेति इति।

"क्रियांकुर्वद्धिकारकं" इतिस्मरणात्कर्मभ्यः कर्मकारकेभ्योजाताः कर्मजाः वागादीन्द्रियसंभवास्तान् इतिनिरूपणपूर्वकं अनित्यफलत्वात्कर्मणां हेयत्वं वक्ति शंकरानन्दः। हेयत्वेवागादीन्द्रियजन्यत्वस्य का सङ्गतिः। अनित्यफलकत्वं कर्मणां कथंस्यादिहाक्षरार्थः?

"विमोक्ष्यसे" इति लडन्तशब्दः इतिपरेसर्वेपि मन्यन्ते। नायं पक्षोऽस्माकमसम्मतः। सर्वेषां यज्ञानां कर्मजत्वंज्ञात्वा स्वधर्ममनुष्ठाय मुक्तोभविष्यसीत्यर्थो निर्दिष्टः। किंच सन्गर्भितोयं शब्दः लङन्तोऽपि ग्राह्यइति श्रीमध्वाशयः। व्याकरणोपपत्तिस्तु विवृत्यांद्रष्टव्या ॥

उपासनादीनामपि कर्मत्वाविशेषात् युद्धं विहाय तत्परिग्रहे निमित्ताभावेन प्रत्युत धर्मत्यागाख्यानर्थस्यापि प्रसक्तौ स्वयमेव त्वं युद्धद्वारा मोक्षमार्गं इच्छासि इति सन्घठितलटप्रयोगस्यार्थः।

"कर्मजान्विद्धि सर्वान्" इति सर्वशब्दबलेनाशेषयज्ञानांकर्मत्वं बोध्यते इति श्रीमदाचार्यः। नकेवलंकर्मत्वं किंत्वनुपादेयत्वं च इतिशाङ्कराः।

(प्रथमार्धेऽयस्तिभावभेदो व्याख्यातृषु)। बहुविधायज्ञाः ब्रह्मणोमुखे वितता इति तत्रोक्तं। ब्रह्मणो मुखे वितताइत्यस्य वेदद्वारेणावगम्यमानाः इतिशङ्करभाष्यं। किं त्वया स्वोत्प्रेक्षामात्रेणैवमुच्यते इति शंकायां न तथा किन्तु वेदएवात्र प्रमाणं इति समाधानाशयउक्तो मधुसूदनीये। अत्र ब्रह्मणो वेदात् वितताः विस्तारिताः इत्यनेनैव वेदप्रमाणप्रमितत्वासिद्धौ मुखशब्दसार्थक्यं दुर्गमं भवति। वेदद्वारेणैव गुरुभिरुपदिष्टा इति नीलकण्ठोक्तिश्च न मुखशब्दसार्थक्यं व्यनक्ति। ब्रह्मपदस्य परमात्मपरत्वे न काप्यनुपपत्तिर्दृश्यते। अपि चास्ति प्रमेयस्वारस्यं। "अहंहि सर्वयज्ञानां भोक्ताच प्रभुरेव चेति भगवद्वाक्यात्सर्वयज्ञभोक्ता श्रीहरिरिति गम्यते। "सर्वयज्ञैः परं ब्रह्म याज्यं विष्णवाख्यमव्ययं" इतिच स्मृतिः। "यज्ञोयज्ञपुमांश्चैव यज्ञेशोयज्ञभावनः॥ यज्ञभुक्चेति पञ्चात्मा यज्ञेष्विज्योहरिः स्वयं" इति भगवन्नामनिर्वचनं (भागवततात्पर्ये)। सर्वयज्ञभोक्तृत्वेन हेतुना सर्वे यज्ञाः भगवन्मुखे समर्पिता इत्यर्थस्सुगमः। मुखाभावे भोक्तृत्वानुपपत्तिरिति ध्वनिः॥

"कर्मजान्विद्धि" इति कर्मणां हेयत्वप्रतिपादनं अभिप्रेतंचेत् हेयानां वेदैस्साक्षाद्विहितत्वं प्रथमार्धेन परव्याख्यानरीत्या ज्ञायते। हेयप्रतिपादकत्वेन वेदस्यापि हेयत्वमवर्जनीयं दुर्वारंच॥

(कर्मणां उपादेयत्वे परमात्मभोग्यत्वेच श्लोकाभिप्रायेसति प्रकरणादिसङ्गतिस्सुगमा समिचीनाच दृश्यते। कर्मकर्तव्यत्वंखलु प्रकरणार्थः। "नायं लोकोस्त्ययज्ञस्ये" त्यादिवाक्येषु कर्माकरणे ऐहिकपारत्रिकप्रयोजनाभावोपपादनेन यज्ञानामनुष्ठेयत्वं स्फुटं प्रतिपादितं। स्याच्छङ्का सत्सु बहुप्रकारेषुयज्ञेषु केचनयुद्धादयः न ब्रह्मसमर्प्याः केचन ज्ञानादयस्तथाविधाइति। तत्परिहाराय "वितताब्रह्मणोमुखे" इतिवचनं सार्थकं। तस्माद्ब्रह्मशब्दस्येह परमात्मपरत्वमेव समञ्जसं भाति।

श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप ।
सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥३३॥

वि ॥ उक्तयज्ञेषु को यज्ञः श्रेष्ठइति जिज्ञासायामाह श्रेयानिति । द्रव्यमयादिति प्रागुक्तयज्ञान्तराणामुपलक्षणं । देवतोद्देशेन द्रव्यत्यागादिरूपाद्यज्ञाद्भगवज्ज्ञानसंपादनरूपो यज्ञः श्रेयान्श्रेष्ठः । कुतइत्यत उक्तं सर्वमिति । अखिलं खिलं सशेषं न भवतीत्यखिलं । समुद्रं मनसा ध्या त्यादिकर्मसमृध्यर्थोपासनाद्यङ्गसहितं सर्वं कर्म ज्ञाने परिसमाप्यते पूर्यते । ज्ञाने जाते ज्ञानलक्षणफलेन सफलं भवति इत्यर्थः । यद्वा आ खिलमिति विभागः । आसमन्तात्खिलमल्पं अत्यल्पमपि सर्वं कर्म ज्ञाने जाते परिसमाप्यते फलवद्भवतीत्यर्थः ॥

शं ॥ ब्रह्मार्पणं इत्यादिश्लोकेन सम्यग्दर्शनस्य यज्ञत्वं संपादितं । यज्ञाश्चानेके उपदिष्टाः । तैः सिद्धपुरुषार्थप्रयोजनैः ज्ञानं स्तूयते । कथं श्रेयानिति । श्रेयान् द्रव्यमयात् द्रव्यसाधनसाध्यात् यज्ञात् ज्ञानयज्ञः हे परंतप । द्रव्यमयो हि यज्ञः फलस्यारंभकः ॥ न ज्ञानयज्ञः फलस्यारंभकः ॥ अतः श्रेयान् प्रशस्यतरः । कथं । यतस्सर्वं कर्म समस्तमखिलं पार्थ ज्ञाने मोक्षसाधने परिसमाप्यते अन्तर्भवति इत्यर्थः । "यथाकृताय विजितायाधरेयाः संयन्त्येवमेनं

सर्वं तदभिसमेति यत्किंच प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्सवेद" इति श्रुतेः ॥

रा० ॥ अन्तर्गतज्ञानतया कर्मणो ज्ञानाकारत्वमुक्तं । तत्रान्तर्गतज्ञाने कर्मणि ज्ञानांशस्यैव प्राधान्यमाह श्रेयानिति । उभयाकारे कर्माणि द्रव्यमयादंशात् ज्ञानमयोंशश्श्रेयान्; सर्वस्य कर्मणस्तदितरस्य चाखिलस्योपादेयस्य ज्ञानेपरिसमाप्तेः तदेव सर्वैस्साधनैः प्राप्यभूतं ज्ञानं कर्मान्तर्गतत्वेनाभ्यस्यते तदेवाभ्यस्यमानं क्रमेण प्राप्यदशां प्रतिपद्यते ॥

विचारः

(कर्मणः विशेषणद्वयं गीतायां दृश्यते सर्व अखिलमिति )( सर्वं अखिलमित्यनर्थान्तरं प्रतीयते )(सार्थक्यसमर्थनाय गीतातात्पर्ये "आ खिलं" इति पदविभागःकृतः )(आ खिलं अत्यल्पमपि ज्ञाने जाते सफलं भवति इत्यर्थः )( नहि ज्ञानरूपं फलमनुष्ठानबाहुल्येनैव सेत्स्यतीति निर्बन्धः । "स्वल्पमप्यस्य धर्मस्य त्रायते महतोभयात्" इत्युक्तप्रकारेण भगवत्पूजात्मकं स्वल्पमपि कर्म ज्ञानसाधनं भवितुमर्हति )॥

(भाष्येतु "अखिलं" इत्येव पदच्छेदमादाय निश्शेषं इति व्याख्यातं । उपासनाद्यङ्गसहितं सर्वं कर्मेत्यर्थः )( सर्वमित्यनेन कर्मणामाहत्य कार्त्स्न्यविवक्षाऽभिप्रेता )( अखिलमित्यनेनैकैकस्यापि साङ्गस्य ज्ञानफलकत्वं इति विवेकः )

(ज्ञानिनामनुष्ठानानुष्ठेयराहित्यमङ्गीकुर्वाणाश्शाङ्करा व्याख्यातारः)("ज्ञाने परिसमाप्यते" इत्यत्र परिसमाप्तिप्रकारं कर्मकाष्ठात्वेन निरूपयन्ति )( ज्ञानात्पूर्वमनुष्ठितस्य सत्कर्मणः ज्ञानसाधनत्वं तदनन्तरमनुष्ठितस्य मुक्तावानन्द-

वृद्ध्यर्थत्वं भगवत्पादैः प्रागेव निरूपितमनुसंधेयं । तस्मात्साधूक्तं "ज्ञाने फलवद्भवती'ति विवृतौ ॥

केचित् "परिसमाप्यते" इत्यनेनान्तर्भावउक्त इत्यभिप्रयन्ति । तथाहि । "यावानर्थउदपाने सर्वतस्संप्लुतोदके । तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः॥" इति कर्मफलस्य ज्ञानफलेऽन्तर्भावउक्तः। किंच "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती"ति श्रुत्या ज्ञानकाण्डफले तत्वसाक्षात्कारे इतरकाण्डफलस्यान्तर्भावोभिहितः ॥ किंच "यथाकृताय विजितायाधरेयाः संयन्त्येवमेनं सर्वंतदभिसमेति यत्किंच प्रजाः साधुकुर्वन्ति यस्तद्वेद यत्सवेद" इति छान्दोग्ये (IV 1 6) रैक्वोवर्णितः । श्रुत्यर्थस्तु आनन्दगिरिव्याख्याने उक्तः ॥ "चतुरायके हि द्यूते कश्चिदायश्चतुरङ्कस्सन् कृतशब्देनोच्यते ॥ तस्मै विजिताय कृताय तादर्थ्येनाधरेयास्तस्माद्धस्ताद्भाविनस्त्रिद्व्येकाङ्कास्त्रेताद्वापरकलिनामानस्संयन्ति आर्याःसङ्गच्छन्ते ॥ चतुरङ्के खल्वाये त्रिद्व्येकाङ्कानामायानामन्तर्भावो भवति । महासंख्यायामवान्तरसंख्यान्तर्भावावश्यंभावात् । एवमेनं विद्यावन्तं पुरुषं सर्वं तदाभिमुख्येन समेति संगच्छति ॥ प्रजास्सर्वायत्किमपि साधुकर्म कुर्वन्ति तत्सर्वमित्यर्थः। एनमभिसमेति स रैक्वो यत्तत्वं वेद तत्तत्वं योन्योपि जानाति तमेनं सर्वसाधुकर्माभिसमेति" इति ॥

एवं परिसमाप्तिप्रकारनिरूपणं न समीचीनं भाति । यावानर्थ इत्यत्र वेदोक्तकाम्यकर्मफलस्य मोक्षानन्दविवक्षयाऽत्यल्पत्वेनोपेक्ष्यत्वंहि प्रतिपादितं । प्रकृतगीतापद्येतु निवृत्तकर्मणःफलं ज्ञानं इत्याशयो निरूप्यते ।

एतस्यैवानन्दस्येत्यत्रापि काम्यफलमोक्षयोरेव तारतम्यं वाक्यार्थः । यथाकृतायेति छान्दोग्यवचनं यच्छंकरभाष्ये उदाहृतं तच्छिष्यैर्बहुभिश्चानुसृत्य पठितं । तन्नप्रकृतार्थसंबद्धं भाति । वस्तुतः श्रुत्यर्थस्त्वेवं श्रीमदा-

चार्यभाष्याशयेन ज्ञेयः ) ( "यथाकृताय विजिताय कृतयुगे विजिते सति अधरेयास्त्रेतादयः संयन्ति ।। त्रेतादिजयफलंच तस्यैव भवति ।। यत्किंच प्रजाः साधुकुर्वन्ति सर्वं तदभिसमेति प्राधान्येन ।। सर्वविघ्ननिवारके महामुनौ तस्मिन्राष्ट्रे वसतिसति सर्वाभिःप्रजाभिः निर्विघ्नेन साधुकर्मकरणेन प्राधान्यात्तस्यैव तत्फलं भवति । स्वाम्यधिकरणन्यायादिति भावः" इति ॥ (अन्यकर्तृककर्माणिप्रति विघ्नादिनिरासकतया रैक्वस्यमुनेः प्राधान्यमनेन श्रुतिवचसावगम्यते ।। गीतायान्तु स्वकर्तृककर्मणां स्वप्राप्ये ज्ञाने परिसमाप्तिरभिहितेति श्रुतिसमाख्यानस्येहौचित्यं चिन्त्यं ।

(यन्मधुसूदनीये व्याख्यातं कर्माणि प्रतिबन्धकक्षयद्वारेण ज्ञानेपर्यवस्यन्तीति तन्नास्माकं विरुद्धं दृश्यते ।। सत्कर्माणिहि प्रतिबन्धकभूतान् चित्तदोषादीन्परिहृत्य ज्ञानं प्रापयिष्यन्ति ।।

"(स्यादेतदेवं यदि "सर्वं कर्माखिल"मित्यनेन निष्कामकर्ममात्रं विवक्षितं ।। न तथावक्तुं शक्यते । सर्वं अखिलमितिच कृत्स्नस्यापि कर्मणोः ग्राह्यत्वा"दित्याक्षेपपूर्वं मधुसूदनव्याख्या दूषितोत्कर्षदीपिकाकारेण ) (इदं दूषणमनुपपन्नं ) ( गीतायांतावज्ज्ञानयज्ञस्तुतिपूर्वकं ज्ञानसाधनं यत्कर्म तदेवप्रकृतं नतु काम्यं ) ( निवृत्तकर्मणश्चित्तशुद्धिद्वारा ज्ञानफलकत्वाशयेन ज्ञाने परिसमाप्तिस्सुगमा भाति ।।

(प्रथमार्धे द्रव्ययज्ञाच्छ्रेयान्ज्ञानयज्ञ इत्युक्ति कर्मकरणात्कर्मोपरमः प्रशस्ततरइति नीलकण्ठो व्याचष्टे ।। (द्रव्ययज्ञशब्देन मानसवाचिककायिकाशेषव्यापारान्स संगृह्णाति ।( ज्ञानयज्ञशब्देन सर्वकर्मोपरमं गृह्णाति ।( इदमसङ्गतं । "द्रव्ययज्ञास्तपोयज्ञायोगयज्ञास्तथापरे । स्वाध्यायज्ञानयज्ञाश्चे"त्युक्त्वा "एवं-बहुविधायज्ञा" इति द्रव्ययज्ञज्ञानयज्ञौ च परामृश्य ।( "कर्मजान्विद्धितान्सर्वा"नित्युक्तत्वेन ज्ञानयज्ञस्यापि कर्मजत्वं स्फुटमवगम्यते ।। ज्ञानस्य मानस-

व्यापाराविशेषादिदमुपपद्यते ॥ तस्मादत्र कर्मकरणतदुपरमयोर्नितारतम्यपरीक्षा क्रियते इति प्रतीयते ॥ द्रव्ययज्ञशब्देन मानसक्रियायास्संग्रहः क्लिष्टः। तैथव ज्ञानयज्ञशब्देन कर्मोपरमस्येति।

अस्मिन्श्लोके कर्मयोगापेक्षया उत्कृष्टत्वेन ज्ञानयोगस्स्तूयते इति शाङ्करव्याख्यातॄणामाशयः। तद्रीत्या ज्ञानयोगः कर्मोपरतिरूपः॥

ज्ञानयोगे कर्म नास्तीत्येतद्भ्रमं प्रमात्वेनादाय कर्मयोगस्य ज्ञानयोगादुत्कृष्टत्वगोचरं भ्रमान्तरंच पुरस्कृत्य रामानुजभाष्ये तावद्व्याख्यातं अस्मिन्श्लोके कर्मयोगान्तर्गतः ज्ञानभागः स्तुतः इति ॥ अत्र ज्ञानयोगे कर्म नास्तीत्येको भ्रमः। कर्मयोगाज्ज्ञानयोगोऽवर इत्यपरः॥ वस्तुतस्तु गीतायां स्तुतः ज्ञानयज्ञः। यथा कर्मयोगः अन्तर्गतज्ञानभक्तिमान् तथा ज्ञानयोगोन्तर्गतकर्मभक्तिमान् ॥ भक्तियोगश्चान्तर्गतज्ञानकर्मवान् ॥ योगेष्वन्यतमस्य विना विवक्षां योयज्ञ. साक्षादपरोक्षज्ञानसाधनं सस्स्तूयते इत्येव समञ्जसमधिगम्यते॥

**तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया।**
**उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्वदर्शिनः॥३४**

वि०कर्मणोज्ञानमधिकमित्युक्त्वा तत्संपादयेत्याह तदिति ॥ तस्माज्ज्ञानस्याधिकत्वात्कर्मणां ज्ञानेनैव फलवत्त्वादिति वा तत्वदर्शिनोज्ञानिनः प्रणिपातेन त्वत्कृतवन्दनेन त्वत्सेवया त्वत्कृतपरिप्रश्नेन च ते तुभ्यं ज्ञानं ज्ञानजनकं शास्त्रमुपदेक्ष्यन्ति ॥ तेभ्यः तज्ज्ञातव्यमर्थं विद्धि जानीहि।

तदित्यस्यावृत्तिः। अर्जुनस्य ज्ञानित्वेपि ज्ञानतिरोभावनिवृत्त्यर्थं विद्धीत्युक्तिः। पार्थं प्रति ज्ञानोपदेशार्थमेव कृष्णस्य प्रवृत्तत्वात्। नत्वेवाहमित्यादिना संक्षेपेणोपदिष्टत्वात्। ज्ञानं तेहं सविज्ञानमित्यादिना विस्तरेणोपदेक्ष्यमाणत्वात् तदविरोधायोपदेक्ष्यन्तीत्यस्योपदेक्ष्यामइत्यर्थो ज्ञेयः॥

शं० ॥ तदेतद्विशिष्टं ज्ञानं तर्हि केन प्राप्यते इत्युच्यते तद्विद्धीति ॥ तद्विद्धि विजानीहि येन विधिना प्राप्यत इति ॥ आचार्यानभिगम्य प्रणिपातेन प्रकर्षेण नीचैः पतनं प्रणिपातो दीर्घनमस्कारः तेन कथं बन्धः कथं मोक्षः काविद्या काचाविद्येति परिप्रश्नेन, सेवया गुरुशुश्रूषया ॥ एवमादिना प्रश्रयेणावर्जिता आचार्या उपदेक्ष्यन्ति कथयिष्यन्ति ते ज्ञानं यथोक्तविशेषणं ज्ञानिनो ज्ञानवन्तोपि केचिद्यथावत्तत्वदर्शनशीलाः ॥ अपरे न भवन्ति, अतोविशिनष्टि तत्वदर्शिनइति । ये सम्यग्दर्शिनस्तैरुपदिष्टं ज्ञानं कार्यक्षमं भवति नेतरदिति भगवतोमतम् ॥

रा० तदात्मविषयं ज्ञानं अविनाशितु तद्विद्धि इत्यारभ्य 'एषा तेऽभिहिता' इत्यन्तेन मयोपदिष्टं तद्युक्तकर्मणि वर्तमानस्त्वं विपाकानुगुणं काले काले प्रणिपातपरिप्रश्नसेवादिभिर्विशदाकारं ज्ञानिभ्यो विद्धि; साक्षात्कृतात्मस्वरूपास्तु ज्ञानिनः प्रणिपातादिभिस्सेविताः ज्ञानबुभुत्सया परितः पृच्छतस्तवाशयमालक्ष्य ज्ञानमुपदेक्ष्यन्ति ॥

विचारः

तद्विद्धीत्यत्र तच्छब्दस्तस्मादित्यर्थे ॥ पूर्वश्लोकोक्तप्रमेयस्यानेनपरामर्शः ॥ ज्ञानयज्ञस्य श्रेष्ठयात् सर्वकर्मणां ज्ञानेपरिसमाप्तेश्च इत्यर्थः ॥ तन्त्रन्यायेन तच्छब्दस्यानुवृत्तिरपि संभवति ॥ तत् ज्ञातव्यार्थ इत्यर्थः ॥ विद्धि जानीहि ॥ विद्धि लभस्वेति वा । विदेर्लाभार्थताया अपि प्रसिद्धत्वात् ॥ प्रणिपातः दीर्घनमस्कारादिवन्दनं ॥ 'परिप्रश्नः' तत्वबुभुत्सया भगवद्विषयकपृच्छा ॥ सेवा गुरूपसत्तिः । तत्पूजादिकं ॥ ज्ञानं उपदेक्ष्यन्ति ॥ ज्ञानं ज्ञानसाधन शास्त्रं––ज्ञेयं ब्रह्मवा ॥ "नष्टधर्मज्ञाने"त्यत्र ज्ञानशब्दस्य ज्ञेयपरत्वं निरूपितं प्रमेयदीपिकायाम् ॥

ज्ञानिनः तत्वदर्शिनः इत्यनर्थान्तरं प्रतीयते ॥ परोक्षापरोक्षज्ञानविवक्षया विवेकस्सुगमः ॥ बहुवचनसामर्थ्यादुपदेष्टृभिर्बहुभिर्भवितव्यं इति न भ्रमितव्यं ॥ गौरवाद्बहुवचनमुपपद्यते ॥ भगवानपि ज्ञानोपदेष्टॄन् सम्मानयतीति ध्वन्यते ॥

"उपदेक्ष्यन्ती"ति प्रथमपुरुषप्रयोगेपि न स्वस्यभगवतस्तेष्वपरिगणनं मन्तव्यं ॥ उपदेक्ष्यन्तीत्यस्य उपदेक्ष्यामइत्यर्थः ॥

अहं संक्षेपेणोपदेशंकृतवान् । करिष्येच ॥ अन्येभ्योपि ज्ञानिभ्यो मयोपदिष्टमुपदिश्यमानं विशदाकारं जानीहीति रामानुजीयाशयः ॥

ब्रह्मज्ञानार्थं गुरुकुलवासादिकंकर्तव्यं इति यच्छ्रुतिस्मृतिप्रसिद्धं तदेवात्र प्रणिपातपरिप्रश्नसेवाशब्दैरभिहितं ज्ञेयं ॥ अनधिकारिषु शास्त्रं न प्रकटितव्यं इत्येतत्प्राचीनाचारानुमतं ॥ "इदंतेनातपस्काये"ति भगवानेव गीतान्ते वक्ष्यति । "नासंवत्सरवासिनेप्रब्रूयात्" इतिचविधिः । "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिश्श्रोत्रियंब्रह्मनिष्ठं ॥ तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय । येनाक्षरं पुरुषं वेदसत्यं प्रोवाच तां ब्रह्मविद्यां ॥" इति श्रुतिः ॥ (मु 1-2-13)

"ज्ञानिनः तत्वदर्शिनः" इत्युक्त्या वक्त्रानुकूल्यं सूचितं ॥ विवक्षितार्थतत्वज्ञानं करणपाटवं अविप्रलिप्सा हि वक्तर्यानुकूल्यंनाम ॥

प्रणिपातपरिप्रश्नसेवाशब्दैर्यद्यपि गुरुभ्योद्रव्यदक्षिणादिदानमपि विवक्षितं स्यात् ॥ परन्तु धनादिस्वीकारेण ब्रह्मज्ञानं न विक्रेयमित्यतः सेवाशब्दः शुश्रूषापरो ज्ञायते ॥

गोसहस्रादिकं जानश्रुतिपौत्रायणेन रैक्मुनये समर्पितं तेन तिरस्कृतं इतिच्छान्दोग्योपनिषदि कथ्यते ॥ केवलमुपसत्या प्रीतो रैकस्तस्मै ब्रह्मोपदिदेशेत्यवगम्यते ॥

गीताव्याख्यात्रा अभिनवगुप्ताचार्येणायं श्लोकएवं व्याख्यातः ॥ "तच्च ज्ञानं प्रणिपातेन भक्त्या परिप्रश्नेनोहापोहतर्कादिभिः सेवया अभ्यासेन जानीहि ॥ यतएवंभूतस्यतवज्ञानिनो निजाएवसंवित्तिविषयानुगृहीता इन्द्रियविशेषाः तत्वं उप समीपे देक्ष्यन्ति प्रापयिष्यन्ति ॥ तथाहि । ते तत्वमेवदर्शयन्ति इति तत्वदर्शिनः ॥ उक्तंहि 'योगएवयोगस्योपाध्यायः ॥ ऋतंभरातत्र-प्रज्ञा' इति ॥ अन्ये ज्ञानिनः पुरुषा इति व्याख्यायमाने भगवान्स्वयमुमदिष्टवां स्तदसत्यमित्युक्तंस्यात्" इति ॥ यद्यप्ययमर्थस्सूक्ष्मः ॥ गुरुं पुरुषविशेषमाभिगम्य तमाराध्य शिष्यः ज्ञानं संपादयेदितिप्रसिद्धार्थंविहाय भक्त्या ऊहापोहादितर्कैः अभ्यासेनचानुगृहीतानि स्वेन्द्रियाण्येव स्वं तत्वसमीपं प्रापयिष्यन्तीत्याध्यात्मिकार्थस्संप्रदायविरुद्धः ॥ नहि कोपि स्वेन्द्रियैरेव नीयमानस्संतारणं लभेत ॥ ज्ञानलाभे गुरुप्रसादोहि प्रधानं साधनं ॥ भारते वनपर्वणि यवक्रीतोपाख्यानमस्मिन्नर्थे प्रमाणं द्रष्टव्यं ॥ भरद्वाजसूनुर्यवक्रीतोहीन्द्रदत्तवरेणलब्धज्ञानः दर्पात्परावसुभार्यामुपभ्युज्य स्वयंनष्टः परान् स्वपित्रादीन् रैभ्यार्वावसूनपि विनाश्य परिणामे देवैरनुगृहीतस्सन्नुदतिष्ठत् ॥ स्वज्ञानस्यवीर्याभावकारणं रैभ्यज्ञानस्यमाहात्म्यबीजं च ज्ञातुमिन्द्रं पप्रच्छ ॥ तदाहेन्द्रः "मैवंकृथायवक्रीत

यथा वदासि वै मुने ॥ ऋतेगुरुमधीता हि स्वयंवेदास्त्वया पुरा ॥ अनेन तु गुरून्दुःखात्तोषयित्वात्मकर्मणा । कालेन महता क्लेशाद्ब्रह्माधिगतमुत्तमम् ॥" इति ॥

**यज्ज्ञात्वा न पुनर्मोहं एवं यास्यसि पाण्डव ।**
**येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥३५**

वि० ॥ स्वेनोपदेक्ष्यमाणं ज्ञानं स्तौति भगवान् ॥ यज्ज्ञात्वेति ॥ यत् मया वक्ष्यमाणं ज्ञात्वा पुनः एवमाद्याध्यायोक्तदिशा बन्धुविषयमोहं न यास्यसि हे पाण्डव । येन ज्ञानेन अथो मोहनाशाद्धेतोरात्मनि सर्वान्तर्यामिणि मयि भूतान्यशेषेण द्रक्ष्यसि मदाधारत्वेन सर्वभूतानि तिष्ठन्तीति द्रक्ष्यसीत्यर्थः ॥ यद्वा आत्मनि सर्वत्रव्याप्ते मयि अथोव्याप्तत्वादेव सर्वभूतान्यशेषेण द्रक्ष्यसि ॥ येन ज्ञानेन तद्विद्धि तज्ज्ञानविषयं जानीहि इति ॥ विद्धि प्राप्नुहीति वान्वयः ॥

शं० ॥ तथाच सति इदमपि समर्थं वचनं । यत् ॥ इतियत् ज्ञात्वा यत् ज्ञानं तैरुपदिष्टं अधिगम्य पुनः भूयः मोहमेवं यथा इदानीं मोहं गतः आसि एवं न यास्यसि हे पाण्डव। किंच येन ज्ञानेन भूतानि अशेषेण ब्रह्मादीनि स्तंबपर्यन्तानि द्रक्ष्यसि साक्षादात्मनि मत्संस्थानीमानीति अथोअपि

मयि वासुदेवे परमेश्वरे च इमानीति; क्षेत्रज्ञेश्वरैकत्वं सर्वोपनिषत्प्रसिद्धं द्रक्ष्यसीत्यर्थः ॥

रा०॥ आत्मयाथात्म्यविषयस्य ज्ञानस्य साक्षात्काररूपस्य लक्षणमाह ॥ यत् ज्ञानं ज्ञात्वा पुनरेवं देहाद्यात्माभिमानरूपं तत्कृतं ममताद्यास्पदं च मोहं न यास्यासि, येन च देव-मनुष्याकारेणानुसंहितानि सर्वाणि भूतानि स्वात्मन्येव द्रक्ष्यसि यतस्त्वान्येषां च भूतानां प्रकृतिवियुक्तानां ज्ञानैकाकारतया साम्यं प्रकृतिसंसर्गदोषविनिर्मुक्तमात्मस्वरूपं सर्वं सममिति च वक्ष्यते "निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः" इति। अथो मयि सर्वभूतान्यशेषेण द्रक्ष्यसि मत्स्वरूपसाम्यात् परिशुद्धस्य सर्वस्यात्मवस्तुनः। 'इदं ज्ञान-मुपाश्रित्य मम साधर्म्यमागताः' इति हि वक्ष्यते। तथा 'तदा विद्वान्पुण्यपापे विधूय निरंजनःपरमं साम्यमुपैति' इत्येवमादिषु नामरूपविनिर्मुक्तस्यात्मवस्तुनः परस्वरूपसाम्य-मवगम्यते। अतः प्रकृतिविनिर्मुक्तं सर्वमात्मवस्तु परस्परं समं सर्वेश्वरेण च समम् ॥

विचारः

"यत् ज्ञात्वा" इत्यत्र यच्छब्देन भगवद्वक्ष्यमाणं गृह्यते ॥ गुरूप प्रस्तुतः ॥ ( उपदिश्यमानं ज्ञात्वा प्रथमाध्यायोक्तदिशा मोहोयः प्रसक्तस्तं न पुनः प्राप्नोषीति यावत् )॥ यच्छब्देन पूर्वश्लोकोक्तज्ञानं गृहीत्वा ज्ञानशब्दस्य ज्ञेयवाचित्वं चादाय व्याख्यानमुपपद्यते ॥ 'ज्ञान' शब्देन-

स्वार्थमादाय केचित् "ज्ञात्वा" इत्येतत् प्राप्य इति व्याचक्षते ।। ओदनपाकं पचतीतिवद्विशेषवाचिनो धातोस्सामान्यविवक्षया प्रयोग इति तेषामाशयः । मोहशब्देन तिरोभूतार्जुनज्ञानं गृह्यते ।।

द्वितीयार्धे द्वैताद्वैतविशिष्टाद्वैतव्याख्यातारो विप्रतिपद्यन्ते ।। पूर्वार्धोक्तमोहाभावे किन्निमित्तमित्याकांक्षायां द्वितीयार्धं प्रवृत्तं ।। यद्यर्जुनः स्वास्मिन् आब्रह्मस्तंबान्तं अभेदेन पश्यन्सन् तथा भगवतिपरमेश्वरेच सर्वं पश्यति तर्हि त्वंपदार्थतत्पदार्थयोरैक्यबुध्या परब्रह्मसाक्षात्कारवान् स भवति इति शांकरव्याख्यानाशयः ।। तेषु मध्ये "मयि" इति तत्पदार्थउक्तः ।। आत्मनि-भूतानि इति त्वंपदार्थवर्णनं कृतं ।। सामानाधिकरण्येनैक्यं इति मधुसूदन-नीलकण्ठाभिनवगुप्ताचार्यैरुपपादितं ।। आत्मनि भूतानि इत्यस्य 'भूतानि-मत्संस्थानी'ति शंकरभाष्यं ।। (अर्जुनसंस्थानीति यावत्) ।। घटकलश-शरावादिसर्वं बुद्धिसौक्ष्म्येण मृण्मात्रं चित्रं भित्तिमात्रं तरङ्गफेनबुद्बुदादि-जलमात्रं यथा तथा भूतजातं सर्वं स्वमात्रमेव द्रष्टासीति शङ्करानन्दोपपादनं

(इह भेदः मुक्तौतु साम्यं इति वदन्रामानुजाचार्यः प्रकृतपद्यार्धं ज्ञानेजाते सर्वजीवानां ईश्वरसाम्यं वक्तीत्यभिप्रैति ।। भूतानि अचित्संसृष्टचेतनानि आत्मनि स्वास्मिन् असंसृष्टचिदात्मनि द्रक्ष्यसि ।। स्वात्मनि परेषां दर्शनंनाम सर्वसमानाकारानुसन्धानं ।। आत्मनि मयि इति सामानाधिकरण्यव्युत्पत्तिरनुचिता ।। 'अथो' शब्दस्य अपिचेत्यर्थः ।। प्रथमंज्ञानित्वावस्थायां सर्वे साम्यग्रहः, अनन्तरं "परमंसाम्यमुपैति" इत्यादिप्रमाणबलादीश्वरसाम्यानु-सन्धानं—इति विशिष्टाद्वैतव्याख्यानं ।।

(श्रीमध्वस्तु आत्मनि मयि इति सामानाधिकरण्येन व्युत्पत्तिं अनुजानाति ।। तथाच योजना ।। आत्मनि अन्तर्यामिणि इत्यर्थः ।। अथो मोहस्य

नष्टत्वात् येनज्ञानेन अशेषेण भूतानि सर्वाणिभूतानि आत्मनि मयि अन्तर्यामित्वेन सर्वाधारे श्रीकृष्णे द्रक्ष्यसि जानासि इति॥ एतेन अथोपदस्य हेत्वर्थत्वं आत्मनि इत्यस्यान्तर्यामित्वार्थकत्वेन भगवत्परत्वं श्रीकृष्णस्यान्तर्यामित्वंच प्रतिपादितं द्रष्टव्यं॥ सर्वस्यसर्वदा अभेदो वा जीवेश्वरयोः जीवानांच परस्परं इहभेदोमुत्राभेदोवा नवाक्यार्थः। इति श्रीमध्वाशयः॥

(अथो 'शब्दस्समुच्चयवाचीति शंकररामानुजौ॥ पादपूरणार्थ इत्यभिनवगुप्ताचार्यः॥ तस्मात् इत्यर्थे प्रयुक्त इति श्रीमदाचार्यः॥ अस्मिन्नर्थे योजना सूच्यते॥ येन ज्ञानेन अशेषेण भूतानि सर्वभूतानि आत्मनि व्याप्ते द्रक्ष्यसि अथो तस्माद्व्याप्तत्वादेव मयि अहं सर्वाधार इति जानासि इति॥ (एतेन मयि आत्मनि इत्यत्र सामानाधिकरण्येनैव व्याख्यानमुचितमिति नास्माकं निर्बन्धोज्ञायते॥ व्यधिकरणतायामपि हेत्वर्थकाथोशब्दबलादन्वयस्संभवतीति गम्यते॥ मयि आत्मनि मद्रूपे त्वदात्मनि इति विशेषणविशेष्यभावमङ्गीकृत्य पादपूरणार्थतयैवाथोशब्दस्य सार्थक्यमसहमानो वेङ्कटनाथः भूतानि अशेषेण इति पदयोर्मध्ये अथो इत्यस्य योजनांदर्शयति भूतानि "भीष्मादयः अथो" अपिच अशेषेण कार्त्स्न्येन सर्वजगदपि इति॥

(अत्र शब्दव्युत्पत्तिवैचित्र्याणि कथं चित्सह्यानि भवेयुः॥ आत्मनि इति स्वस्मिन्नेव सर्वभूतदर्शनं यत्परैरुपपादितं तदप्रामाणिकं॥ जगन्मिथ्यात्वस्य जीवब्रह्मैक्यस्यच तथा मुक्तावपि चेतनजातानां परस्परं ईश्वरेणच साम्यस्यच अप्रामाणिकत्वात्॥ आत्मपदस्य परमात्मपरत्वं अन्तर्यामिपरत्वं व्याप्तपरत्वंच शास्त्रेषु सुप्रसिद्धं॥ प्रसिद्धार्थंविहाय अभेदशिरस्कं साम्यशिरस्कं वा व्याख्यानं दुर्गमं भाति॥ (सर्वंब्रह्मैवेत्याशये त्वं ज्ञानी ब्रह्म विना नकिंचिद्द्रक्ष्यसीत्यवक्ष्यत् नतु भूतानि आत्मनि कृष्णेच द्रक्ष्यसीति॥ आत्मनि भगवति च दर्शनेऽपसिद्धान्तः॥ सर्वं मुक्तौसममित्याशयेपि सप्तम्यनुपपत्तिः। मुक्तिबोधकंवा समत्वबोधकंवा न पदं दृश्यतइत्यास्तां विस्तरः॥

(तत्त्वं पदार्थयोरैक्यं लक्षणयाह्युपपादयंत्यद्वैतिनः ।( अचित्संसृष्टचितां मुक्तजीवैः ईश्वरेण च साम्यं च अचिद्भागतिरस्कारपूर्वकलक्षणयाह्युपपद्यते । लक्षणात्वगतिकागतिः ।। अतो मुख्यार्थसंभवे व्याख्यान्तरं क्लिष्ट ।। आत्मनिमयीतिसप्तम्यर्थो भेदस्सुगमः ।। परमात्मनः सर्वभूतान्तर्यामित्वं श्रुतिस्मृतिप्रसिद्धं )( अणोरणीयस्त्वेन सर्वत्रस्थित्वा स हि सर्वं प्रवर्तयति ।( व्याप्तिश्च परमात्मनस्सुप्रसिद्धा ।। महतोहि महीयान् भगवान् ।( अतः स ईश्वरः ।। (सर्वान्तर्यामित्वेन सर्वगतस्सभगवान् सर्वाधारः ।। भगवन्तमेवसर्वाधारं यो जानाति तस्यमोहशब्दोपलक्षितदुःखादिकं न विद्यते ।(तथाह्युक्तं ईशावास्ये ।। "(यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति । सर्वभूतेषु चात्मानं ततो नविजुगुप्सते ।।" ई० ६ (नविजुगुप्सते=भयाभावात्स्वंगोप्तुंनेच्छति) "(यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र कोमोहः कः शोकः एकत्वमनुपश्यतः ।" इति ।। (भगवद्रूपाणां ऐक्यं पश्यतः))(ईशा० ७ सर्वगं परमात्मानं सर्वचपरमात्मनि । यः पश्येत्सभयाभावान्नात्मानं गोप्तुमिच्छति।। इति सौकरायणश्रुतिः ।।

"(यस्मिन्सर्वाणि भूतानि स आत्मा सर्वभूतगः ।। एवं सर्वत्र यो विष्णुं पश्येत्तस्य विजानतः ।। कोमोहः कोथवाशोकः स विष्णुंपर्यगाद्यतः" इति पिप्पलादशाखायाम् ।।

(यद्वा अनेकार्थकात्मशब्दस्य वायुपरत्वंच कोशप्रसिद्धं । (वाचस्पति)। (सर्वचेष्टकत्वेन वायुस्सर्वाधारः ।। सर्वभूतानि वायुश्च श्रीकृष्णे तिष्ठन्तीति गीतोक्तिरुपपद्यते ।(अस्मिन्पक्षे अथो इत्यस्यापिचेत्यर्थो निर्दुष्टः ।।

अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः।
सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि॥३६॥

वि० ॥ येनेति करणतया निर्दिष्टं ज्ञानमेव स्तौति पुनः अपिचेदसीत्यादित्रयेण । सर्वेभ्यः पापेभ्यः पापकृद्भ्योपि पापकृत्तमश्चेदसि अतिशयेन पापकारी चेदसीति यावत् । तथापि सर्वंवृजिनं ज्ञानप्लवेनैव ज्ञानाख्यनावा संतरिष्यसि पापादतिक्रान्तोभविष्यसीत्यर्थः ॥

शं० ॥ किंच एतस्य ज्ञानस्य माहात्म्यं अपीति । अपिचेदसि पापेभ्यः पापकृभ्द्यः सर्वेभ्यः अतिशयेन पापकृत् पापकृत्तमः सर्वं ज्ञानप्लवेनैव ज्ञानमेव प्लवं कृत्वा वृजिनं वृजिनार्णवं पापं सन्तरिष्यसि ॥ धर्मोपि इह मुमुक्षोः पाप मुच्यते ॥

रा० ॥ यद्यपि सर्वेभ्यः पापेभ्यः पापकृत्तमोसि सर्वं पूर्वार्जितं वृजिनरूपं समुद्रमात्मविषयज्ञानरूपप्लवेनैव सन्तरिष्यसि ॥

विचारः

असंभाविताभ्युपगमार्थं अपि चेत् इति निपातद्वयं । "पापेभ्यः" इति शब्दः पापाविशिष्टपुरुषविषयः । अत्र वृजिनशब्दव्याख्यानावसरे शाङ्कराः सर्वस्य पुण्यस्यापि परित्यागं वदन्ति । मुमुक्षोः पापवत्पुण्यस्याप्यनिष्टत्वं इति तेषामाशयः । "बुद्धियुक्तोजहातीह उभेसुकृतदुष्कृते" इति

श्लोकव्याख्यानावसरे "सुकृतमप्यप्रियं मानुष्यादिफलं जहाति । नबृहत्फलमुपासनादिनिमित्तं । * * कर्मक्षयश्रुतिरज्ञानिविषया सर्वत्र । उभयक्षयश्रुतिरप्यनिष्टविषया । नहीष्टपुण्यक्षयेकिंचित्प्रयोजनं । नचेष्टनाशो ज्ञानिनोयुक्तः । इष्टाश्च केचिद्विषयाः । "सयदिपितृलोककामोभवति सङ्कल्पादेवास्यपितरः समुत्तिष्ठन्ति । 'प्रजापतेः सभां वेश्मप्रपद्ये' 'यशोहं भवानि ब्राह्मणानां ।' 'स्त्रीभिर्वायानैर्वा ।' * * " इत्यादि श्रुतिभ्यः ।" इति श्रीमदाचार्यभाष्यमनुसन्धेयम् ॥

---

**यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।**
**ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥३७**

वि० ॥ यथा एधांसि दारूणि समिद्धः प्रदीप्तः अग्निः भस्मसात्कुरुते । तथा ज्ञानाख्योऽग्निः सर्वकर्माण्यप्रारब्धानि भस्मसात्कुरुते । अतः प्रशस्तं ज्ञानमिति ॥

शं ॥ ज्ञानं कथं नाशयति पापमिति सदृष्टान्तमुच्यते यथेति । यथैधांसि काष्ठानि समिद्धः सम्यागित्धो दीप्तोऽग्निर्भस्मसाद्भस्मीभावं कुरुतेऽर्जुन एवं ज्ञानमेवाग्निर्ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ निर्बीजंकरोतीत्यर्थः । न हि साक्षादेव ज्ञानाग्निस्तानि कर्माणीन्धनवद्भस्मीकर्तुं शक्नोति । तस्मात्सम्यग्दर्शनं सर्वकर्मणां निर्बीजत्वे कारणमित्यभिप्रायः ॥ सामर्थ्याद्येन कर्मणा शरीरमारब्धं तत्प्रवृत्तफलत्वा-

दुपभोगेनैव क्षीयते " तस्य तावदेव चिरं यावन्नविमोक्ष्येथ संपत्स्ये " इति श्रुतिः ॥ अतोयान्यप्रवृत्तफलानि ज्ञानोत्पत्तेः प्राक्कृतानि ज्ञानसहभावीनि वातीतानेकजन्मकृतानि च तान्येव सर्वाणि भस्मसात्कुरुते ॥

रा०॥ सम्यक्प्रवृद्धोग्निरिन्धनसंचयमिवात्मयाथात्म्यज्ञान-रूपोऽग्निर्जीवात्मगतमनादिकालप्रवृत्तानन्तकर्मसंचयं भस्मी-करोति ॥

विचारः

( यद्यपि " नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि । अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभं ॥ " इति पुराणवचनेन (ब्रह्मकैवर्त 26-70.)) ( कर्मणां भोगेनैव क्षयोऽवगम्यते )। ज्ञातेत्वपरोक्षज्ञाने कर्मक्षीयत एव । इदं हि ज्ञानस्य माहात्म्यं )।

(१) "भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे )

(२) तद्यथा पुष्करपलाशआपो न श्लिष्यन्ते एवमेवंविदिपापं कर्म नश्लिष्यते । (छां०-4-14-3 )

(३) तद्यथैषीकातूलमग्नौ प्रोतं प्रदूयते एव ँहास्य सर्वे पाप्मानः प्रदूयन्ते । (-5-24-3 )

(४) तदधिगमउत्तरपूर्वाघयोरश्लेषविनाशौतद्व्यपदेशात् ।" ब्र-सूत्र-IV 1-13-11—इत्यादि श्रुतिस्मृतिभिः कर्मक्षयः प्रतिपादितः ॥

(तस्मात् " अवश्यमनुभोक्तव्यं " इत्यादिवचनान्यज्ञानिपराणीति वा प्रारब्धकर्मपराणीति वा योज्यानि )॥

(साक्षात्कारस्य कर्मध्वंसकत्वनिरूपणावसरे ज्ञानमज्ञानस्यैव निवर्तकं इति व्याप्तिं दृढं गृहीत्वा शाङ्करव्याख्यातारः भस्मीकरणं नाम निर्बीजीकरणमेवेति व्याचक्षते )(कर्मणां सर्वेषामज्ञानजन्यत्वेन ज्ञानादज्ञाने ध्वस्तेसति अज्ञान-कार्याणि स्वत एव विनश्यन्तीति तेषामाशयः)( अत्र ज्ञानमज्ञानस्यैव निवर्त-कमिति व्याप्तिः गरुडध्याननिवर्त्ये विषे सेतुदर्शननिवर्त्ये दुरिते व्यभिचारि-त्वेन दुष्टेति ज्ञायते )( शास्त्रप्रतिपादितनिवर्तकनिवर्त्यभावस्य प्रत्यक्षोपजी-विन्यायुक्त्या बाधस्तु नैव संगच्छते)( यत् शङ्करभाष्ये " तस्मात् सम्यग्दर्शनं सर्वकर्मणां निर्बीजत्वे कारणं " इति गौणपक्षमवलंब्य व्याख्यातं तच्चिन्त्यम् ॥

(गीतायां विवक्षितः कर्मदाहः प्रारब्धकर्मव्यतिरिक्तविषयः इति सर्वेऽपि भाष्यकारा अभ्युपयन्ति ।

१. तस्य तावदेवचिरं यावन्नविमोक्ष्येथसंपत्स्यते । छां-६-१४-२

२. भोगेनत्वितरे क्षपयित्वाथ संपत्स्यते । ब्रह्म सूत्रे IV-1-19

३. अनारब्धकार्ये एव तु तदवधेः । ब्र-सू IV-1-15 इत्यादि-प्रमाणैः प्रारब्धकर्मणां प्रायशो भोगेनैव क्षय इति तत्वं ॥

(प्रारब्धस्य ज्ञानमहिम्ना न क्षय इत्यत्र को हेतुरित्याकांक्षायां ज्ञानेना-शेषस्याज्ञानस्य निवृत्तावपि कुलालचक्रवत्प्रवृत्तवेगस्य कर्मणः संस्कारवशात्किं-चित्कालमनुवृत्तिरिति केचिदद्वैतव्याख्यातारः )( यथा भुक्तेः पूर्वभाविनः पश्चा-द्भाविनोप्यन्नस्यत्यागउपपद्यते न तथा भुक्तान्नस्य । प्रवृत्तफलत्वात् )\तथैवा-रब्धकर्मणः )( कारणाभावेपि कार्याभासदर्शनात् )(कारणे नष्टे कार्यं नश्य-तीति नियमस्याव्यवस्थितेः)(जलबुद्धौ नष्टायामपि मरौ पुनर्जलाभासप्रतीतेः प्रारब्धकार्योपपत्तिरिति शङ्करानन्द )( उक्तोपपादनेषु ज्ञानं सर्वमप्यज्ञानं हन्ती-त्यादाय प्रारब्धोपपत्त्यर्थं लौकिका युक्तय उपन्यस्ताः )( अपरेत्वद्वैतव्याख्या-तारो (पश्यतानंदिगिरिटीकायां) वदन्ति )(" यद्यारब्धफलस्यापि कर्मणो

निवृत्तिः ज्ञानोदयसमकालमेव शरीरपातःस्यात्। अतः प्रवृत्तफलकर्मसंपादकमज्ञानलेशं न नाशयति ज्ञानमित्यर्थः।" इति। अस्मिन्पक्षे ब्रह्मसाक्षात्कारः अज्ञानैकदेशं नाशयति इतरन्ननाशयतीति मतमधिगम्यते। ज्ञानमज्ञानस्यैव निवर्तकमिति लौकिकलिङ्गेन सर्वं समर्थयमानाः प्रारब्धबीजमज्ञानमात्रं नाप्नोति ज्ञानान्नाशं इत्यत्र निमित्तं न वदन्ति। एवं स्वव्यूहएवभेदेसति अज्ञानं निश्शेषं नश्यति वा सशेषं नश्यति वेति तद्राद्धान्ते न निश्चेतुं शक्यते॥ वस्तुतस्तु यथा ज्ञानं अज्ञानस्यनाशकं तथा दुरितस्यापि, विना प्रारब्धं। एवमेवहि भगवन्नियमः। निवर्तकनिवर्त्यभावः आगमप्रमितः। न तत्रास्ति निरंकुशयुक्तेरवकाशः॥

**न हि ज्ञानेन सदृशं पवित्रमिह विद्यते।**
**तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति॥ ३८**

वि०॥ इह लोके ज्ञानेन सदृशं पवित्रं न हि विद्यते। तज्ज्ञानं स्वयं योगसंसिद्धः योगविषये सम्यक्सिद्धिमान् संसिद्धज्ञानोपायः सन् कालेन बहुना आत्मनि विन्दति प्राप्नोति॥

शं॥ यतएवमतः, नहीति। न हि ज्ञानेन सदृशं तुल्यं पवित्रं पावनं शुद्धिकरं इह विद्यते। तत् ज्ञानं स्वयमेव योगसंसिद्धः योगेन कर्मयोगेन समाधियोगेन च संसिद्धः संस्कृतः योग्यतामापन्नः सन् कालेन महता आत्मनि विन्दति लभते इत्यर्थः॥

रा० ॥ यस्मादात्मज्ञानेन सदृशं पवित्रं शुद्धिकरमिह जगति वस्त्वन्तरं न विद्यते, तस्मादात्मज्ञानं सर्वपापं नाशयतीत्यर्थः । तत्तथाविधं ज्ञानं यथोपदेशमहरहरनुष्ठीयमानज्ञानाकारकर्मयोगेन संसिद्धः कालेन स्वात्मनि स्वयमेव लभते ॥

विचारः

ज्ञानासहकृतेन कर्मणा पापस्यात्यन्तिकनिवृत्तिर्न संभवति । यद्यपि "सर्वपाप्मानं तरति, तरति ब्रह्महत्यां । योऽश्वमेधेन यजते" इत्यादिश्रुतिभिः पापपरिहारः प्रमितः । "कर्मणा कर्मनिर्हारोनात्यन्तिकइहेष्यते" इत्याद्यन्यवचनैः पापशोधकं ज्ञानसमं नान्यद्विद्यत इति ज्ञायते ।

उत्तरार्धे "योगी स्वयं विन्दति" इत्युक्तम् । 'स्वयं'—अनायासेन इति केचिद्व्याचक्षते । कालेनेति बहुकालपरिपाकावश्यकतायाउक्तेः आयासाभावो नाभिप्रेतइति भाति । यन्महापवित्रं कर्मक्षयजनकमपरोक्षज्ञानं तदुपदेशमात्रेण न लभ्यं । किन्तु श्रवणमनननिदिध्यासनसहकृतैस्स्वानुष्ठितैस्साधनैरेवेति सूचयते ॥

योगसंसिद्ध इति । अत्र योगशब्देन कर्मयोग एवविवक्षितइति वेङ्कटनाथः । तथा रामानुजाचार्योऽपि । कर्मयोगसमाधियोगौ विवक्षिताविति शंकराचार्याशयः । ज्ञानयोगंसमाधिनिष्ठांचाभिमतत्वेनाह शङ्करानन्दः । एतदस्यवाक्यं । कृतश्रवणादिर्यतिः कालेन महता दीर्घेण योगसंसिद्धः । योगेन ज्ञानयोगेन नित्यनिरन्तरसमाधिनिष्ठया तात्पर्येणकृतया संसिद्धः । निश्शेषविनष्टसर्वबाह्यवासनता संसिद्धिः तां प्राप्तः संसिद्धः सम्यङ्निर्मूलितसप्रतिबन्धस्सन्—स्वयं आत्मनि स्वान्तःकरणे एव विन्दति । सर्वमिदमहंचब्रह्मैवेत्यप्रतिबद्धा ब्रह्ममयी वृत्तिर्बुद्धावेवोदेतीत्यर्थः" इति । अत्र विवक्षितसं-

सिद्धः यतिरेवेति निर्बन्धे नियामकं चिन्त्यं ॥ योगेनेत्यत्र विहाय कर्मयोगं भक्तियोगंच ज्ञानयोगमात्रग्रहणे प्रमाणं न ज्ञायते ॥ संसिद्धिशब्दार्थनिरूपणावसरे—निश्शेषविनष्टसर्वबाह्यवासनता संसिद्धिरिति पारिभाषिकनिर्वचनं दुर्गमम् ॥

"कर्मयोगेन संस्कृतः" इति शङ्करभाष्ये ब्रह्मानन्दगिरिव्याख्यायांच यआशयस्सूचितः तस्य शङ्करानन्देन तिरस्कारे हेतुर्नाधिगम्यते ॥ तस्मात् योगशब्दस्सामान्येन ज्ञानोपायपरः ॥ यथाधिकारं कर्मयोगीवा ज्ञानयोगीवा भक्तियोगीवा "संसिद्धज्ञानोपायस्सन्" ज्ञानं लभते इति विवृत्याचार्येण सूचितं साध्विति भाति ॥

आत्मनि ज्ञानं विन्दति इत्यत्र आत्मशब्देप्यस्त्याशयभेदः ॥ आत्मनीति अधिकरणार्थत्वं वा स्वात्मसाक्षिकमिति वा विवक्षितं इति देशिको मन्यते ॥ आत्मनि परब्रह्मविषये इत्यभिप्रयन् अखण्डात्मविषयं ज्ञानं लभते इति व्याचष्टे शंकरभा० उ० दीपिकाकारः ॥

अत्र अन्तःकरणार्थत्वं परब्रह्मार्थकत्वं चोपपन्नं भाति ।

अपरोक्षज्ञानस्यमानसत्वं "प्रजहाति यदाकामान्सर्वान्पार्थमनोगतान्" इत्यत्रोपपादितमनुसन्धेयं ॥ श्रीहरिविषयं अपरोक्षज्ञानं विन्दतीत्यर्थश्च निर्दृष्टः ॥

---

**श्रद्धावाँल्लभते ज्ञानं मत्परः संयतेन्द्रियः ।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥३९**

वि० ॥ एवं ज्ञानं प्रशस्य तस्यान्तरङ्गसाधनं फलं चाह ॥ श्रद्धावानिति ॥ आस्तिक्यबुद्धिमान् मत्परो मदेकनिष्ठः संयते-

न्द्रियो जितेन्द्रियश्च ज्ञानं लभते ॥ ज्ञानं लब्ध्वा परां शान्ति मोक्षमचिरेणाविलंबेनाधिगच्छति प्राप्नोति असति प्रारब्धे। सति तु तस्मिन् तद्भोगानन्तरमिति ॥

शं० ॥ ("तत्परः" इत्यस्यपाठः) येन एकान्तेन ज्ञानप्राप्तिः भवति स उपायः उपदिश्यते श्रद्धावानिति ॥ श्रद्धावान् श्रद्धालुः लभते ज्ञानं। श्रद्धालुत्वेपि भवति कश्चित् मन्दप्रस्थानः। अतआह तत्परः ॥ गुरूपासनादावभियुक्तः। ज्ञानलब्ध्युपाये श्रद्धावान्। तत्परः अपि अजितेन्द्रियः स्यात् इत्यत आह संयतेन्द्रियः संयतानि विषयेभ्यो निवर्तितानि यस्य इन्द्रियाणि स संयतेन्द्रियः। यएवंभूतः श्रद्धावान् तत्परः संयतेन्द्रियश्च सः अवश्यं ज्ञानं लभते ॥ प्रणिपातादिस्तु बाह्योनैकान्तिकोपि भवति मायावित्वादिसंभवात्; न तु तत् श्रद्धावत्त्वादौ इत्येकान्ततः ज्ञानलब्ध्युपायः। किंपुनः ज्ञानलाभात् स्यात् इत्युच्यते। ज्ञानं लब्ध्वा परां मोक्षाख्यां शान्ति उपरतिं अचिरेण क्षिप्रमेव अधिगच्छति। सम्यग्दर्शनात् क्षिप्रमेव मोक्षोभवतीति सर्वशास्त्रन्यायप्रसिद्धः सुनिश्चितोर्थः ॥

रा० ॥ तदेव विस्पष्टमाह ॥

एवमुपदेशाज्ज्ञानं लब्ध्वा चोपदिष्टज्ञानवृद्धौ श्रद्धावान् तत्परस्तत्रैव नियतमनास्तदितरविषयात्संयतेन्द्रियोऽचिरेण कालेनोक्तलक्षणविपाकदशापन्नं ज्ञानं लभते। तथाविधं

ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति परं निर्वाणमाप्नोति ॥

विचारः

अन्ये "मत्परः" इत्यत्र "तत्परः" इति पठन्ति। "तत्परः" इत्यस्य तात्पर्ययुतः अभियुक्तः इत्यर्थो वर्णितः। श्रद्धा तात्पर्यं संयतेन्द्रियत्वंचान्तरङ्गसाधनत्रयं ते वर्णयन्ति॥ श्रद्धा भगवद्भक्तिः जितेन्द्रियत्वं च साधनानि, इति विवृत्याशयः। विनाभगवन्तं कल्पकोट्यनुष्ठितैरपि श्रद्धादिभिर्नकिंचिदपि प्रयोजनमित्यतो "मत्पर" इत्येव पाठः श्रेयान् भाति॥

अपरोक्षज्ञाने जाते मोक्षः अचिरेण लभ्यते इत्युक्तं॥ अचिरेणेत्युक्तावपि कालविलंबो वस्तुतो भवति वा न वेति जिज्ञासायां प्रारब्धानुभवनिमित्तकः कश्चिद्विलंबोभ्युगन्तव्यः॥ यथैधांसीति श्लोकव्याख्याने, शंकरभाष्येपि प्रारब्धस्य भोगेनैव क्षयः इतरेषां कर्मणां निर्बीजीकरणाख्योदाहः इति विवेकः प्रदर्शितः॥ ज्ञाने जाते तत्क्षणमेव शरीरपातः प्रसज्येतेति युक्तिमालंब्य प्रारब्धस्य ज्ञानविनाश्यत्वं नावदन् शाङ्करा व्याख्यातारः। इमं ज्ञानमोक्षयोरन्तरा व्यवधानत्वेन प्रतिपादितविलंबविशेष विस्मृत्येव प्रकृतगीतापद्ये अचिरेणेतिपदं सर्वथा विलंबराहित्यार्थतया ते व्याचक्षते॥ तथाहि। "अचिरेण-अव्यवधानेनैव" इति वेङ्कटनाथः॥ जन्मान्तरलोकान्तरगमनं च विनैवाधिगच्छतीत्युत्कर्षदीपिकायां। "यथाहि दीपः स्वोत्पत्तिमात्रेणैवान्धकारनिवृत्तिं करोति न तु कंचित्सहकारिणमपेक्षते। तथा ज्ञानमपि स्वोत्पत्तिमात्रेणैवाज्ञाननिवृत्तिं करोति न तुकिंचित्प्रसङ्ख्यानादिकमपेक्षते" इति भावमाह मधुसूदनः। एतेन यथा प्रदीपोत्पत्त्यन्धकारापगमनयोरंतरा न किंचिदपि व्यवधानं एवमेव ज्ञानमोक्षयोर्मध्ये न व्यवधानं इति तेषामाशयो विज्ञायते। तथासति प्रारब्धस्य कागतिरित्याक्षेपस्य को निवारयिता? न च

वाच्यं यस्मिन् जन्मनि ज्ञानमुत्पन्नं तदन्ते विदेहकैवल्यं नियमेन भवति । न तस्य ज्ञानिनः पुनर्जन्म विद्यत इति ॥ बहुजन्मप्रापकप्रारब्धेसत्यनुभावितव्ये ज्ञानजन्मन एवान्तिमत्वनियमायोगात् ॥ यदाह देशिकः "कालविलंबं कंचिदङ्गीकृत्य ज्ञानयोगदेहान्तरादिविलंबनिषेधार्थं अचिरेणेत्युक्तं" इति, तच्चिन्त्यं ॥ प्रारब्धभोगार्थं संभावितस्य देहान्तरस्य कथं निषेधउपपद्यते ? ॥ "अचिरेणेत्युक्तावपि भक्तियोगव्यवहितः प्रारब्धकर्मावसानभावीच मोक्षः" इति देशिको ब्रूते ॥ प्रारब्धकर्मावसानभावीतिसाधूक्तं । भक्तियोगव्यवधानतु कर्मयोगज्ञानयोगभक्तियोगलक्षणापरिज्ञानादुक्तं भाति । कर्मयोगे यथा ज्ञानस्य तथा भक्तेरप्यन्तर्भावेन कर्मयोगाधिकारी मनुजः ज्ञानं लब्ध्वा विना च ज्ञानयोग भक्तियोगं वा प्रारब्धावसने यथाक्रमं वैकुण्ठं लभते इत्युक्ते न काप्यनुपपत्तिरस्ति ॥ तस्मात्संभावितविलंबपरीक्षायां साधूक्तं विवृत्याचार्येण "सति तु तस्मिन् (प्रारब्धे) तद्भोगानन्तर ।" इति ।

श्रद्धानाम गुरुवेदन्तादिवाक्येषु इदमित्थमेवेति प्रमारूपास्तिक्यबुद्धिरिति व्याख्यातं बहुभिः ॥ उपदिष्टज्ञाने त्वराख्यप्रकृष्टाकांक्षा श्रद्धेति देशिको मन्यते । तस्मादुत्तरश्लोके अश्रद्दधानः अत्वरमाणः इति रामानुजभाष्यम् ॥

## अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।
## नायं लोकोस्ति न परो न सुखं संशयात्मनः ॥४०

तद्विरोधिविपरीतज्ञानादौ चानिष्टमाह । अज्ञश्चेति ॥ नञोऽभावविरोधरूपार्थद्वयं

ध्येयं । तत्वविषयसंशयात्मा च विनश्यति । नरकं प्रतिपद्यते । किंच संशयात्मनो अयं मानुषोलोकः परः स्वर्गादिर्वा नास्ति । किं बहुना सुखं नास्तीत्यर्थः ॥

शं० ॥ अत्र संशयो न कर्तव्यः पापिष्ठोहि संशयः ॥ कथमिति । उच्यते । अज्ञश्चेति । अज्ञश्च अनात्मज्ञश्च अश्रद्दधानश्च गुरुवाक्यशास्त्रेषु अविश्वासवान् संशयात्मा च संशयचित्तश्च विनश्यति । अज्ञाश्रद्दधानौ यद्यपि विनश्यतः। न तथा यथा संशयात्मा । सतु पापिष्ठः सर्वेषां । कथं ? नायं साधारणोऽपि लोकोस्ति । तथा न परो लोकः । आस्ते न सुखं तत्रापि संशयोत्पत्तेः संशयात्मनः संशयचित्तस्य । तस्मात् संशयो न कर्तव्यः ॥

रा० ॥ अज्ञः एवमुपदेशलब्धज्ञानरहितः उपदिष्टज्ञानवृद्ध्युपायेचाश्रद्दधानः अत्वरमाणः उपदिष्टे च ज्ञाने संशयात्मा संशयमनाः विनश्यति नष्टो भवति ; अस्मिन्नुपदिष्टे आत्मयाथात्म्यविषये ज्ञाने संशयात्मनोऽयमपि प्राकृतो लोकोनास्ति न च परः । धर्मार्थकामरूपपुरुषार्थाश्च न सिध्यन्ति कुतो मोक्ष इत्यर्थः । शास्त्रीयकर्मसिद्धिरूपत्वात्सर्वेषां पुरुषार्थानां शास्त्रीयकर्मजन्यासिद्धेश्च देहातिरिक्तात्मनिश्चयपूर्वकत्वात् । अतस्सुखलवभागित्वमात्मानि संशयात्मनो न संभवति ॥

विचारः

अज्ञइति ज्ञानहीनः मिथ्याज्ञानीचोच्यते ॥ तदन्यत्वताद्विरुद्धत्वतदभावानां नञोर्थत्वात् ॥ संशयात्मनः न मनुष्यलोकात्प्रयोजनमस्ति ॥ नचानेन स्वर्गादिलोको गम्यते ॥ अतो न तस्य सुखं इत्युभयसंग्राहकतयोक्तिः ॥

नायं लोकः । न परः । ततो न तस्य किंचिदपि सुखं ॥ इति व्याख्यानं रामानुजाचार्यसम्मतंच ॥ वेङ्कटनथोप्येवमेवाह ॥

केचित्तु 'न सुखं' इत्यनेन नायं लोको न परः इति पूर्वोक्तद्वयस्य न संग्रहः अपि त्वनिष्टान्तरं तृतीयमुक्तं इति मन्यन्ते ॥ वित्तार्जनाद्यभावात्तस्य संशयात्मनो न मनुष्यलोकः ॥ धर्मज्ञानाद्यभावात् न परलोकः ॥ सर्वत्रसन्देहाक्रान्तचित्तस्य भोजनादिकृतं सुखमपि नास्ति ॥ तस्मात् स त्रितयहीनः पापीयानिति मधुसूदनः ॥ संशयात्मनः भाविजन्मन्ययं लोको नास्तीति 'नायं लोक' इत्यस्य व्याख्यानं शङ्करानन्दीये ॥ "अयं" "पर" इति भौमदिव्यलोकपरौ न ॥ किन्तु अयमिति धर्मार्थकामानां संग्रहः परइति मोक्षस्य । उभयविधपुरुषार्थराहित्योपसंहारपरं "न सुखं" इत्येतत् इति रामानुजाचार्याशयः ॥

सत्येवमुपपादनवैचित्र्येऽपि संशयात्मा पुरुषार्थाद्भ्रश्यतीति सामान्याकारके भावे सर्वे संप्रतिपन्नाः ॥ संशयस्य कोटिद्वयघटितत्वेन प्रवृत्त्यप्रवृत्त्योर्मध्ये क्लिश्यमानः कथं केन व्यापारेण सुखं लभेत ॥ संकल्पमूलाहि प्रवृत्तयः। संकल्पदशायां विकल्पोऽपि यदि यत्नं प्रतिबध्नाति तदा अर्थार्जने असमर्थो भवति । विषयभोगसंपादनेप्यसमर्थः । अर्थकामयोरभावे कुतस्तस्य भूलोकात्सुखं ॥ देहभिन्नः आत्मास्तिवा नवेति संदेहे, धर्मस्य तदार्जनीयस्वर्गादेश्च दूरतोऽपास्तिः। एवं मोक्षस्यापि ॥ तस्य जैवज्ञानेश्वरज्ञानभक्त्यादिसाध्यत्वात् ॥

"अज्ञः, अश्रद्दधानः, संशयात्मेति त्रय उक्ताः । तेषु द्वावादौ कथंचित्संभावितसंतारणौ । तृतीयस्तु सर्वथा नष्टः इत्येवं ज्ञापयितुं अज्ञश्च अश्रद्द-

धानश्चेति चकारेण पृथक्कृत्य संशयात्मा विनश्यतीति प्रयोगः कृतइति भाव-माह मधुसूदनः ॥ अज्ञः सुखेन चिकित्सितुं शक्यः । अश्रद्दधानः यत्नेन । संशयात्मात्वसाध्य एव । इति नीलकण्ठः ॥ अज्ञस्य (विपरीतज्ञानिनः) सुखेन चिकित्सायोग्यत्वं दुर्गमं ॥ श्रद्धाभावस्य संशयविपर्ययमूलत्वेनाश्रद्दधा-नस्य संशयात्मनस्सकाशादाधिक्यवर्णनंच दुर्गमं ॥ उक्तत्रयमपि परस्परं विव-क्षानुसारं हेतुहेतुमद्भावसंबन्धयुतं भाति ॥ त एकस्मिन्नेव वा पुरुषभेदे वा स्युः। मिलितानां एकैकस्य चानर्थहेतुत्वे तात्पर्यं ज्ञेयं ॥ द्वितीयार्धे संशयात्मनः ऐहिकामुष्मिकसर्वभोगवैधुर्येण कश्चिद्विशेषस्सूचितो दृश्यते ॥ "अश्रद्दधानः उपदिष्टज्ञानवृद्ध्युपाये अत्वरमाणः" इति रामानुजभाष्यम् ॥ "प्रकृष्टा-कांक्षा त्वरा तच्छून्यो विवक्षितः" इति देशिकटीकायां ॥ श्रद्धा विश्वासः आस्तिक्यबुद्धिरिति ग्रहणे नानुपपत्तिर्दृश्यते ॥

**योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।**
**आत्मवन्तं न कर्माणि निबध्नन्ति धनंजय ॥४१**

वि ॥ ज्ञानसाधनमनुवदन्ज्ञानफलं प्रपंचयति योगेति । भगवति मनोयोगेन तस्मिन्संन्यस्तं समर्पितं कर्म येन तं योगसंन्यस्तकर्माणं । ज्ञानेन छिन्नसंशयं आत्मवन्तं पर-मात्मभक्तं । हे धनञ्जय कर्माणि न निबध्नन्ति मुक्तो-भवन्तीत्यर्थः ॥

शं० ॥ कस्मात्? यस्मात्, योगेति ॥ योगसंन्यस्त-कर्माणं परमार्थदर्शनलक्षणेन योगेन संन्यस्तानि कर्माणि

येन परमार्थदर्शिना धर्माधर्माख्यानि तं योगसंन्यस्तकर्माणं। कथं योगसंन्यस्तकर्मेति? आह। ज्ञानसंछिन्नसंशयं ज्ञानेन आत्मेश्वरैकत्वदर्शनलक्षणेन संछिन्नः संशयो यस्य सः ज्ञानसंछिन्नसंशयः। य एवं योगसंन्यस्तकर्मा तं आत्मवन्तं अप्रमत्तं गुणचेष्टारूपेण दृष्टानि कर्माणि न निबध्नन्ति अनिष्टादिरूपं फलं नारभन्ते हे धनञ्जय॥

रा०॥ यथोपदिष्टयोगेन संन्यस्तकर्माणं ज्ञानाकारतापन्नकर्माणं यथोपदिष्टेन चात्मज्ञानेनात्मानि संछिन्नसंशयं आत्मवन्तं मनस्विनं उपदिष्टार्थे दृढावस्थितमनसं बन्धहेतुप्राचीनानन्तकर्माणि न निबध्नन्ति॥

विचारः

(लोकसंग्रहार्थं वा स्वकर्तव्यत्वेन वा कृतानि कर्माणि मोक्षप्रतिबन्धकानि नेति यावत्)(संचितान्यप्रारब्धानि ध्वस्तानि भवन्ति। भाविकर्मणामश्लेषश्च भवतीति पूर्वमेवोक्तं)("कर्मणा बध्यते जन्तु"रिति शङ्कायाः समाधानपूर्वं "योगमातिष्ठोत्तिष्ठ भारते"त्युपसंहारस्य निरूपकतया कर्माण्यबन्धकानि इत्युच्यते)(त्यादिहापि संचितागामिपापानांविवक्षा॥ परन्तु प्रस्तुतस्य युद्धाख्यस्य निष्कामनयानुष्ठीयमानस्य प्राधान्येन विवक्षेति भाति)(आत्मवन्तमिति भगवद्भक्तो विवक्षित इति विवृत्याचार्यः)(इदं पदमन्यैरन्यथा व्याख्यातं)(मनस्विनं उपदिष्टार्थदृढावस्थितमनसं इति रामानुजभाष्यं)(अप्रमत्तं शमदमादिमन्तं विषयानासक्तं सर्वदासावधानं इत्यादि शाङ्कराणां व्याख्यानं)("आत्मवन्तं मुक्तं। आत्मलाभान्न परं विद्यते॥ इति श्रुतेः।" इति वेङ्कटनाथः)(अत्र परमात्मपरत्वं परित्यज्यान्तःकरणपरत्वे पक्षपातिनइमे व्याख्यातारः)(भग-

वद्भक्तेः सर्वतः प्राधान्यं ते नाभ्युपयन्तीव भाति। साहि सर्वमाङ्गलिका। विना भक्तिं कथंनाम स्यात्कर्मालेपः। भेदवादी हरिसर्वोत्तमत्वाद्यभ्युपगन्ता रामानुजाचार्योऽपि आत्मशब्दस्य प्रकरणोचितभगवत्परत्वं तत्र तत्र विहाय अन्यानेवार्थान् आलंब्य व्याख्यातीत्याश्चर्यम्।

"ज्ञानसंछिन्नसंशयं" इत्यत्र संशयविछेदकज्ञानप्रकारे मतभेदस्सुगमः। ऐक्यज्ञानेनेत्येके। साम्यज्ञानेनेत्यपरे। श्रीहरिसर्वोत्तमत्वादिभेदज्ञानेनेति श्रीमध्वानुगाः।

योगसंन्यस्तेत्यस्य व्याख्यानेऽपि विप्रतिपत्तिर्दृश्यते। परमार्थदर्शनलक्षणेनेति शङ्करभाष्यं। तद्रीत्या परमार्थसद्ब्रह्मैवेति तद्दर्शनेन कर्मसंन्यासउक्तः। अद्वैतसाक्षात्कारवता कर्तव्यः संन्यासः कर्मणां स्वरूपतः परित्यागएव। द्विविधोहि संन्यासस्संभावितः। फलतः स्वरूपतश्च। तत्राद्यः कर्मयोगिना कर्मानुष्ठानदशायां भगवति फलसमर्पणरूपः। द्वितीयस्तु जीवन्मुक्तेन ज्ञानिना क्रियमाणः। योगसंन्यस्तेत्यत्र योगशब्दस्याद्वैतसाक्षात्काराभिप्राये कर्मणां स्वरूपतः परित्यागएव संन्यासइति पर्यवस्यति। "सर्वस्य जगतः स्वस्यच ब्रह्ममात्रत्वदर्शनं योगः। तेन संन्यस्तानि विश्लेषितानि। सम्यङ्नितरामस्तानि ब्रह्मणि ब्रह्मात्मना लयंगतानीति वा कर्माणि संचितान्यागामीनि च सर्वाणि यस्य तं।" इति शङ्करानन्दीये। अत्र चिन्त्यते। योगशब्दस्यानुपदं वक्ष्यमाणेन "ज्ञानसंछिन्नसंशय"मित्यत्र ज्ञानशब्देन पर्यायत्वमुक्तं भाति। तर्हि ज्ञानसंन्यस्तकर्माणं इत्येवावक्ष्यत्। ज्ञानपदं विहाय योगपदप्रयोगे निमित्तं न दृश्यते। न केवलं योगशब्दमद्वैतसाक्षात्कारपरतयायं व्याचष्टे। किंतु "आत्मवन्तं" इत्यत्रापि आत्मैव बहिरन्तःसर्वत्रवृत्तेर्विषयत्वेनास्यास्ति नान्यत् इत्यात्मवान् इत्यप्याह। अस्य पूर्वार्धेन पौनरुक्त्यन्तु स्फुटं॥

एवं योगशब्दस्य ज्ञानार्थत्वेऽस्वरसादिव मधुसूदनः "योगेन भगवदाराधनलक्षणसमत्वबुद्धिरूपेण" इति व्याख्याति। वेङ्कटनाथोपीममर्थमनुसरति।

तथा श्रीधरः। "परमार्थदर्शनलक्षणेन" इति शङ्करभाष्यस्येदं व्याख्यानं विरुद्धं स्यादिति भीत्वोत्कर्षदीपिकाकारस्तु तिरस्करोति। "अस्मिन्पक्षे कर्म-पदसंकोचाद्यापत्तिरूपारुचिर्बोध्या"। इति॥

योगेत्यस्य भगवति मनोयोगपरत्वे सर्वं समञ्जसं भाति॥ संन्यासोऽत्र फलत्यागरूपः। स हि बहुधा भगवतोपदिष्टः—एवंप्रसिद्धार्थग्रहणे नानुपपत्तिर्दृश्यते॥ योगशब्दस्य ज्ञानोपायपरत्वे ज्ञानसंछिन्नेतिवचनं सुगमम्। ज्ञानस्य योगफलत्वात्। कर्मणां स्वरूपतस्त्यागस्तु प्रकरणविरुद्धो भाति। अतएव देशिकाचार्योक्तिः "कर्तृत्वादित्यागगर्भज्ञानाकारतापत्त्या कर्माकारत्वतिरस्कारोऽत्र कर्मणस्संन्यासशब्देनोपचर्यते। स्वरूपत्यागपरत्वे तु पूर्वापरविरोधः।" इति॥

**तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनात्मनः।**
**छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत॥ ४२॥**

ओंतत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु योगशास्त्रे श्रीकृष्णार्जुनसंवादे ज्ञानयोगोनाम चतुर्थोऽध्यायः॥

वि०॥ उपपादितं कर्मणः कर्तव्यत्वमुपसंहरति॥ तस्मादिति। ज्ञानोपायानुष्ठानाननुष्ठानयोरर्थानर्थवत्वादज्ञानसंभूतं हृद्गतमात्मनः संशयं ज्ञानासिना ज्ञानाख्यखड्गेन छित्वा योगं ज्ञानोपायं कर्मातिष्ठ कुरु हे भारत उत्तिष्ठ उद्युक्तो भवेति॥ ४२॥

शं० ॥ यस्मात्कर्मयोगानुष्ठानादशुद्धिक्षयहेतुकज्ञानसंछिन्नसंशयः न निबध्यते कर्मभिः ज्ञानाग्निदग्धकर्मत्वादेव यस्माच्च ज्ञानकर्मानुष्ठानविषये संशयवान्विनश्यति तस्मादिति । तस्मात् पापिष्ठं अज्ञानसंभूतं अज्ञानात् अविवेकात् जातं हृत्स्थं हृदि बुद्धौ स्थितं ज्ञानासिना शोकमोहादिदोषहरं सम्यग्दर्शनं ज्ञानं तदेव असिः खड्गः तेन ज्ञानासिना आत्मनः स्वस्य । आत्मविषयत्वात्संशयस्य । न हि परस्य संशयः अपरेण छेत्तव्यतां प्राप्तः येन स्वस्येति विशेष्येत । अतः आत्मविषयोऽपि स्वस्यैव भवति । छित्वा एनं संशयं स्वविनाशहेतुभूतं योगं सम्यग्दर्शनोपायं कर्मानुष्ठानं आतिष्ठ कुर्वित्यर्थः । उत्तिष्ठ चेदानीं युद्धाय हे भारत इति ॥

रा० ॥ तस्मादनाद्यज्ञानसंभूतं हृत्स्थं आत्मविषयं संशयं मयोपदिष्टेनात्मज्ञानासिना छित्वा मयोपदिष्टं कर्मयोगमातिष्ठ तदर्थमुत्तिष्ठ भारतेति ॥

विचारः

(भरतवंशजातत्वेन अर्जुनस्य वंशानुगणसुज्ञानसत्कर्मनिरतत्वं युक्तं इति भारतेत्यनेन सूचितं )( एनं हृत्स्थं संशयं छित्वा । एनं योगमातिष्ठ—इति अङ्गुल्यादिप्रदर्शनपूर्वं आन्तरयुद्धानन्तरं बाह्ययुद्धार्थं रथपश्चाद्भागं विहाय कर्मयोगार्थं रथमध्ये उचिते आसने आरूढो भवेति ध्वनिः )( तस्मादित्यनेनोक्तो हेतुर्न केवलमव्यवहितपूर्वेषु कतिपयश्लोकेषूक्तस्य प्रमेयस्य संग्राहकः ।

किन्तु अनुष्ठानत्यागाभ्यां जायमानानां फलानिष्टानां सर्वेषामुक्तानां ॥ संशयात्मा विनश्यतीत्यतः संशयः छेत्तव्यइति भावः ॥

सामान्यदर्शनयुतविशेषाज्ञानस्य संशयबीजत्वेन "अज्ञानसंभूतं संशयं" इत्युक्तं ॥ हृत्स्थत्वोक्तिश्च वध्यस्य संशयस्य घातुकस्य ज्ञानस्यच मनसि सामानाधिकरण्ये उक्ते हि छेदः उपपद्येत अन्यथा नेति सूचनाय ॥

आत्मनः अज्ञानसंभूतं, आत्मनः संशयं, आत्मनः ज्ञानासिना, इति काकाक्षिन्यायेन पूर्वं परस्ताच्चान्वयः ॥ जीवपरमात्मविषयं संशयं परमात्मविषयज्ञानखड्गेन छिन्धि इति यावत् ॥

"आत्मनः" इति पंचमीवा । सत्त्वभावबलात् उचितयत्नात्—उचितधैर्यात् संशयारिं जहि इति यावत् ॥ आत्मनः परमात्मप्रसादादिति वा ॥

इति श्रीमत्पद्मनाभाचार्यविरचितायां भावचन्द्रिकायां

चतुर्थोऽध्यायः समाप्तः ॥

# पञ्चमोऽध्यायः ।

*अर्जुन उवाच—*

**संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।**
**यच्छ्रेयएतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ १ ॥**

वि० ॥(योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वेत्यादिना द्वितीये संक्षेपेणोक्तस्य तृतीयादौ विशेषतः स्पष्टीकृतस्य फलकामनादित्यागेनेश्वरार्पणबुद्ध्या वर्णाश्रमविहितकर्मानुष्ठानरूपस्य कर्मयोगस्य यदंशद्वयं कामादिवर्जनरूपं उक्तरूपकर्मानुष्ठानाख्यं चेति तदंशद्वयरूपं तृतीयोक्तमत्राध्याये प्रपंच्यते )( संन्यासमिति )( पूर्वाध्याये यदृच्छालाभसंतुष्टइत्यादिना कामादिवर्जनरूपं संन्यासं कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतं इत्यादिना वर्णाश्रमविहितकर्मणां योगं ईश्वरार्पणबुध्यानुष्ठानरूपं कर्मयोगं च हे कृष्ण शंससि कथयसि )(एतयोरुक्तलक्षणयोः संन्यासकर्मयोगयोः यच्छ्रेयः अधिकं भवति तदेकं मे मम सुनिश्चितं ब्रूहि )( संन्यासस्याधिकत्वे तमेव ग्रहीष्यामि किं तद्विरोधिना कामद्वेषादि-

युतेन युद्धाख्यकर्मयोगेनेति भावः । यद्वा पूर्वत्र योगसंन्यस्तकर्माणमित्यादौ पठितः संन्यासशब्दो यत्याश्रमविषयः । योगमातिष्ठेत्यादौ श्रुतो योगशब्दो गृहिविषय इति प्रकल्प्य यतीनां सर्वकर्मत्यागेन ज्ञानमात्राधिकारित्वात् गृहिणां च ज्ञानत्यागेन कर्ममात्राधिकारित्वात् तयोरेकपुन्निष्ठत्वं न युक्तमिति भावेन योगसंन्यासयोर्मध्ये यच्छ्रेयस्तदेकं ग्रहीष्यामीति भावेन तयोर्मध्ये श्रेयः पृच्छति ॥ संन्यासमिति । कर्मणां संन्यासं यत्याश्रमं संन्यस्तकर्माणमित्यनेन शंससि । पुनः कर्मणां योगमनुष्ठानलक्षणं गृहस्थाश्रमं च योगमातिष्ठोत्तिष्ठेत्यनेन शंससि ॥ एतयोर्यत्याश्रमगृहस्थाश्रमयोः । शिष्टं प्राग्वत् । एतेनास्याध्यायस्य तृतीयोक्तकर्मयोगप्रपंचनपरत्वे तदानन्तर्यं स्यादिति निरस्तं । योजनाद्वयेपि पूर्वाध्यायोक्तोपजीवनेनैव प्रश्नस्योत्थानेन चतुर्थानन्तर्यस्योचितत्वादिति ॥

शं० ॥ "कर्मण्यकर्म यः पश्येत्" इत्यारभ्य "सयुक्तः कृत्स्नकर्मकृत्" "ज्ञानाग्निदग्धकर्माणं" "शारीरं केवलं कर्म कुर्वन्" "यदृच्छालाभसन्तुष्टः" "ब्रह्मार्पणं ब्रह्महविः"॥ "कर्मजान्विद्धि तान्सर्वान्" "सर्वं कर्माखिलं पार्थ" "ज्ञानाग्निस्सर्वकर्माणि" "योगसंन्यस्तकर्माणं" इत्येतैर्वचनैः सर्वकर्मणां संन्यासं अवोचत् भगवान् । "छित्वैनं संशयं योगमातिष्ठ" इत्यनेन वचनेन पुनर्योगं च कर्मा-

नुष्ठानलक्षणं अनुतिष्ठ इत्युक्तवान् । उभयोश्च कर्मानुष्ठान-कर्मसन्यासयोः स्थितिगतिवत् परस्परविरोधात् एकेन सह कर्तुं अशक्यत्वात् कालभेदेन चानुष्ठानविधानाभावात् अर्थादेत-योरन्यतरकर्तव्यताप्राप्तौ सत्यां यत्प्रशस्यतरं एतयोः कर्मा-नुष्ठानकर्मसंन्यासयोः तत् कर्तव्यं नेतरत् इत्येवं मन्य-मानः प्रशस्यतरबुभुत्सया अर्जुनउवाच "संन्यासं कर्मणां कृष्ण" इत्यादिना ॥

ननु चात्मविदः ज्ञानयोगेन निष्ठां प्रतिपादयिष्यन् पूर्वोदाहृतैः वचनैः भगवान्कर्मसंन्यासमवोचत् नत्वनात्म-ज्ञस्य । अतश्च कर्मानुष्ठानकर्मसंन्यासयोः भिन्नपुरुषविषय-त्वात् अन्यतरस्य प्रशस्यतरबुभुत्सयाऽयं प्रश्नोनुपपन्नः । सत्यमेवं त्वदभिप्रायेण प्रश्नो नोपपद्यते; प्रष्टुः स्वाभिप्रा-येण पुनःप्रश्नो युज्यते एवेति वदामः । कथं ? पूर्वोदाहृतैर्व-चनैः भगवता कर्मसंन्यासस्य कर्तव्यतया विवक्षितत्वात्, प्राधान्यमन्तरेण च तस्य कर्तुः कर्तव्यत्वासंभवात् अनात्म-विदपि कर्ता पक्षे प्राप्तः अनूद्यते; न पुनरात्मवित्कर्तृकत्व-मेव संन्यासस्य विवक्षितं इत्येवं मन्वानस्यार्जुनस्य कर्मानु-ष्ठानकर्मसंन्यासयोरविद्वत्पुरुषकर्तृकत्वमप्यस्तीति पूर्वोक्तेन प्रकारेण तयोः परस्परविरोधादन्यतरस्य कर्तव्यत्वे प्राप्ते प्रशस्यतरं च कर्तव्यं नेतरदिति प्रशस्यतरविविदिषया प्रश्नो नानुपपन्नः ॥

प्रतिवचनवाक्यार्थनिरूपणेनापि प्रष्टुरभिप्रायः एवमेवेति गम्यते। कथं। संन्यासकर्मयोगौ निःश्रेयसकरौ तयोस्तु कर्मयोगो विशिष्यते इति प्रतिवचनं । एतन्निरूप्यं ॥ किमनेनात्मवित्कर्तृकयोः संन्यासकर्मयोगयोः निःश्रेयसकरत्वं प्रयोजनं उक्त्वा तयोरेव कुतश्चिद्विशेषात् कर्मसंन्यासात्कर्मयोगस्य विशिष्टत्वमुच्यते ? आहोस्वित् अनात्मवित्कर्तृकयोः संन्यासकर्मयोगयोस्तदुभयमुच्यते इति ॥ किंचातः यदि आत्मवित्कर्तृकयोः कर्मसंन्यासकर्मयोगयोः निःश्रेयसकरत्वं तयोस्तु कर्मसंन्यासात् कर्मयोगस्य विशिष्टत्वं उच्यते ; यदि वा अनात्मवित्कर्तृकयोः संन्यासकर्मयोगयोः तदुभयमुच्यत इति । अत्रोच्यते । आत्मवित्कर्तृकयोः संन्यासकर्मयोगयोरसंभवात् तयोः निश्श्रेयसकरत्ववचनं तदीयाच्च कर्मसंन्यासात् कर्मयोगस्य विशिष्टत्वाभिधानं इत्येतदुभयमनुपपन्नं । यद्यनात्मविदः कर्मसंन्यासः तत्प्रतिकूलश्च कर्मानुष्ठानलक्षणः कर्मयोगः संभवेतां तदा तयोर्निश्श्रेयसकरत्वोक्तिः कर्मयोगस्य कर्मसंन्यासाद्विशिष्टत्वाभिधानं इत्येतदुभयमुपपद्येत । आत्मविदस्तु संन्यासकर्मयोगयोरसंभवात्तयोर्निश्श्रेयसकरत्वाभिधानं संन्यासाच्च कर्मयोगो विशिष्यते इति चानुपपन्नं ॥

अत्राह ; किमात्मविदस्संन्यासकर्मयोगयोरुभयोरप्यसंभवः । आहोस्विदन्यतरस्यासंभवः ? यदाचान्यतरस्यासंभवः

तदा किं कर्मसंन्यासस्य उत कर्मयोगस्येति ॥ असंभवे कारणं च वक्तव्यं इति । अत्रोच्यते । आत्मविदो निवृत्तमिथ्याज्ञानत्वात् विपर्ययज्ञानमूलस्य कर्मयोगस्यासंभवः स्यात् । जन्मादिसर्वविक्रियारहितत्वेन निष्क्रियं आत्मानं आत्मत्वेन यो वेत्ति तस्यात्मविदस्सम्यग्दर्शनेनापास्तमिथ्याज्ञानस्य निष्क्रियात्मस्वरूपावस्थानलक्षणं सर्वकर्मसंन्यासमुक्त्वा तद्विपरीतस्य मिथ्याज्ञानमूलकर्तृत्वाभिमानपुरस्सरस्य सक्रियात्मस्वरूपावस्थानरूपस्य कर्मयोगस्येह गीताशास्त्रे तत्रतत्रात्मस्वरूपनिरूपणप्रदेशेषु सम्यग्ज्ञानमिथ्याज्ञानतत्कार्यविरोधादभावः प्रतिपाद्यते यस्मात्तस्मात् आत्मविदः निवृत्तमिथ्याज्ञानस्य विपर्ययज्ञानमूलः कर्मयोगो न संभवतीति युक्तमुक्तं स्यात् ॥

केषु केषु पुनरात्मस्वरूपनिरूपणप्रदेशेषु आत्मविदः कर्माभावः प्रतिपाद्यते इति ॥ अत्रोच्यते । "अविनाशि तु तत्" इति प्रकृत्य "य एनं वेत्ति हन्तारं" "वेदाविनाशिनं नित्यं" इत्यादौ तत्र तत्रात्मविदः कर्माभावः उच्यते ॥

ननु च कर्मयोगोऽपि आत्मस्वरूपनिरूपणप्रदेशेषु तत्रतत्र प्रतिपाद्यते एव । तद्यथा "तस्माद्युध्यस्व भारत ।" "स्वधर्ममपि चावेक्ष्य" "कर्मण्येवाधिकारस्ते" इत्यादौ । अतश्च कथमात्मविदः कर्मयोगस्यासंभवः स्यादिति ॥

अत्रोच्यते। सम्यग्ज्ञानमिथ्याज्ञानतत्कार्यविरोधात्, "ज्ञानयोगेन सांख्यानां" इत्यनेन सांख्यानामात्मतत्वविदां अनात्मवित्कर्तृककर्मयोगनिष्ठातः निष्क्रियात्मस्वरूपावस्थानलक्षणायाः ज्ञानयोगनिष्ठायाः पृथक्करणात् कृतकृत्यत्वेनात्मविदः प्रयोजनान्तराभावात् "तस्य कार्यं न विद्यते" इति कर्तव्यान्तराभाववचनाच्च । "न कर्मणामनारंभात्" "संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः" इत्यादिना चात्मज्ञानाङ्गत्वेन कर्मयोगस्य विधानात्—"योगारूढस्य तस्यैव शमः कारणमुच्यते" इत्यनेन चोत्पन्नसम्यग्दर्शनस्य कर्मयोगाभाववचनात्—"शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषं" इति च शरीरस्थितिकारणातिरिक्तस्य कर्मणो निवारणात् "नैव किंचित्करोमीति युक्तो मन्येत तत्ववित्" इत्यनेन च शरीरस्थितिमात्रप्रयुक्तेष्वपि दर्शनश्रवणादिकर्मसु आत्मयाथात्म्यविदः नाहं करोमि इति प्रत्ययस्य समाहितचेतस्तया सदा कर्तव्यत्वोपदेशात् आत्मतत्वविदः सम्यग्दर्शनविरुद्धो मिथ्याज्ञानहेतुकः कर्मयोगः स्वप्नेऽपि न संभावयितुं शक्यते यस्मात्तस्मात् अनात्मवित्कर्तृकयोरेव संन्यासकर्मयोगयोः निःश्रेयसकरत्ववचनं तदीयाच्च कर्मसंन्यासात् पूर्वोक्तात्मवित्कर्तृकसर्वकर्मसंन्यासविलक्षणात् सत्येव कर्तृत्वविज्ञाने कर्मैकदेशविषयात् यमनियमादिसहितत्वेन च दुरनुष्ठेयात् सुकरत्वेन च कर्मयोगस्य

विशिष्टत्वाभिधानमित्येवं प्रतिवचनवाक्यार्थनिरूपणेनापि पूर्वोक्तः प्रष्टुरभिप्रायो निश्चीयत इति स्थितम् ।

"ज्यायसीचेत्कर्मणस्ते" इत्यत्र ज्ञानकर्मणोस्सहासंभवात् यच्छ्रेय एतयोस्तन्मे ब्रूहि इत्येवं पृष्टोऽर्जुनेन भगवान् सांख्यानां संन्यासिनां ज्ञानयोगेन निष्ठा कर्मयोगेन योगिनां निष्ठा प्रोक्तेति निर्णयं चकार । न च संन्यासनादेव केवलात्सिद्धिं समधिगच्छतीति वचनात् ज्ञानसहितस्य तस्य सिद्धिसाधनत्वं इष्टं; कर्मयोगस्य च विधानात् । ज्ञानरहितस्य संन्यासः श्रेयान्? किं वा कर्मयोगः श्रेयान्? इत्येतयोः प्रशस्यतरं बुभुत्सुः अर्जुनउवाच । संन्यासं परित्यागं कर्मणां शास्त्रीयाणां अनुष्ठेयविशेषाणां शंससि प्रशंससि कथयसि इत्येतत् पुनः योगं च तेषामेवानुष्ठानमवश्यं कर्तव्यं शंससि । अतो मे कतरत् श्रेयः इति संशयः किं कर्मानुष्ठानं श्रेयः किं वा तद्धानमिति । प्रशस्यतरं चानुष्ठेयं । अतश्च यत् श्रेयः प्रशस्यतरं एतयोः कर्मसंन्यासकर्मयोगयोः यदनुष्टानाच्छ्रेयोऽवाप्तिः मम स्यादिति मन्यसे तदेकं अन्यतरत् सह एकपुरुषानुष्ठेयत्वासंभवात् मे ब्रूहि सुनिश्चितं अभिप्रेतं तवेति ॥

रा० चतुर्थाध्याये कर्मयोगस्य ज्ञानाकारतापूर्वकस्वरूपभेदो ज्ञानांशस्य च प्राधान्यमुक्तं; ज्ञानयोगाधिकारिणोऽपि कर्मयोगस्यान्तर्गतात्मज्ञानत्वादप्रमादत्वात्सुकरत्वान्निरपेक्ष-

त्वाच्च ज्यायस्त्वं तृतीय एवोक्तं । इदानीं कर्मयोगस्यात्मप्राप्तिसाधनत्वे ज्ञाननिष्ठायाश्शैघ्र्यं कर्मयोगान्तर्गताकर्तृत्वानुसन्धानप्रकारं च प्रतिपाद्य तन्मूलं ज्ञानं च विशोद्ध्यते ॥

कर्मणां संन्यासं ज्ञानयोगं पुनः कर्मयोगं च शंससि; एतदुक्तं भवति । द्वितीयेऽध्याये मुमुक्षोः प्रथमं कर्मयोगएव कार्यः । कर्मयोगेन मृदितान्तःकरणकषायस्य ज्ञानयोगेनात्मदर्शनं कार्यमिति प्रतिपाद्य पुनस्तृतीयचतुर्थयोर्ज्ञानयोगाधिकारदशापन्नस्यापि कर्मनिष्ठैव ज्यायसी, सैव ज्ञाननिष्ठा निरपेक्षा आत्मप्राप्तौ साधनमिति कर्मनिष्ठां प्रशंससीति । तत्रैतयोर्ज्ञानयोगकर्मयोगयोरात्मप्राप्तिसाधनभावे यदेकं सौकर्याच्छैघ्र्याच्च श्रेयः श्रेष्ठमिति सुनिश्चितं तन्मे

विचारः

( अत्र किं पृच्छत्यर्जुनः किं भगवान्प्रतिवक्तीति स्फुटं न ज्ञायते ॥

( कर्मणां संन्यासं इत्यनेन ज्ञानयोगो विवक्षितइत्यादाय रामानुजभाष्ये तट्टीकायां च ज्ञानयोगकर्मयोगयोस्तारतम्य पृष्टं कर्मयोगस्याधिक्यं प्रत्युक्तं इत्याशयो दृश्यते ॥( कर्मयोगस्याधिक्यनिरूपणावसरे कर्मयोगस्यान्तर्गतज्ञानत्वेन ज्ञानयोगनैरपेक्ष्यं ज्ञानयोगस्य शुद्धान्त.करणमात्रनिर्वाह्यत्वेन कर्मयोगस्यैतन्नियमानाश्रयणेन सुकरत्वं अप्रमादत्वं इत्यादियुक्तयोप्युपन्यस्ताः ॥( अत्रेदं चिन्त्यते,( नन्विदं सर्वं तृतीयाध्यायादौ "ज्यायसी चेत्कर्मणस्ते" इति ज्ञानयोगकर्मयोगयोस्तारतम्ये पृष्टे सति "कर्मज्यायोह्य-

कर्मणः" इति कर्मयोगस्याधिक्यमुक्तयुक्तिभिः प्रसाधितं ? एवं संशये विछिन्ने किमित्यर्जुनः पुनस्तमेव प्रमेयविशेषं पृच्छतीति ? वस्तुतस्तु ज्ञानयोगात्कर्मयोगस्य स्वरूपतो यदाधिक्यं तत्र तत्र रामानुजभाष्ये प्रपंचितं तदप्रामाणिकं भाति । देवाः भक्तियोगिनः ऋष्यादयः ज्ञानयोगिनः मनुष्याः कर्मयोगिनः । अर्जुनप्रियव्रतादयस्तु आधिकारिकपुरुषाः ईश्वरेच्छया विनिवेशितकर्माधिकाराः इत्यादि प्रमेयजातं तृतीयाध्याये प्रपंचितमनुसन्धेयम् ॥

शङ्कराचार्यतदनुगास्तु ज्ञानरहितकर्तृककर्मत्यागकर्मयोगयोर्मध्ये कस्याधिक्यं इत्यर्जुनाशयं वर्णयन्ति । एतन्निरूपणावसरे अज्ञेष्वपि यो विरक्तस्तस्यैव कर्मत्यागेऽधिकारः अविरक्ताज्ञस्य तु कर्मयोग एव श्रेयान् इत्यभिप्रायमाहुः एवं विरक्तताऽविरक्तता दशाभेदेनोभयोरपि निःश्रेयसकरत्वापरिज्ञानमूलोऽर्जुनप्रश्नः । तादृशं विवेकं पुरस्कृत्य अर्जुनस्याविरक्तत्वं चाभिप्रेत्य कर्मयोगएव तस्य गरीयानिति भगवदभिहितोत्तरस्य भावमाचक्षते । किंच कर्मयोगस्य मिथ्याज्ञानपरिकल्पिततया ज्ञानिनि स्वप्नेऽपि संभावयितुमशक्यत्वेनेहाविद्वत्कर्मयोगस्याविद्वत्संन्यासस्य चैव प्रसक्तिः न तु विद्वत्संन्यासस्येति दृढं वदन्ति । अत्रावसरे गीताशास्त्रेऽतीताध्यायप्रतिपादितत्वेन ज्ञानिनां कर्माभावस्तैर्निरूपितश्च । इदमत्र वक्तव्यं । यानि गीतापद्यानि ज्ञानिनस्सर्वथा कर्माभावप्रतिपादकानीत्युदाहृतानि तान्यभिमतार्थं न साधयन्तीति स्फुटं । तथाहि "अविनाशि तु तद्विद्धि" "यएनं वेत्ति हंतारं" "वेदाविनाशिनं
याध्यायगतपद्यानि कथं विवक्षितमर्थं साधयेयुः । "यस्त्वात्मरतिरेवे" तिपद्यं त्वसंप्रज्ञातसमाधिस्थपरम् ॥

"कर्मण्यकर्मे"त्यादयः श्लोकाश्चतुर्थाध्यायगताः शंकरभाष्योदाहृताः कामादिवर्जनाख्यसंन्यासमभिप्रयन्ति । नतु ज्ञानिभिर्नित्यनैमित्तिकादिसर्वकर्मणां स्वरूपतस्त्यागं । ज्ञानिनः कृतकृत्यत्वान्न कर्मेति युक्तिरपि मुक्तावानन्दवृद्ध्यर्थं तस्यानुष्ठानं सार्थकमिति निरूपणेन प्रागेव निरस्ता वेदितव्या ॥

एवं अन्यैरन्यथा व्याख्यातमसमंजसं मन्वानः श्रीमध्वः प्रश्नप्रतिवचनयोराशयं यथावन्निरूपयति भाष्ये ॥ तथाहि । कामादित्यागसहितं ईश्वरार्पणबुद्ध्यनुगृहीतकर्मानुष्ठानं हि कर्मयोगः ॥ अत्रांशद्वयमनुसन्धेयं । कामादिवर्जनं यत्तत्तत्र तत्र द्वितीयादिषु भगवतोपदिष्टं ॥ "ध्यायतो विषया" नित्यादिभिः द्वितीये ॥ "कामएषक्रोधएष" इत्यादिभिः तृतीये । "यस्यसर्वे" इत्यादिभिः चतुर्थे च ॥

ईश्वरार्पणबुद्धिश्च "तानि सर्वाणि संयम्य युक्त आसीत मत्परः" । "मयि सर्वाणी"त्यादिभिर्निरूपिता ॥

एवं कर्मयोगलक्षणघटितयोः कामादिवर्जनं ईश्वरार्पणबुद्ध्यानुष्ठानं इत्येतयोर्मध्ये प्रथमांशः किं श्रेयान् उत द्वितीयांशः इति प्रश्नाभिप्रायः ॥ यदि प्रथमः तर्ह्यवर्जनीयकामादियुताद्युद्धादुपरम एवोचितो भातीत्यर्जुनभावः ॥ भगवत्प्रातिवचने कामादिवर्जनस्य ईश्वराराधनत्वेनानुष्ठयिमानकर्मणश्च निश्रेयसकरत्वप्रतिपादनपूर्वं भगवत्पूजाया अत्युत्कृष्टत्वात् उक्तांशयोर्द्वितीयस्य विशिष्टत्वमभिहितं ॥ "द्वन्द्वत्यागात्तु संन्यासान्मत्पूजैव गरीयसी" इत्याचार्योदाहृतं प्रमाणं ॥

अस्मिन्व्याख्याने इयांसौ विशेषाववधार्यौ ॥ अशुद्धान्तःकरणत्वेन कर्मयोगएवार्जुनस्य श्रेयान् इति यद्रामानुजीये अविरक्ताज्ञत्वेन तस्य कर्मयोगो विशिष्यते इति यच्च शांकरव्याख्यानेषु अर्जुनोपालंभकरणं तदसत् ॥ यद्व्याख्यानं इन्द्रसूनुं ज्ञानिनं नरांशं अज्ञत्वाविरक्तत्वोक्तार्थविस्मरणादितोषजाताद्रक्षति तदेवाश्रयणीयं इति भाति ॥ किंच सर्वागमानां भगवदुत्कर्षे तात्पर्यं वक्तव्यं ॥ येन व्याख्यानेन भगवदुत्कर्षो विशेषेणाभिव्यज्यते तदेव प्रशस्यतरं ॥ श्रीमदाचार्यव्याख्याने तूक्तं विशेषद्वयमपि दृश्यते ॥ नहि कर्मयोगघटितयोरंशयोस्तारतम्यपरीक्षा पूर्वमेव कृता यया प्रश्नो विस्मरण-

मूलःसन् पौनरुक्त्यकलुषितस्स्यात् ॥ सर्वकर्मयोगे तावत् भगवत्पूजैव-प्रधानांश इति भगवता साधूक्तं "कर्मयोगो विशिष्यते" इति ॥

"योगसन्यस्तकर्माणं" इति पद्यं पुरस्कृत्य तत्र संन्यस्तशब्दो यत्याश्रमपरः इति कृत्वा यत्तु प्रश्नबीजनिरूपणं गीतातात्पर्ये कृतं व्याख्यान-एव प्रतिपादितं द्रष्टव्यम् ॥

*श्रीभगवानुवाच—*

**संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।**
**तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते॥२॥**

वि ॥ संन्यासयोगशब्दौ न सर्वकर्मत्यागतदनुष्ठानलक्षणयतिगृहिपरौ । तथाच तयोरन्यतरश्रेयःप्रश्नो न युक्तः । किंतु कामादिवर्जनकर्मानुष्ठानार्थकौ ।तयोश्चैकपुंयोग्यत्वान्निःश्रेयसकरत्वाच्चानुष्ठेयत्वादन्यतरश्रेष्ठत्वप्रश्नो व्यर्थएव । अथ स्वरूपज्ञानमात्रार्थं प्रश्नश्चेद्योगएव श्रेष्ठइति भावेन परिहारमाह । संन्यास इति ।संन्यासः कामादिवर्जनरूपः कर्मयोगो भगवदर्पणबुद्ध्या कर्मानुष्ठानरूपश्च ।उभौ समुच्चितौ सन्तौ निःश्रेयसकरौ ।तयोस्तु मध्ये कर्मसंन्यासात् कर्माणि संन्यासःकर्मसंन्यासः कर्मानुष्ठानविषये यः कामक्रोधद्वेषादिवर्जनरूपसंन्यासः तस्माद्भगवदर्पणबुद्ध्या कर्मानुष्ठानरूपो यः कर्मयोगः सतु विशिष्यते श्रेष्ठो भवति।"द्वन्द्वत्यागात्तु संन्यासान्मत्पूजैव गरीयसी" त्युक्तेः ॥

शं० ॥ स्वाभिप्रायमाचक्षाणो निर्णयाय श्रीभगवानुवाच । संन्यासः कर्मणां परित्यागः कर्मयोगश्च तेषामनुष्ठानं तावुभावपि निःश्रेयसकरौ निःश्रेयसं मोक्षं कुर्वाते । ज्ञानोत्पत्तिहेतुत्वेनोभौ यद्यपि निःश्रेयसकरौ तथापि तयोस्तु निःश्रेयसहेत्वोः कर्मसंन्यासात्केवलात् कर्मयोगो विशिष्यते इति कर्मयोगं स्तौति ॥

रा० ॥ संन्यासो ज्ञानयोगः कर्मयोगश्च ज्ञानयोगशक्तस्याप्युभौ निरपेक्षौ निःश्रेयसकरौ । तयोस्तु कर्मसंन्यासात् ज्ञानयोगात् कर्मयोगएव विशिष्यते ॥

विचारः

अत्र कर्मयोगसंन्यासयोरुभयोरपि निःश्रेयसकरत्वमुक्तं । इदं भिन्नपुरुषकर्तृकत्वेन वा एकेनैव पुरुषेण दशाभेदमनुसृत्य क्रमादनुष्ठेयत्वविवक्षया वा एकेनैव पुरुषेण समुच्चित्यानुष्ठानविवक्षया वा उपपद्यते । अविरक्तस्य कर्मयोगः विरक्तस्य संन्यासः इति शांकराः । दशाभेदेनोभयोरपि ज्ञानहेतुत्वविवक्षया सांगत्यमुपपादयन्ति । अत्र संन्यासशब्दः किं यत्याश्रमपरो वा कर्मत्यागपरो वा द्वेषादित्यागपरोवेति प्रथमं विचार्यं । यत्याश्रमपर इति शांकरा मन्यन्ते । यथोक्तं शङ्करानन्देन । ब्रह्मणि नितरां आसः संन्यासः बाह्यप्रवणताराहित्येन चित्तस्य ब्रह्मणि ब्रह्मात्मनावस्थानलक्षणो निर्विकल्पकसमाधिः । प्रत्यग्दृष्ट्याऽनात्मप्रत्ययनिरासः संन्यासः सविकल्पकसमाधिः । द्वावप्येतौ संन्यासौ प्रधानौ एतयोः श्रवणमननयोश्चाङ्गभूतस्तत्प्रतिकूलानां सर्वेषां च कर्मणां परित्यागलक्षणः संन्यासइत्येवं संन्यासशब्दार्थस्त्रेधा भिद्यते । अत्र प्रधानभूतौ संन्यासौ न विवक्षितौ किंत्वंगभूतएवसर्वकर्म-

संन्यासः श्रवणादिजन्यज्ञानद्वारा मोक्षहेतुः" इति ॥ एवमन्येऽपि ॥ अत्र चिन्त्यते ॥ यदि संन्यासपदमिह यत्याश्रमपरं तर्हि "कर्मसंन्यासात्कर्मयोगो विशिष्यते" इति कर्मयोगस्य संन्यासादुत्कर्षः कथं उपपद्यतइति ॥ स्वरूपतो हि यत्याश्रमस्योत्तमत्वं प्रमितं । तथाहि ॥

"तानि वा एतान्यवराणि तपांसि न्यासएवात्यरेचयत्" श्रुतिः ॥

"न्यासमेषां तपसामतिरिक्तमाहुः" इति शंकरानन्दोदाहृतं प्रमाणं ॥

"संन्यासस्तु तुरीयो यो निष्क्रियाख्यः सधर्मकः । न तस्मादुत्तमो धर्मो लोके कश्चन विद्यते । तद्भक्तोऽपि हि यद्गच्छेत्तद्गृहस्थो न धार्मिकः । मद्भक्तिश्च विरक्तिस्तदधिकारो निगद्यते । यदाधिकारो भवति ब्रह्मचार्यपि प्रव्रजेत्—" (नारदीये) ॥

"ब्रह्मचर्यादेव प्रव्रजेद्यदहरेव विरजेत्तदहरेव प्रव्रजेत्" (श्रुतिः) ॥

"संन्यासे तु तुरीये वै प्रीतिर्मम महीयसी । येषामत्राधिकारो न तेषां कर्मेति निश्चयः" (ब्राह्मे) ॥ एतैर्वचनैः संन्यासाश्रमस्योत्तमत्वं स्फुटं ॥ अतः कर्मयोगस्य यत्याश्रमादुत्कर्षो न संगच्छते ॥ एवमनुपपत्तिं दृष्ट्वा केचन शांकराः भगवदुक्तिं स्तुतित्वेनोपपन्नां वदन्ति (शंकर. उ. दीपिकाकार-शंकरानन्दाः) "यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितं" इति परमादरेण प्रश्ने कृतेऽपि अर्थवादमनुसृत्यावास्तव प्रमेयं किमिति भगवानुपदिदेशेति न ज्ञायते ॥ तस्मादयं पक्षो गौणः ॥ गौणत्वेनेम पक्षं विहायान्ये शांकराः वैशिष्ट्यमन्यथा निरूपयितुमुद्यताः ॥ अर्जुनस्याज्ञत्वादविरक्तत्वात्संन्यासेऽनधि-कृतत्वाच्च तस्य कर्मयोग एवविहितः इति केचित् ॥ अतएव तयोर्मध्ये त्वादृ-शस्य मुमुक्षोरविदुषः प्रथमं कर्मसंन्यासात्कर्मयोगएव प्रशस्तः" इति वेङ्कटनाथः ॥ "देशकालवयोवस्थाबुद्धिशक्त्यनुरूपतः । धर्मोपदेशो भैषज्यं

वक्तव्यं धर्मपारगैः" इति न्यायेनार्जुनाधिकारदशाविवक्षया कर्मयोगस्य वैशिष्ट्यमाह शंकरानन्दः ॥

गीतास्थकर्मसंन्यासपदं ज्ञानविरक्त्यादिरहितसंन्यासपरत्वेन केचिद्व्याचक्षते ॥ ज्ञानादिरहितस्य संन्यासस्य ज्ञानरहितात्कर्मयोगादवरत्वं विवक्षितमाहोस्वित् ज्ञानादिसहितात्कर्मयोगादवरत्वमिति न ज्ञायते ॥ ज्ञानरहितयोरुभयोर्मध्ये कर्मयोगस्याधिक्यं दुर्गमं भाति । एकस्य ज्ञानराहित्यं अन्यस्य ज्ञानसाहित्यं विवक्षितमित्याशयश्च निर्मूलः क्लिष्टश्च ॥

योगेन विना संन्यासो न संभवतीति योगस्य वैशिष्ट्यमाहाभिनवगुप्ताचार्यः ॥ अस्य भावो न ज्ञायते ॥ इदमुक्तं श्रीधरीये "कर्मयोगेन शुद्धचित्तस्य चात्मतत्वज्ञाने जाते सति तत्परिपाकार्थं ज्ञाननिष्ठाङ्गत्वेन संन्यासः पूर्वमुक्तः ॥ एवं सत्यङ्गप्रधानयोर्विकल्पायोगात्संन्यासः कर्मयोगश्चेत्येतावुभावपि भूमिकाभेदेन समुच्चितावेव निश्रेयसं साधयतः ॥ तथापि तयोर्मध्ये कर्मसंन्यासात्सकाशात्कर्मयोगो विशिष्टो भवति" इति ॥ अङ्गप्रधानभावापन्नयोः कर्मयोगसंन्यासयोरुभयोरपि निःश्रेयसकरत्वमत्रोपपादितं ॥ अङ्गाङ्गिनोर्मध्ये अङ्गस्य विशिष्टत्वोक्तौ युक्तिर्नोक्ता ॥

यमनियमादिदुर्घटसाधनघटितात्संन्यासात्तदघटितस्य कर्मयोगस्य सौकर्यविवक्षयाऽऽधिक्यं इति शङ्करभाष्येऽतीतश्लोक एव सूचितं तदपि न समीचीनं ॥

तस्मादिह संन्यासशब्दो नाश्रमपरः अपितु द्वेषादिवर्जनपर इत्येव समंजसं ॥ द्वेषादिवर्जनपूर्वकेश्वरार्पणबुद्ध्या कर्मानुष्ठानं कर्मयोगः ॥ अत्र द्वावप्यंशौ आवश्यकौ निःश्रेयसकरौ ॥ एतयोः परस्परतारतम्ये स्वरूपतो वेदनार्थं विचार्यमाणे सति द्वितीयो भागः श्रेयानिति तत्वं ॥ नात्र किंचिदप्यर्थवादः ॥ नाप्यज्ञत्वेनाविरक्तत्वेनाशुद्धचित्तत्वेन देहात्माविवेकित्वेनार्जुनो-

पालंभस्यावसरः ॥ "ज्ञेयस्सनित्यसंन्यासी"ति वक्ष्यमाणसंन्यासलक्षणं सर्वाश्रमसाधारणं चोपपद्यतइति श्रीमदाचार्यभाष्यमेव संगतं निर्दुष्टंच ॥ इममर्थं गीतायां द्वितीयार्धे "कर्मसंन्यासः" इति प्रयोगो बाधते इति न भ्रमितव्यं ॥ "कर्माणि संन्यासः कर्मसंन्यासः कर्मानुष्ठानविषये यः कामक्रोधद्वेषादिवर्जनरूपसंन्यासः" इति विवृत्याचार्यव्याख्यानमन्यथानुपपत्तेराश्रयणीयं ॥

## ज्ञेयस्स नित्यसंन्यासी यो न द्वेष्टि न कांक्षति
## निर्द्वन्द्वो हि महाबाहो सुखं बन्धात्प्रमुच्यते ॥३॥

वि ॥ संन्यासशब्दो न यत्याश्रमपरइति भावेन तदर्थमाह ॥ ज्ञेयइति ॥ यद्यपि यदृच्छालाभेत्यादिनोक्तं कामादित्यागरूपं संन्यासं 'संन्यासं कर्मणा'मित्यनूद्यार्जुनेन प्रश्नस्य कृतत्वात् अस्त्येव तस्य सन्यासशब्दार्थज्ञानं । अतोसौ तं प्रति न वाच्यः ॥ तथापि संन्यासस्योक्तं निःश्रेयसकरत्वमुपपादयितुं ज्ञातमपि तदर्थं स्मारयत्यनेनेत्यदोषः ॥ हे महाबाहो, यो द्वेषाकांक्षादिहीनः ॥ काम्यकर्मत्यागी चेत्युपलक्ष्यते ॥ स नित्यसंन्यासी ज्ञेयः स्मर्तव्यइत्यर्थः ॥ सएव सुखं यथा भवति तथा अनायासेन बंधात्प्रमुच्यते ॥ हि प्रसिद्धमिति युद्धकर्म त्वया न त्याज्यमिति ॥

शं ॥ कस्मादित्याह । ज्ञेयः ज्ञातव्यः स कर्मयोगी नित्यसंन्यासीति यो न द्वेष्टि किंचिन्नकांक्षति दुःखसुखे

तत्साधने च। एवंविधो ह्ययः कर्माणि वर्तमानोऽपि स नित्यसंन्यासीति ज्ञातव्यः इत्यर्थः। निर्द्वन्द्वः द्वन्द्ववर्जितः हि यस्मात् महाबाहो सुखं बन्धादनायासेन प्रमुच्यते ॥

रा० ॥ कुतइत्यत्राह। यः कर्मयोगी तदन्तर्गतात्मानुभवतृप्तस्तद्व्यतिरिक्तं किमपि न कांक्षति। ततएव किमपि न द्वेष्टि। ततएव द्वन्द्वसहश्च। स नित्यसंन्यासी। नित्यज्ञाननिष्ठइति ज्ञेयः। स हि सुकरकर्मयोगनिष्ठतया सुखं बन्धात्प्रमुच्यते ॥

विचारः

ज्ञेय इति ज्ञातार्थस्यैव स्मरणं विवक्षितं। संन्यासशब्देन द्वेषादिवर्जनं अभिप्रेत्य योगशब्देनेश्वरार्पणबुद्ध्या कर्मानुष्ठानं चाभिप्रयन् खलु "संन्यासं कर्मणां" इत्यर्जुनः पप्रच्छ। एवंसति "यो न द्वेष्टि न कांक्षति स संन्यासी" इत्यर्जुनं प्रति कथनं ज्ञातज्ञापकं भवेत्। अतोनेदमपूर्वोपदेशः किन्तु स्मारकमात्रं। स्मरणे तु सार्थक्यं अस्ति। योगसंन्यासयोरुभयोरपि निःश्रेयसकरत्वेऽभिहिते द्वेषादिवर्जनरूपस्य संन्यासस्य ईश्वरार्पणबुद्धिसहकृतात्कर्मानुष्ठानादवरत्वेनोक्तस्यापि कथं निःश्रेयसकरत्वं इति यतः शंका समाधेया। "योगसंन्यस्तकर्माणं" "योगमातिष्ठोत्तिष्ठे" ति वचनद्वयमादाय संन्यस्तशब्देन यत्याश्रमं योगशब्देन गृहित्वंच मत्वार्जुनः पप्रच्छेति पक्षे तु ज्ञेय इति प्रकृतश्लोकेन भगवान् संन्यासशब्दस्य स्वाभिमतार्थमुपदिशतीति गम्यते। अस्मिन्नर्थे ज्ञेयशब्दो ज्ञातव्यपरो न स्मर्तव्यपरो भवति। प्रथमार्धेन संन्यासशब्दार्थं स्मारयित्वाथवोपदिश्य "निर्द्वन्द्वोहि महाबाहो सुखंबन्धात्प्रमुच्यते" इत्यनेन विवक्षिताद्योगादवरत्वेपि द्वेषादिवर्जनस्य स्वतो माहात्म्यं उक्त्वा निःश्रेयसकरत्वं भगवान् समर्थयते।

(अन्ये तु प्रकृतश्लोकं पूर्वश्लोकोक्तेन “कर्मयोगो विशिष्यते” योजयन्ति ॥ कुतः कर्मयोगो विशिष्यते इत्याक्षेपे द्वन्द्वसहस्य संन्यासितुल्यत्वेन गृह्यपि संन्यासी ज्ञातव्यः इत्याशय वदन्तः श्लोकस्य कर्मयोगिस्तुतिपरतामाहुः ॥ अत्रेदं चिन्त्यं ॥ द्वेषादिहीनस्य गृहिणस्सन्यासितुल्यत्वेनोक्तया कथं कर्मयोगस्य वैशिष्ट्यं लभ्यते ॥ वैशिष्ट्यं प्रतिज्ञाय साम्योपपादने कथमेकवाक्यता लभ्यते ? ॥ किंच तयोस्तु कर्मसंन्यासादित्यत्र (परकीयरीत्या) अविरक्तानधिकृताज्ञसंन्यासो हि विवक्षितः ॥ प्रकृते नित्यसंन्यासीत्यत्रापि तादृशो हि विवक्षामर्हति यस्मात्सकाशाद्वैशिष्ट्यं गृहिणः उपपादनीयं ॥ द्वेषादिवर्जितसंन्यासिनं गृहीत्वा साम्योक्तिस्तु प्रायपाठादिविरुद्धा भाति ॥)

(निर्द्वन्द्वः सुखं बन्धात्प्रमुच्यते इत्यत्र मुच्यमानस्सांख्यो वा कर्मयोगी वा इति स्वव्यूहएव भेदो दृश्यते ॥ इदमत्र नीलकण्ठीये “निर्द्वन्द्वः । द्वन्द्वं सत्यानृतयोरात्मानात्मनोर्मिथुन परस्पराध्यासः । तद्रहितः सांख्यो रागाद्युदयहेतोरज्ञानस्यात्यन्तोच्छेदात् सुखं कर्मकरणायासं विनापि बन्धात्संसारात्केवलज्ञानेनैव मुच्यते न कर्माण्यपेक्षते ॥ यद्वा निर्द्वन्द्वो ‘द्वन्द्वं वै मिथुनं तस्माद्द्वन्द्वान्मिथुनं प्रजायते’ इति श्रुतेर्द्वन्द्वं स्त्रीपुंसयोर्मिथुनं । तद्रहितः स्त्र्यादित्यागी संन्यासी अनायासेन मुच्यते । (रागादिजयस्योभयत्र तुल्यत्वात् ॥ अत्र च कुटुंबभरणवैयग्र्याभावात्सुखं मुच्यत इत्यर्थः” इति ॥)

(एतेन सांख्यस्य यतेर्वा वैशिष्ट्यं उक्तं भवति न तु कर्मयोगिनः ॥ श्लोकावतारिकायां त्वाकांक्षानेनोक्ता ॥ “(ननु प्रत्यक्षः कर्मयोगिनां विक्षेपः सन्यासिनां तु स नास्तीति कथमुच्यते कर्मयोगो विशिष्यत इत्याशंक्याह” इति ॥ उपक्रमोपसंहारयोर्व्याहतिः स्फुटा । “यो न द्वेष्टि न काङ्क्षति” इति कर्मयोगिनि विवक्षिते सति निर्द्वन्द्व इत्यत्र तं परित्यज्य सांख्यस्य यतेर्वा

ग्रहणेऽनौचित्यं व्यक्तं ॥ शङ्करभाष्योत्कर्षदीपिकाकारोऽपीदं व्याख्यानं प्रकरण-विरुद्धत्वेन निराह ॥

पररीत्या कर्मयोगस्य सन्यासाद्वैशिष्ट्यं कुत्रोच्यते इति न स्फुटं ज्ञायते ॥ 'सुखं बन्धात्प्रमुच्यते' इत्येतत् संन्यासापेक्षयेति वेङ्कटनाथो व्याचष्टे । पूर्वार्धेन नित्यसंन्यासीति विरक्तसंन्यासिनं गृहीत्वा तत्तुल्यतामभिधायोत्तरार्धेऽनधिकृतसन्यासिनमादाय तस्मात्सकाशात् गृहिणो वैशिष्ट्यमुक्तं इत्यकुशलं भाति ॥ एतेन "परिग्रहत्यागशीतवाताद्युपद्रवभिक्षाटनादिदुःखराहित्यं यथा तथा दुःखराहित्येन नत्वपक्वचित्तो यतिरपि" इति शङ्करानन्देनाप्युक्तं निरस्तं । क्वचिद्ग्राहियत्योस्तौल्यं उच्यते क्वचित्तयोरुत्कर्षापकर्षावित्येकस्मिन्नेव प्रकरणे क्वचित्संन्यासशब्दस्याविरक्तयतिपरत्वं क्वचिद्विरक्तपरत्वं इत्यादिदोषगणाद्भीत इव मधुसूदनः श्लोकं सामान्यतः कर्मयोगस्तुतिपरतया व्याचष्टे ॥ द्वेष्टीति सकर्मकक्रियायाः कर्म निष्कामानुष्ठानं मन्यते ॥ कांक्षतीत्यस्य स्वर्गादिकं कर्मत्वेनाह ॥ तथाच भगवदर्पणबुद्ध्या क्रियमाणं कर्म निष्फलत्वशंकया यो न द्वेष्टि स्वर्गादिकं फलं न कांक्षति च सः कर्मणि प्रवृत्तोऽपि नित्यसन्यासी ज्ञातव्यः इत्यस्य व्याख्या ॥ एवं निर्द्वन्द्वइत्यपि निष्कामकर्मद्वेषराहित्यस्वर्गादिफलाकांक्षाशून्यत्वमेव विवक्षितं इति मन्यते ॥ बन्धादिति न संसारो विवक्षितः अपितु ज्ञानप्रतिबन्धिनी कर्मयोगनिवर्त्या चित्ताशुद्धिरुक्तेति चाह ॥ इदं व्याख्यानं निराह स्वयूथ्यः शङ्करभाष्योत्कर्षदीपिकाकारः ॥ न द्वेष्टि न कांक्षति निर्द्वन्द्वः इति पदानामेवं संकुचितार्थत्वे नियामकस्याभावेन मधुसूदनोक्तमुपेक्ष्यं भाति ॥

तस्मान्नाय गीताश्लोको यत्युत्कर्षपरः । नापि गृहिवैशिष्ट्य वा वक्तुं प्रवृत्तः ॥ किंतु भगवान् संन्यासशब्द स्वाशयेन व्याख्याय स्मारकत्वेन ज्ञातार्थमनूद्य वा द्वेषादिवर्जनस्य स्वरूपतो माहात्म्यमुक्त्वाऽतीतश्लोकप्रथमार्धोक्तनिःश्रेयसकरत्वं समर्थयामासेत्येव तत्वं ॥

गृह्यपि जनको महाज्ञान्यभूदिति श्रूयते । अतएव शान्तिपर्वणि(२१९) व्यासाज्ञया शुकस्तं शिश्राय मोक्षशास्त्रोपदेशार्थं स्वय योगशास्त्रं चाखिलं कापिलं चाधीत्यापि ॥

"उवाच गच्छेति तदा जनकं मिथिलेश्वरं ।
स ते वक्ष्यति मोक्षार्थं निखिल मिथिलेश्वरः" ॥

इति शुकं प्रति व्यासवचनं । अनन्तरं उपसन्नाय शुकायाह जनकः ।

"यश्च नेच्छति न द्वेष्टि ब्रह्म संपद्यते तु सः ।
यदा भावं न कुरुते सर्वभूतेषु पापकं ॥
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ।
संयोज्य मनसात्मानमीर्ष्यामुत्सृज्य मोहिनीं ॥
त्यक्त्वा कामं च मोहं च ततो ब्रह्मत्वमश्नुते ।
यदा श्राव्येषु दृश्ये च सर्वभूतेषु चाप्यय ॥
समो भवति निर्द्वन्द्वो ब्रह्म संपद्यते तदा ।
यदा स्तुतिं च निन्दां च समत्वेनैव पश्यति ॥
कांचनं चायसं चैव सुखं दुःखं तथैव च ॥
शीतमुष्णं तथैवार्थमनर्थं प्रियमप्रियं ।
जीवितं मरणं चैव ब्रह्म सपद्यते तदा" ॥ इति ॥

---

सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।
एकमप्यास्थितः सम्यगुभयोर्विन्दते फलं ॥ ४ ॥

वि० ॥ (ननु न तस्य तत्वग्रहणाय साक्षादिति पंचमस्कन्धस्थश्लोके विषयवैराग्याभावे ज्ञानानुत्पत्त्युक्त्या तत एव तदुत्पत्तिरिति भ्रमेन वैराग्यशब्दितकामादिसर्ववर्जनरूपसंन्यासो ज्ञानोत्पत्तौ आवश्यकत्वेनोक्तइति प्रतीयते । (कर्मयोगस्तु ज्ञानविरोधित्वेनोक्तोऽग्निमुग्धो धूमतान्तः स्वलोकं न प्रतिजानातीति अग्न्युपलक्षिते कर्मणि मुग्धः श्रेयस्करमेतदिति भ्रान्तः धूमतान्तो होमधूमेन ग्लानः स्वलोकं स्वीयमाश्रयं परमात्मानं न प्रतिजानातीत्येकादशस्कन्धे ॥) (तथाच कथं कर्मयोगात्संन्यासोऽवरइत्युच्यते इत्यतः संन्यास इव कर्मयोगोऽपि ज्ञानोत्पत्तावावश्यक एवेत्याह कृष्णः ॥

सांख्येति ॥ सांख्यं ज्ञानं योगो भगवदर्पणबुद्ध्या कर्मानुष्ठानं तावुभौ बालाः अविवेकिनः पृथक् साध्यसाधनभावहीनौ प्रवदन्ति न पण्डिताः ॥ (योगस्य ज्ञानहेतुत्वं कुत इत्यत उच्यते । एकमपीति ॥ एकमपि ज्ञानमार्गं कर्ममार्गं वा एकमपि सम्यगास्थितोऽनुतिष्ठन् उभयोर्ज्ञानकर्मणोरुभयोरपि फलं विन्दते इत्यर्थः (सूचनं ॥ अस्य पक्षान्तरव्याख्यानमुत्तरश्लोकविवृत्यन्ते द्रष्टव्यं) ॥

शं० ॥ संन्यासकर्मयोगयोर्भिन्नपुरुषानुष्ठेययोर्विरुद्धयोः फलेऽपि विरोधो युक्तो न तु उभयोर्निःश्रेयसकरत्वमेवेति प्राप्ते इदमुच्यते ॥ सांख्ययोगाविति । सांख्ययोगौ पृथक् विरुद्धभिन्नफलौ बालाः प्रवदन्ति । न पण्डिताः । पण्डितास्तु ज्ञानिन एकं फलं अविरुद्धं इच्छन्ति ॥ कथं । एकमपि सांख्ययोगयोः सम्यगास्थितः सम्यगनुष्ठितवानित्यर्थः । उभयोर्विन्दते फलं उभयोस्तदेव हि निःश्रेयसं फलमतो न फले विरोधोऽस्ति । ननु संन्यासयोगशब्देन प्रस्तुत्य सांख्ययोगयोः फलैकत्वं कथमिहाप्रकृतं ब्रवीति । नैषदोषः । यद्यप्यर्जुनेन संन्यासं कर्मयोगं च केवलमभिप्रेत्य प्रश्नः कृतो भगवांस्तु तदपरित्यागेनैव स्वाभिप्रेतं च विशेषं संयोज्य शब्दान्तरवाच्यतया प्रतिवचनं ददौ । सांख्ययोगाविति ॥ तावेव संन्यासकर्मयोगौ ज्ञानतदुपायसमबुद्धित्वादिसंयुक्तौ सांख्ययोगशब्दवाच्याविति भगवतो मतमतो नाप्रकृतप्रक्रियेति ॥

रा० ॥ ज्ञानयोगकर्मयोगयोरात्मप्राप्तिसाधनभावेऽन्योन्यनैरपेक्ष्यमाह । ज्ञानयोगकर्मयोगौ फलभेदात्पृथग्भूतौ ये प्रवदन्ति ते बालाः अनिष्पन्नज्ञानाः न पण्डिताः अकृत्स्नविदः । कर्मयोगो ज्ञानयोगमेव साधयति ॥ ज्ञानयोगस्त्वेक आत्मावलोकनं साधयतीति तयोः फलभेदेन पृथक्त्वं वदन्तो न पण्डिता इत्यर्थः । उभयोरात्माव-

लोकनैकफलयोरेकफलत्वेन एकमप्यास्थितस्तदेव फलं लभते ॥

विचारः

(अत्र सांख्ययोगशब्दौ न कापिलपातंजलदर्शनपरौ । तयोर्ब्रह्ममीमांसायां दूष्यत्वेन निराकृतत्वात् )। संन्यासयोगयोरुभयोर्निःश्रेयसकरत्वमुक्त्वा द्वेषादिराहित्यं संन्यासशब्दार्थ इत्यपि प्रसाध्य सत्कर्मानुष्ठानस्य निःश्रेयसकरत्वमद्योपपादयति सांख्ययोगाविति ॥ ज्ञानविरोधित्वेन श्रुतानि काम्यकर्मनिन्दकानि वाक्यानि शंकामुत्थापयन्ति ननु वैराग्यमेव हि ज्ञानसाधनं न कर्मेति ॥ समाधानं तु काम्यानां निन्द्यत्वमभ्युपगम्य सत्कर्मानुष्ठानवैराग्ययोरुभयोरपि ज्ञानांतरंगत्वमादाय फलैक्यविवक्षया सांख्ययोगौ न भिन्नावित्युक्तं )।

(निवृत्तकर्मलक्षणं यन्मन्वादिस्मृतं तद्विहाय कर्मयोगं ज्ञानाघटितं मन्वानाः शांकराः तं ज्ञानयोगद्वारैव सिद्धिप्रदमाहुः ॥ तथाहि ॥ कर्मयोगसांख्ययोगयोर्यथाधिकारं फलमाह मधुसूदनः ॥ अङ्गाङ्गिभावं श्रीधरः । (यदिह गीतायां सांख्ययोगयोः फलैक्यमुक्तं तदौपचारिकं गौणमिति मन्यते शंकरानन्दः ॥ "सांख्यकर्मयोगयोर्मोक्षंप्रति अन्तरंगबहिरंगभावेन कालतोऽप्यल्पत्वानल्पत्वाभ्यां च साध्यसाधनभावेनाप्युभयोस्तरतमभावे विद्यमानेऽ गजाश्वयोरिव तयोस्समत्वप्रतिपादनमनधिकारिणः कर्मैव कर्तव्यं न तु संन्यासइति सूचनार्थं" इत्यस्य वाक्यं॥ (कुतएवं क्लिष्टव्याख्या ॥ "कर्मयोगो विशिष्यते" इति प्रतिज्ञाय सांख्ययोगयोः तुल्यत्वं कण्ठरवेणोक्त्वापि वस्तुतस्तु कर्मयोगएवावरः इति भगवदाशयं वदन्तः कथं कुशलव्याख्यातारो भवेयुरिति न ज्ञायते ॥

(रामानुजभाष्ये तु कर्मयोगज्ञानयोगयोः परस्परनैरपेक्ष्यमुभयोः प्रत्येकमात्मावलोकनसाधनत्वंचादाय व्याख्यातं ॥

सन्यासाश्रमस्यैव ज्ञानमार्गत्वं गृहिणान्तु न ज्ञाने अधिकारः इत्यादयो वादाः निवृत्तकर्मस्वरूपानभिज्ञैरेवाश्रिता दृश्यन्ते ।

अतएव श्रीमदाचार्यो गीतातात्पर्ये प्रमाणं पठति । "निष्कामं ज्ञानपूर्वं च निवृत्तमिह चोच्यते । निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनं । तस्मात्कर्मेति तत्प्राहुर्यत्कृतं ब्रह्मदर्शिना । एतस्मान्न्यासिनां लोकं संयान्ति गृहिणोऽपिहि । ज्ञानमार्गः कर्मयोग इति भेदस्ततो न हि । तस्मादाश्रमभेदोऽयं कर्मसङ्कोचसंभवः ।" इति (व्यासस्मृतौ) ॥

एतच्छ्लोकस्य नीलकण्ठीयव्याख्याने द्वावंशावसङ्गतौ भातः । तथाहि प्रथमः । नन्वेकत्र पाताशङ्का (संन्यासे) एकत्र (योगे) कर्मश्रमः ॥ तदनयोः पथोः कतरः श्रेयान् इत्याशक्य द्वयोरपि फलतः साम्यमित्याह इति श्लोकनिवर्त्याशङ्काकथनरूपः । यदि अर्जुनः उभयोरपि तिरस्करणीयत्वं शङ्केत तर्हि तेन कतरः श्रेयानिति प्रश्नोऽनुपपन्नः । कर्मयोगो विशिष्यते इति प्रागेव समाहिततया अन्यतरश्रैष्ठ्यं न प्रश्नगोचरं भवेदिति च स्फुटं । तस्मात्कर्मयोगस्य यन्निःश्रेयसकरत्वं वर्णितं तत्रैव निरूपणमुखेन युक्तिमपेक्षते इत्येव व्याख्येयं भाति । द्वितीयोशस्तु "सांख्यं । समित्येकीभावे इति यास्कः । एकीभावेनात्मानन्यत्वेन ख्यायते प्रकाश्यते वस्तुस्वरूपमनयेति संख्या स्थूलसूक्ष्मकारणप्रपञ्चस्य निर्विकल्पे प्रत्यगात्मनि प्रविलापनेनोदिता चेतोवृत्तिस्तत्साधनभूतो यः सांख्यः सन्यासः । स च दारादिबुद्ध्यन्तानां पदार्थानामात्मन्येकीभावेन न्यसनं त्यागः प्रविलापनं । तथा योगोऽप्यग्निहोत्रसंध्योपासनादि निर्विकल्पसमाध्यन्तमनुष्ठान । तत्र मुख्यस्य योगस्य लक्षणं "योगश्चित्तवृत्तिनिरोधः" इति । वृत्तयश्च प्रमाणविपर्ययविकल्पनिद्रास्मृतयः इति पंच ॥ एतासां निरोधेऽपि निर्विकल्पः प्रत्यगात्मैवावशिष्यते । तावेतौ फलभूतौ साङ्ख्ययोगौ । तत्रान्त्ययोः साम्यं "ज्ञेयस्सनित्यसन्यासी" इत्य-

नेन सूचितं । "आद्ययोस्त्वैक्यमत्रोच्यते" इत्युक्तः । योगशब्दस्य पातंजलपरिभाषामाश्रित्य चित्तवृत्तिनिरोधप्रपंचनपूर्वमिहाशयनिरूपणमर्जुनप्रश्नाननुगुणत्वेनोपेक्ष्यं । कर्मयोगं पुरस्कृत्य हि प्रश्नइत्यविवादं ज्ञायते । अनुष्ठानं श्रेष्ठं वाथान्यदुचितमिति सन्देहे प्रक्रान्ते सति कर्म कर्तव्यं वा न वा पुरुषार्थसाधनं वा न वा तत् साधनं चेत् साक्षाद्वा परंपरयावेत्यादि प्रसङ्गप्राप्तं विचार विहाय सांख्यं निर्विकल्पं ब्रह्म योगो निर्विकल्पं ब्रह्मेत्यद्वैतप्रक्रियाप्रपंचनस्य का सङ्गतिः । सांख्ययोगशब्दाभ्यां संन्यासकर्मयोगौ न विवक्षितौ । किंतु वस्त्वन्तरे इति अत्र प्रकरणविरोधं पश्यन्निदं व्याख्यानमुत्कर्षदीपिकाकारोऽपि प्रत्याचष्टे इत्यास्तां विस्तरः ॥

**यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।**
**एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥५॥**

वि० ॥ नन्वेतावता द्वयं किंचित्फलं प्रति स्वतंत्रसाधनमित्युच्यते । योगस्य ज्ञानहेतुत्वं न प्राप्तमित्यतः तदभिप्रायं स्वयमेव व्यनक्ति यत्सांख्यैरिति । सांख्यैर्ज्ञानिभिर्यस्थानं भगवत्स्वरूपलक्षणं तद्योगैः ॥ अर्शआद्यच्प्रत्ययान्तावत्र सांख्ययोगशब्दौ । कर्मयोगवद्भिरपि ज्ञानद्वारा गम्यतइत्यर्थः । तथाच सांख्यं च योगं च एकं साध्यसाधनभाववत् यः पश्यति स पश्यति स एव ज्ञानी इत्यर्थः ॥ संन्यासयोगयोर्द्वयोरपि ज्ञानहेतुत्वान्नैकोऽपि

विरोधः ॥ अभिमुग्धइत्यादि तु काम्यकर्मविषयमिति भावः ॥

यद्वा संन्यासयोगशब्दयोः यतिगृहिपरत्वमुपेत्य तयोरधिकारिभेदादेकत्र संन्यासयोगयोः समावेशायोगश्चोदितोऽसौ संन्यासयोगशब्दयोस्तदर्थत्वानङ्गीकारेण पूर्वश्लोके परिहृतः ॥ अधुना संन्यासयोगयोरधिकारिभेदोऽपि न युज्यत इत्याह । सांख्येति ॥ बालाः अविवेकिनः सांख्ययोगौ ज्ञानकर्मयोगौ पृथक् भिन्नाधिकारिकौ नैकत्र समाविष्टौ । यत्याश्रमिणां सांख्यपदोक्तज्ञानाधिकार एव न कर्मणि । गृहिणांतु योगपदोक्तकर्माधिकार एव न ज्ञानइति प्रवदन्ति ॥ ज्ञानमार्गं सम्यगास्थितएव ज्ञानफलं प्राप्नोति । कर्ममार्गं सम्यगास्थितएव कर्मफलं विन्दते यतः अतो न पंडिताः बाला इव प्रवदन्तीत्यर्थः ॥ अत्र मार्गद्वयस्य सम्यक्त्वविशेषणात् कर्मणो ज्ञानसाहित्यं । तेन विना सम्यगनुष्ठानासिद्धेः ॥ कर्मणा विना संपूर्णानन्दहेतुत्वरूपसम्यक्त्वस्य ज्ञानेऽनुपपत्तेः ॥ तदर्थं तस्य कर्मसाहित्यमिति सूचितं ॥ ज्ञानैकगम्ययतिप्राप्यस्थानप्राप्तिसद्भावाच्च गृहिणां ज्ञानाधिकारोऽस्तीति स्पष्टं वदन्नुक्तमुपसंहरति ॥ यदित्यादिना । यतः सांख्यैर्ज्ञानिभिर्यतिभिः प्राप्यं स्थानं योगैर्योगवद्भिः गृहिभिर्गम्यते । तस्मात्सांख्यं योगं चैकं एकाधिकरणकं ॥ कर्मिण्यपि गृहिणि ज्ञानं ज्ञानिन्यपि कर्मेत्ये-

वमेकत्र तयोस्समावेशं यः पश्यति स पश्यति ज्ञानी-

श० ॥ एकस्यापि सम्यगनुष्ठानात्कथं उभयोः फलं विन्दतइति । उच्यते । यत्सांख्यैः ज्ञाननिष्ठैः संन्यासिभिः प्राप्यते स्थानं मोक्षाख्यं तद्योगैरपि ज्ञानप्राप्त्युपायत्वेन ईश्वरे समर्प्य कर्माण्यात्मनः फलमभिसन्धायानुतिष्ठन्ति ये ते योगाः योगिनः तैरपि परमार्थज्ञानसंन्यासप्राप्तिद्वारेण गम्यते इत्यभिप्रायः । अतः एकं सांख्यं च योगं च यः पश्यति फलैकत्वात् स पश्यति सम्यक् पश्यतीत्यर्थः ॥

रा ॥ एतदेव विवृणोति ॥ सांख्यैः ज्ञाननिष्ठैः यदात्मावलोकनरूपं फलं प्राप्यते । तदेव कर्मयोगनिष्ठैरपि प्राप्यते । एवमेकफलत्वेनैकं वैकल्पिकं सांख्यं योगं च यः पश्यति स एव पण्डित इत्यर्थः

विचारः

एकमप्यास्थितः उभयोः सांख्ययोगयोः फलं विन्दते इति योजनायामपि द्वयं किंचित्फलं प्रति स्वतन्त्रं साधनं इत्यर्थो लभ्यते । स्यादिदमुभयसाध्यं फलं । नैतावता सांख्ययोगयोरपृथक्त्वनिर्देशो युज्यते ॥ अतः केनाभिप्रायेणोभयोर्विन्दते फलं इत्युक्तमित्याकांक्षायां भगवानाह यत्सांख्यैरिति । योगस्य ज्ञानसाधनत्वात् योगिभिर्ज्ञानद्वारा मोक्षस्य लभ्यत्वेन सांख्ययोगयोस्साक्षाद्वा परंपरया वा एकफलसाधनत्वेनापृथक्त्वोक्तिरिति भावः ॥

सांख्यैरिति ज्ञानिन उच्यन्ते ॥ योगैरिति योगिनः ॥ इमौ शब्दौ अर्शआद्यजन्तौ ॥ तौ मत्वर्थीयाविति धर्मवाचकौ शब्दौ धर्मिबोधकौ

भवतः ॥ अन्यथा बहुवचनानौचित्यमपि द्रष्टव्यं ॥ स्थानं इति मोक्ष उच्यते । (तिष्ठत्यस्मिन्न च्यवते पुनः इति व्युत्पत्तिमाश्रित्य स्थानं मोक्षः इति केचिदाहुः॥ इदं नास्माकमनिष्टं ॥ कर्मणः फलसाधनत्वे प्रमेयदीपिकायां निरूपणं, "तरति शोकमात्मविदित्यादिना यज्ज्ञानफलं मोक्षाख्यं प्रमितं तत्तावद्योगिभिरपि प्राप्यत इत्युच्यते अपामसोममित्यादिना ॥ तत्र विचार्यं किं द्वयमपि स्वतंत्रं मुक्तिसाधनं उत समुच्चितं ॥ अथवैकं साक्षान्मोक्षसाधनं अपरं तत्साधनत्वेनेति ॥ न प्रथमद्वितीयौ ॥ नान्यः पन्था इत्यादिविरोधात् । तृतीयेऽपि चिन्त्यं ॥ कस्य साधनमिति । तत्र न तावज्ज्ञानं कर्मसाधनत्वेन मोक्षहेतुः । न किंचिदन्तराधायेत्यादिविरोधात् ॥ अतः परिशेषाद्योगिभिरपि ज्ञानद्वारा ज्ञानफलं प्राप्यत इति सिध्यति ॥ तथाच योगस्य ज्ञानसाधनत्वं सिद्धमित्यर्थः" इति ॥

अथवा योगं सम्यगास्थितः स्वस्य फलं विन्दते । सांख्यं सम्यगास्थितः स्वफलं विन्दते । योगस्य सम्यगनुष्ठानं ज्ञानसाहित्येनैव भवति । तथा सांख्यस्य कर्मसाहित्येन ॥ एवं सुमुच्चयेन मुक्तिफलं भवतीति भावः । ज्ञानिनां यतीनां वा न कर्म, कर्मिणां गृहिणां वा न ज्ञानं, इति भ्रमव्युदासाय यत्सांख्यैरिति कथितं ॥ ज्ञानमार्गः कर्ममार्गः इति मार्गद्वयमुपेत्य इतरेतर निषेधेन केचिद्व्याकुर्वते ॥ नैतद्युक्तं ॥ 'ज्ञानमार्गः कर्ममार्गइति भेदस्ततो न हि । तस्मादाश्रमभेदोऽयं कर्मसंकोचसंभवः" इति व्यासस्मृतेः ॥

(अत्र शांकराः योगस्य ज्ञानद्वारा मोक्षहेतुत्वमादाय प्रथमोपपादितं भावमेवावलंबन्ते ॥ यथा श्लोकभावमाह मधुसूदनः "अयं भावः । येषां संन्यासपूर्विका ज्ञाननिष्ठा दृश्यते तेषां तयैव लिंगेन प्राग्जन्मसु भगवदर्पितकर्मनिष्ठानुमीयते । कारणमन्तरेण कार्योत्पत्त्ययोगात् । तदुक्तं 'यान्यतोऽन्यानि जन्मानि तेषु नूनं कृतं भवेत् । सत्कृत्यं पुरुषेणेह नान्यथा ब्रह्मणि स्थितिः' इति । एवं येषां भगवदर्पितकर्मनिष्ठा दृश्यते तेषां तयैव लिङ्गेन भाविनी संन्या-

सपूर्वकज्ञाननिष्ठानुमीयते । सामग्र्याः कार्याव्यभिचारित्वात् ॥ तस्मादज्ञेन मुमुक्षुणान्तःकरणशुद्धये प्रथमं कर्मयोगोऽनुष्ठेयो न तु संन्यासः । स तु वैराग्यतीव्रतायां स्वयमेव भवतीति ।"

रामानुजाचार्यस्तु कर्मयोगज्ञानयोगयोः परस्परनैरपेक्ष्यमाश्रित्यैव व्याख्याति । नायं योगसांख्ययोरङ्गाङ्गिभावमनुजानाति । एकमप्यास्थितइति विकल्पानुज्ञया देशिकः आशयं वदति ॥ तथाहि "अंगांगिभावेतरेतरयोगरहितयोरुपाययोरेकफलत्वलक्षणं ह्यैक्यमनुष्ठाने विकल्पाय स्यात्" तथाच सूत्रं ॥ "विकल्पोऽविशिष्टफलत्वात्" इति ॥

यदुक्तमुपरिष्टात् सम्यगनुष्ठितो योगः ज्ञानसाहित्यमपेक्षते । सम्यक् ज्ञानं कर्मापेक्षते । अतः ज्ञानमार्गकर्ममार्गयोः परस्परापेक्षेति । तदरम्यमिति निराहोत्कर्षदीपिकाकारः । अरम्यत्वं दुर्गमं । उक्तस्य पक्षस्य व्याससमृतिप्रमितत्वाददूष्यत्वं स्फुटं ॥

प्राप्यते स्थानं इति प्राप्तिस्वरूपनिरूपणावसरे आह मधुसूदनः "प्राप्यते आवरणाभावमात्रेण लभ्यत इव । नित्यप्राप्तत्वात्" इति । "अज्ञानां ज्ञानदो विष्णुर्ज्ञानिनां मोक्षदश्च सः । आनन्ददश्च मुक्तानां स एवैको जनार्दन" इति भगवतएव भक्तैर्मोक्षलाभात् प्राप्यते इत्युक्तो लाभस्सुगमः अत्र गौणत्वाश्रयणं नावश्यकं भाति ॥

फलैक्यादिविवक्षया सांख्ययोगयोरेकत्वं तत्र तत्र भारते बहुस्थले प्रतिपादितं दृश्यते । "यदेव योगाः पश्यन्ति सांख्यैस्तदनुगम्यते । एकं सांख्यं च योगं च यः पश्यति स बुद्धिमान्" इति (शांति ३०६) ॥

विशेषतस्सांख्यशास्त्रं नित्यानित्यवस्तुविवेकं बोधयति । रागद्वेषादिवर्जनस्यातिशयं चाह ॥ तथाहि शान्ति (३०७) "पंचदोषान्प्रभो देहे मनीषिणः । मार्गज्ञाः कापिलास्सांख्याः शृणु तानरिसूदन । काम-

क्रोधौ भयं निद्रा पंचमः श्वास उच्यते । एते दोषाश्शरीरेषु दृश्यन्ते सर्व-
देहिनां ॥ छिन्दन्ति क्षमया क्रोधं कामं सङ्कल्पवर्जनात् । सत्वसंसेवनान्निद्रां
अप्रमादाद्भयं तथा । छिन्दंति पंचमं श्वासमल्पाहारतया नृप ॥ परमा सा गतिः
पार्थ निर्द्वन्द्वानां महात्मनां ॥ परं नारायणं देवं निर्द्वन्द्वं प्रकृतेः परं" इति ॥
अ० ३२० याज्ञवल्क्यजनकसंवादे ॥

"अन्यच्च मशकं विद्यादन्यच्चोदुंबरं तथा ।
न चोदुंबरसंयोगैर्मशकस्तत्र लिप्यते ॥

पुष्करं त्वन्यदेवात्र तथान्यदुदकं स्मृतं ।
न चोदकस्य स्पर्शेन लिप्यते तत्र पुष्करं ॥

एतेषां सहवासं च निवासं चैव नित्यशः ।
याथातथ्येन पश्यन्ति न नित्यं प्राकृता जनाः ।
सांख्यदर्शनमेतत्ते परिसंख्यानमुत्तमं" (अ० ३२१)

"नास्ति सांख्यसमं ज्ञानं नास्ति योगसमं बलं ।
तावुभावेकचर्यौ तावुभावनिधनौ स्मृतौ ।
पृथक् पृथक् प्रपश्यन्ति ये बुद्धिरहिता नराः ॥

वयं तु राजन्पश्याम एकमेव तु निश्चयात् ।
यदेव योगाः पश्यन्ति तत्सांख्यैरपि दृश्यते ।
एकं सांख्यं च योगं च यः पश्यति स बुद्धिमान् ॥" इति ॥

संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।
योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥६॥

वि० ॥ पूर्वं ज्ञेय इत्यत्र स्वाभिमतसंन्यासशब्दार्थं स्मारयित्वा तस्य योगादवरत्वे ज्ञानान्तरंगत्वरूपं बाधकं सांख्ययोगौ यत्सांख्येति श्लोकाभ्यां परिहृत्येदानीं तस्य योगादवरत्वे साधकमाह ॥ संन्यासस्त्विति ॥ अयोगतः भगवदर्पणबुद्ध्या कर्मानुष्ठानरूपयोगाभावे कामादिवर्जनरूपसंन्यासस्तु दुःखमाप्तुमेव ॥ परमपुमर्थाहेतुत्वात् स्वोचितकर्माननुष्ठानेन नरकप्राप्तेश्चेति भावः ॥ तात्कालिकापमानादि कृतदुःखाभावस्त्वल्पत्वान्न फलमिति भावः ॥ मुनिस्संन्यासी 'स हि लोके मुनिर्नाम यः कामक्रोधवर्जितः' इत्युक्तेः । योगयुक्तोऽचिरेण शीघ्रं ब्रह्माधिगच्छतीत्यर्थः ॥ एतेन योगाभावे पुमर्थहेतुत्वाभावः ॥ सति तु तस्मिन् तद्धेतुत्वं संन्यासस्येति योगस्यावरत्वे व्यतिरेकान्वयरूपं साधकमुक्तं भवति॥ यद्वा योगसंन्यासयोः समुच्चितयोरेव निःश्रेयसकरत्वमुभावित्यनेनोक्तं ॥ इदानीमसमुच्चये बाधकमाह संन्यासस्त्विति । कामादिवर्जनरूपसंन्यासस्तु, अयोगतः । भावप्रधानं । योगरूपत्वाभावे । केवलसंन्यासस्तु दुःखमाप्तुमेव ॥ विष्णवर्पितत्वादियोगरूपत्वं विना केवलकर्मत्यागो नरकफलएवेति भावः ॥ योगरूपत्वं विना संन्यासस्यानर्थहेतुत्वमुक्त्वा योग-

रूपसंन्यासस्य मुक्तिहेतुत्वमाह ॥ योगयुक्त इति ॥ मुनिः संन्यासी । संन्यासस्य योगावान्तरभेदत्वाद्योगरूपत्वोक्तिः॥ यं संन्यासमिति प्राहुः योगं तं विद्धि इति वक्ष्यमाणगीतोक्तिरप्येतदभिप्राया ॥ अतः संन्यासः कर्मयोगश्चेति भेदोक्तिः कुरुपाण्डववन्न विरुद्धेति ज्ञेयं ॥

शं० ॥ एवं तर्हि योगात् संन्यास एव विशिष्यते । कथं तर्हीदमुक्तं "तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते" इति । शृणु तत्र कारणं त्वया पृष्टं केवलं कर्मसंन्यासं कर्मयोगं चाभिप्रेत्य तयोरन्यतरः कः श्रेयान् इति ॥ तदनुरूपं प्रतिवचनं मयोक्तं "कर्मसंन्यासात्कर्मयोगो विशिष्यत" इति ज्ञानमनपेक्ष्य । ज्ञानसंव्यपेक्षस्तु संन्यासः सांख्यमिति मयाभिप्रेतः ॥ परमार्थयोगश्च स एव । यस्तु कर्मयोगो वैदिकः स च तादर्थ्याद्योगस्संन्यास इति चोपचर्यते । कथं तादर्थ्यमित्युच्यते । संन्यासस्तु पारमार्थिकः हे महाबाहो दुःखं आप्तुं प्राप्तुं अयोगतः योगेन विना ॥ योगयुक्तः। वैदिकेन कर्मयोगेन ईश्वरसमर्पितरूपेण फलनिरपेक्षेण युक्तः मननादीश्वररूपस्य मुनिः ॥ ब्रह्म । परमात्मज्ञानलक्षणत्वात्प्रकृतः संन्यासः ब्रह्मोच्यते ॥ "न्यास इति ब्रह्म। ब्रह्म हि परः" इति श्रुतेः॥ ब्रह्म परमार्थसंन्यासं परमार्थज्ञाननिष्ठा लक्षणं न चिरेण क्षिप्रमेव अधिगच्छति प्राप्नोति ॥ अतो मयोक्तं 'कर्मयोगो विशिष्यते' इति ॥

रा ॥ इयान्विशेष इत्याह ॥ संन्यासः ज्ञानयोगस्तु अयोगतः कर्मयोगादृते प्राप्तुमशक्यः । योगयुक्तः कर्मयोगयुक्तः स्वयमेव मुनिः आत्ममननशीलः सुखेन कर्मयोगं साधयित्वा न चिरेण अल्पेनैव कालेन ब्रह्माधिगच्छति आत्मानं प्राप्नोति । ज्ञानयोगयुक्तस्तु महता दुःखेन ज्ञानयोगं साधयति । दुःखसाध्यत्वादात्मानं चिरेण प्राप्नोतीत्यर्थः ॥

विचारः

"कर्मयोगो विशिष्यते" इति ईश्वरार्पणबुद्ध्या कर्मानुष्ठानस्य माहात्म्यं वर्ण्यते ह्यस्मिन्प्रकरणे । योगस्य संन्यासाद्वैशिष्ट्यमुक्तं । एतदसहमानाः बाधकं वदन्ति । कथंकारं यत्याश्रमो जघन्यो भूयादित्येकं ॥ ज्ञानविरोधित्वाद्योगस्य कथमुच्छ्रय उपपद्येतेत्यपरं । किंच कर्मयोगस्य वैशिष्ट्ये साधकंच वक्तव्यं इति । अत्र आद्यस्य बाधकस्य "ज्ञेयस्स नित्ये"त्युत्तरं । न वयमाश्रमोत्तमं उत्कृष्टत्वेन श्रुतिस्मृत्यभिमतं जघन्यतया निन्दितुमुद्यताः । प्रकृते संन्यासशब्दस्य यतिपरत्वाभावात् । अपितु द्वेषादिवर्जितएव संन्यासीह विवक्षित इति वदामः ॥

द्वितीयं बाधकं यद्योगस्य ज्ञानविरोधित्वं शंकितं तत् "सांख्ययोगा"विति श्लोकाभ्यां परिहृतं । साक्षात्परंपरया वा एकफलकत्वेनोभौ न भिन्नौ विरोधिनौ वा । अथवा ज्ञानमार्गकर्ममार्गयोर्न स्वरूपतः पृथक्त्वं विद्यते । ज्ञानकर्मणोरुभयोः परस्परसमवेतत्वेनैकस्मिन् मार्गेऽप्युभयोरपेक्षितत्वात् इति परिहाराशयः । एवं बाधकद्वये परिहृते तृतीयः पूर्वपक्षोऽवशिष्यते । किं कर्मयोगवैशिष्ट्ये साधकमस्तीति । तदिह संन्यासस्त्वित्यनेनोच्यते । विना योगं द्वेषादिवर्जनरूपस्य संन्यासस्य दुःख एव पर्यवसानात् । योगेन साह तु

तस्य महाफलत्वात् । व्यतिरेकान्वयाभ्यामेतादृशस्य संन्यासस्य योगाङ्गत्वं सिद्धं । अङ्गस्याप्राधान्यं अङ्गिनः प्राधान्यं तु प्रसिद्धं इति । अथवा "संन्यासः कर्मयोगश्च निःश्रेयसकरावुभा" वित्युक्तेस्तयोस्समुच्चयो विहितो ज्ञायते । असमुच्चये बाधकमिहोच्यते संन्यासस्त्विति ॥

शाङ्करास्तु प्रकृतं पद्य "कर्मयोगो विशिष्यते" "सुखं बंधात्प्रमुच्यते" इत्युक्तयोरुपपादकं मन्वाना आशयमन्यथा निरूपयन्ति । संन्यासं यत्याश्रमिकर्तृकं पारमार्थिकापारमार्थिकतया विभज्य द्वितीयं दुःखमात्रहेतुं मत्वा आद्यं कर्मयोगसाध्यं मन्वानाः परमार्थसंन्यासद्वारा कर्मयोगस्य महाफलहेतुत्वात्तस्याविरक्तसंन्यासाद्वैशिष्ट्यं वदन्ति । तद्रीत्यास्मिन्नध्याये द्वितीयश्लोको ज्ञानहीनस्संन्यासी दूषितः । तृतीये श्लोके कर्मयोगिनस्संन्यासितुल्यत्वमुक्तं । चतुर्थपञ्चमाभ्यां ज्ञानसहितसंन्यासी सांख्यः स एव योगी चेत्युक्तं । प्रकृते षष्टे श्लोके पारमार्थिकसंन्यासस्य योगसाध्यत्वं प्रसाध्यते । एतेन तद्व्यतिरेकस्य हठसंन्यासस्य जघन्यत्वमुपपादितं भवतीति तेषामाशयः ॥

सौकर्यशैघ्र्यादिगुणयुक्तत्वेन ज्ञानयोगनैरपेक्ष्येणाव्यवहिततया मोक्षफलं संपादयन्कर्मयोगो विशिष्यते इति रामानुजाशयः ।

योगयुक्तो मुनिर्ब्रह्मेति द्वितीयार्धे मुनिः पारमार्थिकसंन्यासी भूत्वा सत्यज्ञानानन्दात्मकं ब्रह्माप्नोति कर्मयोगीति मधुसूदनश्रीधरवेङ्कटनाथादयो व्याकुर्वते । शङ्करभाष्ये तु ब्रह्मशब्दस्य संन्यासपरत्वमुपेत्य ईश्वरमननशीलः कर्मयोगी पारमार्थिकसंन्यासमधिगच्छतीति व्याख्यातं । तथाच संन्यासद्वारैव कर्मयोगस्य साफल्यं ते सर्वेऽभिप्रयन्ति । इदं व्याख्यानं कर्मयोगस्याव्यवहितात्मप्राप्तिसाधनत्वं मन्यमानेन देशिकेन तिरस्कृतं ॥

"स हि लोके मुनिर्नाम यः कामक्रोधवर्जितः" इत्युक्तेः कामादिहीन एवात्र मुनिर्विवक्षितो भाति । स एव संन्यासीति विवक्षितश्च । न तु यतिः

यः पारमार्थिकसंन्यासीति पुनः पुनरुच्यते । ब्रह्मशब्देन पारमार्थिकसंन्यासग्रहणे क्लेशः स्फुटः ॥ तद्भियेव मधुसूदनादयो ब्रह्मशब्दं स्वार्थं व्याख्याय मुनिशब्देन पारमार्थिकसंन्यासिनं गृह्णन्ति । अत्र विना यतित्वं न कस्याप्युत्थितिरिति प्रमेयविशेषो दुर्गमः । प्रधानसंन्यासाङ्गत्वेन योगस्योपयुक्तत्वादप्रधानसंन्यासात्तस्य वरत्वं गम्यत इति व्याख्यानापेक्षया कर्मयोगस्य संन्यासापेक्षयाऽकुटिलमार्गेणैव वरत्वोपपादकं व्याख्यानं रम्यं भाति । तत्तु संन्यासशब्दस्य कामादिवर्जनपरत्वे संभवति ॥ एतादृशस्य संन्यासस्य योगाङ्गतया जघन्यत्वं स्फुटं ॥ विना योगं संन्यासो दुःखमावहति सह तु योगेन महाफलोऽसाविति योगस्याङ्गित्वं कामादिवर्जनस्याङ्गत्वं च सेत्स्यति । कामादिवर्जनाद्यसंन्यासानन्तरमेव हि विष्णवर्पणबुद्ध्या कर्मानुष्ठानरूपो योगः संपद्यते इति योगस्यैव प्राधान्यं इति स्थितं ॥

"न चिरेणाधिगच्छती"त्यत्र नाचिरेणेति नसमासः ॥ अन्यथा चिरेणापि ब्रह्म नाधिगच्छतीत्यर्थः स्यात् (दे) ॥

गीताश्लोके प्रथमार्धे 'संन्यासः' 'दुःखं' 'अयोगतः' इति पदानामर्थो विचार्यः । विना योगं पारमार्थिकस्य संन्यासस्याशक्यत्वाभिप्रायेण शङ्करभाष्यं प्रवृत्तं । संन्यासःपारमार्थिकः दुःखं दुर्घटं अयोगतः वैदिककर्मयोगाभावे । दुःखमिति क्रियाविशेषणं । "शक्यमंजलिभिःपातुं वाताः" इति रामायणे (किष्किंधा 28 8) शक्यमिति नपुंसकप्रयोगवत् दुःखमिति प्रयोगः इति तदाशयः ॥

दुःखमिति कर्मपरतामादाय संन्यासशब्दं हटसंन्यासपरं मत्वोपपादयति मधुसूदनः ॥ "अयोगतः योगमन्तःकरणशोधकं शास्त्रीयं कर्मान्तरेण हटादेव यः कृतः संन्यासः स तु दुःखमाप्तुमेव भवति ॥ अशुद्धान्तःकरणत्वेन तत्फलस्य ज्ञाननिष्ठाया असंभवात् शोधके च कर्मण्यनधि-

कारात् कर्मब्रह्मोभयभ्रष्टत्वेन परमसंकटापत्तेः” इति ।तथाच संन्यासपदेन पारमार्थिकसंन्यासं गृह्णाति गुरुः शङ्कराचार्यः ॥ अनुगस्तु मधुसूदनः हटसंन्यासमादत्ते ॥

अत्र संन्यासशब्देन यतित्वग्रहणे बाधकमुक्तमेव । हटसंन्यासस्याविरक्तकर्तृकस्याप्रस्तुतत्वात् ।अधिकारवैधुर्येणैव स्वतो हीनत्वात् तस्य निःश्रेयसकरत्वायोगाच्च तत्परतया व्याख्यानमरम्यं भाति ॥ तस्माद्द्वेषादिवर्जनपरएव संन्यासशब्दो व्याख्येयः ॥

अयोगतः ईश्वरार्पणबुद्ध्या कर्माननुष्ठाने सति कामादिवर्जितोऽपि मुनिः दुःखं श्रमं अल्पफलं वा प्राप्नोति । महायाससाध्यकामादिजयस्य मोक्षएवोचितं फलं भवेत् ।योगतिरस्कारेण मोक्षफलमलब्ध्वा केवलं द्वन्द्वसहत्वेन मानापमानादिदुःखशून्यत्वरूपमल्पफलं पद्मरागमणिं दत्वा तण्डुलमुष्टिं याचमानइव लभते ।संभाविते महति फले अल्पफललाभो दुःखायैव । कामजयादिदुःखं चावशिष्टं ॥ 'विना मोक्षफलं यत्तु न तत्फलमुदीर्यते' इति पाद्मे ॥

व्याख्यानान्तरं गीतातात्पर्यसूचितमप्यनुसन्धेयं ॥तथाहि ॥अयोगतः योगरूपत्वं विना । भावप्रधानो निर्देशः॥ संन्यासः नरकफलएव ॥ "मोक्षोपायो यो योग इति तद्रूपो न्यासएवतु ॥ विष्ण्वर्पिततया भद्रो नान्यो न्यासः कथंचन" इत्याग्नेयोक्तेः ॥ "यं संन्यासमिति प्राहुः योगं तं विद्धि पांडवे"ति भगवदुक्तिश्च न्यासस्य योगरूपतामेवाभिप्रैति ॥ न्यासस्य योगरूपत्वेऽभिप्रेते कथं संन्यासः कर्मयोगश्चेति पृथगुक्तिरिति शंका तु कुरुपाण्डवन्यायेन समाधेया भवति ॥

योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ७ ॥

वि ॥ योगयुक्तसंन्यासस्य महाफलहेतुत्वं प्रपञ्चयति ॥ योगेति प्रपञ्चनं च यो न द्वेष्टीत्यत्रोक्तद्वेषादिवर्जनरूपसंन्यासस्य पूर्वार्धे कारणोपन्यासेन, ब्रह्माधिगच्छतीति प्रागुक्तमुक्तिफलं प्रत्युत्तरार्धे

ध्येयं ॥ योगयुक्तः कर्मयोगयुक्तः विशुद्धात्मा विशुद्धस्वभावः अतएव विजितमनस्को जितेन्द्रियः सर्वभूतात्मा सर्वभूतानामादानादिकर्ता स्वामीति यावत् ॥ सर्वभूतात्मभूतः सर्वप्राणिनां स्वामिभूतः स एव स्वस्यात्मा आदानादिकर्ता स्वामी यस्य स सर्वभूतात्मभूतात्मा ॥ ज्ञानोपलक्षणमेतत् ॥ सर्वभूतात्मभूतः आत्मेति ज्ञानीत्यर्थः ॥ कुर्वन्नपि न लिप्यते मुक्तो भवतीत्यर्थः ॥ जितेन्द्रियत्वादिद्वेषादिवर्जनकारणं सर्वस्वामी मम स्वामीति ज्ञानं ब्रह्माधिगतावान्तरफलं इत्युक्तं भवति ॥

यद्वा योगयुक्तइत्यत्र भगवदर्पणबुद्ध्या कर्मानुष्ठानरूपो योगउक्तः ॥ सर्वेत्यादिना तु सर्वभूतात्मनि हरौ भूतमनाः स्थितमना इत्यर्थः ॥

शं ॥ योगेति । यदा पुनरयं सम्यग्दर्शनप्राप्त्युपायत्वेन योगेन युक्तो विशुद्धात्मा विशुद्धसत्वो विजितात्मा विजित-

देहो जितेन्द्रियश्च सर्वभूतात्मभूतात्मा सर्वेषां ब्रह्मादीनां स्तंबपर्यन्तानां भूतानामात्मभूतः आत्मा प्रत्यक्चेतनो यस्य स सर्वभूतात्मभूतात्मा सम्यग्दर्शीत्यर्थः। स तत्रैवं वर्तमानो लोकसंग्रहाय कर्म कुर्वन्नपि न लिप्यते न कर्मभिर्बध्यते इत्यर्थः ॥

रा ॥ कर्मयोगयुक्तस्तु शास्त्रीये परमपुरुषाराधनरूपे विशुद्धे कर्मणि वर्तमानः तेन विशुद्धमनाः विजितात्मा स्वाभ्यस्ते कर्मणि व्यापृतमनस्त्वेन सुखेन विजितमनाः ततएव जितेन्द्रियः कर्तुरात्मनो याथात्म्यानुसंधाननिष्ठतया सर्वभूतात्मभूतात्मा सर्वेषां देवादिभूतानां आत्मभूतआत्मा यस्यासौ सर्वभूतात्मभूतात्मा आत्मयाथात्म्यमनुसन्दधानस्य हि देवादीनां स्वस्य चैकाकार आत्मा देवादिभेदानां प्रकृतिपरिणामविशेषरूपतयात्माकारत्वासंभवात् । प्रकृतिवियुक्तस्सर्वत्र देवादिदेहेषु ज्ञानैकाकारतया समानाकार इति निर्दोषं हि समं ब्रह्म इत्यनन्तरमेव वक्ष्यते ॥ स एवं भूतः कर्म कुर्वन्नपि अनात्मन्यात्माभिमानेन न लिप्यते न संबध्यते । अतोऽचिरेणात्मानं प्राप्नोतीत्यर्थः ॥

विचारः

(विशुद्धात्मा विजितात्मा जितेन्द्रियः इति पदैः यो न कांक्षति इत्युक्तरागद्वेषवैधुर्यस्य कारणान्युक्तानि )। स हि रागद्वेषहीनो यः शुद्धस्वभावत्वे सति निर्मलान्तःकरणत्वे सति वशीकृतबाह्येन्द्रियः )। एतेन

जितेन्द्रियत्वादिसाधनैरेव द्वेषादिवर्जनरूपसंन्यासो लभ्यते इत्युक्तं भवति । एवं लब्धे कर्मयोगांशभूते संन्यासे मुमुक्षुः कर्मयोगयुक्तस्सन् सर्वेशं स्वेशं जानाति । तस्य पापलेपो न विद्यते । अतः कर्मयोगेन पापलेपाभावरूपमवान्तरं फलं भगवद्दासत्वज्ञानं च प्राप्नोति । एतद्द्वारा ब्रह्माधिगच्छतीत्यव्यवहितातीतश्लोकान्तिमभागश्च प्रपंचितो वेदितव्यः ॥

योगयुक्तः इत्यत्र योगशब्देन कर्मयोगो गृह्यते । अथवा कर्मयोगान्तर्गतांशद्वये ईश्वरार्पणबुद्ध्या कर्मानुष्ठानभागस्य ग्रहणं । अस्मिन्द्वितीयोक्ते पक्षे विशुद्धात्मा विजितात्मा जितेन्द्रियः इत्येतैरन्यस्य द्वेषादिवर्जनरूपसंन्यासांशस्य संग्रहः । समुच्चयेनायं कर्मयोगयुक्तो भवतीति यावत् ॥

प्रायस्सर्वे व्याख्यातारोऽत्र योगयुक्तः इति कर्मयोगिनं गृह्णन्ति । नीलकण्ठस्त्वन्यथा व्याचष्टे । यथोक्तं तेन "योगेन निर्विकल्पसमाधिना युक्तो योगयुक्तः" इति । अत्रेदं चिन्त्यते । निर्विकल्पसमाधेर्ज्ञानयोगस्य वात्र का संगतिरिति । प्रकरणस्य कर्मयोगपरत्वात् । "कर्मयोगो विशिष्यते" इत्युपक्रम्यातीतैः श्लोकैस्तन्माहात्म्यस्य प्रतिपादितत्वात् । अत एव नीलकंठः शङ्करभाष्योत्कर्षदीपिकायां प्रत्याख्यातः । "योगेन निर्विकल्पसमाधिना युक्त-इत्याद्युपेक्ष्य ॥ प्रकरणविरोधस्योक्तत्वात्" इति । एतेन नीलकण्ठं पाक्षिकतयानुसरन् शङ्करानन्दोऽपि प्रत्युक्तः ॥

कुर्वन्नपि न लिप्यते इति । यद्यपि "कर्मणा बध्यते जंतु"रिति बन्धकत्वं कर्मणः प्रसिद्धं । तथापि कुर्वन्नपि यः कर्मयोगी भगवद्भक्तः स न लिप्यते इत्यर्थः । अथवा कृतस्य कर्मणः कथंचिद्वैधत्वेऽपि ज्ञानित्वेन सर्वभूतात्मभूतात्मनो न लेपः । यद्वा अकुर्वन्निति पदच्छेदः । ज्ञानिनं कर्मलेपोऽपि न बाधते इति यावत् । द्वितीयार्धे विवक्षितं कर्मकरणं लोकसंग्रहार्थमेव यज्ज्ञानिभिः क्रियते तदिति केचिच्छाङ्कराः । इदं तिरस्करोति

शाङ्करा... शरीरयात्रार्थं यत्क्रियते तस्यैव ग्रहणं तदनुमतं ॥ उभावपि स्थूलदृश्यानौ भातः ॥ यतः कर्मयोगलब्धज्ञानवान् अपरोक्षात्पूर्वं अपरोक्षाय, तदनन्तरं मोक्षे आनन्दवृद्ध्यर्थं कर्मावश्यं करोति

"सर्वभूतात्मभूतात्मे" त्यत्रास्ति विप्रतिपत्तिः ॥ शाङ्करास्तावत् ज्ञानी स्वप्रत्यगात्मानं सर्वप्राणिनामात्मभूतं मत्वा जीवब्रह्मैक्यमनुसंधत्ते इति भावमाहुः ॥ रामानुजाचार्यस्तु ज्ञानी स्वात्मानं अन्यसर्वात्मभिः स्वरूपतस्तुल्याकारं जानातीत्यभिप्रैति ॥ अत्र तद्भाष्यं "आत्मयाथात्म्यमनुसदधानस्य हि देवादीनां स्वस्य चैकाकार आत्मा ॥ देवादिभेदानां प्रकृतिपरिणामविशेषरूपतयात्माकारत्वासंभवात् ॥ प्रकृतिवियुक्तः सर्वत्र देवादिदेहेषु ज्ञानैकाकारतया समानाकारइति । निर्दोषं हि समं ब्रह्मइत्यनन्तरमेव वक्ष्यते" इति ॥ अत्र ...

गतानां विष्ण ... ये न कोऽपि दोषः ॥ यदुक्तं देवादिभेदानां प्रकृतिपरिणामविशेषमात्ररूपत्वं त

(ऐक्यपक्षं साम्यपक्षं च तिरस्कृत्य श्रीमध्वो यथावद्व्याचष्टे ॥ सर्वभूतात्मभूतात्मा । सर्वप्राणिनां स्वामी स्वस्याप्यादानादिकर्तृतया स्वामीति ज्ञानी म... (अथवा सर्वभूतात्मनि हरौ भूतमनाः स्थितमनाः इति तस्य व्याख्यानाशयः (पश्यत भाष्यं तात्पर्यंच ॥) "आदानात्सर्वभूतानां विष्णुरात्मा

सर्वभूतात्मभूतात्मा तत्र भूतमनाः　　...त्पर्योदाहृतं)

भारते ॥ "यच्चाप्नोति य　　... । यच्चास्य संततो भावस्तेनात्मेति सतां मतः" इति च

(शांकरेषु मधुसूदनस्तु ब्रह्मणो जगदुपादानत्वलिंगेन ज्ञानी सर्वैक्यं जानातीति व्याचष्टे ॥ सर्वशब्देन जडप्रपंचं प्रथमात्मशब्देन चेतनजा... गृहीत्वा सर्वभूतआत्मभूतश्चात्मा स्वरूपं यस्येति विग्रहं आह ॥ (अन्ये मधुसूदनव्याख्यानमतिमन्दं प्रामादिकं मन्यन्ते ।

तथाहि वेङ्कटनाथः "यत्त्वत्र मधुसूदनसरस्वतीभिरुक्तं 'सर्वभूतानामात्मभूत-आत्मा यस्येति भाष्यकारीयव्याख्याने सर्वभूतात्मेत्येतावतैवार्थलाभात् भूतात्मे-त्यधिकं। अतः सर्वात्मपदाभ्यां जडाजडे विवक्षित्वा सर्वभूतआत्मश्चात्मा स्वरूपं यस्येति व्याख्यानं समंजसं। चेतनाचेतनात्मकं सर्वमात्ममात्रं पश्यतीत्यर्थः' इति। तदसत्। सर्वभूतात्मभूतइत्येतावतैवार्थलाभेन भवद्व्या-ख्यानेऽपि द्वितीयात्मपदवैयर्थ्यात्। चेतनाचेतनात्मकं सर्वमात्ममात्रं पश्यतीत्यर्थलाभायात्मपदं सार्थकमिति चेत् सर्वभूतात्मभावापन्नस्वात्मदर्शित्व-रूपार्थलाभाय भूतात्मपदमपि सार्थकमिति समानं। वस्तुतस्तु भवद्व्याख्यान एवासामंजस्यं। सर्वपदेनैव चेतनाचेतनलाभेन प्रथमात्मपदवैयर्थ्यात्। सर्वात्मेति द्वन्द्वान्तश्रुतद्वितीयभूतपदेनैव सर्वभूत आत्मभूत इत्यर्थलाभेन प्रथमभूतपदवैयर्थ्याच्चेति न किंचिदेतत्" इति। इदं मधुसूदनविषयकप्रत्या-ख्यानं निर्दुष्टं भाति। परन्तु शङ्करभाष्यगतं विग्रहप्रदर्शनं च नानुपपन्नं दृश्यते। आत्मशब्दार्थस्तदुक्तो न साधुः। आत्मशब्देनेहादानादिकर्ता स्वामी बोध्यते इत्युपपादितत्वात्। तस्मादात्मशब्दो न प्रत्यगात्मपरः। तमेवालंब्य शङ्कररामानुजावैक्यं साम्यं च क्रमादुपपादयतः। ऐक्यस्य साम्यस्य चाप्रामा-णिकत्वेन तयोर्व्याख्यानमसत् इति ज्ञेयं॥

प्रथमार्धे विशुद्धात्मेति पदं नीलकण्ठीये व्याख्यातं। वृत्तिसारूप्यदो-षेण हीनः आत्मा प्रत्यक्चेतनो यस्य। निर्विकल्पावस्थायां केवलचेतनोऽस्ति नान्यदेत्युक्तं 'तदा द्रष्टुः स्वरूपेऽवस्थानं वृत्तिसारूप्यमितरत्र' इति। तदा वृत्त्यभावे इतरत्र वृत्तिकाले इति सौत्रपदद्वयार्थः।।' इति। प्रकरणासंबद्ध-मिदं दुर्गमं च। निर्विकल्पसमाधेरत्र सङ्गत्यभावात्।

इदमत्र मधुसूदनीयतात्पर्यं। विशुद्धात्मेत्यनेन निर्मलान्तःकरण उच्यते। विजितात्मेति वशीकृतदेहः जितेन्द्रियः इति वशीकृतसर्वबाह्येन्द्रियः। तथाच पदत्रयेण मनःकायवाङ्निरोधरूपत्रिदण्डित्वं कथितं। यथोक्तं

मानवे "वाग्दण्डोऽथ मनो दण्डः कायदण्डस्तथैवच । यस्यैते नियता दण्डास्स त्रिदण्डीति कथ्यते" इति ॥

विशुद्धात्मा विजितात्मेत्यत्रात्मशब्दौ मनः पराविति देशिकः। "प्रधानस्य मनोनिग्रहस्य वक्तुमुचितत्वात् विजितदेहइति परं व्याख्यानं मन्दं" इति चाह ॥ विशुद्धात्मा विशुद्धस्वभावः अतएव विजितात्मा विजितमनस्कः इति विवृत्याचार्यः। स्वभावस्य शुद्धत्वे खलु मनोजयादिकं संभाव्यते अन्यथा नेति स्वभावशुद्धिः प्रथममभिहिता ॥

अयमत्र संग्रहार्थः ॥ विशुद्धस्वभावो ह्यान्तरबाह्येन्द्रियाणि जित्वा रागद्वेषादिकं वर्जयित्वास्मिन्प्रकरणे विवक्षितं संन्यासं लभते ॥ अनेन योगं ईश्वरार्पणबुद्ध्या कर्मानुष्ठानरूपं संयोज्य योगयुक्तो भवति ॥ अंशद्वयमाहिम्नायं कर्मयोगी आदानादिकर्तारं सर्वस्वामिनं हरिं स्वस्वामित्वेन गृहीत्वा तस्मिन् स्थितमनास्सन् कर्मणि क्रियमाणेऽपि बन्धकत्वादिलेपैरकलुषितोऽपरोक्षज्ञानाख्यं फलं लभते यत् भगवत्प्रसादद्वारा ब्रह्माधिगतिं साधयति इति ॥ अथवा योगयुक्तः कुर्वन्नपि न लिप्यते इति प्रधानयोजना ॥ योगयुक्तः कर्मयोगी तस्य लक्षणं विशुद्धात्मा जितेन्द्रियः सर्वभूतात्मभूतात्मेति चतुर्भिरुच्यते इति ॥

नैव किंचित्करोमीति युक्तो मन्येत तत्ववित्।
पश्यञ्छृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपञ्श्वसन् ॥ ८ ॥

प्रलपन्विसृजन्गृह्णन् उन्मिषन्निमिषन्नपि।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्तइति धारयन् ॥९॥

वि ॥ ज्ञेयइत्यादिना विशुद्धात्मेत्यादिना च स्पष्टीकृतमपि संन्यासं संकल्पत्यागोक्त्या पुनः स्पष्टयति ॥ नैवेत्यादि श्लोकद्वयेन ॥ युक्तः कर्मयोगानुष्ठाता तत्ववित् तत्वज्ञानी दर्शनश्रवणस्पर्शनादिज्ञानेन्द्रियकर्मेन्द्रियव्यापारं कुर्वन्नपि इन्द्रियाणीन्द्रियार्थेषु हरीच्छया वर्तन्ते इति धारयन् मनसावमृशन् स्वस्य स्वातंत्र्याभावात् नैव किंचित्करोमीति मन्येतेत्यर्थः ॥ संकल्पत्यागोऽपि संन्यासशब्दार्थ इति भावः। संन्यासो योगरूपस्सन्परमपुमर्थहेतुरित्युक्तं ॥ कथं तस्य योगरूपतेत्यतोवाह नैवेति ॥ सर्वव्यापारं कुर्वन्नपि इन्द्रियाणि ईशप्रेरितानीन्द्रियार्थेषु वर्तन्ते सएव स्वतंत्रः नैव किंचिदहं करोमीत्यनुसंधानमेव द्वेषादिवर्जनरूपसंन्यासस्य योगरूपत्वं नामेति श्लोकद्वयतात्पर्यार्थः ॥

शं ॥ न चासौ परमार्थतः करोतीत्यतः नैव किंचित्करोमीति युक्तः समाहितस्सन् मन्येत चिन्तयेत्। तत्ववित्

आत्मनो याथात्म्यं तत्वं वेत्तीति तत्ववित् परमार्थदर्शी इत्यर्थः ॥ कदा कथं वा तत्वमवधारयन् मन्येत इति । उच्यते । पश्यन्निति । मन्येत इति पूर्वेण संबंधः ॥ तस्यैवं तत्वविदः सर्वकार्यकरणचेष्टासु कर्म स्वकर्मैव पश्यतः सम्यग्दर्शिनः सर्वकर्मसंन्यासएवाधिकारः । कर्मणः अभावदर्शनात् । न हि मृगतृष्णिकायां उदकबुद्ध्या पानाय प्रवृत्तः उदकाभावज्ञानेऽपि तत्रैव पानप्रयोजनाय प्रवर्तते ॥

रा॥ यतस्सौकर्याच्छैघ्र्याच्च कर्मयोगएव श्रेयान् अतस्तदपेक्षितं शृणु । एवमात्मतत्ववित् श्रोत्रादीनि ज्ञानेन्द्रियाणि वागादीनि च कर्मेन्द्रियाणि प्राणाश्च स्वविषयेषु वर्तन्तइति धारयन् अनुसंदधानो नाहं किंचित्करोमीति मन्येत ॥ ज्ञानैकस्वभावस्य मम कर्ममूलेन्द्रियप्राणसंबंधकृतमीदृशं कर्तृत्वं न स्वरूपप्रयुक्तमिति मन्येतेत्यर्थः ॥

विचारः

(संन्यासो नामास्मिन्प्रकरणे न यतित्वं)। किन्तु द्वेषादिवर्जनं संन्यास इति ज्ञेय इत्यत्रैवोक्तं )। एतादृशस्य संन्यासस्य योगवियुक्तत्वेऽनर्थहेतुत्वमुक्त्वा योगसहायेन तस्यैव पुमर्थसाधनत्वं चोक्तं )। अथवा संन्यासस्य कर्मयोगान्तर्गतांशतयानुष्ठाने सति योगरूपतालाभेन तस्य महाफलत्वमुक्तं )। इदानीं सङ्कल्पत्यागोऽपि संन्यास इति निरूपणेनोक्तस्यैव संन्यासस्य प्रपंचनं क्रियते )। सङ्कल्पत्यागेच सति संन्यासस्य योगरूपत्वं लभ्यते इति भावः ॥

कुर्वन्नपि न लिप्यते इत्युक्तं । अत्र कथं लेपाभाव इत्याकाङ्क्षा समाधेया । सङ्कल्पत्यागे सति ईश्वरस्वातन्त्र्यस्वास्वातन्त्र्यानुसंधानपूर्वकं कर्माणि कृते सति लेपो न संभवतीति च श्लोकद्वयाशयः ॥

"कुर्व"न्नित्यनेन यत्करणं विवक्षितं तस्य प्रपंचनं "पश्य"न्नित्यारभ्य "निमिषन्नपी"त्यन्तं कृतं । पश्यन् शृण्वन् स्पृशन् जिघ्रन् अश्नन् इति नेत्रश्रोत्रत्वङ्नासिकारसनेन्द्रियव्यापाराणां संग्रहः । एवं ज्ञानेन्द्रियाणि विवक्षितानि ॥

गच्छन् प्रलपन् विसृजन् गृह्णन् इति कर्मेन्द्रियव्यापाराणां संग्रहः । तथाहि । गच्छन्निति पादयोः । प्रलपन् इति वाचः । विसृजन्निति पायूपस्थयोर्विसर्गस्य परामर्शः । गृह्णन् इति हस्तव्यापारस्य ॥ "पायूपस्थे विसर्गार्थमिन्द्रिये तुल्यकर्मणी । विसर्गे च पुरीषस्य विसर्गे चाभिकामतः ॥" इति स्मरणात् ॥

श्वसन् इति प्राणसंज्ञकवायोर्व्यापारस्य वा प्राणादिपंचकव्यापारस्य वोपलक्षकः । स्वपन् इति बुद्धिर्वान्तःकरणचतुष्टयं वोच्यते इति नीलकण्ठादयः ॥

तंत्रन्यायेन गृह्णन्नित्यस्यावृत्त्या अपानवायुमादाय उन्मिषन्निमिषन्निति व्यानाख्यप्राणव्यापार उक्तः इति देशिकः । उन्मिषन्निमिषन्निति नागकूर्मकृकरदेवदत्तधनंजयसंज्ञकवायुव्यापारपंचकस्योपलक्षणां वदन्ति वेङ्कटनाथादयः । तल्लक्षणमुक्तं वेङ्कटनाथीये । "उद्गारे नाग आख्यातः कूर्म उन्मीलने तथा । कृकरस्तु क्षुते ज्ञेयो देवदत्तो विजृंभणे । न जहाति मृतं वापि सर्वव्यापी धनंजयः ॥ इति स्मृते"रिति ॥

इन्द्रियाणीति शब्देन श्वसन् स्वपन् उन्मिषन् निमिषन् इत्युक्तप्राणादीनामुपलक्षणा ज्ञेया । तथाच जाग्रदादिसर्वास्वप्यवस्थासु ये ये व्यापारास्तेषामखिलानां भगवदधीनत्वं उक्तमिति द्रष्टव्यं ॥

"धारयन्" मनसावमृशन् निश्चिन्वन्नित्यर्थः ॥ केचिदस्यार्थमन्यथा आहुः । यथा "इन्द्रियाणि इन्द्रियार्थेषु इष्टेषु विषयेषु वर्तन्ते इति हेतोरन्याय्यमपि कुर्युरित्यतः इन्द्रियाणि धारयन् स्वायत्तानि यथेष्टसंचारपराङ्मुखानि कुर्वन्" इति ॥ अस्मिन्पक्षे प्रकरणविरोधोऽध्याहारदोषश्च ज्ञेयः ॥ इन्द्रियजयं संन्यासमुक्त्वा संकल्पत्यागस्यापि तत्स्वरूपत्वेन निरूपणपरं हि प्रकरणं । धारयन् इत्यनेन पुनरिन्द्रियनिग्रहस्य प्रसक्तिर्दुर्गमा भाति ॥

"नैव किंचित्करोमीति युक्तो मन्येत तत्ववि"दित्यत्र दशाद्वयमभिप्रेतमिति श्रीधरः । युक्तः कर्मयोगेन युक्तः । अनन्तरं क्रमेण तत्वविद्भूत्वा न करोमीति तत्वविद्दशायां मन्यते इति तदाशयः ॥ आदौ अनन्तरमित्यादिशब्दानामध्याहारे गमकं न दृश्यते ॥ इदं व्याख्यानमुपेक्षणीयं इत्युत्कर्षदीपिकाकारोऽपि तिरस्करोति ॥ संकल्पत्यागस्य कर्मयोग्यनुष्ठीयमानत्वेन युक्तस्तत्वविदिति विशेषणविशेष्यत्वमेव न्याय्यं भाति ।

[शङ्करभाष्ये "नचासौ परमार्थतः करोतीत्यतः नैव किंचित्करोमीति युक्तः समाहितस्सन् मन्येत चिन्तयेत्" इति व्याख्यातं ॥ युक्तइति कर्मयोगी तत्राभिप्रेत इति भाति । समाहित इति व्याख्यानात् ॥ किं "सर्वकार्यकरणचेष्टासु कर्मस्वकर्मैव पश्यतः सम्यग्दर्शिनः सर्वकर्मन्यासएवाधिकारः कर्मणोऽभावदर्शनात् ॥ न हि मृगतृष्णिकायामुदकबुद्ध्या पानाय प्रवृत्त उदकाभावज्ञाने-

ऽपि तत्रैव पानप्रयोजनाय प्रवर्तते" इति चोपसंहृतं ।

एतेन नात्र गीतापद्ययोः कर्मयोगिनः कर्मलेपाभावः प्रपंच्यते अपितु वस्तुज्ञानिनः स्वदृष्ट्या कर्माण्येव न सन्ति मृगतृष्णिकाजलवदित्युक्तं भवति अत्र चिन्त्यं । यथा कर्मणां मिथ्यात्वं तथा इन्द्रियाणामिन्द्रियार्थेषु स्थितिः मिथ्यैवेति तथानुसन्धानमपि कथं तस्य सङ्गच्छते ॥ कर्ममिथ्यात्वकथनस्य

॥ युक्तः इति प्रकरणप्राप्तं कर्मयोगिनं विहाय

द्वैतदर्शिनः ग्रहणे कथं न प्रकरणविरोधः । कर्मणां मिथ्यात्वं च प्रत्यक्षादि-विरुद्धमिति ॥

अन्ये शाङ्करव्याख्यातारस्तु "कुर्वन्नपि न लिप्यते" इत्युक्तलेपाभावस्य प्रपंचनपरतयैवैनं व्याचक्षते । 'कथं लेपाभावः कर्तृत्वाभिमानाभावात्' इति तदुक्तिः ।

कर्तृत्वाभिमानाभावप्रकरणनिरूपणावसरे तु इन्द्रियाणामेव कर्तृत्वं न त्वात्मनः इति ते वदन्ति । इदं व्याख्यानमसत् । कथं नाम जडानां स्वतंत्रकर्तृत्वं बुधामन्येरन्निति न ज्ञायते । शारीरकमीमांसायां खलु कर्तृत्वाधिकरणे (II 3-33) "कर्ता शास्त्रार्थवत्त्वात् विहारोपदेशात् उपादानात् व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः उपलब्धिवदनियमः शक्तिविपर्ययात् समाध्यभावाच्च यथाचतक्षोभयथा परात्तु तच्छ्रुतेः कृतप्रयत्नापेक्षस्तु विहितप्रतिषेधावैयर्थ्यादिभ्यः" इति विस्तरेण जीवस्य कर्तृत्वं प्रसाधितं ज्ञायते । तस्य स्वतंत्रकर्तृत्वं तु नास्त्येव ईश्वरस्यैव तत्त्वात् । तस्मात् गीतायां 'तत्ववित्' इति ईश्वरस्वातंत्र्यज्ञान्येव विवक्षितः । यथोक्तं 'विष्णुनार्थेष्वीरितानि मन आदीनि सर्वशः । वर्तन्तेऽन्यो न स्वतंत्र इति जानन्हि तत्ववित्' इति गीतातात्पर्ये उदाहृतम् ।

यदत्र रामानुजभाष्ये कर्ममिथ्यात्ववादस्यासङ्गतत्वमभ्युपगम्यैव "ज्ञानैकस्वभावस्य मम कर्ममूलेन्द्रियप्राणसंबंधकृतमीदृशं कर्तृत्वं न स्वरूपप्रयुक्तं" इत्युक्तं तच्च चिन्त्यमेव । जीवस्वरूपं योग्यतां चापेक्ष्य भगवान् तेन कर्म कारयतीति शारीरकमीमांसायां प्रतिपादितत्वात् ।

इदं गीताप्रकरणं कर्मयोगान्तर्गतद्वेषादिवर्जनाख्यसंन्यासं पुरस्कृत्योपक्रान्तमित्यर्थो न विस्मर्तव्यः । संन्यासं शंससीत्यस्य मूलं चतुर्थाध्याये "कर्मण्यकर्म यः पश्येत्" सयुक्तः कृत्स्नकर्मकृत् "यस्य सर्वे समारंभाः काम-

सङ्कल्पवर्जिताः । कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः" इत्यारभ्य "यज्ञायाचरतः कर्म समग्रं प्रविलीयते" इत्यन्तं द्रष्टव्यं ॥ तत्रातिस्फुटं कर्मानुष्ठानं सङ्कल्पवर्जनादिरूपः संन्यासश्चोपदिष्ट इति ज्ञायते ॥ तस्यैवात्रापि परामर्शो युज्यते नत्वद्वैतसाक्षात्कारवता कर्मपरित्यागस्य । इत्यलं विस्तरेण ॥

कर्माणि संगं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवांभसा ॥ १० ॥

वि ॥ योगमपि किंचिद्विवृण्वन् संन्यासयोगाभ्यां युक्त एव कर्मणा न लिप्यते इति साधननियममाह ॥ ब्रह्मणीति ॥ यद्यपि संन्यासस्त्विवत्यनेनैव संन्यास तावेव फलं साधयतइति नियमो लब्धएव ॥ कुर्वन्नपि न लिप्यते इति फलं चोक्तमेव ॥ तथापि संन्यासयोगौ मिलितावेव फलसाधनमिति नियमोक्तेरुपचारत्वनिवृत्त्यर्थं लिप्यते न स पापेनेति पुनः फलोक्त्या नियमस्य फलसाधनतात्रोच्यते इत्यदोषः ॥ संगं फलकामनां त्यक्त्वा ब्रह्मण्याधाय मम शुभार्थं स्वपूजात्मकानि मया कारितानीत्यनुसं कर्माणि यः करोति करोति सोंभसा पद्मपत्रमिव पापेन न लिप्यते ज्ञानद्वारा भवतीत्यर्थः ॥

शं ॥ यस्तु पुनः अतत्ववित् प्रवृत्तश्च कर्मयोगे ब्रह्मणि ईश्वरे आधाय निक्षिप्य तदर्थं कर्म करोमि इति भृत्यइव स्वाम्यर्थं सर्वाणि कर्माणि मोक्षेऽपि पले संगं त्यक्त्वा करोति यः लिप्यते न स पापेन संबध्यते पद्मपत्रमिव अंभसा उदकेन । केवलं सत्वशुद्धिमात्रमेव फलं तस्य तत्कर्मणः स्यात् ॥

रा ॥ ब्रह्मशब्देन प्रकृतिरिहोच्यते । 'मम योनिर्महद्ब्रह्म' इति हि वक्ष्यते ॥ इन्द्रियाणां प्रकृतिपरिणामविशेषरूपत्वेन इन्द्रियाकारेणावस्थितायां प्रकृतौ पश्यन् शृण्वन् इत्याद्युक्त-प्रकारेण कर्म ब्रह्मण्याधाय फलसंगं त्यक्त्वा नैव किंचित्करो-मीति यः कर्माणि करोति सः प्रकृतिसंसृष्टतया वर्तमानोऽपि प्रकृत्यात्माभिमानरूपेण बंधहेतुना पापेन न लिप्यते पद्म-पत्रमिव अंभसा यथा पद्मपत्रमंभसा संसृष्टमपि न लिप्यते तथा न लिप्यत इत्यर्थः ॥

विचारः

(कर्मयोगस्य लेपाभावः फलं इति "कुर्वन्नपि न लिप्यते" इत्यनेनोक्तं ॥ (कर्मयोगः अंशद्वयघटितः ॥ संन्यासः एकोंशः ईश्वरार्पणबुद्ध्या कर्मानुष्ठान-रूपो योगः अपरः इत्यभिप्रयन् भगवान् संन्यासस्वरूपं तथा योगस्वरूप किंचिदुपदिदेश ॥ (संन्यासयोगयोस्संमेलनमेव फलाधायकं इति कुतो नियमः इत्याकाङ्क्षायां नियम उच्यतेऽनेन श्लोकेन ॥ (ब्रह्मण्याधाय कर्माणि यः करोति इति भागेन ईश्वरार्पणबुद्ध्यानुष्ठानाख्यस्य योगस्य परामर्शः ॥ (सङ्गं त्यक्त्वेति भागेन द्वेषादिवर्जनाख्यसंन्यासस्य परामर्शः ॥

त्यक्त्वेति ल्यपा उभयोर्मेलनं विवक्षितं ॥ "सिद्धे सत्यारंभो नियमार्थः" इति न्यायेन पूर्वमुक्तस्य किंचिदाधिक्येन सह वचनायारंभोऽत्र नियमं सूचयति ॥ एवं लेपाभावाख्यं फलमप्यभ्यस्ततया कथितं नियमं सूचयति । संन्यासयोगयोस्सामानाधिकरण्येनानुष्ठाने नियमेन लेपाभावः फलमित्यर्थः । लोके उभौ मिलितावेव ग्रामं गच्छतः इत्यादिप्रयोगे उपचारोऽपि दृष्टः । किंचित्पूर्वापरीभावादेरनुभवसिद्धत्वात् ॥ किमत्र संन्यासयोगयोर्मेलनस्य फलस्य चोक्तिरेवमुपचारमात्रं इति शंकानिरासाय प्रवृत्तं पद्यमिति भावः ॥

ब्रह्माणि कर्माधानं नाम स्वस्य स्वातंत्र्याभिमानत्यागएव ॥ न तु कर्मणां स्वरूपतस्त्यागः ॥ भगवत्पूजात्मकानि तत्कृतानि मम शुभार्थमित्यनुसन्धानं विवक्षितं ॥ स्वातंत्र्याभावापेक्षयैव जीवस्याकर्तृत्वं इत्यर्थः ॥ ब्रह्मसूत्राद्यनुवादेन पूर्वश्लोकव्याख्याने लिखितो द्रष्टव्यः ॥ कर्मणि प्रवृत्तः एवं चिन्तयेत् "स्ववन्दनं यथा पित्रा कारितं शिशुकर्तृकं । एवं पूजा विष्णवधीना भवेज्जीवकृतेत्यपि " इति ॥

रामानुजभाष्यरीत्यास्य श्लोकस्येयं प्रकरणसंगतिः ॥ कर्तृत्वं प्रकृतिसंबन्धाख्योपाधिनिमित्तं इत्यतीतश्लोकेऽभिधायाधुना कर्तृत्वस्यौपाधिकत्वं यःअनुसंधत्ते तस्य तेन प्राप्यं फलं देहात्मभ्रमवैधुर्यमुच्यते इति ॥ एतत्संगत्यानुगुण्येन तेन श्लेको व्याख्यातः ॥ ब्रह्मशब्देन इन्द्रियाकारपरिणतप्रकृतिर्गृहीता ॥ "तस्मादेतद्ब्रह्म नाम रूपमन्नंच जायते" "मम योनिर्महद्ब्रह्म" इत्यादिप्रयोगाः ब्रह्मशब्दस्य प्रकृतिपरत्वे अनूदिताः ॥ प्रकृत्याख्यकारणपरस्यापि ब्रह्मशब्दस्य तत्कार्ये इन्द्रिये प्रयुक्तत्वं औपचारिकं इति देशिको मन्यते ॥ तथाच इन्द्रियेषु दर्शनश्रवणादीनि कर्माण्याधाय कर्तृत्वस्यौपाधिकत्वेन ज्ञात्वा पापेन देहात्मैक्यभ्रमरूपेण न लिप्यते इति तद्रीत्या वाक्यार्थः ॥ अत्रेदं चिन्त्यं ॥ आत्मनः कर्तृत्वं औपाधिकमित्युक्तपूर्वं हि पूर्वस्मिन् श्लोके ॥ तस्य पुनरिह प्रकृतिवाचकापूर्वब्रह्मशब्दप्रयोगघटितवाक्येनोक्तौ निमित्तं दुर्गमं ॥ संभवति भगवद्वाचकब्रह्म-

शब्दबलात्परमास्तिकार्थे कुतएवं प्रकृतिपरतया व्याख्यानं ? पापेन न लिप्यते इति देहात्मैक्यभ्रमं न करोतीति कोऽसाविहापूर्वार्थस्यावसरः ? ॥ पापशब्दस्य संकोचादस्य क्लिष्टार्थस्य लाभोऽपि दुर्गमः ॥ कर्मयोगमारुह्य कर्मकरणे यः प्रवृत्तः स यदि कर्तृत्वं प्रकृतिसंश्लेषमात्रमनुसन्धत्ते तर्हि कर्मणस्सकाशाद्विरमेत् न तु कर्माणि कुर्वीतेति भाति ॥ स्यान्नाम भगवति समर्पणं फलाय न त्विन्द्रियेषु समर्पणं ॥ अतः इदं व्याख्यानं क्लिष्टमेव ॥

शांकरा आहुरेवं संगतिं ॥ विद्वान् न लिप्यते । कुतः । कर्मणां स्वदृष्ट्या मिथ्यात्वात् । इन्द्रियेषु स्वतंत्रकर्तृषु सत्सु निष्क्रियस्यात्मनो न सर्वथा कर्मलेपो भवेत् इति पूर्वं प्रसाध्य इदानीं अविद्वानपि न लिप्यते यद्यसौ परमेश्वराख्ये सगुणे ब्रह्मणि कर्माणि समर्पयतीत्युच्यते ॥ इति ॥ अत्र चिन्त्यते । 'युक्तो मन्येत' इत्यत्र युक्तः विद्वान् प्रस्तुतः । इह 'संगं त्यक्त्वा करोति यः' इत्यत्र तु कर्ता अविद्वानिति विभागो निर्मूलः ॥ इह प्रकरणे सर्वत्र युक्त इति कर्मयोगिन एव ग्रहणमुचितं भाति । 'कुर्वन्नपि न लिप्यते' इत्यत्र विवक्षितो लेपाभावः कर्ममिथ्यात्वशिरस्कजीवन्मुक्तिद्योतकः, । इह "लिप्यते न स पापेन" इत्युक्तो लेपाभावो न तादृशः अपितु सत्वशुद्धिरूपः इति विवेकोऽपि निर्मूलः ॥ श्लोके विना किंचिदपि गमकं ब्रह्मशब्दस्य सगुणे गुणे वा स्वेच्छानुसारेण विनियोगो विस्मयं जनयति ॥

यदुक्तं शंकरभाष्ये मोक्षेऽपि फले संगं त्यक्त्वेति तदेकान्तभक्तव्यतिरिक्तमुमुक्षुविवक्षया न प्रामाणिकं ॥ तेषां मोक्षेच्छायाः भगवद्भक्तिज्ञानेच्छादीनां च युक्तत्वात् ॥

अद्वैतव्याख्यातृषु केचिदतीतश्लोकद्वयं प्रकृतश्लोकं च विद्वत्परतयैव योजयन्ति । तथाहि / तत्वविदो यो लेपः स किं स्वाभाविकेन्द्रियशरीरचेष्टाजन्यः उतवैधेन्द्रियादिचेष्टाजन्यः ॥ आद्यं द्वाभ्यांप्रत्युक्त्वा द्वितीयंप्रत्याह ॥

स किं वा तत्तत्कर्मजन्यसुकृतापूर्वलक्षणः किं वा तत्तत्कर्मोपयोग्यर्थप्रतिग्रहादि-जन्यदुरितापूर्वलक्षणः । नाद्य इत्याह ॥ ब्रह्मणीत्यादि । ब्रह्मार्पणबुद्ध्या क्रियमाणेषु कर्मसु नापूर्वोत्पत्तिरिति भावः ॥ न द्वितीयइत्याह संगं त्यक्त्वेति । संगं ऐहिकधनादिफलासंगं । ततश्च न दुरितापूर्वोत्पत्तिरितिभावः " इति ॥ इमां योजनां निराहोत्कर्षदीपिकाकारः । " ब्रह्मार्पणबुद्ध्याकर्मकरणेऽतत्वविदो मुमुक्षोरेवाधिकारात् " इति ॥

एतेनाशयद्वैविध्येन ब्रह्मसाक्षात्कारवतामपि कर्मानुष्ठानं भगवति कर्मसमर्पणं चास्तीति केषांचिदद्वैतिनां मतं इत्यूह्यते । अस्मन्मते तु ज्ञानिनामपि ईश्वरप्रीतिद्वारा मुक्तावानन्दवृद्ध्यर्थं कर्मास्तीति पुनःपुनरुक्तमनुसंधेयं ॥ प्रकृतस्तु श्लोकः विद्वन्मात्रपरइति वा अविद्वन्मात्रपरइति वा नास्माकं निर्बन्धः । ' तद्वै जिज्ञासुभिः साध्यं ज्ञानिनां यत्तु लक्षणं ' इत्युक्तेः ॥ जिज्ञासुर्यत्नतः समर्पयति कर्माणि भगवति । अपरोक्षदृगपि तथा करोति । ज्ञानमाहिम्नाऽऽयासराहित्येनायं करोतीति तस्य विशेषः ॥

**कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।**
**योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ॥ ११**

वि ॥ संन्यासयोगौ मिलितावेव फलहेतुरित्यत्राचारोप्यस्तीत्याह । कायेनेति । देहेन मनसा मनोबुद्धी तु द्वादशे इत्युक्तेर्बुद्धिरूपेन्द्रियेण केवलैः कामाहंभावहीनैः स्वातन्त्र्याभिमानरहितैर्वा इन्द्रियैर्योगिनोऽपि सङ्गं त्यक्त्वाऽऽत्मनो मनसः शुद्धये तत्र ज्ञानोत्पत्त्यर्थं पापालेपायेति वा कर्म

कुर्वन्तीत्यर्थः । पूर्वार्धेन संन्यासः उत्तरार्धेन योगः । आत्मशुद्धये इति फलोक्तिः ॥

शं० ॥ केवलं सत्वशुद्धिमात्रफलमेव तस्य कर्मणः स्यात् । यस्मात्, कायेन देहेन मनसा बुद्ध्या च केवलैरिन्द्रियैर्ममत्ववर्जितैरपीश्वरायैव कर्म करोमि न मम फलायेति ममत्वबुद्धिशून्यैरिन्द्रियैरपि ॥ केवलशब्दः कायादिभिरपि प्रत्येकं संबध्यते । सर्वव्यापारेषु ममतावर्जिताः योगिनः कर्मिणः कर्म कुर्वन्ति । सङ्गं त्यक्त्वा फलविषयमात्मशुद्धये सत्वशुद्धयइत्यर्थः ॥ तस्मात्तत्रैव तवाधिकार इति कुरु कर्मैव ॥

रा० ॥ कायमनोबुद्धीन्द्रियसाध्यं कर्म स्वर्गादिफलसङ्गं त्यक्त्वा योगिन आत्मविशुद्धये कुर्वन्ति आत्मगतप्राचीनकर्मबन्धविनाशाय कुर्वन्तीत्यर्थः ॥

विचारः

सदाचारप्रदर्शनेनोक्तार्थदाढर्याय श्लोकः । ईश्वरार्पणबुद्धिं कर्मानुष्ठानं च विना कर्मयोगो न निष्पद्यते । एवं तयोर्मेलनमावश्यकमित्यत्र महतां योगिनामाचारः प्रमाणमिति भावः ॥

शिष्टाचारस्य प्रमाणत्वेन दर्शनार्थं पद्यं इत्यत्र श्रीधरवेङ्कटनाथदेशिका अप्यनुमन्यन्ते ॥ शङ्करभाष्यादयस्तु नैवमुत्थापयन्ति पद्यं ॥

आचारस्योत्तमत्वद्योतनाय योगिनः इत्युक्तं द्रष्टव्यं ॥ तेन तत्वज्ञानिनो महान्त उच्यन्ते ॥ अनेन शब्देन अपिशब्दो योजनीयः । योगिनोऽपि कर्म कुर्वन्ति तस्मादन्येऽपिताननुसरेयुरित्याचारस्य प्रमाणत्वे तात्पर्यं ॥

अन्ये तु पद्यस्थस्य 'अपि' शब्दस्य योजनामन्यथा मन्यन्ते ॥ इन्द्रियाणां कायमनोबुद्धिभिस्समुच्चयस्तस्यार्थ इति सामान्यतः प्रतीयते ॥ यद्यपीयं योजना निर्दुष्टा स्यात् ॥ तथापि योगिनः इत्यनेन योजनायांतु स्वारस्यमुक्तप्रकारं द्रष्टव्यम् ॥

शङ्करानन्दस्तु कायेनेत्यनेन अपिशब्दं संयोज्य व्याचष्टे । "यत्किंचित्कर्तव्यं मनसा सङ्कल्प्य तदेव बुद्ध्या निश्चित्य तदेवेन्द्रियैः केवलैरागद्वेषविवर्जितैः कायेनापि कर्म कुर्वन्ति" इति ॥ मनसा सङ्कल्प्य बुद्ध्या निश्चित्य कायेनापि कुर्वन्तीत्युक्तौ स्वारस्यं न प्रतीयते ॥ स्यादियं योजना सुरसा यदि मनोबुद्धिव्यापारापेक्षया कायिकस्याधिक्यमभिप्रेतं ॥ तत्तु न संभवति । एवं इन्द्रियैरित्यनेन अपिशब्दस्य योजनायां च इन्द्रियव्यापारस्य प्राधान्यं प्रसज्येतेति द्रष्टव्यं ॥ तस्माद्विवृत्त्याचार्योक्तप्रकारेण योगिन इत्यनेन योजनमेव रम्यं ॥ दूरान्वयस्तु न दोषाय । अर्थपौष्ट्यस्य प्राप्तेः । योगिनोऽपीत्यनेनाचारस्योत्कर्षः कैमुत्यं च प्रतीयते इत्यर्थपौष्ट्यं सुगमं ॥

केवलैरिति ॥ एतच्छब्दव्यावर्त्यं अहंकारादिकं स्वातन्त्र्याभिमानो वा ॥ तथाच कर्मकरणे अभिनिवेशराहित्यं रागद्वेषपरित्यागः ममताशून्यत्वादिकं केवलशब्दार्थ इति यावत् ॥

केवलेन कायेन केवलेन मनसा केवलया बुद्ध्या केवलैरिन्द्रियैः इति यथासंभवं लिङ्गवचनयोर्विपरिणामेनान्वयमाहुश्शाङ्कराः ॥ नायमस्माकं विरुद्धः । सर्वबाह्यान्तरेन्द्रियव्यापारेषु चाहंभावादिहीनत्वस्यास्माकं सम्मतत्वात् ॥

केचित्केवलशब्दव्यावर्त्यं धनादिफलं मत्वा श्लोकं व्याचक्षते ॥ तथाहि । "केवलेन कायेन स्नानशौचद्विजोच्छिष्टमार्जनादीनि कर्माणि योगिनः कुर्वन्ति । न तु तेषामतीतकालता नापि कदाचिद्धनापेक्षेति भावः । तथा केवलेन मनसा जगदीशध्यानं यथाशक्ति परोपकारसंकल्पादीनि च

कर्णाभ्यामुत्तमश्लोकजन्मकर्माकर्णनादीनि रसनया तीर्थनैवेद्यास्वादनादीनि घ्राणेन तदुपभुक्तमाल्यामोदग्रहणादीनि त्वचा पुण्यतीर्थोदकस्पर्शादीनि पद्भ्यां तीर्थाटनादीनि हस्ताभ्यां परेशपूजादीनि वाचा स्तुत्यादीनि च कुर्वन्ति ॥ सङ्गं ध्यानादिफलासंगं त्यक्त्वा" ॥ इति ॥ अत्र चिन्त्यते । केवलशब्देन धनादिफलव्यावृत्तौ सत्यां "सङ्गं त्यक्त्वा" इत्यनेन पौनरुक्त्यं परिहर्तव्यं । ध्यानादिमानसक्रियासु धनाद्यपेक्षाप्रसक्तेरसामंजस्यात् केवलशब्दस्य मनसेत्यनेनापि योजितत्वादनुपपत्तिः परिहरणीयेति ॥ तस्मादहंममेत्याद्यभिनिवेशराहित्यमेव केवलशब्दार्थ इति भाति ॥ देशिकस्त्वत्र यद्वेति पक्षान्तरमाह । तथाहि । "यद्वा कायशब्देन कर्मेन्द्रियवर्गस्यापि लक्षणया संग्रहणात् केवलैरिन्द्रियैः इति ज्ञानेन्द्रियाण्युच्यन्ते । तेषां च केवलत्वं वचनादानादि कर्मरहितत्वं । ततश्च धर्मश्श्रुतो वा दृष्टो वा इत्यादिकमपि सूचितं भवति" इति ॥ अत्रोच्यते । ज्ञानेन्द्रियाणामेव वचनादानादिकर्मेन्द्रियव्यापारव्यावृत्तिगर्भितस्य केवलत्वस्योक्तौ निमित्तं न ज्ञायते । तेनैव न्यायेन कर्मेन्द्रियव्यापाराणां मनोबुद्ध्योर्व्यापाराणांचेतरव्यापारासहकृतत्वरूपकेवलत्वस्य वक्तव्यत्वप्रसङ्गात् ॥ किंच रागद्वेषादिवर्जनरूपस्संन्यासः कर्मयोगांशयोरेकः प्रथमार्धेनोच्यते द्वितीयार्धे कर्म कुर्वन्ति संङ्ग त्यक्त्वेत्यनेनेश्वरार्पणबुद्ध्या कर्मानुतिष्ठन्तीत्यन्यो भागउच्यते इत्यर्थस्वारस्यमेतेन व्याख्यानेन विहन्यते ।

(अयं श्लोकोऽप्यविद्वत्परः इति शङ्करभाष्याशयः । तेन हि सप्तमाष्टमश्लोकौ ज्ञानिपरतया व्याख्यातौ ॥ ब्रह्मण्याधायेति दशमस्त्वविद्वत्परतया व्याख्यातः । एतत्संबान्धित्वेन प्रकृतश्लोकोऽप्यविद्वत्परतया व्याख्यातः॥आत्मशुद्धये इत्युक्तावप्यविद्वानेवात्र विवक्षित इति निश्चेतुं न शक्यते ॥ ज्ञानिभिरपि फलविशेषार्थं कर्मणामनुष्ठेयत्वात् । ज्ञानविशेषोत्पत्तिर्वा पापाश्लेषोवाऽऽनन्दवृद्धिर्वा फलं स्यात् ॥न वयं श्लोकस्य परोक्षज्ञानिपरतां निषेधामः । किन्तु कतिपयैः श्लोकैरपरोक्षज्ञानिनमुक्त्वाद्याज्ञानिमात्रमाहेत्यत्रैवास्माकं

विप्रतिपत्तिः । यदि मात्रशब्दो बहिष्कृतस्तदा स्याददोषः ॥ परोक्षापरोक्षयोर्विवक्षामन्तरेण तत्ववित् योगयुक्तः इत्यादिवचनैः कर्मयोगीवर्णित इति सर्वत्र प्रतिपाद्यैक्यसंपादनस्यैवौचित्यात् ॥ नहि यः कायमनोबुद्धीन्द्रियव्यापारेषु सर्वेषु ईश्वरायैव कर्म करोमि न मम फलायेत्यनुसंधाय ममतां विहाय च कर्म करोति स मूढ इति निर्देशमर्हति ॥ अर्जुनं प्रति तत्रैवाधिकारस्तवेत्युक्तिरपि नोचिता ॥ तस्मात्कर्मयोगापकर्षबोधकानि वाक्यानि यानि शांकरव्याख्यानेष्वस्मिन्प्रकरणे दृष्टानि तानि भावापरिज्ञानमूलानि भान्तीत्यलं ॥ अत एव च श्रीधरीये विवेकिसामान्यपरतया श्लोकउत्थापितः । "बन्धकत्वाभावमुक्त्वा मोक्षहेतुत्वं सदाचारेण दर्शयति" इति ॥

**युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।**
**अयुक्तः कामकारेण फले सक्तो निबध्यते ॥ १२ ॥**

वि० प्राक्संन्यासस्त्वित्यादिना सन्यासयोगौ मिलितावेव फलं साधयतः नान्यतरपरित्यागेनान्यतरइति नियमज्ञापनार्थं तयोः फलमुक्तं ॥ ब्रह्माधिगच्छति कुर्वन्न लिप्यत इत्यादिना । इदानीं तु तावेव मोक्षसाधनं न तु तदुभयत्यागेनान्यदिति नियमज्ञापनाय योगसंन्यासवतस्तदुभयाभाववतश्च मुक्तिसंसारविस्तारलक्षणं फलमाह ॥ युक्तइति । कर्मफलं त्यक्त्वेत्यनेन प्रागुक्तकामादिवर्जनरूपसंन्यासी

ज्ञेयः ॥ युक्तः भगवदर्पणबुद्ध्या कर्मानुष्ठानरूपयोगयुक्तः नैष्ठिकीं स्वाभाविकीं शान्तिं स्वरूपानन्दाविर्भावलक्षणां मुक्तिमाप्नोति ॥ अयुक्तः योगहीनः कामकारेण फलकामादिना कर्मानुष्ठानेन संन्यासाभावेनेति यावत् । फले क्षुद्रफले सक्तो निबध्यते नितरां संसारमनुभवतीत्यर्थः ॥

शं ॥ यस्माच्च युक्त ईश्वराय कर्माणि करोमि न मम फलायेत्येवं समाहितस्सन्कर्मफलं त्यक्त्वा परित्यज्य शान्तिं मोक्षाख्यामाप्नोति नैष्ठिकीं निष्ठायां भवां सत्वशुद्धिज्ञानप्राप्तिसर्वकर्मसंन्यासज्ञाननिष्ठा क्रमेणेति वाक्यशेषः । यस्तु पुनरयुक्तोऽसमाहितः कामकारेण करणं कारः कामस्य कारः कामकारस्तेन कामकारेण कामप्रेरिततयेत्यर्थः । मम फलायेदं करोमि कर्मेत्येवं फले सक्तो निबध्यतेऽतस्त्वं युक्तोभवेत्यर्थः ॥

रा ॥ युक्तः आत्मव्यतिरिक्तपलेष्वचपलः आत्मैकप्रवणः कर्मफलं त्यक्त्वा केवलमात्मशुद्धये कर्मानुष्ठानाय नैष्ठिकीं शान्तिमाप्नोति स्थिरामात्मानुभवरूपां निर्वृतिमाप्नोति । अयुक्तः आत्मव्यतिरिक्तफलेषु चपलः आत्मावलोकनविमुखः कामकारेण फले सक्तः कर्माणि कुर्वन् नित्यं कर्मभिर्बध्यते । नित्यसंसारी भवति । अतः फलसङ्गरहितइन्द्रियाकारेण परिणतायां प्रकृतौ कर्माणि संन्यस्यात्मनो बन्धमोचनायैव कर्माणि कुर्वीतेत्युक्तं भवति ॥

विचारः

अत्र योगयुक्तस्य नैष्ठिकी शान्तिः फलं अयुक्तस्य तु संसारबन्धः इति फलवैषम्यमुच्यते इति ज्ञायते । किमत्रोक्तौ अपूर्वता इत्यालोचनीयं । 'योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति' इत्युक्तेः, पौनरुक्त्यं परिहार्यं भवति । तत्र हि रागद्वेषादिवर्जनरूपस्य संन्यासस्येश्वरार्पणबुद्ध्या कर्मानुष्ठानेन सह युक्तत्वे मोक्षफलं लभ्यत इत्युक्तं । अनयोर्मेलनं आवश्यकं वा न वा, किमन्यतरपरित्यागेनान्यतरमात्रस्वीकारे फलं न स्यात् इति शङ्कायां नेति समाधाय मेलननियमः प्रसाधितो 'ब्रह्मण्याधाये'ति श्लोकेन । अस्मिन्नर्थे योगिनामाचारमपि प्रमाणयामास भगवान्कायेनेति श्लोकेन । एवं योगसंन्यासयोर्मेलनस्य मेलननियमस्य चोक्तत्वेन किमत्र वक्तव्यमवशिष्यते इति विचार्यं । अतीतादिश्लोकानुक्ता अभ्यधिका वा विशेषा अन्वेषणीयाः ।

इयं मधुसूदनीयावतारिका '(कर्तृत्वाभिमानसाम्येऽपि तेनैव कर्मणा कश्चिन्मुच्यते कश्चित्तु बध्यते इति वैषम्ये को हेतुरिति तत्राह" इति ॥ इममेव मार्गं अनुसरतः वेङ्कटनाथश्रीधरौ । अत्र चिन्त्यते । योगिनः अयोगिनश्च कर्तृत्वाभिमानसाम्यं कीदृशमिति नावगम्यते । नहि मोक्षफलार्हः कश्चिदपि योगी मधुसूदनराद्धान्ते स्वं कर्तारं मन्यते । 'नैव किंचित्करोमि' 'कर्तृत्वं मिथ्या' इति हि स मन्येत । किंचात्मनः कर्तृत्वाभावादन्तःकरणादीनामेव कर्तृत्वस्य तन्मतेऽभिहितत्वात् युक्तस्य कर्तृत्वाभिमानः कीदृशः यो युक्तायुक्तयोस्साधारणः इति तैः परिष्करणीयं । इदं तु न कृतं । किंच युक्तायुक्तयोः फलवैषम्ये को हेतुरित्यभ्यधिकाशङ्का प्रदर्शिता । किमियं शङ्का न प्राक्कुत्राप्युत्थापिता न वा समाहिता । नैवं वक्तुं शक्यते । बहुधा प्रपंचितत्वात् । अतः फलवैषम्यकथनाय प्रवृत्तमिदं पद्यं इत्युत्थापनं न प्रत्याययति॥

उत्कर्षदीपिकाकारस्तु अतीतश्लोके 'आत्मशुद्धये' इत्युक्तिं प्रकृतश्लोके 'नैष्ठिकीं शान्तिं' इत्युक्तिं च पश्यन् प्रतिपाद्यभेदं कल्पयति । 'न

केवलं सत्वशुद्ध्यर्थमेव कर्माण्यनुष्ठेयानि परंपरया मोक्षायापीत्याह" इति । अत्रापि वक्तव्यं । न हि मोक्षश्चित्तशुद्धिमनपेक्ष्य संभवति ॥ अतीतश्लोके साक्षात्फलमिह तु परंपराप्राप्यं फलं उक्तं इत्येतन्नीरसं । प्रागेव कर्मबन्धं प्रहास्यसीत्यारभ्य बहुग्रन्थेष्वस्य परंपराफलस्याप्युक्तत्वात् ॥

किंतर्हि भवन्मते श्लोकप्रवृत्तिबीजं इत्युक्ते परिष्कृतं प्रमेयदीपिकायां। "प्राक् संन्यासयोगौ मिलितावेव फलं साधयतो नान्यतरपरित्यागेनान्यतर इति नियमज्ञापनार्थं तयोः फलमुक्तं । इदानीं तु तावेव मोक्षसाधनं न तु तदुभयत्यागेनान्यदिति नियमज्ञापनाय योगसंन्यासवतस्तदुभयाभाववतश्च मुक्तिसंसारविस्तारलक्षणं फलमाहेत्यर्थः" इति । सुगमो ह्यनयोर्भेदः ॥ योग-संन्यासयोर्मध्ये योगस्य वा सन्यासस्य वा प्रत्येकं फलसाधकत्वं निषिध्य मेलननियमस्साधितः । उभयमपि परित्यज्य साधनान्तरं शरणीकरोमीति शङ्कायां नान्या गतिरस्तीति वदन्नाह 'युक्तः कर्मफलं' इति । तथाच पूर्वमयोगव्यवच्छेदेन नियमः समर्थितः । अत्रान्ययोगव्यवच्छेदेन नियमस्स-मर्थ्यते इति विशेषः ॥

गीतायां 'कर्मफलं त्यक्त्वे'त्यनेन कामादिवर्जनरूपस्य संन्यासस्य संग्रहः । तथा द्वितीयार्धे कामकारेण फलेसक्त इत्यनेनासंन्यासस्य ग्रहणमुचितं ॥ एतेन योगसन्यासौ विना नान्यच्छरणमस्ति तावेव मोक्षसाधनं इति ज्ञापितं भवति ॥

युक्तइत्यनेन भगवति मनोयोगपूर्वककर्मानुष्ठाता विवक्षितः । ईश्वरार्प-णबुद्ध्या कर्मानुष्ठानं दलद्वयघटितकर्मयोगस्यैकांशइति प्रागेव विस्तरतः प्रति-पादितं द्रष्टव्यं ॥ मधुसूदनोऽपि किंचिदिममर्थं स्वीकरोति 'ईश्वरायैव कर्माणि न मम फलायेत्येवमभिप्रायवान् युक्तः', इति तद्व्याख्यानं ॥

देशिकस्त्वाह । "युक्तः समाहितः । फलान्तरविरक्तिपूर्वकमात्मप्रा-वण्यमेव युक्तशब्दार्थः" इति । अनेन व्याख्यानेन युक्तशब्दवाच्यस्य कर्मानु-

ज्ञातृत्वमपि न सिध्यतीव भाति । भगवति मनोयोगोऽपि दुर्घटः । किंनामात्मप्रावण्यं विवक्षितं इत्यत्र सन्देहात् । सर्वत्रात्मशब्दे प्रयुक्ते सति रामानुजदेशिकौ किं भगवन्तमभिप्रयन्तौ वा जीवं वेति न विशदं विज्ञायते । उपक्रमाद्यालोचने क्वचिज्जीवमेव न तु भगवन्तं इति च भाति। आत्मप्रावण्यमिति प्रस्तुतप्रयोगे जीवो वा भगवान्वा विवक्षितइति न ज्ञायते । एतच्छ्लोकरामानुजभाष्ये आत्मशब्दः सप्तवारं प्रयुक्तो द्रष्टव्यः। न क्वापि तत्र श्रीहरिर्विवक्षितइति भाति ॥

'नैष्ठिकीं शान्तिं' इति ॥ अनेन मुक्तिरुच्यते इति श्रीमध्वाशयः । तथैव शांकराणां प्रायशः। मुक्तिरेव ग्राह्येत्यभिप्रयन्नुत्कर्षदीपिकाकृदात्मशुद्धिविषयकात्पूर्वश्लोकात्प्रतिपाद्यभेदं च संपादयति प्रकृतश्लोकस्य ॥ एवं सति शङ्करानन्दस्तु शान्तिमित्यनेन कर्मनिष्ठाजन्यां चित्तशुद्धिं गृह्णाति ॥

"नैष्ठिकीं शान्तिमाप्नोति ॥ स्थिरामात्मानुभवरूपां निर्वृतिमाप्नोति" इति रामानुजभाष्यं । अस्य टीका ॥ (ता—चं) 'नैष्ठिकीं शान्तिं इत्यनेन साक्षान्मोक्षप्रतीतिस्स्यात् । तद्व्युदासायाह स्थिरामिति । प्रकरणलब्धोऽयं विशेषः' इति ॥

अत्र चिन्त्यते ॥ को नाम मोक्षव्यतिरिक्तस्थिरात्मानुभव इति ॥ स्थिरत्वं हि नित्यत्वं ॥ यदि मोक्षः स्वस्वरूपानन्दाविर्भावरूपः शाश्वतश्च तर्हि रामानुजाचार्योक्तिर्मोक्ष एव पर्यवस्यतीति तद्व्युदासः कथं लभ्यते— इति ॥

'निबध्यते' इत्यस्य नित्यसंसारी भवतीति रामानुजाचार्यभाष्यं । अस्य मते श्रीमध्वोक्ताः मध्यमजीवाः अङ्गीकृताः किं, इत्येतेन सन्देहो जायते । आस्तां तद्विचारः । नितरां बहुतरं बध्यते निबध्यते इति व्याख्यानेनार्थसामञ्जस्ये संभवति, नित्यसंसारिणां कोऽत्रावसरः । क्वाचि-

त्काम्यकर्मी लभेत तदुचितं स्वर्गादिकं ॥ तत्वज्ञानं तु न तस्य कदापि जायेतेति को निर्बन्धः येन तस्य नित्यसंसारिषु पात एवोचितो भवेत् इति ॥

यदुक्तं श्लोकार्थोपसंहारे रामानुजाचार्यभाष्ये 'अतः फलसङ्गरहितः इन्द्रियाकारेण परिणतायां प्रकृतौ कर्माणि संन्यस्यात्मनो बन्धमोचनायैव कर्माणि कुर्वीतेत्युक्तं भवति' इति तत्रेन्द्रियाकारेणेत्यादि ग्रन्थोऽनुपपन्नः ॥ 'मयि संन्यस्य' इति तत्र तत्र बहुधा भगवता उपदिष्टे सति, कर्मणां इन्द्रियेषु संन्यासस्याप्रामाणिकत्वात् । कथं नाम केवलं जडवस्तूनीन्द्रियाणि शरीर्य-धीनानि कर्मभारनिक्षेपं भरेयुरिति विस्मयो जायते ॥

**सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ।**
**नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥ १३ ॥**

वि० ॥ पूर्वं नैव किंचित्करोमीत्यादिना कर्तृत्वाभिमा-नत्यागेन संन्यासो विवृतः । अधुना कारयितृत्वाभिमान-त्यागेन संन्यासशब्दार्थं स्पष्टयति । सर्वकर्माणीति । यद्वा प्राक्कर्माणि ब्रह्मण्याधाय यः करोतीत्यत्र कर्मणां ब्रह्मण्या-धानं नाम न कर्मणां स्वरूपेण त्यागोऽपि तु सर्वकर्माणि मनसा संन्यस्य भगवानेव स्वपूजात्मकानि मच्छुभार्थं मया कारयति मम कर्तृताशक्तिरपीशाधीनैवेत्यनुसन्धाये-त्येवं रूपमित्यर्थः । स्वरूपेण कर्माणि परित्यज्येत्यर्थपक्षे मन-सेति व्यर्थमिति भावः । वशी जितेन्द्रियः स्वातन्त्र्येण

नैव कुर्वन्नकारयंश्च नवद्वारे चक्षुःश्रोत्रघ्राणानां षड्द्वाराणि मुखं पायूपस्थे चेत्येवं नवद्वारवति पुरे देहे सुखं यथा तथा आस्ते । कर्मलेपहीनो वर्ततइत्यर्थः ॥

शं० ॥ यस्तु परमार्थदर्शी सः सर्वाणि कर्माणि सर्वकर्माणि मनसा संन्यस्य परित्यज्य नित्यं नैमित्तिकं काम्यं प्रतिषिद्धं च सर्वकर्माणि तानि मनसा विवेकबुद्ध्या। कर्मादावकर्मसंदर्शनेन संत्यज्येत्यर्थः। आस्ते तिष्ठति सुखं त्यक्तवाङ्मनःकायचेष्टो यतिर्निरायासः प्रसन्नचित्तः आत्मनोऽन्यत्र निवृत्तबाह्यसर्वप्रयोजन इति सुखमास्तइत्युच्यते । वशी जितेन्द्रिय इत्यर्थः । क्व कथमास्त इत्याह नवद्वारे पुरे। सप्तशीर्षण्यान्यात्मनउपलब्धिद्वाराण्यर्वाग्द्वे मूत्रपुरीषविसर्गार्थे तैर्द्वारैर्नवद्वारं पुरमुच्यते शरीरं पुरमिव पुरमात्मैकस्वामिकं तदर्थप्रयोजनैश्चेन्द्रियमनोबुद्धिविषयैरनेकफलविज्ञानस्योत्पादकैः पौरैरिवाधिष्ठितं ॥ तस्मिन्नवद्वारे पुरे देही सर्वं कर्म संन्यस्यास्ते । किं विशेषणेन। सर्वो हि देही संन्यास्यसंन्यासी वा देहे एवास्ते ॥ तत्रानर्थकं विशेषणमिति। उच्यते । यस्त्वज्ञो देही देहेन्द्रियसंघातमात्रात्मदर्शी स सर्वोऽपि गेहे भूमावासने वाऽऽस इति मन्यते । न हि देहमात्रात्मदर्शिनो गेहे इव देह आस इति प्रत्ययः संभवति । देहादिसंघातव्यतिरिक्तात्मदर्शिनस्तु देह आस इति प्रत्ययः उपपद्यते । परकर्मणां च परस्मिन्नात्मन्यविद्ययाऽ-

ध्यारोपितानां विद्यया विवेकज्ञानेन मनसा संन्यास उपपद्यते । उत्पन्नविवेकविज्ञानस्य सर्वकर्मसंन्यासिनोऽपि गेह इव देह एव नवद्वारे पुरे आसनं प्रारब्धफलसंस्कारशेषानुवृत्त्या देह एव विशेषविज्ञानोत्पत्तेर्देह एवास्त इत्यस्त्येव विशेषणफलं विद्वदविद्वत्प्रत्ययभेदापेक्षत्वात् । यद्यपि कार्यकरणकर्माण्यविद्ययात्मन्यध्यारोपितानि संन्यस्यास्त इत्युक्तं॥ तथापि कृतसंन्यासस्यात्मसमवायिकर्तृत्वं कारयितृत्वं च स्यादित्याशङ्क्याह नैव कुर्वन्स्वयं न कार्यकरणानि कारयन्क्रियासु प्रवर्तयन् । किं यत्तत्कर्तृत्वं कारयितृत्वं च देहिनः स्वात्मसमवायिसत्संन्यासान्न संभवति यथागच्छतो गतिर्गमनव्यापारपरित्यागे न स्यात्तद्वत् । किं वा स्वत एवात्मनो नास्तीति । अत्रोच्यते । नास्त्यात्मनः स्वतः कर्तृत्वं कारयितृत्वं च । उक्तं हि—'अविकार्योऽयमुच्यते' 'शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते' इति । 'ध्यायतीव लेलायतीव' इति श्रुतेः ॥

रा० ॥ अथ देहाकारेण परिणतायां प्रकृतौ कर्तृत्वसंन्यास उच्यते । आत्मनः प्राचीनकर्ममूलदेहसम्बन्धप्रयुक्तमिदं कर्मणां कर्तृत्वं न स्वरूपप्रयुक्तमिति विवेकविषयेण मनसा सर्वाणि कर्माणि नवद्वारे पुरे संन्यस्य देही स्वयं वशी देहाधिष्ठानप्रयत्नमकुर्वन् देहं च नैव कारयन् सुखमास्ते ॥

विचारः

'तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते' इति यदुक्तं भगवता संन्यासाद्योगः श्रेयानिति तदप्रियं शांकराणां भाति ॥ ते खलु संन्यासपक्षपातिनः कर्मयोगस्य संन्यासादवरत्वमभिप्रयन्तः भगवदुक्तिंच नितरां प्रत्याख्यातुमनिच्छन्तस्सुज्ञाज्ञविभागेन सुज्ञानां कर्मसंन्यासः अज्ञानां कर्मयोग इत्याहुः। एतावत्पर्यन्तमज्ञकर्तृककर्मयोगमुक्त्वाधुना सुज्ञानुबन्धिसंन्यास उच्यत इति तेषामाशयः । अत आह मधुसूदनः "अशुद्धचित्तस्य केवलात्संन्यासात्कर्मयोगः श्रेयानिति पूर्वोक्तं प्रपंच्याधुना शुद्धचित्तस्य सर्वकर्मसंन्यास एव श्रेयानित्याह" इति । अत्रोच्यते ।। इदं विद्वदविद्वद्विभागमाश्रित्य भगवता कण्ठरवेणोक्तस्य भावान्तरकल्पनमनुपपन्नं । विदुषस्संन्यासः अविदुषो योगः इति क्वापि भगवतानुक्तत्वात् । "ज्ञेयस्स नित्यसंन्यासी"त्यारभ्याद्यावधि योगजघन्यत्वस्यानुक्तत्वात् । एतयोर्यच्छ्रेय इति पृष्टवन्तं प्रति वस्तुतोऽप्रधानं प्रशस्यतरत्वेन विप्रलंभादुक्तौ निमित्ताभावात् ।। योगयुक्तं प्रति 'मुनिः' 'विशुद्धात्मा' 'विजितात्मा' 'तत्ववित्' इत्यादिशुद्धचित्तत्वबोधकशब्दानां प्रयुक्तत्वाच्च ।। आध्यायसमाप्ति कर्मयोगप्रकरणत्वेन तदनन्तर्भूतसंन्यासविधानानौचित्याच्च ।। तस्माच्छुद्धाशुद्धापेक्षया संन्यासयोगौ प्रधानाप्रधानभावापन्नाविति वाक्यार्थः क्लिष्टो मूलविरुद्धश्चेत्युपेक्षणीयः ॥

देशिकस्त्वाह संगतिं । "शरीराश्रितेन्द्रियप्राणेषु कर्तृत्वसंन्यासाभिधानानन्तरं तदाश्रये शरीरएव कर्तृत्वसंन्यासउच्यते इति सङ्गतिः" इति ॥ "नैव किंचित्करोमी"त्यारभ्य "फले सक्तो निबध्यते" इत्यन्तं इन्द्रियेषु कर्मणां संन्यासः प्रतिपादितः इति स मन्यते । अयं तु भ्रमः । किंच इन्द्रियेषु कर्मणां न्यस्तव्यत्वे कथिते सति शरीरेऽपि न्यासस्योक्तप्रायत्वेन पुनस्तदभिधानं व्यर्थमापद्यते । यदाहि जीवात्मापि स्वतन्त्रकर्ता न भवितुमर्हति तदा कुठार-

स्थानीयानां इन्द्रियाणां स्वतन्त्रकर्तृत्वं सर्वथा दूरोत्सारितमित्युपेक्ष्योऽयमिन्द्रियशरीरकर्तृतावादः ॥

श्रीमदाचार्यव्याख्याने तु योगसंन्यासयोर्यः परैःपरस्परविरहरूपो विरोधउक्तस्सनाभ्युपेयते । कर्मयोगप्रकरणोक्तयोरनयोर्योगसंन्यासयोर्यथा न विरोधस्तथा प्रागेव व्याख्यातमनुसन्धेय । संन्यासोह्यत्र रागद्वेषादिवर्जनं । योगो हि ईश्वरार्पणबुद्ध्या कर्मानुष्ठानं ॥ मिलितमुभयं कर्मयोगउच्यते । उभयोरपि कर्मयोगाङ्गत्वेन अङ्गयोः परस्परं वा अङ्गिना वा विरोधो न संभवति । एवं सत्याशये, 'कर्मयोगो विशिष्यते' इति भगवद्वचनस्य विपरीतार्थकल्पनमन्याय्यं भवति । केचन श्लोका अविद्वत्पराः इति कल्पनं च मूलविरुद्धं । कर्म स्वरूपतस्त्याज्यं इति चायुक्तं भवति ॥ तस्मादुभावपि संन्यासयोगौ निःश्रेयसकरावित्युक्त्वा रागद्वेषादिवर्जनमेवेह विवक्षितस्संन्यास इति किंचित्प्रपंच्य योगमाहात्म्यमुक्त्वा अन्यतरस्यालंतानिषेधपूर्वकं मिलितयोरेव पुरुषार्थसाधनत्वं च प्रसाध्य पुनस्संन्यासशब्दार्थं स्पष्टयति भगवानिति श्रीमदाचार्याभिमतो भावएव रमणीयः ॥ संन्यासशब्दार्थविवरणे, प्राक् 'नैव किंचित्करोमी'त्यादौ कर्तृत्वाभिमानत्याग उक्तः । इदानींतु कारयितृत्वाभिमानत्यागोऽपीति स्पष्टीकरणं विज्ञेयं ॥ कर्तृत्वकारयितृत्वाभिमानत्यागो नाम भगवानेव स्वपूजात्मकानि मच्छुभार्थं मयाकारयति मम कर्तृताशक्तिरपीशाधीनेत्यनुसन्धानरूपः ॥

यदि मन्येरन्पद्याक्षराणि सर्वकर्मणां स्वरूपतस्त्यागं देहे च तेषां न्यासमभिदधतीति तदनुपपन्नं । तथाहि ॥ स्वरूपतस्सर्वकर्मत्यागे देहधारणमप्यशक्यं प्रसज्येत । 'नहि कश्चित्क्षणमपी'त्युक्तिविरोधश्चापद्यते ॥ 'मनसा' इति श्लोकगतं पदं च व्यर्थं भवति ॥ तेन हि कर्तृत्वकारयितृत्वसंन्यासंप्रति करणमुक्तं । मानसपरित्यागेऽभिहिते सति बाह्यकर्मत्यागो न विहित इति स्फुटं । एतेन मनोनियमनस्य यदुक्तं प्राधान्यं तृतीयाध्याये 'कर्मेन्द्रियाणी'ति

तदानुगुण्यं च सिध्यति । 'मनसा' इति शब्दप्रयोगान्यथानुपपत्त्याऽभिमानत्यागोऽत्र विवक्षितो न तु कर्मणां स्वरूपतस्त्याग इति गम्यते ॥

संन्यासशब्देन सर्वथा कर्मत्यागमादाय शाङ्करास्तु कर्मण्यकर्मेत्यत्र तदीयव्याख्यानेषु यदुक्त कर्ममिथ्यात्वं तत्पुरस्कृत्य च श्लोकं व्याचक्षते । कर्माकर्मणोर्मध्ये कर्म मिथ्याऽकर्म तु सत्यं इति वादस्तु तत्रैव विस्तरेण निराकृतो द्रष्टव्यः । संन्यस्येत्येतस्य मिथ्यात्वमनुसन्धायेति व्याख्याने 'मनसा' इति विशेषणस्य सार्थक्यं न दृश्यते । किंच मनसेत्यन्तःकरणसामान्यवाचकस्य शब्दस्य विवेकज्ञानाख्यविशेषपरत्वे निमित्तं नास्ति । किच तदीयव्याख्यानेषु श्लोकस्थ 'देही'ति शब्दार्थनिरूपणावसरे भेदबोधकेनिप्रत्ययं प्रदर्श्य देहात्मविवेकवान् शब्दार्थ इति परिष्कृतं । देहीत्यनेनैव देहात्मविवेकरूपार्थस्य प्राप्तौ, मनसेत्यनेन तादृशविवेककथनस्य वैयर्थ्यं तदवस्थं ॥ किंच 'सर्वकर्माणि' इत्यनेन नित्यं नैमित्तिकं काम्यं प्रतिषिद्धं कर्मोच्यते इत्याहुश्शंकरमधुसूदनादयः । एतेषु प्रतिषिद्धस्य संन्यासस्त्वप्रसक्तः । तस्य विद्वन्मात्रकर्तृकत्वं चायुक्तं । नित्यनैमित्तिकयोस्त्यागस्तु नोचितः । काम्यत्यागस्तु बहुधा प्रपंचितः प्रागेव ॥ तस्मात्कर्मत्यागोऽत्राभिप्रेत इति पक्षो नोपपद्यते ॥

यच्छंकरानन्देन विस्तरतः प्रपंचितं दृश्यवस्त्वन्तर्भूतानां कर्मणां मिथ्यात्वदर्शनेन तद्बाध एव संन्यासशब्दार्थ इति तन्मूलाक्षराप्राप्तमित्युपेक्षणीयं ॥ मिथ्यात्ववाचकपदस्यादर्शनात् । किंच निर्विशेषब्रह्मवादस्य आस्ते सुखं वशी इति त्रीण्यपि पदानि गलग्राहीणि ॥ यास्कोक्तरीत्यास्तित्वं हि परिणामविशेषः । 'य एनं वेत्ती'त्यादि ग्रन्थैर्भावविकारनिषेधकैः प्रागेव प्रतिषिद्धश्च । वशीति जितेन्द्रियत्वं च जीवन्मुक्तस्यानुपपन्नं । वश्यसद्भावे हि वशी सिध्यति नत्वन्यतरमिथ्यात्वे ॥ 'सुख' इत्यप्यनुपपन्नं । तैरात्मनस्सुखवत्त्वस्यानभ्युपगमात् । दुःखाभावपरत्वंतु क्लिष्टं । अत एव सुखस्वरूपे-

ण तिष्ठतीति व्याख्याति शङ्करानन्दः । कदापि स्वरूपे सुखानुभवशून्यस्यात्मनो जडतुल्यत्वं प्रसज्यत इत्यास्तामस्य विस्तरः ।

इयमत्र श्लोकाक्षरयोजना निरवद्या विवृत्याचार्याभिमतानुसन्धेया ॥ वशी देही सर्वकर्माणि मनसा संन्यस्य नैव कुर्वन्न कारयन् नवद्वारे पुरे सुखमास्ते इति ॥ देहे आस्ते इति संबन्धः । केचिद्देहे संन्यस्येति योजयन्ति । यथा रामानुजादयः । इन्द्रियाणा शरीरस्य चैव कर्तृत्वं, आत्मनः कर्तृत्वं त्वाध्यासिकं वा औपाधिकं वेति ते मन्यमानास्तथा योजयन्ति ॥ इन्द्रियादिकर्तृत्वपक्षः प्रागेव प्रत्युक्त इतीयं योजना उपेक्ष्या ॥

पुरस्य नवद्वारता स्मृत्यादिप्रसिद्धा ॥ द्वे श्रोत्रे द्वे चक्षुषी द्वे नासिके वदनमेकमिति शिरासि सप्त । द्वे पायूपस्थाख्ये अध इति । नवद्वारविशिष्टो देहः ॥ यद्यपि कठवल्यां एकादशद्वाराण्युक्तानि "पुरमेकादशद्वारमजस्यावक्रतेजसः। अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते एतद्वैतत्" इति (II-5 1) श्रुतौ नाभिब्रह्मरन्ध्राभ्यां सहैकादशद्वारोक्तिरिति न विरोधः ॥

पुरस्य नवद्वारत्वोक्तौ को विशेषो विवक्षित इत्यालोचनीयं॥ अत्र शाङ्करा मन्यन्ते । इन्द्रियाणि परिचारकाः बुद्धिरमात्यः अहङ्कारो युवराजः मनः शिल्पीत्यादिपौरैरधिष्ठितत्वं विवक्षितमिति । एतेनानेकैः कर्मसाचिवैराधिष्ठितत्वादेवमुत्कृष्टो राजा तेषु कर्मसन्यासं कुर्वीतेत्यौचित्यप्रदर्शनाय पुरस्योत्कर्षस्सूचित इत्युक्तं भवति । देशिकस्तु शरीरस्य हेयत्वज्ञापनाय नवद्वारतोक्तिरित्यभिप्रैति । अनेनोक्तं 'नवद्वारे पुरे' इति निर्देशस्सावयवत्व निरवयवत्व, सच्छिद्रत्व निच्छिद्रत्व, पृथुत्वाणुत्व, स्वतन्त्रत्वपरतन्त्रत्वादिभिर्देहात्मनोर्विवेकस्य प्रदर्शनार्थः इति ॥

स्यादिदं नवद्वार इति विशेषणं उत्कर्षबोधकं वाऽपकर्षबोधकं वा । यस्तु कर्मनिक्षेपो द्वारयुते शरीरे कर्तव्यः इत्यभिप्रायः स शांकरदेशिकयोस्समानः । स तु न प्रत्याययति ॥ भगवत्येव संन्यासस्योचितत्वात् । तस्यैव सुखावहत्वात् ॥

इदं खलूक्तं श्रुतावपि 'पुरमेकादशद्वार' मित्यनेन मन्त्रेण । अजस्यावक्रचेतसो भगवतः पुरमेकादशद्वारमिति दृढं मन्यमानो विमुच्यते इति हि मन्त्रार्थः ॥ गीतायां च कर्तृत्वकारयितृत्वाभिमानं परित्यज्य भगवति तानि समर्प्य निर्लिप्तस्सन् द्वारयुते गेहे सुखमास्त इति समानार्थत्वं मन्त्रेणावगम्यते ॥ अस्मिन्नर्थे द्वारस्थानां इन्द्रियाणां तद्देवतानां उत्कर्षध्वनिर्वा स्यादपकर्षध्वनिर्वा ॥ अयं देहः पराधीनः देहिनस्तु न तत्र स्वातन्त्र्यं इति तु प्रधानाशयो न विस्मर्तव्यः ॥ अयंचस्यादभिसन्धिः ॥ द्वाराणामनेकत्वात्कामाद्यरिप्रवेशस्य बहुतरमवकाशे विद्यमानेऽपि वशी सन् द्वारयुतेऽपि देहे सुखी स्यात् । इति ॥

विवेक्यविवेकिनोरुभयोरपि देहे वासस्य साम्येन पुरे देही आस्ते इति वचनं निरर्थकमित्याशंक्य देहात्मविवेक्येव अहमस्मि प्रवासीव देहे नाहं देहः इत्यनुसंधत्ते । अविवेकी तु अहं देहः इति देहात्मतादात्म्यभ्रान्त्या कलुषितः । अतस्स देहे आस्ते इति न वक्तुं शक्यते । इति शाङ्करास्समाधानमाहुः ॥ अत्र वक्तव्यं । 'अहं देहः' इति प्रतीतिरप्रसिद्धा प्राणिषु कुत्रापि । अविवेक्यपि मम देह इत्येव मत्वा व्यवहराति । एवमनुभवो वेङ्कटनाथेनाप्यभ्युपगतः । 'यद्यप्यहं गेहीतिवदहं देहीत्येव सर्वस्य प्रतीतिः' इति ॥ अतो यदुक्तं शंकरभाष्ये "नहि देहमात्रात्मदर्शिनो गेहइव देहआस इति प्रत्ययस्संभवति" इति तच्चिन्त्यं ॥ कृष्णोऽहं कृशोऽहमित्यादिप्रतीतयस्तु अहं देहइत्याकारकतादात्म्याध्यासं न साधयन्ति ॥

देहे देहिनो वासस्सुज्ञाज्ञयोस्समान इत्यस्य किमुत्तरं? एको भेदानुसन्धानवान् अपरस्तु तच्छून्यः इति ह्युक्तं ॥ अनुसन्धानभावाभावौ कथमक्षरलब्धावितिचेत् पुरे संन्यस्य देही आस्ते इति योजनामाश्रित्य संन्यासस्य विवक्षितानुसन्धानगर्भितत्वेन समाधेयं ॥ इन्द्रियादिकर्तृत्ववादस्यासांगत्यं प्रागेवोक्तमिति पुरे संन्यस्य इति योजना न रम्या भाति ॥

नीलकण्ठस्तु 'सर्वकर्माणी'त्यारभ्य 'पुरे' इत्यन्तं वाक्यमेकं 'देही नैव कुर्वन्न कारयन्' इति वाक्यं भिन्नं इति विभज्याद्यं समाधिस्थपरं द्वितीयं व्युत्थितपरमित्यभिप्रैति ॥ इयमस्य व्याख्या । 'वशी जितचित्तः समाधिस्थो योगी नवद्वारे, नवैव पंचज्ञानेन्द्रियाणि षष्ठः प्राणस्तेनैव तत्प्रवर्त्यानां कर्मेन्द्रियाणां संग्रहः । बुद्ध्यहंकारचित्तानीति नव । एतानि द्वाराणीव पुरपतेर्जीवस्य भोगार्थं विषयप्रवेशस्थानानि यस्मिन्नवद्वारे शरीराख्ये पुरे, विचित्रवासनाकल्पितानन्तविषयवति, अनेकैः कर्मसचिवैरधिष्ठिते सुखदुःखादिनानापण्यवति मनसा सर्वद्वारोद्घाटनकुंचिकया सह सर्वाणि कर्माणि पुरपतिरिव राजकार्याणि संन्यस्य सुखं निर्विकल्पकसंविन्मात्ररूपेणास्ते ॥ देही सन् देहाभिमानकाले व्युत्थानकालेऽपीत्यर्थः । तदापि नैव कुर्वन्न कारयन्नास्ते । राजेवामात्येषु निहितभारः' इति ॥ इदमसङ्गतं । संप्रज्ञातासंप्रज्ञातयोगिनामत्र सङ्गत्यभावात् ॥ ज्ञानेन्द्रियकर्मेन्द्रियप्राणबुद्ध्यहंकारचित्तानां कुञ्चिकया मनसा सह त्याग उक्त इत्यर्थस्तु न मूलाक्षराल्लभ्यते । उत्कर्षदीपिकायां चेदं व्याख्यानं निरस्तं । यथोक्तं तत्र ॥ "तदपि असङ्गतमेव । चित्तस्य वृत्तिनिरोधापेक्षया वस्त्रादित्यागवदितरत्यागाप्रसिद्ध्या मनसा सहेति सहशब्दाध्याहारेण वर्णितस्य पुनरुक्तिग्रस्तत्वात् । मृतशरीरस्य पुरस्य सत्त्वेऽपि परोक्तद्वाराणामभावेन नवद्वाराणि यस्मिन्नित्युक्तेरनुचितत्वात् । निर्विकल्पसमाधिस्थस्य भोगप्राप्तिद्वाराणां लयादहं देहाद्भिन्नइत्येतावन्मात्रभानस्याप्यभावात् 'नवद्वारे पुरे आस्ते' इत्यस्य वैयर्थ्यापत्तेश्चेति दिक्" इति ॥

स्वातन्त्र्याभिमानाख्यमानसव्यापारं हित्वेत्यर्थमनाश्रित्य गीतोक्तमनसेति शब्दस्य सार्थक्यं स्वारस्यं वाऽपश्यन्तः परे सहशब्दमध्याहृत्य मनसोऽपि परित्याज्यत्वं नीलकण्ठवत्केचिद्वदन्ति ॥ तथाह्येकः उत्कर्षदीपिकायामुदाहृत आह "वशी विवेकवैराग्यसंपन्नो नवद्वारे पुरे मानुषे शरीरे सुखमास्तइति

संबन्धः । यद्यपि नवद्वारं श्वमार्जारादिशरीरमपि भवति । तथापि वशिशब्द-संयोगान्मानुषमिति लभ्यते । सुखमिति क्रियाविशेषणं । अनेनान्तःकरणस्य हर्षशोकादयः परिणामा निराकृताः । वशीत्यत्र वैराग्योक्त्या रागाद्यपरपर्याय-कामतदवस्थाविशेषक्रोधरूपान्तःकरणपरिणामौ वारितौ । विवेकोक्त्या चाहं-कारतन्निबन्धनममकाराध्यासौ चिन्तनात्मकचित्तपरिणामं च निराकृत्य विशुद्धचिदाकारतया बुद्धेरवस्थानमुक्तं । ततश्च विशुद्धचिदाकारबुद्धिपरिणाम एव निष्कृष्टो वशिशब्देनोक्तः ॥ किं कृत्वेत्यत आह—मनसा सह सर्वकर्माणि संन्यस्य ॥ त्यागेन ज्ञानमुपलक्ष्यते । ततश्च सन्यस्यात्मानं ज्ञात्वा सुखमास्ते इति ज्ञेयं। वशिनं विशिनष्टि अदेहीति । देहो लिङ्गशरीरं । तद्रहितः । अयमाशयः । षोडशकलात्माहि पुरुषः । तत्र भूतेन्द्रियप्राणाः प्रवर्त्याः । प्रवर्तकमन्तः-करणं । तच्च बुद्धिसंकल्पकतया । सर्वो हि बुद्ध्या निश्चित्य मनसा संकल्प्य प्रवर्तते । तत्र मनस्त्यागेन विज्ञानकर्मत्यागस्संभवतीति केदानीं लिङ्गदेहः । नहि शिरसि छिन्ने कबन्धो देहतां प्रतिपद्यत इति मनसेत्युक्तं । बुद्धिस्तु सर्वाकारपरित्यागेन चिन्मात्रउपसंक्रान्ता ॥ अहंकारादीनां तु कथापि विवेकेनोन्मूलिता " इति ॥

(इदं बहु क्लिष्टं व्याख्यानमुत्कर्षदीपिकाकारेणैव निरस्तमिति न नस्तत्र भारः । यथोक्तमुत्कर्षदीपिकायां "वशिशब्दयोगं विनापि सर्वकर्माणीत्यादे-र्योगात् प्रकरणाच्च मानुषशरीरमेवोपलभ्यते । सर्वकर्माणि संन्यस्येत्यनेन निषि-द्धादिमननरूपमानसकर्मत्यागे मनस्त्यागसिद्ध्या त्यागकरणस्यापेक्षितत्वेन च सहशब्दमध्याहृत्य पृथङ्मनस्त्यागवर्णनमसंगतं । किंच विवेकयुक्तत्वमेव मनस्त्यागोऽतो विवेकयुक्तेन मनसा सर्वकर्माणि संन्यस्येत्येव युक्तं । एतेन वशिशब्देन विवेकवैराग्ययुक्तत्ववर्णनं प्रत्युक्तं । वशिशब्दस्य स्वतन्त्रवा-चित्वेन जितेन्द्रियत्वप्रतीत्या इतरोक्तार्थस्यार्थिकत्वात् । यदप्यदेही शरीररहित इति तदपि न । भेदबोधकेनिप्रत्ययेन देहादितरा

वर्णनस्यैव नवद्वारे पुरे आस्ते इत्यस्य योगेन स्वारसिकत्वेन प्रश्लेषेण कल्पनाया अन्याय्यत्वात्" इति ॥

एतेन असंप्रज्ञातसमाध्यवस्थामग्नत्वं वा लिङ्गशरीरवैधुर्यं वा न वाक्यार्थ इति स्थितं । इन्द्रियादीनां मनसश्च स्वरूपतस्त्यागोऽपि नार्थ इति च ज्ञायते । मनसा सहेति योजनस्यायुक्तत्वात् । यदभिमतं परेषां 'मनसा' इति तृतीयया करणत्वं गम्यते इति साधुभाषितं तत् । मनश्शब्देन देहात्मविवेकबुद्धिरुच्यत इति परपरिष्कारस्तु न शब्दार्थ इत्युपेक्ष्यते । तस्मान्मनसा संन्यासो नामाभिमानत्यागरूप इति स्फुटं । अभिमानत्यागाख्यः संन्यासस्तु न कर्मकरणविरोधीति कर्मयोगे संन्यासिनोऽप्यधिकारउक्तो भवति । भगवत्स्वातन्त्र्यज्ञानी स्वयं न किंचिदपि करोति कारयति वा ॥ स्वातन्त्र्याभिमानस्य न्यस्तत्वात् अनेकद्वारयुते पुरे वसन्नपि वशी सर्वयोगक्षेमवाहिनि भगवति न्यस्तसमस्तभारस्सुखं आस्ते ॥ प्राकृतेन्द्रियादिषु भारन्यासे तु न कदापि स्यात्सुखमित्यतस्तथाव्याख्यानमसङ्गतं ॥ स्वरूपतः कर्मसामान्यस्य परित्यागउक्तः इति वदन्तो मनसेति शब्दस्वारस्यं प्रकरणस्य कर्मयोगानुष्ठानविधायकत्वं च नालोचितवन्तः ॥ तस्माद्विवृत्युक्तमेवात्र निरवद्यमिति ध्येयम् ॥

'नैव कुर्वन्न कारयन्' इति गीतोक्त्या परमात्मनोऽपि कर्तृत्वकारयितृत्वे निवारिते इति शङ्करानन्दो व्याख्याति ॥ उक्तमनेन । "निरवयवत्वात्परमात्मा स्वयं नैव किंचित्करोति । नाप्यन्यान्कारयति चेत्यर्थः । नहि निरवयवे परिपूर्णे च वस्तुनि चलनक्रिया कल्पयितुं शक्यते । प्रमाणविरोधात् । नहि निरवयवे पूर्णे आकाशे चलनं संभवति । तद्वदात्मन्यपि नित्यस्सर्वगतस्थाणुरित्यात्मनः पूर्णत्वनिष्क्रियत्वयोः प्रतिपादितत्वात् ॥ ननु परमात्मनो निरवयवस्य निष्क्रियस्य कर्तृत्वकारयितृत्वयोरसंभवे 'सर्वाधिपत्यं कुरुते महात्मा' 'एष एव साधु कर्म कारयति' 'एषत आत्मान्तर्याम्यमृतः'

इत्यादिश्रुतीनामात्मनः कर्तृत्वकारयितृत्वप्रतिपादकानामप्रामाण्यं स्यादिति चेन्न। सन्निधिमात्रेणात्मनस्तथात्वसंभवाद्यथा सूर्यसान्निध्यात्तमो निवृत्तौ सत्यां तन्निवृत्तिं सूर्यः करोतीत्युपचर्यते, यथा चुंबकसान्निध्यादयसि चलतिसति तच्चलनं चुंबकमयश्चालयतीति चुंबके उपचर्यते तथात्मसान्निध्यात्प्रकृतौ विजृंभमाणायां तद्विजृंभणं सर्वाधिपत्यं परमात्मन्युपचर्यतेऽविकारिण्येव। तथैवात्मसान्निध्याद्बुद्ध्यादेः प्रवृत्तौ सत्यां बुद्ध्यादीनात्मा प्रवर्तयतीति तत्प्रवृत्तिरात्मन्यविक्रिय एवोपचर्यते परमात्मा करोति कारयतीति॥" इत्यादि॥

इदमसत्। यदनेनाभिप्रेतं परमात्मा निष्क्रियः निरवयवत्वात् इति तत्र हेतुस्स्वरूपासिद्धः। निरवयत्वस्याप्रामाणिकत्वात्। येतु 'निष्क्रियं निष्कलं' इत्याद्यागमाः तत्र प्रमाणीकृतास्ते प्राकृतक्रियादिराहित्यपरा इत्यन्यथोपपद्यन्ते॥ 'जन्माद्यस्य यतः' इत्युक्तावपि परमात्मनस्सर्जनादिकं नास्तीति कथनं वैयात्यमूलं॥ तमोनिवृत्तिं सूर्यो न करोति॥ चुम्बकमयो न चालयतीति वदन् लोकानुभवमतिक्रम्य भाषते। तमस्स्वयं निवर्तते। सूर्ये तु तन्निवृत्तिरूपचर्यते इति कोऽभ्युपगच्छति? अयस्स्वयं चलति चुम्बकं त्वकिंचित्करमिति वादश्च न संमतः पदार्थतत्वविदां॥ चुम्बकसान्निध्यादयश्चलतीत्युक्तौ सान्निध्यस्य कार्यं प्रति निमित्तत्वमभ्युपेयं॥ अन्यथाऽनवस्थितेः। चुम्बकस्य सामर्थ्यविशेषाभावे तत्सान्निध्यस्य कथं स्यादाकर्षणशक्तिः। एवं प्रकृतिर्विजृंभते परमात्मसान्निध्यादित्युक्तौ सान्निध्यस्य निमित्तकारणत्वेन महिमा वर्णितो भवति। सन्निधानस्याथवा जडजातस्य प्रकृत्यादेः प्रवृत्तिं प्रवर्तक्त्वंच वदन्तस्सन्तः सर्जनादिकर्तृत्वप्रतिपादकानन्तप्रमाणानां केवलमुपचरितार्थत्वमङ्गीकुर्वाणाः कथं नाम वैदिकाश्शास्त्रविद [illegible] नाकाशवदेव चलनराहित्यमभ्युपेयमिति को नियमः॥ 'अणोरणीयान्महतो महीयान्' 'आसीनो दूरं व्रजती'त्यादिना भगवदचिन्त्यशक्तिनिर्वाह्यत्वात्सर्वकर्मणामुक्तक्षुद्रयुक्तयोऽकिंचित्करा इत्युपेक्ष्याः॥ तस्मात् 'नैव कुर्वन्न कारय'न्निति

जीवस्य स्वतन्त्रकर्तृत्वकारयितृत्वे एव निषिध्येते न परमात्मनः ॥ इत्यलं विस्तरेण ॥

**न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः।**
**न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ १४ ॥**

वि० ॥ ननु दर्शनादि कुर्वन्नैव करोमीति मन्येतेत्युक्तिरयुक्ता। तथात्वे मिथ्याज्ञानित्वप्रसङ्गादित्यतः स्वाभिप्रायमाह ॥ नेति। जडमपेक्ष्य प्रभुः समर्थो जीवः लोकस्य कर्तृत्वं लोकेन कर्म न सृजति न कारयति स्वातंत्र्येणेत्यर्थः॥ स्वयं च कर्माणि न सृजति न करोति ॥ कर्मण्यस्वातन्त्र्ये फले सुतरां तदित्याह ॥ न कर्मेति । सृजतीत्यनुषङ्गः। कर्मफलप्राप्तिं लोकस्य न सृजति ॥ लोकस्य फलप्राप्तिसंपादने स्वस्य वा फलसंपादने न स्वतन्त्र इत्यर्थः ॥ स्वातन्त्र्याभावापेक्षया न करोमीति मन्येतेत्युक्तिरिति भावः। (यद्वा जीवस्य स्वतन्त्रकर्तृत्वाभावेऽपीश्वरदत्तं क्रियायां क्रियाजन्यादृष्टे कर्मफलप्राप्तौ चास्त्येव स्वातन्त्र्यमतः कथं ब्रह्मण्याधाय कर्माणीति सर्वाणि कर्माणि संन्यस्येति चोक्तिरित्यत आह ॥ नेति। प्रभुरीश्वरः लोकस्य जीवस्य कर्तृत्वं अग्निहोत्रादिक्रियायां स्वातन्त्र्यं न सृजति ॥ न प्रयच्छति। कर्माणि क्रियाजन्यादृष्टानि लोकस्य न सृजति

तेषु स्वातन्त्र्यं न प्रयच्छति। कर्मफलसंयोगं च लोकस्य न सृजति। फलप्राप्तावपि लोकस्य स्वातन्त्र्यं न प्रयच्छतीत्यर्थः॥ ननु क्रियायामदृष्टेषु फलसंयोगे च जीवस्य स्वातन्त्र्याभावे कथं क्रियादिनिष्पत्तिरित्यत आह। स्वभावस्त्विति॥ स्वं स्वयमेव भवति। परानपेक्षं तिष्ठति। तथा स्वयमेव भावयति जगदुत्पादयतीति स्वभावः। स्वेतिपदे उपपदे भवतेर्ण्यंतात्कप्रत्ययः। स्वस्थितावन्यकरणे च परानपेक्षः। स्वतन्त्रो भगवान् स्वभावशब्दार्थः। स एव च प्रवर्तते क्रियाकर्तृत्वे कर्मशब्दितादृष्टेषु फलसंयोगे चेति ध्येयम्॥ कदापि कुत्रापि नान्यस्य स्वातन्त्र्यं ददाति। किंतु सर्वत्र सर्वदा स्वयमेव प्रवर्ततइति भावः॥

शं० ॥ न कर्तृत्वमिति। न कर्तृत्वं स्वतः कुर्विति नापि कर्माणि रथघटप्रासादादीनीप्सिततमानि लोकस्य सृजत्युत्पादयति प्रभुरात्मा॥ नापि रथादिकृतवतस्तत्फलेन संयोगं, न कर्मफलसंयोगं। यदि किंचिदपि स्वतो न करोति न कारयति च देही कस्तर्हि कुर्वन्कारयंश्च प्रवर्ततइत्युच्यते। स्वभावस्तु स्वो भावः स्वभावोऽविद्यालक्षणा। प्रकृतिर्माया प्रवर्तते दैवीह्येषा गुणमयीत्यादिना वक्ष्यमाणा॥

रा० ॥ साक्षादात्मनस्स्वाभाविकरूपमाह—

   

अस्य देवतिर्यङ्मनुष्यस्थावरात्मना प्रकृतिसंसर्गेण वर्तमानस्य लोकस्य देवाद्यसाधारणं कर्तृत्वं तत्तदसाधारणानि कर्माणि तत्तत्कर्मजन्यदेवादिफलसंयोगं चायं प्रभुरकर्मवश्यः स्वाभाविकस्वरूपेणावस्थितआत्मा न सृजति नोत्पादयति ॥ कस्तर्हि । स्वभावस्तु प्रवर्तते ॥ स्वभावः प्रकृतिवासना ; अनादिकालप्रवृत्तपूर्वपूर्वकर्मजनितदेवाद्याकारप्रकृतिसंसर्गकृततत्तदात्माभिमानजनितवासनाकृतमीदृशं कर्तृत्वादिकं सर्वं न स्वरूपप्रयुक्तमित्यर्थः ॥

विचारः

" नैव किंचित्करोमीति युक्तो मन्येत तत्ववित् " इत्युक्तं । जीवस्य कर्तृत्वंतु प्रत्यक्षसिद्धं । तस्मादकर्तृत्वानुसन्धाने मिथ्याज्ञान्ययं भवेन्नतु तत्ववित् इत्येका शंका ॥ " ब्रह्मण्याधाय कर्माणि " इत्युक्तं । ब्रह्मणा जीवेभ्यस्स्वातन्त्र्यं दत्तमिति हि सिद्धान्तः । तस्मात्किमिति कर्माणि ब्रह्मण्याधीयन्ते इत्यपरा शंका ॥ जीवानां कर्तृत्वादौ न स्वातन्त्र्यं इत्यतः नैव किंचित्करोमीत्यनुसन्धानं यथार्थमेवेत्याद्यशंकाया उत्तरं ॥ ईश्वरस्स्वस्वातन्त्र्यं स्वयं वहति । जीवेभ्यः केषुचिदपि कर्मसु स्वातन्त्र्यं प्रदाय नेश्वरः स्वस्वातन्त्र्यभ्रष्टो भवतीति द्वितीया शंका समाधीयते । अभिप्रायद्वयमपि " न कर्तृत्वं " इति श्लोकेन लभ्यते ॥ अत्र प्रथमार्थे प्रभुः इति जीवः । द्वितीयार्थे प्रभुरीश्वरः । आद्ये योजना अर्थश्चैवं ॥ प्रभुः (जीवः) लोकस्य कर्तृत्वं न सृजति (इतरजनान् स्वातन्त्र्येण न प्रवर्तयतीति यावत् ) । प्रभुः (जीवः) स्वयं कर्माणि न सृजति । न करोतीति यावत् । अत्र द्वितीयोक्तवाक्ये ' लोकस्य ' इति शब्दो न पठित इति द्रष्टव्यं । तस्य तत्रोपयोगाभावात् ॥ यदा स्वातन्त्र्येण जीवो न कर्ता लोकस्य न कारयिता च किमुवाच्यं फलप्राप्तौ प्रापयितृत्वे

च स परमासमर्थ इति ॥ अत उक्तं न कर्मफलसंयोगं सृजतीति । कस्तर्हि स्वतन्त्रः कर्ता कारयितेत्याकांक्षायामाह स्वभावस्त्विति ॥ स्वयमेव भवति भावयति इति स्वभावो भगवान् । तु शब्दः पूर्ववैलक्षण्यपरः । परमात्मा स्वतन्त्रस्सर्वकर्मसु सर्वदा प्रवर्तते इत्यर्थः ॥ जडापेक्षया समर्थत्वेन जीवस्य प्रभुत्वमुपपन्नं । 'नवद्वारे पुरे देही' इति पुरस्वामित्वस्योक्तेरत्रापि तत्स्मारितं प्रभुत्वं उपपद्यते ॥

प्रभुशब्देनेश्वरो विवक्षित इत्यपि साधुः । अयं गीतातात्पर्याभिमतोऽर्थः । तथाहि । प्रभुरीश्वरः लोकस्य जीवसङ्घस्य कर्तृत्वं क्रियास्वातन्त्र्यलक्षणं न सृजति न प्रयच्छति । प्रभुरीश्वरः कर्माणि लोकस्य न सृजति । क्रियायामदृष्टोत्पादने स्वातन्त्र्यं लोकस्य न प्रयच्छति । कर्तुरीप्सिततमङ्कर्मेत्युक्तेः क्रियया प्राप्तुं योग्यं अदृष्टादिकं कर्मशब्देनोच्यते । कस्तर्हि प्रवर्तते इत्याकाङ्क्षायामाह । स्वभावस्त्वति । स्वभावशब्दः पूर्ववत्परमात्मवाची । स्वतन्त्रो भगवान् प्रवर्तत इत्यर्थः ॥ तस्माज्जीवस्य स्वतन्त्रकर्तृत्वं निषिध्येश्वरस्य तत्साधयति पद्यमिति श्रीमदाचार्याशयः ॥

"स्वातन्त्र्याद्भगवान्विष्णुः स्वभाव इति कीर्तितः । तत्स्वातन्त्र्यं कदाप्येष नान्यस्य सृजति क्वचित् ॥ स्वातन्त्र्यादेव पापादिसंबन्धः कुर्वतोऽपि न । अज्ञानावृतबुद्धित्वादीदृशं तं न जानते" इति महावाराहवचनं तात्पर्योदाहृतम् ॥

स्वभावशब्दः परमात्मपर इति व्याख्यानं क्लिष्टमिति न मन्तव्यं । उदाहृतप्रमाणवचने तथा निरुक्तत्वात् । जडस्य स्वतः प्रवृत्त्ययोगात्प्रसिद्धार्थग्रहणानुपपत्तेश्च ॥ अनया दिशा प्रभुस्वभावशब्दौ शङ्करानन्देनापि व्याख्यातौ द्रष्टव्यौ । तेन ह्युक्तं । "प्रभुः । प्रकर्षेण स्वयमेव सर्वत्र भातीति वा सर्वं भासयते इति वा सर्वात्मना भातीति वा प्रभुः । स्वयमेव सर्वं भावयतीति

वा स्वं भावयतीति वा स्वभावः प्रकृतिर्वासनामयी " इति ॥ व्युत्पत्तिमार्ग-प्रदर्शनायैव शंकरानन्दोदाहरणं कृतं न तु तदुक्तार्थस्यास्मदिष्टत्वाशयेनेति ज्ञेयम् ॥

केचिदीश्वरस्यापि कर्तृत्वं निषेधन्ति ॥ तथाहि शाङ्कराः ॥ तेषां बहुप्रमाणविरोधो द्रष्टव्यः ॥ 'अहं सर्वस्य प्रभवः' 'परास्य शक्तिः' 'न ऋते' 'देवस्यैष स्वभावोऽयं' 'लोकवत्तु लीलाकैवल्यं' इत्यादयः स्मर्तव्याः ॥

'हरिस्स्वभावतः कर्ता सर्वमन्यत्तदीरितं । अतस्सा कर्तृता तस्य न कदाचिद्विनश्यति' इति पैङ्गि श्रुतिः (ता०) ॥

'एष साधुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष एवा-साधुकर्म कारयति तं यमेभ्यो लोकेभ्योऽधो निनीषते' इत्यादिश्रुतयः, 'अज्ञो जन्तुरनीशोऽयमात्मनस्सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा' इत्यादिस्मृतयश्च प्रमाणम् ॥

मूले यदि ईश्वरस्यैव कर्तृत्वाद्यभाव उच्यते तदा लोकस्य कर्तृत्वादिकं न सृजतीति व्यर्थं स्यात् ॥ तथाच लोकस्येति प्रयोगसार्थक्यपर्यालोचनायां ईश्वरः कर्ता स्वातन्त्र्यं लोकस्य तु न ददातीत्येव रम्यम् ॥

रामानुजाचार्यशङ्कराचार्यौत्वात्मनः कर्तृत्वनिषेधपरतयैव श्लोकं व्याकुर्वतः । तदीयेषु केचिज्जीवमात्रकर्तृत्वं निषेधन्ति। केचिज्जीवेश्वरब्रह्मणां केचिज्जीवब्रह्मणोरित्यवान्तरवैचित्र्यं चावगम्यते ॥

एवमात्मनः कर्तृत्वाद्यभाववादिषु च केचिद्वासनायाः कर्तृत्वादिकं प्रतिपन्नाः । अन्ये स्वभावस्य तद्वदन्तः । पुनरन्ये मायाशब्दितप्रकृतिरेव कर्त्री कारयत्रीति वदन्ति ॥ एते प्रभेदाः किंचिद्विचारमपेक्षन्ते ॥

(स्वभावशब्दं प्रकृतिवासनाविषयत्वेनादाय तस्या एव प्रवृत्तिमत्त्वं प्रवर्तकत्वं च वदन् रामानुजाचार्यः, प्रभुशब्देन जीवं गृह्णन्कर्तृत्वादिकं तस्य निषेधति ॥( यथाह देशिकः "प्रकरणवशात्प्रभुशब्दोऽत्र जीवविषयः । अत्र हि प्रकरणे, मयि सर्वाणीत्यादिना जीवस्य कर्तृत्वं परमात्मन्यध्यस्यते; अतोऽत्राकर्तृविषयः प्रभुशब्दो न परविषयः" इति । किंच वासनायाः कर्तृत्वादिसमर्थनावसरे सयुक्तिकं पूर्वपक्षं प्रदर्शयति देशिकः "ननु चेतनस्यात्मनः कर्तृत्वादिकं नास्ति अचेतनायास्तु वासनायाश्चेतनगुणमात्रभूतायाः कर्तृत्वादिकमिति कथमिदं ज्ञायते ॥ यद्यात्मनस्स्वतश्शुद्धस्य न कर्तृत्वं तर्हि तस्य वासनापि कुतस्समागता । यदि न कुतश्चित् तदा वासनैव स्वाभाविकीति तत्कृतकर्तृत्वादिकमपि स्वाभाविकं स्यात् । यदि कुतश्चिद्धेतोः तदा तस्यापि स्वाभाविकत्वे पूर्वदोषः । औपाधिकत्वेत्वकर्तुरात्मनस्तदागमोऽपि कुतः । यदि वासनया तर्ह्यन्योन्याश्रयणम् । यद्यन्यस्मात्कुतश्चित् तत्रापि तथैवेत्यनवस्थेत्यादिचोद्यं" इति ॥ एवमाशंक्य समाधत्ते । "बीजांकुरन्यायादन्योन्याश्रयादिपरिहारः" इति ॥

(अत्र वक्तव्यं । प्रकरणबलाज्जीव एव प्रभुशब्दार्थ इत्यवधारणे नियामकं न ज्ञायते । 'मयि सर्वाणि' 'ब्रह्मण्याधाय' इत्यादिवचनैरीश्वरस्यापि प्रसक्तत्वात् । न च वाच्यं ईश्वरस्य कर्तृत्वेन प्रमितत्वादकर्तेत्युक्तो जीव एव न पर इति ॥ अकर्तेत्यस्य स्वातन्त्र्येण कर्ता नेति व्याख्यानस्य सुगमत्वात् । वासनायाः कर्तृत्वनिरूपणाय यः पूर्वपक्षग्रन्थो रचितस्सबलवान् दृश्यते । बीजाङ्कुरन्यायमाश्रित्य समाधान तु नीरसं । तस्मात्स्वयं प्रदर्शितपूर्वपक्षबलादेव वासनाकर्तृतावादोऽनुपपन्नः । 'एष एव साधुकर्म कारयती'त्याद्युक्तेः अचेतनस्य स्वतः प्रवृत्त्यनुपपत्तेश्चायं वादोऽप्रामाणिकः ॥

( अद्वैतमते जीवेश्वरब्रह्मणां भेदाभावात् गीतास्थप्रभुशब्दो जीवपरो वा ईश्वरपरो वा ब्रह्मपरो वेति विचारस्य नास्त्यवकाश इव भाति ॥ तथापि

केचिज्जीवपरतया केचिदितरपरतया प्रभुशब्दं व्याचक्षते ॥ स्वभावशब्दं तु मायाऽविद्याप्रकृतिवासनाद्यर्थत्वेन सर्वेऽपि प्रायश आहुः ॥ आह वेंकटनाथ. । "प्रभुः पूर्वोक्तनवद्वारपुरस्वामी जीवात्मा लोकस्य लोक्यमानस्य देहादेः कर्तृत्वं न सृजति । त्व कुर्विति नियोजनेन तस्य कारयिता न भवतीत्यर्थः । नापि लोकस्य कर्माणि ईप्सिततमानि घटादीनि स्वयं सृजति । कर्तापि न भवतीत्यर्थः" इति ॥ उक्तरीत्या मनसा संन्यासादात्मनोऽकर्तृत्वं वा अथवा स्वभावादेवाकर्तृत्वं वेति सन्देहे द्वितीयमेव तत्वमिति बोधनाय गीतापद्यं जीवात्मनः कर्तृत्वादिकं निषेधतीति वेंकटनाथाशयः ॥ अत्रोच्यते.। ईश्वरब्रह्मणी व्यावृत्य जीवात्ममात्रग्रहणेऽस्याऽभिप्रायो न ज्ञायते ॥ तन्मते त्रयाणामेकत्वात् ॥ 'लोकस्तु भुवने जने' इत्युक्तं विहाय लोक्यत इति व्युत्पत्त्या लोकस्येत्यत्र देहादिग्रहणमनुचितम् ॥

जीवेश्वरब्रह्मणामैक्यविवक्षयैव आत्मनः कर्तृत्वादिकं निषेधन्त्यन्ये शांकराः। तत्रापि कस्तर्हि प्रवर्तते इति विचारे स्वभावशब्दं प्रसिद्धार्थवाचकतया व्याख्याति नीलकण्ठः ॥ यथोक्तमनेन । "यो यादृक् यस्य स्वभावः स तथा प्रवर्तते । यथा सूर्येऽभ्युदिते कमलानां विकसन कुमुदानामुन्मुद्रणं चेति तद्वदेवमात्मनि प्रकाशमाने घटादयो न चेष्टन्ते मनुष्यादयस्तु चेष्टन्ते। नत्वात्मा कस्यचित्प्रवर्तको वा निवर्तको वा । लोहाऽयस्कान्तयोरिव सत्यानृतयोरात्मानात्मनोस्संबन्धाभावात्" इति ॥ मनुष्याः चेष्टन्ते घटादयो न चेष्टन्ते स्वभाववैचित्र्यादिति स्वभावकर्तृतावादोऽपि जडस्य स्वतः प्रवृत्तिमालंबत इत्युपेक्ष्यः ॥

आत्मनो निष्क्रियत्वनिरवयत्वनिर्विशेषत्वादिकं पुरस्कृत्य कर्तृत्वादिकमिह वारितमिति शांकरा मन्यन्ते ॥ तेष्वभिनवगुप्ताचार्यस्त्वकर्तृत्वादिकमेवमाह ॥ "न कर्तृत्वमिति । यत एष आत्मा न किंचित्कस्यचित्करोति । प्रवृत्तिस्त्वस्य स्वभावमात्रं न फलेप्सया । तथाहि । संवेदना-

त्मनो भगवतः प्रकाशानन्दस्वातन्त्र्यपरमार्थस्वभावस्य स्वभावमात्राक्षिप्तसमस्तसृष्टिस्थितिसंहृतिप्रबन्धस्य स्वस्वभावान्नमनागप्यपायो जातुचिदिति न कर्त्रवस्थातिरिक्तं कर्तृत्वं किंचित्। * * अस्माच्चेतनः स्वतन्त्रः परमेश्वर एव तथा तथा भातीति न तद्व्यतिरिक्तं क्रियातत्फलादिकामिति सिद्धान्तः" इति ॥ एतेनेश्वरस्य सर्वात्मनाभानात्तदतिरिक्तपदार्थस्याभावेन कर्तृत्वं न तस्यास्ति इति गुप्ताचार्यव्याख्यानं शाङ्करमार्गं नानुसरतीति द्रष्टव्यम् ॥

ब्रह्म निर्विशेषं इति राद्धान्ते ब्रह्मणश्शून्यत्वमेवापद्यते इति गीतातात्पर्ये प्रतिपादितमास्तिकैः पठनीयं। तत्त्वोद्योतादिग्रन्थेष्वयमर्थो विचारितश्च। उक्तं गीतातात्पर्ये "न च सर्वविशेषराहित्यवादिनां शून्यवादात्कश्चिद्विशेषः। न हि सर्वविशेषरहितमित्युक्ते तदस्तीति सिध्यति। वाच्यत्वलक्ष्यत्वास्तित्वादीनामपि विशेषत्वात्। अन्यथास्तिब्रह्मेत्यादीनां शब्दानामपि पर्यायत्वाद्यो दोषाः। स्वप्रकाशत्वं च नामानं सिध्यति। ज्ञानं च ज्ञेयं ज्ञातारं च विना न दृष्टं। अतः शून्यवादान्नकश्चिद्विशेषः" इति ॥

ईश्वरकर्तृत्वं जीवानामीश्वरेण प्रयुज्यमानत्वं चाभ्युपेत्य वैषम्यनैर्घृण्यापत्तिपरिहारोपयुक्तत्वेन स्वभावशब्दस्य सार्थक्यं मन्वानः श्रीधरः पद्यं व्याख्याति। तथाहि। "ननु 'एष एव साधुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते। एष एवासाधुकर्म कारयति तं यमेभ्यो लोकेभ्योऽधो निनीषते' इत्यादिश्रुतेः परमेश्वरेणैव शुभाशुभफलेषु कर्मसु कर्तृत्वेन प्रयुज्यमानोऽस्वतन्त्रः पुरुषः कथं तानि त्यजेत्। ईश्वरेणैव ज्ञानमार्गे प्रयुज्यमानः शुभान्यशुभानि च त्यक्ष्यतीति चेत् एवं सति वैषम्यनैर्घृण्याभ्यां प्रयोजककर्तृत्वादीश्वरस्यापि पुण्यपापसंबन्धस्स्यादित्याशंक्याह" इति ॥

अत्र परमेश्वरः कर्म कारयति परन्तु तेन न स लिप्तः इति साधु भाषितं श्रीधरेण। यच्चोक्तं पुरुषोऽस्वतन्त्रो भगवता प्रयुज्यमान इति तदप्यु-

चितवचनमेव ॥ जीवेश्वरब्रह्मणां निष्क्रियत्वं नायमत्र पुरस्करोति इति च तोषं जनयति ॥ स्वभावस्तु प्रवर्तते इति वाक्यंतु नानेन सम्यग्व्याख्यातं । "स्वभावोऽविद्यैव कर्तृत्वादिरूपेण प्रवर्तते" इत्यनेनोक्तत्वात् ॥ तथापि स्वभावाद्यानुगुण्येन भगवान् प्रवर्तयतीति यदि आशयः स निर्दुष्टः ॥ यतोऽनेनैवोक्तं व्याख्योपसंहारे "अनाद्यविद्याकामवशात्प्रवृत्तिस्वभावं जीवलोकमीश्वरः कर्मसु नियुङ्क्ते न तु स्वयमेव कर्तृत्वादिकमुत्पादयति" इति ॥ किंचात्र वक्तव्यं वैषम्यनैर्घृण्यवादस्य नेह सङ्गतिस्सुगमेति ॥

तस्मादीश्वरस्वातन्त्र्यजीवपारतन्त्र्ये एव पुरस्कृत्य विवृत्याचार्योक्तमार्गेण व्याख्यानमेव निरवद्यं । प्रभुशब्दः जीवपरः ईश्वरपरश्च । लोकशब्दो न देहपरः नापि जडपरः किन्तु प्राणिपरः ॥ स्वभावशब्दस्तु भगवत्परएव । जीवः स्वतन्त्रकर्त्ता नेत्यतएवाकर्तेत्युच्यते । ईशाधीनकर्तृत्वं कारयितृत्वं चास्त्येव । अतो यथोक्त एव वाक्यार्थः ॥

**नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः ।**
**अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ १५ ॥**

वि० ॥ फलसंयोगे स्वातन्त्र्याभावं जीवस्य व्यनक्ति । नादत्ते इति । विभुः जडापेक्षया समर्थो जीवः कस्यचिद्दुराचारस्य सकाशात्तज्जन्यं पापं स्वातन्त्र्येण नादत्ते । सुकृतं पुण्यं च स्वातन्त्र्येण नैवादत्ते । एवं क्रियायामदृष्टे च ज्ञेयं । यद्वा भगवत एव कर्तृत्वे कर्मलेपस्स्यादित्यत आह ।

नादत्त इति । विभुः स्वतन्त्र ईश्वरः विभुत्वादेव कस्यचित्कर्मणः सकाशात्पापं सुकृतं वा नादत्त इत्यर्थः । न पुण्यपापलेपवान्भवतीत्यर्थः । नन्वेवं सर्वत्र स्थित्वा स्वातन्त्र्येण कर्ता ईश्वरोऽस्ति चेत् कथं न दृश्यतइत्यत आह । अज्ञानेनेति । तेनाज्ञानेनावृतबुद्धित्वेन मुह्यन्ति भगवन्तं न जानन्ति ॥

शं० ॥ परमार्थतस्तु नादत्ते न च गृह्णाति भक्तस्यापि कस्यचित्पापं न चैवादत्ते सुकृतं भक्तैः प्रयुक्तं विभुः । किमर्थं तर्हि भक्तैः पूजादिलक्षणं यागदानहोमादिकं च सुकृतं प्रयुज्यत इत्याह ॥ अज्ञानेनावृतं ज्ञानं विवेकविज्ञानं तेन मुह्यन्ति ॥ करोमि कारयामि भोक्ष्ये भोजयामीत्येवं मोहं गच्छन्त्यविवेकिनः संसारिणो जन्तवः ॥

रा० ॥ कस्यचित् स्वसम्बन्धितयाऽभिमतस्य पुत्रादेः पापं दुःखं नादत्ते नापनुदति । कस्यचित् प्रतिकूलतयाभिमतस्य सुकृतं सुखं च नादत्ते नापनुदति ; यतोऽयं विभुः । न क्वाचित्कः न देवादिदेहाद्यसाधारणदेशः । अत एव न कस्यचित्संबन्धी न कस्यचित्प्रतिकूलश्च । सर्वमिदं वासना कृतं ॥ एवंस्वभावस्य कथमियं विपरीतवासनोत्पद्यते । अज्ञानेनावृतं ज्ञानं । ज्ञानविरोधिना पूर्वपूर्वकर्मणा स्वफलानुभवयोग्यत्वायास्य ज्ञानमावृतं संकुचितं ; तेन ज्ञानावरणरूपेण कर्मणा देवादिदेहसंयोगस्तत्तदात्माभिमान-

रूपमोहश्च जायते । ततश्च तथाविधात्माभिमानवासना तदुचितकर्मवासना च; वासानातो विपरीतात्माभिमानः कर्मारम्भश्चोपपद्यते ॥

विचारः

जीवपारतन्त्र्येश्वरस्वातन्त्र्ये एव विवृणोति श्लोकः । दुराचारे कृतेऽपि जीवस्तज्जन्येन पापेन न लिप्तो भवतीश्वरेच्छां विना । पुण्यकृतावनुष्ठितायां च सुकृतं न जीवो लभते विना भगवदिच्छां इति प्रथमार्धाशयः ॥ जीवस्य विभुशब्दवाच्यत्वं तु जडापेक्षया सामर्थ्यविशेषाभिप्रायेणेति बोध्यं । प्रभुरित्यतीतश्लोकोक्तसमानार्थोऽयं । सर्वव्याप्तत्वार्थस्तु बाधितः । जीवाणुत्वस्य श्रुतिस्मृतिब्रह्ममीमांसाशास्त्रसिद्धत्वात् ॥ अतएव रामानुजाचार्योऽपि विभुशब्दं जीवपरमङ्गीकृत्य तत्तत्कर्मानुकूलदेहानुप्रवेशयोग्यतामात्राभिप्रायेण विभुत्वोक्तिमुपपादितवान् । जीवाणुत्वं रामानुजाचार्यसम्मतं । अतो विभुशब्देन परिमाणानन्त्याभिप्रायं व्युदस्य प्रतिनियतदेशराहित्यविवक्षा प्रतिपादिता देशिकेन ॥

( विभुरित्यनेन जीवस्य ग्रहणे 'कस्यचित्' इत्यनेन न पुरुषविशेषस्य ग्रहणमुचितं किन्तु पुण्यपापजनकाचारविशेषो ग्राह्य इति विवृत्याशयो भाति ।। नहि अन्यपुरुषपुण्यपापयोरन्यपुरुषेणादानस्य शङ्का संगच्छते स्वातन्त्र्येण वा पारतन्त्र्येण वा ॥ अतस्स्वस्यैव सदाचारदुराचारयोः पुण्यपापे अपि पुरुषस्स्वातन्त्र्येण नादत्ते इति भावो गम्यते ।। तथाच सदाचारदुराचारानुष्ठाने तन्निमित्तकपुण्यपापप्राप्तौ च जीवोऽस्वतन्त्रः । यतः परमात्मैव सर्वत्र सर्वदा स्वतन्त्रः ॥ द्वितीयार्धोक्तं जन्तुमोहबीजमज्ञानं ईश्वरस्वातन्त्र्यस्वास्वातन्त्र्यविषयकं । एतेनाज्ञानेन तेषां विवेक आच्छादितो वर्तते । अतस्ते भगवन्तं न जानन्ति ॥)

यद्वा प्रभुशब्दवद्विभुशब्दोऽप्यत्र भगवत्परः। सर्वकर्तृत्वकारयितृत्वाभ्यां हरिर्न पुण्यपापसंश्लिष्टो भवति। विभुत्वादेव॥ स्वतन्त्रत्वात्। पूर्णत्वादिति यावत्। अज्ञानमोहितास्तु भगवन्तमेवं न जानन्ति॥

कस्यचिदित्यनेन पुरुषविशेषविवक्षामादाय पुत्रादेर्दुःखं नापनुदति पुरुषः, शत्रोस्सुखं च नापनुदतीति रामानुजाचार्यभाष्यं। प्रतिनियतदेशराहित्येन, जीवो ह्यत्र कैश्चित्पुत्रामित्रादिभिस्संबद्ध इवास्ते। कालान्तरे देशान्तरेऽन्यैस्सह वसतीव॥ अत आगन्तुकेषु मित्रामित्रादिषु संबन्धित्वं प्रतिकूलत्वं चागन्तुकानां तत्तद्देहानामेव नत्वात्मन इति तस्य भावः॥

अत्र चिन्त्यते। पापशब्दस्य दुःखपरत्वेन सुकृतशब्दस्य सुखपरतया च व्याख्यातत्वादागन्तुकदेहवानपि पुरुषस्तत्तत्कालप्रसक्तदुःखसुखे कथं नाम नापनुदतीति वक्तुं शक्यते। नह्ययं पुत्रादीन्न पोषयति नामित्रादीन्न तापयति वा। अतो जीवनित्यत्वदेहानित्यत्वयोरस्मिन्प्रकरणे सङ्गतिर्न सुगमा भाति॥

श्लोकोक्तज्ञानाज्ञाने आत्मकर्तृत्वाविषये इति शङ्करभाष्याशयः। जीवब्रह्मैक्यविषये इत्यन्ये॥ उभयमपि पक्षं विहाय ईश्वरीयवैषम्यनैर्घृण्यपरे इत्याह श्रीधरः॥ शांकरेष्वेकस्तु पक्षत्रयमुक्तं विहाय चतुर्थं पन्थानं आश्रयते। इयमस्य व्याख्या—"स्वभावस्तु प्रवर्तते। स्वभावोऽन्तःकरणं। नन्वेवं सति देवदत्तः पापी यज्ञदत्तस्सुकृतीत्यादिव्यवहाराणां कागतिरित्यत आह। नादत्त इति। चित् आत्मा कस्य ज्ञानशक्तिक्रियाशक्त्याधारत्वगुणयोगात्कशब्दस्यान्तःकरणस्य पापं सुकृतं च नादत्ते नात्मसंबन्धि करोति। तत्र हेतुमाह विभुरिति। अपरिणामीत्यर्थः। कथं तर्ह्ययं लोकव्यवहारस्तत्राह अज्ञानेन॥ अज्ञानपरिणामरूपेणान्तःकरणेन ज्ञानं स्वरूपं आवृतं॥ अन्योऽन्यतादात्म्याध्यासविषयभावं गमितमित्यर्थः" इति॥

उच्यते। पुण्यपापादिधुरंधरत्वादात्मानं मोचयित्वान्तःकरणस्य जडस्य भारवाहित्वं वदन्तो न तत्ववादिन इति प्रागेव निरूपितं द्रष्टव्यं॥ 'कस्य'

'विभुः' 'अज्ञानेन' 'ज्ञानं' इति पदचतुष्टयं मुख्यार्थपरित्यागपूर्वं गौण्याद्याश्रयणेन व्याख्यातमितीदमुपेक्ष्यम् ॥

मधुसूदननीलकण्ठवेंकटनाथास्तु संसारबीजमज्ञानमज्ञानशब्देन, स्वप्रकाशचैतन्यं ज्ञानशब्देन गृह्णन्ति ॥ दिक्प्रदर्शनाय मधुसूदनीयवाक्यमेव पठ्यते—"अज्ञानेनावरणविक्षेपशक्तिमता मायाख्येनावृतेन तमसावृतमाच्छादितं ज्ञानं जीवेश्वरजगद्भेदभ्रमाधिष्ठानभूतं नित्यं स्वप्रकाशं सच्चिदानन्दरूपमद्वितीयं परमार्थसत्यं॥ तेन स्वरूपावरणेन मुह्यन्ति । प्रमातृप्रमेयप्रमाणकर्तृकर्मकरणभोक्तृभोग्यभोगाख्यनवविधसंसाररूपं मोहमतस्मिंस्तदवभासरूपं विक्षेपं गच्छन्ति" इति ॥ अत्रेयं चिन्ता॥ इमे मायाप्रक्रियां येन केन प्रकारेण तत्रतत्र प्रवेशयितुं समयं प्रतीक्षमाणा इव सन्तः ज्ञानाज्ञानपदे समीक्ष्य मुदिताः प्रकरणासंगतमपि ब्रह्मसत्यत्वजगन्मिथ्यात्ववादं घोषयन्तीति स्वगुरोश्शंकराचार्यस्य सकाशादप्येतेषामेतादृशव्याख्याने उत्साहोऽधिकोऽवगम्यते। यतः शङ्करभाष्येऽपि ज्ञानशब्देन विवेकविज्ञानं गृहीतं। उत्कर्षदीपिकायां च मधुसूदनीयवाक्यानुवादपूर्वं तदसामञ्जस्याभिप्रायेणोक्तं। "लोकप्रसिद्धज्ञानपदार्थपरित्यागे बीजाभावमभिप्रेत्याचार्यैः न (मधुसूदनवत्) व्याख्यातमिति बोध्यं" इति ॥

यद्यपि शंकरभाष्ये गुरुभक्त्युद्रेकादुत्कर्षदीपिकाकारो मधुसूदनादीन्निराचष्टे॥ शंकरभाष्यस्यावलोकने तु रम्यतरोऽर्थविशेषस्तत्र नालक्ष्यते। किमर्थं भक्तैर्भगवत्पूजाकार्येत्याशंक्य परमार्थतः पूजा न कार्यैव पूजकास्तु भ्रान्ता इति हि तत्र समाहितं। अहो आस्तिक्यं ॥

एतत्प्रकरणे बह्वी दृश्यते ईश्वरावज्ञा श्रुतिस्मृत्यवज्ञा च शाङ्करव्याख्यानेषु। 'एष एव साधुकर्म कारयति'। 'सत्वस्यैषप्रवर्तकः' 'ईश्वरस्सर्वभूतानां' 'सर्वाधिपत्यं कुरुते महात्मा' 'धर्मावहं पापनुदं भगेशं वरदं

देवमीड्यं' 'प्रभुःप्रीणाति विश्वभुक्' 'हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः' ॥ 'पत्रं पुष्पं फलं तोयं' इत्यादि श्रुतिस्मृतयः भ्रान्तजनव्यवहार-विषया इत्याह नीलकण्ठः । मूढप्रत्ययानुवादिन्य इति मधुसूदनः । एवमे-वान्येऽपि ॥

(ब्रह्मात्मैक्यवादं आत्माकर्तृत्ववादं चास्मिन्श्लोकेऽपश्यन् श्रीधरस्तु ईश्वरकर्तृत्वं स्वीकृत्य ईश्वरस्य पूर्णकामत्वात्तस्य वैषम्यादिदोषराहित्यं स्थापयति पद्येन । इदमयमाह । "प्रयोजकोऽपि सन्प्रभुः कस्यचित् पापं सुकृतं च नैवादत्ते न भजते । तत्र हेतुः । विभुः परिपूर्णः आप्तकाम इत्यर्थः । यदिहि स्वार्थकामनया कारयेत्तर्हि तथा स्यात् । नत्वेतदस्ति । आप्तकामस्यैवा-चिन्त्यनिजमायाया तत्तत्पूर्वकर्मानुसारेण प्रवर्तकत्वात् )( ननु भक्ताननुगृह्ण-तोऽभक्तान्निगृह्णतश्च वैषम्योपलंभात्कथमाप्तकामत्वमित्यत आह । अज्ञाने-नेति ॥ निग्रहोऽपि दण्डरूपोनुग्रहएवेत्येवमज्ञानेन सर्वत्र समः परमेश्वर इत्येवं भूतं ज्ञानमावृतं । तेन हेतुना जन्तवो जीवा मुह्यन्ति । भगवति वैषम्यं मन्यन्ते" इति ॥ 'समः प्रियः सुहृद्ब्रह्मन्' इति सप्तमस्कन्धभागवत-वाक्यादिस्मरणेन भागवतव्याख्यातायं श्रीधरः प्रभोरीश्वरस्य कर्तृत्वकारयि-तृत्वाद्यभावमसहमानस्सन् भगवदुत्कर्षानुकूलं वाक्यार्थमाहेति तोषो जायते । परन्तु किमिह भगवतस्समत्वज्ञानं प्रकरणप्रतिपाद्यमित्यत्र भवति संशयः । प्रकृतौ ज्ञानाज्ञानशब्दौ हि समनन्तरश्लोकोक्तज्ञानाज्ञानसमानार्थकाविति स्फुटं ॥ तत्र तदनन्तरश्लोके 'ज्ञाननिर्धूतकल्मषाः' इत्यत्र च ज्ञानं समत्व-मात्रविषयमिति न प्रतीयते ॥ अतोऽस्मिन्कर्मसंन्यासपूर्वं ब्रह्मणि कर्मणामा-धानाभिधायके प्रकरणे ब्रह्मणएव कर्तृत्वादौ स्वातन्त्र्यं जीवानान्तु पारतन्त्र्य-मेवोच्यत इत्यर्थ एव समीचीनः ॥

**ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।**
**तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥१६॥**

वि० ॥ ननु ज्ञानस्याज्ञानावृतत्वे तेनाज्ञाननाशायोगात् विनाशकान्तरस्य चाभावात् ज्ञानार्थयोर्योगसंन्यासयोर्वैयर्थ्यमित्यत आह ज्ञानेनेति ॥ द्विविधं हि ज्ञानं स्वरूपं वृत्तिरूपं चेति । यद्यपि स्वरूपज्ञानमज्ञानावृतं नाज्ञाननाशकं तथाप्यात्मनो भगवतो ज्ञानेन परोक्षवृत्तिज्ञानेन येषामज्ञानं नाशितं शिथिलं तेषामेव ज्ञानं भगवदपरोक्षज्ञानं तत्परं ब्रह्मादित्यवत्प्रकाशयतीत्यर्थः ॥

शं ॥ ज्ञानेनेति । ज्ञानेनतु येनाज्ञानेनावृता मुह्यन्ति जन्तवस्तदज्ञानं येषां जन्तूनां विवेकज्ञानेनात्मविषयेण नाशितमात्मनो भवति । तेषामादित्यवद्यथादित्यः समस्तं वस्तुजातमवभासयति तद्वज्ज्ञानं ज्ञेयं च वस्तु सर्वं प्रकाशयति तत्परं परमार्थतत्वं ।

रा० ॥ 'सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ।' 'ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते तथा ।' 'न हि ज्ञानेन सदृशं पवित्रं' इति पूर्वोक्तं स्वकाले सङ्गमयति ॥ एवं वर्तमानेषु सर्वेष्वात्मसु येषामात्मनामुक्तलक्षणेनात्मयाथात्म्योपदेशजनितेनात्मविषयेण अहरहरभ्यासाधेयातिशयेन निरतिशयपवित्रेण ज्ञानेन तज्ज्ञानावरणमनादिकालप्रवृत्ता-

नन्तकर्मसंचयरूपमज्ञानं नाशितं तेषां तत्स्वाभाविकं परं ज्ञानमपरिमितमसंकुचितमादित्यवत्सर्वं यथावस्थितं प्रकाशयति। तेषामिति नष्टाज्ञानानां बहुत्वाभिधानादात्मस्वरूपबहुत्वं नत्वेवाहं जातु नासं इत्युपक्रमावगतमत्र स्पष्टतरमुक्तं। नचेदं बहुत्वमुपाधिकृतं विनष्टाज्ञानानामुपाधिगन्धाभावात्। तेषामादित्यवज्ज्ञानं इति व्यतिरेकनिर्देशात् ज्ञानस्य स्वरूपानुबन्धि धर्मत्वमुक्तम्॥ आदित्यदृष्टान्तेन च ज्ञातृज्ञानयोः प्रभाप्रभावतोरिवावस्थानं च॥ तत एव संसारदशायां ज्ञानस्य कर्मणा संकोचो मोक्षदशायां विकासश्चोपपन्नः॥

विचारः

अत्र ज्ञानेनेति तृतीयान्तपदेनोक्तं ज्ञानं परोक्षज्ञानं। द्वितियार्धे ज्ञानं इत्यनेन अपरोक्षज्ञानं विवक्षितं॥ परंतादिति ब्रह्मोच्यते। ज्ञानं तत्परं प्रकाशयतीत्यस्य अपरोक्षज्ञानं ब्रह्मविषयकप्रकाशं जनयतीत्यर्थः॥

ज्ञानं हि द्विविधं साक्षिचैतन्यं वृत्तिज्ञानं चेति। आद्यं स्वरूपज्ञानमित्यप्युच्यते॥ तदविद्ययाच्छादितं। अविद्या द्विविधा। स्वगुणाच्छादिका परमाच्छादिका इति। परमाच्छादिकायां अपसृतायां ब्रह्मप्रकाशः। स्वगुणाच्छादिकायां अपसृतायां लिङ्गभङ्गः। परमाच्छादिका स्वगुणाच्छादिकेति भेदयुताऽविद्या भावरूपा॥ अज्ञानेनावृतं ज्ञानं इत्यत्रोक्तं ज्ञानं स्वरूपज्ञानं ईश्वरविषयं साक्षिज्ञानं। साक्षिज्ञानस्य नित्यत्वेन ईश्वरस्य च सन्निहितत्वेन प्रकाशप्रसक्तौ प्रकाशप्रतिबन्धरूपावरणं स्वरूपज्ञानं आवृणोतीत्युच्यते॥

एवं स्वरूपज्ञानस्य भावाज्ञानेनावृतत्वात् यद्येतदेवाज्ञानं तेनैव स्वरूपज्ञानेन नाश्यं च नान्येन तदा न कस्यापि मोक्षस्स्यात् । आवृतत्वदशापन्नस्य स्वरूपज्ञानस्य स्वावरणभूतभावाज्ञानविनाशे सामर्थ्याभावात् । तस्माद्विनाशकत्वेनोक्तं ज्ञानं स्वरूपज्ञानं न भवितुमर्हति ॥ अतः श्लोके ज्ञानेनेत्युक्तं ज्ञानं परोक्षमिति व्याख्यातं भगवत्पादैः ॥

(ननु आवृतज्ञानस्य स्वावरणनाशनशक्त्ययोगात्स्यान्नाशकं ज्ञानं स्वरूपज्ञानाद्भिन्नं ॥ अपरोक्षज्ञानस्य मानसत्वाविरोधात् स्याच्च नाशकमित्युक्तं ज्ञानमपि मानसापरोक्षं ॥ तथाच प्रथमं ज्ञानं नाशकत्वेनोक्तं परोक्षमिति को निर्बन्धः इति न शङ्कनीयं ॥ उच्यते । द्वितीयार्धोक्तं ब्रह्मप्रकाशकं ज्ञानं ह्यपरोक्षमिति स्फुटं । प्रथमज्ञानपदस्य परोक्षज्ञानार्थतामनङ्गीकृत्यापरोक्षज्ञानार्थताङ्गीकारे येषामज्ञानं ज्ञानेनापरोक्षेण नाशितं तेषामादित्यवत्परं ब्रह्म प्रकाशत इत्येव वक्तव्यत्वेनोत्तरार्धे पुनर्ज्ञानग्रहणं व्यर्थं स्यात् ॥ अतो द्विर्ज्ञानग्रहणान्यथानुपपत्त्या श्लोकोक्तज्ञाने द्विप्रकारे इति गम्यते । तथाचैकं परोक्षं अपरं अपरोक्षमित्यायातं । ब्रह्मप्रकाशकज्ञानस्य त्वपरोक्षत्वेनैव भाव्यं इत्यन्यस्याज्ञाननाशकस्य परोक्षत्वं सिद्धम् ॥ एवमेव प्रमाणेषु ॥ 'श्रृणुयाद्यावदज्ञानं मतिर्यावदयुक्तता ॥ ध्यानं च यावदीक्षास्यात् * *' 'श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ । संशयं च पराणुद्य लभते ब्रह्मदर्शनम्' ॥ इत्यादिषु अज्ञाननाशकब्रह्मप्रकाशकयोः पृथक्त्वोक्तिर्द्रष्टव्या ॥

(ननु परोक्षज्ञानं नाम श्रवणादिजन्यं । तस्य भावाविद्याविनाशनशक्तिः कथं संगच्छते ? । भावाविद्याहि स्वरूपज्ञानमाच्छादयति । तन्निवृत्तौ हि मोक्षस्संभावितः इति चेन्न । नाश्यमित्यभिप्रेतं अज्ञानमिह न भावरूपं किन्तु ज्ञानाभावरूपं । यथोक्तं श्रीनिवासतीर्थीये "वस्तुतस्तु श्रवणेनाज्ञाननिवृत्तेः प्रसिद्धत्वात्तदेवाज्ञानमिह अविद्यापदेनाभिहितं । तथाचेश्वरस्वरूपज्ञानमविद्यया आवृतमस्ति । श्रवणजन्यमनोवृत्तिरूपं ज्ञानं त्वाविद्यां ईश्वरस्व-

रूपापरोक्षज्ञानप्रतिबन्धकाज्ञानं नाशयति ॥ एवं श्रवणेनाज्ञाने नष्टे मननेन च संशयविपर्ययनाशानन्तरं ध्यानेनेश्वरस्वरूपापरोक्षज्ञानमुत्पद्यते । तच्चापरोक्षज्ञानं सम्यक् परं ब्रह्म प्रकाशयतीत्यर्थः ।( यथोक्तं ‘ तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलं ’ इति । ब्र० सू० III 3 25 सू० । अयमस्यार्थ इति तत्वनिश्चयेन सहितोऽयमेवार्थो नान्य इति तन्निर्धारणार्थनियमः । श्रवणमननफल द्वयमपि तत् । ध्यानफलाद्ब्रह्मापरोक्षदृष्टेः पृथक् । अतो दृष्ट्यर्थं ध्यानं कार्यं । श्रवणमननयोः संशयविपर्ययकृतदृष्टिप्रतिबन्धाभावः फलमतस्तेऽपि कर्तव्ये । श्रोतव्य इत्यादिश्रुतौ विहितत्वात्त्रितयमप्यवश्यं कार्यमिति सूत्रार्थः । तथाच गीतायां ‘ ज्ञानेन तु तदज्ञानं येषां नाशितं ’ इत्यत्र विवक्षितं ज्ञानं श्रवणजन्यं परोक्षं । विवक्षितं अज्ञानं न भावरूपं किन्तु ज्ञानाभावः इति यावत् । इति ॥

केचि ‘ वृत्तिज्ञानं त्वविद्यां शिथिलयति ’ इति प्रमेयदीपिकावाक्यमादायैवं व्याचक्षते । तथाहि । “ श्रवणादिजन्यं मनोवृत्तिरूपं परोक्षज्ञानं अविद्यां परमाच्छादिकां मायां शिथिलयति जीवादपसारयतीत्यर्थः । * * । अत एवाविद्यां नाशयतीत्यनुक्त्वा शिथिलयतीत्येवोक्तं । तथाच तदनन्तरं ईश्वररूपविषयकमपरोक्षज्ञानं मानसमुत्पद्यते । पश्चात्तदपरोक्षज्ञानं जीवाय परं ब्रह्म प्रकाशयतीति प्रयोज्यं । तथाचात्र स्वरूपज्ञानपदेन जीवस्वरूपज्ञानग्रहणे अविद्याशब्देन लिंगशरीररूपस्वगुणाच्छादकमायाग्रहणे च तृतीयान्तज्ञानपदोक्तपरोक्षवृत्तिज्ञानस्य तन्नाशकत्वोक्तेरयोगादपरोक्षज्ञानस्यैव तन्नाशकत्वादित्याद्यनुपपत्तिरिति कुचोद्यानवकाशः ” इति ॥ एतेन गीतोक्तमज्ञानं परमाच्छादिकाऽविद्या तत्रोक्तं नाशनं अपसरणमात्रं इति व्याख्यानाशयो भाति ॥ ‘ परमाच्छादकमायाया अपसार्यत्वेन श्रवणजन्यपरोक्षज्ञाननिवर्त्यत्वोक्त्ययोगादेतद्व्याख्यानं चिन्त्यं ’ इत्युक्तं श्रीनिवासतीर्थीये ॥ मूलेतु ‘ नाशितं ’ इति स्पष्टमुक्तं ॥ ज्ञानाभावरूपमपरोक्षप्रतिबन्धकं अज्ञानं विवक्षितं इति ग्रहणेन

मुख्यार्थसंभवे नाशितमित्यस्यामुख्यार्थकल्पनं नोचितमिति श्रीनिवासतीर्थाशयो भाति ॥ तथाचास्मासु भावभेदोऽधिगम्यते । अज्ञानं भावरूपं इति केचित् अभावरूपमित्यन्ये इति ॥

अत्र वेङ्कटनाथो वक्ति "यत्त्वत्र माध्वेनोक्तं अज्ञानमिह ज्ञानाभाव एव न तु भावरूपं इति तत्र वक्तव्यं । 'पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्' इत्यधिकरणे त्वयापि भावरूपाज्ञानव्यवस्थापनादिह तन्निराकरणं परापशकुनार्थं स्वनासाच्छेदन्यायमावहतीति" इति ॥ अत्रोच्यते । न वयं भावरूपाज्ञानमेव निषेधामः । किन्तु इह अज्ञानपदेन तस्य विवक्षा न सङ्गच्छते इत्येव वदामः । अतोऽभिप्रायानवगतिमूलं दूषणमित्युपेक्षणीयं इति ॥

गीतायां आत्मशब्दः परमात्मपरः । ईश्वरस्वरूपविषयकं ज्ञानं तद्विषयकमज्ञानं निवारयतीत्यर्थः। आत्मशब्देन जीवग्रहणे तु तदज्ञानं नाम स्वगुणाच्छादिका मायेति वक्तव्यं । ज्ञानशब्दितपरोक्षज्ञानस्य तन्निवर्तकत्वायोगादनुपपत्तिर्द्रष्टव्या ॥

अज्ञानं नामानादिकालप्रवृत्तानन्तकर्मसंचयरूपामिति रामानुजाचार्यव्याख्या ॥ अज्ञानशब्दस्य कर्मवाचित्वं अप्रसिद्धं भाति ॥ कर्मनाशेसति स्वाभाविकं ज्ञानं प्राचीनां संकुचितत्वदशां विहाय परं अपरिमितं भूत्वाऽऽदित्यवत्सर्वं प्रकाशयतीति-रामानुजाचार्यव्याख्यानं । तथाच 'तत्' इत्यस्य स्वाभाविकमित्यर्थः । परं इत्यस्यापरिमितं इत्यर्थः । प्रकाशयतीति क्रियायाः कर्मबोधकं 'सर्वं' इति पदं अर्थसिद्धत्वेनाध्याहार्यं इत्याद्युक्तं भवति ॥ अत्र वाच्यं । स्वाभाविकस्य जीवीयज्ञानस्य सर्वप्रकाशकत्वमनुपपन्नं भाति । स्वयोग्यभगवद्रूपं तत्प्रकाशयेत् न तु 'सर्वं' ॥ तदित्यस्य स्वाभाविकत्वं नाक्षरार्थः । प्रकाशयतीत्यस्य 'परं' इति कर्मबोधकपदे श्रुतेसति सर्वं इत्यार्थिककर्माध्याहारेण श्रुतहान्यश्रुतकल्पनापत्तिः ॥ इति ॥

मूले 'येषां तेषां' इति बहुवचनेन जीवबहुत्वमवगम्यते इति रामानुजाचार्येण प्रदर्शितं समीचीनं । देहभेदाभिप्रायेण बहुवचनं इति शांकरसमाधानं तु न समंजसं ॥ अत्र आत्मनः इत्येकवचनेनात्मैक्यस्य कण्ठरवेणोक्त्या द्वैतवादिभीरोदितव्यं इति यद्वेंकटनाथेनोक्तं तदतीव मन्दं । आत्मशब्दस्यास्माभिः परमात्मविषयकत्वेन व्याख्यानात् ॥

'येषां तेषां' इति बहुवचनोपपादनाय मधुसूदनः क्लेशमाविष्करोति । यथोक्तं तेन । "येषामिति बहुवचनेनानियमो दर्शितः । यद्विषयं यदाश्रयमज्ञानं तद्विषयतदाश्रयप्रमाणज्ञानात्तन्निवृत्तिरिति न्यायप्राप्तनियमं दर्शयति" इति ॥ एतेन घटविषयकं देवदत्ताश्रितमज्ञानं घटविषयकेण देवदत्ताश्रितेन ज्ञानेन निवर्त्यते नतु पटविषयकेण वा यज्ञदत्ताश्रितेन वा ज्ञानेन इत्युक्तं भवति ॥ अयं नियमः पण्डितपामरविदित इति तस्य गीतायामिह विवक्षाकल्पनमन्याय्यं भाति ॥

गीतोक्तमज्ञानं भावरूपमेव नाभावरूपमिति शांकराणां निर्बन्धः ॥ यथोक्तं मधुसूदनेन । "अत्राज्ञानेनावृतं ज्ञानेन नाशितमित्यज्ञानस्यावरणत्वज्ञाननाश्यत्वाभ्यां ज्ञानाभावरूपत्व व्यावर्तितं । नह्यभावः किंचिदावृणोति न वा ज्ञानाभावो ज्ञानेन नाश्यते । स्वभावनाशरूपत्वात्तस्य ॥ तस्मादहमज्ञो मामन्यं च न जानामीत्यादिसाक्षिप्रत्यक्षसिद्ध भावरूपमेवाज्ञानमिति भगवतो मतं" इति ॥ अत्रोच्यते ॥ आवरणत्वं नाम प्रतिबन्धकत्वं ॥ अभावरूपस्याप्यज्ञानस्यैतादृशावरणत्वेऽनुपपत्तिर्न दृश्यते । ज्ञानप्रागभावस्य ज्ञाननाश्यत्वे बाधकं नास्ति । भावरूपाज्ञानसाधनायप्रत्यक्षानुमाने ये परैरुपन्यस्ते ते विस्तरतस्सुधादिषु निरस्ते द्रष्टव्ये ॥ वस्तुतो वयं तु न भावाज्ञानपरिपन्थिनः । पराभिमतं भावाज्ञानं तन्मते न सिध्यतीत्येव दूषणाभिधानाशयः ॥

भावरूपमावरणमपि परोक्षज्ञानान्नाश्यते इति शांकराणां मतमवगम्यते। यथोपपादितं मधुसूदनेन। "अज्ञानगतमावरणं द्विविधं। एकं सतोऽप्यसत्त्वापादकं। अन्यत्तु भासतोऽप्यभानापादकं। तत्राद्यं परोक्षापरोक्षसाधारणप्रमाणज्ञानमात्रान्निवर्तते। अनुमितेऽपि वह्न्यादौ पर्वते वह्निर्नास्तीत्यादिभ्रमादर्शनात्। तथा 'सत्यं ज्ञानमनन्तं ब्रह्मास्मि' इति वाक्यात्परोक्षनिश्चयेऽपि ब्रह्म नास्तीति भ्रमो निवर्तत एव॥ अस्त्येव ब्रह्म किंतु मम न भातीत्येवं भ्रमजनकं द्वितीयमभानावरणं साक्षात्कारादेव निवर्तते॥ स च साक्षात्कारो वेदान्तवाक्येनैव जन्यते निर्विकल्पकः" इति॥ अत्र चिन्त्यते। स्यादज्ञानं असत्त्वापादकं अभानापादकं चेति द्विविधं॥ स्याच्चाद्यनिवृत्तये परोक्षज्ञानमप्यलं द्वितीयं स्वनिवृत्तये साक्षात्कारमेवापेक्षत इति। किमनेनोक्तं भवति। कश्चिदज्ञानविशेषः प्रत्यक्षैकनाश्यः कश्चित्तु अनुमानागमविनाश्य इति पर्यवसितं इति॥ एवं प्रमाणपद्धतिप्रदर्शनेन नाश्यमज्ञानं भावरूपमेवेत्यर्थः कथं लभ्यत इति सन्देहस्तदवस्थः॥ किंच पर्वते वह्निर्नास्तीत्यज्ञानमपि यदि भावरूपं तर्हि अभावरूपमज्ञानमेव परैरनभ्युपगतं प्रसज्यते॥ अतएवोक्तं सुधायां। 'तथासति ज्ञानाभावस्य तव सर्वथाप्यप्रतीतिप्रसङ्गात्॥ ततश्च तन्निरासप्रयासानुपपत्तिः' इति॥ किंच ब्रह्मणः सत्यत्वज्ञानत्वरूपतामादाय नास्तीति भ्रमोपादानं आवरणमेकं न भातीति भ्रमोपादानमावरणमपरं इति द्वित्वमुक्तं। ब्रह्मणः आनन्दस्वरूपत्वस्यापि श्रुतिप्रसिद्धत्वादभ्युपगतेश्च न ब्रह्म प्रियमिति भ्रमोपादानं तृतीयमप्यावरण अङ्गीकार्यं भाति। तस्य निवृत्तिर्ब्रह्मानुभवाद्भवतीति च वक्तव्या॥ 'अस्ति भाति प्रियं रूपं नाम चेत्यंशपंचकं। आद्य त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयं' इति परोक्तेः। अस्तिभात्योर्विरोध्यावरणयोरङ्गीकारे प्रियत्वाकारविरोध्यावरणस्याप्यभ्युपेयत्वमायास्यति॥ अतो ब्रह्म धर्माणामाच्छादिकया एकयैवाविद्यया परमाच्छादिकया निर्वाहे ब्रह्मज्ञानप्रतिबन्धकभावावरणबहुत्वकल्पनमनुचितं॥

ज्ञानेनाज्ञाननिवृत्तौ मोक्षप्राप्तौ च ईश्वरप्रसाद आवश्यक इति श्रीमध्वसिद्धान्तः॥ एतन्नाभ्युपयन्ति शाङ्कराः। आह मधुसूदनः 'यथादित्यः स्वोदयमात्रेणैव तमोनिरवशेषं निवर्तयति न तु कंचित्सहायमपेक्षते तथा ब्रह्मज्ञानमपि शुद्धसत्वपरिणामत्वाव्द्यापकप्रकाशरूप स्वोत्पत्तिमात्रेणैव सहकार्यन्तरानिरपेक्षतया सकार्यमज्ञानं निवर्तयत्परं सत्यज्ञानानन्तानन्दरूपमेकुमेवाद्वितीयं परमात्मतत्वं प्रकाशयति प्रतिच्छायाग्रहणमात्रेणैव कर्मान्तरेणाभिव्यनक्ति' इति॥ दुर्घटे परनिरूपिताविद्याप्रकरणे तावन्न्यायामृतादिग्रन्थेषु दूषणान्यनेकानि ग्रथितानि॥ विषयस्यान्यत्र बहुचर्चितत्वान्मन्दप्रज्ञेन मया तत्संग्रहस्याप्यशक्यत्वाद्ग्रन्थविस्तरभयाच्चोपरम्यते॥ 'अज्ञानां ज्ञानदो विष्णुर्ज्ञानिनां मोक्षदश्चसः। आनन्ददश्च मुक्तानां स एवैको जनार्दनः'॥ इति साधूक्तमाचार्यैर्मनसि निधाय सर्वैस्सर्वार्थाय भगवान् श्रीहरिरेव शरणीकरणीय इत्येव तत्वमवधेयम्॥

**तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः।**
**गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः॥१७॥**

वि०॥ अपरोक्षज्ञानाव्यवहितसाधनमाह। तद्बुद्धय इति। न सकृत्परोक्षज्ञानेनालं। किन्तु आवृत्तिरसकृदुपदेशादित्युक्तदिशा पुनः पुनस्तत्र हरौ बुद्धिर्येषां ते तद्बुद्धयः। सएवात्मा आदानादिकर्ता स्वामी येषां ते तदात्मानः। तन्निष्ठास्तस्मिन्नचंचलाः। स एव परमयनं येषां ते तत्परायणाः। तथा ज्ञानिनःसन्तः अत एव च ज्ञाननिर्धूतकल्मषाः

भगवदपरोक्षज्ञानेन निर्धूतपाप्मानोऽपुनरावृत्तिं मुक्तिं गच्छन्ति ॥

शं० ॥ यत्परं ज्ञानं प्रकाशितं तस्मिन्गता बुद्धिर्येषां ते तद्बुद्धयस्तदात्मानस्तदेवपरं ब्रह्मात्मा येषां ते तदात्मानस्तन्निष्ठाः निष्ठाभिनिवेशस्तात्पर्यं सर्वाणि कर्माणि संन्यस्य ब्रह्मण्येवावस्थानं येषां ते तन्निष्ठास्तत्परायणाश्च । तदेव परमयनं परा गतिर्येषां भवति ते तत्परायणाः । केवलमात्मरतय इत्यर्थः । येषां ज्ञानेन नाशितमात्मनोऽज्ञानं ते गच्छन्त्येवंविधा अपुनरावृत्तिमपुनर्देहसंबन्धं ज्ञाननिर्धूतकल्मषाः यथोक्तेन ज्ञानेन निर्धूतो निवृत्तो नाशितः कल्मषः पापादिसंसारकारणदोषो येषां ते ज्ञाननिर्धूतकल्मषाः यतय इत्यर्थः ॥

रा० ॥ तद्बुद्धयः तथाविधात्मदर्शनाध्यवसायाः तदात्मानः तद्विषयमनसः तन्निष्ठाः तदभ्यासनिरताः तत्परायणाः तदेव परमप्रयोजनमिति मन्वानाः एवमभ्यस्यमानेन ज्ञानेन निर्धूतप्राचीनकल्मषाः तथाविधमात्मानमपुनरावृत्तिं गच्छन्ति यदवस्थादात्मनः पुनरावृत्तिर्न विद्यते स आत्मा अपुनरावृत्तिः । स्वेन रूपेणावस्थितमात्मानं गच्छन्तीत्यर्थः ॥

विचारः

( आदित्यसदृशापरोक्षज्ञानस्य कारण परोक्षज्ञानं इत्यतीतश्लोकेन गम्यते ॥ ज्ञानेन तु तदज्ञानं येषां नाशितमित्युक्तं । अत्रखलु ज्ञानेनेत्यनेन

परोक्षज्ञानं विवक्षितमिति प्रतिपादितं प्रागेव ॥ परोक्षज्ञानं श्रवणजन्यं । मननेन दृढीकृतं ॥ एतत्किं साक्षादपरोक्षज्ञानहेतुरुत व्यवधानेनेति सन्देहः श्लोकेन परिहियते । ध्यानमेवापरोक्षज्ञानस्य साक्षाद्धेतुः श्रवणमनने तु व्यवधानेनेति ॥ उक्तं प्रमेयदीपिकायां 'नहि श्रवणमननानन्तरमेवापरोक्षज्ञानमुत्पद्यते ' इति ॥ तथाच तद्बुद्धय इति पद्यं अपरोक्षज्ञानाऽव्यवहितपूर्वक्षणवृत्तिध्यानाख्यं साधनमाहेति यावत् ॥

भगवद्ध्यानिनोहि भगवन्तं बुद्ध्वा तमेव स्वामित्वेन सर्वकर्तृतया कारयितृतया च मत्वा निश्चलमनसस्सन्तस्तमेव शरणं गच्छन्ति। अतस्तद्बुद्धित्वतदात्मत्वतन्निष्ठत्वतत्परायणत्वविशेषणान्यपरोक्षहेतुभूतं ध्यानस्वरूपं निष्पादयन्ति ॥ विशेषणानां सार्थक्यं विवृत्युक्तानुसन्धानेऽवगम्यते ॥ अपरोक्षे जाते तेन निर्धूतकल्मषास्सन्तः भगवत्प्रसादद्वारा मोक्षं यान्तीत्यर्थः ॥ प्रारब्धेतरसंचितकर्मणां नाशात् आगामिनामश्लेषाच्च निर्धूतकल्मषत्वं सुगमं ॥

(शाङ्करास्तदात्मान इत्यत्राद्वैताशयं प्रवेशयन्ति । यथोक्तं मधुसूदनीये । 'बुद्धिरन्तःकरणवृत्तिः साक्षात्कारलक्षणा येषां ते तद्बुद्धयः । सर्वदा निर्बीजसमाधिभाज इत्यर्थः । तत्कि बोद्धारो जीवा बोद्धव्यं ब्रह्मतत्वमिति बोद्धृबोद्धव्यलक्षणभेदोऽस्ति । नेत्याह तदात्मान इति । तदात्मानः तदेव परं ब्रह्म आत्मा येषां ते तथा । बोद्धृबोद्धव्यभावोहि मायाविजृंभितो न वास्तवाभेदविरोधीति भावः ' ॥ इति ॥ एवमेवान्येऽपि वदन्ति ॥ श्रीधरस्तु तस्मिन्नेवात्मा मनो येषां इत्यात्मशब्दं मनःपरं व्याचष्टे ॥ आदेयं मातीति व्युत्पत्त्या आदानादिकर्ता स्वामी भगवानेव येषां इति विवृत्याशयः ॥

('तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः' इति चतुर्णां विशेषणानां सार्थक्यान्वेषणे मधुसूदनः उत्तरोत्तरस्य पूर्वपूर्वहेतुत्वमाचष्टे । यथोक्तं । 'तद्बुद्धय इति साक्षात्कार उक्तः । तदात्मानइत्यनात्माभिमानरूपविपरीतभावनानिवृत्तिफलको निदिध्यासनपरिपाकः । तन्निष्ठा इत्यनेन सर्वकर्म-

संन्यासपूर्वकः प्रमाणप्रमेयगतासंभावनानिवृत्तिफलको वेदान्तविचारः श्रवणमननपरिपाकरूपः । तत्परायणा इत्यनेन वैराग्यप्रकर्षः' इति ॥ तथाच साक्षात्कारनिदिध्यासनमननश्रवणवैराग्याणां क्रमेण चतुर्भिर्विशेषणैरुक्तत्वमभिप्रैति मधुसूदनः ॥ एतस्य वैपरीत्येन भावमाह नीलकण्ठः । 'तद्बुद्धयः आपाततः श्रुत्यर्थविदः । तदात्मानः श्रवणमननात्मकविचारेण प्रमाणप्रमेयगतासंभावनाविहीनाः । तन्निष्ठाः विजातीयवृत्त्यनन्तरितसजातीयवृत्तिप्रवाहवन्तो देहादावनात्मन्यात्मधीरूपविपरीतभावनारहिताः । तत्परायणाः अखण्डानन्दमग्नाः' । इति तद्व्याख्यान । एतेनोत्तरोत्तरस्य पूर्वपूर्वहेतुत्वमनेनोक्तं भवति ॥ यदुन्नततमसोपानत्वेनोक्तं तद्बुद्धित्व मधुसूदनेन तस्याधमतमत्वमुक्त नीलकण्ठेन । एवमन्येषामपि विशेषणानां वैपरीत्येनाशयो द्रष्टव्यः । अत्र यद्यपि विवक्षाभेदेन सावकाशशब्दानां अर्थवैचित्र्यकथनं न स्याद्दोषाय ॥ तदात्मान इत्यत्र तु परमार्थतो भेदाभावदर्शनं यदभिमतं तदसत् ॥ अरुच्याहि स्वयूथ्यः श्रीधरोऽपि तस्य मनःपरत्वमाह ॥ अनेन शब्देन निदिध्यासने मधुसूदनेनाभिप्रेते सति नीलकण्ठेन तदवरश्रवणमननयोर्विवक्षितत्वमुक्तं द्रष्टव्यम् ॥

तन्निष्ठेत्यत्र निष्ठाशब्देन सर्वकर्मन्यासो विवक्षित इति शाङ्कराशयः ॥ स न समीचीनो भाति ॥ विवृत्युक्तस्य भगवद्विषयचांचल्यराहित्यार्थस्य रम्यतरत्वात् । अस्मिन्नध्याये संन्यासशब्दो न कर्मत्यागपरः किन्तु रागद्वेषादित्यागपर इति प्रागेव निरूपितमनुसन्धेयं । तस्मादत्रविवक्षितो मुमुक्षुर्यथायोगं कर्मानुतिष्ठेदेवेति भाति ॥ निष्ठाशब्दः स्थित्यर्थः प्रसिद्धः । कर्मसंन्यासार्थस्तु क्लिष्टः । अरुच्येव नीलकण्ठोऽपि निष्ठाशब्दं देहादावनात्मन्यात्मधीरूपविपरीतभावनाराहित्यपरं मन्यते ॥

(पूर्वश्लोकेन प्रकृतश्लोकस्य संगत्युत्थानेऽयं विवेको द्रष्टव्यः । परोक्षज्ञानं हि श्रवणजन्यं मननेन दृढीकृतं । परोक्षज्ञानापरोक्षज्ञानयोर्मध्ये ध्यान-

मपरोक्षाव्यवहितसाधनत्वेन विद्यते । परोक्षज्ञानस्य साधनत्वमुक्त्वा साक्षात्साधनत्वभ्रमव्युदासाय ध्यानस्वरूपनिरूपणेन तस्यैव साक्षात्साधनत्वं प्रतिपादयति पद्यमिति श्रीमध्वाशयः । शांकरास्तु वैराग्यश्रवणमननध्यानानां चतुर्णामपि साधनानां विवक्षामत्राचक्षते न केवलं ध्यानस्य ॥ इति व्याख्यानयोर्विवेकः ॥

'ज्ञाननिर्धूतकल्मषा' इत्यत्र यतयो विवक्षिता इति शांकराशयः । नियमेतु गमकं चिन्त्यम् ॥

**विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।**
**शुनि चैव श्वपाके च पण्डितास्समदर्शिनः ॥१८॥**

वि० ॥ परमेश्वररूपाणां सर्वत्र साम्यदर्शनं चापरोक्षज्ञानसाधनमित्याशयवानाह । विद्येति । पण्डिताः परोक्षज्ञानिनः । विद्याविनयसंपन्नब्राह्मणादिषु विषमेषु स्थितं हरिं समं गुणेषु दोषाभावेच समं तारतम्याभावं च पश्यन्तीति समदर्शिन इत्यर्थः । अस्य श्लोकस्य भगवद्विषयता निर्दोषं हीत्युत्तरवाक्यगम्या अपरोक्षज्ञानहेतुता च प्रकरणगम्येति ज्ञेयम् ॥

शां० ॥ येषां ज्ञानेन नाशितमात्मनोऽज्ञानं ते पण्डिताः कथं तत्वं पश्यन्तीत्युच्यते । विद्येति । विद्याविनयसंपन्ने विद्या च विनयश्च विद्याविनयौ विनयउपशमस्ताभ्यां विद्या-

विनयाभ्यां संपन्नो विद्याविनयसंपन्नो विद्वान्विनीतश्च यो ब्राह्मणस्तस्मिन्ब्राह्मणे गवि हस्तिनि शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ विद्याविनयसंपन्ने उत्तमे संस्कारवति ब्राह्मणे सात्विके मध्यमायां च राजस्यां गवि संस्कारहीनायां अत्यन्तमेव केवलतामसे हस्त्यादौ च सत्वादिगुणैस्तज्जैश्च संस्कारैस्तथा राजसैस्तथा तामसैश्च संस्कारैरत्यन्तमेवासंस्पृष्टं समं एकं अविक्रियं ब्रह्म द्रष्टुं शीलं येषां ते पण्डितास्समदर्शिनः ॥

रा० ॥ विद्याविनयसंपन्ने केवलब्राह्मणे गोहस्तिश्वश्वपचादिष्वत्यंतविषमाकारतया प्रतीयमानेष्वात्मसु पण्डिताः आत्मयाथात्म्यविदः ज्ञानैकाकारतया सर्वत्र समदर्शिनः ॥ विषमाकारस्तु प्रकृतेः नात्मनः । आत्मा तु सर्वत्र ज्ञानैकाकारतया समइति पश्यन्तीत्यर्थः ।

विचारः

श्रवणमननजन्यशास्त्रीयपरोक्षज्ञानिन एवात्र पण्डिता विवक्षिताः ॥ साम्यदर्शिनो भूत्वा भगवदपरोक्षज्ञानं लभन्ते इत्याशयः ॥ समत्वदर्शनस्यापरोक्षसाधनत्वं प्रकरणलब्धं ॥ प्राक् 'तद्बुद्धय' इत्यादिना ध्यानस्या परोक्षहेतुत्वमुक्तं । इह समदर्शनस्य च साधनत्वं गम्यते इति संगतिः । तथाच पण्डिता इति पदं वा समदर्शिन इति पदं वा नापरोक्षज्ञानिपरं ॥ परोक्षज्ञानं समत्वदर्शनद्वारा भगवदपरोक्षहेतुरित्येव वाक्यार्थः ॥ ननु समदर्शिनो भूत्वा पण्डिताः इति योजनामादाय पण्डितशब्देन पण्डाशब्दिततत्व-

ज्ञानवतामपरोक्षज्ञानिनां ग्रहणे कण्ठरवेणैव समदर्शनस्यापरोक्षज्ञानसाधनत्वप्राप्तेः तस्य प्रकरणगम्यत्वं कुतोऽभिप्रेतं इति चेन्न ॥ 'पाण्डित्यमागमज्ञानं' इति वचनात् पण्डिता इति परोक्षज्ञानिन एव वाच्या इत्यभिप्रायात् ॥

श्लोके समशब्दः श्रीहरिपरः । सर्वत्र ब्रह्मरूपाणां साम्यं मुमुक्षुर्जानीयादिति यावत् । ब्राह्मणगोहस्तिश्वश्वपाकानां परस्परं साम्यं न विवक्षितं ॥ तादृशसाम्यदर्शनस्य मिथ्याज्ञानत्वेनायुक्तत्वात् ॥ किन्तु तद्गतभगवद्रूपाणामेव विवक्षोचिता ॥ परमेश्वरविषयता 'निर्दोषं हि समं ब्रह्म' इत्युत्तरवाक्याद्वगम्यते ॥

ननु तद्भिन्नत्वेसति तद्गतधर्मवत्त्वं हि साम्यं । तच्च परमेश्वररूपाणां भेदाभावादयुक्तं । नचेश्वरीयगुणानां तदीयदोषाभावानां च साम्यं विवक्षितं । तेषामपि भेदाभावात्, इति चेन्न । साम्यं इत्यनेन तारतम्याभावस्यैव विवक्षितत्वात् । ब्राह्मणादिषु स्थितानां परमेश्वररूपाणां गुणेषु दोषाभावेषु च नीचत्वोच्चतारूपतारतम्यस्याभावादेवोक्तिरुपपन्ना ॥

'विषमेष्वपि जीवेषु समो विष्णुस्सदैवतु ।
यत्तृणादिगतस्यापि गुणाः पूर्णा हरेस्सदा"॥ इत्युक्तेः ॥

समः इत्यस्य जीवात्मपरतामभिप्रैति रामानुजाचार्यः । ज्ञानैकाकारतया सर्वत्र समदर्शिनः ॥ 'विषमाकारस्तु प्रकृतेर्नात्मनः' ॥ इति तद्भाष्यं॥ तन्मते जीवेषु तारतम्यस्यानङ्गीकारादेव मुक्तिः ॥

शाङ्करास्तु समशब्देन ब्रह्म गृह्णन्ति ॥ तद्भिन्नस्य जीवस्यानभ्युपगतेर्जीवपरत्वशङ्का तन्मते नोदेति ॥

श्लोके तावद्ब्राह्मणादीनां समत्वं प्रतीयते ॥ कैश्चिदयमेव समीचीनोऽर्थ इत्युच्यते । अस्मिन्देशे जात्यादिकृतं वैषम्यं कल्पितमनुपादेयमिति

चोच्यते । अयं पक्षः अवैदिक इत्युपेक्ष्यः ॥ श्रुतिस्मृत्यनुगुणवाक्यभूतस्यास्य गीतापद्यस्य व्याख्याने तादृशं मतं नानुकूलं भवतीति ज्ञेयं । उत्कृष्टापकृष्टसर्वप्राणिनां समत्वग्रहणं वा समत्वव्यवहारो वा समपूजा वा न कार्येति स्मृतिकाराः स्मरन्ति ॥ तथाहि गौतमः ॥ 'समासमाभ्यां विषमसमे पूजातः' इति ॥ अस्यार्थमाह वेङ्कटनाथः । "समाय पूज्याय विषमप्रकारे पूजने कृतेसति विषमाय अपूज्याय च समप्रकारे कृतेसति स पूजक इहलोकात्परलोकाच्च हीयते" इति । तस्मात्समत्वं पुरस्कृत्य व्यवहारो वा पूजा वा न सङ्गच्छते इति स्थितं ॥

व्यवहारादिकं न कर्तव्यं ज्ञानं तु सर्वं सममित्येव स्यादित्यभिप्रयन्नाहाभिनवगुप्ताचार्यः । "तेषां योगिनां ब्राह्मणेऽनीदृशी बुद्धिः अस्य शुश्रूषादिनाहं पुण्यवान्भविष्यामीत्यादि । गवि न पावनीयमित्यादि । हस्तिनि नार्थादिधीः । शुनि नापवित्रापकारितादिनिश्चयः । श्वपाके च न पापापविद्वादिधिषणा । अत एव समं पश्यन्ति न तु व्यवहरन्ति"। इति ॥

'चंडालोऽस्तु स तु द्विजोस्तु गुरुरित्येषा मनीषा मम'

शंकरवाक्यानुसारेण जीवन्मुक्तास्सर्वत्र समशब्दितब्रह्मदर्शिनो विद्यन्ते इति व्याख्यातॄणामद्वैतावलंबिनां आशयस्सर्वाभेदेन सर्वात्मतया ब्रह्माधिगन्तव्यमिति नतु सर्वास्मिन् प्रविष्टं ब्रह्मेति ॥ तेष्वेकस्त्वेवं व्याचष्टे । "गवि हस्तिनि शुनीति गोत्वादिजात्याधारपिण्डरूपोपाधीनामुत्तममध्यमाधमानामुक्तत्वान्मानुषपिण्डानामप्यात्मोपाधीनामेवं विवेको ज्ञेयः । ब्राह्मणस्योत्तमस्य पृथगभिधानात् । विद्यासंपन्नाववशिष्टौ क्षत्रियवैश्यपिण्डौ । विनयसंपन्नस्त्रैवर्णिकसेवामात्रधर्मकः शूद्रपिण्डः ॥ पिण्डसमुदायाभिप्रायं चैकवचनं । तथोत्तमो ब्राह्मणः । क्षत्रियवैश्यौ मध्यमौ । ततः किंचिन्निकृष्टश्शूद्रः । सर्वाधमः श्वपाकः । एतेषु मानुषपशूत्तममध्यमाधमेषु पिण्डेष्वात्मोपाधिषु सत्स्वप्यनु-

पहितं सर्वत्राविशेषत्वात् समं ब्रह्मैव तत्रतत्र प्रविष्टं पण्डिताः पश्यन्ति नत्वा-त्मानमेव ब्रह्मात्मकं पश्यन्तीत्यर्थः "। इति ॥ अयं व्याख्याता सर्वत्र भगव-तोऽन्तर्यामित्वेन प्रविष्टत्वमादाय यद्व्याख्याति साधुभाषितं तत् ॥ ब्राह्मणादि-पदव्याख्याने वैचित्र्यं तु न तत्वार्थविरोधीत्यकिंचित्करं ॥ इदंच निराह्रो-त्कर्षदीपिकाकृत्। " सर्वभूतात्मभूतब्रह्मदर्शिन इत्येतावतैवोक्तार्थे सिद्धेऽमूलो-क्तानामुपाधिभेदानां क्लिष्टकल्पनया प्रदर्शितानां समपदस्य च वैयर्थ्यप्रसंगात्" इति ॥ आस्तां उपाध्युपपादने क्लेशः। समपदवैयर्थ्यप्रसंगस्तु न संभवति। उपाधिषु विषमेषु सत्सु तद्गतस्य भगवतो वैषम्यराहित्यरूपसाम्यस्य वक्तव्य-त्वात् ॥ यत्तु सर्वभूतात्मभूतब्रह्मदर्शित्वोक्त्या गतार्थत्वं उक्तं तन्न। तत्र ब्रह्मणस्सर्वप्रेरकत्वेनादानादिकर्तृत्वमुक्तं इह तु भगवद्रूपाणां समत्वं इति विवेकात् ॥

'विद्याविनयसंपन्ने ब्राह्मणे' इत्यस्य देशिकोपपादनं इदं। " विद्या-विनयसंपन्ने ब्राह्मणे इति पदद्वयं न समानाधिकरणम् ॥ निर्विशेषणसमुदाय-सहपठितत्वाद्विद्याविनयसंपन्नविशेषणप्रतिशीर्षानुक्तेश्च। गवि हस्तिनि इत्याकारवैषम्यं द्वाभ्यां दर्शितं ॥ श्वश्वपचशब्दाभ्यां वृत्त्या वैषम्यम् ॥ तद्वत्पूर्वाभ्यामपि मिथो वैषम्यमेवाभिप्रेतम्। अतो ब्राह्मणे इति ब्राह्मणजात्या-क्रान्ततामात्रं विवक्षितं" इति ॥ अत्र क्लेशः स्फुटः। ईषत्कौशलं च दृश्यते ॥ तत्वार्थविरोधस्यादर्शनात्तन्निरासायासं न वहामः ॥

इहैव तैर्जितस्सर्गो येषां साम्ये स्थितं मनः ।
निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः
॥ १९ ॥

वि० ॥ समदर्शिनं स्तौति । इहैवेति । येषां साम्ये मनः स्थितं तैरिहैवास्मिन्नेव जन्मनि सर्गो जन्मादिरूपः संसारः जितः । दृश्यत्वेनोक्तं समं वस्तु किं केन साम्यमित्यतआह । निर्दोषमिति । समं वस्तु ब्रह्मनिर्दोषत्वेन च साम्यमित्युक्तं भवति ॥ तस्मात्समतया सर्वत्रस्थितस्य ब्रह्मत्वात्ते सम-दर्शिनो ब्रह्मणि स्थिता एवेत्यर्थः ॥ ब्रह्मज्ञानिन इति यावत् ॥

शं० ॥ नन्वभोज्यान्नास्ते दोषवन्तः । 'समासमाभ्यां विषमसमे पूजातः' इति स्मृतेर्न ते दोषवन्तः । कथं ॥ इहैव जीवद्भिरेव तैः समदर्शिभिः पण्डितैर्जितो वशीकृतः सर्गो जन्म येषां साम्ये सर्वभूतेषु ब्रह्मणि समभावे स्थितं निश्चलीभूतं मनोऽन्तःकरणं निर्दोषं । यद्यपि दोषवत्सु श्वपा-कादिषु मूढैस्तद्दोषैर्दोषवदिव विभाव्यते तथापि तद्दोषैरसं-स्पृष्टमिति निर्दोषं दोषवर्जितं हि यत् । नापि स्वगुणभेदभिन्नं निर्गुणत्वाच्चैतन्यस्य । वक्ष्यति च भगवानिच्छादीनां क्षेत्र-धर्मत्वमनादित्वान्निर्गुणत्वादिति च । नाप्यन्त्यविशेषा आत्म-नो भेदकास्सन्ति । प्रतिशरीरं तेषां सत्वे प्रमाणानुपपत्तेः ॥

अतः समं ब्रह्मैकं च यस्माद्ब्रह्मण्येव ते स्थितास्तस्मान्नदोषगन्धमात्रमपितान्स्पृशाति देहादिसंघातात्मदर्शनाभिमानाभावात्तेषां। देहादिसंघातात्मदर्शनाभिमानवद्विषयंतु तत्सूत्रं 'समासमाभ्यां विषमसमे पूजातः' इति। पूजाविषयत्वविशेषणात्। दृश्यते हि ब्रह्मवित्षडङ्गविच्चतुर्वेदवित् इति पूजादानादौ गुणविशेषसंबन्धः कारणं ॥ ब्रह्म तु सर्वगुणदोषसंबंधवर्जितमित्यतो ब्रह्मणि ते स्थिता इति युक्तं। कर्मिविषयं च समासमाभ्यामित्यादि ॥ इदं तु सर्वकर्मसंन्यासिविषयं प्रस्तुतं सर्वकर्माणि मनसेत्यारभ्याध्यायपरिसमाप्तेः ॥

रा० ॥ इहैव साधनानुष्ठानदशायामेव तैस्सर्गो जितः। येषामुक्तरीत्या सर्वेष्वात्मसु साम्ये स्थितं मनः। निर्दोषं हि समं ब्रह्म। प्रकृतिसंसर्गदोषवियुक्ततया सममात्मवस्तु हि ब्रह्म। आत्मसाम्ये स्थिताश्चेद्ब्रह्मणि स्थित्वा एव ते। ब्रह्मणि स्थितिरेव हि संसारजयः। आत्मसु ज्ञानैकाकारतया साम्यमेवानुसन्दधानामुक्ता एवेत्यर्थः ॥

विचारः

समदर्शिनां मुक्तिरुक्ता श्लोकेन। अतो यदुक्त समदर्शनफलमपरोक्षज्ञानमिति तद्विरोधः। किंच 'स्थित्वास्यामन्तकालेऽपी'त्यत्र द्वितीयाध्याये ज्ञानिनामपि सति प्रारब्धकर्मणि जन्मान्तरं युक्तिमिति प्रसाधितं। अत्र तु इहैव सर्गो जित इत्यनेनास्मिन्नेव जन्मनि संसारजयउक्तः। अतो जन्मान्तरसद्भाववचनविरोधः ॥ इदं विरोधद्वयं परिहरणीयम् ॥

अर्थवादत्वान्न स्वार्थे तात्पर्यं किन्तु साम्यदर्शनस्य प्राशस्त्य एवेत्युपपत्तिरभिप्रेता श्रीमदाचार्येण ॥ तथाच समदर्शनस्यापरोक्षज्ञानद्वारैव मुक्तिहेतुत्वं विवक्षितं । नतु साक्षात् ॥ इहैवेत्युक्तावपि प्रारब्धप्रयुक्तजन्मान्तरासंभवो नाभिप्रेतः । स्तुतावीषदधिकोक्तिस्तु न दोषायेत्युक्तं भवति ॥

स्तुतिपरत्वं रामानुजाचार्यस्यापि सम्मतं । यतो देशिक आह । 'समदर्शिनां प्रशंसा क्रियते । संसारो जितः मुक्तप्राय आस्त इत्यर्थः' इति ॥

सर्वत्र स्थितानि भगवद्रूपाणि समानीत्यनुसंधानं समदर्शनं इत्यस्य 'निर्दोषं हि समं ब्रह्म' इत्युक्तिः परमानुकूला ॥ यदि न ब्रह्मानुबन्धिसमत्वं अभिप्रेतं किन्तु ब्राह्मणगोहस्तिश्वश्वपचानां साम्यं तर्हि 'निर्दोषं हि समं ब्रह्मे'त्युक्तिरनन्विता प्रसज्यते । प्रागनुक्तत्वे 'हि' इति ब्रह्मपरामर्शगर्भितस्य हेतुवचनस्य वैयर्थ्यप्रसङ्गः । तस्मादुक्त एव वाक्यार्थः ॥

सर्वेषां आत्मनां ज्ञानाकारत्वविवक्षया साम्यमुक्तमिति रामानुजाचार्यपक्षे ब्रह्मशब्दस्य परमात्मपरत्वं हातव्यं प्रसज्यते । यथोक्तं देशिकेन । "ब्रह्मशब्दोऽत्र शुद्धात्मनि ॥ ब्रह्मसाम्यात्" इति ॥ जीवब्रह्मसाम्यवचनं जीवब्रह्मैक्यमतादन्ततो न विशिष्यते ॥ उभावप्यप्रामाणिकौ पक्षावित्युपेक्षणीयौ ॥ परमात्मभिन्नशुद्धात्मापरपर्यायजीवपरत्वं ब्रह्मशब्दस्य क्लिष्टं ॥

शांकरमतेऽद्वैतसाक्षात्कारवतां विदुषां सर्वं ब्रह्मेति साम्यं सुगममिति तेऽभिप्रयन्ति ॥ यथोक्तं मधुसूदनीये ॥ "अयं भावः । दुष्टत्वं हि द्वेधा भवति । अदुष्टस्यापि दुष्टसंबन्धात् यथा गङ्गोदकस्य मूत्रगर्तपातात् ॥ स्वत एव वा यथा मूत्रादेः । तत्र दोषवत्सु श्वपाकादिषु स्थितं तद्दोषैर्दुष्यति ब्रह्मेति मूढैर्भाव्यमानमपि सर्वदोषासंसृष्टमेव ब्रह्म व्योमवदसंगत्वात् । 'असंगो ह्ययं पुरुषः' 'सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः। एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः'इति श्रुतेः ।

नापि कामादिधर्मवत्तया स्वतएव कलुषितं । कामादेरन्तःकरणधर्मत्वस्य श्रुतिस्मृतिसिद्धत्वात् । तस्मान्निर्दोषब्रह्मरूपा यतयो जीवन्मुक्ताअभोज्यान्नादिदोषदुष्टाश्चेति व्याहतं । स्मृतिस्त्वविद्वद्गृहस्थविषयैव । 'तस्यान्नमभोज्यं' इत्युपक्रमात् । 'पूजातः' इति मध्ये निर्देशात् ॥ 'धनाद्धर्माच्च हीयते' इत्युपसंहाराच्चेति द्रष्टव्यं" इति ॥ अत्र वक्तव्यं । पद्यस्य यतिमात्रपरत्वे गमकं चिन्त्यं ॥ परमात्मनो निर्विशेषत्वेन वा निर्लिप्तत्वेन वा दोषवर्जितत्वे उपाधिग्रस्तानां चण्डालादीनां कथमायातं साम्यं । उपाधिग्रस्तानां यतीनां वा निर्लिप्तत्वं कथं सिध्यति । ब्रह्मनिर्दोषं समं इत्युक्त्या चंडालादयो वा यतयो वा निर्दुष्टा इत्यर्थः कथं शब्दार्थः । यतीनां आहारनियमो नास्तीति वा अभोज्यभोजनदोषाः न सर्वथा तेषां सन्तीति वा न कैश्चिदपि प्रमाणैर्गम्यते ॥ श्रौतस्मार्तसर्वविधिनिषेधनियमोच्छेदप्रसंजकं इदं व्याख्यानमिति भाति ॥ स्याद्द्वैतराद्धान्ते सर्वस्यमिथ्यात्वेन यतयश्चंडालादयः अन्न भोजनं पापं इत्यादीनि सर्वाणि मिथ्या ॥ तर्हि तथैव वक्तव्यं ननु यतीनां भोजनविशेषात् न पापलेपः इति ॥

**न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियं ।**
**स्थिरबुद्धिरसंम्मूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥२०॥**

वि० ॥ पुनस्संन्यासं प्रपंचयति । न प्रहृष्येदिति । प्रियं सुखसाधनं प्राप्य न प्रहृष्येत् हर्षं न प्राप्नुयात् । अप्रियंच नोद्विजेत् दुःखहेतुप्राप्तावपि उद्वेगरूपमनोऽधैर्यं न प्राप्नुयात् । तत्रोपायमाह । स्थिरबुद्धिरिति ।

बुद्धेः स्थैर्यहेतुरसंमूढइति । प्रियाप्रियप्रापणे लौकिको जन एव स्वतन्त्रइति मिथ्याज्ञानहीनः । तत्र हेतुर्ब्रह्मविदिति । ब्रह्मैव स्वतन्त्रमिति विद्वान् ॥ नैतावतालं किन्तु ब्रह्मणि स्थितः । नित्यं ब्रह्मस्मृतिमानित्यर्थः ॥

श० ॥ यस्मान्निर्दोषं समं ब्रह्मात्मा तस्मात् न प्रहृष्येन्न हर्षं कुर्यात्प्रियमिष्टं प्राप्य लब्ध्वा नोद्विजेत्प्राप्यैव चाप्रियमनिष्टं लब्ध्वा ॥ देहमात्रात्मदर्शिनां हि प्रियाप्रिये हर्षविषादौ कुर्वाते न केवलात्मदर्शिनस्तस्य प्रियाप्रियप्राप्त्यसंभवात् । किंच सर्वभूतेष्वेकः समो निर्दोष आत्मेति स्थिरा निर्विचिकित्सा बुद्धिर्यस्य स स्थिरबुद्धिः असंमूढः सम्मोहवर्जितश्च स्याद्यथोक्तब्रह्मविद्ब्रह्मणि स्थितोऽकर्मकृत्सर्वकर्मसंन्यासीत्यर्थः ॥

रा० ॥ येन प्रकारेणावस्थितस्य कर्मयोगिनस्समदर्शनरूपो ज्ञानविपाको भवति तं प्रकारमुपदिशति ॥—

यादृशदेहस्थस्य यदवस्थस्य प्राचीनकर्मवासनया यत्प्रियं भवति यच्चाप्रियं तदुभयं प्राप्य हर्षोद्वेगौ न कुर्यात् । कथं ? स्थिरबुद्धिः स्थिरे आत्मनि बुद्धिर्यस्य सः स्थिरबुद्धिः असंमूढः अस्थिरेण शरीरेण स्थिरमात्मानमेकीकृत्य मोहः सम्मोहः तद्रहितः । तच्च कथं ? ब्रह्मविद्ब्रह्मणि स्थितः । उपदेशेन ब्रह्मवित्सन् तस्मिन् ब्रह्मण्यभ्यासयुक्तः । एतदुक्तं भवति । तत्वविदामुपदेशेन आत्मयाथात्म्यविद्भूत्वा तत्रैव

यतमानो देहात्माभिमानं परित्यज्य स्थिररूपात्मावलोकनप्रियानुभवे व्यवस्थितः अस्थिरे प्राकृते प्रियाप्रिये प्राप्य हर्षोद्वेगौ न कुर्यात् इति ॥—

विचारः

'दुःखेष्वनुद्विग्नमनास्सुखेषु विगतस्पृहः ।' (II-56) इत्यनेन प्रथमार्धस्य गतार्थत्वं न शंकनीयं । तस्य स्थितप्रज्ञलक्षणत्वादिह तु मुमुक्ष्वनुष्ठेयसंन्यासस्य प्रपंचनाद्विवेको द्रष्टव्यः ॥ आध्यायसमाप्ति रागद्वेषादिवर्जनरूपः संन्यासः ईश्वरार्पणबुद्ध्या कर्मानुष्ठानरूपो योगश्च यथायथं प्रत्येकं वा संकलय्यवा प्रपंच्यते ॥ प्रकृतश्लोकस्य संन्यासप्रपंचने मुख्याशयः । प्रियाप्रियसमवधाने हर्षोद्वेगपरित्यागस्योक्तेः । द्वितीयार्धे तु प्रथमार्धोक्तसंन्यासप्राप्तये उपायाः कथ्यन्ते ॥ जीवस्वातन्त्र्यादिमोहराहित्यं बुद्धिस्थैर्यं ब्रह्मस्वातन्त्र्यधीः ब्रह्मस्मृतिश्च कर्मयोगोपाया इत्युक्तमवधेयं । न कोऽपि स्वास्वातन्त्र्येश्वरस्वातन्त्र्यज्ञानं विना हर्षोद्वेगौ परित्यक्तुं पारयतीति श्लोकार्धयोः परस्परं सङ्गतिः ॥

परे तु स्थितप्रज्ञापरपर्यायजीवन्मुक्तपरतामादाय श्लोकाक्षराणि योजयन्ति । आध्यायपरिसमाप्ति कर्माभावः प्रतिपाद्यते इति तदाशय. । अत्र 'न प्रहृष्येत्' 'नोद्विजेत्' इति लिङ्प्रयोगः स्थितप्रज्ञपरतां बाधते । तन्मते स्थितप्रज्ञस्य प्रियाप्रियप्राप्तेरेवायोगात् । हर्षोद्वेगौ स्वत एव दूरोत्सारितौ ॥ अतएव शङ्करभाष्यवाक्यं 'केवलात्मदर्शिनस्तस्य प्रियाप्रियप्राप्त्यसंभवात्' इति ॥ लिङा तु हर्षोद्वेगत्यागे प्रयतितव्यं इति गम्यते ॥ तस्मान्मुमुक्षुपरत्व एव स्वारस्यं दृश्यते न तु सिद्धपरत्वे ॥

लिङ्प्रयोगस्य बाधकत्वं दृष्ट्वा नीलकण्ठस्समाधत्ते । "बुद्धस्थितिरबुद्धेनानुष्ठेयेति ज्ञापयितुमुभयत्र लिङ्प्रयोगः" इति ॥ एवं मधुसूदनोऽपि ॥ "जीवन्मुक्तानां स्वाभाविकं चरितमेव मुमुक्षुभिः प्रयत्नपूर्वकमनुष्ठेयमिति

वदितुं लिङ्प्रत्ययौ" इति ॥ एतेन जीवन्मुक्तपरत्वे लिङोर्लेडर्थत्वं वक्तव्य-मित्याशयः स्फुटः। तद्रीत्या श्लोकस्य साधकपरत्वाभावेन सिद्धमात्रपरत्वे पद्ये लिङस्साथेक्यं चिन्त्यं ॥ किंच प्रियं प्राप्य अप्रियं प्राप्य इति प्राप्ति-वचनं च तेषां बाधकं॥ प्राप्तेरेवायोगात्॥ ब्रह्मवित् ब्रह्मणि स्थितः इति पदाभ्यां अन्यतरेण वा समाधिस्थः स्थितप्रज्ञो विवक्षित इति नीलकण्ठमधुसूदनाव-भिप्रयतः इति भाति। यतो नीलकण्ठ आह 'ब्रह्मवित् ब्रह्मभावस्य लब्धा। ब्रह्मभावं गत इत्यर्थः॥ ब्रह्मण्येव प्रत्यगद्वये व्युत्थानावस्थायामपि स्थितः' इति॥ एतेन ब्रह्मवित् समाधिस्थितः, ब्रह्मणि स्थितः व्युत्थितः इत्याशयोऽ-वगम्यते। एवं मधुसूदनः ब्रह्मणि स्थित इत्यत्र "ततश्च समाधिपरिपाकेन निर्दोषे समे स्थितो नान्यत्रेति जीवन्मुक्तः स्थितप्रज्ञ इत्यर्थः" इत्याह॥ अत्रेदं वक्तव्यं। समाधिस्थस्य प्रियाप्रियप्राप्तेस्सर्वथा बहिष्कारात् 'प्राप्य' इति पूर्वार्धोक्तिस्सुतरां दुर्घटा॥

'स्थिरबुद्धिरसम्मूढः' इति पदाभ्यां स्थिरभूते आत्मनि रतिः नश्वरभूते शरीरादौ तदभावः अस्थिरास्थिरयोर्देहात्मनोरैक्यगोचरमोहवैधुर्यं च सूच्यते इति रामानुजाचार्याभिप्रायः। अत एव स्थिरे आत्मनि बुद्धिः स्थिरबुद्धिरिति विग्रहमाह॥ असम्मूढः इत्यत्र मोहस्य सम्यक्त्वं नाम देहात्मनोरैक्यविषयत्वं इत्यभिप्रैति॥ अत आह 'एकीकृत्य' इति॥ अत्र वक्तव्यं॥ स्थिरा च सा बुद्धिश्चेति समानाधिकरणसमासग्रहणे न काप्यनुपपत्ति-रुक्ता, दृश्यते वा॥ स्थैर्यस्य बुद्धिविशेषणत्वसंभवात् जीवनित्यत्वमादायेह स्थिरशब्देन जीवग्रहणमनुचितं। तन्नित्यत्वस्याप्रस्तुतत्वात्॥ जीवस्य स्व-शब्देनानुपादाने निमित्तराहित्याच्च॥ मोहशब्देन देहात्मभ्रमस्य ग्रहणमपि क्लिष्टं। यत्रयत्र अज्ञानं मोहः भ्रमः इति पदानि वा तत्समानार्थानि वा दृश्यन्ते तत्र सर्वत्र चार्वाकमतीयदेहात्मभ्रम एव विवक्षित इति रामानुजा-चार्याशयो दृश्यते। यद्यपि अयं भ्रमो बहुधा निरसनीय एव। आस्तिकतायाः

परमविरोधित्वात् । तथापि सर्वत्र तस्यैव परामर्शे रामानुजाचार्येण तस्यानर्हं प्राधान्यं दत्तं भवति ॥ अतः बुद्धिस्थैर्यं भगवद्विषये कर्तव्यं मोहश्च भगवद्विषये न कर्तव्यः इति विवृत्याशयः ॥ कर्मकर्तव्यत्वप्रकरणत्वेन मुमुक्षुः परमात्मनस्स्वतन्त्रकर्तृत्वे स्थिरबुद्धिस्स्यात् तत्र न मुह्येदिति प्रकरणानुकूल्येन व्याख्यानमेवोचितम् ॥

**बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम् ।**
**स ब्रह्मयोगयुक्तात्मा सुखमक्षय्यमश्नुते ॥२१॥**

वि० ॥ संन्यासस्त्वित्यादिना संन्यासाद्योगस्याधिक्योक्त्यर्थं योगहीनसंन्यासस्य व्यर्थत्वं यदुक्तं तदयुक्तं । कामाद्युपद्रवक्षये स्वरूपसुखाविर्भावसत्त्वादित्यतः सत्यं तदेव सुखं भगवद्ध्यानरूपयोगे सत्यक्षयं भवतीति संन्यासाद्योगस्य पुनराधिक्यमाह । बाह्येति । स्पृश्यन्त इति शब्दाद्याः तेषां बाह्यत्वं श्रोत्राद्यविषयत्वसंपादनं तथाकृतविषयेषु असक्तमनस्कः संन्यासीति यावत् । आत्मनि स्वरूपे यत्सुखं विन्दत्यनुभवति । आत्मस्वरूपस्यापि न निर्विशेषत्वमिति ज्ञापनाय यत्सुखमित्येव वाच्ये आत्मनीत्यप्युक्तिः । यदित्युक्तेस्तदिति लभ्यते । संन्यासी ब्रह्मयोगयुक्तात्मा ब्रह्मणि योगो ब्रह्मयोगः ध्यानं तद्युक्तात्मा तत्सुखं कामाद्युपद्रवक्षयरूपसंन्यासादाविर्भूतं सुखं अक्षयं पुनस्तिरोभावहीनमश्नुते प्राप्नोतीत्यर्थः ॥

यद्वा योगयुक्तो मुनिर्ब्रह्मेत्यादिना योगरूपसंन्यासस्य यन्निःश्रेयसकरत्वमुक्तं तदुपपाद्यते । बाह्येति । संसारेऽप्यात्मस्मरणरूपाल्पयोगयुक्तः संन्यासी सुखं विन्दति यदा तदा ध्यानादिमहायोगादियुक्तो मोक्षादिनिःश्रेयसं विन्दतीति किमु वाच्यमित्यर्थः ॥

शं० ॥ किंच ब्रह्मणि स्थितो बाह्यस्पर्शेषु बाह्याश्च ते स्पर्शाश्च बाह्यस्पर्शाः ॥ स्पृश्यन्ते इति स्पर्शाः शब्दादयो विषयास्तेषु बाह्यस्पर्शेष्वसक्त आत्मान्तःकरणं यस्य सोऽयमसक्तात्मा विषयेषु प्रीतिवर्जितः सन् विन्दति लभते आत्मनि यत्सुखं तद्विन्दतीत्येतत् । स ब्रह्मयोगयुक्तात्मा ब्रह्मणि योगः समाधिर्ब्रह्मयोगस्तेन ब्रह्मयोगेन युक्तः समाहितस्तस्मिन्व्यापृत आत्मान्तःकरणं यस्य स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते प्राप्नोति । तस्माद्बाह्यविषयप्रीतेः क्षणिकाया इन्द्रियाणि निवर्तयेदात्मन्यक्षयसुखार्थीत्यर्थः ॥

रा० ॥ एवमुक्तेन प्रकारेण बाह्यस्पर्शेषु आत्मव्यतिरिक्तविषयानुभवेषु असक्तमनाः अन्तरात्मन्येव यत्सुखं विन्दति लभते; स प्रकृत्यभ्यासं विहाय ब्रह्मयोगयुक्तात्मा ब्रह्माभ्यासयुक्तमनाः ब्रह्मानुभवरूपमक्षयं सुखं प्राप्नोति ॥

विचारः

श्लोके सप्तम्यन्तात्मशब्द. जीवस्वरूपपरो ब्रह्मपरो वा ॥ आद्ये रागद्वेषादिवर्जनरूपसंन्यासाज्जीवस्वरूपे यत्सुखस्याविष्कारः तस्य विवक्षा । द्वितीये

परमात्मस्मरणजन्यं सुखं विवक्षितं ॥ इतरावात्मशब्दौ (असक्तात्मा—युक्तात्मा इत्यत्र) अन्तःकरणपरौ ॥

स्पर्शशब्दः स्पृश्यन्ते इति कर्मव्युत्पत्त्या विषयपरः । विषयाणां बाह्यत्वं नाम इन्द्रियागृहीतत्वमेव । संन्यासी खलु प्रथमं विषयान् दूरीकरोति । अनन्तरमसक्तस्सन् वैराग्ये प्रतिष्ठितः ॥ तथाच बाह्यस्पर्शेत्यनेन विषयाणां बहिष्कारः प्रथमं साधन वैराग्यपथे इत्युक्तं भवति ॥ केचित् बाह्या इति विषयाणां बहिर्वृत्तित्वरूपस्वरूपं कथ्यते इति मन्यन्ते । अनात्मधर्मत्वात् शब्दादयो बाह्याः इति मधुसूदनः ॥ स्वरूपकथनमिति पक्षो नीरसः । अतो विवृत्युक्त एव सुरसः ॥

आत्मनीति परमात्मपरत्वे अर्थस्सुगमः । आत्मनि सुखं नाम परमात्मस्मरणजन्यं सुखं ॥ संसारदशायामीषद्युक्तोऽपि यदि भगवन्तं स्मरेत् तदा महासुखं विन्दतीति भागवतानामनुभवः । अत एवोक्तं ध्रुवेण—

"या निर्वृतिस्तनुभृतां तव पादपद्म-
ध्यानाद्भवज्जनकथाश्रवणेन वा स्यात् ।
सा ब्रह्मणि स्वमहिमन्यपि नाथ माभूत्
किम्वन्तकासिलुलितात्पततां विमानात्" इति ॥

ईषद्युक्तोऽपि परमात्मनि स्मृतमात्रे सुखं विन्दतीति यस्मात्तस्मात् कैमुत्येन ब्रह्मयोगयुक्तात्मा सम्यग्युक्तः अक्षयं सुखं लभत इति सिद्धमेवेत्यर्थः ॥

आत्मशब्दस्य जीवस्वरूपपरत्वे सति इदमुक्तं भवति । स्वरूपसुखं द्विविधं अस्थिरं स्थिरंच ॥ आद्यं स्वारूपिकत्वेऽपि तिरोभावकलुषितत्वेनास्थिरमुच्यते ॥ द्वितीयं मोक्षानन्दः सर्वदाविर्भूतः ॥ कामाद्युपद्रवक्षये यद्यपि स्वरू-

पसुखस्याविर्भावस्संभवति । तत्तु सुखं अस्थिरं तिरोधानं याति ॥ अतस्सं-न्याससुखं अल्पं । योगसुखंतु ज्ञानद्वारा प्राप्तं अक्षयं । निरतिशयमोक्षा-नन्दत्वात् । अत: अनयोस्तारतम्यं महत् । मोक्षानन्दविवक्षया सन्यासा-नन्दस्त्वनानन्दप्राय: ॥ यथा पद्मरागतण्डुलमुष्टयोर्वैषम्यं तथा ॥ आत्मनि इति सप्तमीप्रयोगस्य भावस्तु सुखस्य जीवस्वरूपत्वेन तदभिन्नत्वेऽपि भेदकार्य-निर्वाहकविशेषबलाज्जीवरूपाधिकरणे विद्यमानत्वं संभवतीति ज्ञापनं ॥ तथाच सुखजीवयोस्सविशेषाभेदात् आत्मनि सुखं इति भेदबोधकाधिकरण सप्तम्या: उपपत्ति: इति ॥

प्रथमार्धे यत्सुखं इति यत् शब्दो भावगर्भित: । यदित्युक्तया तदित्य-स्यानुषङ्ग: । एतेन बाह्यस्पर्शादिविमुखस्य यत्सुखं तत्सुखं ब्रह्मयोगयुक्तस्या-क्षयसुखाद्विलक्षणमिति गम्यते । यदिवैलक्षण्ये नाभिप्राय: यदि संन्यासी अक्षयं सुखमश्नुते इति वाक्यमेकमेव तर्हि विन्दति आत्मनि इत्यादीनां वैयर्थ्यप्रसंग: । अतोऽधिकारिभेदेन पूर्वार्धोत्तरार्धयो: प्रतिपाद्यभेदो वर्ण-नीय: । तस्मादेव वाक्यभेद: विवक्षितसुखवैलक्षण्यं चेति ज्ञातव्यं ॥

नीलकण्ठस्तु यत्सुखं स ब्रह्मयोगयुक्तात्मा इति योजयित्वा सुखाभेदं वक्ति ब्रह्मयोगयुक्तात्मन: ॥ इदमस्य वाक्यं । 'यत्सुखं विन्दति स: तदेव सुखं । विधेयापेक्षं पुंस्त्वं । कस्तत्सुखं । ब्रह्मयोगयुक्तात्मा । * * । ब्रह्मविदेव तत्सुखमिति तस्य सुखाभिन्नत्वविवक्षयेदमुक्तं' इति । तथाच सुखाभिन्नो ब्रह्मविदक्षयं सुखमश्नुते इत्युक्तं भवति ॥ अत्र लिङ्गव्यत्ययसमाधानाय क्लेशो द्रष्टव्य: । सुखब्रह्मविदोरभेदोक्तौ सांगत्यं च दुर्गमं ॥ किंच 'आत्मनि यत्सुखं' इत्यत्र विवक्षितं सुखं सौषुप्तिकमिति नीलकण्ठो मन्यते ॥ यद्यपि सुषुप्तिकालीनं सुखं स्वरूपानन्द एव ॥ तथापि गीतोक्तं तु विरागिसुखमिति गम्यते । स्पर्शेष्वसक्तात्मेत्यसक्तिजन्यत्वस्योक्ते: । नहि सुप्तावसक्तिर्वक्तुं शक्यते । इन्द्रियव्यापाराणामुपरतावपि वैराग्यस्याभावात् ॥ सौषुप्तिकसुखस्य

पामरेषु च समानत्वेन ब्रह्मविदक्षयसुखोत्कर्षबोधनाय प्रतिद्वन्द्वितया सुषुप्तिसुखग्रहणे स्वारस्यं न ज्ञायते ॥ एतेन मधुसूदनोऽपि प्रत्युक्तो वेदितव्यः । स आह । "प्रत्यगात्मनि त्वंपदार्थे यत्सुखं स्वरूपभूतं सुषुप्तावनुभूयमानं विषयासक्तिप्रतिबन्धादलभ्यमानं तदेव तदभावाल्लभते । न केवलं त्वंपदार्थसुखमेव लभते किन्तु तत्पदार्थैक्यानुभवेन पूर्णसुखमपि" इति ॥ तथाच सुषुप्तौ त्वंपदार्थसुखमनुभूय तत्पदार्थसुखं पूर्णं च योगेनानुभवतीत्युक्तं भवति ॥ अत्र सुषुप्त्यनुभवोक्तेस्संगतिर्न गम्यते । नहि सुषुप्तिर्विरागः । अल्पसुखमनुभूय महासुखं लभते इत्येतावन्मात्राभिप्राये स्नात्वा भुक्त्वा पीत्वा सुखमनुभूयेत्यपि वचनं संगतं स्यात् ॥

नच वाच्यं विरक्तिनिमित्तं सुखमत्यल्पं विवक्षानर्हं सौषुप्तिकं तु स्वारूपिकमिति ॥ कामाद्युपद्रवक्षये सुषुप्ताविव स्वरूपसुखाविर्भावस्य संभवात् । अतएव भारते—'यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् । तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलां' इति ॥ अतः केवलरागद्वेषपरित्यागरूपात्संन्यासात् ब्रह्मयोगो विशिष्यते इत्येतदुपपाद्य योगिविरक्तयोस्सुखवैल प्रदर्शितवान् भगवानित्येव समंजसं ॥

सुखयोर्वैलक्षण्ये वाक्याभिसन्धिरिति पश्यन् पण्डितपामरसाधारणसुप्तेरिह संगतिं चापश्यन्शंकरानन्दस्त्वाह । "अयमभिप्रायः। गुहादौ रहसि समाधिं कुर्वतः समाधिकालएवात्मानन्दानुभवः । नतु सर्वत्र । ब्रह्मयोगयुक्तात्मनस्तु बहिरन्तस्सदा सर्वत्र ब्रह्मानन्दानुभवो निरर्गलः" इति ॥ इदं नात्यन्तिकमस्माकमनिष्टं ॥ सकृत्परमात्मस्मरणवानपि सुखमनुभवति किमुत सदायोगमग्नइत्यर्थस्याचार्यसम्मतेः ॥ (गी० ता०) यदि संसारी कामादीन्विहाय गुहां प्रविश्य रहसि ध्यानमग्नस्सुखमास्ते कदाचित् तादृशस्य प्रथमार्धे विवक्षा न नो विरुद्धा ॥

ब्रह्मयोगयुक्तात्मत्वनिरूपणावासरे तत्त्वंपदार्थैक्यप्रक्रियानिबिडान्य-द्वैतव्याख्यानानि ॥ तत्त वादान्तरमिति नेह विचार्यते ॥

रामानुजाचार्यस्तु प्रथमार्धे 'यस्सुखं' इति पठति । एतेन यः सः इत्यन्वयस्सुलभः । 'विन्दत्यात्मनि' इत्युपदेशादिजन्यज्ञानमूलं सुखं गृहीतं । परोक्षज्ञानिनो विरक्तस्य प्रथममारंभे क्षयि सुखं अनन्तरमक्षयं सुखमित्यभिसंन्धिरुक्तः । इदं व्याख्यानं नास्माकमनिष्टं—परन्तु 'तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते, इत्युक्तस्य योगाधिक्यस्य स्पष्टप्रतीतिर्नैतेन व्याख्यानेन लभ्यत इति विवृतिरीत्यैव वाक्यवृत्तिस्समीचीना ॥

**ये हि संस्पर्शजा भोगाः दुःखयोनय एव ते ।**
**आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ २२**

वि० ॥ कामादिवर्जनरूपसंन्यासार्थं कामभोगं निन्दति । येहीति । ये हि संस्पर्शजाः विषयसंबन्धसंभूताः भोगाः सुखानुभवाः ते दुःखयोनयएव । कुतइत्यतउक्तं आद्यन्तवन्त इति । उत्पत्तिविनाशवत्त्वादित्यर्थः । बुधो ज्ञानी तेषु विषयभोगेषु न रमते सक्तिं न करोतीत्यर्थः ॥

शं० ॥ इतश्च निवर्तयेत् येहि ॥ यस्मात्संस्पर्शजा विषयेन्द्रियसंस्पर्शेभ्यो जाताः भोगाः भुक्तयो दुःखयोनयएव ते । अविद्याकृतत्वात् ॥ दृश्यन्ते ह्याध्यात्मिकादीनि दुःखानि तन्निमित्तान्येव यथेह लोके तथा परलोकेपीति गम्यते एव-

शब्दात् । न संसारे सुखस्य गन्धमात्रमप्यस्तीति बुद्ध्वा विषयमृगतृष्णिकायाः इन्द्रियाणि निवर्तयेत् । न केवलं दुःखयोनय आद्यन्तवन्तश्च ॥ आदिर्विषये इन्द्रियसंयोगो भोगानामन्तश्च तद्वियोगएव ॥ अतः आद्यन्तवन्तोऽनित्याम-ध्यमक्षणभावित्वादित्यर्थः । कौन्तेय न तेषु रमते बुधो भोगेषु विवेक्यवगतपरमार्थतत्वः ॥ अत्यन्तमूढानामेव हि विषयेषु रतिः दृश्यते यथा पशुप्रभृतीनाम् ॥

रा० ॥ प्राकृतस्य भोगस्य सुत्यजतामाह ॥ विषये-न्द्रियसंस्पर्शजाः ये भोगाः दुःखयोनयस्ते दुःखोदर्काः । आद्यन्तवन्तः अल्पकालवर्तिनो ह्युपलभ्यन्ते । न तेषु तद्याथात्म्यविद्रमते ॥

विचारः

विषयभोगा हि दुःखजन्याः दुःखहेतवश्चेति सुष्टूक्तं दुःखयोनयः इति ॥ दुःखयोनित्वं कुत इत्याकाङ्क्षानिवृत्त्यर्थमुक्तं आद्यन्तवन्तः इति ॥ संस्पर्शजा इत्यनेन जन्यत्वोक्त्यैव अनित्यत्वं सिध्यतीति आद्यन्तवत्त्वोक्तिर्व्यर्थेति न शङ्कनीयं । अनादिप्रागभावस्य विनाशित्वेन सादिध्वंसस्य नित्यत्वेन च दृष्टत्वात् ॥ भावत्वेसति सादित्वस्य विनाशित्वेन सुस्थः प्रतिबन्धः इति च न वक्तुं शक्यते ॥ अनादिभावाविद्यायाः विनाशस्य प्रमितत्वात् । उत्पत्ति-मत्त्वेपि नित्यानित्यवस्तुनः पुराणस्य अनाशित्वात् ॥ तस्मादाद्यन्तवन्त इति सादित्वविनाशित्वयोः कण्ठतउक्तिस्सार्थिका विज्ञेया ॥

विषयभोगानां दुःखयोनित्वं तु अनुभवसिद्धं । उक्तं च विष्णुपुराणे । 'यावतः कुरुते जन्तुः संबन्धान्मनसः प्रियान् । तावन्तोऽस्य निखन्यन्ते

हृदये शोकशङ्कव.' । इति ॥ अन्यत्र च ॥ 'संपदः प्रमदाश्चैव तरङ्गोत्सङ्ग-भङ्गुराः । कस्तास्वहिफणाच्छत्रच्छायासु रमते बुधः ।' इति ॥ उक्तं च तुष्टिप्रकरणे सांख्यैः 'बाह्या विषयोपरमाः पंच' इति । विषयभोगेषु पंचविधदोषाणां संभावितत्वात्तेभ्य उपरमाः पंचेत्युक्तं । पंचविधाः आर्जन-रक्षणक्षयभोगहिंसादोषाः प्रपंचिता देशिकेन ॥ 'सागरतरणराजसेवादिषु शरीर-विनाशपर्यन्ता आर्जनदोषाः । सहस्रप्राकारपरिवृतगर्भगृहे निवेशितस्यापि रक्ष्यवस्तुनो राजदहनचोरमूषिकादयस्तन्निवारणक्लेशादयश्च रक्षणदोषाः । स्वर्गेऽपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृतिः इत्यादयः क्षयदोषाः । 'न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते'। 'अलाभे मत्तकाशिन्या दृष्टा तिर्यक्षु कामिता' इत्यादिव-दुत्तरोत्तररागप्रबन्धानर्थहेत्वयोग्यविषयप्रवृत्त्यादयो भोगदोषाः । सर्वस्य चास्य प्रायशः परहिंसागर्भत्वात्तदधीना ऐहिकामुष्मिकदुःखसन्ततयो हिंसा-दोषाः ।' इति ॥

शांकरास्तु संसारमिथ्यात्वं पुरस्कृत्य श्लोकभावमाहुः ॥ 'आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा' इति गौडपादवचनं प्रमाणीकृत्य 'पूर्वपरयो-रसत्त्वान्मध्ये स्वप्नवदाविर्भूताः क्षणिका मिथ्याभूताः' इत्याह मधुसूदनः ॥ किंच 'परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः' इति पातंजलसूत्रमनूद्य तद्रीत्या पदानि व्याख्याय स्वमतानुगुण्येन तदर्थं श्लोकारूढं करोति मधुसूदनः । तथाहि । 'औपनिषदानान्तु अनादिभाव-रूपमज्ञानमविद्या । अहंकारधर्म्यध्यासोऽस्मिता । रागद्वेषाभिनिवेशास्तद्वृत्ति-विशेषा इत्यविद्यामूलत्वात्सर्वेऽप्यविद्यात्मकत्वेन मिथ्याभूताः ॥ रज्जुभुजंगा-ध्यासवन्मिथ्याभूतत्वेऽपि दुःखयोनयः स्वप्नादिवद्दृष्टिसृष्टिमात्रत्वेनाद्यन्तवन्त-श्चेति बुधोऽधिष्ठानसाक्षात्कारेण निवृत्तभ्रमस्तेषु न रमते । मृगतृष्णिकास्वरूप-ज्ञानवानिव तत्रोदकार्थी न प्रवर्तते' इति ॥

अत्र वक्तव्यं । पूर्वमदृष्टं पश्चाद्दृश्यमानं वस्तु मध्ये किमित्यसत् । आदावन्तेचेति वचनं त्वप्रमाणं । यतो नित्यत्वसत्यत्वयोस्समनियतत्वं वा पर्यायशब्दवाच्यत्वं वा न संगच्छते । प्रत्यक्षसिद्धघटादिप्रपंचस्य मिथ्यात्ववर्णनाय कल्पितोऽयं न्यायः ॥ यत्तु औपनिषदानां सर्वं मिथ्येति निरूपणपूर्वकं विषयभोगानां दुःखयोनित्व साधित तदपि न ॥ गीतायां हि संस्पर्शजभोगानां दुःखयोनित्वमुक्तं । अत्र सर्वप्रपंचमिथ्यात्वस्य न दृश्यते संगतिः ॥ भोगाः दुःखयोनयः आद्यन्तवत्त्वादित्युक्ते पक्षसाध्यहेतूनां मिथ्यात्ववर्णनेन अनुमानस्य साध्यसाधकत्वं कथमायातं । दुःखस्यापि मिथ्यात्वेन तद्योनित्वं च न संभवति ॥ अतो बुधो न रमते भोगानां दुःखयोनित्वात् इत्यनुमानं च स्वरूपासिद्धं प्रसज्येत ॥ स्यात्प्रपञ्चो वस्तुतस्सत्यो वा मिथ्या वा । नहि पर्वतो वह्निमान् धूमात् इति प्रयुक्तेसति अनुमानं दुष्टं पर्वतवह्निधूमानां मृगतृष्णिकावदसत्त्वात् इति दूषणं सङ्गतं स्यात् । कुतः ॥ व्यवहारभूमौ विचारे प्रवृत्ते पारमार्थिकतत्वपुरस्कारेण दोषोद्भावनस्यासङ्गतत्वादिति वक्तव्यं । एवमेव प्रकृतेऽपि । व्यवहारभूमौ हि भोगाः संभाविताः । तथा दुःखयोनित्वस्य आद्यन्तवत्त्वस्यच व्यावहारिकत्वमभ्युपगतं परैः । तस्मात्तत्रैव हेतुसाध्ययोस्सामंजस्यपरीक्षा कर्तव्या ॥ बुधो न रमते इति बुधस्योपरमे दुःखयोनित्वं हेतुतया निरूपणीयं न तु तदभावः ॥ शाश्वते स्वरूपसुखे संभाविते सति किमिति क्षणभंगुरे विषयभोगे रमते बुधः इति नश्वरत्वोक्त्या मानवो बोधनीयः । सर्वमिथ्यात्वकथने तु युक्तेर्मूलोच्छेदाद्विवक्षितार्थासिद्धिप्रसङ्गः । इति ॥

शक्नोतीहैव यः सोढुं प्राक् शरीरविमोक्षणात् ।
कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥२३॥

वि० ॥ उक्तरूपसंन्यासार्थं कामभोगत्यागं प्रशंसति शक्नोतीति ॥ यः इहैव मानुषे देहे शरीरविमोक्षणात् प्राक् कामक्रोधोद्भवं वेगं मनसोऽनवस्थानं सोढुं शक्नोति । स नरः युक्तः ज्ञानोपायवान् सुखी च भवति ॥ मानुषदेह एव कामादिजवेगः सोढुं सुकरो नान्यदेह इति ज्ञापनाय इहैवेत्युक्तिः । अतोऽत्रैव तत्सहनाय प्रयतितव्यमिति भावः ॥

शं०॥ अयं च श्रेयोमार्गप्रतिपक्षी कष्टतमो दोषः सर्वानर्थप्राप्तिहेतुर्दुर्निवार्यश्चेति तत्परिहारे यत्नाधिक्यं कर्तव्यमित्याह भगवान् ॥ शक्नोतीति ॥ शक्नोति उत्सहते इहैव जीवन्नेव यः सोढुं प्रसहितुं प्राक् पूर्वं शरीरविमोक्षणादामरणात् । मरणसीमाकरणं जीवतोऽवश्यंभावी हि कामक्रोधोद्भवो वेगोऽनन्तनिमित्तवान्हि स इति । यावन्मरणं तावन्न विश्रंभणीयइत्यर्थः ॥ कामः इन्द्रियगोचरप्राप्ते इष्टे विषये श्रूयमाणे स्मर्यमाणे वानुभूते सुखहेतौ या तृष्णा स कामः । क्रोधश्चात्मनः प्रतिकूलेषु दुःखहेतुषु दृश्यमानेषु श्रूयमाणेषु स्मर्यमाणेषु वा यो द्वेषः स क्रोधः । तौ कामक्रोधावुद्भवो यस्य वेगस्य स कामक्रोधोद्भवो वेगः । रोमांचनहृष्टनेत्रवदनादिलिंगोन्तःकरणप्रक्षोभरूपः कामोद्भवो वेगो गात्र-

प्रकंपप्रस्वेदसंदष्टोष्ठपुटरक्तनेत्रादिलिङ्गः क्रोधोद्भवो वेगः। तं कामक्रोधोद्भवं वेगं यः प्रसहते सोढुं सहितुं स युक्तो योगी सुखी च इह लोके नरः॥

रा० शरीरमोक्षणात्प्रागिहैव साधनानुष्ठानदशायामेव आत्मानुभवप्रीत्या कामक्रोधोद्भवं वेगं सोढुं निरोद्धुं यश्शक्नोति स युक्तः आत्मानुभवायार्हः। स एव शरीरविमोक्षोत्तरकालमात्मानुभवैकसुखस्संपत्स्यते॥

विचारः

कर्मयोगान्तर्गतकामादिपरित्यागरूपसंन्यास एव प्रकरणार्थ इतीदं पद्य द्रढयति॥ यः कामक्रोधवेगं शक्नुयात्स युक्तः सुखीत्यनेन मुमुक्षुर्विवक्षित इत्यविवादं गम्यते। 'न रमते बुधः' इत्यतीतश्लोकोक्तोऽपि स एवेत्यनेन स्पष्टीकृतं भवति॥ अतस्साधूक्तं विवृतौ 'संन्यासार्थ कामभोगत्यागं प्रशंसति।' इति॥

ननु प्रशंसार्थ कामभोगपरित्यागो वर्णनीयः। इहैव प्राक् शरीरविमोक्षणात् इत्यस्य क उपयोगः। नहि शरीरविमोक्षणानन्तरं ब्रह्मलोकादिषु ज्ञानोपायतया कामादिपरित्यागः संभावितः। जितकामानामेव तत्र निवासश्रवणात्। नापि पश्वादिजन्मव्यावृत्त्यर्थं 'इहैव' इति मनुष्यशरीरमादाय प्रशंसोक्तिस्सार्थिकेति वाच्यं॥ स्यादेतद्यदि पश्वादिजन्मसु कामादित्यागप्रसक्तेरवकाशः यं व्युदस्य मनुष्यजन्मनि परित्यागः श्रेयानिति प्रशंसा उपपन्ना भवेत्॥ नैवं वक्तुं शक्यते। पश्वादिदेहे सहनाभावेनायोग्यतयैव तन्निरासात्॥ तस्मात् प्राक् शरीरविमोक्षणात् इहैव इत्येतयोर्व्यावर्त्याभावेन प्रशंसोक्तौ वैयर्थ्यं इति चेन्न। अभिप्रायानवगमात्। नह्यत्र यथाश्रुतैव

वाक्यवृत्तिः। किंतु वाक्यभेदेन योजनाभिप्रेता॥ यथा (१) यः कामक्रोधोद्भवं वेगं सोढुं शक्नोति स युक्तः सुखी नरः इत्येकं वाक्यं। इदं प्रशंसापरं॥ सोढुं इत्यत्र बुध्द्या विवेकेन सहनं इत्यादाय; (२) तच्च सहनं इहैव प्राक् शरीरविमोक्षणात् संभवति इत्यपरं वाक्यं॥ परलोकेषु वा पश्वादिजन्मसु वा संन्यासस्य संभावितत्वमभ्युपगम्य तद्व्युदासद्वारा प्रशंसाभिप्राये हि वैयर्थ्यं प्रसज्येत। नायमभिसन्धिः। वस्तुतः परलोकेषु पश्वादिजन्मसु च साधनभूतसंन्यासायोगात्। अतो मुमुक्षुबोधनाय द्वितीयं वाक्यं स्वरूपकथनरूपं वेदितव्यम्॥

इहैवेत्यनेन मानुषशरीरं विवक्षितमित्याचार्यः। अन्येत्वन्यथा कल्पयन्ति भावं। जीवत्येव देहे इत्याह नीलकण्ठः। अस्मिन्नर्थे प्राक् शरीरविमोक्षणादित्यनेन गतार्थत्वं व्यक्तं। गर्तपतनात्प्रागेव इति मधुसूदनः। कामक्रोधोद्भवसमय एव इति श्रीधरः। जन्मान्तरमनपेक्ष्य तीव्रमुमुक्षया अस्मिन्नेव जन्मनि इति शंकरानन्दः। साधनानुष्ठानदशायामेवेति रामानुजाचार्यः॥

तथाच कालविशेषपरत्वमाहुः परे। मनुष्यदेहाख्यस्थानविशेषपरतामाह श्रीमदाचार्य इति विशेषः॥

गर्तपतनात्प्रागेव यः सोढुं शक्नोति इति मधुसूदनव्याख्याने स्वारस्यं नाधिगम्यते। कालान्तरे वेगसहनव्यावृत्त्यर्थं हि एवं वक्तव्यं। किंतत्कालान्तरं? पतनानन्तरं स्वत एव सहनासंभवः। यद्युत्थितियोग्यं स्यात्पतनं तर्हि पतनानन्तरमपि सहनेनोद्धारस्संभावित इति कुतस्तद्व्युदासः॥

एतेन कामाद्युद्भवसमय एवेति श्रीधरीयःपक्षोऽपि प्रत्युक्तः॥ उद्भवानन्तरमपि यद्यसौ शक्तः तदा तेन कामादिनिरोधस्य कर्तव्यत्वात्। तेन वेगनिरोधे कृतेसति तस्य योगयुक्तत्वं सुखित्वं च कुतः प्रतिषिध्यते?

साक्षात्कारदशां व्यावर्त्य साधनानुष्ठानदशाग्रहणार्थं इहैव इत्युक्तमिति रामानुजाचार्याशयः ।। इदमपि न प्रत्याययति ।। साक्षात्कारदशायां कामादिवेगनिरोधस्याप्रसक्तेः । कामादिजयानन्तरभावित्वात्साक्षात्कारस्य ।। श्लोकस्तु साधकपरो न सिद्धपर इति स्फुटं ।।

'अस्मिन्नेव जन्मनि मोक्षं प्राप्तुमिच्छया' इति इहैवेत्यस्यार्थ उक्तश्शंकरानन्देन ।। तथाच यदि मुमुक्षा बहुतीव्रा नैकमपि जन्मान्तरं सहेत तेनैव कामादिवेगनिरोधः कार्य इत्याशयोऽभिव्यज्यते ।। अत्र चिन्त्यते कुतोऽयं निर्बन्ध इति । कामादिविजये बहुजन्मकृतयत्नैः परिपाक उपाय इति हि प्रमितं । मुमुक्षायां जन्मान्तरासहिष्णुत्वरूपतीव्रत्वं कथं स्यात् 'इहैव' शब्दार्थ इति न ज्ञायते ।।

तस्मात् शरीरशब्दसमभिव्याहारात् नरः इत्युक्तेश्च मनुष्यशरीरं इहेत्यनेन विवक्षितं इत्येव व्याख्यानं निरवद्यं ।। अस्मद्व्याख्याने परव्याख्यानादयं विशेषः ।। परे हि गर्तपतनात्प्राक् कामाद्युद्भवसमये अस्मिन्नेव जन्मनि साधनानुष्ठानदशायां इत्यादिविशेषणोपादानेन कालान्तर व्यावर्तयन्ति । कालान्तरे कामादिनिरोधः संभवतीत्यभ्युपगम्य तद्व्यावृत्तिर्विवक्षितेत्यभिप्रायेण विशेषणसार्थक्यं प्रतिपादितं ।। एवं कालान्तरव्यावृत्तौ युक्तिर्न दृश्यते । श्रीमदाचार्यव्याख्याने तु मानुषशरीरादन्यत्र परलोके पश्वादिजन्मनि वा संन्यासाख्यसाधनानुष्ठानं संभावितत्वेन नाभ्युपगम्यते । तर्हि अवधारणस्य का गतिरिति शंकायां वाक्यभेदग्रहणेन समाधीयते । इहैव मनुष्यशरीर एव सहन संभवति इति स्वरूपोपदेशः प्रयोजनं ।। अतः कामादिनिरोधस्यार्हत्वेन कालविशेषं परिगृह्य संभावितस्यापि कालान्तरस्य तिरस्कारे बीजाभावात्परपक्ष उपेक्षणीयः ।।

'प्राक् शरीरविमोक्षणात्' इति पदं च व्याख्यातुः श्रमं ददाति ।। शरीरविमोक्षणानन्तरं कामादिनिरोधस्यायोगात्कुत इदं विशेषण इति विचार्यम् ।।

इदमत्र श्रीधरीयं व्याख्यानं । "मरणादूर्ध्वं विलपन्तीभिर्युवतीभिरालिङ्ग्यमानोऽपि पुत्रादिभिर्दह्यमानोऽपि यथा प्राणशून्यः कामक्रोधवेगं सहते तथा मरणात्प्रागपि जीवन्नेव यः सहेत स एव युक्तस्सुखीचेत्यर्थः । तदुक्तं वसिष्ठेन ॥ 'प्राणे गते यथा देहः सुखं दुःखं न विन्दति । तथा चेत्प्राणयुक्तोऽपि स कैवल्याश्रमे वसेत् ।' इतीति" ॥ इदं मन्दं । मृतशरीरे कामाद्युद्भवस्य सर्वथाऽयोगात् तद्वेगनिरोधस्य दूरतोऽपास्तत्वात् ॥ उत्पन्नयोर्हि कामक्रोधयोर्वेगसहनं प्रस्तुतं ॥ अनुत्पन्नतामात्रे दृष्टान्तीकरणन्तु क्लिष्टं नीरसं अयुक्तं च ॥ वासिष्ठवचने तु अनुत्पत्तिरेव प्रदर्शिता दृष्टान्तदार्ष्टान्तिकयोः । तस्मात्तदुदाहरणं चानुपयुक्त इति ॥

प्राक् शरीरविमोक्षणात् इति यौवनकालो विवक्षित इति शङ्करानन्दोऽभिप्रैति । कथं स्यादयं शब्दार्थ इति चिन्त्यते ॥

यावद्देहपातं इति शाङ्कराणां व्याख्या ॥ मरणपर्यन्तं सहनमावश्यकं । सकृत्कृत्वाऽनन्तरमौदासीन्ये स्यादनर्थः। मया कामक्रोधौ जिताविति विस्रंभो न कदापि कार्यः ॥ इदमेव मरणसीमाकरणस्य तात्पर्यमित्याहुः ॥ अत्र चिन्त्यते ॥ मरणसीमाकरणाभिप्राये आशरीरविमोक्षण इत्यवक्ष्यत् ननु प्राक् शरीरविमोक्षणात् इति ॥ ननु आङो अभावेऽपि न बाधकं प्राग्दीव्यत इत्यादौ सीमार्थस्य दृष्टत्वादिति चेत् । सत्यं ॥ प्रयोगस्त्वपूर्वः । प्रकृते इहैव इत्यनेन आमरणं इत्यर्थस्य लाभात् गतार्थत्वं स्फुटं ॥ तस्मादामरणमित्यर्थो न रमणीयः ॥

तर्हि शरीरविमोक्षणानन्तरं कामादिनिरोधस्यासंभवात् विशेषणं व्यर्थं इति चेन्न । सर्वदा कामादिवेगसहनस्याशक्यत्वेऽपि मरणात्पूर्वं कदाचिन्निरोधोऽपि सफलः इति ज्ञापयितुमवधिप्रदर्शनं सार्थकं भाति ॥ अत एवाभिनवगुप्ताचार्यः शंकरभाष्यसाक्षाद्विरुद्धमत्राशयमाह ॥ "न चैतद्दुश्शकं शरीरान्तकालं ।

यावत्क्रोधकामजो वेगः क्षणमात्रं यदि सह्यते तदात्यन्तकी सुखप्राप्तिः" इति ॥ तथाच सकृत्क्षणमात्रसहनस्यापि साफल्यं प्राक् शरीरविमोक्षणात् इति शब्दबोध्यत्वेनायं शांकरोऽपि प्रदर्शयतीति द्रष्टव्यं ॥

शरीरानन्तरमेव फलप्राप्तौ तात्पर्यं इति द्योतनाय साधनस्य शरीरविमोक्षणात्प्रागनुष्ठेयतोक्तिरिति देशिको मन्यते ॥ अत्र चिन्त्यते । कुतोयं निर्बन्धः सहनफलं शरीरात्पश्चादेवेति । 'विन्दत्यात्मनि यत्सुखं' इत्युक्तरीत्या कामादिजयेनेहैव सुखस्य संभवात् ॥ प्रकृतश्लोके सुखीत्येनेनाक्षयं सुखमेव ग्राह्यं इत्यत्र तु ज्ञापकाभावात् ॥ अतो देशिकोपपादनं न प्रत्याययति ॥

पद्यं वाक्यद्वयघटितमिति योजनायां निरवद्यार्थं इति प्रागेवोक्तं कामक्रोधोद्भववेगसहन इहैव प्राक् शरीरविमोक्षणात् संभवतीति वाक्यमादाय विधेयगतविशेषणानामाशयो विचारितः । वाक्यभेदानुपादने बाधकं चोक्तं ॥

यः कामक्रोधोद्भव वेगं सोढुं शक्नोति स युक्तः स सुखी नरः इत्यपरं वाक्यं । अत्र पदानि न दुर्गमार्थानि ॥ नर इत्युक्ते अन्यः पशुरिति ध्वनिः। सोढुं इत्यत्र सहनं नाम निरोध इत्याह देशिकः । इदं निर्दुष्टं भाति । सुखीत्यत्राक्षयं सुखमेव विवक्षितमिति देशिको मन्यते ॥ अवधारणे गमकं तु चिन्त्यते ॥ युक्तः इत्यनेन लब्धसमाधिर्विवक्षित इति देशिकाशयः ॥ ज्ञानोपायवानुक्त इत्याह विवृत्याचार्यः । वेगं इत्यत्र मनोऽनवस्थानं वेगः इति प्रमेयदीपिका ॥ वेगाख्यगुणस्य कामक्रोधजन्यत्वाभावादेवं व्याख्यातमिति द्रष्टव्यम् ॥

वेगशब्दव्याख्यानावसरे निरूपितं मधुसूदनीये ॥ "यथाहि नद्या वेगो वर्षास्वतिप्रबलतया लोकवेदविरोधप्रतिसन्धानेनानिच्छन्तमपि गर्ते पातयित्वा मज्जयति चाधो नयति च तथा कामक्रोधयोरपि वेगो विषयाभिध्यानाभ्यासेन वर्षाकालस्थानीयेनातिप्रबललोकवेदविरोधप्रतिसंधानेना-

निच्छन्तमपि विषयगर्ते पातयित्वा संसारसमुद्रे मज्जयति चाधो महानरकान्नयति चेति वेगपदप्रयोगेण सूचितं" इति ॥ एतन्नास्माकमनिष्टं। आत्यन्तिककामादिविजयस्य रुद्रादिभिरप्यशक्यत्वात्कामक्रोधौ इत्यनुक्त्वा कामक्रोधोद्भवं वेगं इत्याह भगवानिति भाति ॥ मधुसूदननाममात्रमनभिधाय प्रायशस्तद्वाक्यान्येव पठित्वा स्ववाक्यैरिव व्याख्याति वेङ्कटनाथः इत्यस्मिन्प्रकरणे विशिष्य तद्व्याख्यानं न विचार्यते इति द्रष्टव्यम् ॥

योऽन्तस्सुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः।
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥२४

वि ॥ ज्ञानिलक्षणं प्रपंचयत्युत्तरैः श्लोकैः। योऽन्तः सुखः कामाद्युपद्रवक्षयाभिव्यक्तस्वरूपसुखः। अन्तरारामः भगवद्दर्शनजन्यसुखवान् ॥ उक्तज्ञानिलक्षणद्वये हेतुमाह। अन्तर्ज्योतिरन्तरभिव्यक्तभगवत्स्वरूपो यत इति। एतेनान्तर्ज्योतिष्ट्वमेव ज्ञानित्वमेतत्कथं ज्ञानिलक्षणमिति निरस्तं। तत्र हेतुसमर्पकत्वादस्येति ॥ असंप्रज्ञातसमाधिस्थस्य बाह्यादर्शनादेव शब्दः संप्रज्ञातसमाधावन्यदर्शनसत्त्वेऽपि तस्य ...त्वाददर्शनकल्पमेव तदिति भावः ॥ एवं चास्यान्यव्यवच्छेदप्रधानत्वादन्यदर्शनहीनांतर्ज्योतिष्ट्वमित्येवं लक्षणोक्तिपरत्वेऽपि न दोषः ॥ अन्तस्सुखत्वादौ हेतुस्तु स योगी ब्रह्मभूतो ब्रह्मणि स्थितो निर्वाणमशरीरं ब्रह्मा-

धिगच्छति। यतोतोऽन्तःसुखादिरित्येवमुत्तरार्धोक्तो ज्ञेयः नन्वेवं ब्रह्मभूतो ब्रह्माधिगच्छतीत्युक्त्यार्थाद्ब्रह्मभूतत्वस्य ब्रह्माधिगतिरूपब्रह्मज्ञानहेतुत्वमुक्तं। तच्च तद्बुद्धयइत्यादिनोक्तमेव ब्रह्मभूतत्वस्य तद्बुद्धित्वादिरूपत्वात्। सत्यमयमप्यनुवादएव योऽन्तस्सुखी योऽन्तरारामो योऽन्तर्ज्योतिरेव यश्च तद्बुद्धित्वादिरूपब्रह्मभूतः निर्वाणं ब्रह्माधिगच्छति स योगी ज्ञानीत्येवं ब्रह्मभूतपदं प्रागुक्ततद्बुद्धित्वादिरूपज्ञानसाधनानुवादः। यस्य ज्ञानस्य तद्बुद्धित्वादिरूपं ब्रह्मभूतत्वं साधनं तादृशज्ञानवानन्तःसुखत्वादिलक्षणक इति तात्पर्यार्थः। अत्र य इति पुनरुक्तिः सर्वत्रान्वयार्था॥

शं० कथंभूतश्च ब्रह्मणि स्थितो ब्रह्म प्राप्नोतीत्याह—योन्तस्सुखोऽन्तरात्मनि सुखं यस्य सोऽन्तस्सुखस्तथान्तरेवात्मन्याराम आक्रीडा यस्य सोऽन्तरारामस्तथैवान्तरात्मैव ज्योतिः प्रकाशो यस्य सोऽन्तर्ज्योतिरेव य ईदृशः स योगी ब्रह्मनिर्वाणं ब्रह्मणि निर्वृतिं मोक्षमिह जीवन्नेव ब्रह्मभूतः सन्नधिगच्छति प्राप्नोति॥

रा०॥ यो बाह्यविषयानुभवं सर्वं विहाय अन्तस्सुखः आत्मानुभवैकसुखः। अन्तरारामः आत्मैकोद्यानः स्वगुणैरात्मैव सुखवर्धको यस्य स तथोक्तः। तथान्तर्ज्योतिरात्मैकज्ञानो यो वर्तते स ब्रह्मभूतो योगी ब्रह्मनिर्वाणमात्मानुभवसुखं प्राप्नोति॥

विचारः

निर्वाणमिति ब्रह्मविशेषणं ॥ योगी प्राकृतशरीरशून्य ब्रह्म अधिगच्छतीत्यन्वयः । कायो बाणमित्युक्तेः निर्वाणमशरीर इति विवृतिव्याख्यानं साधु ॥ निश्चले अस्तगमने विनाशे निर्वृतौ मोक्षे च निर्वाणशब्दः प्रयुज्यते ॥ अन्तस्सुख इत्यनेन गतार्थत्वप्रसङ्गात् निर्वृतिवाचकत्वं न सभवति । नैश्चल्यादिकं तु अनुपयुक्त । यद्यपि मोक्षवाचकत्वं स्यात् । ब्रह्मनिर्वाणं सालोक्याद्यपवर्गं अधिगच्छति प्राप्नोति इत्यर्थो निर्दिष्टः॥ तथापि अधिगच्छतीत्यस्य जानातीत्यर्थः प्रकरणोचितः । लक्षणोक्त्या ब्रह्मज्ञानिपरत्वात्पद्यस्य । सालोक्यादिमोक्षस्तु चरमफलमिति नात्र विवक्षामर्हति । तस्मादप्राकृतं ब्रह्म योगी जानातीति ब्रह्मज्ञान्युच्यते । ब्रह्मज्ञानस्य साधनं किं लक्षणं च किं इत्याकांक्षायां ब्रह्मभूत इति साधनमुच्यते अन्तस्सुखः अन्तरारामः इति द्वयं वा अन्तर्ज्योतिरित्युक्तं च वादाय त्रय वा लक्षणं ॥ इदमग्रे विचार्यते ॥

तद्बुद्धयस्तदात्मानः इति बुद्धेः परमात्मोन्मुखत्वं यदुक्तं तदेव ब्रह्मभूत इत्यनूद्यते । अन्तर्ज्योतिष्ट्वाद्यधिकविधानार्थमनुवादः । अत्र ब्रह्मणि मनसा भूतः स्थितः ब्रह्मभूतः इति व्युत्पत्तिः । नतु ब्रह्मणैकीभूतः इति । ज्ञानिनोऽपि ब्रह्मभिन्नत्वाद्ब्रह्मत्वेन भवनं प्रमाणविरुद्धं ॥ किंच ब्रह्मभूतः ब्रह्मत्वं प्राप्तः ब्रह्म अधिगच्छति ब्रह्म प्राप्नोति ॥ प्राप्तमेव प्राप्नोति इति यत्परव्याख्यानं तदयुक्त । नहिकश्चित्स्वयं स्वात्मानं गच्छति ॥ आह मधुसूदनः । "नित्यप्राप्तमेव प्राप्नोति । यतः सर्वदैव ब्रह्मभूतो नान्यः । 'ब्रह्मैवसन्ब्रह्माप्येति' इति श्रुतेः 'अवस्थितेरिति काशकृत्स्नः' इति न्यायाच्च" इति ॥ किंचोत्कर्षदीपिकायां "प्राप्नोति प्राप्तमेव विस्मृतग्रैवेयकमिव प्राप्नोति 'ब्रह्मैवसन्ब्रह्माप्येति' इति श्रुतेः । 'अवस्थितेरिति काशकृत्स्नः' इति न्यायाच्चास्यैव परमात्मनोऽनेनापि विज्ञानात्मभावेनावस्थानादुपपन्नमिदमभेदेनोपक्रमणमिति काशकृत्स्न आचार्यो मन्यते ॥ तथाच ब्राह्मणं । "जीवेनात्मनानुप्रविश्य

नामरूपे व्याकरवाणि' इति। एवं जातीयकं परस्यैवात्मनो जीवभावेनावस्थानं दर्शयतीति तदर्थे." इति॥ अत्र चिन्त्यम्। प्राप्तस्यैव पुनः प्राप्तिरित्यर्थे 'अवस्थितेरिति काशकृत्स्नः' इति ब्रह्मसूत्रं न किंचिदपि साधकं। सूत्रस्यान्यथा व्याख्येयत्वात्॥ सूत्रस्यायमर्थः (पश्यन्तु सूत्रार्थमणिमंजरी) 'वैदिकशब्दानां जगद्वाचित्वं युक्तं। जगतस्तस्मिन् ब्रह्मण्यवस्थितेः। अवस्थितिमनुसृत्य अन्यार्थत्वात् सर्वाधारत्वप्रकारकब्रह्मज्ञानार्थत्वादिति काशकृत्स्नाचार्यो मन्यते। तथाच सर्वाधारत्वप्रकारकज्ञानस्याधेयज्ञानपुरस्सरत्वात्" इति॥ सूत्रं तु न जीवब्रह्मैक्यप्रतिपादक। यतः समन्वयाध्यायचतुर्थपादगतस्य समाकर्षाधिकरणस्य वैदिकशब्दानां भगवति पदान्वयवाक्यान्वय समर्थकत्वं सिद्धं। अन्यार्थत्वं जगद्वाचित्वं च वैदिकशब्दानां युज्यते तत्कथं इत्यत्र जैमिन्याश्मरथ्यौडुलोमिकाशकृत्स्नमतानि उदाहृतानि बादरायणाचार्येण॥ यस्तु जीवब्रह्मैक्यवादएव परस्परं मतभेदो दर्शितः इति पराभिसन्धिः स नोचितः। तत्र बादरायणमतस्यानुक्तेः सर्वेषामपि मतानां बादरायणीयाविरुद्धत्वेन ग्रहणस्यैवौचित्यात्। जीवब्रह्मैक्ये यदि मतवैचित्र्यं तर्हि तेनैव हेतुनाऽद्वैत दत्तजलांजलीत्यापतति। स्वगलग्राह्यपि मतवैचित्र्य त्वभिमत दृश्यते शङ्कराचार्यस्य॥ यथोक्तं तच्छारीरकभाष्ये। "काशकृत्स्नाचार्यस्याविकृतः परमेश्वरो जीवो नान्य इति मतं॥ आश्मरथ्यस्य तु यद्यपि जीवस्य परस्मादनन्यत्वमभिप्रेतं तथापि प्रतिज्ञासिद्धेरिति स्वापेक्षत्वाभिधानात् कार्यकारणभावः कियानप्यभिप्रेत इति गम्यते॥ औडुलोमिपक्षे पुनः स्पष्टमेवावस्थान्तरापेक्षौ भेदाभेदौ गम्येते। तत्र काशकृत्स्नीयं मतं श्रुत्यनुसारीति गम्यते" इति॥ अत्र बादरायणमतानुक्तावपि काशकृत्स्नीयस्यैव समीचीनत्वग्रहणं अनुचितं। जैमिन्याश्मरथ्यौडुलोमिमतानां अप्रत्याख्यातत्वात्॥ तस्माद्वैदिकशब्दानां जगद्वाचित्वं चोपपद्यतइत्यत्रैव तैराचार्यैरुपपादनभेदो द्रष्टव्यइत्येव समंजसं॥

(गीतायां ज्ञानिलक्षणकथनावसरे 'ब्रह्मनिर्वाणमृच्छति' इति ब्रह्मप्राप्तेः पूर्वमप्यस्य ब्रह्मत्वेन सत्त्वं किमित्युच्यत इति न ज्ञायते ।। सर्वेषां जीवानां ब्रह्मभूतत्वाविशेषात् नित्यप्राप्तं प्राप्नोति इत्यभिधाने विशेषप्रयोजनं चिन्त्यं । न च वाच्यं ब्रह्मात्मैक्यज्ञानमज्ञाज्ज्ञानिनं विशिनष्टीति । अन्तर्ज्योतिरित्यनेन गतार्थत्वात् )।

( द्वासुपर्णादिश्रुतिशतैर्जीवब्रह्मैक्यस्यातात्त्विकत्वात् ब्रह्मभूतशब्दः तद्बुद्धित्वापरपर्यायं ब्रह्मपरोक्षज्ञानभूतं साधकधर्मं वक्तीत्येव तत्त्वं )। अथोच्येत साधकधर्मस्यात्रापरोक्षज्ञानिलक्षणत्वेन कथनमयुक्तमिति । मैवं । ब्रह्मभूतत्वस्य लक्षणत्वेनानभिप्रायात् । किन्तु अन्तस्सुखत्वादेरेव लक्षणत्वेन विवक्षितत्वात् । योगी ब्रह्मभूतः निर्वाणं ब्रह्म गच्छन् अन्तर्ज्योतिर्भूत्वान्तस्सुखः अन्तराराम: इति साधनक्रमप्रतिपादकतया योजनस्य न्याय्यत्वात् ।। तथाच ब्रह्मभूतत्वं अन्तस्सुखत्वादेः कारणमित्युक्तं भवति ।।

(अस्याध्यायस्य संन्यासयोगनिरूपणपरत्वात् कर्मयोगाङ्गभूतौ संन्यासयोगौ निरूपितौ ।। तत्रापि क्वचिद्योगः क्वचित्संन्यासः क्वचिदुभावपि मेलयित्वा निरूपिताविति गम्यते ।। एवं योगाङ्गनिरूपणेन योगे प्रपंचितेसति योगफलस्य ज्ञानस्य निरूपणेन च योगनिरूपणं संगतमवधेयं । ज्ञानिलक्षणकथनं हि तन्निरूपणं । यद्यपि 'प्रजहाती'त्यादिभिः प्रागेव ज्ञानी वर्णितः । तथापि प्रकृते कामादिवर्जनात्मकसन्यासस्य ईश्वरार्पणबुद्ध्या कर्मानुष्ठानाख्ययोगस्य अपरोक्षज्ञानाख्यफलस्य च निरूपकेऽस्मिन्प्रकरणे ज्ञानिलक्षणादिप्रपंचनस्यास्त्यवसरः इति न पुनरुक्तित्वदोषश्शकनीयः ।।

प्रथमार्धे अन्तस्सुखः अन्तराराम इति पदद्वयं ज्ञानिलक्षणमिति व्यक्तं । सुखं द्विविधं । बाह्यविषयेभ्यउपरतैर्यज्जीवस्वरूपेऽभिव्यज्यते तदेकं । भगवद्दर्शनजातमपरं ।। अत्रान्तस्सुखइत्यनेनाद्यं विवक्षितं । अन्तरा-

रामइत्यनेन द्वितीयं । 'बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखं' इत्यात्मन्यभिव्यक्तिस्सुखस्योक्ता कामाद्युपद्रवक्षये ॥ 'दर्शनस्पर्शसंभाषाज्जायते यत्सुखं नृणां। आरामस्स तु विज्ञेयः सुखं कामक्षयोदितं' इति नारदीयवचनं भाष्योदाहृतं आरामसुखशब्दौ व्याख्याति ॥ अतएव आचार्यभाष्ये "आरामः परदर्शनादिनिमित्त सुखं । अत्रतु परमात्मदर्शनादिनिमित्तं तत् । सुखं तूपद्रवक्षये व्यक्तम् ॥ अत्रतु कामादिक्षये व्यक्तमात्मन.स्सुखम्" । इत्युक्तं ॥

परे तु प्रायशः सुखारामशब्दयोरर्थभेदं न स्फोरयन्ति । 'सुखं विषयसंगता प्रीतिः । आरामस्त्रयादिभिस्सहक्रीडा' इत्युक्तं नीलकण्ठीये ॥ इदं नीरसं ॥ उक्त देशिकेन "आत्मा वात्मन्येव वा सुखं यस्य सः अन्तस्सुखः ॥ आरामो हि भोगस्थानभूतः पल्लवपुष्पफलादिभिस्स्वगुणैः सुखवर्धकः । अत्रापि स्वगुणैरपहतपाप्मत्वज्ञानानन्दादिभिः स्वविषयवादकरणग्रन्थकरणादिक्रीडोत्थापकैरात्मैव सुखवर्धकइत्यारामशब्देनोपचर्यते" ॥ इति ॥ इदं च न रमणीयं । अनयोर्वैलक्षण्यस्यानभिव्यक्तत्वात् ॥ तस्मान्नारदीयप्रमाणानुसारेण यदाचार्येण प्रदर्शितं वैलक्षण्यं तदेव सुरसम् ॥

प्रथमार्धे एवकारो विशेषणत्रयेणापि संबध्यते । अन्तस्सुखएव अन्तरारामएव अन्तर्ज्योतिरेव इति तेन बाह्यानां दूरीकरणं अभिप्रेतं ॥ असंप्रज्ञातसमाध्यवस्थागतानां बाह्यादर्शनं सिद्ध । संप्रज्ञातापरोक्षिणां च बाह्यदर्शनादिकमकिंचित्करमिति तथोक्तिः ॥

अन्तर्ज्योतिरेव इत्युक्तं ज्ञानिलक्षणं वा न वेति संशयो जायेत ॥ उभयथाच न दोषइत्याचार्यपक्षः ॥ अयं क्रमेण विचार्यते ॥ अन्तर्ज्योतिरित्यत्र ज्योतिश्शब्दो भगवत्परः ॥ तस्यैव मख्यप्रकाशत्वात् ॥ मुख्यामुख्ययोर्मुख्ये संप्रत्यय इति न्यायेन सएव निरवधिकशब्दप्रवृत्तिनिमित्तं इत्यतोक्तः ॥ अन्तर्ज्योतिः भगवान् यस्येति विग्रहे सर्वेषामप्यन्तः भगवान्विद्यत इति

अन्तर्ज्योतिष्ट्वं ज्ञानिन न विशिनष्टीति प्रतीयते ॥ तस्मादन्तः व्यक्तं ज्योतिः भगवान् इति व्याख्याने ज्ञानिन्येव भगवद्व्यक्तेस्संभवात् अन्तर्ज्योतिष्ट्वं ज्ञानि-विशेषणमुपपन्नं भवति ॥ विग्रहवाक्ये व्यक्तशब्दोपादानं अन्तर्ज्योतिष्ट्वस्य ज्ञानिविशेषणत्वेनेह विवक्षितत्वसामर्थ्यात्संगच्छते ॥ अथवा अन्तर्ज्योतिर्भग-वान् यस्येत्येव विग्रहः । विग्रहवाक्ये व्यक्तशब्दस्य नोपादानं ॥ अन्तः व्यक्तं ज्योतिर्यस्य इति तात्पर्यं सुवचम् ॥

(अन्तर्ज्योतिरेव इत्यत्र एवशब्दस्य केनान्वय इत्यालोचनीयं । 'ननु एवशब्दस्समासार्थान्वयी वाऽवयवार्थान्वयी वा स्यात् ॥ अन्तर्ज्योतिर्यस्येति विशिष्टोऽन्यपदार्थः समासार्थः ॥ समासार्थान्वयित्वे ज्ञानि अन्तर्ज मेवोक्त भवति ॥ तेन अन्तः सुखत्वान्तरारामत्वे प्रतिषिद्धे भवत इति व्याहतिः ॥ समासावयवार्थान्वयित्वं हि एवं । सामासावयान्तःपदार्थः अन्तरभिव्यक्तिः । तथा ज्योतिःशब्दार्थो भगवत्स्वरूपं । तदन्वयित्वं ॥ तथा चान्तरेवद्रष्टा इति वा भगवन्तमेव यः पश्यति इति वा फलितं स्यात् ॥ ज्ञानिनामपि शुकादीनां भगवदन्यघटादिदर्शनस्य विद्यमानत्वाल्लक्षणमसंभवि" इति चेत्सत्यं ॥ अन्तस्सुखत्वान्तरारामत्वोक्तिव्याहतेस्समासार्थान्वयित्वं नेष्य-ते । किंतु द्वितीयपक्षएवाभिमतः । शुकादीनां संप्रज्ञातदशायां किंचिदन्य-दर्शनादिकं न मनो विक्षेपकरमिति न तत् लक्षणस्यासंभवमावहति ॥ तस्मात् यः भगवन्तमेवान्तरभिव्यक्तं पश्यति स ज्ञानीति योजनीयं ॥ भगवन्तमेवे-त्यनेनान्यदर्शननिमित्तकविक्षेपो व्यावर्तितः ॥

(ननु अन्तर्ज्योतिष्ट्वं ज्ञानिलक्षणं इति पक्षः आचार्यानुमतइत्युक्त । कथमेतत् ॥ अपरोक्षज्ञानिनो हि लक्षणमुच्यते । तत्रच ज्ञानित्वं लक्ष्यतावच्छे-दकं । तदेवान्तर्ज्योतिष्ट्वमिति लक्ष्यतावच्छेदकलक्षणयोरैक्यादितरभेदानुमि-तेर्वैयर्थ्यं स्यात् । व्याप्तिग्रहणकालएव पक्षतावच्छेदकसामानाधिकरण्येन साध्यासद्धर्जातत्वात् इात चन्न इतरव्यावृात्तगभमन्तर्ज्योतिष्ट्वं लक्षणमभि-

प्रेतं। न केवलं। एवकारस्यान्तरित्यनेन संबन्धेऽन्तर्मात्रज्योतिष्ट्वप्राप्त्या बाह्यतो भगवद्दर्शनं नास्तीत्येव लभ्यते न तु भगवदितरवस्तुदर्शननिषेधः॥ अतः एवशब्दः समासघटकज्योतिश्शब्देनान्वीयते। एवं अन्तर्ज्योतिरेव यस्या सावन्तर्ज्योतिरिति व्याख्याने अन्तर्ज्योतिष्ट्वमात्रस्यैव लाभेनेतरवस्तुदर्शनव्यावृत्तिस्सिद्धा। एतेन ज्ञानित्वं लक्ष्यतावच्छेदकं भगवन्मात्रज्ञानित्वरूपं अन्तर्ज्योतिष्ट्वं लक्षणमित्युक्तं भवति। अथवा भगवदन्यदर्शनशून्यत्वमेव लक्षणमित्यस्तु। शुकादीनां वस्त्वंतरदर्शनसत्तादशायां ज्ञानस्य तिरोहितत्वेनालक्ष्यत्वं इत्यसंभवित्वपरिहारश्चानुसंधेयः। यद्यपि "याथार्थ्यमेवमानत्व" मित्यादाविव लक्ष्यतावच्छेदकलक्षणयोरैक्येऽपि न दोषः। व्यवहारस्य साध्यत्वोपपत्तेः। तथापि एवशब्दस्य भगवद्दर्शनान्यदर्शनव्यवच्छेदप्रधानत्वादुक्तं समाधानमेवात्रादेयम्॥

(यद्वा अन्तर्ज्योतिष्ट्वं नात्र ज्ञानिलक्षणत्वेन विवक्षितं। किन्तु अन्तस्सुखः अन्तरारामः इति लक्षणद्वयमेव। यथोक्त न्यायदीपिकायां "नात्रान्तर्ज्योतिष्ट्वं ज्ञानिलक्षणमुच्यते। किंत्वन्तःसुखत्वाद्येव। तत्रकारणत्वेनान्तर्ज्योतिष्ट्वमुच्यत इति भावः" इति। अयमत्र क्रमेण पर्वभेदः। (१) योगित्वं (२) ब्रह्मभूतत्वं (३) निर्वाणब्रह्माधिगति. (४) अन्तर्ज्योतिष्ट्वम्॥ (५) अन्तस्सुखत्वं अन्तरारामत्व च इति)॥

**लभन्ते ब्रह्म निर्वाणमृषयः क्षीणकल्मषाः।**
**छिन्नद्वैधायतात्मानः सर्वभूतहिते रताः॥ २५॥**

वि०॥ अन्तस्सुखत्वादिलक्षणसंपादको ब्रह्माधिगमो न ब्रह्मभूतत्वमात्राद्भवति। किन्तु पापक्षयाच्चेत्याह। लभन्त

इति । द्वैधशब्दोऽत्र द्वेधाभावो द्वैधमिति विषयापेक्षयान्य-प्रकारत्वरूपायथार्थत्वपरः सन्नयाथार्थ्योपेतज्ञानलक्षको भूत्वा संशयविपर्ययपरः ॥ ऋषयो ज्ञानिनः क्षीणकल्मषाः निवृत्त-पाप्मानो भूत्वा छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताश्च भवन्तीति शेषः ॥ छिन्नौ द्वैधौ संशयविपर्ययौ येषां ते छिन्न-द्वैधाः ॥ ते च ते आयतात्मानश्च दीर्घमनस्काः ॥ श्रवणा-दिना विदितसर्ववेद्याइति यावत् ॥ छिन्नद्वैधायतात्मानः छिन्नद्वैधत्वे क्षीणकल्मषत्वमिवायतात्मत्वमपि बुद्ध्या वि-विच्य हेतुत्वेन योज्यं ॥ यतात्मानो वशीकृतमनस्काइति भिन्नं पदं वा । ततश्च निर्वाणमशरीरं ब्रह्म लभंते । उप-शब्दोऽत्र योज्यः । उपलभन्ते पश्यन्तीत्यर्थः ॥ अत्र ज्ञानस्य प्रतिबन्धकपापक्षयाख्यकारणोक्तावपि असाधारणं कारणं कार्यस्य लक्षणं भवतीत्यस्य लक्षणप्रपंचनपरत्वमविरुद्धं ध्येयम् ॥

शं० ॥ किंच लभन्ते ब्रह्मनिर्वाणं मोक्षमृषयः सम्यग्द-र्शिनः संन्यासिनः क्षीणकल्मषाः क्षीणपापादिदोषाः छिन्न-द्वैधाश्छिन्नसंशया यतात्मानः संयतेन्द्रियाः सर्वभूतहिते रताः सर्वेषां भूतानां हिते आनुकूल्ये रताः अहिंसका इत्यर्थः ॥

रा० ॥ छिन्नद्वैधाः शीतोष्णादिद्वन्द्वैर्विमुक्ताः यतात्मानः आत्मन्येव नियमितमनसः सर्वभूतहिते रताः आत्मवत्सर्वेषां भूतानां हितेष्वेव निरताः ऋषयः द्रष्टारः आत्मावलोकनपराः

य एवं भूतास्ते क्षीणाशेषात्मप्राप्तिविरोधिकल्मषाः ब्रह्म निर्वाणं लभन्ते ॥

विचारः

तद्बुद्धित्वापरपर्यायब्रह्मभूतत्वेन ब्रह्मज्ञानं जायत इत्युक्तं ॥ इदानीं ब्रह्मज्ञानोत्पत्तौ क्षीणकल्मषत्वस्यापि हेतुत्वमुच्यते ॥ निर्वाणं अशरीरं ब्रह्म लभन्ते उपलभन्ते इति योजनया ब्रह्मज्ञानस्य पापक्षयफलत्वं वाक्यार्थः । ज्ञानिलक्षणप्रपंचके श्लोकत्रये मोक्षोक्तिर्नातिसंगतेत्यभिप्रायेण लभन्तइत्यस्य जानन्ति इत्यर्थ आश्रितः । उपेत्युपसर्गसंयोगे ज्ञानार्थत्वं धातोर्व्यक्तं ॥ उपसर्गाहि धात्वर्थव्यंजकाएव नत्वपूर्वार्थवाचकाः । 'प्रहाराहारसंहारविहारपरिहारवत्' इत्युदाहरण ॥

क्षीणकल्मषत्वस्य ज्ञानं प्रति कारणत्व यदभिप्रेतं तत्र शिष्येण चिन्त्यते ॥ ननु पापस्य प्रतिबन्धकरूपत्वात् प्रतिबन्धकाभावस्य कारणत्वोक्तौ सिद्धान्तविरोधः ॥ उक्तं हि सुधायां 'तर्हि दोषाभावः कारणमित्यायातं इति चेन्न । तथासति उत्सर्गापवादयोः क्वाप्यभावप्रसंगात्' इति । एतेन प्रतिबन्धकाभावस्य कारणत्वं अनभ्युपगतं ज्ञायते । इति । उच्यते । प्रतिबन्धकाभावः कारणं नेत्युत्सर्गः ॥ यत्रतु 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः' इत्याद्यपवादस्तत्र कारणत्वमेव ॥ तथाचोत्सर्गाभिप्रायेण सुधाप्रवृत्तेर्न विरोधः इति । (कृ०) केचित्प्रतिबन्धकाभावस्य कारणत्वोक्तेः प्रयोजकत्वाभिप्रायकत्वान्न विरोध इत्याहुः । एवं पापक्षयस्य ब्रह्मज्ञानासाधारणकारणत्वाज्ज्ञानिलक्षणं संभवितुमर्हतीत्युक्तं भवति ॥ अत्रपुनश्शंक्यते ॥ कार्यस्य लक्षणं कथं स्यात्कारणं इति । उच्यते । असाधारणधर्मस्य लक्ष्यज्ञापकत्वेन लक्षणत्वसंभवात् । यथा विशिष्टमेघोन्नतिर्वृष्टेर्लक्षणं । यद्वाऽसाधारणकारणकत्वं कार्यस्यैवासाधारणमिति युक्तं लक्षणत्वमित्याशयः ॥

ऋषयः इति सूक्ष्मतत्वदर्शिन उच्यन्ते । 'ऋषी तत्वार्थदर्शने' इति धातुव्याख्यानं ॥ संन्यासिनउच्यन्ते इति मधुसूदनः । एवं निर्बन्धे न दृश्यते गमकं ॥ "दृश्यतेत्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" इति श्रुत्युक्ताः ऋषयः ॥

ऋषयो निष्कामकर्मणा क्षीणकल्मषा भवन्ति । ततः आयतात्मानः दीर्घमनस्काः विदितसर्ववेद्या जायन्ते ॥ ततः ज्ञानासिच्छिन्नसंशयविपर्यया-स्स्युः। ततः सर्वभूतहितेरतास्सन्तो निर्वाणं ब्रह्मोपलभन्ते इति हेतुहेतुमद्भाव-क्रमो द्रष्टव्यः॥।

छिन्नद्वैधायतात्मानः इत्येक पदं वा पदद्वयं वा ॥ परे सर्वेऽपि द्वितीयपक्षमेव स्वीकुर्वते ॥ यतात्मानः नियतमनसः जितचित्ताः इत्यर्थः ॥ एकमेव पदमिति पक्षे छिन्नद्वैधाश्च ते आयतात्मानश्च इति विग्रहः । द्वेधाभावो द्वैधं संशयविपर्ययरूपं ज्ञानं । छिन्ने यषामिति छिन्नद्वैधाः संशयविपर्ययरहिताः उच्यन्ते । आयताः विस्तीर्णा आत्मानः मनांसि येषामिति दीर्घमनस्कत्वमर्थः ॥ मनसो दीर्घत्वं नाम ज्ञानस्य बहुविषयत्वमभिप्रेत ॥ अतस्सर्वज्ञकल्पा इत्याशयः ॥ यद्यपि द्वैधशब्दः कोटिद्वयात्मकत्वेन सशयस्यैव वाचको भाति। एवमेव सर्वेऽपि शाङ्करा व्याचक्षते॥ श्रीमदाचार्यस्तु संशयविपर्ययौ संगृह्णाति द्वैधशब्देन॥ विपर्ययस्य द्विकोटिकत्वाभावात्कथं तस्य सग्रह इत्यत उक्तं प्रमेयदीपिकायां 'विषयापेक्षयाऽन्यप्रकारत्वमयथार्थमिति यावत् । तेन च तद्वज्ज्ञानमुपलक्ष्यते' इति ॥ विषयापेक्षयान्यप्रकाररूपत्वं संशयविपर्ययोस्समानं इति तदेव संग्राहकधर्मो विवक्षितः नतु कोटिद्वयोपेतत्वं ॥ अत्र परिष्कृतं कृष्णाचार्यैटिप्पण्यां । "ननु विषयापेक्षयाऽन्यप्रकारकत्वं नाम यदि तदपेक्षयान्यधर्मत्त्वं तदा प्रमायामतिव्याप्तिः ॥ यदित्वन्यप्रकारावगाहित्वं तदा विशेष्यान्यत्वविवक्षायामतिव्याप्तिः । प्रकारान्यत्वाविवक्षायांचासंभवः । प्रकारस्य प्रकारान्य-

त्वाभावात् । इतिचेत्, अयथार्थत्वमेव विषयापेक्षयान्यप्रकारत्वं विवक्षितं" इति ॥

द्वैधं इत्यनेन सत्सिद्धान्तविरोधिसर्वविधसंशयविपर्ययाणां संग्रहः । द्वैधं भेदावगाहिसंशयइत्यद्वैतिनो वदन्ति । अभेदावगाहीति वयं ॥ इदमत्र शङ्करानन्दोपपादन (१) आत्माचिद्रूपोवाऽचिद्रूपोवा (२) चिद्रूपत्वे नित्यो वाऽनित्यो वा (३) नित्यत्वेऽपि देहेन्द्रियादिभ्यो भिन्नो वाऽभिन्नो वा (४) भिन्नत्वेपि देहादिभिस्संसृष्टो वा न वा (५) असंसृष्टत्वेऽपि स्वयंकर्तृत्वादिधर्मविशिष्टो वा न वा (६) कर्तृत्वादिधर्मवैशिष्ट्याभावेऽपि स्वयमसंगो वा न वा (७) असंगत्वेऽपि देहादिकृतकर्मभिर्लिप्यते वा न वा (८) कर्मलेपाभावेऽपि स्वयं ब्रह्माभिन्नो वा न वा (९) ब्रह्माभिन्नत्वेऽपि ब्रह्मात्मैकत्वविज्ञानं ममोत्पन्नं वा न वा (१०) उत्पन्नत्वेऽपि तज्ज्ञानं यथार्थं वाऽयथार्थं वा (११) यथार्थत्वेऽपि मुक्तेः साधकं वाऽसाधकं वा (१२) मुक्तिसाधकत्वेऽपि मम जीवन्मुक्तिरस्ति वा न वा (१३) तत्सत्वेऽपि विदेहमुक्तिः सिध्यति वा न वेत्येवमादयः संशयाः ॥ इति ॥ अत्र केचित्संशया असंभाविताः ॥ आद्यत्रयं विनाऽन्ये-प्रश्नाः शङ्करानन्दाशयवैपरीत्येन समाधेयाः श्रीमदाचार्यानुगैः ॥ न केवलमेवं जातीयकाः संशयाः किन्तु विपर्ययाश्च द्वैधशब्देनाभिप्रेता इति द्रष्टव्यं । ईश्वरो न विद्यते ॥ विद्यमानत्वेऽपि न मत्तो भिन्नः । अहं स्वतन्त्रः ईश्वरो निर्गुणः । अथवाष्टगुणः । इत्यादयो विवक्षिताः ॥

द्वैधं भेदः इति शांकराशयमालक्ष्य तन्निरासाय शीतोष्णादिद्वन्द्वपरत्वेन व्याख्याति रामानुजाचार्यः ॥ द्वैधशब्दस्य संशयाद्यर्थत्वमनुचितमिति चाह देशिकः ॥ इदन्तु चिन्त्यं ॥ संशयविपर्ययच्छेदस्य ज्ञानिविशेषणत्वेन संगतत्वात् ॥ 'विपर्ययः संशयो वा यद्द्वैधं त्वकृतात्मनां ॥ ज्ञानासिना तु तच्छित्वा मुक्तसंगः परिव्रजेत्' इति । 'क्षीणपापा महाज्ञाना जायन्ते गतसंशयाः ।' इति चोक्तेः द्वैधशब्दार्थो व्याख्यातोऽवगंतव्यः ॥ क्षीणकल्मषत्वस्य

आयतात्मत्वरूपब्रह्मज्ञत्वहेतुत्वं, ब्रह्मज्ञत्वस्य छिन्नद्वैधत्वहेतुत्वं इति च प्रमाणवचनेनैव प्राप्त द्रष्टव्यम् ॥

मधुसूदनस्तु पद्यस्थविशेषणानामन्योन्यसंबन्धमेवं दर्शयति ॥ 'प्रथमं यज्ञादिभिः क्षीणकल्मषाः । ततोऽन्तःकरणशुद्ध्या ऋषयः सूक्ष्मवस्तुविवेचनसमर्थास्संन्यासिनः । ततः श्रवणादिपरिपाकेन छिन्नद्वैधा निवृत्तसर्वसंशयाः । ततो निदिध्यासनपरिपाकेन संयतात्मानः परमात्मन्येवैकाग्रचित्ताः । एतादृशाश्च द्वैतादर्शित्वेन सर्वभूतहिते रताः हिंसाशून्याः ब्रह्मविदो ब्रह्मनिर्वाणं लभन्ते' इति ॥ अत्रोच्यते । द्वैतादर्शित्वेन इत्यद्वैतप्रक्रिया श्लोकाक्षराप्राप्ता ॥ श्रवणमननाभ्यां संशयच्छेदो निदिध्यासनेन यतात्मत्वं इति विवेको योऽभिप्रेतः सोऽपि नाक्षरार्थः ॥ क्षीणकल्मषाः आयतात्मानो भूत्वा छिन्नद्वैधा भवन्तीति योजनस्य 'क्षीणपापा महाज्ञाना जायन्ते गतसंशयाः' इति प्रमाणवाक्यानुगुण्येन रम्यत्वमवधेयं ॥ तस्मात्क्षीणकल्मषत्वायतात्मत्वच्छिन्नद्वैधत्वानां हेतुहेतुमद्भाव एवाशयस्सुरसः ॥

सर्वभूतहितेरताः इत्युक्तिर्ज्ञानिनां कामक्रोधादिवर्जितत्वादुपपद्यते ॥ तेहि स्वार्थं न कमपि द्विषन्ति ॥ सर्वभूतहितो भगवान् तस्मिन् रता इति वा ॥ 'तदेतत्पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरन्तरं यदयमात्मा' इति श्रवणात् ज्ञानिनां भगवदन्यप्रियवस्तुराहित्यं प्रमितम् ॥

स्वार्थं ज्ञानिनः परहिंसाविधुरा इति तत्वं मात्सर्यादिपूर्णेस्मिँ लोके यदि हृद्गतं तावद्भवेत्तर्हि कृतयुगइव स्यादाचारः । तत्वन्तु तथैव ॥ यथोक्तं भारते ॥

"यो नात्युक्तः प्राह रूक्षं प्रियं वा यो वा हतो न प्रतिहन्ति धैर्यात् । पापं च यो नेच्छति तस्य हन्तुस्तस्येह देवाः स्पृहयन्ति नित्यं" । शान्ति-

"निन्दत्सु च समानित्यं प्रशंसत्सु च देवल ।
निन्हुवन्ति च ये तेषां समयं सुकृतं च यत्" ॥

"उक्ताश्च न वदिष्यन्ति वक्तारमहिते हितं ।
प्रतिहन्तुं न चेच्छन्ति हन्तारं वै मनीषिणः ॥" Ch. 229.

"यदन्यैर्विहितं नेच्छेदात्मनः कर्म पूरुषः ।
न तत्परेषु कुर्वीत जानन्नप्रियमात्मनः ॥" 259-19

"जीवितं यः स्वयं चेच्छेत्कथं सोन्यं प्रघातयेत् ।
यद्यदात्मनि चेच्छेत तत्परस्यापि चिन्तयेत् ॥" 259-21-11.

इत्यादि ॥

हिरण्यकशपूद्धाराय नृसिंहं प्रति यत्प्रह्लादवचनं "तस्मात्पिता मे पूयेत दुरन्ताद्दुस्तरादघात्" इति तत्सर्वभूतहितेरतत्वं ज्ञानिनां स्पष्टीकरोति॥

**कामक्रोधवियुक्तानां यतीनां यतचेतसां ।**
**अभितो ब्रह्म निर्वाणं वर्तते विदितात्मनां ॥ २६**

वि० ॥ न केवलं अन्तस्सुखत्वादिकमेव ज्ञानिलक्षणं किन्तु सर्वदेशकालेषु सुखेन ब्रह्मलब्धिमत्त्वमपीत्याह । कामक्रोधेति । यतीनां प्रयत्नवतां यतचेतसां वशीकृतमनस्कानां अभितः सर्वदेशकालेषु वर्तते । रक्षकत्वेन ज्ञान-

विषयत्वेन वेत्यर्थः । विदितात्मनां ब्रह्मज्ञानिनां । शिष्टं व्यक्तं ॥

शं० ॥ किंच कामक्रोधवियुक्तानां कामश्च क्रोधश्च कामक्रोधौ ताभ्यां वियुक्तानां यतीनां संन्यासिनां यतचेतसां संयतान्तःकरणानां अभितः उभयतो जीवतां मृतानां च ब्रह्मनिर्वाणं मोक्षो वर्तते विदितात्मनां विदितो ज्ञात आत्मा येषां ते विदितात्मानस्तेषां विदितात्मनां सम्यग्दर्शिनामित्यर्थः ॥

रा० ॥ उक्तलक्षणानां ब्रह्मात्यन्तसुलभमित्याह—;कामक्रोधवियुक्तानां यतीनां यतनशीलानां यतचेतसां नियमितमनसां विजितात्मनां विजितमनसां ब्रह्मनिर्वाणं अभितो वर्तते । एवंभूतानां हस्तस्थं ब्रह्मनिर्वाणमित्यर्थः ॥

विचारः

अन्तस्सुखत्वं ज्ञानिलक्षणं । अन्तरारामत्वं च ॥ अन्तर्ज्योतिष्ट्वमपि स्याल्लक्षणं इति प्रागेव विचारितं । ब्रह्मज्ञानं यथा ब्रह्मभूतत्वेन भवति तथा क्षीणकल्मषत्वेनापीत्युक्त्वा ब्रह्मज्ञानिनां अशरीरं ब्रह्म सर्वदेशेषु सर्वकालेषु च सुलभमितीदानीं उच्यते ॥ तथाच सर्वदेशेषु सर्वकालेषु च सुखेन ब्रह्मलब्धिमत्त्वं च ब्रह्मज्ञानिलक्षणमित्युक्तं भवति ॥ एतेन 'योन्तःसुखः' इत्यारभ्यैतावत्पर्यन्तं ज्ञानिलक्षणं प्रपंचितं इति स्पष्टम् ॥

रामानुजाचार्योऽस्मिन्पद्ये 'विदितात्मनां' इत्यस्य स्थाने 'विजितात्मनां' इति पठति ॥ ज्ञानिलक्षणप्रपंचनं प्रकरणाशय इत्यसौ नाङ्गी-

करोतीव भाति ॥ समदर्शित्वसाधकानुष्ठानप्रकाराष्षड्भिः पद्यैर्निरूपिताइत्यादाय पूर्वश्लोकैरभिहितान् अर्थाननूद्य शीघ्रप्रवृत्तिसिध्यर्थं तेषां ब्रह्मसौलभ्याख्यं फलमीदानीमुच्यते इति देशिकः प्रदर्शयति ॥ पद्यस्थविशेषणानां प्रयोजनकथनावसरे अनुवादत्वेन सार्थक्यमसावभिप्रैति । तथाहि 'कामक्रोधवियुक्ततोक्तिः शक्नोति इति श्लोकार्थानुवादः । क्रोधनिवृत्त्यैव सर्वभूतहितेरतत्वमिति सूचितम् । यतीनां यत्नशीलानामित्यनेन न प्रहृष्येत् इति श्लोकद्वयार्थोऽनूदितः । विजितात्मनां इत्यनेन येहि इति श्लोकस्यार्थस्सूचितः' इति ॥ एवं पुनरुक्तत्वशङ्कां परिहृत्य आह । 'एवं पुनरुक्तिपरिहाराज्ञानात् विदितात्मनां इति परैः पठितं' इति ॥ विवृत्याचार्यस्तु विदितात्मनां इति पाठं गृहीतवान् ॥ तथैव शाङ्कराश्च ॥ अत्रैतद्वक्तव्यं । येहि इति श्लोकार्थानुवाद एवात्र परमप्रसक्त इति को निर्बन्धः ॥ तदनुवादस्य प्रसक्तत्वेऽपि पद्यगतैरन्यविशेषणैस्तदनुवादो न भवेत् तदर्थं विजितात्मनामित्येव पठनीयमिति च को नियमः ? ॥ ज्ञानिनां ब्रह्म सर्वत्र सर्वदा सुलभं वर्तते इत्यर्थस्य युक्तत्वात्तत्त्यागे युक्तिर्न दृश्यते ॥ यच्च 'कामक्रोधवियुक्तानां' इत्यनेन 'शक्नोती'ति श्लोकार्थोऽनूदितः इत्युक्तं तन्न समंजसं । यतः 'शक्नोती'ति श्लोके कामक्रोधोद्भूतवेगसहनमुक्तं प्रकृते तु कामक्रोधवियुक्तत्वं । अस्ति चानयोर्भेदः । उत्पन्नयोः कामक्रोधयोः मनोऽनवस्थानं वेगसहनं । कामक्रोधानुत्पत्तिस्ताद्वियुक्तत्वं इति विवेकः स्याद्विवक्षितः ॥ वेगसहनं साधकव्यापारः वियुक्तत्वं सिद्धलक्षणमिति च विवेकः स्फुटः । तस्मात्समानार्थत्वग्रहणेन यद्देशिकवाक्यं तन्न प्रत्याययति । सर्वभूतहिते रतत्व नाम क्रोधाभाव एवेति च न युक्तं । वैलक्षण्यस्य स्पष्टत्वात् । किंच 'विजितात्मना'मित्युक्तिः 'यतचेतसा'मित्यनेन स्पष्टं गतार्था द्रष्टव्या ॥ अतः 'पुनरुक्तिपरिहाराज्ञानाद्विदितात्मनां इति परैः पठितं' इति देशिकदूषणं न संगच्छते.

यतीनां इत्यस्य रूढार्थोऽत्रानुपपन्नः। ब्रह्मज्ञानिन एव संन्यासिन इति नियमाभावात्। अतः 'प्रयत्नवतां' इति विवृतिः। शंकराचार्य-मधुसूदनौ तु संन्यासिवाचकत्वमाहतुः॥

निर्वाणं ब्रह्माभितो वर्तते इत्यनेन सर्वलोकेषु रक्षकत्वेन ज्ञानविषयत्वेन वा भगवान् सन्निहितः इत्यर्थो रम्यः॥ 'अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते। तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहं' इति श्लोकार्थोऽत्रानुसन्धेयः॥

परे तु अभितः इत्यस्य मरणात्पूर्वं मरणानन्तरं च मुक्तिरिति व्याचक्षते॥ विदितात्मत्वं हि जीवन्मुक्तत्वं॥ अतो मरणात्पूर्वं निर्वाण-प्राप्तिवचनं तेन गतार्थं॥ किंच परे प्रष्टव्याः। किं विदेहकैवल्यं मरणात्पूर्वं वर्तते उत न। आद्ये जीवन्मुक्तत्वानतिरेकात् 'उभयतः' इति शंकरभाष्य-स्याशयो न ज्ञायते। नेतिपक्षे मरणानन्तरमेव लभ्यत्वं वक्तव्यं॥ तर्हि वर्तत इति प्रयोगोऽनुपपन्नः इति। अस्योत्तरमाह मधुसूदनः॥ 'मोक्षो वर्तते नित्यत्वात्। नतु भविष्यति साध्यत्वाभावात्' इति॥ इदं चिन्त्य। यद्यप्यात्मा नित्यः। अविद्याशांतिस्तु साधनप्राप्या॥ यदि सर्वेऽपि सर्वदा मुक्ता एव तर्हि ब्रह्मभूतः ब्रह्मनिर्वाणं अधिगच्छतीत्यस्य का गतिः। परे हि अधिगच्छतीत्यस्य प्राप्नोतीत्यर्थमाहुः। अद्यैव मोक्षो वा मरणानन्तरं मोक्षो वेति शंकाया एवानुत्थानात् जीवतां मृतानां च मुक्तिरिति परव्याख्यानम-युक्तं। अतो ज्ञानिनां ब्रह्म सर्वत्र सर्वदा सुलभं, तथाच सुखेन ब्रह्म-लब्धिमत्त्वं च ज्ञानिनां लक्षणं इत्येव रम्यमवगम्यते॥

स्पर्शान्कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ॥२७

वि० ॥ स ब्रह्मयोगयुक्तात्मेत्यादौ ब्रह्मयोगादिपदेन प्रकृतध्यानप्रकारमाह स्पर्शानित्यादिद्वयेन । स्पृश्यन्तइति स्पर्शाः शब्दाद्याः श्रोत्रादीन्द्रियविषयाः । तेषां बाह्यत्वं दुःखसंपादकत्वं । बाह्यान्स्पर्शान् शब्दादीन्बहिः श्रोत्राद्यविषयान् कृत्वा प्रत्याहारेणेन्द्रियाणि नियम्येति यावत् । भ्रुवोरन्तरे मध्ये चक्षुश्च कृत्वा । भ्रुवोर्मध्यमवलोकयन्नित्यर्थः । संप्रेक्ष्य नासिकाग्रं स्वमित्यादेर्वक्ष्यमाणस्योपलक्षणं । प्राणापानौ समौ समानौ निर्विकारौ नासाभ्यन्तरचारिणौ कृत्वा । कुंभके स्थित्वेतियावत् ॥

शं० ॥ सम्यग्दर्शननिष्ठानां संन्यासिनां सद्योमुक्तिरुक्ता ॥ कर्मयोगश्चेश्वरार्पितसर्वभावेनेश्वरे ब्रह्मण्याधाय क्रियमाणः सत्वशुद्धिज्ञानप्राप्तिसर्वकर्मसंन्यासक्रमेण मोक्षायेति भगवान्पदेपदेऽब्रवीद्वक्ष्यति च ॥ अथेदानीं ध्यानयोगं सम्यग्दर्शनस्यान्तरङ्गं विस्तरेण वक्ष्यामीति तत्र सूत्रस्थानीयान्श्लोकानुपदिशतिस्म ॥ स्पर्शान् शब्दादीन्कृत्वा बहिर्बाह्यान् श्रोत्रादिद्वारेणान्तर्बुद्धौ प्रवेशिताः शब्दादयो विषयास्तानचिन्तयतो बाह्या बहिरेव कृताभवन्ति । ताने-

वं बहिः कृत्वा चक्षुश्चैवान्तरे भ्रुवोः कृत्वेत्यनुषज्यते । तथा प्राणापानौ नासाभ्यन्तरचारिणौ समौ कृत्वा ॥

रा० ॥ उक्तं कर्मयोगं स्वलक्ष्यभूतयोगशिरस्कमुपसंहरति ॥

बाह्यान्विषयस्पर्शान्बहिः कृत्वा बाह्येन्द्रियव्यापारं सर्वमुपसंहृत्य योगयोग्यासने ऋजुकाय उपविश्य चक्षुषी भ्रुवोरन्तरे नासाग्रे विन्यस्य नासाभ्यन्तरचारिणौ प्राणापानौ समौ कृत्वा उच्छ्वासनिश्वासौ समगती कृत्वा ❀ ❀॥

विचारः

ध्यानप्रकारमाह ॥ वैराग्यादिनियमाभ्यासप्राणायामेभ्यो ध्यानं निष्पद्यते ॥ बाह्यानां शब्दादिविषयाणां बहिष्करण वैराग्येण संभवति ॥ श्रोत्रादीनामनियमे तु पटुभ्यासादप्रत्ययवशाच्छब्दाद्याआन्तराइव भवन्ति । तन्नियमे तु बाह्याबहिष्कृतास्स्युः ॥ नियमस्य दौर्घल्येसति अभ्यासेनेन्द्रियजयो भवतीत्याशयेन चक्षुषी भ्रुवोर्मध्ये कृत्वेत्युक्तिः ॥ इदमासनादीनां उपलक्षकं ॥ ततः प्राणायामो विहितः ॥ अपानप्राणयोर्निरोधः कुंभकार्थमिति चतुर्थाध्याये 'अपानेजुह्वती'त्यत्र व्याख्यातं द्रष्टव्यं ॥ प्राणायामस्तु कुंभक एव ॥ 'प्राणायामो रेचयित्वा पूरयित्वा च कुंभके । स्थितिः प्राणायामउक्तः' इति तन्त्रसारोक्तेः ॥ विषयाणां बाह्यत्वं नाम दुःखसंपादकत्वं विवक्षितं ॥ किंच वस्तुतो बाह्याअपि रागादिसहकारिसमवधानेनान्तराइव विक्षेपादिव्यापारं कुर्वन्तीति ज्ञापनार्थं बाह्यत्वं विशिष्योक्तं भाति ॥ उक्तं च मधुसूदनीये 'यद्येते आन्तराभवेयुस्तदा उपायसहस्रेणापि बहिर्नस्युः । स्वभावभङ्गप्रसङ्गात् । बाह्यानां तु रागवशादन्तःप्रविष्टानां वैराग्येण

बहिर्गमनं संभवतीति वदितुं बाह्यान् इति विशेषणं' इति॥ इदं सुरसं। अन्यथा बहिःकृत्वेत्यनेनैवालम्)।

(भ्रुवोर्मध्ये चक्षुः कृत्वेतियोगाभ्यासप्रकारो वर्णितः। योगशास्त्रोक्तमासनादिकं चानुपेक्ष्यं। चक्षुश्शब्दश्चक्षुर्वृत्तिपरः। इन्द्रियस्य गोलकस्य वा भ्रूमध्ये स्थापनायोगात्॥ 'दिशश्चानवलोकय'न्निति वक्ष्यमाणदिशा दिशामनवलोकने तात्पर्यं। इदमत्रोक्तं श्रीधरीये॥ 'अत्यन्तं नेत्रयोर्निमीलने निद्रया मनो लीयते। उन्मीलने च बहिः प्रसरति। तदुभयदोषपरिहारार्थमर्धनिमीलनेन भ्रूमध्ये दृष्टिं निधायेत्यर्थः' इति॥ इदं निर्दुष्टम्॥

(ननु 'संप्रेक्ष्य नासिकाग्रं स्वं' इति नासाग्रदर्शनस्य विहितत्वात् कथमत्रभ्रूमध्यनिरीक्षणं विधीयते इति चेन्न॥ 'नासाग्रेवा भ्रुवोर्मध्ये ध्यानी चक्षुर्निधापयेत्' इत्युक्तेर्द्वयोरपि विहितत्वात्॥ भ्रुवोरन्तरे इत्यस्यैव नासाग्रे इत्यर्थ उक्तो रामानुजाचार्येण॥

॥प्राणापानसमीकरणं नाम तयोर्गतिनिरोधः॥ तेन योगी कुंभकस्थो भवति॥ नासाभ्यन्तरचारिणौ इति प्राणापानविशेषणस्य सार्थक्यं न व्यक्तं। नासाभ्यन्तरसंचारस्य स्वतस्सिद्धत्वात्॥ स्वरूपकीर्तने तु प्रयोजनमन्वेषणीयम्॥ अत्राह श्रीधरः "प्राणो यथा बहिर्न निर्याति यथाचापानोन्तर्न प्रविशति किंतु नासामध्ये एव द्वावपि यथा चरतः तथा मन्दाभ्यां उच्छ्वासनिश्वासाभ्यां समौ कृत्वा" इति॥ तथाच समीकरणात्पूर्वावस्था नासामध्ये मन्दगतित्वरूपा विशेषणेन द्योत्यत इत्याशयो भाति॥

(प्राणायामाभ्यासपरमिमं श्लोकमन्यथा व्याचष्टे अभिनवगुप्ताचार्यः। '(भ्रुवोर्वामदक्षिणदृष्ट्योः क्रोधरागात्मिकयोरन्तरे तद्रहिते स्थानविशेषे चक्षुरुपलक्षितानि सर्वेन्द्रियाणि विधाय प्राणापानौ धर्माधर्मौ चित्तवृत्त्यभ्यन्तरे साम्येनावस्थाप्यासीत॥ नसते कौटिल्येनासाम्येन क्रोधादिवशाद्य-

वहरतीति 'नासा' चित्तवृत्तिः" इति ॥ अस्मिन्नर्थे विशेषो न दृश्यते ॥ अशब्दार्थत्वेन क्लेशश्च व्यक्तः । भ्रुवोरित्यनेन कामक्रोधयोर्ग्रहणे गमकं चिन्त्यं ॥ अन्तरशब्दस्य राहित्यवाचकत्वं च किंचित्क्लिष्टं । प्राणापानावित्यनेन धर्माधर्मग्रहणे मूलं न ज्ञायते ॥ नासाशब्दार्थस्त्वतिक्लिष्टः । धर्माधर्मयोस्साम्यबुद्धिश्च भ्रमः । अतो धर्माधर्मौ साम्येन चित्तवृत्तावस्थाप्यासीतेति विधिरयुक्तः ॥ तस्मादिदं व्याख्यान उपेक्ष्यम् ॥

**यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।**
**विगतेच्छाभयक्रोधो यस्सदा मुक्त एव सः॥२८**

वि० ॥ यतेन्द्रियमनोबुद्धिः मुनिः मननशीलः एवंभूतो यः स मुक्त एवेति स्तुतिः । यद्वा अभिमानादिपरित्यागेन मुक्तसादृश्यान्मुक्त एवेति गौणप्रयोगः ॥

शं ॥ यतेन्द्रिय इति । यतेन्द्रियमनोबुद्धिर्यतानि संयतानीन्द्रियाणि मनोबुद्धिश्च यस्य सः यतेन्द्रियमनोबुद्धिर्मननान्मुनिः संन्यासी मोक्षपरायणः । एवं देहसंस्थाने मोक्षपरायणो मोक्षएव परं अयनं परा गतिर्यस्य सोऽयं मोक्षपरायणो मुनिर्भवेत् । विगतेच्छाभयक्रोधः इच्छा च भयं च क्रोधश्चेच्छाभयक्रोधास्तेविगता यस्मात्सः विगतेच्छाभयक्रोधः । य एवं वर्तते सदा संन्यासी मुक्त एव सः । न तस्य मोक्षायान्यः कर्तव्योऽस्ति ॥

रा० ॥ आत्मावलोकनादन्यत्र प्रवृत्त्यनर्हेन्द्रियमनोबुद्धिः, तत एव विगतेच्छाभयक्रोधः, मोक्षपरायणः मोक्षैकप्रयोजनः, मुनिः आत्मावलोकनशीलः, यः सदा मुक्त एव सः साध्यदशायामिव साधनदशायामपि मुक्त एव स इत्यर्थः ॥

विचारः

मुनिः मननशीलः। ध्याननिरूपणप्रकरणत्वादयमर्थएवोचितः। यद्यपि 'स हि लोके मुनिर्नाम यः कामक्रोधवर्जितः' इत्युक्त्यानुगुण्येन व्याख्यातुं शक्यते॥ तदा विगतेच्छाभयक्रोधः इत्यनेन गतार्थत्वस्य परिहारोऽन्वेषणीयः। अतो मननशीलत्वेन मुनिरिति व्याख्यानं निरवद्यं॥ न च वाच्यं मुनिशब्देनैव कामक्रोधविवर्जनस्योक्तौ संभवन्त्यां कामादिजयस्य ज्ञानिलक्षणत्वेन पदेपदे बहुवारमभिहितत्वाच्च किमिति विगतेच्छाभयक्रोधः इति पुनरुक्तमिति॥ अस्मिन्प्रकरणे ध्यानसिद्धिनिरूपणावसरे समाधिरागादिवर्जनयोः प्रयोज्यप्रयोजकभावो न विस्मर्तव्यः इति विशिष्य बोधनाय पुनस्तदुक्तिरिति सार्थक्यात्॥ स्पष्टीकृतोऽयमर्थः शङ्करानन्देन "यस्मिन्कस्मिन्विषये इच्छायां सत्यां समाधिर्न सिध्यति॥ दिवारात्रावरण्ये गुहादौ प्राणिभ्यो भयमस्तिचेत्समाधिर्न सिध्यति॥ मशकपिपीलिकादिष्वपकारिषु च क्रोधो ह्यस्ति चेत्समाधिर्न सिध्यति। अतएव तत्त्रितयं निदिध्यासुः परित्यजेत् इत्यर्थः" इति॥

मरणात्पूर्वं मुक्तिः तदनन्तरं मुक्तिरिति द्वेधा मुक्तिं परिकल्प्य सदा मुक्त एव सः इत्यस्य देहपातात्पूर्वं तदनन्तरंचेत्याशयमादाय मोक्षपरायण इत्यस्यैतदानुगुण्येन व्याख्यानं शङ्करभाष्ये अधिगम्यते॥ जीवन्मुक्तः लब्धमोक्षत्वेन मोक्षपरायणः॥ यस्तु देहानन्तरं मुक्तिं प्रतीक्षते तद्विषये तु मोक्षपरायणत्वं सुगमं। तस्मात्सदामुक्त इत्युक्तिस्साध्वीति तदाशयो भाति॥

(अत्र वक्तव्यं । लब्धमुक्तिप्रति मोक्षपरायणत्वोक्तिरसमंजसा ॥ इच्छाभयक्रोध-वर्जनपूर्वकं इन्द्रियमनोबुद्धीर्यो जितवान् मननशीलः तस्यैव निदिध्यासोऽत्र प्रतिपाद्यत्वात् ॥ अयं तु मोक्षप्रतीक्षावानेव न तु लब्धमुक्तिः ॥ तर्हि सदामुक्त इत्युक्तेः का गतिरिति चेद्गौणोऽयं प्रयोग इत्येव समाधेयं ॥ अतएव 'मुक्तप्रायः' इति देशिकोऽपि व्याचष्टे ॥ वेङ्कटनाथोऽपि "नास्य मोक्षार्थं किंचित्कर्तव्यमवशिष्यते" इत्याशयमाह ॥

अपरोक्षज्ञानिनो मुक्तेर्निश्चितत्वाविवक्षया मुक्तएव इतीषदधिकोक्ति रुपपद्यते स्तुतित्वात् ॥ अथवा मुक्तइत्यस्य मुक्तसदृशइत्यर्थः ॥ मुक्तसादृश्य-मभिमानादिपरित्यागविवक्षया संभवति । उक्तं नारदीये गी० ता०)

"अमुक्तो मुक्तसादृश्यान्मुक्तएव हि तत्वदृक् ।
किमुमुक्तिगतस्तस्माज्ज्ञानमेवाधिकं नरे" इति ॥

एतत्प्रमाणानुसारेण मुक्तशब्दस्य गौणार्थत्वकल्पनमेव न्याय्यं । मोक्षपरायणस्य मुनेस्सद्यो मुक्तिकथनं तु नोचितमित्यवधेयम् ॥

इदं पद्यमतीतं च पातंजलपरिभाषापरिपूर्णवाक्यैर्योगाभ्यासपर्वभे-दानादाय सविस्तरं व्याख्यातवान्नीलकण्ठः ॥

**भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।**
**सुहृदं सर्वभूतानां ज्ञात्वा मां शांतिमृच्छति ॥२९॥**

ओं तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे संन्यासयोगोनाम पंचमोऽध्यायः ॥

वि० ॥ ध्यानमुक्त्वा ध्येयमाह । भोक्तारमिति । यज्ञो ज्योतिष्टोमादिः । तपः कृच्छ्रचान्द्रायणादिः । महांश्चासावीश्वरश्च महेश्वरस्तं । सुहृदमुपकारिणं । शान्तिं शान्तिसाधनं । मुक्तिहेतुं इति ईश्वरविशेषणं ॥ ज्ञात्वा ध्यात्वेत्यर्थः । ऋच्छति साक्षात्करोतीत्यर्थः ॥

इति श्रीगीतार्थसंग्रहे राघवेन्द्रयतिकृते पंचमोध्यायः ॥

शं ॥ एवं समाहितचित्तेन किं विज्ञेयमिति । उच्यते ॥ भोक्तारं यज्ञानां तपसां च कर्तृरूपेण देवतारूपेण च । सर्वलोकमहेश्वरं सर्वेषां लोकानां महान्तमीश्वरं सर्वलोकमहेश्वरं ॥ सुहृदं सर्वभूतानां सर्वप्राणिनां प्रत्युपकारनिरपेक्षतयोपकारिणं सर्वभूतानां हृदये शयं सर्वकर्मफलाध्यक्षं सर्वप्रत्ययसाक्षिणं । मां नारायणं । ज्ञात्वा शान्तिं सर्वसंसारोपरतिमृच्छति प्राप्नोति इति ॥

इति श्रीमच्छंकराचार्यकृतौ श्रीमद्गीताभाष्ये पंचमोध्यायः ॥

रा० ॥ उक्तस्य नित्यनैमित्तिककर्मेतिकर्तव्यताकस्य कर्मयोगस्य योगशिरस्कस्य सुशकतामाह—

यज्ञतपसां भोक्तारं सर्वलोकमहेश्वरं सर्वभूतानां सुहृदं मां ज्ञात्वा शान्तिमृच्छति। कर्मयोगकरण एव सुखमृच्छति ॥ सर्वलोकमहेश्वरं । सर्वेषां लोकेश्वराणामपीश्वरं " तमीश्वराणां

परमं महेश्वरं" इति हि श्रूयते। मां सर्वलोकमहेश्वरं सर्व-सुहृदं ज्ञात्वा मदाराधनरूपः कर्मयोगइति सुखेन तत्र प्रवर्ततइत्यर्थः॥ सुहृदआराधनाय हि सर्वे प्रयतन्ते॥

इति श्रीरामानुजाचार्यविरचिते श्रीमद्गीताभाष्ये पंचमोध्यायः॥

## विचारः

मां ज्ञात्वा ऋच्छतीति विधेयवाक्यं॥ ऋच्छति साक्षात्करोतीत्यर्थः। ध्येयनिरूपणप्रकरणत्वात् ज्ञात्वेत्यस्य ध्यात्वेत्यर्थः॥ ध्यानफलं साक्षात्कार इत्युक्तं भवति॥ मां इत्युक्तस्य भगवतो विशेषणानि (१) भोक्तारं (२) सर्वलोकमहेश्वरं (३) सुहृदं (४) शान्ति इति॥ शान्तिशब्दोऽत्र न निर्वाणपरः॥ किंतु मोक्षसाधनभगवत्परः॥ एतेन साक्षात्कारे संपादितेऽपि भगवत्प्रसादायत्तो मोक्ष इत्युक्तं भवति॥

परब्रह्माभिन्नस्य नारायणस्य ध्यानात्साक्षात्कारः इत्युक्ते कीदृशोसाविति शंकां शमयन्ति विशेषणानि॥ योगफलेषु परमफलं हि मोक्षः। तद्ददाति भगवानिति शांतिं शान्तिसाधनं भगवन्तं ध्यायेदिति संगतं॥

अत्युत्कृष्टत्वाद्भगवान् दुर्गमो दुर्घटश्चेति शंकायामुक्तं सुहृदं इति॥ सर्वभूतानां मित्रं हरिरित्यनेन प्रभुः परमदयालुरिति गम्यते॥ प्रत्युपकारनिरपेक्षतयानुग्राहक इति सुहृत्वं सिद्धं॥ सु शोभनं हृत् हृदयं यस्मात् इति वार्थः। यस्य ध्यानेनैव हृत् मनः शोभनं भवतीति तथोक्तिः॥ निर्मलान्तःकरणेन ध्यात्वा साक्षात्कारो लभ्यते इति यावत्॥

शान्तिसाधनत्वेऽपि सुहृत्त्वेऽपि यद्यस्य हरेरप्युत्तमोऽन्यस्स्यात् तर्हि नेष्टसिद्धिरित्याशंकां शमयति 'सर्वलोकमहेश्वरं' इति विशेषणं॥

'तमीश्वराणां परमं महेश्वरं । तं दैवतानां परमं च दैवतं । पतिं पतीनां परमं परस्तात् । विदाम देवं भुवनेशमीड्यं' श्रुतनारायणस्यैव महेश्वरत्वं प्रतिपादयति ॥ महेश्वरो रुद्रः इति भ्रान्तिव्युदासाय रुद्रेणैवोक्तं पाद्मोत्तरे (२२६—अ)।

"योसावकारवाच्यो वै विष्णुर्नारायणो हरिः ।
स एव पुरुषो नित्यः परमात्मा महेश्वरः ॥ ७१ ॥

तस्यांशभूतमैश्वर्यं यस्मिन्कस्मिन्हि वर्तते ।
तस्मिन्नीश्वरशब्दादिः प्रोच्यते मुनिभिस्तथा ॥ ७२ ॥

निरुपाधीश्वरत्वन्तु वासुदेवे प्रतिष्ठितम् ।
आत्मेश्वर इति प्रोक्तो वेदवादैस्सनातनैः ॥ ७३ ॥

तस्मान्महेश्वरत्वं तु वासुदेवे प्रतिष्ठितम् ।

असौ त्रिपाद्विभूतेस्तु लीलाया अपि चेश्वरः ।
विभूतिद्वयमैश्वर्यं तस्यैव सकलात्मनः ॥ ७४ ॥

श्रीभूलीलापतिर्योसावीश्वरः समुदाहृतः ।
तस्मान्महेश्वरत्वन्तु वासुदेवे प्रतिष्ठितं" ॥ ७५ ॥ इति ॥

कर्मयोगेतावत्फलं भगवति समर्पणीयमिति तत्रतत्र बहुवारमुक्तं ॥ देवदत्तो यजमानः कर्ता इन्द्रादयो भोक्तारः इति भ्रमव्युदासायाध्यायान्ते यज्ञतपसां भोक्ता भगवानेवातोसावेव ध्येयइत्याह "भोक्तारं यज्ञतपसां" इति ॥ द्रव्यादित्यागो यज्ञः । कृच्छ्चान्द्रायणादिकं तपः ॥ यज्ञानां तपसां च भोक्ता भगवानेव ॥ अतः कर्मयोगी स्वानुष्ठितकर्मफलभोक्तारं देवं ध्यायेदित्यौचित्यं गम्यते ॥ यज्ञानां प्रभेदाः चतुर्थाध्याये 'दैवमेवापरे'

इत्यारभ्य ‘ सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ’ इत्यन्तमुक्ता अनुसन्धेयाः॥ तपोभेदास्सप्तदशाध्याये वक्ष्यमाणाः पठनीयाः ॥ तथाहि ॥

“ देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तपउच्यते ॥ १४ ॥

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तपउच्यते ॥ १५ ॥

मनः प्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ” ॥ १६ ॥ इति ॥

किंच कर्मयोगो हि संन्यासयोगघटितत्वेन द्व्यगउक्तः ॥ रागादिवर्जनं संन्यासः । स एव ‘ तपसां ’ इत्यनेन परामृष्टः ॥ ईश्वरार्पणबुद्ध्या कर्मानुष्ठानं योगः । स एव यज्ञशब्दोदितः । तथाच “ यज्ञतपसां ” इत्यनेनाध्यायप्रतिपाद्यसंन्यासयोगयोः परामर्शउचितः ॥

‘ शान्तिं मां ज्ञात्वा ऋच्छति ’ इति श्रीमदाचार्याभिमता योजना ॥ शान्तिशब्दो भगवद्विशेषणत्वेन शान्तिसाधनपरः इत्याचार्यव्याख्यानं ॥ परे तु शान्तिमृच्छति इति योजयन्ति ॥ ऋच्छति प्राप्नोति इति तत्कर्म शान्तिरुक्ता इति तेषामाशयः । शान्तिशब्दो मोक्षपर इति शांकराः । कर्मांगोपशमपर इति रामानुजदेशिकौ ॥ तथाच कर्मकरणे मनःक्लेशशान्त्यादिरूपं सुखमत्र शान्तिशब्देन विवक्षितमिति रामानुजाचार्याभिप्रायः॥ इदं चिन्त्यं ॥ अस्य परामर्शविषयस्य प्रकरणे कुत्राप्यदर्शनात् ॥ पद्यस्य ध्येयनिरूपणपूर्वं तत्फलप्रतिपादकत्वात् ॥ अत्र कर्मणि मनःक्लेशाभावस्येह का संगतिः ? ॥ तादृशक्लेशाभावो हि जघन्यमवान्तरं जिज्ञासुदशायामाप्यं फलं ॥ परिपक्वनिदिध्यासनफलं त्वत्र प्रसक्तं इति महाननयोर्विशेषः ॥

(यद्यपि ज्ञानयोगात्कर्मयोगस्य सुशकत्वाऽप्रमादत्वान्तर्गतज्ञानत्वादिना श्रैष्ठयमभिप्रैति रामानुजाचार्यः। तत्तु विचारितं प्राक्॥ प्रकृतपद्ये तु कर्मयोगस्य सुशकत्वं ज्ञानयोगस्य दुश्शकत्वं न प्रतिपाद्यते इत्यक्षरार्थादवगम्यते॥ यदस्य पद्यस्य रामानुजभाष्यगतावतारिका 'उक्तस्य नित्यनैमित्तिककर्मेतिकर्तव्यताकस्य कर्मयोगस्य योगशिरस्कस्य सुशकतामाह' इति तन्नप्रत्याययति॥ कर्मयोगसुशकत्वबोधकशब्दादर्शनात्। इति॥

(शांकरास्तु शान्तिशब्देन तन्मताभिमतमोक्षं गृह्णन्ति॥ तन्मते सगुणब्रह्मभूतस्य श्रीष्कृणस्य ज्ञानं कथं मोक्षप्रदं इति तु चिन्तनीयं। द्वारकल्पनायाः गौणत्वकल्पनायाश्च गमकं वाच्यम्॥

(इदमुक्तं नीलकण्ठीये "सर्वप्रत्ययसाक्षिणं नारायणं मां प्रत्यगभेदेन ज्ञात्वा साक्षात्कृत्य तद्भावं प्राप्य शान्तिमनुपाध्यवस्थां निरुपाख्यां कैवल्यसंज्ञां ऋच्छति प्राप्नोति। एवंच सोपाधिब्रह्मभावप्राप्तिपूर्विकैव निरुपाधिप्राप्तिरिति गम्यते। यथोक्तं वार्तिकसारे॥ "सोपाधिर्निरुपाधिश्च द्वेधा ब्रह्मविदुच्यते। सोपाधिकः स्यात्सर्वात्मा निरुपाख्योऽनुपाधिकः। जक्षन्क्रीडन्रति प्राप्त इति सोपाधिकस्य तु। छान्दोग्ये सर्वकामाप्तिः सार्वात्म्यात्सपष्टमीरिता। अहमन्नं तथान्नादः श्लोककार्यप्यहो अहं। इति तत्वविदस्सामगाने सर्वात्मता श्रुता॥ अत्रापि चक्रदृष्टान्तात्सोपाधिस्तत्वविच्छ्रुतः। अपूर्वानपराद्युक्त्या श्रोष्यते निरुपाधिकः" इति॥ इदमसत्॥ जक्षन्क्रीडन्नित्यादिश्रुतिर्हि परममुक्तमाह नत्वमुक्तं ज्ञानिनं॥ छान्दोग्यादिश्रुत्यर्थानपरिज्ञानमूलं वार्तिकवचनं॥ सोपाधिर्निरुपाधिरिति भेदेन ब्रह्मविदो वा मुक्तस्य वा द्वैविध्यकल्पनं वेदशास्त्रविरुद्धं। प्रथमं श्रीकृष्णादीश्वरभावं प्राप्यानन्तरं परब्रह्मत्वमाप्नोतीति कुत्रोच्यते? गीतायां हि ज्ञात्वा शान्तिं ऋच्छति इत्युक्तं—ज्ञात्वेत्यस्य सोपाधिब्रह्मत्वप्राप्तिः कथं स्याच्छब्दार्थः॥ यत्तूक्तं "मां प्रत्यगभेदेन" इति तत्स्वाभिप्रायप्रवेश एवेति व्यक्तं॥

एतदपेक्षया क्लिष्टतरं पश्यन्तु बुधाश्शंकरानन्दीये । "यज्ञतपसां भोक्तारं कार्योपाधिकं त्वंपदार्थमात्मानं सर्वभूतसुहृदं सर्वलोकमहेश्वरं कारणोपाधिकं तत्पदार्थं च 'अथात आदेशो नेतिनेति' इत्यादिश्रुत्यवष्टंभेनोपाधिद्वयं निरस्य केवलचैतन्यमात्रौ तौ तत्त्वंपदार्थौ द्वावपि ॥ तयोरधिष्ठानभूतं सत्यं ज्ञानमनन्तं चिदानन्दैकरसं निर्विशेषं मां परं ब्रह्म ज्ञात्वा एतदेवाहमिति । तन्मां परं ब्रह्मैव स्वात्मना सर्वदा मत्वा ध्यात्वा च शान्तिमृच्छति विदेहमुक्तिं प्राप्नोतीत्यर्थः" इति ॥ अत्र ययाकयाचविधया तत्वमसीत्यस्य प्रवेशः कर्तव्यः इत्याशा व्यक्ता ॥ निरासस्तु नात्रावश्यक इत्यास्तां ।

सर्वोत्तमं श्रीहरिं ज्ञात्वा तत्प्रसादान्मुमुक्षुरुद्धृतो भवेदित्यर्थे सुगमे समंजसे च सति कुटिलाः कल्पनाः नन्याय्या इति विवेकिभिरधिगन्तव्यं ॥

इति श्रीभावचन्द्रिकायां पंचमोऽध्यायः ॥

# षष्ठोऽध्यायः ।

*श्रीभगवानुवाच—*

**अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।**
**स संन्यासी च योगी च न निरग्निर्नचाक्रियः ॥ १ ॥**

वि ॥ ओं । बुद्धिर्योगेत्विमां श्रृण्विति योगवचनं प्रतिज्ञातं द्वितीये ॥ स च योगउत्तरषट्के वक्ष्यमाणभगवज्ज्ञानं प्रत्युपायः । स च द्विविधः कर्मयोगो ध्यानयोगश्चेति । तत्र कर्मयोगो ज्ञानंप्रति बहिरङ्गोपायत्वात् त्रैगुण्यविषयावेदा- इत्यादिना द्वितीये संक्षेपेण तृतीयाध्यायादावतीतग्रन्थे विस्तरेण च पूर्वं निरूपितः ॥ अधुना कर्मयोगसाध्यत्वाद्वक्ष्यमाणज्ञानान्तरङ्गसाधनत्वाच्चावसरप्राप्तं समाधियोगं स्पर्शानित्यादिना पूर्वाध्यायान्ते संक्षेपेण प्रकृतं विस्तरेणास्मिन्नध्याये वक्ति ॥ आसनादीनामङ्गानां वक्ष्यमाणत्वेऽपि तेषां ध्यानार्थत्वेन ध्यानस्यैव प्राधान्यात् । उद्धरेदात्मनात्मानं इत्यादिना ध्यानयोगं विधातुं तत्र ध्याने संन्यासयोगयुक्तएवाधिकारीति ज्ञापनाय कामादिवर्जनरूपसंन्यासं ईश्वराराधनरूपस्वकर्मानुष्ठानलक्षणयोगं चाह । अनाश्रित इति । यः

कर्मफलमनाश्रितः कार्यं स्वस्ववर्णाश्रमोचिततया कर्तव्यं कर्म करोति । स संन्यासी योगी च स एव च ध्यानाधिकारीति भावः ॥आहवनीयाद्यग्नित्यागेन अग्निहोत्रादिक्रियात्यागेन च निस्संगतया वर्तमानएव ध्यानाधिकारीति सांख्यमतमपाकरोति । नेति । निरग्निराक्रियश्च संन्यासी योगी च नेत्यर्थः ॥ यतेरपि दैवमेवापरे यज्ञमित्यादिनाग्निक्रिययोरुक्तत्वात्संन्यासाश्रमस्वीकारकाले पूर्वाश्रमस्वीकृताग्नेरात्मनि समारोपणाच्च सोऽपि संन्यासी योगी च भवत्येवेति भावः॥

शं ॥ अतीतानन्तराध्यायान्ते ध्यानयोगस्य सम्यग्दर्शनंप्रत्यन्तरङ्गस्य सूत्रभूताः श्लोकाः स्पर्शान्कृत्वा बहिरित्यादयः उपदिष्टाः। तेषां वृत्तिस्थानीयोऽयं षष्ठोऽध्यायआरभ्यते॥ तत्र ध्यानयोगस्य बहिरङ्गं कर्मेति यावद्ध्यानयोगारोहणासमर्थस्तावद्गृहस्थेनाधिकृतेन कर्तव्यं कर्मेत्यतस्तत्स्तौति ॥ अनाश्रित इति ॥

ननु किमर्थं ध्यानयोगारोहणसीमाकरणं यावतानुष्ठेयमेव विहितं कर्म यावज्जीवं ॥ न । आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते इति विशेषणात् ॥ आरूढस्य च शमेनैव संबन्धकरणात् । आरुरुक्षोरारूढस्य च शमः कर्मचोभयं कर्तव्यत्वेनाभिप्रेतं चेत्स्यात्तदारुरुक्षोरारूढस्य चेति शमकर्मविषयभेदेन विशेषणं विभागकरणं चानर्थकं स्यात् ॥

तत्राश्रमिणां कश्चिद्योगमारुरुक्षुर्भवत्यारूढश्च कश्चित् ॥ अन्ये नारुरुक्षवो न चारूढाः ॥ तानपेक्ष्यारुरुक्षोरारूढस्य चेति विशेषणं विभागकरणं चोपपद्यत एवेति चेत् ॥ न ॥ तस्यैवेति वचनात् पुनर्योगग्रहणाच्च, योगारूढस्येति य आसीत्पूर्वं योगमारुरुक्षुस्तस्यैवारूढस्य शम एव कर्तव्यः कारणं योगफलं प्रत्युच्यत इति ॥ अतो न यावज्जीवं कर्तव्यत्वप्राप्तिः कस्यचिदपि कर्मणः ॥ योगविभ्रष्टवचनाच्च ॥ गृहस्थस्य चेत्कर्मिणो योगो विहितः षष्ठेऽध्याये स योगविभ्रष्टोऽपि कर्मगतिं कर्मफलं प्राप्नोतीति तस्य नाशाशंकानुपपन्ना स्यात् ॥ अवश्यं हि कृतं कर्म काम्यं नित्यं वा । मोक्षस्य नित्यत्वादनारभ्यत्वे स्वं फलमारभत एव । नित्यस्य च कर्मणो वेदप्रमाणावबुद्धत्वात्फलेन भवितव्यमित्यवोचाम ॥ अन्यथा वेदस्यानर्थक्यप्रसंगादिति । नच कर्मणि सत्युभयविभ्रष्टवचनमर्थवत् । कर्मिणो विभ्रंशकारणानुपपत्तेः । कर्मकृतमीश्वरे संन्यस्येत्यतः कर्तारि कर्म फलं न आरभत इति चेन्न ॥ ईश्वरे संन्यासस्याधिकतरफलहेतुत्वोपपत्तेः । मोक्षायैवेति चेत्स्वकर्मणां कृतानामीश्वरे न्यासो मोक्षायैव न फलान्तराय । योगसहितः योगाच्च विभ्रष्ट इत्यतस्तं प्रतिनाशाशंका युक्तैवेति चेन्न ॥ 'एकाकी यतचित्तात्मा निराशीरपरिग्रहः' 'ब्रह्मचारिव्रते स्थितः' इति कर्मसंन्यासविधानात् ॥ नचात्र ध्यानकाले स्त्रीसहायत्वाशंका

येनैकाकित्वं विधीयते । नच गृहस्थस्य निराशीरपरिग्रह इत्यादिवचनमनुकूलम् । उभयभ्रष्टप्रश्नानुपपत्तेश्च । अनाश्रित इत्यनेन कर्मिण एव संन्यासित्वं योगित्वं चोक्तं प्रतिषिद्धं च निरग्नेरक्रियस्य च संन्यासित्वं योगित्वं चेति चेन्न। ध्यानयोगं प्रति बहिरंगस्य सतः कर्मणः फलाकांक्षा संन्यासस्तुतिपरत्वात् । न केवलं निरग्निरक्रिय एव संन्यासी योगी च ॥ किं तर्हि कर्म्यपि कर्मफलासंगं संन्यस्य कर्मयोगमनुतिष्ठन् सत्वशुद्ध्यर्थं संन्यासी योगी च भवतीति स्तूयते । नचैकेन वाक्येन कर्मफलासंगसंन्यासस्तुतिश्चतुर्थाश्रमप्रतिषेधश्चोपपद्यते । न च प्रसिद्धं निरग्नेरक्रियस्य परमार्थसंन्यासिनः श्रुतिस्मृतिपुराणेतिहासयोगशास्त्रविहितं संन्यासित्वं योगित्वं च प्रतिषेधति भगवान् । स्ववचनविरोधाच्च ॥ सर्वकर्माणि मनसा संन्यस्य "नैव कुर्वन्न कारयन्" "आस्ते" "मौनी संतुष्टो येन केनचित्" ॥ 'अनिकेतस्थिरमतिः' 'विहाय कामान्यस्सर्वान्पुमांश्चरति निस्पृहः' 'सर्वारंभपरित्यागी इति च तत्र तत्र भगवता स्ववचनानि दर्शितानि ॥ तैर्विरुध्येत चतुर्थाश्रमविप्रतिषेधः । तस्मान्मुनेर्योगमारुरुक्षोः प्रतिपन्नगार्हस्थ्यस्याग्निहोत्रादिकर्मफलनिरपेक्षमनुष्ठीयमानं ध्यानयोगारोहणसाधनत्वं सत्वशुद्धिद्वारेण प्रतिपद्यत इति स संन्यासी च योगी चेति स्तूयते ॥ अनाश्रितः न आश्रितो-

ऽनाश्रितः ॥ किं ॥ कर्मफलं कर्मणः फलं कर्मफलं यत्तदनाश्रितः । कर्मफलतृष्णारहितइत्यर्थः । योहि कर्मफले तृष्णावान्स कर्मफलमाश्रितो भवति । अयं तु तद्विपरीतोऽतोऽनाश्रितः कर्मफलं ॥ एवं भूतस्सन्कार्यं कर्तव्यं नित्यं काम्यविपरीतमग्निहोत्रादिकं कर्म करोति निर्वर्तयति । यः कश्चिदीदृशः कर्मी स कर्म्यन्तरेभ्यो विशिष्यते इत्येवमर्थमाह स संन्यासी च योगी चेति। संन्यासः परित्यागः स यस्यास्ति स संन्यासी च योगी च योगश्चित्तसमाधानं स यस्यास्ति स योगी चेत्येवं गुणसंपन्नोऽयं मन्तव्यो न केवलं निरग्निरक्रिय एव संन्यासी योगी चेति मन्तव्यः। निर्गता अग्नयः कर्माङ्गभूता यस्मात्स निरग्निः । अक्रियश्चानग्निसाधना अप्यविद्यमानाः क्रियास्तपोदानादिका यस्यासावक्रियः ॥

रा० ॥ उक्तः कर्मयोगस्सपरिकरः ॥ इदानीं ज्ञानयोगकर्मयोगसाध्यात्मावलोकनरूपयोगाभ्यासविधिरुच्यते; तत्र कर्मयोगस्य निरपेक्षसाधनत्वं द्रढयितुं ज्ञानाकारः कर्मयोगो योगशिरस्कोऽनूद्यते ॥ कर्मफलं स्वर्गादिकमनाश्रितः कार्यं कर्मानुष्ठानमेव कार्यं सर्वात्मनाऽस्मत्सुहृद्भूतपरमपुरुषाराधनरूपतया कर्मैव मम प्रयोजनं न तत्साध्यं किंचिदिति यः कर्म करोति स संन्यासी च ज्ञानयोगनिष्ठश्च ॥ योगी च कर्मयोगनिष्ठश्च ॥ आत्मावलोकनरूपयोगसाधनभूतोभय-

निष्ठ इत्यर्थः । न निरग्निर्नचाक्रियः । न चोदितयज्ञादि-कर्मस्वप्रवृत्तः न च केवलज्ञाननिष्ठः ॥ तस्य हि ज्ञान-निष्ठैव ॥ कर्मयोगनिष्ठस्य तूभयमस्तीत्यभिप्रायः ॥

विचारः

ज्ञानं योगफलमिति प्रमितं । योगो द्विविधः कर्मयोगो ध्यानयोग-श्चेति ॥ कर्मयोगः ज्ञानस्य बहिरङ्गभूतं साधनं ॥ ध्यानयोगस्त्वन्तरङ्गं साधनं ॥ ध्यानमेवाप्रयत्नाद्यदि सिध्यति तदा समाधिरित्युच्यते ॥ तस्माध्या-नसमाध्योरनतिभिन्नत्वात् "ज्ञानान्तरङ्गं समाधियोगमाह" इत्याचार्यभाष्यं । 'ध्यानमत्रोच्यते' इत्युक्तं तात्पर्यनिर्णये ॥

इतःपूर्वं ज्ञानबहिरङ्गभूतः कर्मयोगस्संक्षेपविस्तराभ्यां प्रपंचितः । पंचमाध्यायान्ते स्पर्शानिति द्वाभ्यां श्लोकाभ्यां ज्ञानान्तरङ्गसाधनभूतं समा-ध्यनतिभिन्नं ध्यानं संक्षेपेणोक्तं ॥ सूत्रस्थानीयस्यास्य संक्षेपवचनस्य वृत्ति-स्थानीयोऽयं षष्ठोऽध्यायः ॥ प्रपंच्यप्रपंचकभावेन सार्थक्यान्न पौनरुक्त्यादि-दोषाणामवकाशः ॥

यद्यपि न केवलं ध्यानमुच्यतेऽस्मिन्नध्याये । यमादीनामपि उक्ति-दर्शनात् ॥ तथाप्यध्यायप्रतिपाद्यं ध्यानमिति युज्यते । यमादीनां ध्यानार्थ-त्वेनैवाभिधानात् । "अतः समाधियोगमाह" "ध्यानमत्रोच्यते" इत्या-चार्यवचने नानुपपन्ने ॥

न केवलं ज्ञानान्तरङ्गत्वेन ध्यानप्रतिपादनस्यात्र सङ्गतिः । अपितु कर्मयोगसाध्यत्वेन च ध्यानं प्रकृत ॥ तथाच कर्मयोगज्ञानयोरन्तर्णीतत्वाच्चेह ध्यानमुच्यते इति भावः ।

एवं ध्यानस्य प्रकृतत्वेसति तन्निरूपणात्पूर्वं ध्यानसाधनीभूतः कर्मयोगः संक्षेपेणोच्यते ॥ कर्मयोगो हि संन्यासयोगभेदेन द्विदलात्मकः ॥ संन्यासयोगौ विना—" उद्धरेदात्मनात्मान "मिति वक्ष्यमाणं ध्यानं न निष्पद्यते ॥ ध्यानसाधनभूतसंन्यासयोगौ कर्मयोगांशभूताभ्यां संन्यासयोगाभ्यां भिन्नौ वाभिन्नौ वेति स्यात्संशयः ॥ तद्व्युदासाय विवक्षितः संन्यासः कामादिवर्जनरूपः । विवक्षितो योगः ईश्वरार्पणबुध्या कर्मानुष्ठानरूपः । इमावेव कर्मयोगांशौ ध्यानयोगसाधनभूतौ चेत्यभिप्रायेण प्रवृत्तं पद्यं अनाश्रित इति ॥ लोके तावत्संन्यासशब्दः तुर्याश्रमपरतया व्यवह्रीयते । यतिर्हि निरग्निः अक्रिय इति चोच्यते ॥ किमयं व्यवहारस्साधुर्वाऽसाधुर्वा ॥ आद्ये यतेरेव संन्यासित्वाद्योगित्वाच्च ध्यानेऽधिकारो वक्तव्यः इत्याकाङ्क्षायां ध्यानाधिकारी नात्र तुर्याश्रमी विवक्षितः किन्तु कामादिवर्जनपूर्वकेश्वरार्पणबुध्या कर्मानुष्ठाता पुरुष एव ध्यानाधिकारी इति भगवदाशयः॥

यो निरग्निरक्रियो वा तस्य तावन्मात्रेण ध्याने नाधिकारः नापि संन्यासित्वं योगित्वं वा ॥ तुर्याश्रमिणः निरग्नित्वनिष्क्रियत्वव्यवहारोऽपि बाह्याग्निबाह्यक्रियापेक्षयैवोपपन्नः ॥ तस्याप्यान्तराग्न्यान्तरक्रिययोर्विहितत्वात् ॥ उक्तं हि ' दैवमेवापरे यज्ञं ' इत्यादिना आन्तरं यज्ञादिकं । उक्ताश्च मानस्यः क्रियाः ॥ " अग्निर्ब्रह्म च तत्पूजा क्रियान्यासाश्रमे स्मृता " । इति ॥ " स ब्रह्मनिष्ठस्तु यतिर्महात्मा शारीरमग्निं च मुखे जुहोति " इत्युक्तेश्च यतेरपि साग्नित्वं सक्रियत्वं गम्यते ॥ यत्याश्रमस्वीकारकाले पूर्वाश्रमस्वीकृताग्नेरात्मनि समारोपणाच्च न यतेरनग्नित्वं इति व्यक्तं । यतिर्हि अग्निं करतले सन्निधाय मुखमारभ्य हृदयपर्यन्तं स्पर्शनरूपात्मसमारोपणाचिह्नप्रदर्शनपूर्वकमग्निमन्तः समारोपयति । यथोक्तं विष्णुतीर्थीये ॥

" अथाग्निमेकहस्तेन प्रताप्यायन्तइत्यृचासंस्पृशेन्मुखमारभ्य यावद्धृदयमंजसा " । इति ॥ उक्तंचाग्निद्वयं विष्णुपुराणे ॥ " कृत्वाग्निहोत्रं स्वशरीरसंस्थं

शारीरमग्निं स्वमुखे जुहोति ॥ विप्रस्तु भैक्ष्योपगतैर्हविर्भिश्चिताग्निना स व्रजतिस्म लोकान्" इति ॥ एतेन तुर्याश्रमिणस्साग्नित्वमवगम्यते ॥ 'नहि कश्चित्क्षणमपि' इति न्यायेन मानसपूजाविधानवचनैश्च यतेस्सक्रियत्वं चावधेयं ॥ यस्तु सर्वथा निरग्निः विहितक्रियारहितो वा तस्य यतित्वं वान्याश्रमाधिकारोवा न सेत्स्यतीति निरग्निर्निष्क्रियोवा न संन्यासी न योगीति गीतोक्तो निषेधस्साधुर्युक्तश्च ॥ नात्र शङ्कनीयं यदि यतिर्वस्तुतो न निरग्निर्नाप्यक्रियः तर्हि निरग्निरक्रियश्च न संन्यासी योगीचेति गीतावचनमप्राप्तप्रतिषेधः प्रसज्यत इति । सांख्याहि मन्यन्ते अचेतनप्रकृतेरेव स्वातन्त्र्येण कर्तृत्वज्ञानवान् प्रकृतिपुरुषविवेकज्ञानादिमांश्चैव ध्यानाधिकारीति ॥ तदुक्तानां अनग्नीनामक्रियाणां वा न ध्यानाधिकारः नापि संन्यासित्वं योगित्वं वेति बोधनाय निषेधस्योपयोगात् ॥

एवं निरग्नीन् अक्रियांश्च बहिष्कृत्य आश्रमचतुष्टयगतान् ध्यानाधिकारित्वेनादाने यो यः कामादिवर्जनपूर्वककर्मानुष्ठाता स स एव संन्यासीति योगीति च निर्देशमर्हतीत्युक्तं भवति ॥ निरग्निरक्रिय इति शब्दौ यदि यतिपरौ स्यातां ॥ तर्हि चतुर्थाश्रमोनुपादेयः प्रसज्येत ॥ संन्यासपदस्य यत्यर्थत्वे यतिर्न संन्यासी गृहस्थ एव कर्मफलत्यागी यतिरित्यसंबद्धवचनत्वप्रसङ्गः ॥ तस्मात्संन्यासीति न यतिर्विवक्षितः । निरग्निरक्रिय इत्याभ्यां च न यतिः परामृष्ट इत्येव रम्यं ॥

शाङ्करास्तु मन्यन्ते ॥ शङ्करभाष्यस्य सविस्तरस्य लिखितत्वात्सारांशोऽर्थतोऽनूद्यते ॥ तथाहि । निरग्निः अक्रिय इति पदे यतिवाचके ॥ यतेस्संन्यासित्वं योगित्वंतु प्रसिद्धं ॥ यथाश्रुतार्थे निरग्नेरक्रियस्य च संन्यासित्वयोगित्वनिषेधप्रतीतावपि न वस्तुतस्तमर्थं भगवानाह ॥ श्रुतिस्मृतिस्ववचनविरोधापत्तेः । अतः नेत्यस्य न केवलं इत्यर्थः । अवधारणपदमध्याहार्यं ॥ निरग्निरेव संन्यासीति न ॥ अक्रिय एव योगीति न । किन्तु फलकाम-

संकल्पत्यागेन चित्तनैश्चल्येन यः कर्म करोति गृहस्थः सोऽपि संन्यासी योगी चेत्युपचारेण स्तूयते ॥ गृहस्थस्यैव कर्माधिकारः। ध्यानारोहणपर्यन्तमेव कर्म कर्तव्यं। यावज्जीवं कर्म कर्तव्यं इति न विधिः ॥ यतेर्नास्ति कर्म। यदि सर्वाश्रमिणां स्याद्विहितं कर्म यावज्जीवं तद्धन्यवचनाविरोधः। तथाहि। आरुरुक्षोः कर्म कारणं ॥ स एव आरूढो भवति ॥ तत्र शमः कारणम् ॥ इति ॥ एतेन कस्यांचिदवस्थायां कर्मान्यत्र नेति ज्ञायते ॥ किंच योगभ्रंशनिरूपकप्रकरणे गृहस्थः कर्मी न भ्रष्टो भवेत्। भ्रंशो हि फलाप्राप्तिरूपः॥ कर्मिणस्तु फलं यथायोग्यं नियतमेव ॥ अतो यतेरेव कर्महीनस्य भ्रंशस्संभावितः इति वक्तव्यं॥ तस्माच्च ज्ञायते सर्वेषां यावज्जीव कर्म विहितमितिपक्षः न साधुरिति ॥ यद्यपि कर्मयोगी गृहस्थो न संन्यासी नापि योगी। तथाप्युपचारेणैवं स्तूयते ॥ नात्र निरग्नेरक्रियस्य च यतेरपकर्षो विवक्षितः। किन्तु निष्कामकर्मिणां सकामानपेक्ष्य प्राशस्त्यएव तात्पर्यं ॥ इति ॥ अयमाशयः शङ्करभाष्यादिभिरवगम्यते। अत्रोच्यते ॥ अक्रियनिरग्निशब्दौ नात्र यतिपरौ ॥ यतेरप्यान्तराग्निमत्त्वत्। क्रियावत्त्वाच्च ॥ उक्तप्रमाणेभ्यो यतयोऽप्यग्निमन्तः क्रियावन्तश्चेति दर्शनात् ॥ किंच न केवल यतिः किंतु गृहस्थोऽपि संन्यासी योगीचेत्यभिप्राये सर्वेषां यतीनां यतित्वमात्रेण विवक्षितसंन्यासयोगावभ्युपगतौ भवतः ॥ कोऽत्र संन्यासः पररीत्या॥ सङ्कल्पफलयोस्त्यागः ॥ को योगः। चित्तविक्षेपाभावः ॥ एतद्रूपयोस्संन्यासयोगयोस्तुर्याश्रमिणां सर्वेषां विद्यमानत्वं कथं सङ्गच्छते ॥ निरग्नेरक्रियस्य तावन्मात्रेणैव संन्यासित्वं योगित्वं नास्ति इति ग्रहणे बाधकं न दृश्यते ॥ यत्तु गृहस्थस्यैव विहितं कर्म तच्च ध्यानाधिकारपर्यन्तमेव न तु सर्वेषां आश्रमिणां यावज्जीवं इत्यभिप्रेतं तन्न ॥ "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतᳪ समाः" इति श्रुतौ यावज्जीवं कर्मकर्तव्यताविधानात् ॥ आरुरुक्ष्वारूढविभागमादाय कर्मशमयोः कारणत्वोक्तिरपि आरूढस्य कर्माभावं न प्रतिपाद-

यति ॥ प्राचुर्यविवक्षयोपपत्तेः । यच्च गृहस्थस्य योगभ्रंशो न कदापि कथंचिदप्युपपन्नः इत्याक्षेपवचनं तन्मन्दं ॥ गृहस्थस्यापि क्वचित्सत्कर्मानुष्ठानाद्भ्रंशस्य संभवात् ॥ यदा गृहस्थः सर्वं कर्मेश्वराय समर्प्य मोक्षातिरिक्तं नेच्छति तदाह्यसौ कर्मयोगी ॥ यदा नेदृशस्तदा तस्य मोक्षोपायाद्भ्रंशो भवति ॥ निष्कामकर्माण्यपि सर्वाणि मोक्षव्यतिरिक्तं फलं नियमेनोत्पादयन्तीति तु परेषां भ्रमः । अतएव परोक्तिः "ध्यानसहितमीश्वरे कर्मसमर्पणं मोक्षायेत्यत्र प्रमाणाभावात् गृहस्थो योगभ्रष्टशब्दवाच्यो न भवति" इति आनन्दगिरिटिप्पणी ॥ इदमसत् । उक्तोपपत्तेः॥ गृहस्थस्य कर्मयोगिनस्स्तुतिमात्रमत्र विवक्षितं इति गौणकल्पनमन्याय्यं ॥ अतः कामादिवर्जनपूर्वमीश्वरार्पितमनुष्ठानं येन क्रियते स यतिर्वास्यादन्याश्रमी वा स्यात् । आश्रमविवक्षां विनैव संन्यासीति योगीति च मन्तव्यः इत्यर्थ एव सुरसः ॥

शङ्कराचार्यभाष्यमितरत्स्वव्यूहव्याख्यानं च विहायाध्यायप्रतिपाद्यं पद्यभावं च श्रीधरः किंचिद्विवृत्यनुगुणमाह ॥ "चित्ते शुद्धेऽपि न ध्यानं विना संन्यासमात्रतः । मुक्तिस्स्यादिति षष्ठेऽस्मिन्ध्यानयोगो वितन्यते" इति तस्याध्यायसंग्रहश्लोकः ॥ पद्यव्याख्यानन्तु "विहितं कर्म यः करोति स एव संन्यासी योगी च न तु निरग्निः, अग्निसाध्येष्टाख्यकर्मत्यागी, न चाक्रियः अनग्निसाध्यपूर्ताख्यकर्मत्यागिच" इति ॥

अथ रामानुजाचार्याशयस्संगृह्यते । आत्मावलोकनं कर्मयोगसाध्यं ज्ञानयोगसाध्यं च ॥ तयोस्साधनयोर्मध्ये कर्मयोगो ज्ञानयोगनैरपेक्ष्येण सुशकत्वेनाप्रमादित्वेनान्तर्गतज्ञानत्वेन चोत्कृष्टं साधनं । ज्ञानयोगस्तु सापेक्षत्वात् दुश्शकत्वसप्रमादत्वाभ्यांचावरः ॥ पृथक्साधनभूतोभयसाध्यमात्मावलोकनाख्यं फलं कर्मयोगिना लभ्यते इत्युभयनिष्ठत्वं तस्योपचारादुच्यते ॥ कर्मयोगस्य ज्ञानाकारत्वं प्रथमार्धेऽनूदितं । द्वितीयार्धे कर्मयोगस्य ज्ञाननिष्ठानैरपेक्ष्यं दृढीकृतं ॥ यः कर्मफलमनाश्रितः स

ज्ञाननिष्ठः कर्मयोगनिष्ठश्च ॥ केवलं ज्ञाननिष्ठस्तु निरग्निरक्रिय इति शब्दाभिधेयो नोक्तप्रकारेणोभयनिष्ठः किंत्वेकनिष्ठ एव ॥ तथाच नैरपेक्ष्यात्कर्मयोगस्य ज्ञानयोगाच्छ्रैष्ठ्यं पद्येन विवक्षितं इति ॥ अत्र चिन्त्यं ॥ संन्यासीत्यस्य ज्ञानयोगीत्यर्थो न शब्दार्थः नापि प्रकरणादिप्राप्तः । कर्मयोगी उभयनिष्ठ इत्यर्थस्तु नोपपद्यते । तस्य ज्ञानयोगित्वासंभवात् । उपचारस्तु निरर्थकः । ज्ञानयोगात्कर्मयोगस्य ज्यायस्त्वं न तत्वं । "कर्मज्यायोह्यकर्मणः" इत्यारभ्यैवमेवानेनाचार्येण व्याख्यायते । तच्च तत्र तत्र विचारितं इत्यलम् ॥

अयमत्र भावसंक्षेपः ॥ यतिरुत्तमः संन्यासी योगीच ॥ गृहस्थोऽपि कर्मयोगी तथास्तुतिमर्हति ॥ काम्यकर्मिणस्सकाशात्तस्य प्राशस्त्यं वाक्यार्थः इति शांकराः ॥

कर्मयोगी ज्ञानयोगिनस्सकाशादुत्कृष्टः । कर्मयोगस्यैव नैरपेक्ष्यादिनात्मावलोकनसाधनत्वात् इति पद्याशयमाह रामानुजाचार्यः ॥

यतिर्वास्यादन्योवा भवतु यः कामादिवर्जनपूर्वं इश्वरार्पितकर्मानुष्ठाता स एव संन्यासी योगीति शब्दप्रवृत्तिनिमित्तवत्त्वेनाभिधां अर्हति ॥ निरग्निरक्रियश्च न तथार्हति ॥ ध्यानबहिरङ्गसाधनभूतस्य कर्मयोगस्य केवले निरग्नौ अक्रिये चाभावात् इति श्रीमध्वाशयः ॥

पद्याक्षरव्याख्याने दौर्घट्यं न बहु दृश्यते ॥ अनाश्रितः अनपेक्षमाणः । कार्यं अवश्यकर्तव्यं नित्यं नैमित्तिकं ॥ संन्यासी योगीति शब्दौ व्याख्यातौ ॥ संन्यासीत्यनेन ज्ञानयोगिनं योगीत्यनेन कर्मयोगिन च गृह्णाति रामानुजाचार्यः ॥

निरग्निरक्रिय इत्यत्रेदमुक्तं मधुसूदनीये ॥ 'अत्र चाक्रिय इत्यनेनैव सर्वकर्मसंन्यासीति लब्धे निरग्निरिति व्यर्थं स्यादित्यग्निशब्देन सर्वाणि कर्माण्युपलक्ष्य निरग्निरिति संन्यासी क्रियाशब्देन चित्तवृत्तीरुपलक्ष्य अक्रिय

इति निरुद्धचित्तवृत्तिर्योगी च कथ्यते । तेन न निरग्निः संन्यासी मन्तव्यो नचाक्रियो योगी मन्तव्य इति यथासंख्यमुभयव्यतिरेको दर्शनीयः ॥ एवं सति नञ्द्वयमप्युपपन्नं वेदितव्यं' इति ॥ अत्राग्निशब्दस्य सर्वकर्मोपलक्षकत्वं क्रियाशब्दस्य चित्तवृत्त्युपलक्षकत्वं च क्लिष्टं । निरग्निमपेक्ष्यैव संन्यासित्वनिषेधः अक्रियमपेक्ष्यैव योगित्वनिषेधः इति विभागस्य ज्ञापकं न दृश्यते ॥ निरग्नेस्संन्यासित्वयोगित्वनिषेधः तथा अक्रियस्याप्युभयनिषेध इत्युक्तौ बाधकाभावात् ॥ मधुसूदनोक्तो विभागः शंकरभाष्यानभिमत इत्युत्कर्षदीपिकायां निरस्तं द्रष्टव्यम् ॥

उक्तयोस्संन्यासयोगयोः कर्मयोगांशभूतत्वेनानतिभिन्नत्वमनुसन्धेयं । ततोऽपि मधुसूदनोक्तो विभागो न रम्योऽवगम्यते ॥ यदत्रोक्तमभिनवगुप्ताचार्येण तदीषत्सयुक्तिकं भाति ॥ तथाहि । 'संन्यासी योगीति पर्यायावेतौ॥ अत एवाह यं संन्यासमिति । तथाच योगमन्तरेण संन्यासो नोपपद्यते । एवं संकल्पसंन्यासं विना योगो न युज्यते ॥ तस्मात्सदासिद्धसंबन्धौ योगसंन्यासौ' इति ॥

**यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।**
**नह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ॥ २ ॥**

वि० ॥ स संन्यासी च योगी चेत्युक्त्या प्राप्तां तयोरत्यन्तभेदशंकां निरसितुं अमुख्ययोगापेक्षया पृथगुक्तोऽपि संन्यासो मुख्ययोगान्तर्भूतइत्याह । यमिति । ज्ञेयस्सनित्यसंन्यासीत्यादिनोक्तप्रकारेण यं कामक्रोधादिवर्जनरूपं संन्या-

सं प्राहुस्तं संन्यासं योगं मुख्ययोगं ज्ञानोपायभूतकामादि-
वर्जनाविशिष्टनिवृत्तकर्मानुष्ठानरूपयोगान्तर्भूतं विद्धि जा-
नीहि। हे पाण्डव। कुतः। कश्चन कोऽपि असंन्यस्तसंकल्पः
अत्यक्तसंकल्पादिः संन्यासहीनकर्मानुष्ठानमात्रवानिति या-
वत्। योगी ज्ञानोपायवान्न भवति। न हि सामग्र्येकदेशः
कार्यजनको भवति। क्वचित्पृथगुक्तिस्तु ज्ञानभक्त्योः पृथ-
गुक्तिरिवैकदेशापेक्षयेति भावः ॥

शं० ॥ ननु च निरग्नेरक्रियस्यैव श्रुतिस्मृतियोगशास्त्रेषु
संन्यासित्वं योगित्वं च प्रसिद्धं ॥ कथमिह साग्नेस्सक्रियस्य
संन्यासित्वं योगित्वं चाप्रसिद्धमुच्यते इति। नैषदोषः
कयाचिद्गुणवृत्त्योभयस्य संपिपादयिषितत्वात्। तत्कथं ॥
कर्मफलसंकल्पसंन्यासात्संन्यासित्वं योगाङ्गत्वेन च कर्मा-
नुष्ठानात्कर्मफलसंकल्पस्य वा चित्तविक्षेपहेतोः परित्यागाद्यो-
गित्वं चेति गौणमुभयं न पुनर्मुख्यं संन्यासित्वं योगित्वं
चाभिप्रेतमित्येतमर्थं दर्शयितुमाह यं संन्यासमिति। यं सर्व-
कर्मतत्फलपरित्यागलक्षणं परमार्थसंन्यासमिति प्राहुः श्रुति-
स्मृतिविदः योगं कर्मानुष्ठानलक्षणं तं परमार्थसंन्यासं विद्धि
जानीहि हे पाण्डव। कर्मयोगस्य प्रवृत्तिलक्षणस्य तद्विपरी-
तेन निवृत्तिलक्षणेन परमार्थसंन्यासेन कीदृशं सामान्य-
मङ्गीकृत्य तद्भावउच्यते इत्यपेक्षायामिदमुच्यते। अस्ति
परमार्थसंन्यासेन सादृश्यं कर्तृद्वारकं कर्मयोगस्य ॥

योहि परमार्थसंन्यासी स त्यक्तसर्वकर्मसाधनतया सर्वकर्म तत्फलविषयं संकल्पं प्रवृत्तिहेतुकामकारणं संन्यस्यति। अयमपि कर्मयोगी कर्म कुर्वाणएव फलविषयं संकल्पं संन्यस्यतीत्येतमर्थं दर्शयन्नाह । न हि यस्मादसंन्यस्तसंकल्पोऽसंन्यस्तोऽपरित्यक्तः फलविषयसंकल्पोऽभिसंधिर्येन सोऽसंन्यस्तसंकल्पः कश्चन कश्चिदपि कर्मी योगी समाधानवान्भवति न संभवतीत्यर्थः । फलसंकल्पस्य चित्तविक्षेपहेतुत्वात् । तस्माद्यः कश्चन कर्मी संन्यस्तफलसंकल्पो भवेत्स योगी समाधानवानविक्षिप्तचित्तो भवेत् । चित्तविक्षेपहेतोः फलसंकल्पस्य संन्यस्तत्वादित्यभिप्रायः । एवं परमार्थसंन्यासकर्मयोगयोः कर्तृद्वारकं संन्याससामान्यमपेक्ष्य यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव इति कर्मयोगस्य स्तुत्यर्थं संन्यासित्वमुक्तम् ॥

रा० ॥ उक्तलक्षणकर्मयोगे ज्ञानमप्यस्तीत्याह ॥ यं संन्यासं इति ज्ञानयोग इति आत्मयाथात्म्यज्ञानमिति प्राहुः तं कर्मयोगमेव विद्धि ॥ तदुपपादयति । नह्यसंन्यस्तसंकल्पो योगी भवति कश्चनेति । आत्मयाथात्म्यानुसन्धानेनानात्मनि प्रकृतावात्मसंकल्पः संन्यस्तः परित्यक्तो येन स संन्यस्तसंकल्पः । अनेवंभूतः असंन्यस्तसंकल्पः । नह्युक्तेषु कर्मयोगिष्वनेवंभूतः कश्चन कर्मयोगी भवति । " यस्य सर्वे समारंभाः कामसंकल्पवर्जिताः " इति ह्युक्तम् ॥

विचारः

"संन्यासी च योगी च" इति वाक्येन संन्यासयोगयोरत्यन्तभेदः प्रतीयते ॥ "ज्ञेयस्स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति" इत्युक्तलक्षणात्संन्यासी खलु द्वेषादिवर्जितो विवक्षितः। यतिस्तु नाभिप्रेत इति प्रागेव प्रतिपादितं ॥ योगशब्दस्तु ईश्वरार्पणबुध्द्या कर्मानुष्ठानपरो वा कामादिवर्जनपूर्वकेश्वरार्पणबुध्द्या कर्मानुष्ठानरूपविशिष्टपरो वा दृश्यते ॥ आद्ये तथा च योगशब्दस्य विशेषणमात्रपरत्वे संन्यासयोगयोरत्यन्तभेदो ज्ञेयः ॥ द्वितीये तथाच योगशब्दस्य विशिष्टाख्यकर्मयोगपरत्वे संन्यासस्य विशिष्टान्तर्भूतत्वेन संन्यासयोगयोरङ्गाङ्गिनोर्नातिभिन्नत्वं द्रष्टव्यम् ॥ योगशब्दस्य विशिष्टाख्यकर्मयोगवाचकत्वं मुख्यं । तदेकदेशभूतस्येश्वरार्पितकर्मानुष्ठानरूपस्यार्थस्य यदा विवक्षा तदा अमुख्यः ॥ "संन्यासी च योगीच" इति 'च' द्वयेन सहपाठात्पृथक्त्वबोधे योगशब्दः अमुख्यार्थकः। एतेनात्यन्तपृथक्त्वबोधे जाते सति योगशब्दमुख्यार्थोपादाने नात्यन्तपृथक्त्वं तत्वमिति ज्ञापयितुं यं सन्यासमिति श्लोकेनाभिन्नत्वोक्तिः ॥ तथाच विवक्षाभेदेन पृथक्त्वैकत्वयोरुपपत्तेर्नविरोधश्शंकनीयः ॥

सर्वत्र संन्यासशब्दः द्वेषादिवर्जनपरः नत्वाश्रमपरः ॥ योगशब्दस्तु क्वचिदङ्गपरः क्वचिदङ्गिपरः इति विवेकः ॥

अङ्गाङ्गिनोः संन्यासकर्मयोगयोरभेदविवक्षया यं संन्यासं प्राहुः तं योगं विद्धीत्युक्तिः। अत्र योगशब्देन कर्मयोगोऽभिप्रेत। तस्यैव मुख्यार्थत्वात्तद्विवक्षया ऐक्योक्तिरुपपद्यते ॥ "नह्यसंन्यस्त" इत्यर्धेन संन्यासं विना कर्मयोगानिष्पत्तिः स्मारिता ॥ हिशब्दात् "ज्ञेयस्सनित्यसंन्यासी"-त्याद्युक्तं स्मारितमवधेयं ॥ यत्र कर्मयोगित्वं तत्र संकल्पत्यागाख्यसंन्यासस्यावश्यंभावात्सुस्थः प्रतिबन्धः। व्यतिरेकेण यत्रासंन्यासस्तत्राकर्मयोगः इति श्लोके व्याप्तिः प्रदर्शिता ॥

एवमुक्तः आचार्यभाष्यानुसारेण विवृतिदर्शिताशयः । इमं मार्गं किंचिदनुसृत्याद्वैतावलंबिना केनचिदपि व्याख्यातं गम्यते यमनुवदत्युत्कर्षदीपिकाकारः । तथाहि ॥ 'कर्मयोगसंन्यासयोर्भेदमङ्गीकृत्याविरोधेन स्तुतिरुक्ता । इदानीं तयोरैक्येनैव स्तुतिमारभते ॥ यमिति ॥ इत्यतस्तं योगं विद्धि यं संन्यासं प्रकर्षेणाहुः ॥ प्रकर्षस्तु कर्मस्वरूपत्यागोऽलसस्यापि संभाव्यते । कर्मानुतिष्ठतः फलसंकल्पत्यागस्तु दुर्लभतर इत्येवं लक्षणो ज्ञेयः ॥' इति ॥

तथाच प्रकर्षेण न्यासस्संन्यासः इति व्याख्याय फलत्यागस्य प्रकृष्टत्वाद्योगस्संन्यास उच्यते इत्यभिप्रैति ॥ अत्र संन्यासशब्दस्याश्रमपरत्वं विहायान्यथाव्याख्यानं रम्यं । सन्यासयोगयोरभेदविवक्षया श्लोकप्रवृत्तिरित्युक्तिरपि साध्वी ॥ 'ज्ञेयस्सनित्ये'ति भगवतैवोक्तस्य संन्यासिलक्षणस्य विस्मरणादिव संशब्दस्य प्रकर्षवाचित्वं पुरस्कृत्य व्याख्यातं भाति ॥ एतस्मात् अंगांगिभावविवक्षया ऐक्योक्तिरिति व्याख्यानं रम्यतरं ज्ञेयस्सनित्येत्युक्तिं यत्सम्यगनुकूलयतीति द्रष्टव्यम् ॥

एतच्छ्लोकस्य शांकरव्याख्यानानामयं अभिसन्धिः ॥ ( सूचनं । अनेकव्याख्यानगतं अस्मद्वचनेन क्रोडीकृतं द्रष्टव्यं) ध्यानयोगः कर्मयोग इति द्वयोर्योगयोर्मध्ये ध्यानयोगः संन्यासतुल्यः । "स संन्यासी च योगी च" इति वचनं तुल्यतां प्रतिपादयति ॥ संन्यासोनाम सर्वकर्मतत्फलसंकल्पादित्यागरूपः । ध्यानयोगो नाम चित्तनिरोधरूपः । संकल्पत्यागेसति चित्तविक्षेपाभावो निष्पन्नः । अतस्संन्यासध्यानयोगयोर्हेतुहेतुमद्भावस्संबन्धः । संन्यासीति यतेरेव ग्रहणौचित्यात् ॥ "संन्यास एवातिरेचयति" "ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकेषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति" इत्याद्याः श्रुतयो हि सर्वकर्मतत्फलत्यागिनं यतिमाहुः ॥ कर्मयोगस्तु उक्तयोस्संन्यासध्यानयोगयोस्सकाशादवरः । तथाप्यत्र तयोस्समत्वेन स्तुतिः । यत्किंचि-

द्गुणयोगेन सादृश्यात्स्तुतिरुपपद्यते ॥ तथाहि । संन्यासे तावत्कर्म तत्फलं च सङ्कल्पाभावेन त्यज्यते । कर्मयोग्यपि फलसङ्कल्पं परित्यजति ॥ तथाच फलसङ्कल्पत्यागविषये सादृश्यं व्यक्तं ॥ एवं ध्यानयोगेऽपि कर्मयोगसादृश्यमवगन्तव्यम् । ध्यानयोगो हि चित्तनिरोधरूपः । चित्तनिरोधे प्रमाणविपर्ययविकल्पनिद्रास्मृतयः पंच वृत्तयः परित्याज्याः ॥ तासु विपर्ययः अविद्यास्मितारागद्वेषाभिनिवेशाख्यभेदभिन्नः ॥ ध्यानयोगी सिद्धः सर्वा अपि वृत्तीः परित्यजति ॥ कर्मयोगी तु फलसङ्कल्पत्यागेन चित्तविक्षेपं जयतीति ध्यानयोगाङ्गेषु विपर्ययप्रभेदभूतरागाख्यवृत्तिं जितवान् ॥ अतस्तस्य ध्यानयोगिसादृश्य प्रतिपद्यते ॥ उक्तरूपेण संन्यासिसादृश्याद्ध्यानयोगिसादृश्याच्च 'स संन्यासी योगी च' इत्युक्तिः ॥ 'यं सन्यास' मित्यत्र संन्यासशब्देन संन्यासध्यानयोगयोस्संग्रहः ॥ 'योगं विद्धि' इत्यत्र योगः कर्मयोगः । 'विद्धि' इत्यैक्यज्ञानं सादृश्यदर्शनेन गौण्या संभाव्यते ॥ द्वितीयार्धे 'योगी' इत्युक्तः कर्मयोगी ॥ 'असन्यस्तसङ्कल्प' इति फलसङ्कल्पसंन्यासाभिधानं संन्यासिसादृश्यं ध्यानयोगिसादृश्यं च परामृशति ॥ इति ॥ इदमत्र वक्तव्यं । यत्किंचित्सादृश्यमादाय स्तुतिरुक्तेत्याशयाभिधानं नीरसं ॥ संन्यासी सर्वकर्म परित्यजतीत्यंशो न तत्वं । तस्यापि सक्रियत्वादान्तराग्नित्वाच्च ॥ किंच कर्मत्यागिकर्मानुष्ठायिनोस्साम्यं कथं वक्तुं शक्यते । अत्र असादृश्यस्य बलीयस्त्वेन कर्मयोगिस्तुतिर्दुर्बला भवति ॥ 'स संन्यासी च योगी चे'त्यत्र संन्यासियोगिनोर्भेदएव स्फुटं प्रतीयते । ऐक्याभिप्राये वाक्यगतिर्नानुकूला ॥ 'यं सन्यास'मित्यत्र संन्यासशब्देनोपलक्षणया वोपपत्त्यन्तरेण वा ध्यानयोगस्य संग्रहश्च क्लिष्टः । संन्यासयोगयोर्भेदं पुरस्कृत्य पूर्वोक्तिरिदानीं विवक्षाभेदेनैक्याभिधानमित्यर्थस्याक्लिष्टत्वात् ॥ यत्तु मधुसूदनेनाष्टाङ्गयोगप्रक्रियामादाय वृत्तिपंचकनिरूपणपूर्वकं विपर्ययप्रभेदभूतरागपरित्यागाख्यसादृश्यं

कर्मयोगस्य वर्णितं तदपि क्लिष्टं। निरूपितस्य सादृश्यस्यात्यल्पत्वात्स्तुतिरपि न सम्यक्संगच्छते॥ संन्यासशब्द आश्रमपरइति मत्वा यतीनां कर्माभावं भ्रांत्वा गृहिणो यथाकथंचित्तत्सादृश्यसंपादनायायं प्रयत्नक्लेशः परैरनुभूतः। 'ज्ञेयस्स नित्यसंन्यासी यो न द्वेष्टि न कांक्षति' इति भगवतैव संन्यासलक्षणस्य स्वाभिमतस्योक्तत्वात्कुतोऽयं क्लेश इति न ज्ञायते॥ तस्माद्रागादिवर्जनरूप एव संन्यासोऽत्राभिमतः। योगस्तु क्वचिदीश्वरार्पितकर्मरूपः क्वचिद्रागादिवर्जनपूर्वकेश्वरार्पितकर्मरूपः। आद्ये संन्यासयोगयोर्भेदविवक्षा द्वितीये तयोरङ्गाङ्गित्वाभिप्रायेणैक्याभिधानं इत्याचार्यव्याख्यानमेव निरवद्यम्॥

रामानुजाचार्यभाष्याशयस्त्वन्यथा वर्तते अयं तत्संक्षेपः नात्र यथाश्रुतवाक्यवृत्तिः प्रथमार्धे॥ यं योगं प्राहुस्तं संन्यासं विद्धि इति योजना ग्राह्या॥ संन्यासोनाम ज्ञानयोगः आत्मयाथात्म्यज्ञानं—देहात्मविवेकः। तथाच कर्मयोगमन्तर्गतज्ञानयोगं विद्धीत्यर्थः। यथाश्रुतयोजनायान्तु संन्यासशब्दितज्ञानयोगस्यान्तर्गतकर्मयोगत्वमापद्येत। नहि तत्तत्वं॥ कर्मयोगस्यान्तर्गतज्ञानत्वेऽपि ज्ञानयोगस्यान्तर्गतकर्मत्वायोगात्॥ एवं अन्तर्गतात्मयाथात्म्यज्ञानत्वेन कर्मयोगस्य ज्ञानयोगाभेदं प्रथमार्धे प्रतिज्ञाय द्वितीयार्धेनोक्तार्थमुपपादयति॥ नहीति। संकल्पोऽत्र देहात्मभ्रमो विवक्षितः। यथोक्तं देशिकेन। "संकल्पशब्दो न तावदत्र कुर्यामिति संकल्पविषयः। तदभावे कर्मकरणस्यैवाशक्यत्वात्। नापि फलाभिसंधिविषयः। तथात्वेऽपि कर्मयोगे ज्ञानयोगान्तर्भावप्रतिज्ञाया उपपादकत्वासिद्धेः। अत एव 'संकल्पमूलः कामो हि यज्ञास्संकल्पसंभवाः' इत्यादिस्मृतिपठितः कामस्य कर्मणां च हेतुस्संकल्पोऽत्र न विवक्षितः॥ तस्मादेकीकृत्य कल्पोऽत्र संकल्पः। सचात्र देहात्मगोचरः। तत्परित्यागश्च तत्वज्ञानं। एवं सत्येव 'नहि' इत्यादेरुक्तोपपादकत्वमुपपद्येत" इति॥ तथाच देहात्मविवेकवानेव कर्मयोगी भवति। तस्मादेवासौ ज्ञानयोग्यपि

भवतीति रामानुजाचार्याभिमतो वाक्यार्थः ॥ इदमत्र चिन्त्यं ॥ संकल्पशब्दस्य देहात्मैक्यभ्रमपरत्वमत्र क्लिष्टमयुक्तमनुपयुक्तं च ॥ रामानुजाचार्यभाष्ये खलु ‘ हि ’ शब्दार्थनिरूपणावसरे ‘ यस्य सर्वे समारंभाः कामसंकल्पवर्जिताः ’ इति गीतावचनमुदाहृतं ॥ उदाहृतवचने संकल्पशब्दो न देहात्मभ्रमपरः इति प्रतीयते ॥ चार्वाकाद्यालंबितदेहात्मवादस्येह संगतिर्दुर्घटा ॥ संकल्पशब्देन योगवृत्त्या एकीकृत्य कल्पस्य ग्रहणेऽपि देहात्मनोस्संग्रहबीजं न दृश्यते । योग्यतया तयोर्ग्रहणं इत्युक्तौ तु जीवेश्वरयोस्संग्रहः कुतो न योग्यः । न हि जीवेश्वराभेदज्ञानपरित्यागं विना कश्चन कर्मयोगी स्यात् ॥ यदभिप्रेतं प्रथमार्धप्रतिज्ञातार्थोपपादकतयैव द्वितीयार्धस्य सार्थक्यावगतेस्संकल्पशब्दः उक्तरूपेणैव व्याख्येयः इति तदसत् । कर्मयोगस्यान्तर्गतज्ञानयोगत्वं प्रतिज्ञातं इत्यनभ्युपगमात् ॥ संन्यासशब्दः ज्ञानयोगपरः, ज्ञानयोगे कर्म नास्ति, कर्मयोगे तु ज्ञानयोगोऽन्तर्भूतः, इत्यादिरामानुजाचार्यपरिग्रहाः प्रागेव विचारिता निरस्ताश्च ॥ कर्मयोगे संन्यासोऽन्तर्भूतः इति यद्व्याख्यातं तन्निर्दुष्टम् ॥ संन्यासशब्दस्य ज्ञानयोगपरत्वं तु नाभ्युपेयं । तथासत्युक्तान्तर्भावस्याताात्विकत्वात् । कामादिवर्जनं संन्यास इत्यभ्युपगमे तु योगे संन्यासस्यान्तर्भावस्सुघटः । तस्मात्संन्याससंकल्पशब्दौ विवृत्युक्तरीत्यैव व्याख्येयौ ॥

**आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।**
**योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ३ ॥**

वि० ॥ ध्यानाधिकारत्वेनोक्तो मुख्यः कर्मयोगः किं सकृदनुष्ठेय उत फलप्राप्तिपर्यन्तमित्यतः फलपर्यन्तमित्याह ।

आरुरुक्षोरिति । योगं ज्ञानोपायं आरुरुक्षोः संपूर्णं कामयमानस्य मुनेः परोक्षज्ञानिनः कर्म कारणमुच्यते । योगारोहरूपसाक्षात्कारस्येति योज्यं । अपरोक्षरूपफलोदयपर्यन्तं कार्यमिति भावः । तस्यैव मुनेर्योगारूढस्य संपूर्णज्ञानोपायस्यापरोक्षज्ञानिनः शमः । उपलक्षणं । भगवन्निष्ठबुद्धित्वरूपध्यानव्याख्यानार्चनादिकं कर्म कारणं । मुक्तिगतसुखातिशयस्येति योज्यं ॥ यद्यप्ययं प्रश्नो "यदा ते मोहकलिल" मित्यनेन द्वितीये परिहृतः । तथापि तत्र परोक्षज्ञानार्थिनोऽत्र तु योगारोहशब्दितसंपूर्णोपायशब्दितापरोक्षार्थिन इति भेदइति भावः । यद्वा योगारूढस्येत्युत्तरार्धे अपरोक्षज्ञानिनो ध्यानादिकं कर्म वक्तुं यदात इति श्लोकोक्तस्यैव प्रश्नोत्तरस्य पूर्वार्धेनानुवादइति ज्ञेयं ॥ यद्वा कर्मयोगमध्ये ज्ञानार्थिना कीदृशो योगोऽवश्यापेक्षितइत्यतआह ॥ आरुरुक्षोरिति । पूर्वार्धेन ज्ञानार्थिनः उत्तमाधममध्यमरूपनानाजनशुश्रूषाख्यमेव कर्मावश्यापेक्षितमित्युच्यते । (ज्ञानार्थिनो यथाशक्ति त्रिविधप्राणिनां शुश्रूषयोपकारकृतः हरिस्तुष्टः स्वापरोक्षं ददाति । तेन तदवश्यं कार्यमिति) । चरमार्धेन तु ज्ञानिनो नानाजनशुश्रूषाख्यकर्मोपशमएव शमपदेनोच्यते । न तु ध्यानाद्युपशमः ॥ तत्तु कार्यमेवेत्युच्यते । शमपदस्योभयार्थत्वात् (तस्य स्वोत्तमसेवयैवेष्टसिद्धौ अन्यशुश्रूषया कृत्याभावात्) । एवंचात्र श्लोके पूर्वार्धे ज्ञानार्थिनः

कर्मापेक्षितमित्युक्तं ॥ उत्तरार्धे ज्ञानिनः शमपदेन कर्मोपशमोऽपेक्षितइत्युच्यते । तथाच न निरग्निर्नचाक्रियो योगीत्याद्युक्तिविरोध इति प्रत्युक्तं ध्येयं । कर्मशमशब्दाभ्यां नानाजनशुश्रूषाख्यकर्म तदुपशमयोरेवात्र विवक्षितत्वादिति ॥

शं० ध्यानयोगस्य फलनिरपेक्षः कर्मयोगो बहिरङ्गं साधनमिति तं संन्यासत्वेन स्तुत्वाधुना कर्मयोगस्य ध्यानयोगसाधनत्वं दर्शयति । आरुरुक्षोरिति । आरुरुक्षोरारोढुमिच्छतोऽनारूढस्य ध्यानयोगेऽवस्थातुमशक्तस्यैवेत्यर्थः ॥ कस्य आरुरुक्षोः? मुनेः । कर्मफलसंन्यासिन इत्यर्थः। किमारुरुक्षोः? । योगं। कर्म कारणं साधनमुच्यते॥ योगारूढस्य पुनस्तस्यैव शम उपशमः सर्वकर्मभ्यो निवृत्तिः कारणं योगारूढत्वस्य साधनमुच्यतइत्यर्थः । यावद्यावत्कर्मभ्यउपरमे तावत्तावन्निरायासस्य जितेन्द्रियस्य चित्तं समाधीयते ॥ तथासति स झटिति योगारूढो भवति । तथाचोक्तं व्यासेन "नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यताच ॥ शीलं स्थितिर्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः" इति ॥

रा० ॥ कर्मयोगएवाप्रमादेन योगं साधयतीत्याह— योगं अत्मावलोकनं प्राप्तुमिच्छोर्मुमुक्षोः कर्मयोगएव कारणमुच्यते । तस्यैव योगारूढस्य प्रतिष्ठितयोगस्यैव, शमः

कर्मनिवृत्तिः, कारणमुच्यते ॥ यावदात्मावलोकनरूपमोक्षावाप्ति कर्म कार्यमित्यर्थः ॥

विचारः

मुनेरिति कामक्रोधविवर्जितः परोक्षज्ञानी विवक्षितः । आरुरुक्षुविशेषणत्वादेवं व्याख्येयं । आरुरुक्षुर्हि साधकः । न तु सिद्धः ॥ कामक्रोधादिवर्जनरूपसंन्यासं विना कर्मयोगो न संपद्यते इत्युक्तरीत्या कर्मयोगी मुनिरित्युच्यते । 'सहिं लोके मुनिर्नाम यः कामक्रोधवर्जितः' इत्युक्तेर्मुनित्वं कर्मयोगिनस्संभवति ॥ अथवा मुनेरित्यस्य मुनेर्भविष्यत इत्यर्थः । 'गृहस्थः स्त्रियमुद्वहेत्' इत्युक्तिवद्भविष्यन्मुनित्वविवक्षया मुनित्वव्यपदेशोपपत्तिः ॥ अथवा मुनेरिति नारुरुक्षुविशेषणं । मुनेर्ध्यानशीलस्य योगं समाधियोगं आरुरुक्षोः प्रेप्सोः इति योजना ॥ मननशीलो हि मुनिः ॥ मननमत्र समाधिरिति मन्तव्यं ॥

अतीतेन श्लोकद्वयेन ध्यानयोगबहिरङ्गसाधनत्वेन खलु निरग्नेर्निष्क्रियस्य च संन्यासयोगप्रतिषेधपूर्वं कर्मयोगस्य माहात्म्यमुक्तं ॥ कर्मयोगस्यानुष्ठेयत्वे कालावधिर्जिज्ञास्यो भवति ॥ तत्र सकृदनुष्ठानेनालमिति शंकायां 'कर्मकारणं' इति प्रत्युक्तं गीतायां ॥ कार्याव्यवहितपूर्ववृत्तिकारणं इत्यतो ध्यानयोगारोहपर्यन्तं कर्मानुष्ठेयमित्यायातम् ॥

अत्र 'यदा ते मोहकलिलं' इत्यनेनैतस्य 'कियत्पर्यन्तं कर्मानुष्ठेयं' इति प्रश्नस्योत्तरितत्वात्कुतस्तस्यैव प्रमेयस्य पुनरभिधानं इति शङ्का समाधेया ॥ उच्यते ॥

(१) 'यदा ते' इत्यत्र ज्ञानार्थिना कियत्पर्यन्तं कर्तव्यं कर्मेति प्रश्नः॥ इहतु ध्यानयोगारुरुक्षुणा कियत्पर्यन्तं कर्तव्यं कर्मेति प्रश्नः॥ अस्त्यनयोर्भेदः॥ ध्यानयोगारोहस्य हि नापरोक्षज्ञानरूपत्वं अपितु तत्साधनत्वमभ्युपेयं ।

ध्यानपरिपाकरूपसमाध्यव्यवहितोत्तरकाले अपरोक्षज्ञानं जायते इति स्मरणात्। तथाहि सूत्रं '३ॐ ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात्' इति । प्रारब्धकर्मप्रतिबन्धाभावेऽपरोक्षज्ञानमैहिकं समाधिपरिपाकजन्मन्येवोत्पद्यत इति सूत्रार्थः। एवं समाधिपरिपाकस्यापरोक्षज्ञानसाधनत्वोक्त्या हेतुहेतुमद्भावात् भेदमादाय ध्यानयोगप्रेप्सोः कियत्पर्यन्तं कर्मेतीह प्रश्नः 'यदाते' इत्यत्र प्रस्तुतात्प्रश्नाद्भिद्यते इत्याशयः॥ ननु तर्हि 'योगारूढस्य' इत्यस्य व्याख्यानावसरे भाष्ये 'अपरोक्षज्ञानिनः इत्यर्थः' इत्युक्तिः कथमिति चेन्न ॥ समाधिपरिपाकस्यापरोक्षज्ञानाव्यवहितपूर्वावस्थात्वेन तयोरनतिविप्रकर्षाभिप्रायेण भाष्यस्योपपत्तेः । अविप्रकर्षस्तु ऐहिकमप्रस्तुतप्रतिबन्धे इति सूत्रादवगम्यते ॥ तथा हि श्रुत्यादिदर्शनं ॥ 'श्रुत्वात्मानं मतिपूर्वं ह्युपास्येहैव दृष्टिं परमस्य विन्देत्' इति हि श्रुतिः॥ अव्यवहितत्वाभिप्रायेण आरूढस्य अपरोक्षज्ञानिनः इति व्याख्यानं सुगमम् ॥

अथवा योगारूढस्येत्यस्यापरोक्षज्ञानिन इत्येवार्थस्स्यात् ॥ तर्हि ज्ञानार्थिनः कियत्पर्यन्तं कर्मेति पृष्टं भवति । ततश्च 'यदा ते' इत्यनेन पौनरुक्त्यं इति न वाच्यं । 'आरुरुक्षो'रिति पूर्वार्धस्य 'यदा ते' इत्युक्तप्रमेयानुवादरूपत्वात् । अनुवादस्य प्रयोजनं तु ज्ञानिना मोक्षे आनन्दाभिवृद्ध्यर्थं शमादिकं कार्यं इति विधानसौकर्यमिति ज्ञेयम् ॥

एवं 'योगारूढस्य' इत्यस्यार्थद्वयकथनेन तदनुगुणं 'शमः कारणं' इत्यस्याप्यर्थद्वयं वेदितव्यं । योगारूढस्य समाधिपरिपाकवतः शमः उपशमादिकं कारणं अपरोक्षज्ञानस्य इत्येकोऽर्थः । योगारूढस्यापरोक्षज्ञानिनः शमः शमादिकं कारणं मोक्षे आनन्दाभिवृद्धेरित्यन्यः ॥

अथ कर्मशमशब्दयोरर्थो विचार्यः । कर्मशब्देन सर्वप्रकारानुष्ठानानां संग्रहमभिप्रयन्तः शाङ्करास्शमशब्देन सर्वकर्मोपरममाहुः ॥ एतदयुक्तम् ॥

ज्ञानिनोऽपि कर्मानुष्ठानस्यावश्यंभावात् ॥ यद्यपि परोक्षज्ञान्यपरोक्षज्ञान्यनुष्ठेय-कर्मस्वस्ति विशेषः ॥ तथापि सर्वानुष्ठानपरित्यागस्तु न कुत्रापि ज्ञानिनो विधीयते ॥ शमशब्दस्योपशमार्थकत्वेऽपि न सर्वकार्योपशमो विवक्षित इत्यवधेयम् ॥

शमइत्यनेनासंप्रज्ञातसमाधिर्वा संप्रज्ञातदशायामनुष्ठेयशमादिर्वा विवक्षितः। आद्ये योगारोहफलमसंप्रज्ञातसमाधिरित्यवगन्तव्यं। यथा ध्यानपरिपाकः अपरोक्षस्य साधन इत्युक्तं तथाऽसंप्रज्ञातसमाधिरपरोक्षसाध्यं फलं इति ज्ञेयम् ॥ भोक्तव्यप्रारब्धोपरमे खल्वसप्रज्ञातसमाध्यधिकारस्संपद्यते ॥ अन्यदा तु भगवच्चरितादौ स्थितेरेवाधिकारउक्तः। तथाहि ॥ 'ये त्वां पश्यन्ति भगवंस्त एव सुखिनःपरं। तेषामेव च सम्यक्तु समाधिर्ज्ञायते नृणां ॥ भोक्तव्यकर्मण्यक्षीणे जपेन कथयाऽपि वा। वर्तयन्ति महात्मानस्तद्भक्तास्तत्परायणाः' इत्युक्तेः ॥ (गी—भा—उदाहृतम्)

'शमो मन्निष्ठताबुद्धेर्दम इन्द्रियनिग्रहः' इति भागवतोक्तेः शमसमाध्योरैकार्थ्यं गम्यते। सर्वविषयोपरमेण भगवन्निष्ठबुद्धिश्शमः। ईश्वरे सम्यग्ज्ञनस आधानं समाधिरिति शमसमाधिशब्दयोरेकार्थत्वं द्रष्टव्यम् ॥

प्रारब्धप्रतिबद्धस्त्वपरोक्षज्ञानी शमादिकं कुर्यादित्यनेन सत्कर्मानुतिष्ठेल्लोकसंग्रहार्थं मोक्षानन्दाभिवृद्ध्यर्थं श्रीहरिप्रसादविशेषार्थं चेति भावो लभ्यते ॥ शम इत्युपलक्षणं ॥ ज्ञानिकर्तव्यजपव्याख्यानादीनां तेन संग्रहः॥ नात्र शङ्कनीयं आरुरुक्षोरारूढस्य न विशेषः प्रसज्यते इति। सर्वसत्कर्मानुष्ठानस्यारुरुक्षोर्विहितत्वेऽप्यारूढस्य विशेषाकारेण भगवन्निष्ठतायाः विहितत्वात् ॥

यद्वा आरुरुक्ष्वारूढयोः क्रमेण विवक्षितौ कर्मशमौ गीतातात्पर्योपपादितरीत्या विज्ञेयौ ॥ अयं तत्र समर्थितो भावः ॥ आरुरुक्षुस्साधकः।

आरूढस्सिद्धः । आद्योऽसंपूर्णोपायवान् । द्वितीयस्तु संपूर्णोपायः । नानाकर्मसु नित्यनैमित्तिकादिष्विह प्रकृतं कर्म परोपकारादिग्राह्यं ॥ नतु सन्ध्यावन्दनादिकं ॥ अन्यजनोपकारविधिर्विशेषत आरुरुक्षुं बध्नाति ॥ आरूढन्तु जनशुश्रूषाविधिर्नाधिकं बध्नाति । यतस्तस्य भगवद्ध्यानादिकमेव विशेषतो युक्तं ॥ उत्तममध्यमाधमजनानां यथायोग्यं कर्मयोगिभिः शुश्रूषा शास्त्रे विधीयते । उत्तमानां आदरेण पादसंवाहनादिरूपा । मध्यमानां प्रतिनमस्कारस्नेहादिलक्षणा । अधमानां अन्नपानादिना रक्षणदयादिरूपा ॥ एवमुक्तं नानाजनशुश्रूषाख्यं कर्मारुरुक्षोरेव ॥ तादृशनानाजनशुश्रूषोपशमस्त्वारूढस्यानुज्ञातः ॥ तस्यस्वोत्तमसेवामात्रन्तु विहितं । यथोक्तं स्मृतौ (गी-ता-उदाहृतं)॥

'नानाजनस्य शुश्रूषा कर्माख्याकरवन्मितेः । योगार्थिना तु सा कार्या योगस्थेन हरौ स्थितिः । तेनापि स्वोत्तमानां तु कार्यान्यैरखिलेष्वपि ॥ शक्तितः करणीयेति विशेषोऽसिद्धसिद्धयोः ॥ प्राप्तोपायस्तु सिद्धस्स्यात्प्रेप्सुस्साधक उच्यते ॥ तस्य प्राण्युपकारेण सन्तुष्टो भवतीश्वरः । सिद्धोपायेन विष्णोस्तु ध्यानव्याख्यार्चनादिकं । कार्यं नान्यत्तस्य तेन तुष्टो भवति केशवः' इति ॥

अवश्यकर्तव्यानां सन्ध्यावन्दनप्रभृतीनां करणाकरणे कर्मशमशब्दाभ्यां नात्र विवक्षिते ॥ तेषां यथासंभवं अवश्यकर्तव्यत्वादेव ॥ असिद्धसिद्धयोर्वैलक्षण्यप्रदर्शनावसरे तत्परामर्शस्यानुपयुक्तत्वात् ॥

एतावत्पर्यन्तं संग्रहेण कथिते श्रीमदाचार्यभाष्यतात्पर्याशये योगशब्दः उपायपरः इति स्फुटम् ॥ स ज्ञानोपायो वा असंप्रज्ञातसमाध्युपायो वा मोक्षानन्दवृद्ध्युपायो वा मन्तव्यः ॥ योगमारुरुक्षुरित्यत्र ध्यानयोगमारुरुक्षुः प्राधान्येन विवक्षितो भाति ॥ मधुसूदनीये तु योगशब्दः अन्तःकरणशुद्धि-

परइति व्याख्यातं । इदं निरस्तमुत्कर्षदीपिकायां । तथाहि "ध्यानयोगस्यैवास्मिन्नध्याये वर्णनीयत्वेन तत्पक्षे श्लोकस्य सम्यगुपपत्त्या वर्णनीयार्थं श्रौतं विहायाश्रौतार्थवर्णनस्यानुचितत्वात्" इति । साधूक्तमेतत् ॥

**यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।**
**सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥ ४ ॥**

वि० ॥ योगारूढशब्दितसंपूर्णोपायसिद्धिमतो लक्षणमाह ॥ यदेति । यदा हीन्द्रियार्थेषु शब्दादिविषयेषु कर्मसु च प्रयत्नं विनापि नानुषज्जते । ननु कर्माननुषङ्गोनाम कर्मस्वरूपत्यागएव ॥ तथाच नचाक्रियो योगीति प्रागुक्तविरोधइत्यतः कर्मानुषङ्गं स्वयमेव व्याख्याति । सर्वेति । ज्ञानिनः कर्माननुषङ्गो नाम सर्वकर्मसु संकल्पन्यासएव ॥ सर्वेषु कर्मसु संकल्पत्यागी सन् कर्मसु नानुषज्जते यदा तदा योगारूढउच्यते इति योजना ॥ कर्मसु संकल्पत्यागोनाम ममतात्यागएव । संकल्पाख्यक्रियादिकं सर्वं भगवदधीनमिति ज्ञानमेव ॥ एवं च संकल्पादेर्भगवदधीनता ज्ञानेन हेतुना कर्मस्वनासक्तत्वे सत्यप्रयत्नेन शब्दादिविषयेषु अनासक्तत्वं योगारूढस्य लक्षणमित्युक्तं भवति ॥ अप्रयत्नेनेति विशेषणाद्योगमारुरुक्षौ नातिव्याप्तिः । तस्यानासक्तेः प्रयत्नसाध्यत्वात् ॥

शं० ॥ अथेदानीं कदा योगारूढो भवतीत्युच्यते। यदेति ॥ यदा समाधीयमानचित्तो योगी हीन्द्रियार्थेष्विन्द्रियाणामर्थाः शब्दादयस्तेष्विन्द्रियार्थेषु कर्मसु च नित्यनैमित्तिककाम्यप्रतिषिद्धेषु प्रयोजनाभावबुद्ध्या नानुषज्जतेऽनुषङ्गं कर्तव्यताबुद्धिं न करोतीत्यर्थः । सर्वसंकल्पसंन्यासी सर्वान्संकल्पानिहामुत्रार्थकामहेतून्संन्यसितुं शीलमस्येति स सर्वसंकल्पसंन्यासी योगारूढः प्राप्तयोगः इत्येतत्तदा तस्मिन्काले उच्यते ॥ सर्वसंकल्पसंन्यासीति वचनात्सर्वांश्च कामान्सर्वाणि च कर्माणि संन्यसेदित्यर्थः। संकल्पमूलाहि सर्वे कामाः "संकल्पमूलः कामो वै यज्ञाः संकल्पसंभवाः" । "काम जानामि ते मूलं संकल्पात्त्वं हि जायसे ॥ न त्वां संकल्पयिष्यामि तेन मे न भविष्यसि" इत्यादिस्मृतेः । सर्वकामपरित्यागे च सर्वकर्मसंन्यासः सिद्धो भवति ॥ "स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते" इत्यादिश्रुतिभ्यो "यद्यद्धि कुरुते कर्म तत्तत्कामस्य चेष्टितं" इत्यादिस्मृतिभ्यश्च ॥ न्यायाच्च ॥ न हि सर्वसंकल्पसंन्यासे कश्चित्स्पन्दितुमपि शक्तः। तस्मात्सर्वसंकल्पसंन्यासीति वचनात्सर्वान्कामान्सर्वाणि च कर्माणि च त्याजयति भगवान् ॥

रा०॥ यदायं योगीत्वात्मैकानुभघस्वभावतया इन्द्रियार्थेषु आत्मव्यतिरिक्तप्राकृतविषयेषु तत्संबन्धिषु च कर्मसु

नानुषज्जते न सङ्गमर्हति ॥ तदा हि सर्वसंकल्पसंन्यासी योगारूढइत्युच्यते ॥ तस्मादारुरुक्षोर्विषयानुभवाहितया तदननुषङ्गाभ्यासरूपः कर्मयोगएव योगनिष्पत्तिकारणं । अतो विषयाननुषङ्गाभ्यासरूपं कर्मयोगमेवारुरुक्षुः कुर्यात् ॥

विचार

यदा तदा इति प्रयोगमालोक्य कदा योगारूढो भवति इत्येव श्लोकावतारिका साध्वीति परे मन्यन्ते ॥ एवं हि शङ्करभाष्यम् । तथैव मधुसूदनादयः ॥ इदन्तु चिन्त्यं ॥ कालवाचकेनापि पदेन लक्षणाभिधानस्य दृष्टत्वात् ॥ अतएव 'योगारूढस्य लक्षणमाह' इत्याचार्यभाष्यं । एवं श्रीधरोऽप्याह । 'कीदृशोऽसौ योगारूढः यस्य शमः कारणमुच्यते इत्यत्राह' इति ॥ लक्षणवाचित्वे स्वारस्यन्यूनत्वं कालवाचित्वे स्वारस्याधिक्यं मन्वान उत्कर्षदीपिकाकारस्तु उपपत्तिं न प्रथितवान ॥

इन्द्रियार्थान शब्दादीन कर्माणि नित्यनैमित्तिकानि तद्धेतून कामान तन्मूलभूतान्सङ्कल्पांश्च स्वरूपतो यस्त्यजति स तदाऽऽरूढ इति व्यपदिश्यते इति परेषामाशयः । कर्मणां स्वरूपतस्त्याग निरूपयति शङ्करानन्दः । तथाहि ॥ "अधिष्ठानयाथात्म्यसन्दर्शनेनारोपितानां मिथ्यात्वे तेषु शुक्तिरजतवदाभासमात्रेषु तज्ज्ञस्य समीचीनत्वबुद्धयस्सङ्कल्पा न जायन्ते । कामाश्च यन्मूलाः । यतिरिन्द्रियार्थेषु शब्दादिषु कर्मसु च कश्चिद्वासनया कर्तव्यत्वेन प्रतीतेषु स्नानशौचादिकर्मस्वपि नानुषज्जते ॥ भोक्तृभोजनभोज्येषु कर्तृकारणकार्येषु च मिथ्यात्वबुद्धया स्वयमनुषङ्गं आसक्तिं न करोति । अनुषङ्गो नामाहं भुंजेऽहं करोमि इति भोक्तृकर्तृतादात्म्यापत्तिः । तां न करोति ॥ यद्वा प्राक्तनसंस्कारानुरूपा प्रवृत्तिरनुषक्तिस्तां न करोति । प्रवृत्तेः काममूलत्वात्कामस्य संकल्पमूलत्वात्संकल्पानां सर्वेषामप्याश्रयमिथ्यात्वविज्ञानेन संन्यस्तत्वात्

शब्दादिषु कर्मसु चाप्यनुषङ्गाभावो युक्तः। कारणाभावे कार्याभाव इति न्यायात् ।। यद्वा विपरीतप्रत्ययनिरसनपूर्वकं सर्वत्र ब्रह्मदर्शननिष्ठायां प्रवृत्ते ब्रह्मविद्यतिः स्वयं सर्वसङ्कल्पसंन्यासी अधिष्ठानाज्ञानदोषेण शुक्तौ रजतप्रत्ययवन्निर्विशेषे परे ब्रह्मण्यद्वितीये घटः कुड्यमिति भ्रान्त्या सम्यक्कल्प्यन्त इति सङ्कल्पाः विपरीत-प्रत्ययास्तान् सङ्कल्पान् संन्यसितु चिद्वृत्त्या ब्रह्मणि प्रविलापयितुं शीलमस्या-स्तीति सर्वसङ्कल्पसंन्यासी विजातीयप्रत्ययप्रविलापनपरतया सजातीय-प्रत्ययावृत्तिं कुर्वन्नित्यर्थः । * * सर्वस्य स्वस्य च ब्रह्ममात्रत्वाकारप्रत्ययोऽ-प्रतिबद्धो योगस्तत्रारूढेः प्रतितिष्ठित इति कृत्वा योगारूढ इत्युच्यते। स्थित-प्रज्ञोऽयं जीवन्मुक्त इति पण्डितैरन्योन्यं परिभाष्यत इत्यर्थः " इति ॥ अत्रोच्यते ॥ जगतो मिथ्यात्वं पश्यन्प्रवृत्तिहीनो योगारूढ इति ह्यस्याभिसन्धिः । जग-न्मिथ्यात्वस्येहानुपयुक्तत्व द्रष्टव्यम् ।। ब्रह्मैव सत्य जगन्मिथ्या इति यो जा-नाति स स्थितप्रज्ञ. इत्येतावन्मात्रस्य श्लोकार्थत्वे किमिति इन्द्रियार्थकर्म सङ्कल्पादिशब्दानां वस्तुविशेषवाचकानां प्रयोगः कृतः ।। यत्तु सङ्कल्पशब्देन घटादयस्सर्वे पदार्था गृहीतास्तदतीव क्लिष्टं ॥ सर्वमिथ्यात्वप्रत्ययवान् योगारूढ इत्युक्ते तादृशप्रत्ययस्याऽपि मिथ्यात्वात् कथमयं योगारूढस्तं प्रत्ययं न जहाति ॥ इन्द्रियार्थान् कर्माणि च मिथ्यात्वेन जहाति खलु । तेनैव न्यायेन स्वमानसप्रत्ययान् मिथ्यात्वगोचरान् कुतो न जहाति ॥ योगारूढस्य सर्वथास्थितप्रज्ञाभिन्नत्वे द्वितीयाध्यायोक्तस्थितप्रज्ञप्रकरणेनास्य गतार्थत्वं आपद्यते ।। विशेषस्तु नेषदपि सूचितः ।। किंचैते शङ्कराचार्या-नुगाः स्वगुरूदितमप्यनादृत्य यथाकथंचिज्जगन्मिथ्यात्ववादं प्रवेशयन्ति ॥ शङ्करभाष्ये हि कर्मसु प्रयोजनाभावबुध्द्या अननुषङ्गः प्रतिपादितः । सर्व-मिथ्यात्वयुक्तिस्तु नाभिहिता । शिष्यास्तु सर्वामद्वैतप्रक्रियामिह विवक्षिततयाऽ-भिप्रयन्ति ।। संकल्पन्यासकामन्यासकर्मन्यासादीनां जगन्मिथ्यात्वयुक्त्यैव व्युदासे अनुपादेयत्वेन केभ्यश्चिदसत्कर्मभ्यो वैराग्यं शास्त्रे न वक्तव्यमापद्यते ।।

अत एवास्मिन्प्रकरणे योगारूढइत्यस्य (पश्यतानीति श्लोके) वैराग्यं प्राप्तवतः इत्यर्थ उक्तो मधुसूदनेन ॥ एवमेव नीलकण्ठोऽपि योगारूढ इति विरक्तं मनुते। तेन ह्युक्तं "यथा तीव्रबुभुक्षयोपेतोऽन्यत्र नीरागो व्याप्ताकान्तरं त्यक्त्वा भोजनारूढ एव भवति तथा तीव्रमुमुक्षावान सर्वत्र वीतरागस्त्यक्तसर्वकर्मा योगारूढ एव भवति" इति ॥ तथा च नीलकण्ठीये एतच्छ्लोकव्याख्याने जगन्मिथ्यात्वयुक्तिर्न प्रदर्शितेति द्रष्टव्यम् ॥

एवं जगन्मिथ्यात्वयुक्त्या वा निष्प्रयोजनत्वयुक्त्या वा कर्म त्याज्यं इत्यत्राद्वैतव्याख्यातृषु भावभेदेऽपि सर्वमपि कर्म त्याज्यमित्यत्र प्रायशस्तेष्वै-कमत्यमधिगम्यते ॥ उक्तं हि तथा शङ्करभाष्ये ॥ उक्तं च शङ्करानन्देन स्नानशौचादिकमपि त्याज्यमिति ॥ एवमन्यैरपि ॥ एतेषु नीलकण्ठस्तु बाधकं पश्यन्निवाचष्टे "इन्द्रियार्थेषु शब्दादिषु रमणीयेषु कर्मसु च तत्प्राप्ति-साधनेषु" इति। आपातरमणीयविषयसंपादनानुकूलकर्मणामेव कर्मस्वित्यनेन ग्रहणस्यौचित्यमनेन प्रदर्शितमिति द्रष्टव्य ॥

यत्परैर्नित्यनैमित्तिकानां कर्मणां त्याज्यत्वमुक्तं तदनुपपन्नं । अक्रि-यस्य संन्यासित्वयोगित्वनिषेधात् ॥ सर्वकर्मत्यागानौचित्यमुपपादितं च देशिकेन ॥ "कर्मसु इति न चोदितकर्ममात्रविषयं तस्य स्वारसिकसङ्गा-स्पदत्वाभावेन निषेधायोगात् । नापि परोक्तप्रक्रियया‌ग्निहोत्रादिनित्यनैमि-त्तिकविषयं । वैदिकस्य तत्र निस्सङ्गत्वायोगात् । अतः इन्द्रियार्थेषु सङ्गिनां तदुपायभूतेषु विहितेषु निषिद्धेष्वनुभयेषु च कर्मसु यथासंभवं सङ्गस्स्यादिति तन्निषेध एवोचितः" इति ॥ एतेन सर्वक्रियानिषेधपक्षः स्वव्यूहे नीलकण्ठे-नान्यव्यूहे देशिकेनोपेक्षित इति ज्ञायते ॥

एवं परव्याख्यानासामंजस्येसति श्रीमदाचार्याशयः किंचित्प्रपंच्यते ॥ पद्येन योगारूढलक्षणं कथ्यते । योगारूढस्समाधिपरिपाकवान् प्राधान्येन

विवक्षितः । क्वचिदयमपरोक्षज्ञानी स्यात् । क्वचिच्च प्रारब्धेन विलंबितापरोक्षोऽपि स्यात् ॥ अतः अपरोक्षज्ञानं योगारूढस्य लक्षणमित्यनुक्त्वा त्यक्तसङ्कल्पो विषयकर्मणोरनासक्तो योगारूढ इत्युक्तं ॥ कर्मस्वननुषंगस्योक्त्या कर्मस्वरूपत्याग उक्त इति न मन्तव्यं । तथासति अक्रियो न संन्यासी योगीचेत्युक्तिविरोधस्स्यात् । सर्वकर्मत्यागस्यायुक्तत्वादशक्यत्वाच्च ॥ सर्वकर्मस्वरूपत्यागभ्रमो मन्दानां भवेदिति स्वाभिप्रायं वदन्स्वयमेव भगवान्व्याचष्टे "सर्वसंकल्पसंन्यासी" ति । एवं स्वकृतेन व्याख्यानेन संकल्पत्याग एव कर्माननुषङ्गस्स्वाभिप्रेत इत्युक्तं भवति ॥ किंच संकल्पस्यापि स्वरूपतस्त्यागोऽनुपपन्नः । तथासति कर्माण्यपि स्वरूपतस्त्यक्तानि प्रसज्येरन् ॥ 'मयि सर्वाणि कर्माणि संन्यस्ये' त्युक्तिविरोधश्चापद्येत ॥ अतः संकल्पत्यागकर्मत्यागशब्दाभ्यां भगवति समर्पणमेव विवक्षितं ॥ स्वस्वातन्त्र्याभिमानत्यागपूर्वं फलतृष्णात्यागेन कर्म कृत्वा तद्योगी भगवति समर्पयेदिति यावत् ॥ एतेन 'मयिसर्वाणि' इत्युक्तिरनुकूलतयैकवाक्यतां द्रढयति ॥ 'मदधीनमिदं ज्ञात्वा मत्संन्यासीति चोच्यते' इति च प्रमाणमवधेयं ॥

अनुषंगो हि द्विविधः प्रयत्नसाध्यः अप्रयत्नसाध्यश्चेति ॥ अप्रयत्नसाध्ये शब्दो मुख्यः । प्रयत्नसाध्येत्वमुख्यः । अनुपपत्त्यभावे मुख्यस्यैव ग्राह्यत्वादिह तस्य ग्रहणं ॥ तथाचाप्रयत्नेनानुषंगाख्यासक्तिहीनत्वं योगारूढत्वमित्यायातम् ॥ एतेन साधके अतिव्याप्तिशङ्का नोदेति ॥ साधके प्रयत्नसाध्यानुषंगस्यैव विद्यमानत्वात् ॥ "तद्वै जिज्ञासुभिस्साध्यं ज्ञानिनां यत्तु लक्षणं" इत्युक्तेः ॥ अयमर्थो देशिकेनापि किंचित्प्रदर्शितः । यथोक्तं "संगं त्यजति निवर्तयतीत्यादिषु प्रयोगेषु जायमानस्य संगस्य बलान्निवर्तनं प्रतीयते । अत्रतु नानुषज्जत इत्युक्तं ॥ संगस्स्वयमेव न जायते इत्यर्थः" । इति ॥

तथाच संन्यासप्रयोजिका सर्वत्र भगवदधीनताबुद्धिः न तु संकल्पानां वा क्रियाणां वा स्वरूपत्याग इत्याचार्याभिसन्धिः ॥ योजनातु विवृतौ प्रदर्शिता ॥ "सर्वेषु कर्मसु सङ्कल्पत्यागोसिन् कर्मसु नानुषज्जते यदा तदा योगारूढ उच्यते" इति ॥ लक्षणं च विवृत्याचार्येण क्रोडीकृतं द्रष्टव्यम् ॥

**उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ।**
**आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ५ ॥**

वि० ॥ यस्य ध्यानयोगस्य कामादिवर्जनरूपसंन्यासयुक्तस्ववर्णाश्रमोचितकर्मानुष्ठानवानधिकारी उक्तः । अपरोक्षाख्यफलपर्यन्तं कर्मानुष्ठानं चोक्तं । स एव ध्यानयोगोऽभियोगेन कार्यइत्याह । उद्धरेदिति ॥ आत्मना मनसा आत्मानं जीवमुद्धरेत् । पुमर्थभाजनं कुर्यात् । आत्मानं जीवं नावसादयेत् । न क्लेशभाजनं कुर्यात् । कुतः । हि यस्मादात्मनो जीवस्यात्मैव मनएव बन्धुः रिपुश्च भवत्यत इति ॥

यद्वा योगारोहशब्दितयोगसंपूर्तेर्भगवत्प्रसादो मुख्यसाधनमित्याह । उद्धरेदिति । आत्मना परमात्मना । तत्प्रसादेनेति यावत् । आत्मानं जीवं ॥ प्राग्वदेव योजना । आत्मनोजीवस्यात्मैव परमात्मैव बंधुः रिपुश्च हि यतः ॥

शं० यदैवं योगारूढस्तदा तेनात्मात्मनोद्धृतो भवति संसारादनर्थव्रातात् । अतः उद्धरेत्संसारसागरे निमग्नमात्मनात्मानं। तत उदूर्ध्वं हरेदुद्धरेत् योगारूढतामापादयेदित्यर्थः। नात्मानमवसादयेन्नाधो नयेन्नाधो गमयेत्। आत्मैव हि यस्मादात्मनो बन्धुः । न ह्यन्यः कश्चिद्बन्धुर्यः संसारमुक्तये भवति । बन्धुरपि तावन्मोक्षंप्रति प्रतिकूल एव स्नेहादिबन्धनायतनत्वात्तस्माद्युक्तमवधारणमात्मैव ह्यात्मनो बन्धुरिति। आत्मैव रिपुः शत्रुर्योऽन्योऽपकारी बाह्यः शत्रुः सोऽप्यात्मप्रयुक्त एवेति युक्तमेवावधारणमात्मैव रिपुरात्मन इति ॥

रा० तदेवाह ॥ आत्मना मनसा विषयाननुषक्तेन मनसा आत्मानमुद्धरेत् । तद्विपरीतेन मनसा आत्मानं नावसादयेत् । आत्मैव मन एव ह्यात्मनो बन्धुस्तदेवात्मनो रिपुः ॥

विचारः

संसारार्णवमग्नोऽयं जीवइत्यतस्तं उत् ऊर्ध्वं हरेदिति नियोगः ॥ एतेनादरातिशययुतेन शपथाख्याभियोगेन योगारोहलक्षणापरोक्षज्ञानपर्यन्तं ध्यानलक्षणसमाधियोगः कार्यइत्याशयः ॥

संसारार्णवमग्नत्वं तत्रतत्रेतिहासपुराणादिषु प्रसिद्धं । यथोक्तं भारते (शान्ति. अ० ३०) ।

"ततो दुःखोदकं घोरं चिन्ताशोकमहाह्रदम् ।
व्याधिमृत्युमहाग्राहं महाभयमहोरगम् ॥

तमःकूर्मं रजोमीनं प्रज्ञया संतरत्युत ।
स्नेहपंकं जरादुर्गं ज्ञानदीपमरिन्दम ॥

कर्मागाधं सत्यतीरं स्थितव्रतमरिन्दम ।
हिंसाशीघ्रमहावेगं नानारससमाकरम् ॥ ६६ ॥

नानाप्रीतिमहारत्न दुःखज्वरसमीरणम् ।
शोकतृष्णामहावर्त तीक्ष्णव्याधिमहागजं ॥ ६७ ॥

अस्थिसंघातसंघट्टं श्लेष्मफेनमरिन्दम ।
दानमुक्ताकरं घोरं शोणितह्रदविद्रुमम् ॥ ६८ ॥

हसितोत्क्रुष्टनिर्घोषं नानाज्ञानसुदुस्तरम् ।
रोदनाश्रुमलक्षार संगत्यागपरायणम् ॥ ६९ ॥

पुत्रदारजलूकौघं मित्रबान्धवपत्तनम् ।
अहिंसासत्यमर्यादं प्राणत्यागमहोर्मिणम् ॥ ७० ॥

वेदान्तगमनद्वीप सर्वभूतदयोदधि ।
मोक्षदुर्लभविषयं बडवामुखसागरम् " ॥ ७१ ॥ इति

अस्माद्घोरसंसारसमुद्रादुत्तरणं भगवत्प्रसादेनैव भवेदिति तदनुकूलएव गीताश्लोकस्य मुख्यार्थो विज्ञेयः । अयं विवृत्याचार्येण यद्वेत्यादिना उक्तो द्रष्टव्यः ॥ "उद्धरेतैव संसाराज्जीवात्मानं परात्मना । विष्णुर्बन्धुस्सतां नित्यं परात्माह्यसतामरिः । तत्प्रसादजया भक्त्या जितो यस्य वशेत्विह । वर्तते तस्य मित्रं स तदन्यस्य च शत्रुवत्" इति तात्पर्योदाहृतं प्रमाणमत्र परमानुकूलं ॥ अत्रार्थे "परमात्मा समाहितः" इति सप्तमश्लोकगतवाक्य-शेषोऽप्यनुसंन्धेयः ॥

अथवा तृतीयान्तात्मशब्दः मनःपरः ॥ आत्मानं जीवं ॥ पुरुषः विवेकयुतेन मनसा योगारोहाख्योपायेन स्वं उद्धरेत् नत्वधो नयेत् इत्यर्थः । आत्मैव मन एवहि पुरुषस्य बन्धुरुपकारकः । तदेवापकारकश्च ॥ यथोक्तं "मनः परंकारणमामनन्ति ॥" "मनएव मनुष्याणां कारणं बन्धमोक्षयोः" "उद्धरेन्मनसा जीवं न जीवमवसादयेत् । जीवस्य बन्धुश्शत्रुश्च मनएव न संशयः ॥" "जीवेन बुध्या हि यदा मनोजितं तदा बन्धुश्शत्रुरन्यत्र चास्य । ततो जयेद्बुद्धिबलो नरस्तद्देवे च भक्त्या मधुकैटभारौ ॥" इत्यादि ब्रह्मवैवर्ते ॥ इयं स्मृत्यादिप्रसिद्धिः हिशब्देन द्योतिता द्रष्टव्या ॥

आत्मनेत्यत्रात्मशब्दस्य मनःपरत्वं मधुसूदननीलकण्ठवेङ्कटनाथ-रामानुजाचार्यसम्मत ॥

आत्मशब्दस्यानेकार्थत्वेनान्येऽप्यर्थास्सङ्गतास्स्युः । तथाहि । आत्मना पुण्यलब्धेन ब्राह्मणत्वमनुष्यत्वादियुतेन देहेन आत्मानं स्वं जीवं उद्धरेत् ॥ "दुर्लभो मानुषो देहः प्राणिनां क्षणभंगुरः" इत्युक्तेः ॥

यद्वा आत्मना स्वेन आत्मानं स्वं उद्धरेन्न नाशयेत् । स्वस्य स्वयमेव बन्धुर्नान्यः इति । इममेव शाङ्करभावमाहोत्कर्षदीपिकाकृत् ॥ शङ्करभाष्यन्तु आत्मशब्दं न व्याख्याति ॥ पुनःपुनरात्मशब्दप्रयोगस्वारस्यात्स्वं स्वेनैवे-त्याद्यर्थएव समीचीन इत्युत्कर्षदीपिकाकारो मन्यते ॥ इदं उपपादितं शङ्करा-नन्देन ॥ "यथा जिह्वादोषेणापथ्यकारी स्वस्य स्वयमेव शत्रुस्तथा शमा-दिसामग्रीमनालंब्य स्वोद्धरणसाधनभूतब्रह्मयोगनिष्ठायामतिष्ठन्ननाद्यविद्यावास-नावेगाद्विदेहमुक्तिहेतोर्ज्ञानस्य निर्मूलकं बाह्यमेवावलम्बते यतस्ततआत्मनः आत्मैव रिपुर्मारकः नतु बहिरपकर्ता" इति ॥ कश्चिदन्तःकरणं स्वतन्त्र-कर्तारं मन्यमानो व्याचष्टे ॥ "आत्मा पूर्वपूर्वापरिमितजन्मोपार्जितपुण्यपुंज-पूर्णमन्तःकरणं कर्तृ आत्मानं प्रत्यंचं कर्म अन्तःकरणापरपर्यायजडाशय-

निमग्नतया सकलानर्थभाजनतां गतं आत्मना विवेकवैराग्यादिसंपन्नेनोद्धरे- दुक्तजडाशयात्पृथक् कुर्यात् नस्वधर्मैः कर्तृत्वादिभिस्तिरस्कुर्यात् ॥ * * यद्वा आत्मा प्रत्यगात्मान्तर्यामी आत्मना विवेकादिसंपन्नेनान्तःकरणेन कर्तृ- त्वाद्यभिमानकलुषमन्तःकरण उद्धरेत् । कण्टकेनेव कण्टकं दूरेणोत्सादयेत् " इत्यादिना ग्रन्थेन। तदसत् ॥ अन्तःकरणस्य जडस्य स्वतः कर्तृत्वायोगात् ॥ अन्तःकरणं जीवमुद्धरतीति वा जीवोऽन्तःकरणेनान्तःकरणमुद्धरतीति वा व्याख्यानं युक्तिपराहतमागमविरुद्ध च ॥ तस्मात् आत्मनेत्यत्र मनो वा परमात्मान वा आदाय विवृत्युक्तार्थ एव साधुः ॥

**बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः ।**
**अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥ ६ ॥**

वि ॥ कीदृशस्यात्मनः कीदृशं मनो बन्धुः रिपुश्चेत्यत आह । बन्धुरिति । येनात्मना येन जीवेनेति समानाधि- करणं वा । येन जीवेन कर्त्रा आत्मना बुद्ध्या करणेनेति व्यधिकरणं वा ॥ आत्मा मनः जितं वशीकृतं तस्यात्मनो जीवस्यात्मा मनः बन्धुरेवोपकार्येव । भगवद्ध्यानोपयोगीति यावत् । अनात्मनस्तु अजितमनस्कस्य तु जीवस्य आत्मैव मन एव शत्रुवत्प्रसिद्धशत्रुरिव शत्रुत्वे वर्तेत इति मनो- जयेन ध्यानयोगः कार्य इत्युक्तं भवति ॥

यद्वा कीदृशस्य हारिर्बन्धुः रिपुश्चेत्यत आह ॥ बन्धुरिति॥ पूर्ववदेवार्थो योजना च। परन्तु प्रथमान्तात्मशब्दोऽत्र परमा-

त्मपरः। आत्मना बुद्ध्येत्यत्र बुध्द्युपलक्षितभक्त्येत्यर्थः। अनात्मनस्त्वित्यस्य भक्तिबलेनावशीकृतभगवत्स्वरूपस्य पुंस इत्यर्थः॥

शं० आत्मैव बन्धुरात्मैव रिपुरात्मन इत्युक्तं। तत्र किं लक्षण आत्मनो बन्धुः किं लक्षणो वात्मनो रिपुरित्युच्यते। बन्धुरात्मात्मनस्तस्य। तस्यात्मनः स आत्मा बन्धुर्येनात्मनात्मैवजित आत्मा कार्यकरणसंघातो येन जितो वशीकृतः। जितेन्द्रिय इत्यर्थः। अनात्मनस्त्वजितात्मनस्तु शत्रुत्वे शत्रुभावे वर्तेतात्मैव शत्रुवत्। यथानात्मा शत्रुरात्मनोपकारी तथात्मात्मनोऽपकारे वर्तेतेत्यर्थः॥

रा० येन पुरुषेण स्वेनैव स्वमनो विषयेभ्यो जितं तन्मनस्तस्य बन्धुः। अनात्मनः अजितमनसः स्वकीयमेव मनः शत्रुवत् शत्रुत्वे वर्तेत स्वनिश्श्रेयसविपरीते वर्तेतेत्यर्थः। यथोक्तं भगवता पराशरेणापि। 'मन एव मनुष्याणां कारणं बन्धमोक्षयोः। बन्धाय विषयासङ्गि मुक्त्यै निर्विषयं मनः' इति॥

विचारः

कीदृशस्यात्मनः कीदृशं मनो बन्धूरिपुश्च इति विवृत्युक्ता मन्दाशङ्का द्रष्टव्या॥ आत्मैवहीत्युक्तमेवास्मिन्श्लोके प्रपंच्यत इति स्पष्टत्वात्॥

"आत्मनः" इति षष्ठ्यन्तात्मशब्दः जीवपरः। तस्य मनो बन्धुः। अनात्मनः इत्यपि जीवपरः नात्र नञ्समासः। आत्मन आत्मान्यत्वानुप-

पत्तेः । आत्मान्तरादन्यत्वस्य च प्रकृतानुपयोगात् । किन्तु बहुव्रीहिः । नच शंकनीयं आत्मशब्दस्य जीववाचित्वे वा मनोवाचित्वेवा संसारिणि तद्भाव-स्यासंभव इति । अजितात्मनः पुरुषस्येति बहुव्रीह्याश्रयणे बाधकाभावात् । अजितमनस्कस्येत्यर्थः ॥ अविद्यमान आत्मा मनः यस्य सः इति विग्रहः ॥ मनसः अविद्यमानत्व रूढोपचारादुपपद्यते ॥ यथा सत्यपि भृत्ये यद्यसौ न सेवादावुपयुक्तस्तदा स्वामी अभृत्य उच्यते तद्वत् ॥ अनात्मनः आत्मा मनः शत्रुवद्वर्तते । शत्रुकृत्यमिह शत्रुत्वमभिप्रेतम् ॥

प्रथमार्धे प्रथमान्तात्मशब्दौ मनःपरौ ॥ षष्ठ्यन्तो जीवपरः । तृतीयान्तस्तु जीवपरोवा विवेकबुद्धिपरो वा संभवति ॥ येन आत्मना जीवेन कर्त्रा आत्मा जितः इति सामानाधिकरण्येनाद्यपक्षे अन्वयः । येन कर्त्रा आत्मना बुध्याख्यकरणेनात्मा जितः इति चरमपक्षे योजना ॥

आत्मशब्दस्य मनःपरत्वेऽर्थस्वारस्यं रामानुजाचार्यमधुसूदननील-कण्ठश्रीधरवेङ्कटनाथाद्यैरभ्युपगतं ॥ "मनएव मनुष्याणां कारणं बन्ध-मोक्षयोः । बन्धाय विषयासक्तं मुक्त्यै निर्विषयं मनः" वि. पु. ६, ७–२७ इति प्रमाणं व्यक्तम् ॥

आत्मा जितः इत्यत्रात्मशब्देन कार्यकरणसंघातो गृह्यते इति शङ्करा-चार्यशङ्करानन्दयोरभिप्रायः ॥ उपपादितश्शङ्करानन्दीये "कार्यकरणसंघात-जयस्तु तत्प्रवृत्तिप्रतियोगिगुणावष्टंभेन कर्तव्यः । देहप्रवृत्तिर्देहशिरोग्रीवाणां समत्वधारणेन धैर्येण च । प्राणप्रवृत्तिः प्राणायामेन क्षान्त्या च । इन्द्रिय-प्रवृत्तिर्मनःप्रवृत्तिश्च वैराग्येण शान्त्याच । बुद्धिप्रवृत्तिस्सदसद्विवेकविज्ञानेन तीव्रमोक्षेच्छया च ॥ ब्रह्मण्येवात्मभावेनाहंकारप्रवृत्तिर्जेतव्या । एवं कार्य-करणसंघातलक्षणएवात्मा येन वशीकृतो भवति स कार्यकरणसंघातजे-तात्मा पूर्वोक्तस्याहं ममेति संसरिष्णोरात्मनो बन्धुस्तारको भवति" इति ॥

अत्रेदं द्रष्टव्यं । एतेन हि व्याख्यानेन देहप्राणेन्द्रियमनोबुद्ध्यहंकाराः आत्मशब्देन विवक्षिता इत्युक्तं भवति ॥ एतत्तु स्वस्य स्वयं बन्धुः स्वस्य स्वयमेव रिपुः इत्येव वाक्यार्थः सर्वत्र, मनःपरत्वं त्वरम्यमित्युत्कर्षदीपिकाकारादिसमर्थनं विरुणद्धि ॥ क्वचिन्मन आदिसंघातपरत्वे किमपराद्धमन्यत्र ॥ किंच स्वस्य स्वेनैवोद्धार इत्युक्ते एकस्यैवात्मनः कर्तृकरणभावः प्रसज्यते । सतिगत्यन्तरेऽयमनुपपन्नः ॥ स्वोद्धारे पराधीनत्वमसहमाना इवात्मशब्दं स्वार्थपरमाहुरिति ज्ञायते ॥ अन्तःकरणं बन्धुश्शत्रुश्चेत्यादाय अन्तःकरणजयस्य स्ववशवर्तित्वेन स्वस्य स्वोद्धारे स्वतन्त्रत्वसमर्थनेऽनुपपत्तिर्न दृश्यते ॥ एतेन खलु पराधीनत्वावाप्तिर्न प्रसज्यते ॥

किंच जीवस्य स्वोद्धारे स्वातन्त्र्य यदभिप्रेतं तदपि न रम्यम् ॥ अतः श्रीहरिपरत्वं गीतातात्पर्योक्तं रम्यतरं भाति ॥ येन भक्तिज्ञानादिभिः परमात्मा वशीकृतस्तस्य स बन्धुः इतरस्यासौ अरिः इत्यर्थो निरवद्यः । अयमर्थो भगवदुत्कर्षमाविष्करोतीति समीचीनश्च ॥

आत्मस्वातन्त्र्यं समर्थयमानः कश्चित् (बालगंगाधरतिलकः पुट २७६ गीतारहस्ये) शान्तिपर्वगतं "स्वतन्त्रश्च स्वतन्त्रेण स्वतन्त्रत्वमवाप्नुते" इति वाक्यं स्वार्थसाधकं मनुते ॥ इदं न प्रत्याययति ॥ एवं खलु प्रकरणगतानि पद्यानि (शान्तिपर्वणि पुट ५१० कुंभघोणमुद्रितमहाभारते)

"सोयमेवं विमुच्येत नान्यथेति विनिश्चयः ।
परेण परधर्माच भवत्येष समेत्य वै ॥ २६ ॥

विशुद्धधर्मा शुद्धेन बुद्धेनच स बुद्धिमान् ।
विमुक्तधर्मा मुक्तेन समेत्य पुरुषर्षभ ॥ २७ ॥

वियोगधर्मिणाचैव वियोगात्मा भवत्यथ ।
विमोक्षिणा विमोक्षश्च समेत्येह तथाभवेत् ॥ २८ ॥

शुद्धधर्मा शुचिश्चैव भवत्यमितदीप्तिमान् ।
विमलात्माच भवति समेत्य विमलात्मना ॥ २९ ॥

केवलात्मा तथाचैव केवलेन समेत्य वै ।
स्वतन्त्रश्च स्वतन्त्रेण स्वतन्त्रत्वमवाप्नुते ॥ ३० ॥ इति ॥

एतैर्भारतवाक्यैः परमात्मानमप्यनालभ्य जीवस्स्वयं स्वातन्त्र्येण स्वमुद्धरेदित्यर्थो न लभ्यते ॥ प्रत्युत शुद्धबुद्धमुक्तस्वभावत्वेन यः परमात्मानमुपास्ते स तत्साहाय्येनोद्धृतो भवतीत्येवाशयोऽधिगम्यते । 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहं' इत्याद्युक्तन्यायेनैतत्संभवति ॥ किंच पठितभारतवचनानां प्राक्तनप्रकरणे तावद्विस्तरेण मुक्तिस्वरूपं श्रीनारायणप्रसादजं निरूपितं दृश्यते ॥ तत्र जीवस्वातन्त्र्यं सम्यङ्निरस्य श्रीहरेरेव मुक्तिप्रदत्वमुपपादितं (पश्यत पु० 498—499 )तथाहि । प्रथमं संसारसमुद्रवर्णनं 'ततो दुःखोदकं घोरं' इत्यारभ्य तत्तरणनिरूपणावसरे कथितं ॥

"सत्वं वहति शुद्धात्मा परं नारायणं प्रभुं ।
प्रभुर्वहति शुद्धात्मा परमात्मानमात्मना ॥ ५७ ॥

परमात्मानमासाद्य तद्भूतायतयोमलाः ।
अमृतत्वाय कल्पन्ते न निवर्तन्ति वा विभो ॥

परमा सा गतिः पार्थ निर्द्वन्द्वानां महात्मनां ।

*  *  *

परं नारायणं देवं निर्द्वन्द्वं प्रकृतेः परम् ॥ ९६ ॥

विमुक्तः सर्वपापेभ्यः प्रविष्टस्तमनामयम् । इत्यादि ॥

अस्मिन्नेव प्रकरणे मुक्तानां अतीतावस्थास्मरणादिकं वर्तते वा न वेत्यपि विचार्य वर्तते इति समाहितं दृश्यते ॥ यथोक्तं (इन्द्रियाणिप्रति-

"करणान्यात्मनस्तानि सूक्ष्मः पश्यति तैस्तु सः ।
आत्मना विप्रहीणानि काष्ठकुड्यसमानि तु ।
विनश्यन्ति न सन्देहः फेना इव महार्णवे ॥

* * *

आत्मा च याति क्षेत्रज्ञं कर्मणी च शुभाशुभे ।
शिष्या इव महात्मानमिन्द्रियाणि च तं प्रभो" ॥ ९५ ॥ इति

एतेन जीवस्येन्द्रियस्वामिता परमात्मप्रसादात्तद्गमनाख्यमुक्तिप्राप्तिश्च व्यक्तं निरूपिता द्रष्टव्या ॥

**जितात्मनः प्रशान्तस्य परमात्मा समाहितः ।**
**शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥ ७ ॥**

वि० ॥ ननु मनसो भगवतश्च वशीकरणे तावस्य बन्धू भवतइत्युक्तं । केनोपकारेण तावस्य बन्धू। आत्मना आत्मानमुद्धरेदिति आत्मोद्धारं कुरुत इत्युक्तमिति चेत्स एव क इत्यत आह ॥ जितेति। जितात्मनः वशीकृतमनस्कस्य भक्त्या वशीकृतभगवत्स्वरूपस्य च प्रशान्तिर्भवति ॥ स्वत एव मनसो विषयेष्वप्रवृत्तिर्भवतीत्यर्थः ॥ प्रशान्तस्य च परमात्मा सम्यगाहितो हृदिसन्निहितो भवति॥ ध्यानविषयो भूत्वाऽपरोक्षविषयो भवतीत्यर्थः ॥ संपूर्णयोगसिद्धिमद्रूपो योगारूढो भवतीति यावत् ॥

शं० ॥ जितात्मन इति । जितात्मनः कार्यकरणादि संघात आत्मा जितो येन स जितात्मा तस्य जितात्मनः। प्रशान्तस्य प्रसन्नान्तःकरणस्य सतः संन्यासिनः परमात्मा समाहितः । साक्षादात्मभावेन वर्तत इत्यर्थः ॥ किंच शीतोष्णसुखदुःखेषु तथा मानेऽपमाने च मानापमानयोः पूजापरिभवयोः समः ॥

रा० ॥ शीतोष्णसुखदुःखेषु मानापमानयोश्च जितात्मनः जितमनसः विकाररहितमनसः प्रशान्तस्य मनसि परमात्मा समाहितः सम्यगाहितः स्वरूपेणावस्थितः प्रत्यगात्मात्र परमात्मेत्युच्यते । तस्यैव प्रकृतत्वात् । तस्यापि पूर्वपूर्वावस्थापेक्षया परमात्मत्वात् । आत्मा परं समाहित इति वान्वयः ॥

विचारः

अत्र "शीतोष्णसुखदुःखेष्वि"त्यर्धस्योत्तरश्लोकगतेन 'कूटस्थ' इत्यनेनान्वयः ॥ अतोऽयमर्धश्लोकोऽत्र न व्याख्यायते ॥

आत्मसहायेनोद्धार उक्तः । आत्मा बन्धुरित्युक्तं ॥ बन्धुत्वं कथं घटते इत्याकांक्षायां उद्धाराख्योपकारसंपादकत्वेनेति वक्तव्यं ॥ उद्धारः कीदृश इत्याक्षेपे प्रशान्तिद्वारा योगारूढत्व संपादयतीत्युद्धारप्रकारो ज्ञेय इत्यभिप्रायेण प्रवृत्तो "जितात्मन" इति श्लोकः ॥ उपकारकस्त्वात्मा मनो वा भगवान् वा ॥ निग्रहेण मनो जेतव्यं—भक्त्यादिना भगवान्वशीकरणीय इति भेदो न विस्मर्तव्यः

अत्र जितात्मा प्रशान्तो भवति इत्येकं वाक्यं । प्रशान्तस्य जितात्मनः परमात्मा समाहितः इत्यपरं वाक्यं । एवं वाक्यभेदोपादानेन प्रशान्तिरात्मजयफलं इत्यर्थो लभ्यते ॥ परमफलन्तु समाहितपरमात्मत्वं इति ज्ञेयम् ॥

ननु प्रशान्तत्वं हि विषयविरक्तिः । जितमनस्कत्व च सैवेति कथं हेतुहेतुमद्भाव इति चेन्न । जितमनस्कत्वं नाम यत्नेन विषयवैमुख्य प्रशान्तत्वं त्वनायासेनेति विशेषात् ॥

'परमात्मा समाहितः' इत्यत्रार्थबाहुल्यं दृश्यते । परमात्मा भगवान्श्रीहरिः हृदि सम्यगाहितः सन्निहितः इत्याचार्याशयः ॥ तथाच योगारूढो भवतीति वाऽपरोक्षज्ञानी भवतीति वावगम्यते ॥ अपरोक्षज्ञानयोगारूढत्वयोरनतिविप्रकर्षादन्यतरस्य फलत्वेन विवक्षायामितरस्य सङ्ग्रहस्सुगमः ॥

परमात्मशब्दस्य भगवत्परत्वमसहमानाः परे अन्यथाव्याचक्षते ॥ तथाहि ॥

१. "प्रत्यगात्मात्र परमात्मेत्युच्यते । तस्यैव प्रकृतत्वात् । तस्यापि पूर्वपूर्वावस्थापेक्षया परमात्मत्वात्" इति रामानुजाचार्यभाष्यम् ॥ इदमसत् । जीवस्य परमात्मत्वेन व्यपदेशायोगात् ॥ जीवस्यैव प्रकृतत्वं भगवतोऽप्रकृतत्वं यदभिप्रेतं तदयुक्तं ॥ ध्यानयोगप्रकरणे भगवतः प्राधान्येन प्रकृतत्वात् ॥ पूर्वावस्थापेक्षया जितात्मनः परमत्वं इत्यर्थे रुच्यभावो देशिकेनैव प्रदर्शितः॥ 'परमात्मशब्दस्य प्रसिद्धार्थः परित्यक्तस्स्यात् ॥ परत्वं च संकुचितं । परमशब्दनिर्वचनं च न घटते, परो मा अस्मादिति हि तत् ॥ न च पूर्वपूर्वावस्थापेक्षया परो मा अस्मादित्यन्वयस्सिध्यतीत्यरुचिः' इति ॥ जीवो मनसि स्वरूपेणावस्थित इत्यर्थे स्वारस्यमपि न दृश्यते ॥ भगवदुत्कर्षावहे प्रसिद्धार्थे अबाधिते सति तं विहाय क्लिष्टार्थानुसरणं परमानुचितं भाति ॥

२. उक्तव्याख्यानेऽरुच्या स्वयमेव रामानुजाचार्योऽन्यथापि व्याचष्टे— 'आत्मा परं समाहितः इति वान्वयः' इति । अत्र परमिति क्रियाविशेषणं भाति । प्रशान्तस्यातिशयेनात्मसमाधिरित्यर्थः । इममर्थं नीलकण्ठोऽपि स्वीकरोति ॥ अयं निरस्त उत्कर्षदीपिकायाम् ॥

३. केचित् 'पर'मित्यस्य प्रशान्तस्येत्यनेनान्वयं मत्वा प्रशान्तस्य केवलं नान्यस्येति व्याचक्षते (यथा देशिकमधुसूदनौ) ॥ सर्वं वाक्यं सावधारणमिति न्यायेनैवान्ययोगव्यवच्छेदस्य प्रशान्तस्येति पदादेव लभ्यमानत्वात्परशब्दस्यावधारणार्थकत्वं नीरसम् ॥

४. "परमात्मा परब्रह्म विपरीतप्रत्ययनिर्मुक्तो भूत्वा बहिरन्तस्सर्वत्र चक्षुषो रूपमिव बुद्धिवृत्तेः स्वयमेव विषयो भवती"ति व्याख्यातं शंकरानन्देन ॥ "साक्षादात्मभावेन वर्तते" इति शंकरभाष्यम् ॥ कार्यकरणसंघातं जित्वा आत्मशब्दितो जीवः परमात्मा वर्तते इत्यद्वैतव्याख्यात्राशयः ॥ एतद्दार्ढ्याय तिलको मोक्षधर्मवचनं वक्ष्यमाणं प्रमाणयति। यथोक्त (शा०अ० 187—23).

"आत्मा क्षेत्रज्ञइत्युक्तः संयुक्तः प्राकृतैर्गुणैः । तैरेव तु विनिर्मुक्तः परमात्मेत्युदाहृतः" इति। अत्रोच्यते ॥ "परमात्मा समाहित"इत्यस्य ब्रह्मतयावतिष्ठते इत्यर्थो न भवितुमर्हति शब्दार्थः । अतएव हि नीलकण्ठमधुसूदनाभ्यां 'परं' 'आत्मा' इति पदच्छेदाश्रयणेनान्यथा व्याख्यातमवगम्यते ॥ यत्तु शान्तिपर्ववाक्यमुदाहृतं तत्रेदं वक्तव्यं ॥

१. उदाहृतं पद्यं क्वचिद्भारतपुस्तकेषु न दृष्टं इति कुंभघोणस्थैर्मुद्रितपुस्तके चिन्हविशेषेण ज्ञायते ॥

(२) किंच 'क्षेत्रज्ञ' शब्दो हि तत्र प्रकरणे भगवत्परः न तु जीवपरः । तदव्यवहितानन्तराणि वचनानि हि 'आत्मानं तं विजानीहि सर्व-

लोकहितात्मकं । तस्मिन्यः संश्रितो देहे ह्यब्बिन्दुरिवपुष्करे २४ । क्षेत्रज्ञं तं विजानीहि नित्यं लोकाहितात्मकं । तमो रजश्च सत्वंच विद्धि जीवगुणानिमान् ।' इत्यादीनि ॥ सर्वलोकहितात्मकत्वादीनि कथं जीवे घटन्ते ॥ गीतायां क्षेत्र-क्षेत्रज्ञविभागाध्याये (त्रयोदशे) चोक्तं ॥ "क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत" इति ॥ तस्मात्परमात्मशब्दः परमेश्वराभिन्नश्रीनारायणपर इत्यभ्यु-पगन्तव्यं ॥ श्रीधरोऽपीममर्थं गृहीतवान् ॥ यथोक्तं ॥ "यद्वा तस्य हृदि परमात्मा समाहितः स्थितो भवति" इति ॥ एवं वेङ्कटनाथेनाप्युक्तं "यद्वा परमात्मेत्येकं पदं । परमेश्वर एतादृशस्य समाधिविषयो भवतीत्यर्थः" इति ॥

द्वितीयार्धस्यान्वयमजानानाः परे बहुधा तत्र योजयन्ति ॥ तथाहि ॥

(१) शीतोष्णसुखदुःखेषु मानापमानयोश्च जितात्मनः इति रामा-नुजाचार्ययोजना ॥ एवं मनोजयस्य शीतोष्णादिष्विति संकोचे निमित्तं न ज्ञायते । अर्थस्वारस्यं च दुर्गमम् ॥ नीलकण्ठमधुसूदनौ त्विदं रामानुजाचार्य-व्याख्यानमनुमोदेते ॥

(२) द्वितीयार्धसप्तमीप्रयोगयोरनन्वयभयेन समइत्यध्याहृत्य व्या-ख्यातं शङ्कराचार्येण ॥ उत्कर्षदीपिकाकारश्च समइत्यस्याध्याहारमनुमोदते ॥ अत्रेदं चिन्त्यं । समनन्तरश्लोकस्थ 'कूटस्थ' शब्देन योजने सामञ्जस्यस्य व्यक्तत्वादध्याहारक्लेशोऽनुपपन्न इति ॥

(३) अभिनवगुप्ताचार्यस्तु भास्करानतुसृत्य संप्रदायागतं "परमात्मा समाहितः" इति पाठमेव परित्यज्य 'परात्मसु समामतिः' इति पठित्वा प्रशान्तो निरहकारः परेष्वात्मानि शीतोष्णादिषु चाभेदधीः" इति व्याकरो-ति ॥ अत्रोच्यते ॥ सर्वाङ्गीकृतपाठपरित्यागो न न्याय्यः ॥ अस्मिन्कृत्रिमे पाठे 'सुहृन्मित्रार्युदासीने'त्यादिकं पुनरुक्तं प्रसज्यते ॥ अतो द्वितीयार्धस्यो-त्तरश्लोकद्वयेनान्वये सर्वं निरवद्यं भवतीत्यवधेयम् ॥

**ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः।**
**युक्त इत्युच्यते योगी समलोष्टाश्मकांचनः॥ ८॥**

वि० ॥ यदा हि नेन्द्रियार्थेष्वित्यत्रापरोक्षिणो लक्षणोक्तावपीह लक्षणं स्पष्टयति शीतोष्णेत्यादिसार्धश्लोकद्वयेन। शीतोष्णादिद्वंद्वधर्मेषु कूटस्थः कूटमाकाशं तद्वत्तिष्ठतीति कूटस्थः। उत्सेकानुत्सेकरूपविकाररहीन इत्यर्थः। तत्र हेतुर्ज्ञानेत्यादि। वेदादौ सर्वत्र विष्णोरुत्कर्षज्ञानं ज्ञानमित्युच्यते॥ तदवान्तरमाहात्म्यविशेषज्ञानं विज्ञानमित्युच्यते॥ यद्वा परोक्षापरोक्षज्ञाने ज्ञानविज्ञानशब्दाभ्यां वाच्ये। ताभ्यां तृप्तो विषयेष्वलंबुद्धिमान्विजितेन्द्रियश्च यतोऽतः कूटस्थः समलोष्टाश्मकांचनः योगी योगं कुर्वन् युक्तः योगसंपूर्ण इत्युच्यते॥

शं॥ ज्ञानेति। ज्ञानविज्ञानतृप्तात्मा ज्ञानं शास्त्रोक्तपदार्थानां परिज्ञानं विज्ञानन्तु शास्त्रतो ज्ञातानां तथैव स्वानुभवकरणं॥ ताभ्यां ज्ञानविज्ञानाभ्यां तृप्तः सञ्जातालंप्रत्ययः आत्मान्तःकरणं यस्य स ज्ञानाविज्ञानतृप्तात्मा॥ कूटस्थोऽप्रकंप्यो भवतीत्यर्थः। विजितेन्द्रियश्च। य ईदृशो युक्तस्समाहित इति स उच्यते कथ्यते। स योगी समलोष्टाश्मकाञ्चनो लोष्टाश्मकाञ्चनानि समानि यस्य स समलोष्टाश्मकाञ्चनः॥

रा० ॥ ज्ञानविज्ञानतृप्तात्मा—आत्मस्वरूपविषयेण ज्ञानेन तस्य च प्रकृतिविसजातीयाकारविषयेण विज्ञानेन च तृप्तमनाः कूटस्थः देवाद्यवस्थास्वनुवर्तमानसर्वसाधारणज्ञानैकाकारात्मनि स्थितः तत एव विजितेन्द्रियः समलोष्टाश्मकाञ्चनः प्रकृतिविविक्तस्वरूपनिष्ठतया प्राकृतवस्तुविशेषेषु भोग्यत्वाभावाल्लोष्टाश्मकाञ्चनेषु समप्रयोजनो यः कर्मयोगी सयुक्त इत्युच्यते ॥ आत्मावलोकनरूपयोगाभ्यासार्ह इत्युच्यते ॥

विचारः

शीतोष्णसुखदुःखेषु मानापमानयोश्च कूटस्थ इत्यन्वयः ॥ शीतोष्णसुखदुःखमानापमानशब्दाः स्पष्टार्थाः ॥ उपपादिताश्च शंकरानन्देन ॥ 'मानः स्तुतिपूजोपचारादिः । अपमानस्तु निन्दातिरस्कारादिः । शीतोष्णेत्याधिभौतिकानामाधिदैविकानां चोपलक्षणं । सुखदुःखेत्याध्यात्मिकानामुपलक्षणं । शीतोष्णव्याघ्रसर्पादावग्न्यादिषु वृष्ट्यशन्यादिषु च ज्वरादिषु मिष्टान्नादिषु प्राप्तेषु सत्स्वपि ब्रह्मवित्समदर्शन एव भवति' इति ॥

कूटवत्स्थितः कूटस्थः । कूटमाकाशः । 'कूटं खं विदलं व्योम सन्धिराकाश उच्यते ।' इत्यभिधानं ॥ प्रथमान्तात्कूटशब्दाद्वृत्तिः ॥ कूटशब्दे उपपदे स्थाधातोः क प्रत्ययः ॥ ननु आतोनुपसर्गे क इति सूत्रेणादन्ताद्धातोः कर्मण्युपपदेसति कप्रत्ययविधानात् प्रकृते तु कूटशब्दस्य प्रथमान्तोपपदत्वेन कथं कप्रत्ययः इति चेन्न ॥ सुपिस्थ इति पाणिनिवचनात्कप्रत्ययोपपत्तेः । सुबन्ते उपपदे ष्ठाधातोः कःप्रत्ययस्स्यादिति पाणिनिवचनार्थः । कूटस्थः । निर्विकारोऽप्रकंप्य इत्यर्थः ॥ द्वन्द्वसहिष्णुरिति यावत् ॥

यद्यपि “कूटं यन्त्रेऽनृते राशौ निश्चले लोहमुद्गरे। मायाद्रिशृङ्गयोस्तुच्छे सीरावयवदण्डयोः। पुरद्वारे च शंसन्ति” इति कोशात्कूटशब्दोऽनृतादिवाची॥ प्रकृते तु आकाशवाचितयोदाहृताभिधानाद्यन्वाद्यर्थत्वस्यानुपयुक्तत्वाच्च यथोक्तं व्याख्यात द्रष्टव्यम्॥

कूटशब्दोऽत्र परिशुद्धात्मन्युपचरितः इति देशिकव्याख्यानं। “कूटे तिष्ठतीति कूटस्थः। कूटस्य ह्यागन्तुकाविनश्वरायःपिण्डादिसंश्लेषाविश्लेषरूपावस्थाप्रवाहे वर्तमानेऽपि स्वस्वरूपे न शैथिल्यादिरूपो विकारः, तद्वदत्रापि देवादिशरीरसंश्लेषविश्लेषरूपावस्थाप्रवाहेऽपि ‘न जायते म्रियते’ इत्यादिनोक्तप्रकारेण निर्विकारत्वं सिद्धमिति कूटशब्देनोपचारो युज्यते” इति तद्वाक्यं॥ अत्र वक्तव्यं॥ जीवस्य जननमरणादिविकारशून्यत्वस्येह सङ्गतिर्दुर्घटा॥ सर्वोऽप्यात्माहि जनिमृतिशून्यत्वेन कूटस्थएव॥ एतादृशं कूटस्थत्वमिह योगप्रकरणे ह्यनुपयुक्तं। द्वन्द्वसहनाख्यस्य निर्विकारत्वस्यैवेह सङ्गतत्वात्॥ किंच कूटशब्दस्य परिशुद्धात्मन्युपचारो गौणः। गौणाश्रये स्वारस्यं प्रयोजनं वा न ज्ञायते॥ जनिमृत्यपेक्षयोपचरितप्रयोगत्वेऽस्वरसादिव “शिखरपर्यायकूटविवक्षयावोपचारः” इत्युक्तं देशिकेन॥ अत्राप्युपचारो न सुरसः॥ तस्माच्छीतोष्णादिविषयसन्निधावप्याकाशवन्निर्विकारित्वं विवक्षितं इत्येव रम्यं भाति॥

शीतोष्णादिषु सत्सु विकाराभावेन ज्ञानिनः कूटस्थत्व श्रुतिस्मृतिप्रसिद्धं॥ तथाहि श्रुतिः॥ “महत्पदं ज्ञात्वा वृक्षमूले वसेत्। कुचैलोऽसहायएकाकी समाधिस्थ आत्मकाम आप्तकामो निष्कामो जीर्णकामो व्याघ्रे हस्तिनि सिंहे दंशे मशके नकुले सर्पे यक्षे राक्षसे गन्धर्वे मृत्योरूपाणि विदित्वा न बिभेति कुतश्चिनेति” इति॥ “वृक्ष इव तिष्ठासेच्छिद्यमानो न कुप्येत न कम्पेत। उपलइव तिष्ठासेच्छिद्यमानो न कुप्येत न कम्पेत। आकाशमिव तिष्ठासेच्छिद्यमानो न कुप्येत न कम्पेत। सत्येन तिष्ठासेत्” इतिच॥

कूटस्थत्वे ज्ञानविज्ञानतृप्तात्मत्वं विजितेन्द्रियत्वं च हेतुः ॥ ज्ञानविज्ञानतृप्तान्तःकरणएव विजितेन्द्रियस्सन् समलोष्टाश्मकांचनो भूत्वा शीतोष्णादिषु कूटस्थः इति पर्वक्रमो विज्ञेयः ॥ पाषाणार्थकाश्मशब्देन सामान्यवाचिना तद्विशेषावज्रवैडूर्यादयोऽपि गृह्यन्ते (उ० दी० ) ॥

ज्ञानविज्ञानतृप्तात्मेत्यत्र ज्ञानविज्ञानशब्दयोः प्रतिपाद्यभेदोऽनुसन्धेयः ॥ श्रवणमननजन्यं औपदेशिकं परोक्षज्ञानं ज्ञानशब्देनोक्तं । अपरोक्षज्ञानं विज्ञानशब्देनेति व्याख्यात्राशयः ॥ अभिनवगुप्तचार्यस्तु 'अभ्रान्ताबुद्धिर्ज्ञानं । विविधं ज्ञानं यत्र तद्विज्ञान प्राग्युक्त्युदितं कर्म' इति व्याख्यातवान् ॥ तथाच ज्ञानविज्ञानतृप्त इत्यनेन ज्ञानकर्मभ्यां तृप्त इत्युक्तं भवति ॥ इदमसारं । कर्मणातृप्तिप्रकारस्य दुर्ज्ञेयत्वादनिरूपितत्वाच्च ॥ रामानुजाचार्योऽपि ज्ञानविज्ञानशब्दावन्यथाव्याचष्टे ॥ इयमत्र देशिकोक्तिः 'पारलौकिकसमस्तकर्मापेक्षितदेहादिव्यतिरिक्तत्वधीरिह ज्ञानं । मोक्षाधिकारिणो विशेषतोऽपेक्षितनित्यत्वनिरतिशयानन्दत्वादिधीस्तु विज्ञानं । न पुनरुपासनरूपज्ञान । तत्सामग्रीपरत्वाद्वाक्यस्य' इति ॥ तथाच यस्स्वर्गाद्यर्थी केवलं चार्वाकं तिरस्कृत्य जीवं देहाद्भिन्नं मन्यते सोऽत्र ज्ञानीति विवक्षितः । मुमुक्षुस्तु य आत्मानं न केवलं भिन्नं किन्तु मोक्षानुबन्धिगुणगणविशिष्टं जीवं जानाति स विज्ञानीत्याशय उक्तो भवति ॥ देहात्मविवेकस्यैव विजितेन्द्रियत्वे समलोष्टाश्मकाञ्चनत्वे च हेतुत्वमभिप्रैति रामानुजाचार्यः ॥ इदमसारं ॥ देहात्मविवेकस्येहाप्रसक्तत्वात् । स्वर्गार्थिमुमुक्ष्वोरेवं वैलक्षण्यस्याप्रसिद्धेरनुक्तत्वाच्च गीतायाम् ॥

किंच केवलं देहात्मविवेकस्योत्कृष्टवैराग्यसंपादकत्वं दुर्गमं ॥ स्वर्गाद्यर्थिनो ज्ञानित्वेनेह विवक्षायां काम्यकर्मी योगारूढः प्रसज्येत ॥ कथमेतत्स्यात् । तस्य हि ज्ञानतृप्तेत्युक्तस्य विजितेन्द्रियत्वं समलोष्टाश्मकाञ्चनत्वं

युक्तत्वं च श्लोके प्रतिपादितम् ॥ यामिमामित्यादिना निन्दितस्य किवेयं स्तुती रामानुजाचार्यस्येष्टा ? ॥

ज्ञानं सामान्यज्ञानं विज्ञानं विशेषज्ञानं इत्यर्थस्तु निर्दुष्टः ॥ देहात्म-विषयमेव ज्ञानं विज्ञानं च विवक्षितमित्यत्र गमकं प्रमाणं वा नोक्तं रामानु-जाचार्यदेशिकाभ्याम् ॥

सामान्यविशेषभेदेन ज्ञानविज्ञानशब्दयोरर्थमादाय विष्णोरुत्कर्षविषये तौ विनियोजयति श्रीमध्वः ॥ उदाहृतानि च स्वार्थे प्रमाणानि श्रीमध्वेन ॥ तथाहि "सामान्यैर्येत्वविज्ञेया विशेषा मम गोचराः । देवादीनां तु तज्ज्ञानं विज्ञानमिति कीर्तितं" इति ॥

किंच "श्रवणान्मननाच्चैव यज्ज्ञानमुपजायते ॥ तज्ज्ञानं दर्शनं विष्णो-र्विज्ञान शंभुरब्रवीत्"॥ इतिच ॥ "विज्ञानं ज्ञानमङ्गादेर्विशिष्टं दर्शनं तथा" इति च ॥ तथाचैतैः प्रमाणैः विष्णोरुत्कर्षज्ञानं सामान्याकारं ज्ञानमित्यु-च्यते । विशेषाकारेण वैष्णवदर्शन विज्ञानमभिप्रेतं इत्युक्तं भवति ॥ परोक्षा-परोक्षविविक्षयापि भेदःप्रमितः इत्याचार्याभिसन्धिः ॥

युक्तइत्युच्यते योगीति गीतोक्तौ निष्ठाप्रत्ययेनिप्रत्ययद्योतितकालभे-दालोचने कथमत्र विरोधः परिहरणीय इति विचार्यम् ॥

"योगी योगं कुर्वन् । युक्तः योगसपूर्णः । एवंभूतो योगानुष्ठाता योगसंपूर्ण उच्यते" इत्याचार्यभाष्यं ॥ अनेन भाष्येण कथं क्तप्रत्ययार्थे निप्रत्ययार्थयोर्विरोधः परिहृतः इति शङ्कायां 'धातुसंबन्धेप्रत्ययाः' इति पाणिनिवचनादुत्तरितं प्रमेयदीपिकायां ॥ भावमाह श्रीनिवासाचार्यः ॥ तथाहि ॥ "एकस्यैव धात्वर्थसंबन्धमात्र एव विरुद्धार्थकप्रत्ययाधातोर्भवन्ति । नतु तत्प्रत्ययार्थसमानकालतापि विवक्षिता ॥ अतएव महाभाष्ये सोमयाज्यस्य पुत्रो भवितेत्युदाहृतं ॥ तत्र यथा वर्तमानत्वभविष्यत्त्वार्थकयोरिनिलुट्प्रत्यय-

योरेककालीनत्वाभावेऽपि धात्वर्थसंबन्धमात्रेण तयोरुत्पत्तिमङ्गीकृत्य सोमयाजी भवितेति सामानाधिकरण्येन विशेषणविशेष्यभावः एवमिहापि योगी युक्तइतीनिप्रत्ययक्तप्रत्ययार्थयोर्वर्तमानत्वातीतत्वयोरेककालीनत्वाभावेऽपि धात्वर्थसंबन्धमात्रेण तयोरुत्पत्तिमङ्गीकृत्य योगी युक्त इत्येतयोः सामानाधिकरण्येन विशेषणविशेष्यभाव उपपद्यतइति भावः ॥ तथाच प्रत्ययार्थो न विवक्षित इति हृदयं" ॥ इति ॥ एवं माघ प्रयोगो "वसन्ददर्श" इति ॥

योगीति परमहंसपरिव्राजको बोध्यत इति मधुसूदनः ॥ आश्रमस्यात्र विवक्षा न शब्दगम्या भाति ॥

## सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु
## साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ९ ॥

वि० ॥ स एव च सुहृदादिषु समा भगवद्विषयिणी बुद्धिर्यस्य समबुद्धिर्योगारूढः योगिवर्गात्सर्वस्माद्विशिष्यत इति ॥ सुहृदादिषु सर्वत्रस्थितहरिरूपाणां गुणादिषु तारतम्यं नेतिबुद्धिर्वा सुहृदि सुहृत्त्वमेव मित्रादिषु मित्रत्वादिकमेव ददाति नतु सुहृदि मित्रत्वं मित्रादौ सुहृत्वादिकमिति वैषम्येणातः सुहृदादौ सुहृत्त्वादिकमीशकृतमेव न स्वतन्त्रमिति वा भगवद्विषये समबुद्धिः । यद्वा सुहृदादिजीवविषये समाबुद्धिर्यस्येत्यर्थः । तेषु समबुद्धित्वं नाम यत्सुहृत्त्वमित्रत्वादिकमस्ति तन्नस्वरूपान्तर्गतं किंत्वन्तःकरणोपाधिकमेव देवदानवमानवभेदेन स्वतो विषमाणां चैतन्यस्व-

भावत्वमेकमेव सममिति बुद्धिमत्त्वमेवेति ज्ञेयं । अथवा सुहृदादिषु विषये शास्त्रेषु यथायथावृत्तिर्विहिता तथातथा वर्तनं वर्तनज्ञानं वा सुहृदादिजीवेषु समबुद्धिर्ध्येया ॥ प्रत्युपाकारानिरपेक्षोपकारकृत् सुहृत् । क्लेशस्थानं विज्ञाप्य ततोरक्षाकृन्मित्रं । वधादिकर्ताऽरिः । कर्तव्ये उपकारे अपकारे च य उदास्ते स उदासीनः । उपकारापकारोभयकृन्मध्यस्थः । अवांछितकृद्द्वेष्यः । बन्धुरुपकर्ता ॥

शं ॥ किंच सुहृदित्यादिश्लोकार्धमेकं पदं । सुहृदिति प्रत्युपकारमनपेक्ष्योपकर्ता, मित्रं स्नेहवान् । अरिः शत्रुः । उदासीनो न कस्यचित्पक्षं भजते । मध्यस्थो यो विरुद्धयोरुभयोर्हितैषी । द्वेष्यआत्मनोऽप्रियः । बन्धुः संबन्धीत्येतेषु साधुषु शास्त्रानुवर्तिष्वपि च पापेषु प्रतिषिद्धकारिषु सर्वेष्वेतेषु समबुद्धिः कः कर्ता किं कर्मेत्यव्यापृतबुद्धिरित्यर्थः । विशिष्यते । विमुच्यते इति वा पाठांतरं । योगारूढानां सर्वेषामयमुत्तम इत्यर्थः ॥

रा० ॥ तथाच वयोविशेषानङ्गीकारेण स्वहितैषिणस्सुहृदः । सवयसो हितैषिणो मित्राणि । अरयो निमित्ततोऽनर्थेच्छवः ॥ उभयहेत्वभावात् उभयरहिता उदासीनाः । जन्मत एवोभयरहितामध्यस्थाः । जन्मतएवानिष्टेच्छवो द्वेष्याः । जन्मतएव हितैषिणो बन्धवः । साधवो धर्मशीलाः । पापाः पापशीलाः । आत्मैकप्रयोजनतया सुहृन्मित्रादिभिः प्रयो-

जनाभावाद्विरोधाभावाच्च तेषु समबुद्धिर्योगाभ्यासार्हत्वे विशिष्यते ॥

विचारः

योगारूढो न केवलमचेतनेषु लोष्टाश्मकांचनेषु समबुद्धिरपितु चेतनेषु सुहृदादिष्वपि समइतीहोच्यते ॥

विशिष्यते इत्यनेनायोगिवर्गाद्विशेषोऽभिप्रेतः ॥ यत्तु शंकरभाष्योक्तं "योगारूढानां सर्वेषामयमुत्तमः" इति तन्न ॥ समबुद्धित्वं विना योगारोहस्यैवानिष्पत्तेः योगारूढेषु तारतम्यमत्र विवक्षितमिति व्याख्यानस्यारुचिग्रस्तत्वात् ॥

समबुद्धित्वं कीदृशं इति विचार्यं ॥

(१) सम ब्रह्मेत्यादाय सुहृदादिषु विद्यमानानां भगवद्रूपाणां सर्वथा तारतम्याभावरूपं साम्यं यो जानाति स विशिष्यते इत्यर्थस्सुगमः । पंचमाध्याये "विद्याविनयसंपन्ने" इत्यत्र समदर्शनस्यापरोक्षसाधनत्वं उक्तं ॥ तदेव योगारूढलक्षणं भवतीत्यभिप्रायेणेह वर्णितमवधेयं ॥ समशब्दस्य श्रीहरिवाचकत्वं "निर्दोष हि समं ब्रह्म" इत्युक्तेरवगम्यते ॥ "विषमेष्वपि जीवेषु समो विष्णुस्सदैव तु । यत्तृणादिगतस्यापि गुणाः पूर्णा हरेस्सदा" इति प्रमाणमिममर्थं संवादयति ॥—

(२) यद्वा सुहृत्त्वादीनां भगवानेव हेतुः इत्यत्रोच्यते ॥ सुहृदादिषु सुहृत्त्वादिकं न स्वतः किन्त्वीशकृत इतिबुद्धिर्विवक्षिता ॥ अत्रापि समशब्दः श्रीहरिपरः ॥ "सर्वंचेश्वरतस्तेषां न किंचित्स्वतएव तु । समाएवं ह्यतस्सर्वे वैषम्यं भ्रान्तिसंभवं" इति ब्राह्मे (गी० भा०) ॥

(३) यद्वा सुहृदादिजीवाः स्वरूपेऽप्राकृतत्वादिना समाः । सुहृत्त्वमित्रत्वादिकं तु औपाधिकमन्तःकरणकृतं ॥ योगे प्रवर्तमानं प्रति यदन्यमनुष्येषु

सुहृत्त्वादिकं दृश्यते तत्तेषु वैषम्यकारणं न भवति ॥ तेषां सुहृत्त्वादेः केवलमौपाधिकत्वात् ॥ अतो योगारूढास्सुहृत्त्वादिकमुपेक्ष्य जीवचितामेकरूपत्वमनुसन्धाय समबुद्ध्या विशिष्यन्ते इति भावः ॥ 'सर्वेऽपि चिद्रूपास्सर्वदोषविवर्जिताः । जीवास्तेषान्तु ये दोषास्त उपाधिकृतामताः' इति ब्राह्मे (गी०—भा०)॥

यद्यप्यत्र विवक्षाविशेषेण जीवानां साम्यमुक्तं ॥ एतेन जीवचितां सर्वेषां सर्वथा साम्यं नावगन्तव्य ॥ तथाहि ॥ देवास्तावद्योगे प्रवर्तमानं प्रति स्वभावतस्सुहृदः । कालनेमिप्रभृतयोऽसुरास्स्वभावतोऽरयः ॥ एवं देवासुरेषु सुहृत्त्वारित्वादिकं नोपाधिकृतं किन्तु स्वाभाविकं इति प्रमाणसिद्धं । अतएव ब्राह्मे "एवं समानृजीवास्तु विशेषो देवतादिषु । स्वाभाविकस्तु नियमादतएव सनातनाः ॥ असुरादेस्तथा दोषा नित्यास्स्वाभाविका अपि" इति ॥

यद्यपि जीवेषु सुहृत्त्वादीनामन्तःकरणकृतानामव्यवस्थितत्वेऽपि मोक्षयोग्यत्वरूपं साधुत्वं मोक्षायोग्यत्वरूपं पापित्वं च नियतं व्यवस्थितम् ॥ जीवस्वरूपं त्रिविधमिति श्रीमदाचार्यसिद्धान्तः ॥ उक्तं हि प्रमेयदीपिकायां । "मुक्ताववशिष्यमाणं यज्जीवरूपं तत्त्रिविधाजीवसंघा इत्यादिप्रमाणाद्विषममेव ॥" इति ॥ "त्रिविधाजीवसंघास्तु देवमानुषदानवाः । तत्र देवामुक्तियोग्या मानुषेपूत्तमास्तथा ॥ मध्यमामानुषा ये तु सृतियोग्यास्सदैव हि । अधमा निरयायैव दानवास्तु तमोलयाः" इति महाभारततात्पर्यनिर्णयोदाहृतभविष्यत्पर्ववचनम् ॥

'मुक्ताववशिष्यमाणं यज्जीवरूपं' इति प्रमेयदेपिकावचनमादाय, केचिन्महान्तो मिश्राणामपि लिङ्गभङ्गमङ्गीकृत्य सुखदुःखाविर्भावरूपा मुक्तिरस्तीति वर्णयन्ति ॥ श्रीनिवासतीर्थस्त्वन्यथा मन्यते । तथाहि

"तन्न ॥ तेषां मुक्त्यङ्गीकारे नित्यसंसारित्वप्रसिद्धिविरोधात् 'सृतियोग्यास्सदैवहि' 'चोष्कूयते विश इन्द्रो मनुष्यान्' 'नित्यावर्तास्तु मध्यमाः' 'त्रिदिवनिरयभूगोचरान्नित्यबद्धान्' 'मुक्तिश्च द्विविधा मता' इत्यादि निरवकाशबहुप्रमाणविरोधाच्च ॥ सज्जनानां विरजास्नानेनेतरेषांच वायुगदाप्रहारेण लिङ्गभङ्गस्य प्रमाणोक्तत्वेन मिश्राणां लिङ्गभङ्गस्याप्यप्रामाणिकस्य कल्प्यत्वाच्च ॥ इदन्तु वाक्यं (मुक्तावविशिष्याणं इति) द्विविधमुक्तियोग्यसदसज्जीवसाहचर्यान्मिश्रेषु छत्रिन्यायेनोपचरिततया व्याख्येयं। एवमेवंजातीयके सर्वत्र द्रष्टव्यमिति संप्रदायविदः" इति॥ मिश्रजीवानां लिङ्गभङ्गोऽस्तीति पक्षो वादिराजस्वामिसंमतः॥ महत्सु विप्रतिपत्तौ वयन्तु न विचाराय समर्था इत्युपरम्यते। तथाच सुहृत्त्वादिधर्मा ये बाह्यास्तानुपेक्ष्य जविेषु चिद्विवक्षया साम्यं ये विदन्ति ते समबुद्धयः इति गीताभिसन्धिः ॥

(४) यद्वा समबुद्धित्वं नाम सर्वेषूत्तममध्यमाधमेषु यथायोग्यं वर्तनमेव ॥ "यथा सुहृत्सु कर्तव्यं पितृशत्रुसुतेषुच। तथा करोति पूजादि समबुद्धिस्सउच्यते" ॥ इति गारुडे। "गुणानुसारिणीं पूजां समां दृष्टिंच यो नरः। सर्वभूतेषु कुरुते तस्य विष्णुः प्रसीदति ॥ वैषम्यमुत्तमत्वं तु ददाति नरसंचयात्। पूजायाविषमाद्दष्टिः समा साम्यं विदुःखजं" इति ॥ ब्र० वै० ॥

'यस्य यत्र यथावृत्तिर्विहिता वर्तनं तथा। ज्ञानं वापि समत्वं तद्विषमत्वमथोन्यथा' इति म०—वि०—पु (गीता०) ॥

सर्वेषु पूजासाम्यं त्वनर्थावहं। यथोक्तं 'समानां विषमा पूजा विषमानां समा तथा। क्रियते येन देवोऽपि स्वपदाद्भ्रश्यते पुमान्' इति

'वित्तं बन्धुर्वयः कर्म विद्याचैव तु पंचमी। एतानिमान्यस्थानानि गरीयोह्युत्तरोत्तरं' ॥ इति मनुः ॥

शांकरास्तु बुद्धेस्समत्वमन्यथावर्णयन्ति । 'समबुद्धिः । कः कर्ता किं कर्मेत्यव्यापृतबुद्धिरित्यर्थः' इति शङ्कराचार्यभाष्यं ॥ 'तत्तन्नामरूपजातिगुणक्रियाग्रहणेन विनैव सर्वत्र ब्रह्मबुद्धिः' इति शंकरानन्दवाक्यं ॥

'सुहृन्मित्रादिभिः प्रयोजनाभावाद्विरोधाभावाच्च तेषु समबुद्धिर्योगाभ्यासार्हत्वे विशिष्यते' इति रामानुजाचार्यभाष्यं ॥ इदमुपपादयति देशिकः, "ननु युक्तं नाम सुहृदादिषु समबुद्धित्वं नतु साधुषु पापेषु च योगिनां समं प्रयोजन । सत्सङ्गमादेरसत्परित्यागादेश्च ज्ञानवृद्धिहेतुत्वेन तेषामवश्यापेक्षितत्वात् । उच्यते । नेदानीमुपजीवकदशापन्नो योगी निर्दिश्यते ॥ किन्तु श्रुतसकलश्रोतव्यः कृतसकलकर्तव्यः साक्षात्कारात्यन्तयोग्यदशापन्नः । तथाविधस्य च तस्य साधुभिः पापैश्च प्रयोजनाभावस्समः । केवलं योगोपयुक्तरहस्यस्थानादेरेवोपादेयत्वादिति भावः । योगाभ्यासदशा हि प्रागप्युक्ता ॥ इयन्तु तत्र काष्ठा प्राप्तावस्थेति 'विशिष्यते' इत्यस्य भावः" इति ॥

प्रथमार्धे सुहृन्मित्रशब्दयोः अरिद्वेष्यशब्दयोः उदासीनमध्यस्थशब्दयोरर्थभेदो विचार्यः । बन्धुशब्दार्थस्तु स्फुटः ॥

सुहृन्मित्रशब्दौ ॥ वयोविशेषानाङ्गीकारेण स्वाहितैषी सुहृत् । सवयस्को हितैषी मित्रं इति रामानुजाचार्यः । निरपेक्षयोपकारकृत् सुहृत् क्लेशस्थानं निरूप्य यो रक्षां करोति स मित्रं इति श्रीमध्वः ॥

अरिद्वेष्यौ ॥ कृतापकारमनपेक्ष्य स्वभावक्रौर्येणापकर्ता अरिः । कृतापकारमपेक्ष्यापकर्ता द्वेष्य इति मधुसूदनः ॥ निमित्ततोऽनर्थेच्छुररिः जन्मत एवानिष्टेच्छुर्द्वेष्य इति रामानुजाचार्यः । वधादिकर्ता अरिः अप्रियमात्रकृद्द्वेष्य इति श्रीमध्वः ॥

उदासीनमध्यस्थौ ॥ विवदमानयोरुभयोरप्युपेक्षकः उदासीनः । विवदमानयोरुभयोरपि हितैषी मध्यस्थ इति मधुसूदनः ॥ कर्तव्ये उपकारे

अपकारे च य उदास्ते स उदासीनः कर्तव्यमुभयं करोति यस्स मध्यस्थ इति श्रीमध्वः ॥ सुहृदादिशब्दार्थेषु प्रमाणान्याचार्येणोदाहृतानि ॥—

'द्वेष्योऽवासितकृत्कार्यमात्रकारीतुमध्यमः । प्रियकृत्प्रियो निरूप्यापि क्लेशं यः परिरक्षति ॥ संमित्रमुपकारंतु अनपेक्ष्योपकारकृत् । यस्ततः स सुहृत्प्रोक्तः शत्रुश्चापि वधादिकृत् ॥ (गी० भा०) इति ॥

"अनिमित्तस्नेहवांस्तु सुहृज्ज्ञात्वोपकारकृत् । मित्रं वधादिकृदरिर्द्वेष्यस्त्वप्रियमात्रकृत् ॥ उदासीनः स्नेहवतोप्यस्नेही तत्कृतानुकृत् । मध्यस्थ इति विज्ञेयस्सुहृदेषु विशिष्यते" इति नारदीये ॥ (गी० ता०) ॥

---

**योगी युंजीत सततमात्मानं रहसि स्थितः ।**
**एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ १० ॥**

वि० ॥ उद्धरेदित्यादिना विहितं ध्यानयोगमनूद्य तत्प्रकारमाह ॥ योगीति ॥ योगी ज्ञानोपायमनुतिष्ठन्नात्मानं मनः युञ्जीत भगवन्निष्ठं कुर्यात् । समाधियुक्तं कुर्यादिति यावत् ॥ सततं निरन्तरं रहसि स्थितः एकाकी सङ्गशून्यः यतं नियमितं चित्तं मनः आत्मा देहश्च यस्य स यतचित्तात्मा निराशीः कामनाहीनः परिग्रहोज्झश्च भूत्वा कुर्यादिति ॥

शं० ॥ अतएवमुत्तमफलप्राप्तये योगी ध्यायी युञ्जीत समादध्यात् । सततं सर्वदा । आत्मानं अन्तःकरणं ।

रहसि एकान्ते गिरिगुहादौ स्थितस्सन् एकाकी असहायः। रहसि स्थित एकाकी चेति विशेषणात्संन्यासं कृत्वेत्यर्थः। यतचित्तात्मा चित्तमन्तःकरणमात्मा देहश्च संयतौ यस्य स यतचित्तात्मा निराशीर्वीततृष्णोऽपरिग्रहश्च परिग्रहरहित इत्यर्थः। संन्यासित्वेऽपि त्यक्तसर्वपरिग्रहस्सन्युञ्जीतेत्यर्थः॥

रा०॥ योगी उक्तप्रकारकर्मयोगनिष्ठः, सततम् अहरहर्योगकाले, आत्मानं युञ्जीत आत्मानं युक्तं कुर्वीत, स्वदर्शननिष्ठं कुर्वीतेत्यर्थः। रहसि जनवर्जिते निश्शब्दे देशे स्थितः एकाकी तत्रापि न सद्वितीयः यतचित्तात्मा यतचित्तमनस्कः, निराशीः आत्मव्यतिरिक्ते कृत्स्ने वस्तुनि निरपेक्षः अपरिग्रहः तद्व्यतिरिक्ते कस्मिंश्चिदपि ममतारहितः॥

विचारः

योगी आत्मानं युञ्जीत इत्यनेन ध्यानयोगाय यतमानोऽन्तःकरणं भगवत्येकाग्रीकुर्यादित्युक्तं॥ युञ्जीतेति सामान्यशब्दोऽपि प्रकरणबलेन समाधियोगयुक्तं कुर्यादित्यर्थे पर्यवस्यति॥ स्पर्शान्कृत्वेति श्लोकाभ्यां सूत्रितस्य ध्यानयोगस्य प्रपंचनमत्रारभ्यते इति प्रकरणसङ्गतिर्ज्ञेया॥

युञ्जीतेत्यनेनाभिप्रेतस्समाधिः, श्रीहरिनिष्ठत्वमेव॥ श्रीहरिं विहाय यस्य कस्यचित्पदार्थस्य ध्यानं हि निरर्थकं॥ योगीति ध्यानयोगाभ्यासपर उच्यते। परमात्मनि चित्तं योक्तुं स्थापयितुं शीलमस्यास्तीति तथोक्तः॥

योगीति यतिर्विवक्षित इति शाङ्कराः। तत्र गमकं चिन्त्यं॥ 'रहसि स्थितः' 'एकाकी' इत्युक्तिभ्यां संन्यासं कृत्वेत्यर्थो लभ्यत इति तदाशयः॥ अनयोरुक्त्योस्त्वन्यथोपपत्तिः प्रदर्श्यते॥

समाधिसिध्द्यर्थं कालदेशबहिरङ्गान्तरङ्गाणामपेक्षितत्वेसत्याह भगवान् सततमित्यादिना ॥

सकृदभ्यासात्सिद्धिर्भवतीति भ्रमव्युदासाय सततमित्युक्तिः । सर्वदा योगस्याशक्यत्वात् नियमतः प्रतिदिवसं अहरहर्योगकाले यथासंभवं निरन्तरं इत्यर्थो ग्राह्यः ॥

रहसि स्थितः एकाकी अपरिग्रह इति त्रिभिर्बहिरङ्गान्युक्तानि ॥ एकाकित्वं विजनस्थानगतत्वं । रहसि स्थितत्वं गोप्यस्थानगतत्वं । अस्त्यनयोर्विशेषः । योगिसेवितदेशस्य सर्वविदितत्वे जनागमनोपद्रवस्य संभवादेकाकित्वेनैव नालं स्थानस्य गोप्यत्वं चावश्यकमिति भावः । ध्यानपरस्सद्वितीयश्चेत् वाग्व्यापारादिभिराकृष्टो भवति ॥ "एकस्तपोद्विरध्यायीति" न्यायेनाद्वितीय एव ध्यानाय समर्थो भवेत् ॥ यथोक्तं ॥ "एको भिक्षुर्यथोक्तः स्याद्वावैव मिथुनं भवेत् । त्रयो ग्रामः समाख्यात ऊर्ध्वन्तु नगरायते । नगरं हि न कर्तव्यं ग्रामो वा मिथुनं तथा ॥ राजवार्ता हि तेषां स्याद्भैक्षीवार्ता परस्परं ' इति ॥ "एकान्तवासो लघुभोजनादि मौनं निराशाकरणावरोधः। मुनेरसोस्संयमनं षडेते चित्तप्रसादं जनयन्ति शीघ्रम्" इतिच ॥

अपरिग्रह इति ॥ विध्युक्तदेहधारणोपयुक्तातिरिक्तेन परिग्रहेण रहित इत्यर्थः ॥ योगाङ्गभूते यमे अपरिग्रहः अन्तर्भूतो द्रष्टव्यः ॥

यतचित्तात्मानिराशीरिति द्वाभ्यां अन्तरङ्गसाधनं विवक्षितं प्राधान्येन ॥ निराशीः कामनाहीनः विरक्तः समलोष्टाश्मकांचनस्सुहृदादिषु समबुद्धिः ॥ यतचित्तात्मेति देहेन्द्रियमनसां निरोधउक्तः । करणत्रयनिरोधाभावे रहोगतत्वैकाकित्वाभ्यां फलस्याभावात् ॥ यतचित्तात्मेत्यत्र चित्तशब्देन मनोबुद्ध्यहंकारचित्तचेतनाख्यपचवृत्तिविशिष्टस्यान्तःकरणस्य ग्रहणं । आत्मेति सेन्द्रियस्य देहस्य ॥

केचन ध्यानयोगशास्त्रं पतञ्जलिप्रणीतमेवेति मत्वा तत्पूर्वमाविद्यमानं वदन्ति। भ्रममूलोऽयं वादः। योगस्य वेदेऽप्युक्तत्वात्॥ यथोक्तं पश्यत काठके॥ "परांचिखानि व्यतृणत्स्वयंभूस्तस्मात्पराङ्पश्यति नान्तरात्मन्॥ कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्" IV—1 इति। "तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणां" इति च VI—11॥

यद्यपि पातंजलशास्त्रं न वेदान्तिनामुपादेयं॥ तथापि यत्राविरोधस्तत्र तस्मादर्थप्रकाशो नानिष्टः॥ अस्मिन् ध्यानयोगप्रकरणे प्रयुक्ताश्शब्दाः पातंजलपरिग्रहानुकूलाः केचन दृश्यन्ते॥ अतस्तदीयप्रक्रियां किंचिदनूद्य गीताक्षरेषु यथायोग्यं विनियोगः प्रदर्श्यते॥ तथाहि॥

'योगश्चित्तवृत्तिनिरोधः' (पा I—2) संप्रज्ञातोऽसंप्रज्ञात इति द्विविधो योगः॥ 'अभ्यासवैराग्याभ्यां तन्निरोधः' I—12॥ व्याख्यातमिदं॥ 'चित्तनदीनामोभयतोवाहिनी या वहति कल्याणाय वहति पापाय च। यातु कैवल्यप्राग्भारा विवेकविषयनिम्ना सा कल्याणवहा। ससारप्राग्भारा अविवेकविषयनिम्ना पापवहा। तत्र वैराग्येण विषयस्रोतः खिलीक्रियते। विवेकदर्शनाभ्यासेन विवेकस्रोत उद्घाट्यत इत्युभयाधीनश्चित्तवृत्तिनिरोधः, इति। 'तत्र स्थितो यत्नोऽभ्यासः' I—13॥ 'स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः' I—14॥ व्याख्यातं॥ 'दीर्घकालासेवितो निरन्तरासेवितः सत्कारासेवितः॥ तपसा ब्रह्मचर्येण विद्यया श्रद्धया च संपादितः सत्कारवान्दृढभूमिर्भवति। व्युत्थानसंस्कारेण द्रागित्येवानभिभूत विषय इत्यर्थः'॥ 'दृष्टानुश्राविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्'॥ I—15॥ व्याख्यातं॥ "स्त्रियोऽन्नपानमैश्वर्यमिति दृष्टविषये विरक्तस्य स्वर्गवैदेह्यप्रकृतिलयत्वप्राप्तावनुश्राविकविषये वितृष्णस्य दिव्यादिव्यविषयसंप्रयोगेऽपि चित्तस्य विषयदोषदर्शिनः प्रसंख्यानबलादनाभोगात्मिका हेयोपादेयशून्या वशीकारसंज्ञा वैराग्यम्" इति॥ "ईश्वरप्रणिधानाद्वा" I—23॥

व्याख्यातं ॥ " प्रणिधानाद्भक्तिविशेषादावर्जितईश्वरस्तमनुगृह्णात्यभिध्यानमात्रेण " इति ॥ " व्याधिस्त्यानसंशयप्रमादालस्यविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः " I—30 ॥ " तत्प्रतिषेधार्थमेकतत्वाभ्यासः " I—32 " मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम् " I—33 ॥

एवमादिभिरभ्यासवैराग्याभ्यां चित्तनिरोधमभिधाय द्वितीयपादे यमाद्यष्टाङ्गानि प्रपंचितवान् पतञ्जलिः । " तपस्स्वाध्यायेश्वरप्रणिधानानि क्रियायोगः " II—1 ॥ " समाधिभावनार्थः क्लेशतनूकरणार्थश्च " II—2 ॥ "अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः " II—3 ॥ " अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या " II—15 ॥ ' दृग्दर्शनशक्त्योरेकात्मतेवास्मिता ' II—6 ॥ " सुखानुशयी रागः II—7 ॥ " दुःखानुशयी द्वेषः" III—8 ॥"स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः III—9 ॥ "यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि II—29 ॥ " तत्राहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः " II—30 ॥

' शौचसंतोषतपस्स्वाध्यायेश्वरप्रणिधानानि नियमाः ' II--32 ॥

' अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः ' II—35 ॥

' सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वं ' II—36 ॥

' अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानं ' II—37 ॥

' ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः ' II—38 ॥

' अपरिग्रहस्थैर्ये जन्मकथंता संबोधः ' II—39 ॥

इदं व्याख्यातं "अस्य भवति कोहमासं कथमहमासं किं स्विदिदं के वा भविष्यामः कथं वा भविष्यामः इत्येवमस्य पूर्वान्तापरान्तमध्येष्वात्मभावजिज्ञासास्वरूपेणापावर्तते " इति । ' स्थिरसुखमासनम् ' II—46 "तस्मि-

न्सतिश्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः II—49 ॥ " स्वविषयासंप्रयोगे चित्तस्य स्वरूपानुकारइवेन्द्रियाणां प्रत्याहारः II—54 ॥ ततःपरमा वश्यतेन्द्रियाणां II—55 ॥ देशबन्धश्चित्तस्य धारणा III—1 ॥ " तत्र प्रत्ययैकतानता ध्यानम् " III—2 ॥ व्याख्यातम् ॥ तस्मिन्देशेध्येयालंबनस्य प्रत्ययस्यैकतानतासदृशः प्रवाहः प्रत्ययान्तरेणापरामृष्टोध्यानं III—2 ॥ " तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधि' ॥ III—3 ॥ व्याख्यातम् ॥ ध्यानमेव ध्येयाकारनिर्भासं प्रत्ययात्मकेन स्वरूपेण शून्यमिव यदा भवति ध्येयस्वभावावेशात्तदा समाधिरित्युच्यते " ॥ इति ॥ "त्रयमेकत्रसंयमः" III—4 ॥ व्याख्यातं ॥ ' तदेतद्धारणाध्यानसमाधित्रयमेकत्र संयमः ॥ एकविषयाणि त्रीणि साधनानि संयम इत्युच्यते । तदस्य त्रयस्य तान्त्रिकी परिभाषा संयमइति " ॥

अयमत्र समुदायतात्पर्यसंग्रहः ॥ अविद्यादिक्लेशाः व्याध्यादयो विक्षेपाः पुरुषं बाधन्ते ॥ तज्जयार्थं परंपरया समाध्यर्थं च क्रियायोग उपयुज्यते ॥ यमनियमासनप्राणायामप्रत्याहारा. क्लेशविक्षेपजये अनुकूलाः ॥ पटुतराभ्यासवैराग्याभ्यां चित्तनिरोधः क्रमेण संपादनीयः ॥ विक्षेपाद्यवान्तरफलद्वारा संयमाख्यं फलं लभ्यते । निर्बीजसमाधिना कैवल्यं परमफलमभिसंपद्यते इति ॥

गीतापद्ये सततमात्मानं युंजीतेत्यनेन ध्येयाकारं परमात्मानं परित्यज्य परित्यज्यान्यत्र चंचलं मनोऽनुधावति ॥ तत्तु पुनःपुनर्निवार्य दीर्घकालनैरन्तर्यसत्कारासेवनया दृढीकृताभ्यासेन भगवन्निष्ठं कुर्यादिति ध्वन्यते ॥

निराशीरित्यनेन वैराग्यं विवक्षितं ॥ एकाकी रहसिस्थितः अपरिग्रहः इत्येतैर्यमशब्दार्थानामहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाणां नियमशब्दार्थानां च संग्रहः ॥ शुचौ देशे इत्यासनं वक्ष्यते ॥ यतचित्तात्मा इत्यनेन

प्रत्याहारधारणाध्यानसमाधीनां संग्रहः । एतत् 'तत्रैकाग्रं' इत्यादिभिः प्रपंच्यते ॥

पश्यंत्वत्र बुधाः पातंजले परमात्मनो निरवधिकं प्राधान्यं न दत्तं इति ॥ वेदान्तेतु सर्वप्राधान्यमीश्वरस्यैवाङ्गीकृतं ॥ ध्यानं हि ईश्वरविषयकमेव न तु प्रकृतिविषयं वा जीवविषयं वा भवितुमर्हति ॥ पातंजलेतु प्रकृतिजीवविवेकस्यातिमाहात्म्यं दत्तं दृश्यते । तथापि द्वैतवादी पतंजलिरीश्वरमभ्युपगच्छति स्म ॥

रामानुजाचार्यस्तत्रतत्रात्मशब्दं परमात्मशब्दंच (VI—7) जीवपरतया व्याचक्षाणः प्रकृतिपुरुषविवेकस्य जीवयाथात्म्यज्ञानस्य चातिमाहात्म्यं पतंजलिवदभिप्रैतीति ज्ञायते ॥ तथैव प्रकृतश्लोके च युञ्जीतेत्यस्य स्वदर्शननिष्ठं कुर्वीत इति रामानुजाचार्यभाष्यं ॥ भगवध्यानस्य विवक्षायास्स्वारस्येसति जीवदर्शनस्य ग्रहणं वेदान्तिनामरम्यमवधेयं ॥ अतो यदुक्तं विवृत्याचार्येण "युञ्जीत भगवन्निष्ठं कुर्यात्" इति साधुभाषितं तत् ॥

**शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।**
**नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरं ॥११**
**तत्रैकाग्रं मनःकृत्वा यतचित्तेन्द्रियक्रियः ।**
**उपविश्यासने युंज्याद्योगमात्मविशुद्धये ॥१२॥**

वि० ॥ पुनर्ध्यानप्रकारमेवाह । शुचावित्याद्यनेकश्लोकैः । शुचौ देशे । मनःप्रसादहेतुभूतदेशोपलक्षणमेतत । चेलं वस्त्रं

अजिनं व्याघ्रादिचर्म कुशोदर्भः उत्तरं उपरि यस्य तत्तथा नात्युच्छ्रितं नातिनीचं । नसमासः । एवंभूतमासनं स्थिरं यथा भवति तथात्मनः प्रतिष्ठाप्य ॥ ११ ॥

तत्रासने उपविश्य । तदाह सूत्रे "आसीनः संभवात्" इति । यतचित्तेन्द्रियक्रियः सन् एकाग्रं मनः कृत्वा आत्मनो मनसो विशुद्धये सर्वमलदाहाय स्वस्य संसारमलनिवृत्तये वा योगं ध्यानयोगं युंज्यात् । कुर्यादिति विध्यनुवादेन प्रकारोक्तिरियम् ॥ १२ ॥

शं० ॥ अथेदानीं योगं युञ्जत आसनाहारविहारादीनां योगसाधनत्वेन नियमो वक्तव्यः प्राप्तयोगस्य लक्षणं तत्फलादिचेत्यत आरभ्यते । तत्रासनमेव तावत्प्रथममुच्यते । शुचाविति । शुचौ शुद्धे विविक्ते स्वभावतः संस्कारतो वा देशे स्थाने प्रतिष्ठाप्य स्थिरमचलमात्मनआसनं नात्युच्छ्रितं नातीवोच्छ्रितं नाप्यतिनीचं तच्च चैलाजिनकुशोत्तरं चैलमजिनं कुशाश्चोत्तरे यस्मिन्नासने तदासनं चैलाजिनकुशोत्तरं । पाठक्रमाद्विपरीतोऽत्र क्रमश्चैलादीनां । प्रतिष्ठाप्य किम् । तत्र तस्मिन्नासन उपविश्य योगं युञ्जयात् । कथं, सर्वविषयेभ्यउपसंहृत्यैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः चित्तं चेन्द्रियाणि च चित्तेन्द्रियाणि तेषां क्रिया संयता यस्य स यतचित्तेन्द्रियक्रियः । स किमर्थं योगं युञ्ज्यादित्याह । आत्मविशुद्धयेऽन्तःकरणस्य विशुद्ध्यर्थमित्येतत् ॥

रा० ॥ शुचौ देशे—अशुचिभिः पुरुषैरनाधिष्ठिते अपरिगृहीते चाशुचिभिर्वस्तुभिरसंस्पृष्टे च पवित्रभूते देशे, दार्वादिनिर्मितं नात्युच्छ्रितं नातिनीचं चेलाजिनकुशोत्तरमासनं प्रतिष्ठाप्य तस्मिन्मनःप्रसादकरे सोपाश्रयउपविश्य योगैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः सर्वात्मनोपसंहृतचित्तेन्द्रियक्रियः आत्मविशुद्धये बन्धनिवृत्तये योगं युञ्ज्यात् आत्मावलोकनं कुर्वीत ॥ ११, १२ ॥

विचारः

योगं युञ्ज्यादिति विध्यनुवादः प्रकारकथनाय ॥ योगशब्देन ध्यानयोगो विवक्षितः। 'योगी युञ्जीत सततं' इत्युक्तेन 'युक्त आसीत मत्परः' इति वक्ष्यमाणेन च योगं युञ्ज्यादित्युक्तिस्समानार्था ॥ एतेन युञ्ज्यादित्यस्यात्मावलोकनं कुर्वीतेति रामानुजाचार्यभाष्यं प्रत्युक्तं ॥ 'मत्परः' इति भगवद्ध्यानस्य स्फुटत्वात् ॥

ओदनपाकं पचतीतिवद्योगं युंज्यादिति प्रयोगो व्याख्येयः ॥

'यतचित्तेन्द्रियक्रियः' इत्युक्तिरपि यतचित्तात्मेत्युक्तेन समानार्था ॥ अस्या अपि प्रकारकथनायानुवादत्वेन साथक्यमवधेयं ॥ यताः चित्तेन्द्रियाणां क्रियाः व्यापाराः येनेति यतचित्तेन्द्रियक्रियः ॥ यद्वा चित्तं मनः इन्द्रियाणि चक्षुरादीनि क्रिया चेष्टात्मकः प्राणः । चित्तं चेन्द्रियाणि च क्रिया च चित्तेन्द्रियक्रियाः यताः चित्तेन्द्रिक्रियाः येन ॥ तथाचायं यतचित्तः यतेन्द्रियः यतक्रियः इत्यर्थः ॥ यतक्रियः प्राणायामपरः यतेन्द्रियः प्रत्याहारपरः यतचित्तो धारणानिरतः ॥ एकाग्रं मनः कृत्वेति पृथग्वचनात्तेन ध्यानसमाध्योर्ग्रहणं संभाव्यते ॥ एतेन व्याख्यानेन चित्तेन्द्रियाणां क्रियाः यताः येनेति पक्षे 'यतचित्तेन्द्रिय' इत्येतावतैव चारितार्थ्यशंका च प्रत्युक्ता भवति ॥

यतचित्तेन्द्रियक्रियो योगं युञ्ज्यादित्युक्तौ किमस्य फलं कथ योगस्साध्यते इति शंकायां उच्यते ॥ 'आत्मविशुद्धये' इति फलं 'शुचौ देशे' इत्यादिनोपवेशनादिनियमः इति ॥

आत्मविशुद्धिरन्तःकरणस्य सामान्यतो नैर्मल्यं वा संसारमलपरिहारो वाऽनुसन्धेयः । आद्यमवान्तरफल । द्वितीयः परमफलं ॥ अधिकारिभेदेनोद्देशश्चावधेयः ॥ " अविद्यातत्कार्यदेहेन्द्रियादावन्यत्राहममेदमित्याद्यसत्प्रत्ययानांच निश्शेषनिवृत्तिरेवात्मनोऽन्तःकरणस्य विशुद्धिः " इत्याह शङ्करानन्दः ॥ उभयविधमलविवक्षाच विवृत्याचार्यसंमता ॥ अतएवायमाह 'सर्वमलदाहाय स्वस्य संसारमलनिवृत्तये वा' इति ॥

कथ योग आरब्धव्यस्साधनीयश्चेत्याकांक्षायां उपविश्य योगं कुर्यादित्यभिधाय उपवेशननियमनिर्वर्तनेतावद्देशशुद्धिः आसनशुद्धिरासनसौकर्थ इत्युपाङ्गानि निरूपितानि द्रष्टव्यानि ॥

"उपविश्य' इत्यनेन उपविश्यैवेत्यर्थो ग्राह्यः ॥ शास्त्रे उपवेशननियमस्य विशेषतोऽभिमतत्वात् ॥ ब्रह्मसूत्रचतुर्थाध्यायप्रथमपादेऽप्युक्तं ॥ "ओं आसीनस्संभवात्" ॥ अस्यार्थः । जिज्ञासुरासीन एवोपासनं विशेषतस्सर्वथा कुर्यात् ॥ उपासनस्यैव ज्ञानसाधनत्वेऽपि तस्यासने सत्येव संभवादन्यथाऽसंभवात् । आसीनस्य चित्तविक्षेपासंभवादन्यस्य तन्नियमात् इति ॥ "ओ ध्यानाच्च" ॥ अर्थः ॥ उपासनविशेषस्य ध्यानत्वात्तस्य चासनमन्तरेणासंभवादासनस्यावश्यकत्वं सिध्यति । नचस्मरणेनैवालं । ध्यानस्य ततोऽधिकत्वात् इति ।"स्मरणोपासनं चैव ध्यानात्मकमिति द्विधा । स्मरणं सर्वदा योग्य ध्यानोपासनमासने । नैरन्तर्यं मनोवृत्तेर्ध्यानमित्युच्यते बुधैः ॥ आसीनस्य भवेत्तत्तु न शयानस्य निद्रया ॥ स्थितस्य गच्छतो वापि विक्षेपस्यैव संभवात् स्मरणात्परमं ज्ञेयं ध्यानं नास्त्यत्र संशयः" इति नारायणतन्त्रे (ब्र० सू० भा०)

"ओं अचलत्वंचापेक्ष्य"। न केवलं प्रत्याहारादिना विक्षेपाभावो भवति किन्तु शरीराचलत्वं चापेक्ष्य। तच्चासने सत्येवेति तदावश्यकमिति भावः॥ तदुक्तं॥ "अचलं चेच्छरीर स्यात् मनसश्चाप्यचालनं। चलने तु शरीरस्य चञ्चलं च मनो भवेत्" इति ब्रह्माण्डे (ब्र० सू० भा०) "ओं स्मरन्तिच॥" "समं कायशिरोग्रीव"मित्यादयः। "ओं यत्रैकाग्रता तत्राविशेषात्"। आसनादिनियतिवदेव देशकालादीनामपि नियतिरस्ति। "पर्वताग्रे नदीतीरे" "ब्राह्मे मुहूर्ते उत्थाये"त्यादेरित्याशङ्कां निवारयितुमिदं सूत्रं॥ देशकालावस्थादिषु यत्रैकाग्रता भवति तत्रैव स्थातव्यं। "तमेव देशं सेवेत तं कालं तामवस्थितिं। तानेव भोगान्भुञ्जीत मनो यत्र प्रसीदति॥ नहि देशादिभिः कश्चिद्विशेषस्समुदीरितः। मनःप्रसादनार्थं हि देशकालादिचिन्तना" इति वाराहे (ब्र० सू० भा०)॥

अष्टाङ्गयोगसूत्रेषु च आसनं प्रपंचितं॥ तथाहि॥ मासनं' II—46॥ तद्यथा पद्मासनं वीरासनं भद्रासनं स्वस्तिकं दण्डासनं सोपाश्रयं पर्यक क्रौंचनिषदनं हस्थिनिषदन उष्ट्रनिषदनं समसंस्थानं स्थिरसुख चेत्येवमादीनि॥ 'प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम्' II—47॥ प्रयत्नोपरमात्सिध्यत्यासनं येन नाङ्गमेजयो भवति। अनन्ते समापन्नं चित्तमासनं निर्वर्तयति॥ "ततोद्वन्द्वानभिघातः" II—48 इति॥

अयमत्र संक्षेपः॥ उपासनं द्विविधं स्मरणात्मकं ध्यानात्मकं चेति। आद्यं सर्वदा सर्वावस्थासु संभवेत्॥ द्वितीयस्योपवेशनमावश्यकम्॥ चित्तविक्षेपस्यान्यथाऽवर्जनीयत्वात्॥ आसनेषु पद्मासनादीनामन्यतमस्य वा देशकालादीनां वा न निर्बन्धः। मनःप्रसादो यथा जायेत तथा भाव्यम्॥ अतएव 'स्थिरसुखमासन' मित्याह पतंजलिः॥ भगवत्समापत्तौसत्यां आसनं निष्पन्नं॥ तदा द्वन्द्वसहिष्णुत्वं सेत्स्यति। इति॥

गीतायां 'उपविश्य' इति सामान्यप्रयोगेण पद्मासनादीनां नियमोऽकिंचित्कर इति सूचितम् ॥

एवं उपवेशननियमे सूचितेसति एकाग्रतानुकूलमनःप्रसादसिद्ध्यर्थं देशशुद्ध्यादयो विवक्षिताः ॥ तथाहि 'शुचौ देशे' इत्यनेन तीर्थक्षेत्रगिरिगुहादीनां स्वतो वा संस्कारतो वा शुद्धानां, मनःप्रसादहेतुभूतानां ग्रहण। 'यत्रैकाग्रता तत्राविशेषात्' इत्युदाहृतब्रह्मसूत्रेणैतदवगम्यते । अत एव 'शुचौ देशे' इत्यस्य 'मनः प्रसादहेतुभूतदेशोपलक्षणमेतत्' इति विवृति-

समुचितदेशनिश्चयानन्तरं आसनं मृग्यं ॥ ततः किं कर्तव्यमित्यपेक्षायां आसनं दृढं तत्र स्थापनीय इत्युक्त 'प्रतिष्ठाप्ये'ति ॥ 'अचलत्वं चापेक्ष्य' इति ब्रह्मसूत्रोक्तेः नैश्चल्यसंपादनाय आसनप्रतिष्ठापनस्योपयोगः॥ समदेशे स्थितमासन यथा न चलेत्तथा स्थापयित्वेति भावः । कीदृशमासनं स्यादित्यपेक्षायां उक्तं (१) स्थिरं (२) आत्मनः (३) नात्युच्छ्रितं नातिनीचं (४) चेलाजिनकुशोत्तरं इति विशेषणचतुष्टयं ॥

(१) दार्वादिनिर्मिततया स्थिरं स्यादासनं। असौकर्यमस्थिरत्वे स्फुटम्॥

(२) 'आत्मनः' इति विशेषणं परकीयासनस्याशास्त्रीयत्व बोधयति। 'आसनं शयनं वस्त्रं जायापत्य कमण्डलुः। आत्मनश्शुचिरेतानि परेषां न कदाचन।' इति स्मरणात् ॥

(३) आसनस्यातितुङ्गत्वेऽतिनीचत्वे वा संभावितपतनादिनाऽसौकर्यं व्यक्तम् ॥

(४) चेलाजिनेति विशेषणं च प्राधान्येन सौकर्यार्थं ज्ञेयं । तत्रचेलं मार्दवाय । अजिनकुशौ शुद्ध्यर्थं च ॥

यद्यपि पद्मासनादिनिर्बन्धो नाभिप्रेतः ॥ तथापि पद्मासनादिषु मध्ये 'सोपाश्रयं' इत्यासनं अनेन चेलाजिनमिति विशेषणेन विवक्षितं भाति ॥ तस्याजिनादिविशेषितासनस्य संज्ञात्वात् ॥

'चेलाजिनकुशोत्तरं' इत्यत्र स्थण्डिलोपरि वा पीठोपरि वा प्रथमं कुशः तदुपर्यजिनं तदुपरि चेल इति विपरीतक्रमएवउचित इति शङ्कराचार्याशयः । यथाश्रुतपाठक्रमएवोचित इति देशिकः । क्रमस्याव्यवस्थितत्वमाहुरन्ये ॥

एवंगुणोपेतं आसनं प्रतिष्ठाप्य साधकस्तत्रोपविशेत् ॥ अनन्तरं यतचित्तेन्द्रियस्सन्मनएकाग्रं कुर्यात् ॥ एकाग्रतानाम भगवदेकाभिमुखत्वं ॥ योगशास्त्रपरिभाषायां क्षिप्तमूढविक्षिप्तैकाग्रतानिरुद्धत्वं चेति पच चित्तस्य भूमयोऽवस्थाविशेषाः । तत्र क्षिप्तत्वमुद्रिक्तेन रजसा क्षिप्यमाणस्यात्यन्तास्थिरत्वं । मूढत्वमुद्रिक्तेन तमसा निद्रावस्थत्व । विक्षिप्तत्वं क्षिप्ताद्विशिष्टत्वं । तच्च रजसोऽल्पीभावेन कदाचित्स्थिरत्वं । एकाग्रता रजस्तमोराहित्येनैकविषयवृत्तिप्रवाहार्हता ॥ निरुद्धत्वं निरुद्धसकलवृत्तिकत्वेन सस्कारमात्रशेषत्वं ॥ आसुभूमिषु आद्यत्रयस्य योगानर्हत्वविवक्षया तत्परित्यागेन चरमद्वयस्यैवानुष्ठेयत्वं विवक्षितं "एकाग्रं मनः कृत्वा" इति गीताक्षरैः ॥ "एकाग्रं" इत्यनेन निरोधस्याप्युपलक्षणया संग्रहोऽवधेयः ॥ अस्याः प्रक्रियायाः अत्र प्रकरणेऽविरुद्धत्वेनोपादेयत्वं संगच्छते ॥

**समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।**
**संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १३**
**प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।**
**मनस्संयम्य मच्चित्तो युक्तआसीत मत्परः ॥ १४**

वि० ॥ कायशिरोग्रीवं । कायो मध्यदेहः सच शिरश्च ग्रीवा च ॥ प्राण्यङ्गत्वाद्वन्द्वैकवद्भावः । समं ऋजुं धारयन्नचलं यथा तथा स्थिरो दृढः स्वं नासिकाग्रं संप्रेक्ष्य दिशश्चानवलोकयन् । युंज्यादिति पूर्वेण वा युक्तआसीतेत्युत्तरेण वान्वयः ॥ १३ ॥ प्रशान्तात्मा स्वतो विषयेषु अप्रवृत्तमनस्कः विगतभीः व्याघ्रचोरादिभयहीनः। ब्रह्मचारिव्रते स्थितः। मनस्सम्यक् प्रत्याहृत्य मच्चित्तो मद्ध्यानवान् । मत्परः अहमेव परः सर्वोत्तमः यस्य सः मत्परः। युक्तः समाधिसंपन्नआसीतेत्यर्थः ॥

शं ॥ बाह्यसाधनमासनमुक्तमधुना शरीरधारणं कथमित्युच्यते । सममिति । समं कायशिरोग्रीवं कायश्च शिरश्च ग्रीवा च कायशिरोग्रीवं ॥ तत्समं धारयन्नचलं च समं धारयतश्चलनं संभवत्यतोविशिनष्टि अचलमिति । स्थिरः स्थिरो भूत्वेत्यर्थः ॥ स्वं नासिकाग्रं संप्रेक्ष्य सम्यक्प्रेक्षणं दर्शनं कृत्वेवेतीवशब्दो लुप्तो द्रष्टव्यः । नहि स्वनासिकाग्र-

संप्रेक्षणमिह विधित्सितं ॥ किं तर्हि ॥ चक्षुषोर्दृष्टिसन्निपातः॥ सचान्तःकरणसमाधानापेक्षो विवक्षितः । स्वनासिकाग्रसंप्रेक्षणमेव चेद्विवक्षितं मनस्तत्रैव समाधीयेत नात्मनि ॥ आत्मनि हि मनसः समाधानं वक्ष्यत्यात्मसंस्थं मनः कृत्वेति । तस्मात् 'इव' शब्दलोपेनाक्ष्योर्दृष्टिसन्निपातएव संप्रेक्ष्येत्युच्यते । दिशश्चानवलोकयन् दिशां चावलोकनमन्तराकुर्वन्नित्येतत् ॥ १३ ॥ किंच प्रशान्तात्मा प्रकर्षेण शान्तआत्माऽन्तःकरणं यस्य सोऽयं प्रशान्तात्मा ॥ विगतभीर्विगतभयो ब्रह्मचारिव्रते स्थितः ब्रह्मचारिणो व्रतं ब्रह्मचर्यं गुरुशुश्रूषाभिक्षाभुक्त्यादि तस्मिन् स्थितस्तदनुष्ठाता भवेदित्यर्थः । किंच मनः संयम्य मनसो वृत्तीरुपसंहृत्येत्येतन्मच्चित्तो मयि परमेश्वरे चित्तं यस्य सोऽयं मच्चित्तः युक्तः समाहितः सन्नासीतोपविशेत् । मत्परोऽहं परो यस्य सोऽयं मत्परः ॥ भवति कश्चिद्रागी स्त्रीचित्तो न तु स्त्रियमेव परत्वेन गृह्णाति । किं तर्हि । राजानं महादेवं वा । अयं तु मच्चित्तः मत्परश्च ॥

रा० ॥ कायशिरोग्रीवं समं अचलं सोपाश्रयतया स्थिरं धारयन् दिशश्चानवलोकयन् स्वनासिकाग्रं संप्रेक्ष्य प्रशान्तात्मा अत्यन्तनिर्वृतमनाः विगतभीर्ब्रह्मचर्ययुक्तो मनस्संयम्य मच्चित्तो युक्तः अवहितो मत्परः आसीत मामेव चिन्तयन्नासीत ॥

विचारः

'युक्तआसीत' इत्यत्र युक्त इति ध्यानयोग्यनुवादः ॥ तेन कर्तव्यमाह सममित्यादिना ॥ उक्तसाधनेषु उपवेशनातिरिक्तं साधनं 'ब्रह्मचारिव्रते स्थितः' इति सामान्योक्त्या कथितं । उपवेशनानन्तर सपाद्यानि कायशिरोग्रीवसमत्वाचलत्वस्थिरत्वानि ॥ अनन्तरं नासाग्रमात्रावलोकनम् ॥ तदनन्तरं मनोनिरोधपूर्वकभगवध्यानम् ॥ इति विवेकः ॥

१. ब्रह्मचारिव्रते स्थितः इत्यनेन न तन्नामकाश्रमो विवक्षितः । नापि शंकरानन्दाभिप्रेतरीत्या यतित्वं ॥ किन्तु मनोवाक्तनुशुद्ध्यर्थं शास्त्रेषु विहितस्यानुष्ठानजातस्य यथासंभवं सग्रहो वक्तव्यः ॥ ब्रह्मचर्यमित्यनेन गुरुशुश्रूषाभिक्षाभुक्त्यादि ग्राह्यं इति शङ्कराचार्यभाष्य ॥ तद्वाक्ये आदिशब्देन त्रिषवणस्नानशौचाचमनादीनां ग्रहणस्यौचित्युमुक्तमानन्दगिरिणा ॥ शङ्करानन्दस्तु वक्त्याशयमन्यथा ॥ ब्रह्मविद्दन्तधावनमुखक्षालनादिकमपि परित्यज्य न प्रत्यवैतीति स मन्यते ॥ 'स्वाध्यायं च सर्वकर्माणि संन्यस्य' वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत्' 'त्यज धर्ममधर्मं च' 'नैव धर्मो नचाधर्मो नचैव हि शुभाशुभी' इत्याद्युदाहृत्य 'ब्रह्मचारिशब्देन भिक्षामात्रं लक्ष्यते नतु त्रिषवणादिः । त्रिषवणाद्यनुष्ठानस्य समाधिसंभाविताऽविक्रियब्रह्माभिन्नत्वज्ञानविध्वंसकत्वाद्योग युञ्जीत सततमिति नित्यनिरन्तरकर्तव्यतयाप्राप्तसमाध्यनुष्ठानप्रतिकूलत्वाच्चाहारमात्रमत्र गृह्यते" इत्याह ॥ इदमनुपपन्नं । स्वाचार्यातिक्रमे निमित्ताभावात् ॥ उदाहृतानि प्रमाणान्यसंप्रज्ञातसमाधिमग्नतादशायामेवेति "यस्त्वात्मरतिरेवस्या'दित्यत्रोक्तन्यायेन संगच्छते । व्युत्थितदशायां ब्रह्मविदा कर्माण्यनुष्ठीयन्त एव ॥ ध्यानयोगमारुरुक्षुस्तु आसनाद्यभ्यासनिरूपितयोगप्रारंभदशायां नियमेन स्वाध्यायादिकं कुर्यादेवान्यथा प्रत्यवैति ॥ ज्ञानात्पूर्वं वा तदनन्तरं वानुष्ठितानि सत्कर्माणि न कदापि ब्रह्मज्ञानध्वंसकानि भवेयुरित्यलं ॥ गीतायां विवक्षितो यतिरेवेत्यस्य च गमकं चिन्त्यं ॥

देशिकस्तु ब्रह्मचर्यं स्मृत्युदाहारणेनोपपादयति ॥ 'ब्रह्मचर्यं च योषित्सु भोग्यताबुद्धिवर्जनम्' इति ॥ किंच 'स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् । सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव च ॥ * * ॥ विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम्' इत्याग्नेये (३७२ अ० १०–१०–११ बृहस्पतिस्मृतौच) ॥

(२) 'अचलत्वंचापेक्ष्य' इति ब्रह्मसूत्रोक्तन्यायेन 'समं कायशिरोग्रीवं धारयन्, अचलं, स्थिरः' इति विशेषणत्रयम् ॥ शरीरपरोऽपि कायशब्दोऽत्र कटेरूर्ध्वगतकण्ठाधोविद्यमानकबन्धपरः ॥ कटेरधः नैश्चल्यमुपवेशनेन सेत्स्यति । शिरोग्रीवं इति पृथग्वचनात् कण्ठादधोभागस्यैव कायशब्देन ग्रहणमुचितम् ॥ कायश्च शिरश्च ग्रीवा च कायशिरोग्रीवम् ॥ 'द्वन्द्वश्चप्राणितूर्यसेनांगानां' इति प्राण्यङ्गत्वेन नपुंसकत्वं एकवद्भावश्च ॥ समं आर्जवेन ॥ धारयन्नित्यनेन संबध्यते । अचलं यथा स्यात्तथा स्थिरस्सन्निति संबन्धः । यद्वा स्थिरः धीरः ॥ अचलं इति मशकपिपीलिकाद्युपद्रवेऽप्यचलनं सूच्यते ॥

(३) एवं स्थिरसुखासनो भूत्वा किं कुर्यादिति शङ्कायां 'दिशः अनवलोकयन् स्वं नासिकाग्रं पश्येत्' इत्युक्तं ॥ दिशां अवलोकने विक्षेपो भवेत् । नेत्रानिमीलने निद्रा स्यात् ॥ तदुभयव्यावृत्त्यर्थमर्धोन्मीलितनयनस्सन्नासाग्रं संप्रेक्ष्यासीतेत्युक्तिः ।

'नासिकाग्रं संप्रेक्ष्य' इत्यत्र शङ्करभाष्यमनुसृत्य 'संप्रेक्ष्येव' इति इवशब्दलोपमभिप्रयन्ति शाङ्करव्याख्यातारः । नासाग्रसंप्रेक्षणे विवक्षितेसति ब्रह्मस्थाने नासाग्रं समाधिगोचरं प्रसज्येत इत्यनुपपत्तिभिया इवशब्दाध्याहार आश्रितः । अत्रैतद्वक्तव्यम् । अतीताध्याये 'चक्षुश्चैवान्तरेभ्रुवोः' इत्युक्तरीत्यात्राऽपि योगारंभवेलायां नासाग्रसमीक्षणेन योगाभ्यासप्रवेशं

कुर्यात् इत्यभिप्राये बाधकं न दृश्यते ॥ आसनमारभ्य नासाग्रावलोकनपर्यन्तं कर्तव्यानि बहिरङ्गानि नाम । तत्फलं तु चित्तस्यान्तर्मुखत्वम् ॥ एवंसति ब्रह्मस्थाने नासाग्रचिन्तनप्रसङ्गस्य का सङ्गतिः ? यद्यपि नासाग्राद्ध्येऽवयवे न कोऽप्यस्ति विशेषः । भ्रूमध्यस्थत्वं वाऽपेक्षितफलायालम् ॥ परजननासाग्रमनुक्त्वा 'स्वं नासिकाग्रं' इत्युक्तेरर्धोन्मीलितनयनाभ्यामतिसमीपस्थसूक्ष्मवस्तुनि स्थिरदृष्टिस्समाधिमूर्च्छां जनयतीत्याशयः ॥

(४) एवं बहिरङ्गनिष्पत्त्यनन्तरं भवेदयं विगतभीः । अत्र भयं व्याघ्रादिजन्तुजम् ॥ 'अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्' ॥ 'स रक्षिता रक्षति यो हि गर्भे' इत्याद्युक्तरीत्या भगवति भारं संस्थाप्य निर्भयो योगमभ्यसेत् इति भावः । यत्तु शङ्करानन्देनोक्तं 'अन्नादानविसर्गातिरिक्तस्य दन्तधावनमुखक्षालनादेः शास्त्रीयस्य सर्वस्य च कर्मणः परित्यागे शिष्टानिन्दिष्यन्तीति या भीतिः सा यस्य न विद्यते' इति । तन्न । शास्त्रीयकर्मणामपरित्याज्यत्वात् । शिष्टनिन्दाया भयस्योचितत्वाच्च ॥

(५) प्रशान्तात्मा मनस्संयम्ये'ति विषयेष्वप्रवृत्तमनस्कत्वमुच्यते ॥ 'प्रशान्तात्मे'ति स्वतोऽप्रवृत्तिर्विवक्षिता । 'मनस्संयम्ये'ति प्रयत्नेन सम्यक् प्रत्याहारः ॥ प्रशान्तात्मेति योगोपयुक्तात्यन्तमनस्सन्तोष उच्यते इति देशिकः ॥

(६) 'मच्चित्तो मत्परआसीत' इति ध्यानप्रकार उच्यते ॥ मच्चित्तत्वमत्परत्वयोर्भेदोऽनुसन्धेयः ॥ मच्चित्त इति भगवतो ध्येयत्वं उक्तं ॥ मत्पर इत्यनेन ध्यायी भगवन्तमेव सर्वस्वामित्वेनोत्तमत्वेन च जानीयादित्यर्थो विवक्षितः ॥ केचित्तु मच्चित्त इति भगवति चित्तस्यानुप्रवेश उक्तः मत्पर इति तदेकचित्तत्वं उक्तं इत्याहुः ॥ अन्येतु शब्दद्वयसार्थक्यमेवमाहुः ॥ स्त्र्यादौ

भोग्यत्वचिन्ता राजादौ महति परत्वधीर्लोके विभक्ता प्रसिद्धा । योगिनस्तु श्रीकृष्णएव भोग्यं परं च वस्त्विति तस्मिन्नुभयधर्मसमावेशः प्रदर्शित इति ॥

'मच्चित्तो मत्परः' इत्येतयोश्शङ्कराचार्यव्याख्यानं विवृतिवद्दृश्यते ॥ 'मच्चित्तः मयि परमेश्वरे चित्तं यस्य सोऽयं मच्चित्तः । मत्परः अहं परो यस्य सोऽयं मत्परः' इति शङ्करभाष्यं ॥ मधुसूदनस्तु स्वाचार्यवाक्यमनूद्य स्वस्य गुर्वतुल्यतां चाभ्युपगम्य प्रकारान्तरेण स्वाशयमाह । 'मयि परमेश्वरे प्रत्यक्चिति सगुणे निर्गुणे वा चित्तं यस्य । मत्परः अहमेव परमानन्दरूपत्वात्परः पुरुषार्थः प्रियो यस्य' इति ॥ 'तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरो यदयमात्मा' इति श्रुतिं चोदाहृतवान् ॥

इमे व्याख्यातारस्सर्वेऽपि 'मच्चित्तः मत्परः' इत्यत्रास्मच्छब्दबोध्यो भगवाञ्श्रीकृष्णः इति सम्मन्यन्ते ॥ शङ्करानन्दस्तु स्वव्यूहपरव्यूहौ विहायैवं व्याचष्टे । तथाहि "मच्चित्त इत्यत्रास्मच्छब्दार्थस्य चित्तस्थापनाधिकरणस्य ब्रह्मणः स्थापयितुश्च भेदे प्राप्ते 'उदरमन्तरं कुरुते । अथ तस्य भयं भवति' इति श्रवणाद्भेददर्शिनो मुक्तिर्न संभवति ॥ ततो ध्याता ब्रह्मैवाहमिति स्वं ब्रह्माभिन्नं भावयेदिति बोधयितुमाह । मत्पर इति ॥ अहमेव परः परमात्मेति मत्परः ब्रह्मैवाहमिति स्वस्य ब्रह्मभावग्राहिकया वृत्त्या युक्तस्सन्नासीत । स्वं ब्रह्मैव भावयन्नासने तूष्णीमुपविशेदित्यर्थः' इति ॥ अत्र वक्तव्यं ॥ येनकेनापि प्रकारेण ब्रह्माभेदवादः प्रवेशनीय इति व्यग्रचित्तत्वमत्र व्याख्याने स्फुटं । 'मच्चित्त' इत्यत्रास्मच्छब्दबोध्यो भगवानित्यभिप्रयन्नपि मत्पर इत्यत्र स जीवः इति व्याख्यानमन्याय्यम् ॥ अत्र वेङ्कटनाथभाषितं हृद्यं ॥ 'मयि पुरतः स्थिते मदनकोटिसुन्दरे मणिकिरीटकुण्डलवलयहारकेयूरमुद्रिकालंकृते माङ्गल्यवपुषि मरकतोपलश्यामले मन्दस्मितरुचिरबिंबाधरे मधुरालापिनि महनीयचरिताद्भुते वासुदेवे चित्तं यस्य स 'मच्चितः' ॥ * * अहमेव परः इष्टः परमपुरुषार्थो यस्य स मत्परः' इति ॥

गीतायां प्रपंचितं ध्यानयोगं पातञ्जलोक्तेन तत्रतत्र परीक्ष्य सारासारे बुधैरधिगन्तव्ये ॥ उक्तं ह्यत्र गीतायां 'मच्चित्तो युक्त आसीत मत्परः' इति ॥ एतेन श्रीविष्णुध्यानं विना योगसिद्धिर्न भवतीति व्यक्तं ॥ 'समाधिसिद्धिरीश्वरप्रणिधानात्' II—45 इति सूत्रयता पतञ्जलिना तु ईश्वराराधनस्याष्टाङ्गेषु बहिरङ्गभूत 'नियम' प्रभेदत्वेनैव गणनं दृश्यते ॥ तन्मते ईश्वरमेव समाध्यर्थं योगी चिन्तयेदिति न नियमः ॥ अत एव तेन सूत्रितं 'यथाभिमतध्यानाद्वा' I—39 इति ॥ व्याख्यातमिदं 'यदेवाभिमतं तदेव ध्यायेत् । तत्र लब्धस्थितिकमन्यत्रापि स्थितिपदं लभत इति' इति ॥

**युञ्जन्नेवं सदात्मानं योगी नियतमानसः ।**
**शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥ १५**

वि० ॥ समाधेः फलमाह ॥ युंजन्निति । नियतमानसो यतचित्तः । योगी योगानुष्ठाता ॥ एवमुक्तप्रकारेण सदात्मानं युंजन् ध्यायन् आत्मानं मनो भगवति युक्तं कुर्वन्निति वा निर्वाणपरमां शरीरत्यागोत्तरकालीनां मत्संस्थां मयि स्थितिरूपां शान्तिमधिगच्छति प्राप्नोति ॥ न जीवन्मुक्तिमात्रमाप्नोतीत्यर्थः ॥

शं० ॥ अथेदानीं योगफलमुच्यते ॥ युंजन्निति । युंजन्समाधानं कुर्वन्नेवं यथोक्तेन विधानेन सदात्मानं योगी नियतमानसः नियतं संयतं मानसं मनो यस्य सोऽयं निय-

तमानसः स शान्तिं उपरतिं निर्वाणपरमां निर्वाणं मोक्षस्तत्परमा निष्ठा यस्याः शान्तेः सा निर्वाणपरमा तां निर्वाणपरमां मत्संस्थां मदधीनामधिगच्छति प्राप्नोति ॥

रा० ॥ एवं मयि परस्मिन् ब्रह्मणि पुरुषोत्तमे मनसश्शुभाश्रये सदा आत्मानं मनो युंजन् नियतमानसः मत्स्पर्शपवित्रीकृतमानसतया निश्चलमानसः मत्संस्थां निर्वाणपरमां शान्तिमधिगच्छति निर्वाणकाष्ठारूपां मत्संस्थां मयि संस्थितां शान्तिमधिगच्छति ॥

विचारः

'आत्मानं' इत्यस्य परमात्मानं इति वा मन इति वार्थः ॥ 'योगी युंजीत सततमात्मानं' इत्यस्यात्रानुवादः फलकथनाय । बहिर्मुखं मनो बहुप्रयत्नेनान्तर्मुखं पटुतराभ्यासेन कुर्यादित्यर्थः सदेत्यनेन ध्वन्यते ॥

द्वितीयार्धेन फलोक्तिः ॥ शान्तेः निर्वाणपरमत्वं भगवत्संस्थत्वं चोक्तं ॥ बाणशब्दस्य कायपरत्वाद्वबयोरभेदविवक्षया निर्वाणमित्यस्य शरीरशून्यमित्यर्थः ॥ शरीरपातानन्तरं प्राप्यां मुक्तिं योगी प्राप्नोति ॥ न केवलं जीवन्मुक्तत्वं योगफलं अपि तु विदेहकैवल्य इति यावत् ॥ 'परम' इत्यत्र परशब्द उत्तरकालपरः । परे उत्तरकाले मीयते इति निर्वचनमभिप्रेत्य परमशब्दार्थ उत्तरकालीनामित्युक्तवानाचार्यः (भाष्ये) ॥ जीवन्मुक्तौ शरीरस्य सत्त्वेन तस्याः निर्वाणपरमत्वाभावात्तद्व्युदासः ॥ शंकरानन्दोऽपि निर्वाणशब्दार्थमेवमेवाह ॥ 'निर्वाणं शरीरसंबन्धरहितं परमं परमपुरुषार्थलक्षणं कैवल्यं यया निर्वाणपरमा इति ॥ यद्वा निर्वाणं मोक्षरूपं परमं निरतिशयसुखं यस्यां' इति ॥ शान्तिशब्दो नात्रोपशान्तिपरः ॥ यतः उपशान्तेर्योगकारणत्वेन तत्पूर्वभावित्वादनन्तरभावियोगफलं न भवितुमर्हति ॥

मत्संस्थां इति विशेषणं सुरसम् । मयि भगवति स्थितिरूपां इति सालोक्यसामीप्यसारूप्यसायुज्यमुक्तिभेदाना संग्रहः ॥

'मत्संस्थां मदधीनां' इति शङ्करभाष्यम् ॥ नहि ब्रह्म मुक्तिं ददातीत्यपसिद्धान्तपरिहारायाहानंदगिरिः ॥ 'मत्संस्थां मदधीनां मदात्मिकामित्यर्थः' इति ॥ एवमेव नीलकण्ठोऽपि 'मय्येव संस्था एकीभावेनावस्थानं समाप्तिर्वा यस्याः' इति ॥

वस्तुतस्तु मयि स्थितिरूपां इत्येव क्लेशहीनश्शब्दार्थः । मदधीनामित्यपि नानिष्टमस्माकम् ॥ यतो भगवदधीनं ज्ञानं मोक्षश्च ॥ उक्तंहि ॥ 'तेषां सततयुक्तानां भजतां प्रीतिपूर्वकं । ददामि बुद्धियोगं तं येनमामुपयान्ति ते' इति भगवतैव गीतायाम् ॥

शान्तेर्मत्संस्थत्वनिरूपणेन पातंजलाद्यभिमतकैवल्यस्वरूपं व्युदस्तं वेदितव्यम् ॥ पतंजलिः खलु पारिभाषिकबहुसोपानसंतरणानन्तरं फलकथने तावदाह 'तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्' I—16 इति । व्याख्यातम् । 'योगी प्रत्युदितख्यातिरेवं मन्यते । प्राप्तं प्रापणीयं । क्षीणाः क्षेतव्याः क्लेशाः ॥ ज्ञानस्यैव पराकाष्ठा वैराग्यम् । एतस्यैव हि नान्तरीयकं कैवल्य' इति ॥ अत्र चिन्त्यं ॥ कथं ज्ञानसाधनं वैराग्यं ज्ञानस्य काष्ठा भवतीति ॥

किंचाह पतंजलिः 'प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः IV—19 ॥ इति ॥ व्याख्यातं ॥ 'यदायं ब्राह्मणः प्रसंख्यानेऽप्यकुसीदस्ततोऽपि न किंचित्प्रार्थयते तत्रापि विरक्तस्य सर्वथाविवेकख्यातिरेव भवतीति संस्कारबीजक्षयान्नास्य प्रत्ययान्तराण्युत्पद्यन्ते । तदास्य धर्ममेघो नाम समाधिर्भवति' इति ॥ अत्रापि चिन्त्यं । योगी प्रसंख्यानेऽप्यकुसीदस्सन्सर्वथाज्ञानेच्छामपि जहाति इति पातंजलं न तत्वविदां मतं । जीवन्मुक्तस्यापि भगवज्ज्ञानस्य तदिच्छायाश्च विहितत्वात् ॥ उक्तंहि 'भोक्तारं यज्ञत-

पसां सर्वभूतमहेश्वरं । सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति' इति ॥ IV—29 ॥

एतच्छ्लोकव्याख्याने मधुसूदनः पातंजलप्रक्रियां बहुविस्तरेणानूदितवान् ॥ तच्छास्त्रप्रतिपाद्यविशेषाणां सविस्तरं जिज्ञासवस्सकौतुकामाधुसूदनीं व्याख्यां पठन्तु ॥ गीताक्षरैस्समन्वयप्रदर्शकं मधुसूदनीयनिगमनवाक्यमात्रमत्र लिख्यते ॥ 'एवंस्थिते युंजन्नेवं सदात्मानं' इत्यनेन संप्रज्ञातसमाधिरेकाग्रभूमावुक्तः । नियतमानसः इत्यनेन तत्फलभूतोऽसंप्रज्ञातसमाधिर्निरोधभूमावुक्तः । शान्तिमिति निरोधसमाधिसंस्कारफलभूता प्रशान्तवाहिता ॥ निर्वाणपरमामिति धर्ममेघस्य समाधेस्तत्वज्ञानद्वारा कैवल्यहेतुत्व । मत्संस्थामित्यनेनौपनिषदमभिमतं कैवल्यं दर्शितं । यस्मादेव महाफलो योगस्तस्मात्तं महता प्रयत्नेन संपादयेदित्यभिप्रायः' इति ॥

**नात्यश्नतस्तु योगोऽस्ति नचैकान्तमनश्नतः ।**
**नचातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥ १६**
**युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।**
**युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ १७**

वि० ॥ ध्यानयोगनिष्ठस्याहारादिनियममाह नात्यश्नत- इति द्वाभ्यां । अति अधिकं भुंजानस्य एकान्तं सर्वथैवाभुंजानस्य चातिनिद्राशीलस्यातिजाग्रतश्च योगो नैवास्तीत्यर्थः ॥ अत्राशनजागरणनिषेधोऽशक्तस्य । शक्तस्य त्वनशनादावपि न योगक्षतिरिति ज्ञेयम् ॥

कथंभूतस्य योगो भवतीत्यत आह॥ युक्तेति॥ युक्तौ योगोपेतौ आहारविहारौ भोजनसंचारौ यस्य स तथा। तस्य यावता श्रमादिर्न भवति तावदाहारव्यापारवतइत्यर्थः। कर्मसु कार्येषु युक्तचेष्टस्य श्रमानापादकचेष्टायुक्तस्य॥ युक्तस्वप्नावबोधस्य यावन्निद्रावबोधौ योगाविघातकौ तावन्निद्रावबोधोपेतस्य योगो ध्यानयोगः॥ समाधिरिति यावत्। दुःखहा भवतीत्यर्थः॥

शं०॥ इदानीं योगिन आहारादिनियमउच्यते। नात्यश्नतइति। नात्यश्नतआत्मसंमितमन्नपरिमाणमतीत्याश्नतोऽत्यश्नतो न योगोऽस्ति न चैकान्तमनश्नतो योगोऽस्ति। 'यदु-ह्वा आत्मसंमितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति' इति श्रुतेः। तस्माद्योगी नात्मसंमितादन्नादधिकं न्यूनं वाश्नीयात्। अथवा योगिनो योगशास्त्रे परिपाठितादन्नपरिमाणादतिमात्रमश्नतो योगो नास्ति। उक्तं हि "अर्धमशनस्य सव्यञ्जनस्य तृतीयमुदकस्य तु। वायोस्संचरणार्थन्तु चतुर्थमवशेषयेत्" इत्यादि परिमाणम्॥ तथा न चातिस्वप्नशीलस्य योगो भवति नैव चातिमात्रं जाग्रतो योगो भवति चार्जुन॥ (१६)

कथं पुनर्योगो भवतीत्युच्यते—युक्तेति॥ युक्ताहारविहारस्य आह्रियते इत्याहारोऽन्नं विहरणं विहारः पादक्रमस्तौ युक्तौ नियतपरिमाणौ यस्य॥ यथा युक्तचेष्टस्य युक्ता नियता

चेष्टा यस्य कर्मसु, तथा युक्तस्वप्नावबोधस्य युक्तौ स्वप्नश्चावबोधश्च तौ नियतकालौ यस्य तस्य युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु युक्तस्वप्नावबोधस्य योगिनो योगो भवति दुःखहा। दुःखानि सर्वाणि हन्तीति दुःखहा॥ सर्वसंसारदुःखक्षयकृद्योगो भवतीत्यर्थः॥

रा० ॥ एवमात्मयोगमारभमाणस्य मनोनैर्मल्यहेतुभूतां मनसो भगवति शुभाश्रये स्थितिमभिधायान्यदपि योगोपकरणमाह—

अत्यशनानशने योगविरोधिनी अतिविहाराविहारौ च॥ तथाऽतिमात्रस्वप्नजागर्ये॥ तथा चात्यायासानायासौ॥ मिताहारविहारस्य मितायासस्य मितस्वप्नावबोधस्य सकलदुःखहा बन्धनाशनो योगस्संपन्नो भवति॥

विचारः

'विषया विनिवर्तन्ते' इत्यत्रोपवासेन रसवर्जं इन्द्रियशक्तीनां क्षयो वा रसनेन्द्रियशक्तिरक्तिवर्जं इतरेन्द्रियशक्तिरक्त्योः क्षयो वा संभवतीति प्रतिपादितमत्रानुसन्धेयम्॥ तेन निराहारव्रतस्यानेन महाफलत्वोक्त्या शक्तश्चेत्तदनुतिष्ठेदित्युक्तमवधेयम्॥ आहारपरित्यागस्तु दुर्घटः। शरीरयात्रायाअप्यन्यथा ह्यानिप्रसङ्गात्। शरीरं खल्वाद्यं धर्मसाधनम्। तस्यारक्षणे त्वनर्थस्सिद्धः। तस्मात्कठिनव्रताद्यशक्तः किं कुर्यादित्याकांक्षायां प्रागेवोक्तं 'तानि सर्वाणि संयम्य युक्तआसीत मत्परः' इति॥ एतेन भगवत्परत्व-

मिन्द्रियजये प्रधानं साधनं इत्युक्तमनुसन्धेयं । एतदानुगुण्येनेहापि 'मनस्संयम्य मच्चित्तो युक्त आसीत मत्परः' इति भगवद्भक्तिध्यानादीनां प्राधान्यं पुनर्ज्ञापितं च ॥

शास्त्रेषु क्वचिदाहारादिपरित्याग उच्यते क्वचिदाहारादीनामभ्यनुज्ञा दत्ता इति विरोधः शक्ताशक्तविषयाविवेकेन समाधेयः । यो हि शक्तस्स तु कठिनव्रतजातमाचरेदेव ॥ उक्तं हि नारदीये 'निद्राशनभयश्वासचेष्टातन्द्रादिवर्जनम् । कृत्वाऽनिमीलिताक्षस्तु शक्तो ध्यायन्प्रसीदति' इति ॥ अशक्तश्चेदाहारादौ नियममाचरेन्नतु सर्वथाऽहारादिकं परित्यजेदित्यभ्यनुज्ञायते नात्यश्नत इति द्वाभ्याम् ॥

इहोक्ताहारादिनियमो योगशास्त्रोक्तयमनियमयोरन्तर्भवति ॥ अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहार्जवक्षमाधृतिमिताहारशौचानि यमाः इति यमप्रभेदे मिताहारस्य परिगणनं द्रष्टव्यं ॥ युक्तनिद्राजागरयोः युक्तविहारचेष्टयोश्च यथासंभवं योगाङ्गे यमे वा नियमे वा प्रवेशो युज्यते ॥

मिताहारादीनां स्वीकारो व्यतिरेकान्वयाभ्यां प्रदर्श्यते श्लोकाभ्यां । तत्रादौ व्यतिरेकः नात्यश्नत इति । अनन्तरमन्वयः युक्ताहारेति । एवं अन्वयव्यतिरेकयोस्समानार्थत्वेऽभिप्रेतेसति प्रथमश्लोके विहारचेष्टयोरुक्त्यदर्शनात्कथमेतदिति न शङ्कनीयं । जाग्रतो नैवेत्यत्रोपलक्षणया तद्दशायां क्रियमाणयोर्विहारचेष्टयोस्संग्रहस्य संभवात् ॥

द्वितीयश्लोकेऽपि निद्राजागरविहारचेष्टानामेव कण्ठतश्श्रवणेऽपि योगानुकूलविहितसर्वकर्मणां अनुज्ञा विरोधिनां सर्वेषां प्रतिषेधश्चानुसन्धेयः । उक्तं मार्कण्डेये ॥ 'नाध्मातः क्षुधितः श्रान्तो न च व्याकुलचेतनः । युञ्जीत योगं राजेन्द्र योगी सिध्यर्थमात्मनः ॥ नातिशीते नचैवोष्णे नद्वन्द्वे नालिनान्विते । कालेष्वेतेषु युञ्जीत न योगध्यानतत्परः' इति ॥

अतएव 'योगः' 'युक्तः' इति शब्दाभ्यां धात्वर्थभूतसमाधिरेव विवक्षितोऽर्थ इति वाच्यं ॥ यद्यपि मितपरत्वं नास्माकमनिष्टं । तथापि आहारादीनां ध्यानयोगानुकूलानां विवक्षितत्वं सुरसं इत्यभिप्रायेणोक्तं भाष्ये—'युक्ताहारविहारस्य—सोपायाहारादेः यावता श्रमाद्यभावो भवति तावदाहारादेरित्यर्थः' इति ॥ व्याख्यातं च प्रमेयदीपिकायां ॥ 'उपायः समाधिः । समाधिर्हि धात्वर्थः । तद्वत्ता च प्रत्ययार्थः । अतस्सोपायेत्युक्तं' इति ॥

चित्तसमाधानार्थं गीतायामुक्ताः नियमाः, अशनानशने, निद्राजागरौ, क्रियाक्रिये इति विभज्यन्ते ॥

(१) अशनानशने ॥ अतिभोजनमजीर्णकारीति प्रसिद्धं । यद्भुक्तं सज्जीर्यति तच्छरीरस्याऽरोग्यद्वारा कार्यक्षमतां संपादयति ॥ अन्यथा व्याध्यादिपीडा जायते ॥ नात्यश्नत इत्यनेन न केवलं भोजनवेलायां मितपरिग्रहो विवक्षितः किन्तु शास्त्राद्यनुसारेण कदाचिद्रात्रिभोजनत्यागः, अल्पाहारः, एकादश्युपवासः इत्यादयोऽपि विवक्षिताः ॥ उचितोपवाससहकृतमिताहारत्वनियमो न केवलं पुण्यकरः अपित्वायुर्वेदसंमतः । पाश्चात्यैर्नवीनैरप्यद्याङ्गीकृतो द्रष्टव्यः । मिताहारे—शतपथश्रुति. ॥ 'यदुह वा आत्मसंमितमन्नं तदवति तन्नहिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति' इति ॥ एवमेव योगशास्त्रे 'पूरयेदशनेनार्धं तृतीयमुदकेन तु । वायोस्संचरणार्थाय चतुर्थमवशेषयेत्' इत्यादि ॥

(२) निद्राजागरौ ॥ स्वप्नशब्दो निद्रापरः । 'स्यान्निद्राशयनं स्वापः स्वप्नस्संवेशइत्यपि' इत्यमरः । जागरप्रतीपतया निद्रायाएव ग्राह्यत्वात्संध्यमिह नाभिप्रेतम् ॥ जाग्रतो नैवेत्युक्तौ अतिशब्दोऽनुषजनीयः। अशनानशनस्वप्नानां अतीत्यनेन विशेषितत्वात् जागरस्यापि तदेव विशेषणमुपादेयम् ॥ अन्यथाऽसङ्गतेः ॥

'जागृयाद्दशनाड्यस्तु निद्रा तु दशनाडिकाः । पश्चाज्जागरणं तद्व-द्दशनाड्यस्तु योगिनः' इति स्मृतेः॥ रात्रौ प्रथमतो दशघटिकापरिमिते काले जागरणं मध्यतस्स्वपनं पुनरपि दशघटिकापरिमिते जागरणमिति स्वप्नाव-बोधयोर्नियतकालत्वं (उ० दी०) ॥ 'रात्रेर्भागत्रय कृत्वा प्रबुद्धः प्रथमा-न्तयोः । प्रस्वपन् मध्यमे भागे योगयोग्यः प्रजायते' इत्युक्तेश्च ॥

(३) विहारचेष्टे ॥ 'विहारशब्दस्संचारपरः ॥ तन्द्रीपरिहारार्थे-विनोदपरोवा ॥ पारिशेष्यादौचित्याच्च चेष्टाशब्दार्थोऽत्र श्रमहेतुरायासः' इति देशिकः ।

विश्रान्त्यै संचारो विहारः इत्यर्थोऽपि निर्दिष्टः । 'योजनान्नपरंगच्छेत्' 'नगव्यूतेः परंगच्छेन्नग्रामे नगरे वसेत्' इत्याद्यभियुक्तवचनं विहारस्य नियतत्वं बोधयति॥ आरोग्यार्थं श्रमपरिहाराय वा नित्यकृत्यं व्यायाममाहुरा-युर्वेदिनः ॥ अत एव पाश्चात्यास्सायंप्रातरनायासेन पादक्रमाख्यविहारं नियमेन कुर्वते ॥

विहारः, विशेषेण हारः आहरणं इति व्युत्पत्त्या आह्रियमाणेषु विषयेषु उपभोगाय प्रवृत्तिरुच्यते इत्यपि स्यात्॥ विहारस्य युक्तत्वं नामात्यन्ता-सक्त्यत्यन्तपरिवर्जनवैधुर्यं ॥ (अ० गु०) भोजननिद्राश्रमकर्मनिरूपकेऽ-स्मिन्प्रकरणे विहारशब्दस्य संचारपरत्वमेव सुरसं भाति ॥

**यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।**
**निःस्पृहः सर्वकामेभ्यो युक्तइत्युच्यते तदा ॥१८**

वि० ॥ योगसंपूर्तिस्वरूपमाह यदेत्याद्यनेकश्लोकैः ॥ यदा विशेषेण नियतं विषयेभ्यः प्रत्याहृतं चित्तमात्मन्येवा-

वतिष्ठते सर्वकामेभ्यो निःस्पृहश्च यदा तदा युक्तो योगसंपूर्तिमानित्युच्यते इत्यर्थः ॥

शं० ॥ अथाधुना कदा युक्तो भवतीत्युच्यते। यदेति ॥ यदा विनियतं चित्तं विशेषेण नियतं संयतमेकाग्रतामापन्नं चित्तं हित्वा बाह्यचिन्तामात्मन्येव केवलेवतिष्ठते। स्वात्मनि स्थितिं लभतइत्यर्थः। निःस्पृहः सर्वकामेभ्यो निर्गता दृष्टादृष्टविषयेभ्यः स्पृहा तृष्णा यस्य योगिनः सयुक्तः समाहित इत्युच्यते तदा तस्मिन्काले ॥

रा० ॥ यदा प्रयोजनविषयं चित्तमात्मन्येव विनियतं विशेषेण नियतं निरतिशयप्रयोजनतया तत्रैव नियतं निश्चलमवतिष्ठते तदा सर्वकामेभ्यो निःस्पृहस्सन् युक्त इत्युच्यते योगार्हइत्युच्यते ॥

विचारः

प्रायोविरुद्धकामत्यागवत्त्वेसति भगवति सन्तुष्टचित्तत्वं स्थितप्रज्ञस्य लक्षणमिति यदुक्तं प्रजहाति यदा कामानित्यादिना तदिहापि स्मर्तव्यं॥ तत्र स्थितप्रज्ञलक्षणत्वेनोक्तमिह योगारूढलक्षणत्वेनोच्यते ॥ योगारूढस्स्यादपरोक्षज्ञानी अथवा न स्यात् ॥ प्रारब्धादिविशेषप्रतिबन्धेन यद्ययं नाद्याप्यपरोक्षदृक् तदापि कामवर्जनपूर्वकभगवदेकतुष्टत्वं नास्मिन्व्यभिचरति ॥ यतो योगसंपूर्त्याख्यध्यानयोगदशाया अपरोक्षाव्यवहितपूर्वावस्थात्वात्तदापि कामत्यागिना भगवति चित्तेन च भाव्यमेव ॥

श्लोके दुर्गमार्थः आत्मशब्द एवेत्यभिप्रयन्नाचार्यो भाष्ये तमेव व्याख्यातवान् ॥ 'आत्मनि भगवति' इति ॥ एतेन 'स्वात्मनि स्थितिं लभते' इति शाङ्करव्याख्यानमुपेक्ष्यं वेदितव्यं । स्वस्य मुमुक्षुणा ध्येयत्वायोगात् ॥ भगवद्विषयस्यैव ध्यानस्य योगशब्दमुख्यप्रतिपाद्यत्वात् ध्येयत्वेनविषयान्तरग्रहणमन्याय्यं ॥ 'भोक्तारं यज्ञतपसां सर्वभूतमहेश्वरं । सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति' इत्यादिबहुग्रन्थैः श्रीहरिज्ञानस्यैव सर्वोत्कृष्टत्वदर्शनात् ॥ एतेन प्रकृतिपुरुषविवेकज्ञानमेव कैवल्यमिति सांख्यपातंजलमतमप्युपेक्षितमवधेयं ॥

अयं श्लोकः साक्षात्कृतब्रह्ममात्रपरः इत्यादाय तत्वाद्वैतव्याख्यातारः केचित्संप्रज्ञातपरत्वमन्ये त्वसंप्रज्ञातपरत्वमाहुः ॥ तथाहि ॥ क्षिप्तमूढविक्षिप्तैकाग्रतानिरोधाख्यपंचभूमिष्वाद्यत्रयस्य योगबाह्यत्वाच्चरमोक्तद्वये एकाग्रत्वं संप्रज्ञातदशां निरोधोऽसंप्रज्ञातदशां बोधयतीति तैरखिलैरङ्गीकृतं दृश्यते ॥ शङ्कराचार्यभाष्ये 'विनियतं चित्तं' इत्येतत् 'एकाग्रतामापन्नं' इति व्याख्यातं । एतेन संप्रज्ञातावस्था श्लोकप्रतिपाद्येत्यस्याशयोऽवगम्यते ॥ नीलकण्ठमधुसूदनवेङ्कटनाथास्तु असंप्रज्ञातस्थयोगिनमाह पद्यमिति मन्यन्ते ॥

तथाहि मधुसूदनोऽवतारयति ॥ 'एवमेकाग्रभूमौ संप्रज्ञातसमाधिमभिधाय निरोधभूमावसंप्रज्ञातसमाधिं वक्तुमारभते' इति ॥ इम ग्रन्थमनुलिखतिस्म वेङ्कटनाथः ॥ आह नीलकण्ठः। 'निर्वाणपरमां शान्तिं प्राप्तस्य लक्षणान्याह—यदेत्यादिभिः षड्भिः' इति ॥

अत्र चिन्त्यते । इतः पूर्वं आसनाहारादिनियमप्रतिपादकेषु ग्रन्थेषु संप्रज्ञातसमाधिरुक्त इति निगमने गमकं न दृश्यते ॥ 'यदाहि' इति 'कूटस्थ' इति—'युंजन्नेव'मिति 'शान्तिं निर्वाणपरमां' इत्याद्युक्तिभिरसंप्रज्ञातावस्थाऽभिप्रेतेत्युक्तावनुपपत्तिर्न प्रदर्शिता । स्वयूथ्योऽपि नीलकण्ठः

'शान्तिं निर्वाणपरमां' इत्यनेनासंप्रज्ञातमादाय तल्लक्षणप्रपंचनपरतया प्रस्तुतं पद्यमवतारितवान् ॥ अतो यन्मधुसूदनेनोक्तं प्राक् संप्रज्ञातसमाधिरितः परमसंप्रज्ञातसमाधिरिति तन्न प्रत्याययति ॥

असंप्रज्ञातदशाविवक्षायां अद्वैतसाक्षात्कारपरव्याख्यानस्यानुकूल्यं पश्यन्त इव नीलकण्ठमधुसूदनादयो गीताक्षरेषु यत्रकुत्र वा तं प्रवेष्टुं यतमानास्स्वाभिलाषानुकूलं पदविशेषमन्वेषयन्ति स्म ॥ 'विनियतं चित्तं' 'आत्मन्येवावतिष्ठते' 'निःस्पृहः सर्वकामेभ्यः' इति तिस्रः उक्तयः दृश्यन्ते ॥ स्वाभिलषितं 'आत्मन्येवावतिष्ठते' इति प्रतीके प्रवेशयति आनन्दगिरिः ॥ तथाप्युक्तमनेन 'चित्तस्य हि कल्पितस्यात्मैवतत्व तत्पुनरन्यतस्सर्वतोनिवारितमधिष्ठाने निमग्नं तिष्ठतीति भावः' इति ॥ तथाच शुक्तौ यथा रजतस्य लयः एवं चित्तस्यात्मनि लयः इत्यस्य भावः ॥ अध्यासबोधकशब्दस्याभावादिदं क्लिष्टमुपेक्षणीयं ॥ चित्तस्यात्मन्यवस्थानमध्यासानध्याससाधारणसन्दिग्धाक्षरैरुपपादयति मधुसूदनः । यथोक्तं ॥ 'चित्त विगतरजस्तमस्कमन्तःकरणसत्वं स्वच्छत्वात्सर्वविषयाकारग्रहणसमर्थमपि सर्वतो निरुद्धवृत्तिकत्वादात्मन्येव प्रत्यक्चिति अनात्मोपरक्ते वृत्तिशाहित्येऽपि स्वतस्सिद्धस्यात्माकारस्य वारयितुमशक्यत्वाच्चितेरेव प्राधान्यान्न्यग्भूतं सदवतिष्ठते' इति ॥ दुर्गमार्थमिदं प्रपंचनं ॥ किन्नाम न्यग्भूतत्वं चित्तस्य ? ॥ चित्तं आत्मानं ध्यायतीत्यभिप्रेतं वा न वा ॥ आद्ये ऐक्यं चिन्तयतीति वा न्यग्भूतत्वेन चिन्तयति वा ॥ न ध्यायतीति पक्षे न्यक्करणं कीदृशं ? भिन्नत्वेसत्यप्राधान्यानुसन्धानमुत रजतवल्लयः इत्यादिसंशया न परिहृताः ॥

आत्मनीति सप्तमीप्रयोगो भेदनिबन्धन इति न्यायप्राप्तभियेव नीलकण्ठमधुसूदनवेङ्कटनाथास्तावन्निःस्पृहस्सर्वकामेभ्य इत्यत्राद्वैतविवक्षां पश्यन्ति ॥ आह नीलकण्ठः । 'सर्वकामेभ्यः जाग्रत्स्वप्नसबीजसमाधिषूपस्थितेभ्यः । ल्यब्लोपे पंचमी—सार्वात्म्यप्राप्त्यैव तान्प्राप्य तेषु निःस्पृहो

भवति ॥ तदा युक्तो निर्विकल्पकः ' इति ॥ अत्र सार्वात्म्यप्राप्तिः कथं शब्दार्थः स्यादिति चिन्त्य ॥ किंच ' विनियतं ' इत्यत्र ' एकाग्रतामापन्नं चित्तं ' इति शङ्करभाष्यमुल्लङ्घ्य असंप्रज्ञातमात्रोपादानाय यन्नीलकण्ठेनोक्तं ' एकाग्रताभूमेरपि निरूद्धं ' इति तदपि न प्रत्याययति ॥

' निःस्पृहस्सर्वकामेभ्यः ' इत्यत्र स्वाभिलपिताद्वैतसंग्रहाय कामशब्दो व्यवहारसामान्यपर इत्याह वेङ्कटनाथः । निःस्पृह इत्यनेन प्रपंचमिथ्यात्वधी-गर्भितसर्वव्यवहारवैतृष्ण्य उक्त इत्यभिप्रयन् पातंजलपरिभाषापुंजमाश्रित्य परापरवैराग्यलक्षणविभागपरीक्षाभ्यस्वाशामयं पारयति ॥ तथाहि ॥ ' यद्य-पि यमादीनि योगसाधनान्युक्तानि । तथापि वैराग्यमेवाष्टाङ्गयोगप्रवर्तकमन्त-रङ्गं योगसाधनं । तद्द्विविध अपरं परंचेति ॥ अपरमपि चतुर्विधं । यतमानं व्यतिरेकः एकेन्द्रियत्वं वशीकारश्चेति ॥ तत्र सारासारविवेकोद्योगो यतमान-वैराग्यं ॥ विवेकाभ्यासेनैतावन्तो दोषाः पक्का एतावन्तोऽवशिष्टा इति विवेचनं व्यतिरेकवैराग्य ॥ दृष्टानुश्राविकविषयप्रवृत्तेर्दुःखात्मत्वबोधेन तां परित्यज्य मनसः औत्सुक्यमात्रेणावस्थापनमेकेन्द्रियवैराग्य ॥ वितृष्णत्वं वशीकारवैराग्यं। तदिदमपरं वैराग्यमष्टाङ्गयोगप्रवर्तकत्वेन संप्रज्ञातस्यांतरङ्गं असंप्रज्ञातस्य तु बहिरङ्गं । तत्रान्तरङ्गन्तु परवैराग्यं सकलप्रपंचव्यवहारवैतृष्ण्यरूपमिति योग-शास्त्रमर्यादा ॥ तदेतत्परवैराग्यमिह निःस्पृह इत्यनेनोच्यते । सर्वकामेभ्यः सर्वव्यवहारेभ्य इत्यर्थः ' इति ॥

अत्रैतच्चिन्त्यं । सकलप्रपंचव्यवहारवैतृष्ण्यरूपं ' परं वैराग्यं ' इति परिभाषयोक्तमेव ' निःस्पृहः सर्वकामेभ्यः ' इति गीताक्षरैर्विवक्षितमित्यत्र गमकं न दृश्यते । ' कामेभ्यः ' इत्यस्य व्यवहारेभ्यइत्यर्थं कथं नामायम-शब्दार्थक्लेशभीरुरुपादत्त इति न ज्ञायते ॥ यत्पातंजले ' अपरं वैराग्यं ' इत्युक्तं वशीकारसंज्ञं वितृष्णत्वं किमितीह तन्निस्पृहइत्यनेन विवक्षां नार्हति ॥

किंच पातंजलशास्त्रे परं वैराग्यं ह्येवं प्रतिपादितं। सू० 'तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्' इति ॥ व्याख्यातमिदं। 'दृष्टानुश्राविकविषयदोषदर्शी विरक्तः पुरुषदर्शनाभ्यासात्तच्छुद्धिप्रविवेकाप्यायितबुद्धिर्गुणेभ्यो व्यक्ताव्यक्तधर्मकेभ्यो विरक्तः' इति ॥ इयमेवहि परवैराग्यावस्था 'प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेधः समाधिः' इति सूत्रिता ॥ पतंजलिर्हि त्रिगुणात्मिकप्रकृतेस्सकाशात्पुरुषविवेकमेव कैवल्यं मन्यते। पुरुषोहि तस्य नेश्वरः न वाद्वैताभिमतं परंब्रह्म ॥ सर्वप्रपंचव्यवहारमसत्वेन नहि स वदति ॥ अद्वैतराद्धान्ते तु सर्वात्मत्वप्राप्त्या प्रपंचव्यवहारेषु योगी निःस्पृहो भवेदित्युच्यते। कथमनयोरेकार्थता ॥ विवेकग्रहान्मोक्षः इत्येकः, विवेकनाशान्मोक्ष इत्यपरः। अनयोस्संवादः कथं सङ्गच्छते ॥ द्वैतवादीखलु पतंजलिः॥ तन्मते हि आत्मा निस्सुखानन्दोऽहंकारादिप्रकाशानुमेयोऽसङ्गोदासीनचिन्मात्रस्वरूपः। स च भोक्तैव केवलं न कर्ता ॥ भोक्तृशक्तिहीनं अचेतनं प्रधानं कर्तृशक्तिविधुरमात्मानं बन्धान्मोचयितुमन्धपंगुन्यायेन प्रवर्तते। प्रकृतिपुरुषयोर्विवेकाभावाद्बन्धः। विवेकज्ञानान्मोक्षः। परं वैराग्यमेव कैवल्यं इति वदति ॥ एवं आत्मस्वरूपमोक्षस्वरूपमोक्षसाधनप्रकारप्रधानसत्यत्व बन्धसत्यत्व प्रधानप्रवृत्तिविषये भिन्नपरिग्रहवतोः पातञ्जलाद्वैतराद्धान्तयोः 'परवैराग्य' मात्रे ऐकमत्यं दुर्घट भाति ॥ एवंसति सकुतूहलपातंजलकरावलंबे निमित्तं चिन्त्यम् ॥

'परवैराग्या'लंबी मार्गः वेङ्कटनाथाय मधुसूदनेन प्रदर्शितः। उक्तं हि मधुसूदनीये 'विनियतं, परवैराग्यवशाद्विनियतं सर्वशून्यतामापादितं चित्तं' इति ॥ अत्रसर्वशून्यतापत्तिर्न पतंजल्याभिमता द्रष्टव्या ॥

अत्र परसमयपरिभाषामालंब्य तत्र स्वाभिलाषितविशेषणप्रक्षेपाद्गीताक्षराणामशब्दार्थकल्पनादोषो व्यक्तः ॥

तस्माच्चित्तं नियम्य कामनां परित्यज्य यो भगवन्तं ध्यायेत् स युक्तः इति प्रतीतार्थएवाक्लिष्टो निरवद्यः ॥

**यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।**
**योगिनो यतचित्तस्य युंजतो योगमात्मनः ॥१९॥**

वि० ॥ योगसंपन्नः कथं तिष्ठतीत्यतआह । यथेति । वायुशून्यदेशस्थो दीपो यथा नेङ्गते न चलति सा उपमा दृष्टान्तः । कस्येत्यतउक्तं, योगिनइति ॥ आत्मनो योगं भगवद्विषयसमाधिं युंजतः कुर्वतः योगिनः यतचित्तस्येति ॥

शं० ॥ तस्य योगिनः समाहितं यच्चित्तं तस्योपमोच्यते यथेति । यथा दीपः प्रदीपः निवातस्थो निवाते वातवर्जिते देशे स्थितो नेङ्गते न चलति सोपमा उपमीयते अनयेत्युपमा । योगज्ञैश्चित्तप्रचारदर्शिभिः स्मृता चिन्तिता । योगिनो यतचित्तस्य संयतान्तःकरणस्य युञ्जतो योगमनुतिष्ठतआत्मनः समाधिमनुतिष्ठत इत्यर्थः ॥

रा० ॥ निवातस्थो दीपो यथा नेङ्गते—न चलति । अचलत्सप्रभस्तिष्ठति । यतचित्तस्य निवृत्तसकलेतरमनोवृत्तेर्योगिनः आत्मनि योगं युंजतः आत्मस्वरूपस्य सोपमा ॥

निवातस्थतया निश्चलसप्रभदीपवन्निवृत्तसकलेतरमनोवृत्तितया निश्चलो ज्ञानप्रभआत्मा तिष्ठतीत्यर्थः ॥

विचारः

प्रथमार्धस्स्फष्टार्थः । चेष्टायाश्चेतनधर्मत्वेन, दीपे तदयोगान्नेङ्गत इत्येतन्नचलतीति व्याख्येयं ॥ उपमीयते अनयेत्युपमा दृष्टान्तः ॥ तथाच निश्चलदीपो योगिचित्तस्य दार्ष्टान्तिकस्य दृष्टान्तत्वेनाभिप्रेत इति यावत् ॥ यथा दृष्टान्ते तावद्वातवर्जितत्वं नैश्चल्यं प्रकाशकत्वं च धर्माः तथा दार्ष्टान्तिके योगिचित्ते विषयेन्द्रियानाकृष्टत्वं एकाग्रत्वं भगवत्प्रकाशकत्वं चावधेयम् ॥

यतचित्तस्येत्यत्र यतंचतच्चित्तं चेति कर्मधारयः ॥ ऐतन चित्तं दार्ष्टान्तिकं इति गम्यते ॥ यतं चित्तं यस्येति विग्रहे तु दार्ष्टान्तिकालाभः स्यात् ॥ योगं युंजत इत्यनेन पौनरुक्त्यं च दोषः प्रसज्येत ॥

आत्मनः इत्यात्मशब्दः श्रीहरिपरः । आत्मनो योगं युंजत इति संबन्धः ॥ आत्मनः इति कर्मणि षष्ठी ॥ आत्मानं भगवन्तं विषयीकृत्येत्यर्थः ॥ योगिन इत्येवोक्तौ भवत्कर्मकमेवध्यानं कर्तव्यमित्यर्थो न सिध्यतीति, आत्मनो योगं युंजत इति विशिष्योक्तिः । 'योगिन आत्मनः' इत्यन्वयभ्रमव्युदासाय योगमित्युक्तं । अन्यथा आत्मशब्दो व्यर्थस्स्यात् योगिनः कदाप्यात्मत्वाव्यभिचारात् ॥

श्लोकप्रतिपाद्यदृष्टान्तदार्ष्टान्तिकनिरूपणे तावद्व्याख्यातृषु भावभेदो दृष्टः ॥ दीपनैश्चल्यं दृष्टान्तः चित्तस्थैर्यं दार्ष्टान्तिकं इत्येकः पक्षः । दीपो दृष्टान्तः मनः दार्ष्टान्तिकं इत्यपरः । दीपो दृष्टान्तः आत्मा जीवो दार्ष्टान्तिक इति तृतीयः ॥ किंच दार्ष्टान्तिकवाचकं पदं श्लोके श्रुतं वाऽध्याहरणीयं वेति चास्ति विप्रतिपत्तिः । श्रुतमिति पक्षेऽपि केनपदेन श्रुतमित्यत्र च भावभेदो दृश्यते ॥ सर्वमेतद्विचार्यं ॥

आत्मशब्दितो जीव एवोपमेयतया विवक्षित इति देशिको मन्यते ॥ " स्वयंप्रकाशज्ञानप्रभानिरस्तसमस्तवृत्त्यन्तरपरिशुद्धात्मस्वरूपप्रदर्शनार्थोऽयं दृष्टान्तः॥ ' योगिन आत्मनः' इति व्यधिकरणे षष्ठ्यौ ॥ प्रभायाश्च प्रतिधर्मोऽत्र ज्ञानं । आत्मनो निश्चलत्वं चात्र स्वप्रभाभूतज्ञानस्य विविधप्रसरणनिवृत्तिः । सा च बाह्यविषयेषु मनोवृत्तेरभावात् संसारदशायां च ज्ञानस्येन्द्रियद्वारैव प्रसरणात्" इत्याह ॥ अत्र वक्तव्यं । ' योगिन आत्मन' इति व्यधिकरणान्वये आश्रितेसति योगिन इत्यनेन ' योगं युंजत ' इत्यस्य पौनरुक्त्यं दुर्वार भवति ॥ आत्मनो निश्चलत्वं हि स्वतस्सर्वदा सिद्धं । चित्ताविक्षेपमादायेहात्मनैश्चल्यविवक्षायान्तु विशेषणोपसंक्रमणन्यायेन चित्तस्यैव दीपेनोपमितत्वं प्राप्यते ॥ तस्माद्भगवद्विषयकं योगमनुतिष्ठतश्चित्तं दीपसमं इति वाक्यार्थं विहायात्मस्वरूपस्य दीपोपमत्वकथनमरम्यं भाति ॥

दार्ष्टान्तिकं न श्रुतं किन्तु अध्याहार्यमित्यभिप्रैति शङ्करभाष्यटीकाकारआनन्दगिरिः ॥ ' उपमीयते ' इति तद्भाष्यप्रतीकमादाय स आह । ' योगिनो यथोक्तविशेषणवतः । चित्तस्थैर्यस्येति शेषः ' इति ॥ तथाच दीपनैश्चल्येन चित्तस्थैर्यमुपमितमित्यस्याशयोऽवगम्यते ॥

इतरे शाङ्करास्तु दार्ष्टान्तिकं अन्तःकरणं पद्ये श्रुतं च इति मन्यन्ते । तेषु त्वस्त्यवान्तरो भेदः । नीलकण्ठोत्कर्षदीपिकाकारौ यतं च तच्चित्तं चेति कर्मधारयग्रहणेन चित्तमाहतुर्दार्ष्टान्तिकं । मधुसूदनवेङ्कटनाथौ तु आत्मनः इत्यत्रात्मशब्दमन्तःकरणपरं मत्वा तदेव दार्ष्टान्तिकमाहतुः ॥

अत्र प्रथमं मधुसूदनपक्षोऽनूद्यते॥ यथोक्तं तेन ' योगिन एकाग्रभूमौ संप्रज्ञातसमाधिमतोऽभ्यासपाटवाद्यतचित्तस्य निरुद्धसर्वचित्तवृत्तेरसंप्रज्ञातसमाधिरूपं योगं निरोधभूमौ युञ्जतोनुतिष्ठतो य आत्मान्तःकरण तस्य निश्चलतया सत्वोद्रेकेण प्रकाशकतया च निश्चलो दीपो दृष्टान्तइत्यर्थः ।

आत्मनो योगं युञ्जत इति व्याख्याने दार्ष्टान्तिकालाभः ॥ सर्वावस्थस्यापि चित्तस्य सर्वदात्माकारतयात्मपदवैयर्थ्यं च ॥ नहि योगेनात्माकारता चित्तस्य संपाद्यते । किन्तु स्वतएवात्माकारस्य सतोऽनात्माकारता निवर्त्यत इति ॥ तस्माद्दार्ष्टान्तिकप्रतिपादनार्थमेवात्मपदं' इति ॥ एतेन 'योगिन' इत्येकाग्रता 'यतचित्तस्य' इति निरोधः योगइत्यसंप्रज्ञातदशा पर्वभेदक्रमादुक्ता इत्याशय- उक्तो भवति ॥ तथाच तद्रीत्या अन्तिमावस्थायां आत्मशब्दितमन्तःकरणं दीपवन्निश्चलं इति वाक्यार्थः ॥

इदं मधुसूदनीयं व्याख्यानं शङ्करभाष्यात्प्रमेयत्रये भिन्नं द्रष्टव्यं ॥ तथाहि ॥ (१) एकाग्रतामापन्नं चित्तं दीपसमं इति भाष्यं । निरोधभूमावन्तःकरणं दीपेनोपमितं इति मधुसूदनः (२) 'आत्मनो योगं युंजत' इति योजनायां दार्ष्टान्तिकालाभः इति मधुसूदनः । शेषपूर्त्या वा यतचित्तस्येत्यत्र कर्मधारयग्रहणेन वा दार्ष्टान्तिकं चित्तं भवतीति भाष्याशयः (३) आत्मनो योगं इति योजनायां योगिचित्तस्यात्माकारत्वप्रतिपादकं आत्मपदं व्यर्थं इत्याभिप्रैति मधुसूदनः । वैयर्थ्यं नेति भाष्यानुयायिनो वदन्ति ॥ इति ॥

मधुसूदनं निराहोत्कर्षदीपिकाकारः ॥ यथोक्तं । 'विवेकादियुक्तेन मनसाऽविद्यानिवृत्त्याऽऽत्मा स्वयमेव प्रकाशते इत्यर्थे मनसैवानुद्रष्टव्यमितिवत् योगेनानात्माकारतां चित्तस्य निवर्त्य स्वतस्सिद्धामात्माकारतां स्फुरणरूपां समाधिमनुतिष्ठत इत्यर्थके 'आत्मनो योगं युंजत' इति वाक्ये आत्मपदस्य सार्थक्यात् । अन्यथा आत्मसंस्थं मनः कृत्वेति वक्ष्यमाणात्मपदवैयर्थ्यप्रसङ्गात् । 'युंजन्नेव सदात्मान'मितिवत् आत्मनोऽन्तःकरणस्य समाधि निरोधमनुतिष्ठतोऽसंप्रज्ञातसमाध्यभिमुखस्येति भाष्यार्थसंभवेनात्मपदसार्थक्याच्च ॥ * * ॥ निश्चलताप्रतिपादक 'यत' पदसमभिव्याहारात् समीपत्वाच्चान्वययोग्यं चित्तपदं विहाय आत्मपदस्य दार्ष्टान्तिकपरत्वानौचित्यात् ॥ असंप्रज्ञातसमाधौ चित्तस्य कथमपि पृथगज्ञायमानत्वात् असंप्रज्ञातसमाध्यभि-

मुखस्य योगिनस्तत्सिद्धिपूर्वकाले यदेकाग्रीभूतं चित्तं तस्याय दृष्टान्तो नतु निरुद्धसर्ववृत्तेरसंप्रज्ञातसमाधिस्थस्य योगिनोऽन्तःकरणस्येति विद्वद्भिराकलनीयम्' इति ॥

एतेन मधुसूदनोक्तं दूषणत्रयं परिहृतं द्रष्टव्यं । आत्मपदं विहाय श्लोके दार्ष्टान्तिकबोधकमन्यत्पदं न दृश्यते इति माधुसूदनं दूषणं सुतरामलग्नमिति स्फुटं । चित्तस्यात्माकारत्वे स्वतस्सिद्धेऽपि योगः किन्नाम, विशेषत आत्माकारताप्राप्तिर्वा अनात्माकारतानिवृत्तिमात्रं वेत्यादिस्वव्यूहकलहस्समाधिस्वरूपभ्रममूल इत्युपेक्ष्यते ॥

ब्रह्मैक्यप्राप्तिस्समाधिरित्यादाय हि इमे परस्परं विवदन्ते । तदेवाप्रामाणिकमिति मूले कुठारोऽवगन्तव्यः । दीपसमं नैश्चल्यं चित्तस्यैकाग्रताभूमौ वा निरोधभूमौ वेति विप्रतिपत्तिश्चानुपयुक्ता ॥ पातंजलपरिभाषावलंबिनीयं विप्रतिपत्तिः । एकाग्रतैवाभिप्रेतेति शङ्कराचार्योत्कर्षदीपिकाकारनीलकण्ठाः मन्यन्ते । नैषा विवक्षिता किन्तु तदूर्ध्वगातिर्निरोधाख्येति मधुसूदनः । इमं पक्षं वेङ्कटनाथो निर्विचारमनुलिखितवान् ॥ अत्र सर्वेऽपि स्थूलदृश्वानो दृश्यन्ते । 'यतचित्तस्य' 'योगिनः' 'योगं युंजत' इति सामान्यशब्दाः पारिभाषिकार्थकतयैव व्याख्येया इति निर्बन्धस्य गमकादर्शनात् ॥ योगिनश्चित्तं निवातदीपवन्निश्चलं प्रकाशते इत्यर्थस्तु सुगमः । अधिकोंऽशस्तु 'भूमि' प्रभेदेषु अमुकाविवक्षितेत्यन्योऽन्यविवादो नीरसः ॥

अत्र विवदमानेषु व्याख्यातृषु गीतास्थात्मशब्दस्य भगवत्परत्वे सामञ्जस्यं केनापि नालोचितं ॥ अत एव श्रीमदाचार्यभाष्यं विप्रतिपन्नमेव लक्ष्यीकृत्य प्रवृत्तं 'आत्मनो भगवद्विषयं योगं' इत्यतिसंक्षेपेणेति द्रष्टव्यं ॥ संकुचितं साधुभाषितमेतत् ॥

---

**यत्रोपरमते चित्तं निरुद्धं योगसेवया ।**
**यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥२०**

वि० ॥ योगसेवया निरुद्धं चित्तं यत्र समाधावुपरमते बाह्यव्यापारहीनं भवति । यत्र चैव यस्मिन्नेव समाधियोगे आत्मना मनसा आत्मानं भगवन्तं पश्यन्नात्मनि देहे तुष्यति तोषमाप्नोति इत्यर्थः । यच्छब्दयोस्तामित्यग्रेऽन्वयः॥ एवमुत्तरत्रापि ॥

शं० ॥ एवं योगाभ्यासबलादेकाग्रीभूतं निवातप्रदीपकल्पं सत् यत्र यस्मिन्काले उपरमते चित्तमुपरतिं गच्छति निरुद्धं सर्वतोनिवारितप्रचारं योगसेवया योगानुष्ठानेन यत्र चैव यस्मिंश्चकाले आत्मना समाधिपरिशुद्धेनान्तःकरणेनात्मानं परं चैतन्यं ज्योतिःस्वरूपं पश्यन्नुपलभमानः स्वएवात्मनि तुष्यति तुष्टिं भजते ॥

रा० ॥ योगसेवया हेतुना सर्वत्र निरुद्धं चित्तं यत्र योगे उपरमते अतिशयितसुखमिदमिति रमते यत्र च योगे आत्मना मनसा आत्मानं पश्यन्नन्यनिरपेक्षमात्मन्येव तुष्यति ॥

विचारः

एतदारभ्य पद्यचतुष्टयमेकान्वयं । आद्यत्रिश्लोकीगतयच्छब्दानां चतुर्थगतेन 'तं' इत्यनेन संवन्धः ॥ यत्रेत्यनेन समाध्यवस्थोच्यते ॥ 'तं' समाधियोगं विद्धीति योजना ॥

'तं' विद्धीत्युक्त्या यत्रेति न काल उच्यते इति गम्यते। एतेन 'यत्र यस्मिन्काले' इति शाङ्करव्याख्यानं चिन्त्यं॥ विना शङ्कराचार्यतट्टीकाकारतदुत्कर्षदीपिकाकारान् अन्ये सर्वेऽपि 'तं विद्यात्' इत्यनेनान्वयं समालोच्य 'यत्र इत्यस्य कालवाचित्वं निषेधन्ति॥ शाङ्करवाक्योपपत्त्यर्थं तु तस्मिन्काले योगसिद्धिर्भवति' इति शेषपूरणं कृत्वा तं योगं विद्धि इत्यनेन योजयितव्यं। यत्रेतिकालबोधे स्वारस्यं च न ज्ञायते। अतः समाध्यवस्थामेवेतरे गृह्णन्ति न तु कालविशेषं॥ मधुसूदनः कण्ठरवेण शांकरपक्षं प्रत्याचष्टे। 'यत्र काले इति व्याख्यानमसाधु। तच्छब्दानन्वयात्' इति॥ वेङ्कटनाथो मधुसूदनं केवलमनुसरति॥ एवं स्थिते यत्रेति कालवाचित्वमनुपपन्नं इति स्फुटम्॥

दीपदृष्टान्तेनातीतश्लोके योगशास्त्रोक्तैकाग्रतादशा प्रतिपाद्याधुना निरोधदशापन्नामसंप्रज्ञातावस्थां वक्तु भगवानारभते इत्यानन्दगिरिश्शङ्कराचार्यभावमुपपादितवान्॥ मधुसूदनरीत्यात्वतीतश्लोकेऽपि निरोधानुबन्धिन्या असम्प्रज्ञातदशाया एवोक्तत्वेन, निरुक्तश्शाङ्करभावो नाङ्गीकृतः। अत आह। 'निरोधसमाधिं विस्तरेण विवरितुमारभते' इति॥ 'निरुद्धं' इति पदं पातञ्जल 'निरोधं' परामृशेदित्यानन्दगिरिव्याख्यानस्य तदनुकूलं स्यात्॥ मधुसूदनस्तु 'निरुद्धं' इत्येतदेवं व्याख्याति॥ 'निरुद्धं एकविषयवृत्तिप्रवाहरूपामेकाग्रतां परित्यत्क्वा निरिन्धनाग्निवदुपशाम्य निर्वृत्तिकतया सर्ववृत्तिनिरोधरूपेण परिणतं' इति॥

अस्मिन्नर्थे उत्कर्षदीपिकाकारो मधुसूदनं निराह॥ तथाहि 'यत्त्वसाधुवादिनोक्तं 'यत्र यस्मिन्पारिणामविशेषे योगसेवया योगाभ्यासपाटवेन जातेसति चित्तं निरुद्धमेकविषयकवृत्तिप्रवाहरूपामेकाग्रतां त्यक्त्वा निरिन्धनाग्निवदुपशाम्य निर्वृत्तिकतया सर्ववृत्तिनिरोधरूपेण परिणतं भवति यत्र च यस्मिंश्च परिणामेसति' इत्यादि। तत्रेदं वक्तव्यं। स चित्तपरिणामः कः

यस्मिन्सति चित्तं निरोधपरिणामं भजति । निरोधपरिणाम उतैकाग्रतापरिणामः । नाद्यः । यस्मिन्सति सर्ववृत्तिनिरोधरूपेण चित्तं परिणत भवतीति तस्य ततः पृथगुक्तेः । न द्वितीयः । तमन्तःकरणपरिणामं सर्वचित्तवृत्तिनिरोधरूपं योगं विद्यादिति परेणान्वयादिति स्वपरग्रन्थविरोधात् ॥ यस्मिंश्च परिणामेसतीति । अत्रापि विकल्पनीयं । अयं परिणामः किं पूर्वोक्तादन्य उत स एव ॥ आद्ये प्रथम 'यत्र' पदार्थैकार्थताभावः । न द्वितीयः । उक्तदोषात् ॥ एकाग्रतापरिणामेसति निरोधपरिणामस्तस्मिंश्च सति आत्मनात्मानं पश्यन्नात्मनि तुष्यतीति क्रमस्यौचित्याच्चेति दिक् ॥' इति ॥ एकाग्रतानिरोधयोर्भेदं विवक्षित्वा श्लोकाः प्रवृत्ता इत्यत्र ज्ञापकाभावेन यथा मधुसूदनस्तथोत्कर्षदीपिकाकारोऽपि स्थूलदृश्चावगम्यते इत्यलं पल्लवेन ॥

'उपरमते' इत्यनेन बाह्यव्यापारवैधुर्यमुच्यत इति विवृत्याशयः । एवं व्याख्याने 'उपरमते' 'निरुद्धं' इत्येतयोरैकार्थ्यप्रसङ्ग इति देशिको मन्यते । अतः "'उपरमते' अतिशयितसुखमिदमिति रमते । उपसर्गाणां नानार्थत्वादयमेवातिशयितार्थ उपपन्नः ॥ आसक्तिप्रतिपादनद्वारा तात्पर्येण वायमर्थस्सिध्यतीति भावः" इत्याह सः ॥ अत्र वक्तव्यं । निरुद्धं सदुपरमते इति पर्वभेदो विवक्षित इत्युक्तावनुपपत्तिर्न दृश्यत इति ॥ द्वितीयार्धे द्वितीयान्तं तृतीयान्तं सप्तम्यन्तं चात्मपदं वर्तते । तत्र 'आत्मना' इत्यस्य मनसेत्यर्थः प्रायशस्सर्वेषां सम्मतः । आत्मानं पश्यन्नात्मनि तुष्यतीत्यस्य स्वं पश्यन्स्वस्मिन्नेव तुष्यतीत्यर्थो रामानुजाचार्याभिमतो भाति । अत एवाह देशिकः 'आत्मनि परमात्मानमिति योजनातु जीवयोगविषयत्वादिहासङ्गता' इति ॥ इदं देशिककृतं दूषणमसङ्गतं ॥ आत्मनि देहे आत्मानं परमात्मानं पश्यन्नित्यर्थस्य निर्दुष्टत्वात् ॥ जीवयोगविषयत्वादिहासङ्गतेत्युक्तिर्दुर्गमा ॥ प्रकरणं जीवकर्तृकयोगपरमित्यभ्युपगम्यते ॥ जीवकर्मकयोगमभिधत्त इति तु नेष्टं । परमात्मन एव ध्येयत्वौचित्यात् ॥ विचारितमेतदतीतश्लोकयोर्द्रष्टव्यम् ।

आत्मान परब्रह्म तत्पदार्थं आत्मनि त्वंपदार्थे पश्यन्निति व्याख्याया-द्वैतं प्रवेशयत्यानन्दगिरिः ॥ आत्मनि अन्तःकरणे आत्मना स्वात्मना आत्मानं ब्रह्म पश्यन्नित्यादायाद्वैतमुपपादितवान् शङ्करानन्दः ॥ यथोक्तं । ‘किंच यत्र यस्यां चित्तपरिपाकविशेषदशायां अयं ब्रह्मविदुत्तम आत्मानि निर्मलान्तःकरणे व्योम्नि राकाचन्द्रबिंबवत्प्रकाशमान वृत्त्यारूढं चिदानन्दैकरसमात्मानं परं ब्रह्मात्मना स्वात्मना ब्रह्मैवाहमिति स्वस्वरूपत्वेन पश्यन् साक्षादपरोक्षीकुर्वन् तुष्यत्यानन्दति मुक्तः कृतार्थोऽस्मीति मोदते। ‘स मोदते मोदनीयं हि लब्ध्वा’ इति श्रुतेः’ इति ॥ प्रकारान्तरेणाह मधुसूदनः । ‘आत्मना रजस्तमोऽनभि-भूतशुद्धसत्वमात्रेणान्तःकरणेनात्मान प्रत्यक्चैतन्यं परमात्माभिन्नं सच्चिदानन्द-घनमनन्तमद्वितीयं पश्यन् वेदान्तप्रमाणजया वृत्त्या साक्षात्कुर्वन्नात्मन्येव परमानन्दघने तुष्यति न देहेन्द्रियसघाते न वा तद्भोग्येऽन्यत्र’ इति ॥

यत्रचैवेत्येव शब्दः आत्मानं इत्यनेन वा आत्मनीत्यनेन वा योजितो दृश्यते ॥ आत्मानमेव नतु देहादीनिति श्रीधरयोजना । आत्मन्येव इति योजना नीलकण्ठमधुसूदनरामानुजाचार्योक्ता ॥ पश्यन्नित्यनेन वा तुष्यती-त्यनेन वा योजनापि विवक्षानुसारं संभाव्यते ॥

आत्मना मनसा आत्मनि देहे आत्मानं भगवन्त पश्यन्निति श्रीमदा-चार्यव्याख्यानेन संसारदशायां भगवदपरोक्षज्ञानं मानसं इत्यर्थः स्वदेहान्त-रेव योगिनो भगवन्तं पश्यन्तीत्यर्थश्च स्पष्टीकृतः ॥ आत्मन्येवात्मना तुष्टः इत्युक्तं स्थितप्रज्ञलक्षणं संवादतया स्मरणीयम् ॥

सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्वतः ॥ २१

वि० ॥ यत्र समाधौ स्थितः बुद्धिग्राह्यं अनुभवेन वेद्यं अतीन्द्रियं इन्द्रियाग्राह्यं आत्यान्तिकमतिशयितं सुखं वेत्ति अनुभवति । यत्र योगे स्थितोऽयं तत्वतोभगवद्रूपान्न चलति तमित्यन्वयः ॥

शं ॥ किंच सुखमिति । सुखमात्यन्तिकमत्यन्तमेव भवतीत्यात्यन्तिकं । अनन्तमित्यर्थः । यत्तद्बुद्धिग्राह्यं बुद्ध्यैवेन्द्रियनिरपेक्षया गृह्यतइति बुद्धिग्राह्यमतीन्द्रियमिन्द्रियगोचरातीतमविषयजनितामित्यर्थः । वेत्ति तदीदृशं सुखमनुभवति ॥ यत्र यस्मिन्काले नचैवायं विद्वानात्मस्वरूपे स्थितस्तस्मान्नैव चलति तत्वतस्तत्वस्वरूपान्न प्रच्यवत इत्यर्थः ॥

रा० ॥ यत्तदतीन्द्रियमात्मबुद्ध्येकग्राह्यमात्यन्तिकं सुखं यत्र च योगे वेत्ति अनुभवति, यत्र च योगे स्थितः सुखातिरेकेण तत्वतस्तद्भावान्न चलति ॥

विचारः

तुष्यतीत्यतीतश्लोकप्राप्तं योगिनःपरमानन्दं वर्णयति सुखमित्यादिना ॥ यत्र समाधिदशायां सुखं अनुभवति यत्र च समाधिदशायां स्थितो भगवद्रूपान्न चलति तं विद्यात् योगं इत्यन्वयः ॥

बुद्धिग्राह्यं अतीन्द्रियं आत्यन्तिकं यत्सुख तत् सुखं तत्र यस्मिन्समाधौ वेत्तीति योजनामपश्यन्तः केचित् "सुखमात्यन्तिकं यत्र बुद्धिग्राह्यमतीन्द्रियं" इति प्रथमार्धं पठन्ति ॥ 'यत्' इति प्रसिद्धपाठेनैव विवक्षितार्थनिर्वाहे यत्रेति पाठग्रहणं व्यर्थम् ॥

"यत्र" इत्यस्य द्वितीयार्धगतपदस्य पूर्वत्रोत्तरत्र चान्वयो द्रष्टव्यः । यत्र सुखं वेत्ति यत्रच तत्वतो न चलतीत्यन्वयः ॥

केचित् 'यत्र' इत्यनेन सुखस्य परामर्शमभिप्रयन्तः यत्र सुखे स्थित-स्सन् तत्वतो न चलतीति योजयन्ति ॥ इदमरम्यं । यत्रोपरमत इत्यादिश्लोक-त्रयगतयच्छब्दानां तं विद्यादिति चतुर्थगतेन 'तं' इत्यनेनैवान्वयस्यो-चितत्वात् ॥

आत्यन्तिकं इति सुखस्य विशेषणं भगवदपरोक्षेण जायमानं सुखं वि-लक्षणमतिशयितं इति बोधयति ॥ अन्तमतिक्रम्य वर्तमानं आत्यन्तिकं ॥ "समाधिनिर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखं भवेत् । न शक्यते वर्णयितु गिरा तदा स्वयं तदन्तःकरणेन गृह्यते" इति तत्सुखं कैश्चित्परै-र्वर्णितम् ॥

एतत्सुखं बुद्धिग्राह्यं अतीन्द्रियमित्युक्तं गीतायां ॥ अतीन्द्रियत्वे बुद्धि-ग्राह्यत्वविरोध, इत्याशक्य समाहितं शांकरैः 'अतीन्द्रियत्वं नाम विषयाजनि-तत्वं । बुद्धिग्राह्यत्वन्तु इन्द्रियनिरपेक्षस्वानुभवगम्यत्वं" इति ॥ रामानुजाचार्य-स्तु विरोधं प्रकारान्तरेण परिहरति । तन्मते बुद्धिरिहात्मबुद्धिर्विवक्षिता ॥ आत्मा जीवः ॥ विविक्तात्मबुध्द्यैव खलु तन्मते विवक्षितमनन्तं सुखं लभ्यते ॥ अतः बुद्धिग्राह्यं इत्येतत् "आत्मबुध्द्येकग्राह्यं" इत्ययं व्याख्याति ॥ अहो देहात्म-विवेकस्य महिमा यस्सर्वस्मिन्नपि प्रकरणे कापिलपातञ्जलसमयइव रामानुजा-चार्येण सुदृढमाश्रितः ॥ अतीन्द्रियं इत्यनेन बाह्येन्द्रियाण्यादाय बुद्धिग्राह्यं

इत्यनेनानुभवमात्रगम्यत्वोपादाने विरोधपरिहारस्य संभावात् विविक्तात्मबुद्धेरिह ग्रहणमनुचितं भाति ॥

केचित्त (उ. दी.) ‘ दृश्यते त्वग्रया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ’ इति श्रुतिमुदाहृत्य बुद्धिग्राह्यत्वं उपपादयन्ति ॥ इदमसारम् । योग्यनुभवारूढं हि सुखमत्र प्रस्तुतं ॥ नह्यत्र सुखं इति परंब्रह्मोक्तं । श्रुतिस्त्वग्रया सूक्ष्मया बुध्या परब्रह्मदर्शनं खल्वाह ॥ यत्सुखं योगी अनुभवति तत्सुखं तु तदनुभवमात्रगम्यं न स्वेन वा परैर्वा वर्णयितुं शक्यं इत्यर्थ एव बुद्धिग्राह्यमित्यनेनोक्तो ज्ञायते ॥

वेङ्कटनाथस्तु ‘ सुखं अतीन्द्रिय ’ इत्येतन्निरूपणावसरे ‘ यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ’ इति श्रुतिमुदाहरति ॥ इदं चासारं । वाङ्मनसागोचरं वस्तु परं ब्रह्म नतु ज्ञानिसुखं ॥ ज्ञानिसुखं परब्रह्माभिन्नं इति भ्रममूलमिदं व्याख्यानमित्युपेक्ष्यते

‘ आत्यन्तिकं इति ब्रह्मसुखस्वरूपकथनं। अतीन्द्रियं इति विषयसुखव्यावृत्तिः । बुद्धिग्राह्य इति सौषुप्तसुखव्यावृत्तिः । सुषुप्तौ बुद्धेर्लीनत्वात् । समाधौ निर्वृत्तिकायास्तस्यास्सत्त्वात् ’ इत्युक्तं मधुसूदनीये ॥ इदं च चिन्त्यं॥ सुखग्राहकतयोक्तो बुद्धिशब्दवाच्योऽत्रानुभव इत्युक्तावेव स्वारस्यात् ॥ अत एवानन्दगिरिः ‘ बुद्धिशब्दस्स्वानुभवविषयः ’ इत्याह ॥

‘ न चलति तत्वतः ’ इति गीतोक्तौ, तत्वशब्दो ब्रह्मत्वं वक्तीति केचिच्छांकराः । तत्वात् भगवद्रूपात् इति श्रीमदाचार्यव्याख्यानं ॥ ब्रह्मत्वप्राप्तिरेवाप्रामाणिकीत्यतः कुतो ब्रह्मत्वादचलनं संभाव्यते ॥ किंच यद्यचालितब्रह्मत्वप्राप्तिरभिप्रेता या धर्ममेघ इति वा निर्बीजसमाधिरिति वा पातंजलपरिभाषानुरूपार्था तर्हि गीतोक्तानि सुखस्य बुद्धिग्राह्यत्वं अनुभवापरपर्यायबुद्धेस्सुखग्राहित्वं इत्यादीनि विरुद्धानि प्रसज्येरन् ॥ निर्बीजसमाधौ

हि न कस्यापि प्रतिभासः । व्युत्थानायोग्यब्रह्मत्वप्राप्तौ च योगी निर्विशेषब्रह्मावतिष्ठते ॥ तस्य क्व बुद्धिः क्व सुखं, क्वानुभवः ? ॥

'तत्वतो न चलतीति' ब्रह्मापरोक्षी चिरं यथायोग्यं भगवद्रूपध्यानं न जहातीत्यर्थे तु, सुखादिकं उपपद्यते ॥ तद्यथार्थं मुख्यं च न गौणं ॥ अनुभवश्चोपपन्नः । एव सति यद्भक्तानां भगवध्याने परमानन्दवर्णनं भागवतादिषु तदपि साधु भवति ॥ किंच व्युत्थानानर्हस्समाधिर्विवक्षित इत्यत्र नियामकं च न दृश्यते ॥ योगस्य हि सर्वदानुष्ठेयत्वं नोक्तं शास्त्रेषु 'षड्भिर्मासैस्तु युक्तस्य नित्ययुक्तस्य देहिनः । आनन्दः परमो गुह्यः सम्यग्योगः प्रवर्तते' इति हि मैत्रायणी श्रुतिः ॥

भगवध्यानं यच्छ्रीमदाचार्येणास्मिन्प्रकरणे "आत्मनः" "आत्मान" "तत्वतः" इत्यादिशब्दैरुक्तत्वेनावधारितं तदेव ध्येयं ॥ आश्वमेधानुगीतापर्वाणि प्रोक्तं किंचित्पठ्यते ॥ तथाहि अ० ९९ ॥

"नत्वसौ चक्षुषा ग्राह्यो नच सर्वैरपीन्द्रियैः ।
मनसैव प्रदीपेन महानात्मा प्रदृश्यते ॥ ४८ ॥

सर्वतः पाणिपादान्तस्सर्वतोऽक्षिशिरोमुखः ।
सर्वतः श्रुतिमाँल्लोके सर्वमावृत्य तिष्ठते ॥

आत्मानमालोकयति मनसा प्रहसन्निव ।
तदेवमाश्रयं कृत्वा मोक्षं याति ततो मयि ॥

षण्मासान्नित्ययुक्तस्य योगः पार्थ प्रवर्तते" ॥ इति ॥ तस्मात् 'तत्वं' इह न जीवकर्मकध्यानं न वा ब्रह्मत्वं किन्तु भगवद्रूपमेवेति सिद्धं ॥

"तत्वतो न चलति इत्येतस्य व्याख्यानावसरे नीलकण्ठस्तु योगिनो ध्यानमतात्वकमिति भावं प्रकाशयति ॥ 'बुद्धितादात्म्याध्यासकाले चलतीव

भाति ॥ परन्तु तत्वतो न चलति ॥ तथाच श्रुतिः 'ध्यायतीव लेलायतीव' इतीवशब्दं प्रयुञ्जाना ध्यानादेरतात्त्विकत्वं दर्शयति ॥ बुद्धौ ध्यायन्त्यां ध्यायतीवेति लेलायन्त्यां लेलायतीवेति श्रुत्यर्थः" इति ॥

अत्र वक्तव्यं । उक्तं उदाहृतश्रुतिव्याख्यानं असत् । ईश्वरो जीवं ध्यायतीवेत्यर्थस्य श्रुतौ विवक्षितत्वात् ॥ योगी समाधौ चलतीव भाति वस्तुतो न चलतीत्यर्थो बहुक्लिष्टः सुतरामशब्दार्थ इत्युपेक्ष्यः ॥ ध्यानं करोति सुखं अनुभवतीत्यादिप्रमेय बहुग्रन्थेनोक्तं वक्ष्यमाणं च सर्वं मिथ्या इति मध्येमार्ग त्र्यक्षरेण पदैकेन भगवानपमार्जितवानिति भावकथनं प्रकरणविरुद्धं अयुक्तं चेत्यलम् ॥

**यं लब्ध्वाचापरं लाभं मन्यते नाधिकं ततः ।**
**यस्मिन्स्थितो न दुःखेन गुरुणापि विचाल्यते॥२२**
**तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ।**
**स निश्चयेन योक्तव्यो योगो निर्विण्णचेतसा ॥२३**

वि० ॥ यं योगं लब्ध्वा च ततोऽपरं लाभमधिकं न मन्यते यस्मिंस्थितो गुरुणापि दुःखेन दुःखहेतुना न विचाल्यते ॥

तं दुःखसंयोगवियोगं दुःखसंयोगेन वियुज्यमानं । दुःखसंयोगस्य वियोगो यस्मादिति वा । वियुज्यतेऽनेनेति वियोगः । करणे घञ् । दुःखसंयोगस्य वियोगइति वा । योगसं-

ज्ञितं विद्यात् ॥ संयोगपदेन न केवलमुत्पन्नदुःखं नाशयति किंतूत्पत्तिमेव निवारयतीति सूचयति ॥ स योगः समाधिः । निर्विण्णचेतसा विषयविरक्तमनसा निश्चयेन योक्तव्योऽवश्यं कर्तव्यएव मुमुक्षुणेत्यर्थः । मुमुक्षोर्ध्यानायोगव्यवच्छेदार्थोऽयं निश्चयशब्दः ॥ अयोगव्यवच्छेदविधानार्थमेव उद्धरेदित्यत्र विहितस्यात्र पुनर्विधानं ॥

शं० ॥ किंच यं लब्ध्वा यमात्मलाभं लब्ध्वा प्राप्य चापरमन्यल्लाँभान्तरं ततोऽधिकमस्तीति न मन्यते न चिन्तयति । किंच यस्मिन्नात्मतत्वे स्थितो दुःखेन शस्त्रनिपातादिलक्षणेन गुरुणा महतापि न विचाल्यते ॥ २२ ॥

यत्रोपरमते इत्यारभ्य यावद्भिर्विशेषणैर्विशिष्टआत्मावस्थाविशेषो योगउक्तः तं विद्याद्विजानीयाद्दुःखसंयोगवियोगं दुःखैस्संयोगो दुःखसंयोगस्तेन वियोगो दुःखसंयोगवियोगः ॥ तं दुःखसंयोगवियोगं योगइत्येव संज्ञितं विपरीतलक्षणेन विद्यात् ॥ विजानीयादित्यर्थः । योगफलमुपसंहृत्य पुनरन्वारंभेण योगस्य कर्तव्यतोच्यते निश्चयानिर्वेदयोर्योगसाधनत्वविधानार्थं । स यथोक्तफलो योगो निश्चयेनाध्यवसायेन योक्तव्योऽनिर्विण्णचेतसा ॥ न निर्विण्णमनिर्विण्णं किंतच्चेतस्तेन निर्वेदरहितेन चेतसा चित्तेनेत्यर्थः ॥

रा० ॥ यं योगं लब्ध्वा योगाद्विरतस्तमेव काङ्क्षमाणो नापरं लाभं मन्यते ॥ यस्मिंश्च योगे स्थितो विरतोऽपि गुणवत्पु-

त्रवियोगादिना गुरुणापि दुःखेन न विचाल्यते ॥ तं दुःखसंयोगवियोगं दुःखसंयोगप्रत्यनीकाकारं योगशब्दाभिधेयं विद्यात् ॥ स एवं रूपो योग इत्यारंभदशायां निश्चयेनानिर्विण्णचेतसा हृष्टचेतसा योगो योक्तव्यः ॥

विचारः

समाधियोगं लब्ध्वा तदपेक्षयाऽधिकं लाभान्तरं यो न मन्यते स योगी ॥ आत्मानं भगवन्त पश्यन्यतस्सतुष्टः तत्वतो भगवद्रूपाद्यतो नायं चलति च अतो लाभान्तरमधिकं न मन्यते ॥ अतीतश्लोकयोरस्यतोषउक्तः । प्रकृतश्लोके तस्येतोऽप्यधिकलाभाशा वा दुःखक्षोभो वा न विद्यते इत्युच्यते ॥ अतीतश्लोकयोर्यत्रेत्युक्तस्य यच्छब्दस्य प्रकृते यं यस्मिन्नित्युक्तस्य यच्छब्दस्य च तं विद्यादित्युत्तरश्लोकस्थेन तच्छब्देनान्वयो द्रष्टव्यः ॥

'यत्र' यस्मिन्काले इति शङ्करभाष्यं असाध्विति मधुसूदनेन दूषितमिह स्मर्तव्यं । यत्रशब्दो न कालवाचकोऽपित्ववस्थाविशेषपरः इति मधुसूदनाशयः । एवमेवान्यैस्सर्वैरपि प्रायो व्याख्यातं दृश्यते ॥

लाभान्तरान्वेषणाभावस्य महादुःखहेतुभिरप्यचलत्वस्य च कारणं आत्यन्तिकसुखाभिव्यञ्जकभगवद्दर्शनमिति ज्ञेयं ॥ नहि सर्वोत्कृष्टभगवल्लाभादन्योऽस्ति विचिन्त्यो लाभस्तावदिह वाऽमुत्रवा ॥

यं लब्ध्वेति योगलाभस्योक्तावऽपि परमात्मदर्शनलाभोऽत्र मुख्यो भाति ॥ यं समाधिं तत्कार्यमात्मलाभं वा लब्ध्वेति व्याख्यानं निरवद्यम् । यच्छब्देनात्मदर्शनग्रहणे कार्यकारणयोरभेदनिर्देशो विवक्षितः ॥

आत्मदर्शनस्य निरतिशयमाहात्म्यवर्णनावसरे वक्ति शङ्करानन्दः । 'आत्मव्यतिरिक्तस्य सर्वस्याऽपि पदार्थस्य मायिकत्वेनासत्त्वात्तुच्छत्वात्सो-

पद्रवाद्दुःखबीजत्वान्मिथ्यात्वाच्च धर्मादेर्लाभं सन्तो न लाभाय मन्यन्ते' इति ॥ अत्र वक्तव्यं । मायिकत्वमिथ्यात्वादिकं न गीताक्षरगम्यं किन्तु स्वोत्प्रेक्षामूलम् ॥ धर्मादेरसत्त्वमादाय तल्लाभापेक्षया ब्रह्मलाभस्य परत्ववर्णने ब्रह्मण परत्वं न सिद्ध्यति ॥ धर्मादिसत्यपदार्थलाभात् ब्रह्मलाभस्य परत्वे हि ब्रह्मणउत्कर्षोऽभिव्यज्येत । इति ॥

संभावितलाभान्तरप्रदर्शनावसरे वक्ति शङ्करानन्दः ॥ 'ननु ब्रह्मविष्ण्वादिलोकप्राप्तिस्तु विदुषो लाभएवेति चेन्न ॥ सत्यलोकवैकुण्ठादेरपि मायिकत्वेनोक्तदोषवत्तया मिथ्यात्वाविशेषात्तल्लाभस्तत्स्वामित्वलाभोऽप्यलाभ एव । 'आत्मलाभान्नपरं विद्यते' इति स्मृतेः' इति ॥ अत्र च वक्तव्यम् । सत्यलोकवैकुण्ठादेर्मायिकत्वं मिथ्यात्वं च भ्रममूलं ॥ वैकुण्ठप्राप्तिश्च विदुषोऽलाभएवेति यदुक्तं तदप्रामाणिकम् । मुक्तैःप्राप्यलोकत्वाद्वैकुण्ठस्य ॥

शङ्कराचार्यभाष्यरीत्या 'यथा दीप' इति श्लोकेन समाध्यन्तर्भूता एकाग्रता उक्ता यत्रोपरमते इत्यारभ्य सार्धश्लोकद्वयेन समाध्यन्तर्भूतोत्तरावस्था निरोधसंज्ञिता उक्तेति विवेकः ॥ मधुसूदनवेङ्कटनाथयोरभिप्रायस्तु 'निरोध' एवोक्तश्लोकेषु सर्वत्र निरूपित इति ॥

एकाग्रता वा निरोधो वा तथ्यमित्यास्तां विचारः ॥ एकाग्रतानिरोधयोः पारिभाषिकभेदं पुरस्कृत्य श्लोकाः न प्रवृत्ता इत्यर्थे प्रागेव निरूपितं द्रष्टव्यम् ॥

'यं लब्ध्वे'ति श्लोकव्याख्याने रामानुजाचार्यः प्रदर्शयति कंचिद्विशेषं ॥ समाधियोगदशायां बाह्यानुसन्धानविधुरायां लाभान्तरप्रतिसन्धानस्यावकाशाभावात् यदा योगी योगाद्विरतः तदा लाभान्तरं नाधिकं मन्यते दुःखेन न विचाल्यते इति तदभिसन्धिः ॥ तथाच यं लब्ध्वा तस्माद्विरतस्सन् इति प्रथमार्धे यस्मिन्स्थित्वा तस्माद्विरतस्सन् इति द्वितीयार्धे च पठनीयं इत्युक्तं भवति ॥

'गुरुणापि दुःखेन न विचाल्यते' इत्यनेन शीतवातमशकादिक्षुद्रोपद्रवादूरीकृताः कैमुत्येन ॥

'तं विद्या'दिति पद्ये 'दुःखसंयोगवियोगं' इत्येतद्विचार्यं ॥ ननु वियोगोहि ध्वंसः । तस्य योगसंज्ञा कथं सङ्गच्छते इत्येकः संशयः । 'दुःखवियोगं' इत्यनेनैव चारितार्थ्ये संयोगशब्दस्य किं सार्थक्यं इत्यपरः ॥ उच्यते । करणेघञ् इत्यादाय वियुज्यते अनेनेति व्युत्पत्त्या योगविशेषणत्वं वियोगस्योपपन्नं ॥ 'योगो भवति दुःखहे'त्युक्तमेव विवृतमित्यनुसन्धेयं ॥ संयोगशब्दस्य व्यर्थइत्यापाततः प्रतीयमानस्य सार्थक्यन्तु न केवलमुत्पन्नं दुःखं नाशयति अपितूत्पत्तिमेव निवारयतीत्यर्थलाभएव ॥ व्यर्थं सत्किंचिज्ज्ञापयतीति न्यायेनात्र संयोगपदाधिक्यात् वियोगशब्दस्य निवारणार्थकत्वं उपपद्यते । अकर्तरिच कारके संज्ञायां इति कर्तृभिन्नकारकमात्रे घञो विधानात् प्रकृते वियोगशब्दस्य निवारणार्थकत्वेन संज्ञात्वात् दुःखनिवारको योग इति लभ्यते ॥

वियोगस्य योगसंज्ञां अनुपपन्नां पश्यन् मधुसूदनस्तु 'दुःखवियोगमिव संतं' इति व्याख्यातवान् ॥ 'योगसंज्ञितं वियोगशब्दार्हमपि विरोधिलक्षणया योगशब्दवाच्यं विद्यात् । नतु योगशब्दानुरोधात्कंचित्संबन्धं प्रतिपद्येत' इति च तेन निरूपणं कृतम् ॥

रामानुजाचार्यमते अभावपदार्थानङ्गीकारात् घटध्वंसस्य भावान्तरभूतमृद्रूपत्वेन वियोगस्य योगसंज्ञा सुगममुपपादिता । अतएव तद्भाष्यं 'दुःखसंयोगवियोगं दुःखसंयोगप्रत्यनीकाकारं' इति । उपपादितमेतद्देशिकेन— 'वियोगः असंबन्धः अभावः स च भावान्तरं इति ज्ञापनायाह 'दुःखसंयोगप्रत्यनीकाकारं' इति । दुःखसंयोगस्य वियोगो यत्रेति व्यधिकरणबहुव्रीहौ फलितोक्तिरियं' इति ॥

संयोगशब्दस्य सार्थक्यं विना श्रीमध्व प्रायशो नान्यव्याख्यातृभिः प्रदर्शितं ॥ श्रीधरस्तु किंचिदत्र यतते । ‘ दुःखस्य संयोगेन स्पर्शमात्रेणापि वियोगो यस्मिंस्तमवस्थाविशेषं ’ इत्याह ॥

“ सनिश्चयेने ” ति द्वितीयार्धे ‘ निर्विण्णचेतसा ’ इतिपदविभागो वा अनिर्विण्णचेतसेति वेत्यस्ति विप्रतिपत्तिः । अनिर्विण्णचेतसेति पक्षं शाङ्कररामानुजाचार्यैश्चाश्रयन्ते । आद्यःपक्षः श्रीमध्वाभिमतः ॥

‘ अनिर्विण्णे ’ ति पक्षमाश्रित्योपपादयति मधुसूदनः : ‘ एतावता कालेन योगो न सिद्धः किमतः परं कष्टमित्यनुतापो निर्वेदः । तद्रहितेन चेतसा । इहजन्मनि जन्मान्तरे वा सेत्स्यति किं त्वरयेत्येवं धैर्ययुक्तेन मनसेत्यर्थः । तदेतद्गौडपादा उदाजह्रुः ‘ उत्सेक उदधेर्यद्वत्कुशाग्रेणैकबिन्दुना । मनसो निग्रहस्तद्वद्भवेदपरिखेदतः ’ ॥ इति । उत्सेक उत्सेचनम् । शोषणाध्यवसायेन जलोद्धरणमिति यावत् । अत्र सप्रदायविद आख्यायिकामाचक्षते ॥ कस्यचित्किलपक्षिणोऽण्डानि तीरस्थानि तरङ्गवेगेन समुद्रोऽपजहार । स च समुद्रं शोषयिष्याम्येवेति प्रवृत्तःस्वमुखाग्रेणैकैकं जलबिन्दुमुपरि प्रचिक्षेप । तदा च बहुभिः पक्षिभिर्बन्धुवर्गैर्वार्यमाणोऽपि नैवोपरराम । यदृच्छया च तत्रागतेन नारदेन निवारितोऽप्यस्मिन्जन्मनि जन्मान्तरे वा येनकेनाप्युपायेन समुद्रं शोषयिष्याम्येवेति प्रतिजज्ञे । ततश्च दैवानुकूल्यात्कृपालुर्नारदो गरुडं तत्साहाय्याय प्रेषयामास समुद्रस्त्वज्ज्ञातिद्रोहेण त्वामवमन्यत इति वचनेन ॥ ततो गरुडपक्षवातेन शुष्यन्समुद्रो भीतस्तान्यण्डानि तस्मै पक्षिणे प्रददौ ” इति ॥

अनिर्विण्णचेतसेति पदच्छेदं द्रढयति देशिकः । “ निर्विण्णचतसेति पदच्छेदे संसारे तापत्रयेवेत्यध्याहारस्स्यात् । तत्तु सप्रयोजने योजनान्तरे संभवति न युक्तं । तस्मादनिर्विण्णचेतसेति पदच्छेदः ‘ मनसा क्लिश्यमानस्तु समाधानं च कामयेत् । अनिर्वेदं मुनिर्गच्छन् कुर्यादेवात्मनो हितम् ’ इति ह्युच्यते (मनुः) । अतोविरक्त्युपयुक्तोऽन्यः । अयं त्वन्यादृशः ” इति ॥

'निर्विण्णचेतसा विरक्तमनसा' इति विवृत्याचार्यव्याख्यानं। निर्विण्णचेतसा योगो योक्तव्य इत्यन्वयः ॥ अभ्यासवैराग्याभ्यां योगस्संपादनीय इति प्रसिद्धेः पातंजलोक्तेश्च वैराग्यस्य विधानं नासंगतं मन्तव्यं ॥ निर्विण्णेति पदविभागमनुसृत्य निर्वेदशब्दस्य वैराग्यार्थकत्वं नीलकण्ठस्यापि सम्मतं। यथाह। 'यद्वा 'शान्तोदान्तउपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येत्' इति श्रुतिविहितं श्रुत्यन्तरदृष्टं श्रद्धावित्तपदोपेतं शमादिषट्कमत्र क्रमतो विधियते। तत्र 'निश्चयेन' इति गुरुवेदवाक्यादौ फलावश्यंभावलक्षणा श्रद्धात्र निश्चयपदेन गृह्यते। तथा निर्विण्णचेतसेति वैराग्येण द्वन्द्वसहिष्णुत्वलक्षणा तितिक्षा विधीयत इति ज्ञेयम्' इति ॥ अत्र निर्विण्णशब्दव्याख्यानं नीलकण्ठोदितमस्माक सम्मतं। निश्चयपदार्थविचारस्त्वग्रे करिष्यते ॥

अद्वैतव्याख्यातृषु कश्चिन्निर्विण्णचेतसेति पदच्छेदमाश्रित्योत्तरश्लोकस्थेन त्यक्त्वेत्यनेन योजयति ॥ इदं तस्य व्याख्यानं। 'निर्विण्णचेतसेत्येवं पदमुत्तरशेषभूतं द्रष्टव्यं। तथाह्यापातनिका—नन्वभ्यस्यतां नाम योगः। तत्रापि यदाहि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते स सर्वसंकल्पसंन्यासीत्यनेन स्वार्थ संकल्पमूलकामनात्यागे इन्द्रियनिग्रहे प्राप्तेऽपि, प्राप्तयोगैश्वर्यो दीनानाथसंदर्शनजनितानुकंपापरवशस्तेषां हितकामनया संकल्पपूर्वं बाह्यं कर्माचरेदित्याशंक्याह—निर्विण्णेति। सर्वान्कामान्स्वीयानिव परसंबन्धिनोऽपि संकल्पप्रभवान् निर्विण्णेन चेतसा अशेषतस्सहसंकल्पैः त्यक्त्वेति स्वसंसारनिर्वेदवतः परार्था प्रवृत्तिरत्यन्तासंगतेति। तथा समंततः सर्वविषयेभ्यो मनसा सहेन्द्रियग्रामं नियम्यैव योगो योक्तव्यः' इति ॥ अत्रोच्यते। प्राप्तयोगैश्वर्यो दीनानाथादिष्वप्यनुकम्पां त्यजेदित्यभिसन्धिरयुक्तः। निरस्तोऽप्ययमुत्कर्षदीपिकायां। तथाहि। 'क्त्वाप्रत्ययेन कामत्यागादेर्योगाभ्याससाधनत्वस्य स्पष्टप्रतीत्या योगसिध्युत्तरभाव्यैश्वर्यवशादनुकम्पापरवशोऽपि स्वी-

यानिव परकीयानपि त्यक्त्वेत्यादिवर्णनस्यानौचित्यात् ॥ शनैश्शनैरित्यादिना मनस उपरमस्य वक्ष्यमाणत्वेनात्र मनसा विवेकादियुक्तेनेति करणपरत्ववर्णनस्यैवौचित्याच्च' इति ॥ साधुरयमुत्कर्षदीपिकाकृन्निरासः ॥ यतो निर्विण्णचेतसेति पदविभागं समीचीनमादायापि परकीयानुकम्पादिकुसृष्टया क्लिष्टाभिसन्धिः कल्पितः ॥ विरक्तमनसा योगोऽभ्यसनीयः इति योजनायां समीचीनायामुत्तरश्लोकानुधावनं नीरसं च ॥ यत्तु देशिकेनोक्तं 'निर्विण्णचेतसेति पदच्छेदे संसारे तापत्रयेवेत्यध्याहारस्स्या' दिति तन्न प्रत्याययति ॥ विरक्तिर्हि ससंबन्धिका ॥ योग्यतया वैषयिकसुखादिकस्य ग्रहणायेषदध्याहारोऽपि न दोषाय ॥

'निश्चयेन' इति गीतास्थं पदंच विप्रतिपन्नार्थं दृश्यते ॥ निश्चयोऽत्र नियम इति श्रीमध्वाशयः । अयोगव्यवच्छेदे निश्चयशब्द इति ज्ञेयं । मुमुक्षौ योक्तव्यत्वायोगो व्यवाच्छिद्यते । तथाच योगोऽभ्यसनीय एव नतु परित्याज्य इति यावत् ॥

परेतु निश्चयशब्दं गुरुवेदादिवाक्यानि तथ्यानि इहजन्मनि जन्मान्तरे वा योगस्सेत्स्यतीत्याद्यध्यवसायपरमाहुः ॥ निश्चयानिर्वेदयोर्योगसाधनत्वाभिप्रायेण तेषां व्याख्यानं रचितं द्रष्टव्यम् ॥

**सकल्पप्रभवान्कामास्त्यक्त्वा सर्वानशेषतः ।**
**मनसैवेन्द्रियग्रामं विनियम्य समंततः ॥ २४ ॥**

**वि० ॥ किंच संकल्पेन एतदर्थमिदं कुर्यामिति संकल्पपूर्वकानुष्ठानेन प्रभवो जन्म येषां तान् कामान्विषयभोगान्स-**

र्वानशेषतो निश्शेषतः त्यक्त्वा इन्द्रियग्रामं इन्द्रियसमूहं समन्ततः सर्वतः मनसैव विनियम्य । इन्द्रियनियमनं न मनसोऽन्येनेति ज्ञापनायैवकारः ॥

शं० ॥ किंच संकल्पप्रभवान् संकल्पः प्रभवो येषां कामानां ते संकल्पप्रभवाः कामाः ॥ तांस्त्यक्त्वा परित्यज्य सर्वानशेषतो निर्लेपेन । किञ्च मनसैव विवेकयुक्तेनेन्द्रियग्राममिन्द्रियसमुदायं विनियम्य नियमनं कृत्वा समन्ततः समन्तात्॥

रा० ॥ स्पर्शजास्संकल्पजाश्चेति द्विविधाः कामाः । स्पर्शजाः शीतोष्णादयः । संकल्पजाः पुत्रक्षेत्रादयः ॥ तत्र संकल्पप्रभवाः स्वरूपेणैव त्यक्तुं शक्याः तान्सर्वान्मनसैव तदनन्वयानुसन्धानेन त्यक्त्वा स्पर्शजेष्ववर्जनीयेषु तन्निमित्तहर्षोद्वेगौ त्यक्त्वा समन्ततः सर्वस्माद्विषयात् सर्वमिन्द्रियग्रामं विनियम्य ॥

विचारः

'स निश्चयेन योक्तव्यो योगो निर्विण्णचेतसा' इत्यन्वारंभेण योगस्य कर्तव्यत्वमुक्तं । निर्वेदस्य एवं प्रसक्तस्य प्रकारनिरूपणमिह क्रियते ॥

'अथ ममकारपरित्यागादिकं प्राग्विप्रकीर्णोक्तमखिलमिदानीं सुखग्रहणायेह सौकर्यप्रदर्शनाय च सङ्कलय्य योगदशापर्यन्ततया स्मार्यते सङ्कल्प- इत्यादिभिः श्लोकैः' इत्यवतारयति देशिकः ।

'शमदमोपरमसमाधानानि क्रमेण श्लोकद्वयेन विधत्ते' इति नीलकण्ठस्यावतारिका ॥ प्रथमार्धेनान्तरिन्द्रियनिग्रहलक्षणश्शमउक्तः । द्वितीयार्धेन बाह्येन्द्रियनिग्रहलक्षणो दमइति तदभिप्रायः ॥

सर्वान्कामान् ॥ सर्वविषयान् कामान् इत्यर्थः । कामाः इच्छाविशेषाः ॥ यद्वा कामान् काम्यमानानित्यर्थः ।

'सर्वान्' 'अशेषतः' इति पदद्वयस्यसार्थक्यमन्वेषणीयं ॥ न केवलं सर्वे कामास्सामन्यतस्त्याज्याः किंत्वेकैकोऽपि कामः संपूर्ण त्याज्य इति श्रीमध्वाशयः । स्वल्पोऽपि कादाचित्कोऽपि कामो यथा नावशिष्टो भवेत्तथेति भावः ॥ अशेषतः शेषाभावेनेत्यर्थः । वासनोच्छेदपूर्वकं इति वा ॥ 'परित्यक्तेऽपि तैले लेपरूपेण पात्रे शेषस्तिष्ठति यथा तथा कामेषु त्यक्तेष्वपि विषयेषु रञ्जनारूपेण कामशेषो यथा न स्यात्तथा' इति शङ्करानन्दोपपादनम् ॥

कामांस्त्यक्त्वा अशेषतश्च त्यक्त्वा इति चकाराध्याहारेण देशिकस्समाधत्ते । केचन विषयाः निश्शेषत्यागार्हाः अन्येतु निश्शेषत्यागानर्हा इति विभागमपेक्ष्य निश्शेषत्यागार्हान् कामान सर्वान शेषराहित्येन त्यक्त्वेत्युक्तमिति तदाशयः ॥ अतएव स्पर्शजास्सङ्कल्पजाइति भेदेन कामाना द्वैविध्यमुक्त्वा पुत्रक्षेत्रादिसङ्कल्पजकामानां निश्शेषत्यागं शीतोष्णादिस्पर्शजकामानां स्वरूपेणत्यागाभावात्सशेषत्यागेऽपि हर्षोद्वेगादित्यागादेव स त्यागःपूर्णः इति रामानुजाचार्य आह ॥

अभीष्टसिद्धये इदमित्थमेव कार्यमित्येवं रूपो मनोव्यापारः संकल्पः॥ विना संकल्पं इष्टसिद्धिर्न भवति ॥ अतएवोक्तं "काम जानामि ते मूलं संकल्पाज्जायसे किल । न त्वां संकल्पयिष्यामि समूलो न भविष्यसि" इति भारते ॥ "संकल्पमूलः कामो वै यज्ञास्संकल्पसंभवाः । व्रतानियमधर्माश्च सर्वे संकल्पजास्स्मृताः" इतिच ॥ नित्यनैमित्तिकादौ कर्मणि संकल्पविधिर्मानसः वाचिकः कायिकश्च धर्मशास्त्रे निरूपितः ॥ 'मनसा संकल्पयति वाचा अभिलषति कर्मणा चोपपादयति' इत्युक्तं हारीतस्मृतौ ॥—

"शुक्तिशंखाश्महस्तैश्च कांस्यरूप्यादिभिस्तथा ।
संकल्पो नैव कर्तव्यो मृण्मये न कदाचन ॥
गृहीत्वौदुंबरं पात्रं वारिपूर्णं गुणान्वितं ।
दर्भत्रयं साग्रमूलं फलपुष्पतिलान्वित ॥
जलाशयारामकूपे सकल्पे पूर्वदिङ्मुखः ।
साधारणे चोत्तरास्य ऐशान्यां निक्षिपेज्जलं" ॥

इति भविष्यत्पुराणोक्तस्संकल्पविधि. ॥ संकल्पस्य शास्त्रविहितत्वे तत्त्याग: कथ घटते इति स्याच्छंका ॥ उच्यते । एतदर्थमहमिदंकुर्यामिति कर्तृत्वभोक्तृत्वादौ स्वस्वातन्त्र्यभ्रमसूलश्चित्तव्यापारविशेषोऽत्र संकल्प उच्यते ॥ यद्वा अशोभने समीचीनत्वकल्पन संकल्पः ॥ तथाच शोभनाध्यासप्रभवान् विषयाभिलाषान् विचारजन्याशोभनत्वनिश्चयेन त्यक्त्वेति यावत् । ध्यान-योगप्रकरणत्वेन निष्कामकर्मणामपि बहिष्कारो विवक्षितः ॥ अतश्च सर्वथा सकल्पत्यागो नायुक्तः ।

मनसैवेतिपदं पूर्वस्थेन त्यक्त्वेत्यनेनोत्तरगतेन नियम्येत्यनेन च काकाक्षिन्यायेन योज्यते ॥ मनसैव कामांस्त्यक्त्वा मनसैवेन्द्रियग्रामं विनि-यम्य इति योजना ॥ मनसैव निग्रहश्शक्यो नान्येनेत्येवकारार्थः ॥ 'कर्मे-न्द्रियाणि संयम्य य आस्ते मनसा स्मरन् । इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते ॥ इति न्यायोऽत्रानुसन्धेयः ॥ कीलादिबाह्यनिर्बन्धो नेन्द्रियनिग्रहं संपादयेदपितु मनसा निग्रह एवेति यावत् ॥ मनसैवेति स्वरूपकथन ॥ विवेकयुक्तत्वज्ञापनाय मनसैवेत्युक्तिरिति परे अभिप्रयन्ति ॥ 'इन्द्रियैर्मनसा संयोगाकरणमेवेन्द्रियनियमनमिति मनसैवेति पदेन सूचितं' इति शंकरा-नन्दः ॥

समन्ततो विनियम्योपरमेदित्युत्तरेणान्वयः । समन्तत. समन्तात् सर्व-स्मात् विषयसमूहात् ॥ एतन्निरूपणावसरे वेङ्कटनाथ आह । 'समन्तत-

इत्यनेन देवतादर्शनादेरपि नियन्तव्यतोच्यते ' इति ॥ इदं चिन्त्यं । समाधिप्रतिकूलविषयेभ्यो नियमनस्यैव विवक्षितत्वात् ॥

---

**शनैश्शनैरुपरमेद्बुध्द्या धृतिगृहीतया ।**
**आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत्**
**॥ २५ ॥**

वि० ॥ मनश्च धृतिगृहीतया धैर्योपेतया धारणया गृहीतया वशीकृतयेति वा बुद्ध्या शनैश्शनैरुपरमेत् । विषयेभ्यो व्यावर्तयेत् । भगवति रमेतेति वार्थः । किंचात्मसंस्थं भगवन्निष्ठं मनः कृत्वा । बुद्ध्येत्यनुषङ्गः । भगवतोऽन्यन्न किंचिदपि चिन्तयेत् ॥

शं० ॥ शनैः शनैर्न सहसोपरमेदुपरतिं कुर्यात् कया। बुद्ध्या किं विशिष्टया धृतिगृहीतया धृत्या धैर्येण गृहीतया धैर्येण युक्तयेत्यर्थः । आत्मानि संस्थितमात्मैव सर्वं न ततोऽन्यत्किंचिदस्तीत्येवमात्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥ एष योगस्य परमोऽवाधिः ॥

रा० ॥ शनैःशनैर्धृतिगृहीतया विवेकविषयया बुद्ध्या सर्वस्मादात्मव्यतिरिक्तादुपरम्य आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥

विचारः

कामांस्त्यक्त्वा इन्द्रियग्रामं मनसा विनियम्य उपरमेत् इत्यन्वयः ॥ उपरमेत् विषयेभ्यो मनसउपरमं कुर्यात् । उप आत्मसमीपे रमेत् रमेत रतिं कुर्यात्, इत्यर्थद्वयं ज्ञेयं ॥ 'मनसैवेन्द्रियग्रामं विनियम्ये' त्युक्ते मनो निग्रहएवकथंस्यादिति शङ्कायां शनैरिति पद्यं प्रवृत्तं ॥ धृतिगृहीतया बुद्ध्या विषयेभ्यो मनसउपरमउक्तः । तथाच मनोनिग्रहे बुद्धेः कारणत्वमुक्तं भवति ॥

त्वरया साहसेन वा मनस्स्वास्थ्यं न लभ्यते किन्तु मन्दं मन्दं आभ्यासएव सिद्धिसंपादकइत्यतउक्तं शनैश्शनैरिति ॥

धृतिगृहीतयेत्यत्र धृतिरखिन्नता अवश्यकर्तव्यतानिश्चयः इति परव्याख्यानम् । 'एतेन पूर्वोक्तानिर्वेदनिश्चयौ दर्शिता' विति मधुसूदनः । 'स निश्चयेन योक्तव्य' इत्यत्र निश्चयशब्दोऽन्यथास्माभिर्व्याख्यातो द्रष्टव्यः ।

तत्र अनिर्विण्णचेतसेति पदच्छेदः निर्वेदः खेदः इति पराशयः । अयं च विचारितः प्रागेव ॥ 'धृत्या यथा धारयते मनः प्राणेन्द्रियक्रियाः । योगेनाव्यभिचारिण्या धृतिस्सा पार्थ सात्विकी' इत्युक्तलक्षणा धृतिरत्र ग्राह्या भाति ॥ सा खलु धारणासंज्ञिता दृश्यते ॥ अतएव विवृत्तौ व्याख्यातं 'धृतिगृहीतया धैर्योपेतया धारणया वशीकृतये' ति ॥

"आत्मानं रथिनं विद्धि शरीरं रथमेव च ।
बुद्धिन्तु सारथिं विद्धि मनःप्रग्रहमेव च" ॥ इति ॥ श्रुतौ प्रग्रहोपमितमनसस्स्थैर्यं सारथिभूतबुद्ध्यधीनं इति ज्ञायते । बुद्धिस्तु रथिकाधीना । यदि स्वामी धैर्येण बुद्धिं वशीकृतवान् तादृश्या बुद्ध्या च मनो यदि दृढं गृहीतं तदा इन्द्रियाणां विषयेषु संचारो निरुद्धइति श्रुतिगीतयोस्समानार्थत्वं संभवति ॥

यथानुकूल पातञ्जलपरिभाषां ये अपेक्षन्ते तत्तोषायेह धारणाध्यान-समाधयो विवक्षितास्स्युरित्युक्ते बाधकं नेति सूच्यते । तथाहि । 'देशबन्ध-श्चित्तस्यधारणा' इति योगसूत्रं III—1॥ 'धृति.' इति गीतापदं धारणामाह॥ 'नाभिचक्रे हृदयपुण्डरीके मूर्ध्नि ज्योतिषि नासिकाग्रे जिह्वाग्रे इत्येवमादिषु देशेषु चित्तस्य वृत्तिमात्रेण बन्धो धारणेति वृत्तिकारः ॥ "तत्र प्रत्ययैकता-नता ध्यानं" इतिसूत्रं III—2 ॥ तस्मिन्देशे ध्येयालंबनस्य प्रत्ययस्यै-कतानता सदृशप्रवाहः प्रत्ययान्तरेणापरामृष्टो ध्यानम्' । इति वृत्तिः ॥ इदमुक्तं गीतायां 'आत्मसस्थं मनःकृत्वा' इत्यनेन ॥ 'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः' इति सूत्रं III 3 ॥ 'ध्यानमेव ध्येयाकारनिर्भासं प्रत्ययात्मकेन स्वरूपेण शून्यमिव यदा भवति ध्येयस्वभावावेशात्तदा समा-धिरित्युच्यते' इति वृत्तिः । इदं 'न किञ्चिदपि चिन्तयेत्' इत्यनेन सूचितं ॥ 'त्रयमेकत्र संयमः' इति सूत्रं III—4 ॥ वृत्तिः 'तदेतद्धारणाध्यानसमाधि-त्रयमेकत्र संयम । एकविषयाणि त्रीणि साधनानि संयम इत्युच्यते । तदस्य त्रयस्य तान्त्रिकी परिभाषा संयम इति' ।

'तज्जयात्प्रज्ञालोकः' इति सूत्रं III—5 ॥ 'तस्य संयमस्य जया-त्समाधिप्रज्ञायाः भवत्यालोको यथायथासंयमः स्थिरपदो भवति तथातथा समाधिप्रज्ञा विशारदी भवति' इति वृत्ति.॥

एतेन धारणाध्यानसमाधयो गीतायामिहोक्ता इत्यङ्गीकारे न बाधकं दृश्यते ॥

आत्मसंस्थं इत्यत्रात्मा भगवान् श्रीहरिर्विवक्षितः ॥ नकिञ्चिदपि इति आत्मान्यवस्तुचिन्तनं प्रतिषिद्धं ॥ एवमेवाह रामानुजाचार्यः। केचित्सर्व-चिन्तनं वर्जयेत् इति व्याचक्षते ॥ तान्प्रत्याहाभिनवगुप्ताचार्यः । 'यत्त्वन्यै-र्व्याख्यातं न किञ्चिदपि चिन्तयेदिति तन्नास्मभ्यो रुचितं । शून्यवादप्रसङ्गात्' इति॥ साधूक्तमेतत् ॥

आत्मसंस्थमित्युक्तावपि आत्मनो दृश्यत्वं नोक्तं किंत्वनात्मव्यावृत्तिरेवाभिप्रेतेत्यद्वैतराद्धान्तः ॥ 'दृश्यतेत्वग्रया बुद्ध्या' 'आत्मावा अरे द्रष्टव्यः' इत्यादीनामेवमेवोपपत्तिं कल्पयन्ति । अनात्मवृत्तिनिरोधे सत्यात्मप्रकाशस्य स्वत एव मेघाच्छादनापगमे सूर्यप्रकाशस्येव संभवाभिप्रायेण दृश्यत्वादिवाक्यानि प्रवृत्तानीति वदन्ति ॥ उपपादितमेतन्मधुसूदनेन ॥ 'ननु शान्तात्मन्यवरुद्धस्य चित्तस्य वृत्तिरहितत्वेन सुषुप्तिवददर्शनहेतुत्वमिति चेन्न । स्वतस्सिद्धस्य दर्शनस्य निवारयितुमशक्यत्वात् । तदुक्तं । 'आत्मानात्माकार स्वभावतोऽवस्थितं सदा चित्तं । आत्मैकाकारतया तिरस्कृतानात्मदृष्टि विदधीत' इति ॥ यथाघट उत्पद्यमानस्स्वतो वियत्पूर्ण एवोत्पद्यते जलतण्डुलादिपूरणं तूत्पन्ने घटे पश्चात्पुरुषप्रयत्नेन भवति । तत्र जलादौ निस्सारितेऽपि वियन्निस्सारयितु न शक्यते मुखपिधानेऽप्यन्तर्वियदवतिष्ठत एव तथा चित्तमुत्पाद्यमानं चैतन्यपूर्णमेवोत्पाद्यते । उत्पन्ने तु तस्मिन्मूषानिषिक्तद्रुतताम्रवत्सुखदुःखरूपत्वं भोगहेतुधर्माधर्मसहकृतसामग्रीवशाद्भवति । तत्र घटदुःखाद्यनात्माकारे विरामप्रत्ययाभ्यासेन निवारितेऽपि निर्निमित्तश्चिदाकारो वारयितुं न शक्यते । ततो निरोधसमाधिना निर्वृत्तिकेन चित्तेन संस्कारमात्रशेषतयातिसूक्ष्मत्वेन निरुपाधिकचिदात्ममात्राभिमुखत्वाद्वृत्तिं विनैव निर्विघ्नमात्मानुभूयते । तदेतदाहात्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् इति ॥ आत्मनि निरुपाधिके प्रतीचि संस्था समाप्तिर्यस्य तदात्मसंस्थं सर्वप्रकारवृत्तिशून्यं स्वभावसिद्धात्माकारमात्राविशिष्टं मनः कृत्वा धृतिगृहीतया विवेकबुद्ध्या संपाद्यासंप्रज्ञातसमाधिस्थस्सन् किञ्चिदपि आत्मानमनात्मानं वा न चिन्तयेत् न वृत्त्या विषयीकुर्यात् । अनात्माकारवृत्तौ हि व्युत्थानमेव स्यात् । आत्माकारवृत्तौ च संप्रज्ञातः । इत्यसंप्रज्ञातसमाधिस्थैर्याय कामपि चित्तवृत्तिं नोत्पादयेत्' इति ॥ अत्रोच्यते ॥

(१) 'दृश्यतेत्वग्रया'—'द्रष्टव्यः' इत्यादिस्पष्टप्रमाणानां यथाश्रुतार्थं परित्यज्यानात्मनिरोधमात्रपरतया व्याख्यानमतिक्लिष्टं ॥

(२) 'आत्मसंस्थ' इति गीताक्षराणि च क्लेशेन व्याख्यातानि ॥ आत्मनो दृश्यत्वाभावे तादृशप्रयोगस्यानुपपन्नत्वात् ॥

(३) 'आत्मसंस्थ' इत्यनेन योगशास्त्रोक्तप्रशान्तवाहितैवोच्यते इति वेङ्कटनाथोऽभिप्रैति । प्रशान्तवाहिता योगशास्त्रे ह्युक्ता 'तत्र प्रशान्तवाहिता संस्कारात्' इति सूत्रं. III–10 ॥ 'निरोधसंस्काराभ्यासपाटवापेक्षा प्रशान्तवाहिता चित्तस्य भवति तत्संस्कारमान्द्ये व्युत्थानधर्मिणा संस्कारेण निरोधधर्मः संस्कारोऽभिभूयते' इति वृत्तिः । यदि आत्मसंस्थत्व नाम प्रशान्तवाहितैव, तर्हि 'शनैश्शनैरुपरमेत्' इत्यनेन गतार्थतास्फुटा ॥ गीतायां हि उपरम उक्तः । स एवहि प्रशान्तवाहिता ॥ अनन्तरमात्मन्येकाग्रता आत्मसंस्थमित्यनेनोक्ता ॥ यदि उभयत्रानात्मनिवृत्तिरेवाभिप्रेयते तदैकस्य वैयर्थ्यं दुर्वारं ॥ योगशास्त्रेऽपि प्रशान्तवाहितानिरूपणानन्तर 'सर्वार्थैकार्थतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः'। 'ततः पुनः शान्तोदयौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणामः' इति सूत्राभ्यां—ईश्वरप्रणिधानरूपैग्रतानिरूपिता दृश्यते ॥ अतः अनात्मव्यावृत्तिरेव सर्वत्राभिप्रेतेत्युपपादनं न केवलं गीताक्षरविरुद्ध किन्तु वेङ्कटनाथमधुसूदनाद्यभिलषितयोगशास्त्रविरुद्धं चेत्युपेक्ष्यते॥

(४) यस्तु मधुसूदनेन 'आत्मानात्माकारं' इति श्लोकउदाहृतः ॥ स स्वयूथ्येन केनचिद्रचितो न श्रुतिस्मृतिसम्मत इत्युपेक्ष्यः । यस्तु घटे वियदिव चित्ते चैतन्यं स्वतस्सिद्धमित्युपपादितं तेन किं साध्यते । नानेन विवक्षितार्थसिद्धिर्भवति ॥ स्यान्नाम चित्तं चैतन्यपूर्णं । किमनेन ॥ नह्यात्मा अनुभवकर्ता वाऽनुभवयोग्यो वाङ्गीकृतःपरैः । हीरकवत्प्रकाशमानस्स्वेनान्येन वा भावयितुमशक्यस्सन् चित्ते वान्यत्र वा आस्ते इत्येतावता चित्तस्यात्मसंस्थत्वं न लभ्यते इति गीताक्षराण्युपपादितप्रक्रियायाविरुद्धानि भान्ति ॥

(५) आत्मसाक्षात्कारो न वृत्तिरूपः अपितु चैतन्यरूप इति चाप्रामाणिकं ॥ मुक्तेःपूर्वं भगवदपरोक्षस्य मानसत्वात् ॥

(६) यच्चात्मसंस्थं इत्यारभ्य न किंचिदपि चिन्तयेदित्यंतस्यैकवाक्यत्वाभिप्रायेणासंप्रज्ञातावस्थाऽनेनोच्यते इति मधुसूदनेन व्याख्यातं तन्नीलकण्ठीयविरुद्ध। नीलकण्ठो हि वक्ति। 'तदेवमात्मसंस्थं मनः कृत्वेति संप्रज्ञातसमाधिरुक्तः। तत्रापि पूर्वाभ्यासवशाच्चित्तस्य द्रष्टृदृश्योपरागो वासनामयो भातीति तन्निवारणेनासम्प्रज्ञातसमाधिमाह न किंचिदपि चिन्तयेदिति। ध्यातृध्यानध्येयविभागमपि नस्मरेत्किन्तु अखण्डैकरससंविदात्मना सुषुप्तवत्तिष्ठेदित्यर्थः' इति ॥ अस्याशये वाक्ययोर्भिन्नत्वं स्फुटं। स्वप्नइव मनसः आत्मसंस्थत्वं सुषुप्ताविव कस्याप्यचिन्तनमिति नीलकण्ठाभिसन्धिः ॥ निरंकुशत्वाद्व्याख्यानयोः उत्प्रेक्षावैचित्र्येण तन्मूलो भेदो द्रष्टव्यः ॥

किंबहुना। यः श्रुतिस्मृत्यादिप्रमाणशतैः प्रतिपादित आत्मसाक्षात्कारो भगवद्दर्शनापरपर्यायः त अनात्मनिरोधपरतयैव निरूपयन्तः श्रुतहाना श्रुतकल्पनदोषभाज इत्यलं प्रपञ्चेन ॥

'शनैश्शनैरुपरमेत्' इत्यत्र 'इन्द्रियेभ्यःपराह्यर्थाः' इति श्रुति 'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञानआत्मनि। ज्ञानं महति यच्छेत्तद्यच्छेच्छान्तआत्मनि' इति श्रुतिं चोदाहृत्य तयोस्स्वमतानुकूलमर्थं च कल्पयित्वा विषयेन्द्रियमनोऽहंकाराणां आत्मनि लयमाह मधुसूदनः ॥ 'शनैश्शनैरिति क्रमशो भूमिकाचतुष्टयजयमभिप्रयन्नाह। 'तत्र गवादिष्विव वाङ्निरोधः प्रथमा भूमिः। बालमुग्धादिष्विव निर्मनस्त्वं द्वितीया। तन्द्र्यादिष्विवाहंकारराहित्यं तृतीया। सुषुप्ताविव महत्तत्वराहित्यं चतुर्थी। तदेतद्भूमिचतुष्टयमपेक्ष्य शनैश्शनैरुपरमेदित्युक्त' इति ॥ अत्रोक्तभूमिकानिरूपणावसरे अहकारतत्वस्य महत्तत्वाभेदं वदति मधुसूदनः। सांख्याद्युक्ततत्वलक्षणानि च

तिरस्कृत्य स्वोत्प्रेक्षयाऽहंकारतत्वं निरूपितं च ॥ विस्तरभिया नैतदिह विचार्यते ॥ इन्द्रियाणां मनसि मनसः अहंकारे अहंकारस्यात्मनि लयः इति क्रमः 'इन्द्रियेभ्य:पराह्यर्था' इति श्रुत्युक्तक्रमो नेति श्रुतिगीतयोरसाम्यं परिहरणीय ॥ गीतास्थबुद्धिशब्दोऽहंकारपरइति तु न वक्तुं शक्यते ॥ बुद्ध्येत्यस्य विवेकबुद्ध्येति स्वय व्याख्यातत्वात् ॥ बुद्धिशब्दो महत्तत्वपरइति च न वक्तुं शक्यते । श्रुतौ बुद्धेर्महत्तत्वापेक्षयाऽवरत्वेन पृथगुक्तेः । गीतायां अव्यक्ततत्वप्रसक्तिर्न दृश्यते ॥ श्रुतौ चाव्यक्तमुक्तं । एतदपि समाधेयम् ॥

मनसैव बुद्ध्या इन्द्रियग्रामं विनियम्येति गीतोक्तिः कथं मनसो बुद्धौ लयं बुद्धेर्महत्तत्वे लय महत्तत्वस्याव्यक्ते लय अव्यक्तस्यात्मनि लयमभिप्रैतीति न ज्ञायते ॥ अत्र विना परीक्षां मधुसूदनवाक्यान्याद्यन्त स्ववाक्यवदनुलिखन्नपूर्वव्याख्यानलभ्यां कीर्तिं प्रतीक्षते वेङ्कटनाथः ॥

**यतोयतो निश्चरति मनश्चंचलमस्थिरं ॥**
**ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ २६ ॥**

वि० ॥ ध्यानेन मनोऽनवस्थितं चेत्प्रत्याहारेण वशीकुर्यादित्याह । यतोयतइति । आद्यादिभ्यउपसंख्यानमिति सप्तम्यर्थे तसिः । यत्रयत्र विषये स्वतश्चंचलं मनोऽस्थिरं सत् निश्चरति प्रवर्तते ततस्तत एतन्मनो नियम्य प्रत्याहृत्य तदात्मन्येव भगवत्येव वशं तन्निष्ठमेव नयेत् कुर्यादित्यर्थः॥

शं० ॥ तत्रैवमात्मसंस्थं मनः कर्तुं प्रवृत्तो योगी—यतो यतो यस्माद्यस्मान्निमित्ताच्छब्दादेर्निश्चरति निर्गच्छति स्वभावदोषान्मनश्चंचलमत्यर्थं चलमतएवास्थिरं ततस्ततस्तस्मात्तस्माच्छब्दादेर्निमित्तान्नियम्य तत्तन्निमित्तं याथात्म्यनिरूपणेनाभासीकृत्य वैराग्यभावनया चैतन्मनआत्मन्येव वशं नयेदात्मवश्यतामापादयेत् । एवं योगाभ्यासबलाद्योगिन आत्मन्येव प्रशाम्यति मनः ॥

रा० ॥ चलस्वभावतयात्मन्यस्थिरं मनः यतोयतो विषयप्रावण्यहेतोर्बहिर्निश्चरति ततस्ततो यत्नेन मनो नियम्यात्मन्येव अतिशयितसुखभावनया वशं नयेत् ॥

विचार :

आत्मसंस्थं मनः कृत्वेत्युक्तौ, यदि मनोऽनवस्थितं भवेत्तदा किं कर्तव्यं इत्याकांक्षायां उच्यते । यतो यत इति ॥ मनो हि चंचलस्वभावं । विषयविशेषेणाकृष्टं सदस्थिर भूत्वा, तत्र भोगार्थं निर्गच्छति ॥ य यं विषयं ग्रहीतुं बहिर्गच्छति तत्र तत्र मनोनियमनं कर्तव्यं ॥ न केवलमनात्मजालादाकर्षणं कर्तव्य किंतु आत्मनिष्ठमपि मनः कुर्यात् ॥ प्रत्याहारेण नियम्य ध्यानेन आत्मसंस्थ कुर्यादिति यावत्

शनैश्शनैरिति कालवाचकशब्देन चिरंतनाभ्यास उक्तः ॥ प्रकृते यत्रयत्र विषये मनस्सचारः प्राप्तः तत्रतत्र निग्रहः कार्यः इत्युच्यते ॥ विरक्तो भवेयमिति सामान्याकारेणाध्यवसायेसति नोपयोगः ॥ तस्य दुरनुष्ठानत्वात् । यत्रयत्र मनसः प्रवृत्तिस्तत्र तत्र निग्रह एवाभ्यासपाटव संपादयतीत्यभिप्रयन्नाह भगवान् ॥

'आत्मन्येव वशं नयेत्' इत्यनेन यत्परैरभिप्रेतं अनात्माकारव्यावृत्तिरेव योगफलमिति तत्प्रत्युक्तं मन्तव्य ॥ आत्माऽत्र भगवानेव । नतु जीवः ॥ यतोयतः ततस्ततः इति तसेस्सप्तम्यर्थत्वं वाच्यं ॥ 'आद्यादिभ्य उपसंख्यानं' इत्यनेन तसेस्सप्तम्यर्थत्वं उपपद्यते ॥ आद्यादिभ्यश्शब्देभ्यः सप्तम्यादिविभक्त्यतेभ्यः तसि भवतीति वार्तिकार्थः ॥ यथा आदावित्यर्थे आदित इति प्रयुज्यते । आकृतिगणश्चायमिति काशिका ॥ केचित्तु आद्यादिभ्यः प्रथमादिसर्वविभक्तिभ्यस्तसेरुपसंख्यानं कार्यं तसेस्सार्वविभक्तिकत्वादित्यर्थः इत्याहुः ॥ तसेस्सप्तम्यर्थत्वं प्रयोगाच्च सिद्धं ॥ 'यतोयतो धावति तत्रतत्र सुदर्शनं दुष्प्रसहं ददर्श' इति प्रयुक्तं भागवते नवमे। (दूर्वासा यत्रयत्र धावति तत्रतत्रांबरीषसंरक्षणाय भगवदादिष्टं सुदर्शनं पृष्ठतःप्राद्रवत् ददर्श इति तदर्थः) ॥ यद्यपि यतोयतः यस्माद्यस्माच्छ्रोत्रादेः निश्चरति मनः तस्मात्तस्माच्छ्रोत्रादेः इति व्याख्यानं संभावितं । परंतु नैतत् सुरसं पञ्चम्यर्थत्वांगीकारे शब्दादिविषयकानुभवोत्पत्तिनिवारणार्थं मनोनिस्सरणद्वारभूतश्रोत्रादिमात्रनिरोधलाभेऽपि अन्तर्मनःकरणकशब्दादिविषयस्मरणस्य निवारणं न लभ्यते । तथाच ध्यानासंभवः । यत्रयत्रविषये इति सप्तम्यर्थकत्वांगीकारे तु शब्दादिविषयकज्ञाननिवारणलाभेन तत्स्मरणस्यापि निवारणलाभात् ध्यानोपपत्तिः ॥ शकरानंदोऽपि सप्तम्यर्थं गृह्णातीति द्रष्टव्यं ॥

एतेन 'यतोयतो निश्चरति' येनयेनेन्द्रियद्वारेण निश्चरतीत्यर्थः इति देशिकव्याख्यानं प्रत्युक्तं ॥

'चंचलं' 'अस्थिरं' इत्यत्र पौनरुक्त्यं परिहरणीयं । अतएव 'स्वतश्चचलं मनोऽस्थिरं सत्' इति विवृतिः । तथाच 'चंचलं' इति स्वरूपकीर्तनं अस्थिरं इति निमित्ताधीनचांचल्यकथनमिति विवेकः ॥ निमित्तैः मनसोऽस्थिरत्वं स्वाभाविकचांचल्यादुपपद्यते इति द्योतनाय चचलं इति स्वरूपकथनं सार्थकम् ॥ अयमेव रामानुजाचार्यस्याप्यभिसंधिः । 'चलस्व-

भावतयात्मन्यस्थिरं मनः’ इति तदुक्तेः। सामान्यविशेषविषयत्वादपुनरुक्तिः इत्याह देशिकः । इममेव पंथानमाश्रयते श्रीधरः । ‘स्वभावतश्चंचलं धार्यमाणमप्यस्थिरं मनः’ इति तद्वाक्यं । एवमेव शङ्कराचार्यभाष्यंच ।

वासनावेगाच्चंचलं रागादिदोषग्रस्तत्वादस्थिरं अव्यवस्थितं इति शङ्करानंदोक्तो विभागः । चचलं इत्यनेन पातंजलोक्तप्रमाणविपर्ययविकल्पस्मृत्याख्यविक्षेपाविवक्षिताः । अस्थिरमित्यनेन निद्राशेषबह्वशनश्रमाख्यलयविशेषाःविवक्षिता इति मधुसूदनवेङ्कटनाथावाहतुः ॥ मधुसूदनीयानुरोधेनेदमुक्तं वेङ्कटनाथीये ‘चित्तविक्षेपकरूपरसादिविषयमध्ये यतोयतो यस्माद्यस्मान्निमित्ताद्रूपरसादितः चञ्चलं विक्षेपाभिमुखंसत् मनः निश्चरति निर्गच्छति समाधिविरोधिनीं विक्षेपवृत्तिमुत्पादयति तथा चित्तलयहेतुनिद्राशेषबह्वशनश्रमादिमध्ये यतोयतोनिमित्तात् अस्थिरं लयाभिमुखं सत् मनः निश्चरति समाधिविरोधिनीं निद्राख्यलयवृत्तिमुत्पादयति ततस्ततः विक्षेपनिमित्ताल्लयनिमित्ताच्च एतन्मनः नियम्य निर्वृत्तिकं कृत्वा’ इत्यादि ॥ स्वव्याख्यानदार्ढ्याय मधुसूदनो गौडपादरचितानि पद्यानि पठित्वा तदक्षराणि विस्तरेण व्याचष्टे ॥ इमानि तानि पद्यानि ॥

“उपायेन निगृह्णीयाद्विक्षिप्त कामभोगयोः ।
सुप्रसन्नं लयेचैव यथाकामो लयस्तथा ॥

दुःखं सर्वमनुस्मृत्य कामभोगान्निवर्तयेत् ।
अजं सर्वमनुस्मृत्य जातं नैवतु पश्यति ॥

लये संबोधयेच्चित्तं विक्षिप्तं शमयेत्पुनः ।
सकषायं विजानीयात् समप्राप्तं न चालयेत् ॥

नास्वादयेत् सुखं तत्र निस्संगः प्रज्ञया भवेत् ।
निश्चलं निश्चरच्चित्तमेकीकुर्यात्प्रयत्नतः ॥

यदा न लीयते चित्तं नच विक्षिप्यते पुनः ।
अनिङ्गनमनाभासं निष्पन्नं ब्रह्म तत्तदा ॥" इति

अत्र वक्तव्य । योगशास्त्रानुरोधेन 'प्रमाणविपर्ययविकल्पनिद्रास्मृतयो' वृत्तय इत्यदाय 'योगश्चित्तवृत्तिनिरोधः' इत्युक्तरीत्या विना भगवंतं न किंचिदपि स्मरेत् इत्युक्तार्थस्यानुकूल्येन गीताक्षराणि व्याख्येयानि॥ विक्षेपवृत्तयो निद्रावृत्तयश्च समाधिविरोधिन्यो निरोद्धव्या एव । चचलमित्यनेन विक्षेपाख्यजाग्रद्वृत्तयः अस्थिरमित्यनेन लयसबधिन्यो निद्रावृत्तय एव विवक्षिता इत्यत्र गमकं चिन्त्यते । गौडपादश्लोकव्याख्यानावसरे 'लयविक्षेपाभ्यामिव रागद्वेषादिकषायादपि चित्त निरुन्ध्यात्' इत्युक्तं मधुसूदनीये ॥ गीतास्थचंचलशब्देन विक्षेप, अस्थिरशब्देन लयं गृहीत्वापि कषायबोधकस्य शब्दस्य गीतायामभावेन, कुलोपलक्षणया तस्य प्रवेशोऽभिमत इति न ज्ञायते ॥ गौडपादो हि पातंजलं परित्यज्याद्वैतानुकूलां स्वोत्प्रेक्षाकल्पितां प्रक्रियां रचयामास ॥ नह्यसौ गीता श्लोकव्याख्यानाय रचितवानुदाहृतपद्यानि ॥ तस्मात्तद्वाक्यगीतयोर्व्याख्यान-व्याख्येयभावोपपादनाय यत्नो व्यर्थो भाति ॥ द्वैतस्मरणकाले वैराग्यभावना उपायः द्वैतविस्मरण तु परमोपायः इति स्यान्नाम गौडपादमतं ॥ कथमिदं गीताक्षरार्थो भवेत् । अशब्दार्थं पुरस्कृत्य वृथा क्लेशोऽनुभूत इत्यास्ताम् ॥

**प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमं ।**
**उपैति शान्तरजसं ब्रह्मभूतमकल्मषं ॥ २७ ॥**

वि० ॥ एवं सांगयोगमभिधाय तदनुष्ठातुः फलं प्रपञ्च-यति । प्रशान्तेति ॥ प्रशान्तमनसं स्वतो विषयेष्वप्रवृत्तम-

नसं शान्तरजसं विगतरजोगुणमतएवाकल्मषं कामक्रोधादिदोषहीनं ॥ रजोजन्यत्वात्तेषां ॥ ब्रह्मभूतं तद्बुद्धय इत्युक्तदिशा ब्रह्मणि स्थितिमन्तमेनं योगिनं समाधियोगवंतमुत्तमं सुखं कर्तृ उपैति प्राप्नोति । हि प्रसिद्धं श्रुत्यादावित्यर्थः ॥

शं० ॥ प्रशान्तमनसं प्रशान्तं मनो यस्य स प्रशान्तमनास्तं प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमं निरतिशयमुपैति उपगच्छति ॥ शान्तरजसं प्रक्षीणमोहादिक्लेशरजसमित्यर्थः ॥ ब्रह्मभूतं जीवन्मुक्तं ब्रह्मैव सर्वमित्येवं निश्चयवंतं ब्रह्मभूतमकल्मषं धर्माधर्मादिवर्जितं ॥

रा० ॥ प्रशान्तमनसं—आत्मनि निश्चलमनसं आत्मन्यस्तमनसं ततएव हेतोर्दग्धाशेषकल्मषं । ततएव शान्तरजसं विनष्टरजोगुणं । ततएव ब्रह्मभूतं स्वस्वरूपेणावस्थितमेनं योगिनं आत्मानुभवरूपमुत्तमं सुखमुपैति; हीति हेतौ ॥ उत्तमसुखरूपत्वादात्मस्वरूपस्येत्यर्थः ॥

विचारः ॥

ध्यानयोगानुष्ठातुःफलमुच्यते ॥ सुखमात्यंतिक इति यत्प्रागेव निरतिशयं सुखं उक्तं तदेवात्र स्मार्यते ॥ उत्तमं इति सुखस्य वा योगिनमित्यस्य वा विशेषणं । अनुपमत्वादुःखमिश्रत्वाच्च सुखस्योत्तमत्वं सुगमं ॥ योगाभ्यासेन जितमनस्कत्वाद्योगिनोऽप्युत्कृष्टत्व सुघटम् ॥ वाक्यस्य कर्तृवाचकं सुखं इति पदं द्रष्टव्य ॥ सुखस्य जडत्वेऽपि उपैतीति चेतनवदुपचारः ॥

द्वेधासंभवति योगिनः श्रैष्ठ्यं । ब्रह्मभूतत्वेन प्रशान्तमनस्कत्वेन च ॥ ब्रह्मभूतत्वं नाम ब्रह्मणि स्थितिः । न तु ब्रह्मत्वप्राप्तिः ॥ ब्रह्मत्वप्राप्तेर्बहुप्रमाणविरोधात्तथाव्याख्यानमसत् ॥ 'ब्रह्मैवसर्वमित्येव निश्चयवतं' इति शङ्करभाष्यम् । 'सद्वस्तुरूपं' इति नीलकण्ठः । ब्रह्मैवाहमिति उपाधिकृतपरिच्छिन्नत्तिं परित्यज्य पूर्णात्मनैव स्थित इति शकरानन्द ॥ एवजातीयकमद्वैतव्याख्यानं न सम्यक् ॥ 'परमात्मा समाहितः' 'मनस्सयम्य मच्चित्तो' 'युक्तआसीत मत्परः' 'मत्संस्थां अधिगच्छति' "आत्मन्येवावतिष्ठते' 'आत्मनि तुष्यति' 'आत्मसंस्थ मन. कृत्वा' इत्यादिग्रन्थानुरोधेन 'ब्रह्मभूतमित्येतस्य ब्रह्मध्यानपरत्वेन व्याख्यानस्यैवोचितत्वात् ॥ ब्रह्मणि भूतं ब्रह्मभूतं इति ऋजुमार्गं विहाय ब्रह्मत्वेन स्थितं इति शाङ्करव्याख्यानं चोपेक्ष्य देशिकस्तु प्रकारान्तरेण व्याचष्टे । स आह 'ब्रह्मभूतमिति देहात्मभ्रमादिप्रयुक्तक्लेशादिदशारूपाब्रह्मत्वव्यवच्छेदार्थं ॥ अणोरपि हि जीवस्य 'सचानन्त्याय कल्पते' इति श्रुतेर्धर्मतो बृहत्त्वमस्त्येव' इति ॥ तथाचानेनोक्तं भवति । अब्रह्मत्वव्यावृत्त्यर्थं धर्मतोबृहत्त्वविवक्षया च जीवस्य ब्रह्मभूतत्वमुपपन्नमिति ॥ इदं क्लिष्टं । देहात्मभ्रमादिप्रयुक्तक्लेशादिदशा कथनामाब्रह्मत्वशब्दितेति चिन्त्यते । तद्व्यवच्छेदस्येह का सङ्गतिः ? । अणोर्जीवस्य धर्मत आनन्त्यं चासत् । कालमात्रतो जीवस्यानंत्येऽपि देशतो गुणतश्चाल्पत्वात् ॥ ब्रह्मध्यानप्रकरणे ब्रह्मणि स्थित्युक्तेरेवौचित्यादन्यार्थकल्पनमन्याय्यं ॥

प्रशान्तमनसं शान्तरजसं अकल्मषं इति त्रीणि विशेषणानि मनोनिग्रहानुबंधीनि । अन्याध्यानपूर्वकभगवद्ध्यानस्यैव योगत्वात् ॥ अतीतैर्ग्रन्थैश्शनैरभ्यासवैराग्यादिकमुक्त्वा पक्वदशायां मनः प्रशान्त भवतीत्याह प्रशान्त मनसं इति । मनसः प्रशान्तिर्नामायत्नेन तस्य प्रायो विषयागतिः । साधकोह्यायासेन मनो निगृह्णाति । सिद्धस्तु कूर्मोऽङ्गानीव स्वतो निरायासेन रागद्वेषादिकं परित्यज्य चित्तं निगृह्णातीति विवेकः प्रागेव दर्शितः । (स्थित-

प्रश्नप्रकरणे द्वितीयाध्याये ) ॥ 'कामएषक्रोधएषरजोगुणसमुद्भवः' इति क्रोधोपलक्षितदोषाणां रजोगुणजन्यत्वमनुसधेय ॥ अतएवेहोक्त शान्तरजसं अकल्मषं इति ॥ विगतरजोगुणत्वाद्रागादिदोषाभावस्सिद्धः ॥ तथाच अयं योगी प्रशान्तमना. । कुतः । अकल्मषत्वात् । कुतोऽयमकल्मषः । यतोऽय शान्तरजाः इति हेतुकार्यभावक्रमोऽवगन्तव्यः ॥

अकल्मषमित्यस्य व्याख्यानावसरे यदुक्तं देशिकेन 'स्वविषययोगस्य स्वकल्मषनिवर्तकत्वं पंचगव्यप्राशनादेरिव परसङ्कल्पायत्तं' इति तत्र भावो न स्फुटः । योगस्य ब्रह्मविषयत्वात्स्वविषयत्वं कथं सङ्गच्छते ॥ आत्मशब्देन सर्वत्र जीवस्य ग्रहणेन रामानुजाचार्यव्याख्यानं तु तत्रतत्र प्रत्युक्तं ॥

मधुसूदनवेंकटनाथौ शंकरभाष्यमुपेक्ष्य 'प्रशान्तमनसं' 'शान्तरजसं' अकल्मष इत्येतेषां प्रकारांतरेण भावमाहतुः । उक्तं वेंकटनाथीये । 'प्रकर्षेण शान्तमनस वृत्तिशून्यतया निर्मनस्कं । तत्रहेतुगर्भविशेषणद्वयं शान्तरजसमकल्मषमिति । शान्तं रजो यस्य तं विक्षेपशून्यं तथा न विद्यते कल्मषं लयहेतुस्तमो यस्य तमकल्मषं लयशून्य' इति ॥ अत्रैतच्चिन्त्यते ॥ योगिनस्सर्वथा वृत्तिशून्यतया निर्मनस्कत्वे तेन ब्रह्मदर्शनमपि न स्यात् । नापि सर्वमहंच ब्रह्मैवेति निश्चयः यो ब्रह्मभूतमित्यत्र शंकरभाष्ये उदितः । दर्शनादिवृत्तेरप्यसंभवात् ॥ किंचायं निर्मनस्कः कुतउच्यते 'शान्तरजा' इतिमात्रं । गुणत्रयकार्यस्य निर्मनस्कत्वेनासिद्धौ केवलं राजसशान्तिमात्रस्य कथनमयुक्तं प्रसज्येत ॥ शान्तरजसमित्यनेन सत्वावशेषेऽभिप्रेते सति निर्वृत्तिकतया निर्मनस्कत्वं न सेत्स्यति ॥ किंच 'योगिनं सुखं उपैति' इति निर्मनस्कस्य कथं युज्यते ? । विदेहकैवल्ये इव ब्रह्मतया स्थित प्रति 'सुखं उपैति' इति वचनस्यायोगात् ॥ ब्रह्मणस्सुखस्वरूपत्वेऽपि तत्प्रति सुखस्योपगमनवचनमद्वैतराद्धान्तविरुद्ध भाति ॥ अत एव निर्मनस्कत्वमतं विहाय सूक्ष्मेण मनसा समाधौ सुखानुभव इति मधुसूदनाभिप्रायोऽवगम्यत ॥ वक्ष्यत्येतदुत्तरश्लोके

'विक्षेपे वृत्तिसत्त्वात् लये च मनसोऽपि स्वरूपेणासत्त्वाद्वृत्तिशून्येन सूक्ष्मेण मनसा सुखानुभवस्समाधावेवेत्यर्थः ।' इति ॥ एवं चेत् समाधिसुखं स्वापसुखसमानं इत्यादाय यदानन्दगिरिटीकायां उक्तं तन्मधुसूदनमतविरुद्धं प्रसज्यते ॥ उक्त ह्यानन्दगिरिणा 'मनस्तद्वृत्त्योरभावेऽपि स्वरूपभूतसुखाविर्भावस्य स्वापादौ प्रसिद्धिं द्योतयितुं हिशब्दः' इति । एतेन समाधौ मनसो अभावः सुखस्य ब्राह्मत्वेन स्वारूपिकत्वं चानंदगिर्यभिमतं ज्ञायते । मधुसूदनीये तु सूक्ष्ममनसस्समाधौ सत्वं, सुखस्य मानसत्वंचाभिप्रेतं ॥ अनयोराशययोर्विरोधः स्फुटः ॥

अतीतश्लोकोक्त विक्षेपलयादिपारिभाषिकशब्दानिर्वचनमत्राप्याकृष्ट दृश्यते ॥ रजश्शब्देन विक्षेपस्य कथंचिद्ग्रहणेऽपि कल्मषशब्देन लयानुबन्धीनां निद्रादिदोषणामेव ग्रहणं कार्यमित्यत्र गमकमन्वेषणीयं ॥ वेङ्कटनाथोह्यत्र प्रकरणे निर्विचारं मधुसूदनमनुधावति ॥ एतस्मिन् श्लोके विक्षेपलययोः शान्तरजसं अकल्मषमिति शब्दाभ्यां ग्राह्यत्वं प्रथममुक्त्वाऽस्वरसादिव मधुसूदनः पक्षान्तरमाह ॥ 'शान्तरजसमित्यनेनैव तमोगुणोपलक्षणे अकल्मषं संसारहेतुधर्माधर्मादिविवर्जितमिति वा' इति ॥ अयं द्वितीयः पक्षः शकरभाष्यमनुसरति । वेङ्कटनाथस्तु शांकरव्याख्यानमुपेक्ष्य मधुसूदनीयं प्रथमोक्तमेव पक्षमाश्रयते ॥ यच्च शाङ्करभाष्ये 'अकल्मषं धर्माधर्मादिवर्जितं' इत्युक्तं तदपि न समीचीनं । योगिनोऽपि सर्वधर्मवर्जनस्यायुक्तत्वात् ॥ इष्टपुण्यप्रहाणे प्रयोजनाभावात् ॥

अन्तःकरणस्य भेदवासनाः राजस्यः तामस्यश्च कल्मषशब्देन विवक्षिता इति शङ्करानन्दो मन्यते । 'भेदवासना' इत्यद्वैतराद्धान्तः । अयं ह्यघटनघटनाशक्तिमान् व्याख्याता यत्र कुत्र वा स्वमतं गीतापद्येषु प्रवेशयितु समर्थो नाम ॥

'हि' इत्यनेन प्रसिद्धिरुक्तेति सर्वसम्मतं ॥ 'सुखमात्यंतिकं' इति प्रागुक्तस्ववचनस्य परामर्शो निरवद्यः ॥ श्रुत्यादिप्रसिद्धिश्च ग्राह्या ॥ एषोऽस्य परमानन्दः' इत्यादिश्रुतेः। विवक्षितं सुखं 'या निर्वृतिस्तनुभृतां तव पादपद्मध्यानाद्भवज्जनकथाश्रवणेन वा स्यात्' इत्याद्युक्तमवगम्यते ननु मुक्तौ सुषुप्तौ वाऽनुभूयमानं स्वारूपिकं सुख इति भाति ॥

**एवं युञ्जन्सदात्मानं योगी विगतकल्मषः ।**
**सुखेन ब्रह्मसंस्पर्शमत्यंतं सुखमश्नुते ॥ २८ ॥**

वि० ॥ सुखमुपैतीत्युक्तसुखं किमायासेन प्राप्नोति कीदृशं च तदित्यतो व्यनक्ति, एवमिति । विगतकल्मषो विगतरागादिदोषो योगी एवमुक्तदिशात्मानं भगवंतं युंजन्ध्यायन् सुखेनाक्लेशेन ब्रह्मसंस्पर्शं भगवत्संसर्गाभिव्यक्तं अत्यन्तमतिशयितं सुखमश्नुते प्राप्नोति ॥

शं० ॥ युंजन्नेवं यथोक्तेन क्रमेण योगी योगान्तरायवर्जितः सदात्मानं युंजन् विगतकल्मषो विगतपापः सुखेनानायासेन ब्रह्मसंस्पर्शं ब्रह्मणा परेण संस्पर्शो यस्य तद्ब्रह्मसंस्पर्शं सुखमत्यन्तमंतमतीत्य वर्तत इत्यत्यन्तमुत्कृष्टं निरतिशयमश्नुते व्याप्नोति ॥

रा० ॥ एवमुक्तप्रकारेणात्मानं युंजन् तेनैव विगतप्राचीनसमस्तकल्मषो ब्रह्मसंस्पर्शं ब्रह्मानुभवरूपं सुखमत्यन्तमपरिमितं सुखेनानायासेन सदाश्नुते ॥

विचारः ॥

सुखमुपैतीत्युक्तं । सुखस्योपगमनं योगपरिपाके प्रथमावस्था ॥ सुखास्वादेनाकृष्टः पुनःपुनस्समाधिं योगी इच्छति । स्वोपास्यभगवद्रूपं न जहाति ॥ यत्प्रथममायासेन लब्धं तत्सुखं अभ्यासपाटवेन सुखेनानायासेनासौ लभते ॥ यं समाधिं प्रारंभदशायां यत्नेन कृतवान् तं क्रमेण सुखेन युञ्जन् कृतार्थो भवति दैनंदिनाभ्यासबलात् कल्मषं क्रमेण यावन्नश्यति तावद्योगसिद्धिस्सुखेन पूर्णा भवति ॥

एतेन पूर्वश्लोकात्प्रकृतश्लोकस्य वैलक्षण्यमवगन्तव्यं ॥ सुखं उपैतीति पूर्वत्रोक्तं । इह सुखेन सुखं अश्नुते इति ॥ योगिनं इति पूर्वत्र । इहतु विगतकल्मष इति। वीति विशेषेण दोषवर्जनमभिप्रेतं ॥ ब्रह्मभूतमिति पूर्वत्र । इह ब्रह्मसंस्पर्शमिति ॥ ब्रह्मणि स्थितिमात्रादतिशयितो ब्रह्मसंसर्गः परमसुखाभिव्यञ्जको विवक्षितः ॥ तथाच पर्वभेदेन योगिनस्सुखतारतम्यविवक्षया श्लोकयोः परस्परगतार्थतापरिहारोऽनुसन्धेयः ॥ पूर्वश्लोकोक्तविवरणरूपत्वाच्च प्रकृतश्लोकस्य सार्थक्यमवधेयं ॥

श्लोके सदा पदस्य युजन् इत्यनेन तथा आत्मानं ब्रह्मसंस्पर्शं अश्नुते इति पदैश्चान्वयो द्रष्टव्यः । सदायुंजन्निति समाधेर्नैरंतर्येणानुष्ठानं विवक्षितं । सदा आत्मानं भगवन्तं नतु कंचिदपि पदार्थविशेषमिति यावत् ॥ सदा ब्रह्मसंस्पर्शः यथा भवति तथा युजन् इतिचार्थः ॥ सदा अश्नुते इति व्यक्तं॥

अत्यन्तं ब्रह्मसंस्पर्शं इति सुखविशेषणे ॥ अन्तो द्रष्टृदृश्यभावेन परिच्छेदः। तमतिक्रान्तं निर्विशेषं ब्रह्मात्मना संस्पृश्यतेऽवगम्यते । ब्रह्माभिन्नं। इत्यद्वैतव्याख्यानं ॥ अत्यंतं इत्यस्य निरतिशयमिति प्रामाणिकोऽर्थः । ब्रह्मसंस्पर्शमित्यस्य 'भगवत्संसर्गाभिव्यक्तं' इति विवृतिव्याख्यानं निरवद्यं ॥ पूर्वं 'ये हि संस्पर्शजाभोगा' इति वैषयिकसुखस्य नश्वरत्वमुक्तं—इहतु सुखं ब्रह्मसंस्पर्शं चेदत्यंतं भवतीति कथ्यते ॥

संस्पर्शमित्यनेनाभेदो न बोध्यते। सं सम्यक् विषयास्पर्शेन सह ब्रह्मणः स्पर्शः तादात्म्यं यस्मिंस्तदित्यादिक्लिष्टव्याख्यानमुपेक्ष्यं॥ अत एव ब्रह्म-तादात्म्यमविवक्षित्वा "ब्रह्मसंबंधि अवैषयिकं" इति मात्रमाह वेंकटनाथः॥

"आत्मानं इति पदेन भगवानेव विवक्षामर्हति। ब्रह्मसंस्पर्शमित्यने-नात्मशब्दाभिधेयस्य व्यक्तत्वात्। नहि स्वविषयकेन योगेन ब्रह्मसस्पर्श सुखं संभावितं॥

अत्र पातंजलशास्त्रोक्तेन गीतोक्तयोगस्य साम्यवैचित्र्यपरीक्षा किंचित् कर्तव्या॥ गीतायां भगवद्विषयत्वमेव योगस्याभिप्रेतं। न तथा पातंजले॥ गीतायां परमसुखानुभव उक्तः। पातजले तु सुखवार्ता न दृश्यते॥ अत एव "युक्त आसीत मत्परः" इत्यादिबहवः प्रयोगाः 'सुखमात्यंतिकं' इत्याद-यश्च पौनःपुन्येन भगवताकृता दृश्यन्ते॥

यद्यपि ईश्वरप्रणिधानस्य माहात्म्यं किंचिदभ्युपगतं पतंजलिना॥ तथापि तस्य तेन निरतिशयो महिमा नाभ्यधायि॥ इदं किंचिद्विचार्यते॥ योगश्चित्तवृत्तिनिरोधः (I—2) अभ्यासवैराग्याभ्यां तन्निरोधः (I—12) इति सूत्रयित्वा साधनांतरप्रपंचनानंतरमसूत्रयत् 'ईश्वरप्रणिधानाद्वा' इति। (I—23) अत्र वा शब्दोऽनुसंधेयः॥ 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुष-विशेषईश्वरः' I—24 'तत्र निरातिशयं सर्वज्ञबीजं' I—25 'स एष पूर्वेषामपि गुरुः कालेनानवच्छेदात्' I—26 'तस्य वाचकः प्रणवः' I—27 'तज्जपस्तदर्थभावनं' ' I—28 इति ईश्वरस्वरूपं तत्प्राणिधानप्रकारं च निरूप्य तत्फलमाह। 'ततः प्रत्यक्चेतनाधिगमोऽप्यंतरायाभावश्च' इति I—29॥ तथाच प्रणवजपादिरूपादीश्वरप्राणिधानात्प्रत्यक्चेतनस्य पुरुषस्य (जीवस्येति यावत्) प्रकृतिविवेकेनाधिगमो भवति। व्याध्याद्यन्तरायाः नश्यन्तिच। इत्युक्त॥ एतेन जीवतत्त्वाधिगमएव पातञ्जले परमफलं कैवल्यमित्यधिगम्यते॥

किंच चित्तस्थैर्यनिरूपणावसरे साधनानि बहून्युक्तानि 'प्रच्छर्दनविदारणाभ्यां वा प्राणस्य' (I—34) 'वीतरागविषयं वा चित्तं' (I—37) 'स्वप्ननिद्राज्ञानालंबनंवा' (I—38) इत्यादिसूत्रैः । एवमुक्त्वाऽसूत्रयत् 'यथाभिध्यानाद्वा' इति I—39 ॥ अस्यार्थः 'यदेवाभिमतं तदेव ध्यायेत्' इति ॥ एतेन ईश्वरैकविषयध्याने निर्बन्धः परिहृतः ॥ तस्माच्छ्रीकृष्णः पातञ्जलमुपेक्ष्य वारंवारं 'युंजन्नात्मान' इत्यादिवचनैर्भगवद्ध्यानस्यैव निरवधिकं माहात्म्यमभिप्रयन्स्वाभिमतयोगमाह ॥ किंच समाधिफलनिरूपणे सुखानुभवो नोक्त इति ग्रन्थावलोकने ज्ञायते ॥ श्रीकृष्णोक्तयोगेतु सुखानुभवः प्राधान्येन दर्शितः ॥

एव मुख्यप्रमेये वैलक्षण्येऽपि न वयं अष्टाङ्गादिसाधनप्रकारविशेषेषु विप्रतिपन्नाः ॥ तस्मात् 'सुखेन' इत्यस्य व्याख्यानावसरे यदुक्तं मधुसूदनीये पातंजलोक्तानां अन्तरायाणामभावो विवक्षित इति, तन्नास्माकमनिष्टं ॥

तथाहि । योगान्तरायनिरूपकं सूत्रं 'व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः ॥ इति I—30 ॥ व्याख्यातमेतत् वार्तिके ॥ व्याधिर्धातुरसवैषम्यम् ॥ स्त्यानमकर्मण्यता चित्तस्य ॥ संशय उभयकोटिस्पृग्विज्ञानं स्यादिदमेवं नैव स्यादिति ॥ प्रमादः समाधिसाधनानामभावनं । आलस्यं कायस्य चित्तस्य च गुरुत्वादप्रवृत्तिः ॥ अविरतिश्चित्तस्य विषयसंप्रयोगात्मगर्द्धः ॥ भ्रान्तिदर्शनं विपर्ययज्ञानं ॥ अलब्धभूमिकत्वं समाधिभूमेरलाभः । अनवस्थितत्व यल्लब्धायां भूमौ चित्तस्याप्रतिष्ठा ॥ समाधिप्रतिलंभेहि सति तदवस्थितं स्यादिति ॥ एते चित्तविक्षेपानवयोगमलायोगप्रतिपक्षायोगान्तराया इत्यभिधीयन्ते । इति ॥ एतादृशान्योगान्तरायान् भगवद्ध्यानमहिम्ना जित्वा सुखेनान्तरायवैधुर्येण सुखमश्नुते इत्यर्थो नानिष्टः ॥ एवं 'विगतकल्मषः' इत्यस्यापि पातंजलोक्तं चित्तप्रसादनं नास्माकमनिष्टं ॥ स आह 'मैत्रीकरुणामुदितोपेक्षाणां

सुखदुःखपुण्यापुण्यविषयाणांभावनातश्चित्तप्रसादनं' इति (I—33) व्याख्यातं ॥ सर्वप्राणिषु 'सुखसंभोगापन्नेषु मैत्रीं भावयेत् । दुःखितेषु करुणां । पुण्यात्मकेषु मुदितां । अपुण्यशीलेषूपेक्षां । एवमस्य भावयतः शुक्लो धर्म-उपजायते । ततश्च चित्तं प्रसीदति ॥ प्रसन्नमेकाग्रं स्थितपदं लभते' इति ॥ वैष्णवो योगी यथोचितमष्टांगयोगमनुसरन् भगवद्ध्यानमविहायैव भगवदनुग्रहेणैवान्तरायानतिक्रम्य भगवत्संसर्गाभिव्यक्तं निरुपमं सुखं निरन्तरयोगेन निरंतरमनुभुंजीतेति भावः ॥

'ब्रह्मसस्पर्श' 'अत्यंतं सुख' इति गीतोक्तिं पुरस्कृत्याद्वैतव्याख्यातारः सुखस्य ब्रह्माभेदं वदन्ति ॥ 'ब्रह्मणैक्यं' 'निर्विशेषं' 'ब्रह्माभिन्नं' 'ब्रह्मणस्तादात्म्यं यस्मिन्' इत्यादीनि वचनानि तैः प्रयुक्तानि ॥ 'अत्यंतं' इत्यनेन सर्वथापरिच्छेदराहित्यं ज्ञाप्यते इत्यपि व्याख्यातं ॥ एवं सति तन्मत योगिसुखं स्वारूपिकमेवेत्यायास्यति ॥ न तत्र स्थूलमनसस्सूक्ष्मस्य वावकाश उपपन्नः ॥ तर्हि केन भावेन मधुसूदनीये एवमुक्तं इति न ज्ञायते । 'विक्षेपे वृत्तिसत्त्वात् । लयेच मनसोऽपि स्वरूपेणासत्त्वात् सर्ववृत्तिशून्येन सूक्ष्मेण मनसा सुखानुभवस्समाधावेवेत्यर्थः' इति ॥

## सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
## ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ २९ ॥

वि० ॥ एवं युञ्जन्निति ध्यानप्रकरणस्य फलकथनेनोपसंहृत्येदानीं ध्येयमाह ॥ सर्वेति ॥ भोक्तारमिति पञ्चमान्ते मच्चित्तो युक्तआसीतेत्यत्रैवाध्याये ध्येयोक्तावपीहोत्तमाधिकारिणां ध्येयस्योक्तिरिति ज्ञेयं ॥ आत्मानं परमात्मानं ब्रह्मा-

दिसर्वप्राणिगतं आत्मनि परमात्मनि सर्वत्र ब्रह्मादितृणान्तेषु भगवन्तं ऐश्वर्यादिना साम्येन पश्यन् समदर्शनो योगयुक्तात्मा समाधियुक्तमनस्कः । ईक्षते पश्यतीत्यर्थः ॥

शं० ॥ इदानीं योगस्य यत्फलं ब्रह्मैकत्वदर्शनं सर्वसंसारविच्छेदकारणं तत्प्रदर्श्यते—सर्वेति ॥ सर्वभूतस्थं सर्वेषु भूतेषु स्थितं स्वमात्मानं सर्वभूतानि चात्मनि ब्रह्मादीनि स्तंबपर्यंतानि च सर्वभूतान्यात्मन्येकतांगतानीक्षते पश्यति योगयुक्तात्मा समाहितान्तःकरणः सर्वत्र समदर्शनः सर्वेषु ब्रह्मादिस्थावरान्तेषु विषमेषु सर्वभूतेषु समं निर्विशेषं ब्रह्मात्मैकत्वविषयं दर्शनं ज्ञानं यस्य स सर्वत्र समदर्शनः ॥

रा० ॥ अथ योगविपाकदशा चतुष्प्रकारोच्यते ॥ स्वात्मनः परेषां च भूतानां प्रकृतिवियुक्तस्वरूपाणां ज्ञानैकाकारतया साम्याद्वैषम्यस्य च प्रकृतिगतत्वाद्योगयुक्तात्मा प्रकृतिवियुक्तेष्वात्मसु सर्वत्र ज्ञानैकाकारतया समदर्शनः सर्वभूतस्थं स्वात्मानं सर्वभूतानि च स्वात्मनीक्षते । सर्वभूतसमानाकारं स्वात्मानं स्वात्मसमानाकाराणि च सर्वभूतानि पश्यतीत्यर्थः । एकस्मिन्नात्मनि दृष्टे सर्वस्यात्मवस्तुनस्तत्साम्यात् सर्वमात्मवस्तु दृष्टं भवतीत्यर्थः । सर्वत्र समदर्शनः इति वचनात् ‘ योऽयं योगस्त्वया प्रोक्तस्साम्येन ’ इत्यनुभाषणाच्च, ‘ निर्दोषं हि समं ब्रह्म ’ इति वचनाच्च ॥

विचारः

'भोक्तारं यज्ञतपसां' इति पञ्चमान्ते उक्तमेव किंचिद्विस्तरेणेहोच्यते ॥ सांगध्यानयोगस्याभिधानानन्तरं ध्येयस्य वक्तव्यत्वात् संगतिस्सुगमा । 'भोक्तारं' इत्यधिकारिसामान्यविवक्षयोक्तिः । इहतूत्तमाधिकारिविवक्षयेति विवेकः ॥ 'प्रतिमास्वप्रबुद्धानां सर्वत्र विदितात्मनां' इत्युक्तेः व्याप्तभगवद्रूपोपासनाधिकारिणामेवेति भावः ॥ आत्मशब्दोऽत्र भगवत्परो न स्वात्मपरः । रामानुजाचार्यस्तु स्वात्मापरपर्यायं जीवं गृह्णात्यात्मशब्देन ॥ नहि जीवेषु तारतम्यमसावभ्युपगच्छति । दृष्टं सर्वमपि वैषम्यं औपाधिकमेवेति हि स मन्यते ॥ उपाधिभूतायाः प्रकृतेर्वियोगे तु स्वरूपतो जीवास्सर्वेऽपि समानाः इति तन्मतं भाति ॥

'निरंजनः परमं साम्यमुपैती' त्याद्युक्तिबलेन यद्यपि जीवानां परमात्मसाम्यमप्यस्य सम्मतं । तथापि प्रकृतं पद्यं जीवेषु परस्परसाम्यमपेक्ष्य प्रवृत्तमित्यस्याशयः । जीवेश्वरसाम्यस्याप्यत्रैव विवक्षितत्वग्रहणे 'यो मां' इति श्लोकद्वयेन मात्रया पौनरुक्त्यं स्यादिति भयेन जीवानां परस्परसाम्यमेवात्रोक्तमिति तदाशयः । इदं व्याख्यानमसत् । आत्मशब्देनेह परमात्मग्रहणस्यैवोचितत्वात् ॥ सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि इत्याधाराधेयभावोह्युक्तः ॥ जीवपरत्वे अयमनुपपन्नः । न हि देवदत्तचैतन्यं यज्ञदत्तचैतन्यस्य वा यज्ञदत्तशरीरस्य वा आधारो भवति ॥ अणोर्जीवस्य सर्वभूतस्थत्वं न संगच्छते ॥ विप्रकीर्णदेशावस्थितानां भूतानां एकदेशस्थिते स्वात्मनि स्थितिरसंगता ॥ एवं दूषणजातं पश्यन्नपि स्वाचार्योक्तार्थमेव स्थिरीकर्तुमाह देशिकः ॥ 'एकजातीयेषु पदार्थेष्वेकव्यक्तिदर्शनेनैव स्थालीपुलाकन्यायात्तज्जातीयं सर्वमपि तथात्वेनानुसंहितं भवतीति भावः' ॥ इति ॥ स्थालीपुलाकन्यायस्यात्र गमकं न दृश्यते ॥ 'नत्वं नेमे जनाधिपाः' इत्यत्र बहुवचनबलेन शाङ्करमातैकत्वपक्षं पराकृत्यात्मबहुत्वं स्थापयामास

खलु रामानुजाचार्यैः ॥ तेनैव न्यायेनात्र 'आत्मानं' इत्येकवचनबलेन सर्वत्र स्थितमेकं भगवंतमेव गीतोक्तिः परामृशतीत्युचितं ॥ सर्वाधारः परमात्मा सर्वस्मिन् प्रविश्याणोरणीयान् महतोमहीयानास्ते इत्यतः साधूक्तं भवति 'सर्वभूतस्थमात्मानं सर्वभूतानिचात्मनि' इति ॥ देशिकेन भूतशब्दोऽपि क्लेशेन निरुक्तः । 'भूतशब्दोऽत्राचिद्विशिष्टचेतनवाचकोऽपि सत्य भूतहित प्रोक्तं इत्यादिष्विव चेतनांशपरः' इति ॥ सर्वे चेतनास्सदृशा इति बोधनाय आत्मा सर्वभूतस्थः सर्वभूतानि आत्मस्थानीति वचने प्रयोजनमन्वेषणीयं ॥

परमात्मग्रहणे बाधकं न दृश्यते । यद्यप्युक्त देशिकेन 'नचेदं परमात्मयोगप्रकरणम् ॥ येन तथाविधपरमात्मानुसंधानमुपदिश्येत । न च जीवात्मयोगोपयुक्तं परमात्मध्यानमिदमुच्यते । समाधिदशाभेदविषयत्वात्' इति ॥ योगस्य जीवात्मविषयत्वेन परमात्मविषयत्वेन च द्वैविध्यं यदनेनाभिप्रेतं भाति तदनुचितं । भगवद्ध्यानस्यैव योगशब्दार्थत्वात । स्यादिदं प्रकरणं समाधिदशाभेदपरं ॥ किमनेन ॥ समाधिदशायां परमात्मा नैव भासेतापितु जीवात्मा एवेति को निर्बंधः । यत्तु जीवेश्वरसाम्यस्य वक्तव्यत्वेन प्रकृतत्वेऽपि 'योमा' मिति श्लोकद्वयेन मात्रया पौनरुक्त्यं भवेदिति न तदिह विवक्षितमित्याशयकथनं तदसत । जीवेश्वरसाम्यस्य सर्वथाऽप्रामाणिकत्वात् । इह आत्मशब्देनेश्वरग्रहणे योमामित्यादिपौनरुक्त्यं तु नास्त्येव । उक्तानुवादपूर्वमधिकांशस्य तत्र दृष्टत्वात् । आत्मशब्दस्य जीवादिपरत्वभ्रान्तिव्युदासायैव योमामित्यनुवादग्रन्थे 'मां' 'मयि' इत्यादिस्पष्टवचनं सार्थकं । तस्मादुपदिष्टं साम्यं भगवद्रूपेषु चिंतनीयं नतु जीवेषु वा जीवेश्वरयोर्वेति कृतमधिकेन ॥

"आत्मानं सर्वभूतेषु भगवन्तमवस्थितं ।
अपश्यत्सर्वभूतानि भगवत्यपिचात्मनि" ॥

इति भगवच्छब्दविशेषणाच्चात्मा श्रीहरिरेव ॥ 'यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति । सर्वभूतेषुचात्मानं ततो न विजुगुप्सते ॥ यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कःशोकः एकत्वमनुपश्यतः' इतीशावास्ये ॥ 'सर्वगं परमात्मानं सर्वं च परमात्मनि । यःपश्येत्सभयाभावान्नात्मानं गोप्तुमिच्छति' इति सौकरायणश्रुतिः ॥

'यस्मिन्सर्वाणि भूतानि स आत्मा सर्वभूतगः। एवं सर्वत्र यो विष्णुं पश्येत्तस्य विजानतः । को मोहःकोऽथवा शोकस्स विष्णुं पर्यगाद्यतः' इति पिप्पलादशाखायां ॥

एतत्प्रकरणे गीतायां च भगवतस्सर्वाधारत्वं सर्वत्वसमत्वं उक्त्वा भक्तस्य नाशाभावो वक्ष्यते ॥ अतः श्रुत्यादिभिर्गीतायास्संवाद, स्फुटः ॥

जीवपरमात्माभेदं मन्वानानां शाङ्कराणां तु नोक्तानुपपत्तिः । तदीयं व्याख्यानं तु दोषांतरग्रस्तं ॥ तद्रीत्या योगयुक्तात्मनो ब्रह्मदर्शनं जगन्मिथ्या ब्रह्मैवैकं सत्यं इत्याकारकं ॥ तथाह्युक्तं ॥ 'समदर्शनः । समं समभावापन्नं विशेषग्रहणनिर्मुक्तं सर्वत्र सन्मात्रग्रहणशीलं दर्शनं यस्य सः । भवन्तीति भूतानि अधिष्ठानाग्रहणदोषेण ततः पृथक् सत्तावन्तीव प्रतीयमानान्यव्याकृतादीनि । तेषु ब्रह्मांडे सूर्यवत् गृहेषु प्रदीपवत् घटादिषु आकाशादिवत् अविकारात्मना तिष्ठतीति सर्वभूतस्थः ॥' इत्याद्युक्तं शङ्करानन्दीये ॥

अयं मधुसूदनाशयः। 'तत्त्वमसीति प्रतिपादितोऽर्थस्त्रिभिः श्लोकैरिहोपपाद्यते ॥ तत्र प्रथमं त्वंपदलक्ष्योपस्थितिमाह सर्वभूतस्थमिति (श्लो० २९)। शुद्धं तत्पदार्थं निरूपयति यो मामिति (श्लो० ३०) तत्त्वमसीतिवाक्यार्थं निरूपयति सर्वभूतस्थितमिति ३१ ॥ एवंविभागे त्वंपदलक्ष्यभूतशुद्धज्ञानवान् " सर्वेषु भूतेषु स्थावरजंगमेषु शरीरेषु भोक्तृतया स्थितमेकमेव नित्यं विभुमात्मानं प्रत्यक्चेतनं साक्षिणं परमार्थसत्यमानन्दघनं साक्ष्येभ्योऽनृतजडपरिच्छिन्नदुःखरूपे-

भ्यो विवेकेनेक्षते साक्षात्करोति ॥ तस्मिंश्चात्मनि साक्षिणि सर्वाणि भूतानि साक्ष्याण्याध्यासिकेन सम्बधेन भोग्यतया कल्पितानि साक्षिसाक्ष्ययोस्संबन्धान्तरानुपपत्तेर्मिथ्याभूतानि परिच्छिन्नानि जडानि दुःखात्मकानि साक्षिणो विवेकेनेक्षते " इति ॥ अयं नीलकण्ठाभिसंधिः ' संप्रज्ञाते आत्मनः सार्वात्म्यमनुभवन्योगी सर्वेषु भूतेषूपादानतया स्थितमात्मानमीक्षते ॥ तथा असंप्रज्ञाते सर्वाणि भूतानि ब्रह्मादिस्तंबपर्यन्तान्यात्मन्येकतांगतानि रज्ज्वामिवाध्यस्तसर्पदण्डधारादीनि तद्वत्पश्यति योगेन समाहिताचित्तः ॥ अस्यैव व्युत्थानावस्थामाह ॥ सर्वत्रेति ' इति ॥ एतेन संप्रज्ञातदशा असंप्रज्ञातदशा व्युत्थानदशाचेति तिस्रोऽवस्था उक्ता इत्यभिप्रायः ॥ एषा दिक् ॥

एवमेतेषूत्थापनाद्यवान्तरवैचित्र्येऽपि जगन्मिथ्यात्वज्ञानपूर्वकं निर्विशेषब्रह्मसाक्षात्कारो वाक्यार्थ इत्यत्र न विप्रतिपत्तिः ॥ अयं तु वाक्यार्थो नाक्षरार्थ इति स्फुटं ॥ आत्मा सर्वभूतस्थ इत्युक्तौ सर्वभूतानां मिथ्यात्वं कथं गम्यते ॥ भूतानामभावे तत्स्थत्वं किमित्युच्यते ॥ मिथ्याभूतवस्तूनां आत्मन्यवस्थित्युक्तिरप्यसंगता । सत्यस्यैवाधारान्वेषणस्योचितत्वात् । ' समं ' इत्यस्य ' निर्विशेषं ' इत्यर्थो न शब्दार्थः ॥ अध्यासवाचकस्य शब्दस्यादर्शनात्तमेव दृढमालिंग्यैतैः प्रवृत्तं निरूपणमुपेक्ष्यं ॥

अथात्र 'योगयुक्तात्मा सर्वत्र समदर्शनः' इत्यंशव्याख्याने यन्मधुसूदनेनोक्तं नीलकण्ठोत्कर्षदीपिकाकाराभ्यां सविस्तरं प्रत्याख्यातं च तदीषद्विचार्यते । पातञ्जलपक्षपाती मधुसूदनः योगयुक्तात्मेत्यत्र पतंजल्यभिमतं योगिज्ञानं गृह्णाति ॥ अभिहितं योगशास्त्रे । ' निर्विचारवैशारद्येऽध्यात्मप्रसादः ' इति सूत्रं I—47 ॥ तद्वार्तिके व्याख्यातं ' अशुद्ध्यावरणमलोपेतस्य प्रकाशात्मनो बुद्धिसत्वस्य रजस्तमोभ्यामनभिभूतः स्वच्छःस्थितिप्रवाहो वैशारद्यं ॥ यदा निर्विचारस्य समाधेर्वैशारद्यमिदं जायते तदा योगिनो भवत्यध्यात्मप्रसादः ॥ भूतार्थविषयः क्रमाननुरोधी स्फुटः प्रज्ञालोकः ॥ तथाचोक्तं । ' प्रज्ञाप्रसाद-

मारुह्य अशोच्यः शोचतो जनान् ॥ भूमिष्ठानिव शैलस्थस्सर्वान् प्राज्ञोऽनुपश्यति ' ॥ इति ॥ ' ऋतंभरा तत्रप्रज्ञा ' इति सूत्रं I—48 ॥ व्याख्यातं । ' समाहितचित्तस्य या प्रज्ञा जायते तस्याऋतंभरेति संज्ञा भवति ॥ अन्वर्था चसा ॥ सत्यमेव बिभर्ति । न च तत्र विपर्यासज्ञानगन्धोऽप्यस्तीति । तथा चोक्तं । ' आगमेनानुमानेन ध्यानाभ्यासरसेन च । त्रिधा प्रकल्पयन्प्रज्ञां लभते योगमुत्तमम् ' ॥ इति ॥ ' श्रुतानुमानप्रज्ञाभ्यामन्यविषयाविशेषार्थत्वात् ' इति सूत्रं ॥ स्पष्टं ॥ अत्र ऋतंभरेति संज्ञितं योगिज्ञानं भूतभविष्यद्वर्तमानसत्यवस्तुविषयं । योगिप्रत्यक्षस्य सूक्ष्मत्वात् स्थूलदृष्टयगोचरमपि कालक्रमाद्यनपेक्षया युगपदेव तस्य गोचरं भवति इति योगलभ्याणिमादिसिद्धिवज्ज्ञानसिद्धिर्वर्णिता ॥ किमिदमेव गीताभिप्रेतं समाधिफलं ॥ मधुसूदनस्त्वोमित्यनुजानातीव भाति ॥ इतरे तं प्रत्याचक्षते ॥ भगवदपरोक्षमेव गीतोक्तं समाधिफलं इति द्वैतवेदान्तिनो मतं ॥ ऐक्यसाक्षात्कारः फलमित्यद्वैतवेदान्तिनां ॥ उभयभिन्नत्वेन द्वैतवादिनः पतञ्जलेर्मतं न कस्यापि सम्मतं इत्युपेक्षणीयं ॥ ' सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि, ईक्षते ' इत्युक्तं ईक्षणं ऋतंभरेति संज्ञितं ज्ञानं नेत्येव वक्तव्यं ॥ अतो गीतोक्तो योगयुक्तात्मा न पातंजलाभिमतो योगी किंतु श्रीकृष्णोक्तमार्गेण योगयुक्तः ॥

किंचान्यं भ्रमं प्रकाशयति मधुसूदनः ॥ एतदस्य वाक्यं । ' अथवा योगयुक्तात्मा यो वा समदर्शनः स आत्मानमीक्षत इति योगिसमदर्शिनावात्मेक्षणाधिकारिणावुक्तौ ॥ यथाहि चित्तवृत्तिनिरोधस्साक्षिसाक्षात्कारहेतुः तथा जडविवेकेन सर्वानुस्यूतचैतन्यपृथक्करणमपि । नावश्यं योग एवापेक्षितः । अत एवाह वसिष्ठः । ' द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव । योगो वृत्तिनिरोधो हि ज्ञानं सम्यगवेक्षणं ॥ असाध्यः कस्यचिद्योगः कस्यचित्तत्वनिश्चयः । प्रकारौ द्वौ ततो देवो जगाद परमः शिवः ' ॥

इति ॥ * * तत्र तत्र प्रथममुपायं प्रपंचपरमार्थतावादिनो हैरण्यगर्भादयः प्रपेदिरे। तेषां परमार्थस्य चित्तस्यादर्शनेन साक्षिदर्शने च निरोधातिरिक्तोपायासंभवात्। श्रीमच्छंकरभगवत्पूज्यपादमतोपजीविनस्त्वौपनिषदाः प्रपंचानृतत्ववादिनो द्वितीयमेवोपायमुपेयुः। तेषां ह्यधिष्ठानज्ञानदार्ढ्येसति तत्र कल्पितस्य बाधितस्य चित्तस्य तद्दृश्यस्य चादर्शनमनायासेनैवोपपद्यते। अत एव भगवत्पूज्यपादाः कुत्रापि ब्रह्मविदां योगापेक्षां न व्युत्पादयांबभूवुः॥ अत एव चौपनिषदाः परमहंसाः श्रौते वेदान्तवाक्यविचार एव गुरुमुपसृत्य प्रवर्तन्ते ब्रह्मसाक्षात्काराय नतु योगे। विचारेणैव चित्तदोषनिराकरणेन तस्यान्यथासिद्धत्वात्॥' इति ॥ एतेनेदं उक्तं भवति ॥ द्वैतिनां चित्तवृत्तिनिरोधाख्यो योगस्साक्षिसाक्षात्कारोपायः। अद्वैतिनां औपनिषदानां सत्यानृतविवेकाख्यब्रह्ममीमांसा उपायः इति।

अत्रोच्यते। मधुसूदनतिरस्कारो विस्तरेणकृतो नीलकण्ठीये तथोत्कर्षदीपिकायां च ॥ तत्र विशेषयुक्तयो द्रष्टव्याः ॥ 'योगयुक्तात्मा वा समदर्शनो वा आत्मानं ईक्षते' इति 'वा' शब्दाध्याहारेण योगएकोपायः समदर्शित्वं अपरउपायइति कल्पनमनुचितम्॥ ज्ञापकाभावात्॥ यत्तूपायद्वयसाधकं वासिष्टवचनमुदाहृतं तद्वासिष्टाभिप्रायानवगममूलमिति स्वव्यूहएव निरूपितं ॥ वासिष्टस्य प्रामाण्यं नास्माभिरंगीक्रियते इत्यलं तद्विचारेण ॥ योगी युञ्जीत सततं इत्यादिबहुग्रन्थैर्गीतायामुपदिष्टयोगस्य औपनिषदानामसंमतत्वेन तिरस्कारे निमित्तं न ज्ञायते॥ तर्हि किमिति ध्यानयोगं भगवानुपदिदेश ॥ नहि ध्यानयोगः श्रुतिष्वनुक्तः। तत्र तत्र बहुस्थलेषु प्रपञ्चितत्वात्। पश्यत श्वेताश्वतरोपनिषदि ॥ 'त्रिरुन्नतं स्थाप्य समं शरीरं हृदीन्द्रियाणि मनसा संनिविश्य। ब्रह्मोडुपेन प्रतरेत विद्वान् स्रोतांसि सर्वाणि भयावहानि। प्राणान् प्रपीड्येह सयुक्तचेष्टः क्षीणे प्राणे नासिकयोच्छ्वसीत। दुष्टाश्वयुक्तमिव वाहमेनं विद्वान्मनो

धारयेताप्रमत्तः। समे शुचौ शर्करावह्निवालुकाभिर्विवर्जिते शब्दजलाश्रयादिभिः। मनोऽनुकूले नतु चक्षुःपीडने गुहानिवाताश्रयणे प्रयोजयेत्। नीहारधूमार्कानिलानलानां खद्योतविद्युत्स्फटिकाशनीनां। एतानि रूपाणि पुरस्सराणि ब्रह्मण्यभिव्यक्तकराणि योगे। पृथ्व्याप्यतेजोऽनिलखेसमुत्थिते पञ्चात्मके योगगुणे प्रवृत्ते। न तस्य रोगो न जरा न मृत्युः प्राप्तस्य पञ्चाग्निमयं शरीरं। लघुत्वमारोग्यमलोलुपत्वं वर्णप्रसादं स्वरसौष्ठवं च। गन्धश्शुभो मूत्रपुरीषमल्पं योगप्रवृत्तिं प्रथमां वदन्ति। यथैव बिम्बं मृदयोपलिप्तं तेजोमयं भ्राजते तत्सुधान्तं। तदात्मतत्वं प्रसमीक्ष्य देही एकः कृतार्थो भवते वीतशोकः॥ यदात्मतत्वेन तु ब्रह्मतत्वं दीपोपमेनेह युक्तः प्रपश्येत्। अजं ध्रुवं सर्वतत्वैर्विशुद्धं ज्ञात्वा देवं मुच्यते सर्वपाशैः॥ एषो हि देवः प्रदिशो नु सर्वाः पूर्वोहिजातः सउगर्भे अन्तः। स एव जातः सजनिष्यमाणः प्रत्यङ्जनास्तिष्ठति सर्वतोमुखः। यो देवोऽग्नौ योऽप्सु यो विश्वं भुवनमाविवेश य ओषधीषु यो वनस्पतिषु तस्मै देवाय नमः॥' इति॥ एतादृशेषु वेदभागेषु सत्सूदाहर्तव्येषु तान्विहाय ऋतंभरेत्यादियोगसूत्राण्यालंब्य तत्र स्वाभिप्रायं प्रवेशयन् गीतोक्तानि व्याख्याति मधुसूदनः॥ वृत्तिनिरोधः एको मार्गः तत्वदर्शनमपरो मार्ग इत्यादाने 'नान्यः पन्था अयनाये' त्यादिमार्गैक्यप्रतिपादकानां वाक्यानां का गतिः॥ किंचायं योगयुक्तात्मा वा समदर्शनो वा इति ईक्षणस्योपायद्वयोपेतत्वेन श्रीकृष्णाशयमाविष्कुर्वन्नप्यन्ततः स्वाशयं शंकराचार्याशयं चैकस्य योगस्योपेक्षणीयत्वेनैव प्रकाशितवान्॥ तथाच पाक्षिकपरिग्रहोऽपि योगस्योपेक्षितः। इदमयुक्तमिति व्यक्तं॥ 'समाहितो भूत्वात्मन्येवात्मानं पश्ये' दित्यादिसमाहितत्वविधायकवचसां बहूनामप्रामाण्य प्रसज्येत॥ ब्रह्मविदां योगं शङ्कराचार्यो व्युत्पादयांबभूव वा नवेति विचारो नास्माकमुपयुक्तः। स्वव्यूह एव शंकराचार्यमतमन्यथोपपादितं द्रष्टव्यं। तस्माच्छ्रुत्यादिसिद्धो ध्यानयोगः परमोपायः श्रीकृष्णोपादिष्टस्सर्वैर्मु-

मुक्षुभिर्ब्रह्मज्ञानायाश्रयणीयइत्येव तत्वं ॥ योगयुक्तात्मा समदर्शनस्सन् आत्मानं भगवन्तमीक्षते इत्येव निरवद्योऽर्थः ।

अस्य पद्यस्य वेंकटनार्थीयं बहुसंक्षिप्तं । 'त्वं' पदलक्ष्यार्थपरत्वे-नायमपि श्लोकं मधुसूदनवद्व्याचष्टे ॥ नीलकण्ठादिना तूलीकृतं मधुसूद-नीयांशं तु नानुसरति न वा दूषणाद्रक्षतीत्याश्चर्य ॥

**योमां पश्यति सर्वत्र सर्वं च मयि पश्यति ।**
**तस्याहं न प्रणश्यामि सच मे न प्रणश्यति ॥ ३० ॥**

वि० ॥ सर्वभूतस्थात्मध्यानविशेषस्य फलमाह, यो मामिति । सर्वत्र ब्रह्मादितृणान्तेषु स्थितं मां यः पश्यति सर्वं च ब्रह्मादिजगत् मयि मदधीनं पश्यति । तस्याहं न प्रणश्यामि सर्वदा योगक्षेमवहः स्यामित्यर्थः । स च मे न प्रणश्यति सदा मद्भक्तो भवतीत्यर्थः ॥

शं० ॥ एतस्यात्मैकत्वदर्शनस्य फलमुच्यते, यो मामि-ति ॥ यो मां पश्यति वासुदेवं सर्वस्यात्मानं सर्वत्र सर्वेषु भूतेषु सर्वं च ब्रह्मादिभूतजातं मयि सर्वात्मनि पश्यति तस्यैवमात्मैकत्वदर्शिनोऽहमीश्वरो न प्रणश्यामि न परो-क्षतां गमिष्यामि स च मे न प्रणश्यति स च विद्वान् मम वासुदेवस्य न प्रणश्यति न परोक्षो भवति । तस्य च मम

चैकात्मकत्वात्। स्वात्माहि नामात्मनः प्रिय एव भवति। यस्माच्चाहमेव सर्वात्मैकत्वदर्शी ॥

रा० ॥ ततो विपाकदशापन्नो मम साधर्म्यमुपागतः 'निरञ्जनः परमं साम्यमुपैति' इत्युच्यमानं सर्वस्यात्मवस्तुनो विधूतपुण्यपापस्य स्वरूपेणावस्थितस्य मत्साम्यं पश्यन् यस्सर्वत्रात्मवस्तुनि मां पश्यति, सर्वमात्मवस्तु च मयि पश्यति; अन्योऽन्यसाम्यादन्यतरदर्शनेन अन्यतरदपीदृशमिति पश्यति। तस्य स्वात्मरूपं पश्यतोऽहं तत्साम्यान्न प्रणश्यामि नादर्शनमुपयामि। ममापि मां पश्यतो मत्साम्यात्स्वात्मानं मत्सममवलोकयन् सदा दर्शनमुपयामि ॥

विचारः ॥

अतीतश्लोके ईक्षणं विधाय तस्याधुना फलमाह॥ यो मां इति प्रथमार्धं सर्वभूतस्थमित्यादेरनुवादः। फलविधानार्थं अनुवादस्सप्रयोजनः। आत्मशब्देन जीवग्रहणव्युदासाय 'मां' 'मयि' इति भगवद्बोधकस्पष्टवचनम् ॥

योगिनो भगवान्न कदापि नष्टः। भगवतो योगी न कदापि नष्टइत्युक्तौ, नाशोऽत्र कीदृशो विवक्षित इति विचार्यं॥ ध्वंसस्तु न संगच्छते ॥ नश्धातुरत्रादर्शनवाचीति परे मन्यन्ते ॥ इदमग्रे विचार्यते ॥

नाशइत्यविद्यमानसादृश्याद्रूढोपचारेणाविद्यमानतोच्यते इति श्रीमदाचार्याशयः। सत्यपि स्वामिन्यरक्षत्यनाथो भृत्यउच्यते एवं भृत्ये अभजति अभृत्य इत्युच्यते स्वामी ॥ विद्यमानस्यापि स्वयोग्यव्यापाराकरणसादृश्यादुपचारेणाविद्यमानता॥ भगवांस्तु स्वव्यापारं योगक्षेमाख्यं करोत्येव। योगा-

रूढश्च स्वयोग्यव्यापारं भगवद्भक्त्यादिरूपं करोत्येव । अतः अविद्यमान-साद्दश्याभावान्न प्रणश्यामीत्यादिरूढोपचार उपपन्नः ॥

'अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहं' इति भगवत्कर्तृकप्रसादविशेष एव तदनाशरूपो भक्तानां ॥ उक्तं च गारुडे 'सर्वदा सर्वभूतेषु समं मां यः प्रपश्यति । अचला तस्य भक्तिस्स्याद्योगक्षेमं वहाम्यहं' इति ॥

रामानुजाचार्यस्तु जीवेश्वरयोस्स्वरूपतस्साम्यमाह श्लोक इति मन्यते । अतीतश्लोके जीवेषु परस्परसाम्यमुक्त्वाधुना जीवानां ईश्वरेण 'तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति श्रुत्युक्तरीत्या परमसाम्यमुक्तं इति तस्याशयः । इदं व्याख्यानमसत् । जीवानां परस्परं साम्यस्य वा जीवेश्वरयोः परस्पर साम्यस्य वा बहुप्रमाणविरुद्धत्वात् । निरंजनश्रुतिस्त्वन्यथोपपद्यते । किंच परमात्मनः सर्वव्यापितया सर्वेषां परमात्मनिष्ठतया च प्रतीतिस्स्वरसतो जायमाना कुतोऽत्र विहन्यते ? प्रकरणादिविरोधादिति देशिको वक्ति ॥ कः प्रकरणादिविरोधः । योगपरिपाकदशायां योगिना स्वात्मानुसन्धानमेव कर्तव्यं नतु मनागपि परमात्मानुसन्धानं इति यदभिप्रेतं तदनुचितं । उत्तमाधिकारिणां परिपाकदशापन्नानां योगिनां परमात्मानुसन्धानस्यैवोचितत्वात् । यदि तेषां स्वात्मानुसन्धानमेवोचितं तर्हि यो मां इति वचनं प्रकरणविरुद्धं प्रसज्यते । स्वात्ममात्रानुसन्धाने भगवत्साम्यस्याप्रसक्तत्वात् ॥ नच वाच्यं जीवेष्वन्योऽन्यसाम्यानुसन्धानस्थैर्याय स्वात्मपरमात्मनोरन्यात्मपरमात्मनोश्च साम्यं पश्यन्, सर्वजीवानामन्योऽन्यसाम्यं पश्यतीति ॥ ईश्वरे साम्यमननुसन्धायापि सर्वभूतस्थमात्मानं इत्युक्तप्रकारेण जीवसाम्यमात्रस्यानुसन्धेयत्वसंभवात् । कोहि स्वस्थात्मा जीवेषु साम्यग्रहणासमर्थः तदर्थं ईश्वरसाम्यं सुगमं पश्यति ॥

ईश्वरवार्तायाः योगप्रकरणे अप्रसक्तत्वे तस्याहं न प्रणश्यामीत्याद्युत्तरार्धं निष्प्रयोजनं । तत्रापि 'स च मे न प्रणश्यती'ति तु सर्वथा नोपयुक्तं । योग्यनुसन्धानप्रकरणे भगवतो योगिविषयानुसन्धानस्य 'स च मे न प्रणश्यती'त्युक्तस्य का संगतिः ? भगवान्योगिनं स्वसममनुसंदध्याद्वा न वा किमनेनात्र ॥ किंच भगवान्सर्वज्ञो न केवलं योगिनं स्वसममनुसन्धत्ते किंतु कृत्स्नं जीवजातं । अतः 'स चे'ति योगिमात्रपरामर्शोऽनुपपन्नः ॥

देशिकस्समाधत्ते 'स च मे न प्रणश्यति इत्येतदृष्टांतार्थं साम्यस्य सर्वज्ञबुद्धिविषयतया प्रामाणिकत्वार्थंच' इत्यादिना । इदं न प्रत्याययति । दृष्टान्तवाचकशब्दस्यादर्शनात् ॥ यत्तु सर्वज्ञबुद्धिविषयतया प्रामाणिकत्वार्थमित्युक्तं तन्न ॥ निरंजनश्रुत्यादिभिस्साम्यस्य प्रामाणिकत्वे सिद्धे, किमनेन साम्यस्थिरीकरणाय प्रमाणकथनेन ॥ यस्तु श्रुत्यादिभिर्नप्राप्तनिश्चयो जीवेश्वरसाम्ये तस्य, 'स च मे न प्रणश्यती'त्यनेन वचसा मानदार्ढ्यं न भवेत् । अतः उक्ता युक्तिरुपेक्ष्या ॥

'समं' इत्यस्य स्थाने 'एकं' इति पदमभिप्रयन् शंकराचार्यस्स्वमतानुगुणं व्याख्यातवान् । अतीतेन श्लोकेन आत्मैकत्वदर्शनस्य विहितत्वात्किंतत्पुनः इति शङ्कायां आत्मैकत्वदर्शनस्य द्वितीयार्धेन फलोक्तिरिहाधिकेति समाहितं ॥ 'आत्मैकत्वदर्शिनो योगिनो न भगवान् परोक्षतां गच्छति । भगवतोऽपि योगी न परोक्षतां प्राप्नोति' इति फलं विवक्षितं ॥ अत्र चिन्त्यते । प्रथमार्धानुक्तं किमुक्तं द्वितीयार्धेन 'तस्याहं न प्रणश्यामी'त्यनेन ॥ 'योगी पश्यन्पश्यति' इत्येवोक्तप्रायमित्युद्देश्यविधेययोरैकार्थ्यं परिहरणीयं । आत्मैकत्वदर्शिनः आत्मदर्शनं हि फलं विवक्षितं । अतीतश्लोकोक्तादधिकं फलरूपं न किंचिदिहोक्तं दृश्यते ॥ किंच 'स च मे न प्रणश्यती'त्यस्य का सङ्गतिः ? ॥ भगवान्सर्वज्ञोऽस्पृष्टाविद्यातत्कार्यो न केवलं योगिनं किंतु समस्तप्रपंचं स्वात्मत्वेन मनुते । अतः सचेति विशिष्य योगिनः परामर्शोऽनुपपन्नः ॥ किंचेह योग्यनुसन्धान-

निरूपणे भगवत्कर्तृकैक्यानुसन्धानस्य का सङ्गतिः। उक्तं हि शङ्करभाष्ये 'यस्माच्चाहमेव सर्वात्मैकत्वदर्शी' इति। अस्योपपत्तिरन्वेषणीया॥

द्वितीयार्धपादद्वयस्यापि सार्थक्यं वक्तुं यतते नीलकण्ठः। 'तस्याहं न प्रणश्यामि' इत्यंशं 'तस्य योगिनः ज्ञातआत्मा न पुनस्तिरोभवति। सकृन्नष्टस्य मूलाज्ञानस्य बीजाभावेन पुनरुदयासंभवादित्यर्थः' इति व्याचष्टे॥ तथाच पुनश्शब्दाध्याहारेणाज्ञानानुवृत्तिविवक्षया गतार्थतां परिहरतीति ज्ञायते। एवं सत्यपसिद्धान्तः॥ जीवन्मुक्तानामपि ज्ञानिनां बाधितानुवृत्तेरभ्युगतत्वात्कथमेतदिति चिन्त्यते॥ किंचेश्वरो हि अस्मच्छब्दार्थः। सतु मायोपाधिकः॥ योगी तु आत्मदर्शी नत्वीश्वरदर्शी॥ न च वाच्यमत्रास्मच्छब्दः प्रत्यगात्मपर इति। तर्हि पूर्वश्लोकेन गतार्थता परिहरणीया॥ अधिकांशस्यादर्शनात्। तस्याहं न प्रणश्यामीत्यनेनाज्ञानानुवृत्तिनिषेधाख्याधिकांशेन गतार्थता नेति न वाच्यं॥ अतीतश्लोक एव सर्वेशब्दास्सावधारणा इति न्यायेन 'ईक्षते' इत्यत्र 'एव' शब्दानुसन्धानेनास्यार्थस्य सुलभत्वात्॥ किंच स च मे न प्रणश्यतीत्यस्य किं सार्थक्य। अस्मच्छब्दार्थोहि नीलकण्ठीये प्रत्यगात्माभिप्रेतः। नत्वीश्वरः। प्रत्यागात्मनःकथमुपपद्यते किंचिदप्यनुसन्धानं। योगी प्रत्यगात्मनो न तिरोभवतीत्युक्तेः को भावः?॥

अत्राह नीलकण्ठः पूर्वपक्षमपि व्युत्पादयन्, 'ननु कार्यकारणसंघाताभिमानिना शुक्तिरूप्यवद्ब्रह्मण्यध्यस्तत्वेन तदभिमानत्यागपूर्वकं ज्ञातं स्वाधिष्ठानभूतं ब्रह्म मातिरोधायि बुद्धेस्तत्वपक्षपातित्वात्। ब्रह्मदृष्ट्यातु मुक्तजीवस्य निरन्वयोच्छेदो भवतीत्याशक्याह—स च मे न प्रणश्यतीति। सच विद्वान्मे मम न प्रणश्यति न तिरोभवति। मदभिन्नत्वात्। भवेदेतदेवं यदि जीवो मय्यध्यस्तो वा मम विकारो वा भवेत्तदा निरन्वयोच्छेदं प्राप्नुयात्। अहमेवतु सः 'तत्त्वमसि' 'अहं ब्रह्मास्मि' 'अयमात्मा ब्रह्म' इत्यादि शास्त्रात्। तस्माद्युक्तमुक्तं, सच मे न प्रणश्यतीति' इति॥ अत्र समाधानांशो न स्फुटः। सचेति मूलं

ब्रह्मदृष्ट्या वा प्रवृत्तं ईश्वरदृष्ट्यावेति न ज्ञायते । नाद्यः । ब्रह्मणो दर्शनायोगात् । न द्वितीयः । मायोपाधिकस्येश्वरस्याविद्योपाधिकाज्जीवादभेदस्यायोगात् ॥ किंचास्मच्छब्दार्थस्स्यादीश्वरो वा ब्रह्म वा ॥ एकत्वाज्ञानिनस्तावदविद्याव्यवहितस्यायोगिनः ब्रह्म नश्यतां नाम । ब्रह्मणः ईश्वरस्य वा सर्वथात्माभिन्नस्य कथं योग्येव न प्रणश्यति । तद्दृष्ट्याहि योगी अयोगी च सर्वं जीवजातं स्वात्मैव ॥ अतस्सर्वं न प्रणश्यतीति वाच्यं ॥ न तु स च मे न प्रणश्यतीति । कृतमधिकेन क्लिष्टव्याख्याननिरासेन ॥

अतीतश्लोके त्वंपदलक्ष्यार्थं शुद्धमुक्त्वेह शुद्धतत्पदलक्ष्यार्थमाह इति मधुसूदनोक्तो विवेकः। उक्तं मधुसूदनीये । 'यो योगी मामीश्वरं तत्पदार्थमशेषप्रपंचकारणं मायोपाधिकमुपाधिविवेकेन सर्वत्र प्रपंचे सद्रूपेण स्फुरणरूपेण चानुस्यूतं सर्वोपाधिविनिर्मुक्तं परमार्थसत्यमानन्दघनमनन्तं पश्यति योगजेन प्रत्यक्षेणापरोक्षीकरोति तथा सर्वं च प्रपंचजातं मायया मय्यारोपितं मद्भिन्नतया मृषात्वेन पश्यति तस्यैवंविवकदर्शिनोऽहं तत्पदार्थो भगवान्न प्रणश्यामि । ईश्वरः कश्चिन्मद्भिन्नोऽस्तीति परोक्षज्ञानविषयो न भवामि किन्तु योगजापरोक्षज्ञानविषयो भवामि ॥ यद्यपि वाक्यजापरोक्षज्ञानविषयत्वं त्वंपदार्थाभेदेनैव तथापि केवलस्य तत्पदार्थस्य योगजापरोक्षज्ञानविषयत्वमुपपद्यत एव ॥ एवं योगजेन प्रत्यक्षेण मामपरोक्षीकुर्वन् स च मे न प्रणश्यति परोक्षो न भवति । स्वात्माहि मम स विद्वानातिप्रियत्वात्सर्वदा मदपरोक्षज्ञानगोचरो भवति' इति ॥ एतेनेदमुक्तं भवति ॥ तत्त्वमस्यादिवाक्यजमपरोक्षज्ञानं त्वंपदार्थाभेदेनैव ॥ अस्ति त्वन्यच्चापरोक्षज्ञानं ॥ तत्तु योगजं । योगजापरोक्षज्ञानं तत्पदार्थगोचरं सदखंडाकारकं ॥ अतो वाक्यजापरोक्षयोगजापरोक्षभेदविवक्षयातीतश्लोके समदर्शनो वा योगयुक्तात्मावेत्युक्तं ॥ पक्षद्वयोक्तावपि तत्र वाक्यजापरोक्षे भरोऽधिगन्तव्यः । त्वंपदार्थस्य विवक्षतत्वात् । अत्र तु योगजापरोक्षे भरः । तत्पदार्थस्य विवाक्षितत्वात् ॥

समाधिकाले योगिनो नाहं तिरोभवामीति भगवदुक्तिः नतु सर्वदेति ॥ श्लोकगतास्मच्छब्दो न ब्रह्मपरः किंतु ईश्वरपरः । नाशाभावो योऽभिहितः श्लोके 'ये यथा मां प्रपद्यन्ते' इत्युक्तन्यायेन स योज्यः इति ॥

यद्यपीद व्याख्यानं शङ्करभाष्योपरि नीलकण्ठीयोपरिचोक्तादूषणगणाद्व्यावृत्तं विद्यते । परन्तु दूषणान्तरग्रस्तमित्युपेक्ष्यते । मधुसूदनीयं प्रत्याख्यातमुत्कर्षदीपिकायां । तथाहि । 'तं त्वौपनिषदं पुरुषं पृच्छामि' 'नावेदविन्मनुते त बृहन्तं' इत्यादिविरुद्धं ॥ योगजाखण्डापरोक्षाज्ञानकल्पना च नादर्तव्या ॥ तस्येत्यादेः सङ्कोचकपदाभावेन कदाप्यहं तस्य परोक्षो न भवामीत्यर्थं विहाय कदाचित्समाध्यादिकाले योगजप्रत्यक्षेण चेति कल्पनाया अयोगाच्चेति दिक् इति ॥ इदं दूषणं स्वव्यूहे स्ववचनविरोधापसिद्धान्तादिकं पुरस्कृत्य तिरस्कारः कृतः । अस्माकं तु मायोपाधिकेत्यादीनि वाक्यान्यप्रामाणिकानि ॥ नाशशब्दस्यात्र तिरोभावार्थकत्वे बाधकमुक्तमनुसंधेयं । त्वंपदार्थभेदेन वाक्यजापरोक्षं योगजंतु तत्पदार्थाभेदेनेति कल्पितो विवेकस्त्वविवेकमूलः । त्वंपदार्थतत्पदार्थैक्यं च प्रमाणबाधितं ॥ त्वंपदतत्पदप्रतिपाद्यभेदविवक्षयातीतश्लोकेन यद्गतार्थत्वं परिहृतं तदसंगतं । अतीतश्लोकव्याख्याने खलु प्रथमं योगयुक्तात्मा वा समदर्शनोवेत्युभयोरप्यधिकारमुक्त्वाऽनंतरं औपनिषदास्तु वस्तुतो योगे उदासीनाः इति प्रसाधितवान् मधुसूदनः । पुनरिह योगपक्षं परिगृह्य ब्रह्ममीमांसासमकक्षतया तन्निरूपणं व्याहतं ॥ मुमुक्षुसंबंधिसाधनेषु श्रवणमनननिदिध्यासनेषु, तत्त्वमस्यादिश्रवणमेकउपायः, निदिध्यासनमपरः उभावपि स्वातंत्र्येण भिन्नोपायाविति मधुसूदनमतस्याकौशलं नेतो विस्तृतमुपपादनमपेक्षत इति विरम्यते ॥

तस्माद्भक्तो भगवंतं न जहाति, भगवानपि सदा भक्तमनुगृह्णात्येवेत्यर्थ एव साधुः ॥

**सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः।**
**सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥३१॥**

वि० ॥ यो मामिति श्लोकोक्तमेव स्पष्टयति । सर्वेति ॥ यएकत्वमास्थितः सर्वत्र परमेश्वरएवेत्यास्थितो ज्ञानी सर्वभूतस्थं मां भजति सेवते । स योगी सर्वप्रकारेण न्यायेनान्यायेन वा वर्तमानोऽपि मयि वर्तते । अन्यायप्रवृत्तावपि ज्ञानिनो मोक्षो नियतएवेति भावः । तदाह सूत्रे कामकारेण चैकइति । आनन्दह्रासस्त्वस्त्येवेति ज्ञेयं ॥

शं० ॥ इत्येतत्पूर्वश्लोकार्थं सम्यग्दर्शनमनूद्य तत्फलं मोक्षोऽभिधीयते । सर्वेति । सर्वथा सर्वप्रकारैर्वर्तमानोऽपि सम्यग्दर्शी योगी मयि वैष्णवे परमे पदे वर्तते नित्यमुक्तएव स न मोक्षं प्रति केनचित्प्रतिबध्यत इत्यर्थः ॥

रा० ॥ ततोऽपि विपाकदशामाह ॥ ❀ ❀ योगदशायां सर्वभूतस्थितं मामसंकुचितज्ञानैकाकारतया एकत्वमास्थितः प्राकृतभेदपरित्यागेन सुदृढं यो भजते, स योगी व्युत्थानकालेऽपि यथा तथा वर्तमानः स्वात्मानं सर्वभूतानि च पश्यन् मयि वर्तते मामेव पश्यति । स्वात्मनि सर्वभूतेषु च सर्वदा मत्साम्यमेव पश्यतीत्यर्थः ॥

विचारः

सर्वभूतस्थमात्मानं इत्यत्रात्मशब्दो भगवत्पर इति बोधनार्थं 'यो मां।' इति श्लोकः । 'यो मा'मिति श्लोके नाशाभावस्य प्रसक्तौ स्पष्टीकरणार्थं

प्रकृतोऽयं ‘सर्वभूतस्थित’ मितिश्लोकः । सर्वथा वर्तमानोऽपि योगी मोक्षमवश्यं लभते इत्यनेन नाशाभावः स्पष्टीकृतः ॥ ‘समदर्शन’ इत्युक्तस्य किंचिद्विवरणं ‘एकत्वमास्थित’ इति । सर्वत्र परमेश्वर एकएव इति दृढनिश्चयवान् तथोक्तः । आस्थितइत्यनेन निश्चयस्य दार्ढ्यं गम्यते ॥ ब्रह्ममीमांसाशास्त्रे समन्वयाध्याये प्रतिपादितप्रकारेण इन्द्रचन्द्रवरुणकुबेराग्न्यादिशब्दैर्वैदिकैर्भगवानेव निरवधिकप्रवृत्तिनिमित्तगुणवत्तया प्रतिपाद्यस्सएकएवसर्वोत्तम इति निश्चयो विवक्षितः ॥

एकत्वमास्थितइत्येतदन्यथाव्याख्यातं परैः । ‘तत्पदलक्ष्यं त्वं पदलक्ष्येण सहैकत्वमत्यन्ताभेदमास्थितस्सन् घटाकाशो महाकाशइत्यत्रेवोपाधिनिराकरणेन निश्चिन्वन् यो भजति अहं ब्रह्मास्मीति वेदान्तवाक्यजेन तत्वसाक्षात्कारेणापरोक्षीकरोति’ इति मधुसूदनीये ॥ इदमसत् ॥ सर्वभूतस्थितं यो भजतीति वाक्यशेषविरोधात् ॥ भूताभेदाभिप्राये भूतस्थत्ववचनं विरुध्यते । भजनप्रकारो यो मधुसूदनेन निरूपितस्स क्लिष्टः ॥ यदुक्तं वेदान्तवाक्यजेन तत्वसाक्षात्कारेणापरोक्षीकरोतीति तच्च चिन्त्यं ॥ अय ह्यस्याभिसंधिः ॥ साक्षात्कारो द्विविधः । योगिप्रत्यक्षज वेदान्तवाक्यजश्चेति ॥ द्वयोरपि प्रत्येकं पुरुषार्थत्वं ‘सर्वभूतस्थ’ मित्यनेनोक्त्वा योगिप्रत्यक्षेण तत्पदलक्ष्यैक्यं ‘यो मा’ मित्यनेनाभिधायाधुना वेदान्तवाक्यजन्यैक्यसाक्षात्कार उच्यत इति ॥ अयमाशयोऽतिक्लिष्टः ॥ योगयुक्तात्मा वा समदर्शनो वा इति ‘वा’ पदाध्याहारेण पक्षद्वयकल्पनमन्याय्यमित्युत्कर्षदीपिकायां खण्डितं स्मर्तव्यं ॥ योगिप्रत्यक्षेणैव तत्पदलक्ष्यसाक्षात्कार इति यदुक्तं मधुसूदनेनातीतश्लोकव्याख्यानावसरे तदपि स्वयूथ्यानभ्युपगतं भाति ॥ योगिप्रत्यक्षं प्रकरणप्राप्तं विहाय प्रकृते पद्ये पुनर्वेदान्तवाक्यजन्यसाक्षात्कारस्य परामर्शोऽपि नाक्षरार्थं इत्युपेक्षणीयः । अतएव ‘भजति अहं ब्रह्मास्मीति वेदान्तवाक्यजेन तत्वसाक्षात्कारेणापरोक्षीकरोति’ इति मधु-

सूदनीयमुपेक्ष्य नीलकण्ठस्तु 'भजति निर्विकल्पेन समाधिना सेवते' इति व्याख्यातवान् ॥

तस्माद्यो मधुसूदनेन तत्त्वमसीति वाक्यगतांशत्रयं पुरस्कृत्य योगजसाक्षात्कारवाक्यजसाक्षात्कारावादाय त्रिश्लोक्या भाव उक्तः स कल्पितो निर्मूल इति ध्येयम् ॥

सर्वभूतस्थमित्यादिश्लोकैर्जीवानां परस्परमीश्वरेण च साम्यमुच्यते इति रामानुजाचार्यो मन्यते ॥ 'अकर्मवश्यत्वाकारेणेश्वरसाम्यदर्शनं पूर्वश्लोकोक्तं ॥ इह कर्मरूपाविद्यावेष्टनविधुरत्वादसंकुचितज्ञानाकारतया साम्यानुसंधानं उच्यते' इति देशिको निरूपयति । किंचायमाह 'एकत्वानुसधानं नाम स्वस्यापि सर्वभूतस्थितत्वेन तदेकप्रकारत्वानुसंधानं । तच्चाणोरात्मनस्स्वरूपेण न संभवति । धर्मतश्च परिशुद्धात्मनो व्याप्तिः । 'वालाग्र' इत्यारभ्य 'सचानन्त्याय कल्पते' इति श्रुतिसिद्धा । सूत्रं च 'प्रदीपवदावेशस्तथाहि दर्शयति' इति। अतोऽत्र तथैव साम्यं विवक्षितं * * मांभजति ॥ मत्समात्मावलोकनमपि हि मद्भजनमित्यभिप्रायः' इति ॥ इदं सर्वं क्लिष्टं अप्रामाणिकंच ॥ जीवोहि कर्मवश्यः । भगवांस्तु न तथा । तयोस्साम्यचिन्तनमयुक्तमेव । अकर्मवश्यत्वाकारेण जीवेश्वरौ समाविति चिन्तनमतीतश्लोकेऽभिहितमित्युक्तिश्चायुक्ता । श्लोके तथाऽदर्शनात् ॥ प्रकृते पद्येऽप्यविद्यावेष्टनवैधुर्येण जीवेश्वरौ समाविति क्वोच्यते ॥ अविद्याबद्धोहि जीवः। अस्पृष्टाविद्यादिगन्धो हि परमात्मा ॥ तयोस्साम्यं नोक्तं अयुक्तं च ॥ यत्तु परिष्कृतं 'एकत्वानुसंधानं नामे'त्यादिना ग्रन्थेन स च न शब्दप्राप्तस्स्वारसिकोऽर्थः ॥ क्लिष्टकल्पने प्रमाणानि च बाधंते ॥ अणोरपि जीवस्य धर्मतः परमात्मसाम्यं यदभिप्रेतं तदप्यसत् । अत्रोदाहृता श्वेताश्वतरश्रुतिः (५-अ-९) । 'वालाग्रशतभागस्य शतधाकल्पितस्य च । भागो जीवस्य विज्ञेयस्सचानन्त्याय कल्पते' इति, जीवस्य धर्मतो भगवत्साम्यं न वक्ति ॥

नाप्यणोर्देशतो गुणतो वानन्त्यं ॥ विवक्षितार्थे 'प्रदीपवदावेशस्तथाहिदर्शयति' इति ब्रह्मसूत्रंच (IV—4—15) न साधकं। इदं खलु मुक्तपरं ॥ प्रदीपप्रभादृष्टांतेन मुक्तजीवानां सर्वत्राभिमानित्वेन व्यातिरेत्तेनोक्तेति पराशयः। वस्तुतस्तु मुक्तानां दुःखादिदोषालेपप्रसाधनाय प्रवृत्तमिदं सूत्रं। 'शरीरमनुप्रविश्यापि तत्प्रकाशयन्तः पुण्यानेव भोगाननुभवन्ति न दुःखादीन्। यथा प्रदीपो दीपिकादिषु प्रविष्टः तत्स्थं तैलाद्येव भुङ्क्ते न तु कार्ष्ण्यादि' इत्येवं सूत्रार्थः ॥ तस्मादीश्वरसाम्यं न मनागपि चिन्तनीयम्। गीताक्षराणि च नैवं चिन्तनस्यावकाशं ददत इत्यलं ॥

द्वितीयार्धे 'सर्वथे'त्यनेनापरोक्षज्ञानी न विधिकिङ्कर इत्युच्यते। न्यायेन वाऽन्यायेन वा व्यवहरन्मुक्तिं नियमेनाप्नोति ॥ अपरोक्षज्ञानानन्तरं तेन कृतं कर्म न तस्य मोक्षप्रतिबंधकं भवितुमर्हति इति भावः ॥

एतादृशः प्रायो नाधर्मं करोति। कुर्वतस्तु महांश्चेदधर्मो दुःखसूचको भवति। अधर्माचरणेन मुक्तावानन्दह्रासोऽपि भवेदेव ॥

'कदाचिदपि नाधर्मे बुद्धिर्विष्णुदृशां भवेत्। प्रमादात्तु कृतं पापं स्वल्पं भस्मीभविष्यति। आदिराजैस्तथादेवैऋषिभिः क्रियते कियत् ॥ बाहुल्यात्कर्मणस्तेषां दुःखसूचकमेव तत्' इति भाष्योदाहृतं प्रमाणं ॥

'अथमुनिरमौनं च मौनं च निर्विद्याथब्राह्मणः स ब्राह्मणः केनस्याद्येनस्यात्तेनेदृशएव' इति बृहदारण्यश्रुतौ ज्ञानिनो यथेष्टाचरणं श्रूयते। केनस्यादिति ज्ञानिनो यथेष्टाचारे तु न विधिः। किंतु स्तुतये। यथा कंचित् भृत्यं प्रति तत्स्तुतये कथ्यते यथेष्टं कुर्विति। अथवा यथेष्टाचारे अनुमतिमात्रमेव तत्। सर्वथा तु न विधिः। अतोऽस्त्येव ज्ञानिनः सदसत्प्रवृत्त्योर्विशेषः ॥

'कामकारेणचैके' इति ब्रह्मसूत्रं (IV—4) ॥

'कामचराः कामभक्षाः कामवादाः कामेनैवेमं देहमुत्सृज्याथ परात्परमीयुरनारंभण' मिति चैके पटन्ति ॥ इति सूत्रार्थः । नासत्प्रवृत्त्या ज्ञानस्य मोक्षसाधनत्वाभावः । अपितु तत्कृतो विशेषो मौक्तानन्दह्रासादिरूपोऽन्यएव इति सिद्धान्तः ॥

इदं पद्यं प्रथमार्धे समाधिमग्नं साम्यदर्शिनं योगिनमाह ॥ द्वितीयार्धे व्युत्थितावस्थायां लौकिकक्रियाव्यापृतमाहेति रामानुजाचार्याशयः ॥ तथा नीलकण्ठस्याऽपि ॥

समाधिमग्नतादशावाचकश्शब्दो मूले तु न दृश्यते ॥ मयि वर्तते इत्येतत् मां पश्यति इति तेन व्याख्यातं । व्युत्थानकाले न योगिनोऽप्यस्य मते स्वात्मसाक्षात्कारः । तर्हि तदा कथमस्य 'मयि वर्तते' इत्युक्तपरमात्ममात्रदर्शनं संगच्छते इति चिन्त्यं ॥

# आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
# सुखं वा यदि वा दुःखं स योगी परमो मतः ॥३२

वि० ॥ समदर्शनइत्युक्ते गोगवयादिवद्भवति किं साम्यदर्शनमित्याकांक्षायां एकत्वमास्थितइति साम्यदर्शनं स्वयमेव व्याख्यातं । इदानीं भगवदनुवर्तिविषयतया साम्यदर्शनं स्वयमेव व्याचष्टे आत्मेति । यथा सुखं स्वस्य प्रियं दुःखं चाप्रियं तथान्येषामपि भगवद्भक्तानामित्येवमात्मौपम्येन स्वसादृश्येन सर्वत्र भगवदनुवर्तिषु समं यः पश्यति सुखमेव सर्वभक्तेषु यो वांछति स्वात्मनइवेति

यावत् । स योगी परमो मतः इति विष्ण्वनुवर्तिषु स्वात्मनीव स्नेहं कुर्वन् श्रेष्ठो मत इति फलितार्थः ॥

शं० ॥ किंचान्यत् । आत्मौपम्येनात्मा स्वयमेवोपमीयतइत्युपमा तस्या उपमाया भाव औपम्यं । तेनात्मौपम्येन सर्वत्र सर्वभूतेषु समं तुल्यं पश्यति योऽर्जुन ॥ सच किं समं पश्यतीत्युच्यते । यथा मम सुखमिष्टं तथा सर्वप्राणिनां सुखमनुकूलं । वा शब्दश्चार्थे । यदि वा यच्च दुःखं मम प्रतिकूलमनिष्टं यथा तथा सर्वप्राणिनां दुःखमनिष्टं प्रतिकूलमित्येवमात्मौपम्येन सुखदुःखे अनुकूलप्रतिकूले तुल्यतया सर्वभूतेषु समं पश्याति न कस्यचित्प्रतिकूलमाचरत्यहिंसक इत्यर्थः । यएवमहिंसकः सम्यग्दर्शननिष्ठः स योगी परमउत्कृष्टो मतोऽभिप्रेतस्सर्वयोगिनां मध्ये ॥

रा० ॥ ततोऽपि काष्ठामाह—स्वात्मनश्चान्येषां चात्मनामसंकुचितज्ञानैकाकारतयौपम्येन स्वात्मनि चान्येषु च सर्वत्र वर्तमानं पुत्रजन्मादिरूपं सुखं तन्मरणादिरूपं च दुःखमसंबंधसाम्यात्समं यः पश्यति । परपुत्रजन्ममरणादिसमं स्वपुत्रजन्ममरणादिकं यः पश्यतीत्यर्थः । स योगी परमो मतः योगकाष्ठां गतो मतः ॥

विचारः

'प्राणा यथात्मनोऽभीष्टाभूतानामपि ते तथा ।
आत्मौपम्येन भूतेषु दयां कुर्वन्ति साधवः' ॥

'सर्वभूतसुहृच्छान्तः' इत्याद्युक्तरीत्या प्राणिनामहिंसा परमो धर्मः । परकीयसुखदुःखादिकं स्वकीयसुखदुःखादिवज्जानाति योगी । योगित्वेनानुचितरागद्वेषशून्यत्वादित्थं भावयति ॥

मूले सर्वत्रेत्युक्तावपि सर्वत्रशब्दो भगवद्भक्तपरः । अन्यथा प्रमाणविरोधः । नारायणद्विट्तदनुबंधिनिग्रहस्य क्षत्रियाणां परमधर्मत्वात् । यद्यसंकुचितार्थो विवक्षितस्स्यात् तर्हि अर्जुनो युद्धादुपरमेत ॥

किंच 'बंधुरात्मात्मनस्तस्य येनात्मैवात्मना जितः । अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ।' इत्यत्रोक्तं स्मर्तव्यं भगवान् भक्तप्रियः अभक्ताप्रियः इति ॥

'विष्णुर्बन्धुस्सतां नित्यं परात्मा ह्यसतामरिः ।
तत्प्रसादजया भक्त्या जितो यस्य वशेत्विव ॥
वर्तते तस्य मित्रं स तदन्यस्य च शत्रुवत् ।'

इति स्मृतिः । 'यस्तान्द्वेष्टि स मां द्वेष्टि यस्ताननु स मामनु' इति पाण्डवशत्रुमित्राणि प्रति श्रीकृष्णवचनं प्रसिद्धं ॥

'तस्याहं न प्रणश्यामि' 'स च मे न प्रणश्यति' इत्येतत्प्रकरणगतानि च वाक्यानि भक्तभगवतोर्विशेषानुरागं प्रतिपादयन्ति ॥

ईश्वरविषये सर्वत्र साम्यं नाम ऐश्वर्यादिभिरेकप्रकारत्वं विवक्षितं ॥ प्राणिसुखदुःखादिविषये तु भगवद्भक्तस्स्वसादृश्येनेतरभक्तसुखदुःखादिकं स्वीयमनुसंदध्यात् नतु भगवद्द्वेषिणां सुखादिकं । स्वापेक्षया न कोऽपि मित्रत्वमरित्वं वा कल्पयेत् । मित्रत्वशत्रुत्वप्रयोजकं न स्वस्योपकारो वापकारोवा भवेत् इति यावत् । किंतु भगवदपेक्षया यः साधुस्समे मित्रं भगवन्तं यो द्वेष्टि स मे शत्रुरित्येव व्यवहरतीति भावः ॥

एतेन 'सर्वभूतस्थमात्मान'मित्यारभ्य श्लोकचतुष्टयस्य विष्णूत्कर्षे तात्पर्यं प्रकटितं द्रष्टव्यं ॥ परे तु सर्वत्रेति शब्दमसंकुचितार्थं स्वीकृत्य 'कीटवद्विचरन्महीं' इत्यादिवचनान्यालंब्यार्हतविशेषपरिगृहीतात्यंतिकाहिंसा-धर्मपरतया श्लोकं व्याचक्षते ॥ एतदनुपपन्नं । उक्तोत्तरत्वात् । वैधहिंसायाः प्रतिषेधानर्हत्वात् ॥

स योगी परमः इत्यत्र परमशब्द उत्कृष्टवचनः ॥ नानेन कस्माचि-दपि योगिनस्सकाशादुत्कृष्टतरत्वमस्य विवक्षितं । केचित् पूर्वस्माद्योगिनः अयं उत्तम इति व्याचक्षते। तच्चिन्त्यं । पूर्वस्मादित्युक्तौ कस्मादिति विचार्यं । समदर्शन इत्युक्तात्मदर्शिनो वा सर्वभूतेत्युक्तश्रीकृष्णभजनशीलाद्वेति सन्दि-ह्यते । एतेभ्यः उत्कर्षः प्रकृतयोगिनः कुत इति च न ज्ञायते । न च वाच्यं सर्वथा वर्तमानोऽपीति यथाकथंचिदन्यायेन वर्तमानाच्छ्रैष्ठ्यं विवक्षितं स्या-दिति ॥ सर्वथा वर्तमान इत्युक्तः अपरोक्षज्ञानी निश्चितमोक्षलाभः । तस्मा-दस्य सुखदुःखसाम्यदर्शिनः परमत्वे गमकं न दृश्यते ॥ किंचापरोक्षज्ञानी खलु लोकव्यवहारे किंचिन्न्यायेन वाऽन्यायेन वा वर्तमानोऽपि भगवद्विषये भागवतविषयेचातिजागरूक एवास्ते । अतस्स आत्मौपम्येन सर्वभागवत-सुखादिकं स्वीयत्वेन मन्यतएव । तस्मात्परमशब्देन योगिषु मध्ये तारतम्य-विवक्षा न युक्ता भाति ॥

सर्वभूतस्थमित्यारभ्य चतुःश्लोक्यां योगविपाकदशासु क्रमेण सोपा-नारोह इव पूर्वपूर्वस्मादुत्तरोत्तरं पद्यं विपाकाधिक्यं प्रतिपादयतीति मत्वाद्य-काष्ठामाहेति व्याख्याति रामानुजाचार्यः ॥ इदं चिन्त्यं । श्लोकचतुष्टये अयमेव पूर्वावस्थां अयं तूत्तरां इति ज्ञापकस्यादर्शनात् । व्युत्क्रमेणापि पर्वभेदमादाय व्याख्यातुं शक्यत्वात् ॥ यद्यपि वक्ति देशिकिः 'प्रबलदुःखहे-त्वागमेऽपि निर्विकारत्वापादिकां योगविपाककाष्ठाभूतां कर्मज्ञानतारतम्य प्रयुक्तसुखदुःखतारतम्यानिवृत्त्यनुसन्धानरूपां चतुर्थीं दशामाह' इति ।

एतेन काष्ठात्वं नाविष्कृतं ॥ 'समदुःखसुखं धीरं' इत्याद्युक्तरीत्या कर्मयोग्यपि सुखादिसाम्यं पश्यतीति जीवात्मयोगपरिपाककाष्ठाज्ञापकं विशेषं न पश्यामः॥ किंच रामानुजाचार्यरीत्या श्लोकार्थश्चिंतनीयः। 'असंकुचितज्ञानैकाकारतया आत्मानस्समाः। सुखादिकं तु नात्मसंबन्धि। असंबन्धसाम्यात्सर्वं सुखादिकं समं स्वपुत्रजन्ममरणादिकं यः पश्यति स योगी' इति हि व्याख्यातं ॥ तथाच स्वस्य ज्ञानाकारतया स्वतो निर्लिप्तत्वं यः पश्यतीति फलितं ॥ अत्र वक्तव्य। पुरस्तादात्मनो निर्लेपो बहुवारमुक्तइति तस्यैवात्रोक्तिर्नीरसा। ज्ञानाकारतया स्वात्मनो निर्लेपानुसन्धानेन चारितार्थ्येसति आत्मौपम्येन साम्यानुसन्धानवचनं च निष्प्रयोजनं इति ॥

आत्मौपम्यनिरूपणावसरे शंकरानन्दआह 'नित्यमुक्तस्वरूपत्वेन यथाहं देहतद्धर्मकर्मसुखदुःखादिसंबन्धरहितस्तथा सर्वेऽपि च देहिनो देहतद्धर्मतत्कर्मसुखदुःखादिसंबन्धरहिता एवेत्यात्मौपम्येन' इति। अयं रामानुजाचार्यमार्गमनुसरति॥ सर्वे आत्मानस्स्वरूपतो दुःखादिलेपवर्जिताइत्यनुसन्धानेन किं प्रयोजनं ॥ परस्य सुखं दुःखंच यद्ययं स्वीयतया मन्येत तदायमहिंसकस्सन् लोकोपकाराय प्रभवेत्। यदि त्वात्मयाथात्म्यानुसन्धानेन तदीयदुःखादिकमवगणयेत्तर्हि लोकानुपकर्तुं न सर्वथा यतेत ॥ उपकारेच्छायाः परतापदर्शनमूलत्वात् ॥ शंकरभाष्ये त्वत्रैतादृशक्लिष्टकल्पना न दृश्यते।

'सर्वत्र' शब्दार्थएव श्रीमध्वाभिमतोऽर्थः शंकराचार्यार्थाद्भिद्यते। आद्यो भगवद्भक्तपरत्वेन तं संकोचयति। द्वितीयस्त्वसंकुचिततया व्याचष्टे।

केचिदत्रोक्तं सुखदुःखसाम्यदर्शनं योगशास्त्रोक्तेन योजयंति। तथाहि। 'मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनं' इति सूत्रं। इदं व्याख्यातं तद्वार्तिके। 'सर्वप्राणिषु सुखसंभोगापन्नेषु मैत्रीं भावयेत्। दुःखितेषु करुणां। पुण्यात्मकेषु मुदितां। अपुण्य-

शीलेषूपेक्षां। एवमस्य भावयतः शुक्लो धर्म उपजायते। ततश्च चित्तं प्रसीदति। प्रसन्नमेकाग्रस्थितपदं लभते' इति॥ इद योगसूत्र विना सम्यगालोचनमालंबितं कैश्चिच्छांकरैः॥ सर्वत्राहिंसकत्वं नोक्तमत्रसूत्रे इति स्फुटं। गीतायां तु तदुक्तं। किंच पुण्यात्मकेषु मुदिता अपुण्यात्मकेपूपेक्षा सूत्रोदिता। इयं श्रीमदाचार्यभावं किंचिदनुसरति। सर्वप्राणिष्वनुरागपक्षं च प्रतिषेधति। किंच चित्तप्रसादनसाधनेषु मध्ये इदमेकमिति पत्तञ्जल्यभिप्रायः। इदं विहाय प्रच्छर्दनविधारणादीन्यपि साधनान्यभिहितानि। तेन योगाभ्यासे आरंभदशायां उक्तमिदं साधनं। गीतावचनं तु पटुतरध्यानयोगपरिपाकवंतं प्रति प्रवृत्तं। अतः पातंजलसंवादान्वेषणमयुक्तं प्रतिपाद्यभेदादित्यवधेयं॥

इमं श्लोकं मधुसूदनो विस्तरेण पातंजलपरिग्रहपूर्वं व्याख्याति॥ वेङ्कटनाथश्शब्दतोऽर्थतश्चात्र मधुसूदनमनुसरति। तयोराशयः किंचिच्छब्दतः किंचिदर्थतश्चानूद्यते। तथाहि। योगी द्विविधः परमः अपरमश्चेति। केवलं अद्वैततत्वज्ञानवान् अपरमः पुरस्तादुक्तः। इदानीं उच्यमानः परमो योगी। तत्वज्ञानमनोनाशवासनाक्षयाः परमयोगिज्ञापकाः। एते परस्परं साध्यसाधनभावापन्नाः। मनोनाशवासनाक्षययोरभावे योगस्य परमत्वं न सिद्ध्यति। मनोनाशो नाम वृत्तिरूपपरिणामं परित्यज्य सर्ववृत्तिविरोधिना विरोधाकारेण परिणामः। अयं योगेन साध्यः। वासनाक्षयो नाम विवेकजन्यायां चित्तप्रशमवासनायां दृढायां सत्यपि बाह्ये निमित्ते क्रोधाद्यनुत्पत्तिः। अस्य वासनाक्षयस्य प्रतिकूलवासनोत्पादनं साधन॥ आत्मौपम्येनेति गीतोक्तं वासनाक्षयसाधनं प्रतिपादयति। वासना द्विविधा मलिना शुद्धा चेति। मलिना द्विविधा बाह्या आभ्यंतरा च। आभ्यंतरा कामक्रोधादिरूपा। बाह्या त्रिविधा, लोकवासना, शास्त्रवासना, देहवासना चेति। सर्वे जना यथा न निंदन्ति तथैवाचरिष्यामीत्यशक्यार्थाभिनिवेशो लोकवासना। शास्त्रवासना त्रिविधा। पाठव्यसनं, बहुशास्त्रव्यसनं, अनुष्ठानव्यसनं चेति। मलिनत्वं चास्याः क्लेशाव-

हत्वात्पुरुषार्थानुपयोगित्वाद्दर्पहेतुत्वाज्जन्महेतुत्वाच्च । देहवासनापि त्रिविधा । आत्मभ्रांतिर्गुणाधानभ्रांतिर्दोषापनयनभ्रांतिश्चेति । तत्रात्मत्वभ्रांतिर्विरोचनादिषु प्रसिद्धा सार्वलौकिकी । गुणाधानं द्विविधं लौकिकं शास्त्रीयं च । समीचीनशब्दादिविषयसंपादनं लौकिकं । गङ्गास्नानशालग्रामतीर्थादिसंपादनं शास्त्रीयं । दोषापनयनमपि द्विविधं लौकिकं शास्त्रीयं च । चिकित्सकोक्तैरौषधैर्व्याध्याद्यपनयनं लौकिकं । वैदिकस्नानाचमनादिभिरशौचाद्यपनयनं वैदिकं । एतस्याश्चसर्वप्रकारायामलिनत्वमप्रामाणिकत्वादशक्यत्वात्पुरुषानुपयोगित्वात्पुनर्जन्महेतुत्वाच्च ॥ तदेतल्लोकशास्त्रदेहवासनात्रयमविवेकिनामुपादेयत्वेन प्रतिभासमानमपि विविदिषोर्वेदनोत्पत्तिविरोधित्वाद्विदुषो ज्ञाननिष्ठाविरोधित्वाच्च विवेकिभिर्हेयं। मुमुक्षोर्हि पुरुषस्य विदेहमुक्तिर्जीवन्मुक्तिरिति द्वे प्रयोजने । विदेहमुक्त्यार्थिनस्तत्वज्ञान प्रधानं । मनोनाशवासनाक्षयावुपसर्जनं । जीवन्मुक्त्यर्थिनस्तु मनोनाशवासनाक्षयौ प्रधानं तत्वज्ञानमुपसर्जनं ॥ केवलतत्वज्ञानमात्रवान् मनोनाशवासनाक्षयरहितो जीवन्मुक्तिसुखमजानन्विक्षिप्तचित्ततया दृष्टदुःखमनुभवन्देहपाते कैवल्यभागी भवति । सः अपरमो योगी । युगपदभ्यस्ततत्वज्ञानमनोनाशवासनाक्षयस्तु योगी परमः जीवन्मुक्तिसुखं अनुभवति । इति । अत्रोच्यते ॥ विस्तरेणानया दिशा उपपादितस्य गीताक्षरेष्वारोहो दुर्घटः । यथाश्रुतव्याख्याने तत्रतत्र पक्षपातं प्रकटयन् वेङ्कटनाथोऽप्यत्र मधुसूदनं निर्विचारं आलबते इत्याश्चर्यं ॥ यदीदृशं श्रीमध्वोक्तं स्यात्तदा साग्रहेणानेन प्रत्याख्यातं तदभविष्यत् । स्वपूज्यो मधुसूदन इति स न निरस्तः । अपितु सादरमनुसृतश्च॥ जीवन्मुक्तिः विदेहकैवल्यमिति पुरुषार्थद्वित्वं अप्रामाणिकं ॥

तत्वज्ञानवानपरमो योगीति यदभिप्रेतं तच्चिंत्यं । अहं ब्रह्मास्मि विना ब्रह्म सर्वं मिथ्येति ज्ञानं हि तद्रीत्या तत्वज्ञानं । अस्मिन् ज्ञाने जाते किमस्त्यधिकं संपादनीयं यस्याभावेन ज्ञानिनः परमत्वं न

संगच्छते । मनोनाशवासनाक्षययोस्तत्वज्ञानपूर्वभावित्वस्यैव वस्तुतस्तद्राद्धांते वक्तव्यत्वात् ॥

तत्वज्ञानमनोनाशवासनाक्षयाः मिलिताः यथा निरूपिताएव फलनिर्वाहका इत्यत्र प्रमाणं न ज्ञायते । मधुसूदनस्तु वासिष्ठरामायणमुदाहरति । तस्य प्रामाण्यं नाभ्युपगम्यते ॥

गीतायां हि आत्मौपम्येन परसुखं दुःखं च स्वीयं मन्वानो योगी परम इत्युक्तं ॥ नेह मनोनाशो वा वासनाक्षयो वाभिहितो दृश्यते । यस्य तु मनो नष्ट वासनाश्च ध्वस्ताः स कथं स्वसुखदुःखे वा परसुखदुःखे वानुसन्धत्ते । औपम्यानुसन्धानं च तस्मिन्न संभवति । तत्वज्ञानमनोनाशवासनाक्षयवान् ब्रह्मतयावस्थितः पर कंच न वेद इति तद्विवक्षया औपम्येन 'सर्वत्र समं पश्यति सुखं वा दुःखं वा' इत्यादिप्रयोगानिरर्थकाः ॥

जीवन्मुक्तौ सुखानुभवार्थमयं गीतोपदेश इति परहृदयं । परसुखस्य स्वीयतानुसंधाने कथंचित्स्यादिदं । परदुःखस्य स्वीयतायां कथमिदमुपपद्यते । गीतायां तु खलु सुखदुःखयोरेवोक्तिर्दृश्यते । सर्वप्रकारायावासनायाविवक्षितत्वे ज्ञापकं न दृश्यते ॥

वासनाक्षयस्य प्रतिकूलवासनोत्पादनं साधनमभिहितं । योगशास्त्रोक्तमैत्रीकरुणादयस्साधनानीत्यभिप्रायः स्यात् । गीतोक्तं तु न प्रतिकूलवासनोत्पादनं दर्शयति । योगसूत्रोक्तमन्यादिह विवक्षितं त्वन्यदिति पुरस्तादुक्तं द्रष्टव्यं ॥ किंच प्रतिकूलवासनावान् योगी कथं नाम नष्टमनाः स्यात् । कथंतरां जीवन्मुक्तस्सन्निरतिशयसुखमनुभवेत् ॥

वासनाविभागनिरूपणावसरे शास्त्रवासना त्रिविधा, पाठव्यसनं बहुशास्त्रव्यसनं अनुष्ठानव्यसनमित्युक्त्वा पुरुषार्थानुपयोगित्वाद्दर्पहेतुत्वात् जन्म-

हेतुत्वाच्च तासां सर्वासां हेयत्वं निरूपितं । इदमसत् । शास्त्राणि विना पुरुषार्थसंपादनाय वा दर्पनिवृत्तये वा जन्मातिक्रमणाय वा उपायांतराभावात् । शास्त्रशरण्याहि सर्वे स्वोद्धाराय ॥ एतेन यद्देहवासनाविभागानिरूपणावसरे शास्त्रीयगंगास्नानादिना देहे गुणाधानभ्रमः शास्त्रीयस्नानाचमनाद्यनुष्ठानै-र्देहे दोषापनयनभ्रमः इति प्रदर्श्य तयोर्हेयत्वं प्रतिपादितं तदपि प्रत्युक्तं ॥ शास्त्रोक्ताचारतिरस्कारे निमित्ताभावात् । अप्रामाणिकत्वेन अशक्यत्वेन पुरुषा-र्थानुपयोगित्वेन पुनर्जन्महेतुत्वेन च विधिनिषेधादीनां हेयत्वं तु न संभवति । चित्तशुद्ध्यादिद्वारा तेषां तारकत्वात् । तस्माद्बहुकल्पनानिबिडमिदं भगव-दाशयापरिज्ञानमूलमित्युपेक्ष्यम् ॥

---

*अर्जुन उवाच—*

**योयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ।**
**एतस्याहं न पश्यामि चंचलत्वात्स्थितिं स्थिरां ॥ ३३ ॥**

**चंचलं हि मनः कृष्ण प्रमाथि बलवद्दृढं ।**
**तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करं ॥ ३४ ॥**

वि० ॥ भगवदुक्तयोगस्याननुष्ठानलक्षणमप्रामाण्यमाशं-कते । योयमिति ॥ हे मधुसूदन । साम्येन भगवतस्साम्येन सर्वत्रैक्येन तथा भगवदनुवर्तिषु चात्मौपम्यरूपसाम्येनेति वा मनसएकाग्रत्वेनेति वा । योयं ध्यानयोगस्त्वया प्रोक्तः । एतस्य योगस्य चंचलत्वात्स्थिरां स्थितिं न पश्यामि ॥३३॥

चंचलत्वादित्यत्र कस्येति शंकां निरस्यन्मनोनिग्रहेणास्तु योगस्य स्थिरतेति शंकां निराह चंचलमिति । मनश्चंचलं हि प्रसिद्धं । प्रमाथि प्रमथनशीलं देहेन्द्रियक्षोभकरं ॥ किं च बलवत् विवेकेनापि जेतुमशक्यं । दृढं विषयवासनानुविद्धतया दुर्भेदं साधुविषये नेतुमशक्यं । अतआकाशे दोधूयमानस्य वायोः वस्त्रेण कुंभादिना वा निरोधनमशक्यं यथा तथा तस्य मनसो निग्रहं निरोधनं दुष्करमहं मन्ये जानामि ॥३४॥

शं० ॥ एतस्य यथोक्तस्य सम्यग्दर्शनलक्षणस्य योगस्य दुस्संपाद्यतामालक्ष्य शुश्रूषुर्ध्रुवं तत्प्राप्त्युपायमर्जुन उवाच । योयमिति । योयं योगस्त्वया प्रोक्तः साम्येन समत्वेन हे मधुसूदन एतस्य योगस्याहं न पश्यामि नोपलभे चंचलत्वान्मनसः किं—स्थिरामचलां स्थितिं । प्रसिद्धमेतत् । चंचलमिति । चंचलं हि मनः कृष्ण इति कृषतेर्विलेखनार्थस्य रूपं । भक्तजनपापादिदोषकर्षणात्कृष्णः । न केवलमत्यर्थं चंचलं प्रमाथि च प्रमथनशीलं प्रमथ्नाति शरीरमिन्द्रियाणि च विक्षिपति परवशीकरोति । किंच बलवन्नकेनचिन्नियंतुं शक्यं ॥ किंच दृढं तंतुनागवदच्छेद्यं (तंतुनागः= वरुणपाशशब्दितः जलचारीपदार्थोऽत्यंतदृढतया छेत्तुमशक्यत्वेन प्रसिद्धः) तस्यैवंभूतस्य मनसोऽहं निग्रहं रोधं मन्ये वायोरिव यथा वायोर्दुष्करो निग्रहः ततोऽपि मनसो दुष्करं मन्ये इत्यभिप्रायः

रा० ॥ योयं देवमनुष्यादिभेदेन जीवेश्वरभेदेन चात्यंतभिन्नतयैतावंतं कालमनुभूतेषु सर्वेष्वात्मसु ज्ञानैकाकारतया परस्परसाम्येन अकर्मवश्यतया च ईश्वरसाम्येन सर्वत्र समदर्शनरूपो योगस्त्वया प्रोक्तः एतस्य योगस्य स्थिरां स्थितिं न पश्यामि। मनसश्चंचलत्वात्। तथाह्यनवरताभ्यस्तविषयेष्वपि स्वतएव चंचलं पुरुषेणैकत्रावस्थापयितुमशक्यं मनः पुरुषं बलात्प्रमथ्य दृढमन्यत्र चरति। तस्य स्वाभ्यस्तविषयेष्वपि चंचलस्वभावस्य मनसस्तद्विपरीताकारात्मनि स्थापयितुं निग्रहं प्रतिकूलगतेर्महावातस्य व्यजनादिनेव सुदुष्करमहं मन्ये। मनोनिग्रहोपायो वक्तव्य इत्यभिप्रायः॥

विचारः ॥

'सिद्ध्यसिद्ध्योस्समो भूत्वा समत्वं योग उच्यते।' इति (द्वि-अ-४८) योगलक्षणमुक्तं। समत्वं कर्मयोगध्यानयोगयोरुभयोरप्युपपद्यते।

"विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ॥
शुनि चैव श्वपाके च पण्डितास्समदर्शिनः।
इहैव तैर्जितस्सर्गो येषां साम्ये स्थितं मनः।
निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः।" (५-१८-१९)

इति सर्वत्र निर्दुष्टब्रह्मसान्निध्यदर्शनं पाण्डित्यलक्षणत्वेनोक्तं। अस्मिन् षष्ठे अध्याये साम्यं बहुधा निरूपितं। मनस एकाग्रतायां रागद्वेषादिदूरीकरणं युक्त इत्युच्यते योगी समलोष्टाश्मकांचनः। (५—८) यथा दीपो निवातस्थो नेंगते सोपमा स्मृता (५—१९) इति साम्यं निरूपितं। विषमेषु जगद्वस्तुषु सर्वत्र साम्येन गुणपूर्णत्वनिर्दुष्टत्वादिना भगवास्थित्यनुसंधानं—

"सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबंधुषु ।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ (५-९)
सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥" (५-२९)

इत्यादिना निरूपितं । किंच भागवतेष्वनुरागादेः स्वसाम्येन कर्तव्यत्वं 'आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन। सुखं वा यदि वा दुःखं स योगी परमो मतः' इत्यनेनोक्तं ॥ अतआहाऽर्जुनः 'योयं योगस्त्वया प्रोक्तः साम्येन' इति ॥

'चंचलत्वात्' इत्यनंतरं मनस इति शेषः । इदं 'चंचलं हि मनः कृष्णे'त्युत्तरवाक्यादवगम्यते । योगस्य स्थिरां स्थितिं न पश्यामि मनसश्चंचलत्वात् इति योजना । यथाश्रुतवाक्यवृत्तौतु योगो न स्थिरस्थितिविषयः चंचलत्वात् इति स्यात्प्रयोगः । अत्र साध्याविशिष्टता स्फुटा । अत उक्तप्रकारेण 'मनस' इति शेषपूर्तिपूर्वकं व्याख्येयं । अनुमानाकारे वैयधिकरण्यप्रयुक्तो न दोषश्शंकनीयः । अस्मन्मते तस्यादोषत्वात् ॥

श्लोके प्रथमार्धे योगः साम्यंचोक्ते । तथापि द्वितीयार्धे 'एतस्य' इत्यनेन योग एव प्राधान्येन परामृष्टः । योग इति प्रथमांतत्वात् प्राधान्यं युज्यते । साम्येन इति तृतीययाऽप्राधान्यं च व्यक्तं । अतः एतस्य योगस्य इत्याचार्यभाष्यं साम्यमविवक्षित्वा ॥ 'मनसश्चंचलत्वाद्धि स्थितिर्योगस्य वै स्थिरा । विनाभ्यासान्नशक्या स्याद्वैराग्याद्वा न संशयः' । इति व्यासयोगे ॥

अयं योगः इत्यर्जुनवाक्ये अय इत्यनेन परामर्शः 'आत्मौपम्येने'त्यव्यवहितातीतश्लोकोक्तस्यैवेति मधुसूदनाशयोऽवगम्यते । तद्रीत्या हि तस्मिन् पद्ये वासनाक्षयानुबद्धसुखभरितजीवन्मुक्तावनुभूयमानं साम्यं प्रतिपादितं । विवक्षितो योगी अद्वैतसाक्षात्काराढ्यतत्वज्ञानवान् इत्यादाय तदु-

परि शंका । तत्वज्ञानिनो जीवन्मुक्त्यर्थं मनोनाशवासनाक्षयाववश्यभाविनौ । एतौ तु योगसाध्यौ । प्रारब्धकर्मणः प्राबल्यात् यथाजातेऽपि तत्वज्ञाने चित्तचांचल्यं तत्कृतदुःखादिकं चावर्जनीयं तथैव योगानुष्ठानं तत्साध्यमनोनाशवासनाक्षयौ चावर्जनीयौ। प्रारब्धस्य प्रबलत्वात् । अतो योगो दुःसाध्यः । स्वतो मनसश्चंचलत्वात् स्वभावस्य विपर्ययायोगात् प्रारब्धाख्यविरोधिसद्भावाच्च ॥ तस्मादनुपपन्नमेतदात्मौपम्येन सर्वत्र समदर्शी परमो योगीति ॥ एवमर्जुनाक्षेपाशयमाह मधुसूदनः । अत्रोच्यते । यदि तत्वज्ञानेन चित्तधर्माः साक्षिणस्सकाशान्निवारिताः । किमधिकेनापेक्षितेन । अस्य कृतकृत्यत्वात् । चित्तवृत्तिनिरोधं विना तत्वज्ञानोदयासंभवात् अयं तत्वज्ञानी तच्चित्तं तु न निरुद्धं इति विरुद्धं भाति । प्रारब्धं बलीयः अतो न योगः साध्यः इति यद्यर्जुनस्याक्षेपः तदानुगुण्येन प्रतिवचनमपि स्यात् । नहि प्रतिवचने प्रारब्धविजयायोपाय उपदिष्टः । स्वभावतश्चंचलमपि मनः वैराग्याभ्यासाभ्यां नियन्तुं शक्यं इति खलु प्रतिवचनाशयः । योगिषु परमयोगी अपरमयोगीत्यादिविभागपूर्वं बहुग्रन्थैर्मधुसूदनवेंकटनाथाभ्यां अतीतश्लोकव्याख्याने प्रतिपादितं तु पुरस्तादेव प्रत्युक्तं द्रष्टव्यम् ॥

साम्येनेत्यनेन प्राक् तत्रतत्रोक्तस्य समत्वस्य परामर्शममन्वानः शंकरानन्द आह । 'साम्येन साधारण्येन त्वया प्रोक्तः नतु मनोनिरोधनसाधननिरूपणपूर्वकं विशेषेणोक्तः' इति ॥ साम्यन मनसो लयविक्षेपशून्यतया केवलात्माकारावस्थानेन' इति श्रीधरव्याख्यानं । 'चित्तगतानां रागद्वेषादीनां विषमदृष्टिहेतूनां निराकरणेन' इति साम्यशब्दार्थ उक्तो मधुसूदनेन ॥ 'साम्येन सर्वेष्वात्मसु ज्ञानैकाकारतया परस्परसाम्येन अकर्मवश्यतया चेश्वरसाम्येन' इति रामानुजाचार्यभाष्यं । जीवानां परस्परं ईश्वरेण च

साम्यमप्रामाणिक

*श्रीभगवानुवाच—*

**असंशयं महाबाहो मनोदुर्निग्रहं चलं।**
**अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ३५**
**असंयतात्मना योगो दुष्प्रापइति मे मतिः।**
**वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥ ३६**

वि० ॥ अर्जुनोक्तं मनश्चांचल्यादिकं अंगीकृत्य मनोनिग्रहोपायं भगवानाह । असंशयमिति ॥ हे महाबाहो स्वभावतश्चंचलं मनोऽसंशयं यथा भवति तथा दुर्निग्रहं दुःखेन निरोध्यं तथाप्यभ्यासवैराग्याभ्यां तु निगृह्यते ॥ ३५ ॥

ननु यथा मत्तमातंगः स्वयमेव श्रांतस्सन् शांतो भवति तथा विषयैस्तृप्तं मनः कदाचित्स्वयमेव नियतं भवति किमभ्यासादिनेत्यतआह । असंयतेति । अभ्यासादितोऽवशीकृतचित्तेन योगो दुष्प्रापोऽसाध्यः इति मे मतिः । अभ्यासादिना वश्यात्मना वशीकृतमनस्केन तु पुंसा यतता पुनरनेनोपायेन यत्नं कुर्वता योगोऽवाप्तुं शक्यइत्यर्थः ॥

शं० ॥ एवमेतद्यथा ब्रवीषि । असंशयं नास्ति संशयो मनोदुर्निग्रहं चलमित्यत्र हे महाबाहो किंत्वभ्यासेन तु । अभ्यासो नाम चित्तभूमौ कस्यांचित्समानप्रत्ययावृत्ति-

श्चित्तस्य वैराग्यं नाम दृष्टादृष्टेष्टभोगेषु दोषदर्शनाभ्यासाद्वैतृष्ण्यं तेन च वैराग्येण गृह्यते । विक्षेपरूपः प्रचारश्चित्तस्यैवं तन्मनो गृह्यते । निगृह्यते । निरुध्यतइत्यर्थः ॥ ३५ ॥

यः पुनरसंयतात्मा तेन असंयतात्मनाभ्यासवैराग्याभ्यामसंयतआत्मांतःकरणं यस्य सोऽयमसंयतात्मा तेनासंयतात्मना योगो दुष्प्रापो दुःखेन प्राप्य इति मे मतिः । यस्तु पुनर्वश्यात्माभ्यासवैराग्याभ्यां वश्यत्वमापादित आत्मा मनो यस्य सोऽयं वश्यात्मा तेन वश्यात्मना तु यतता भूयोऽपि प्रयत्नं कुर्वता शक्योऽवाप्तुं योगउपायतो यथोक्तादुपायात् ॥

रा० ॥ चलस्वभावतया मनोदुर्निग्रहमेवेत्यत्र न संशयः । तथाप्यात्मनो गुणाकरत्वाभ्यासजनिताभिमुख्येनात्मव्यतिरिक्तेषु दोषाकरत्वदर्शनजनितवैतृष्ण्येन च कथंचिद्गृह्यते । असंयतात्मना आजितमनसा महतापि बलेन योगो दुष्प्रापएव । उपायतस्तु वश्यात्मना पूर्वोक्तेन मदाराधनरूपेणांतर्ज्ञानेन कर्मणा जितमनसा यतमानेनायमेव समदर्शनरूपो योगोऽवाप्तुंशक्यः ॥

विचारः ॥

असंशयमित्येतदर्धांगीकारेणार्जुनस्याक्षेपमभिनन्दति । सत्यमेतद्यदुक्तं भवता प्रमाथिबलवद्दृढत्वान्मनोदुर्निग्रहं इति । तथापि सर्वथा निग्रहो न शक्य इति न वक्तव्य अभ्यासवैराग्याभ्यां निग्रहस्य सम्भवात् इति भावः । अत्र योगशास्त्रोक्तसंवादो नास्माकमनिष्टः । तथाहि ॥ 'अभ्यासवैराग्याभ्यां

तन्निरोधः' इति सूत्रं '(१-१२) व्याख्यातं योगभाष्ये 'चित्तनदीनामोभयवाहिनी या वहति कल्याणाय वहति पापाय च। या तु कैवल्यप्राग्भारा विवेकविषयनिम्ना सा कल्याणवहा। संसारप्राग्भारा अविवेकविषयनिम्ना पापवहा। तत्र वैराग्येण विषयस्रोतः खिलीक्रियते। विवेकदर्शनाभ्यासेन विवेकस्रोतः उद्घाट्यते इत्युभयाधीनश्चित्तवृत्तिनिरोधः॥' इति। 'तत्र स्थितौ यत्नोऽभ्यासः' इति सूत्रं। भाष्यं। चित्तस्यावृत्तिकस्य प्रशान्तवाहिता स्थितिः। तदर्थः प्रयत्नो वीर्यमुत्साहस्तत्संपिपादिषया तत्साधनानुष्ठानमभ्यासः।' 'स तु-दीर्घकालनैरंतर्यसत्कारासेवितोदृढभूमिः'। इति सूत्रं (१-१४) भाष्यं। दीर्घकालासेवितो निरंतरासेवितः सत्कारासेवितः। तपसा ब्रह्मचर्येण विद्यया श्रद्धया च संपादितः सत्कारवान्दृढभूमिर्भवति। व्युत्थानसंस्कारेणद्रागित्येवानभिभूतविषय इत्यर्थः। 'दृष्टानुश्राविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यं' इति सूत्रं। भाष्यं। स्त्रियोऽन्नपानमैश्वर्यमिति दृष्टविषये विरक्तस्य स्वर्गवैदेह्यप्रकृतिलयत्वप्राप्तावानुश्राविकविषये वितृष्णस्य दिव्यादिव्यविषयसंप्रयोगेऽपि चित्तस्य विषयदोषदर्शिनः प्रसंख्यानबलादनाभोगात्मिका हेयोपादेयशून्या वशीकारसंज्ञा वैराग्यं इति॥ योगशास्त्रे वैराग्यं द्विविधमुक्तं। अपरं परं च। यतमानसंज्ञा व्यतिरेकसंज्ञा एकेंद्रियसंज्ञा वशीकारसंज्ञा इत्यवस्थाभेदेनापरं वैराग्यं चतुर्धा विभक्तं। तत्र किं सारं किमसारमिति गुरुशास्त्राभ्यां ज्ञास्यामीत्युद्योगो यतमानं। स्वचित्ते पूर्वविद्यमानदोषाणां मध्येऽभ्यस्यमानविवेकेनैते पक्वाः एतेऽवशिष्टा इति चिकित्सकवद्विवेचनं व्यतिरेकः। दृष्टानुश्राविकविषयप्रवृत्तेर्दुःखात्मत्वबोधेन बहिरिन्द्रियप्रवृत्तिमजनयंत्या अपि तृष्णायाः औत्सुक्यमात्रेण मनस्यवस्थानमेकेन्द्रियं। मनस्यपि तृष्णाशून्यत्वेन सर्वथा वैतृष्ण्यं तृष्णाविरोधिनी चित्तवृत्तिज्ञानप्रसादरूपा वशीकारसंज्ञा। अपरं वैराग्यं संप्रज्ञातसमाधेरन्तरंगं साधनमसंप्रज्ञातस्य तु बहिरंगं। तस्य त्वंतरंगसाधनं परमेव वैराग्यं। परं वैराग्यं च सूत्रितं 'तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यं' इति (१-१५) भाष्यं। 'दृष्टा-

नुश्राविकाविषयदोषदर्शी विरक्तः पुरुषदर्शनाभ्यासात्तच्छुद्धिप्रविवेकाप्यायितबुद्धिर्गुणेभ्यो व्यक्ताव्यक्तधर्मकेभ्यो विरक्तः इति । * * ज्ञानस्यैव परा काष्ठा वैराग्यं । एतस्यैवहि नान्तरीयकं कैवल्यं ' इति ॥ यथासंभवं अभ्यासवैराग्ययोरुक्तलक्षणं अङ्गीकर्तव्यं ॥ मनोनिग्रहे अभ्यासवैराग्ययोरप्यावश्यकत्वं योगशास्त्रोक्तदृष्टांतेनोपपादयति नीलकण्ठः । स आह । ' यथा कैदारिकः केदारेषु कुल्याजलं संचारयन् एकस्य द्वारं पिधायापरस्योद्घाटयति तद्वद्वैराग्येण विषयस्रोतः खिलीक्रियते अभ्यासेन कल्याणस्रोत उद्घाट्यते इति द्वयोरप्यावश्यकत्वं ' इति । एतेन ' वैराग्येण च ' इति च शब्दबोधितस्समुच्चयःप्रपंचितः । वसिष्ठाद्युक्तानां मनोजयोपायान्तराणां समुच्चयार्थः चकार इत्यभिप्रैति वेङ्कटनाथः । आह वसिष्ठः । ' अध्यात्मविद्याधिगमस्साधुसङ्गम एव च । वासनासंपरित्यागः प्राणस्पंदनिरोधनं । एतास्तायुक्तयः पुष्टास्संति चित्तजये किल । सतीषुयुक्तिष्वेतासुहठान्नियमयंति ये ॥ चेतस्ते दीपमुत्सृज्य विनिघ्नन्ति तमोंजनैः ' इति । हठनिरोधं विहाय क्रमनिरोधोपायाः अध्यात्मविद्याधिगमसाधुसङ्गमवासनापरित्यागप्राणस्पंदनिरोधाख्याः चत्वारः कथिताः । एतल्लक्षणानि तु मधुसूदनादिभिः स्वस्वमतानुगुण्येन निरूपितानि । अत्र तद्विचारो नावश्यकः ॥

अन्यत्र सच्छास्त्रेषूक्तानामुपायान्तराणां समुच्चयार्थश्चकार इति श्रीमध्वाशयः । अतएव ब्राह्मवचनं उदाहृतं भाष्ये ' शुभेच्छारहितानां च द्वेषिणां च रमापतौ । नास्तिकानां च वै पुंसां सदामुक्तिर्न युज्यते ' इति ॥ एतेन शुभेच्छा रमापतिभक्तिः आस्तिक्यं चोपायान्तराणि इत्यवगम्यते ॥

' महाबाहो ' ' कौन्तेय ' इति संबोधनस्वारस्यं दर्शयत्युत्कर्षदीपिकाकारः । अविरुद्धमितीहपठ्यते । ''पूर्वार्धे महाबाहो इति संबोधयन्महाबाहुनातिबलेन जितनिवातकवचादिना त्वयापि यद्येवमुच्यते तर्हि मनसो दुर्निग्रहत्वे संशयो नास्तीति सूचयति ॥ बाह्वादिबलसाध्यो मनसोनिग्रहो न

भवति किन्त्वभ्यासवैराग्यसाध्यः ॥ यथातिप्रबलैराजभिस्स्वगृहे वासयितुं दुर्घटो दुर्वासा अपि तव मात्राऽबलया कुन्त्या विषयेषु वैराग्येण तत्सेवनपरत्वं परित्यज्य तच्छुश्रूषाभ्यासेन स्वगृहे निवासितः प्रसादितश्च तथा त्वं तत्पुत्रो मदुक्तेनोपायेन दुर्निग्रहमपि मनोनिगृहीतुं योग्योऽसीति सूचयन्नाह । हे कौंतेय इति ॥ " इति ॥

स्वत एव मनश्चिरानुभूतभोगैः श्रांतंसत्प्रशाम्यति किमभ्यासवैराग्याभ्यामिति शङ्कां परिहरन्नाह । असंयतात्मनेति । अवशीकृतमनाः न योगायाधिकृतः । वशीकृतमनास्तु यत्नेन उपायेन च योगारूढो भवति । इत्यन्वयव्यतिरेकाभ्यामभ्यासवैराग्याद्युपायसाध्यत्वं योगस्य प्रतिपादितं ॥

अत्राक्षरार्थः स्फुटः । मधुसूदनस्तु 'यतता' 'उपायतः' इति शब्दाववधार्य स्वाभिप्रायं प्रपंचयति । अयमस्याभिसन्धिः । जातेऽपि तत्वसाक्षात्कारे ज्ञानी परमयोगित्वं न लभते । यतः प्रबलं प्रारब्धं दुःखमनेनानुभावयति । मनोनाशवासनाक्षयाभ्यां जीवन्मुक्तसुखं संपादयामीति यत्ने कृते प्रारब्धं प्रतिबध्नाति । अतो जीवन्मुक्तिसुखं दुस्संपादं इत्यर्जुनाक्षेपः । समाधानं त्वेवं ॥ यद्यपि प्रारब्धं प्रबलमेव तथापि यतता उपायतश्च जेतुं शक्यमेव । उपायो नामात्र पुरुषकारः । लौकिकस्य वैदिकस्य वा उपायस्य प्रारब्धकर्मापेक्षया प्राबल्यात् । अन्यथा लौकिकानां कृष्यादिप्रयत्नस्य वैदिकानां ज्योतिष्टोमादिप्रयत्नस्य च वैयर्थ्यापत्तेः । अथवा यथा प्रारब्धकर्मफलं तत्वज्ञानात्प्रबलमिति कल्प्यते दृष्टत्वात्तथा तस्मादपि कर्मणो योगाभ्यासः प्रबलोऽस्तु । शास्त्रीयस्य प्रयत्नस्य सर्वत्र ततः प्राबल्यदर्शनात् ॥ तस्मात्साक्षिगतस्य संसारस्याविवेकनिबन्धनस्य विवेकसाक्षात्कारादपनयेऽपि प्रारब्धकर्मपर्यवस्थापितस्य चित्तस्य स्वाभाविकीनामपि चित्तवृत्तीनां योगाभ्यासप्रयत्नेनापनयेसाति जीवन्मुक्तः परमो योगी । चित्तवृत्तिनिरोधाभावे तु तत्वज्ञानवानप्यपरमो योगीति सिद्धं ॥ इति ॥ अत्रोच्यते । प्रारब्ध-

कर्म पुरस्कृत्याक्षेपसमाधाने मूलारूढे न भवतः । तद्बोधकशब्दादर्शनात् । पुटात्पुटं विस्तरेण मधुसूदनीयमनुलिखन्नपि वेङ्कटनाथः पूर्वपक्षसमाधाने इत्थं नोपपादयति स्म । अन्ये शंकराचार्यादयश्च नैनं पंथानं आश्रयन्ते । तत्वसाक्षात्कारानंतरं प्राप्यमाणं दशाविशेषं विवक्षित्वाभ्यासवैराग्योपदेशः कुत इत्यत्र गमकं न ज्ञायते । विनाभ्यासवैराग्ये तत्वज्ञानमेव नोदेतीति स्फुटत्वात् ॥ 'असंयतात्मना' 'वश्यात्मना' इति पदाभ्यां तत्वसाक्षात्कारानंतरभाविमनोनाशवासनाक्षयपरिग्रहे न किंचिदपि ज्ञापकं । प्रारब्धस्य तत्वज्ञानादपि प्राबल्यकल्पने कुतस्तस्य पुरुषप्रयत्नादपि प्राबल्यं न कल्प्यते । यदि यत्नसामान्यस्य वा शास्त्रीययत्नस्य वा प्रारब्धात्प्राबल्यमुच्यते तर्हि तत्वज्ञानाय यतमानः कुतः प्रारब्धं न जयेत्। कुतोऽसौ नियमेन मनोनाशवासनाक्षयावपेक्षेत । किंच पुरुषप्रयत्नो बलवान् वोत प्रारब्धं बलीयोवेति विचारोऽत्राप्रस्तुतः । प्रयत्नस्यापि प्रारब्धनियतत्वेन तत्फलेष्वंतर्भावात् प्रयत्नप्राबल्यपक्षो न प्रत्याययति ॥ इति दिक् ॥ अलं विस्तरेण ॥

रामानुजाचार्यव्याख्याने भगवदाराधनरूपेणांतर्गतज्ञानेन कर्मणाऽयं जितमनाभवेत् । एतादृशकर्मैव मनोनिग्रहोपायः । श्लोकोक्ते अभ्यासवैराग्ये तु कर्मांगतयोक्ते इति भावःप्रकाशितः ॥ (पश्यततात्पर्यचंद्रिकायां) अत्र चिंत्यते। योगशब्देनेह ध्यानयोगस्य प्रकृतत्वादंतर्गतज्ञानभूतकर्मयोगस्य विवक्षा न रम्येति ॥

**अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।**
**अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति॥३७**

**कच्चिन्नोभयविभ्रष्टः छिन्नाभ्रमिव नश्यति ।**
**अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥३८॥**

**एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः ।**
**त्वदन्यः संशयस्यास्य छेत्ता नह्युपपद्यते ॥ ३९ ॥**

वि० ॥ अभ्यासादिहीनस्य फलं पृच्छति । अयतिरिति ॥ अयतिरप्रयत्नः श्रद्धया आस्तिक्यबुद्ध्या उपेतो युक्तः । योगात् ध्यानरूपोपायात् चलितमानसः योगसंसिद्धिं ध्यानसंपूर्तिं ध्यानफलं ज्ञानमिति यावत् । अप्राप्य हे कृष्ण कां गतिं गच्छतीति ॥ ३७ ॥

कच्चित्किमित्यर्थः । उभयविभ्रष्टः उभयस्मात्स्वर्गापवर्गरूपाद्विभ्रष्टः प्रच्युतः ऐहिकामुष्मिकपुमर्थाद्विभ्रष्टइति वा । यद्वा स्वर्गाद्युपायात् काम्यकर्मानुष्ठानादपवर्गोपायाद्ध्यानाच्च विभ्रष्टः अप्रतिष्ठो निराश्रयः अतएव ब्रह्मणः पथि परब्रह्मप्राप्त्युपाये विमूढः वायुना द्वेधाकृतमेघइव किं नश्यति नरकाद्यनर्थं प्राप्नोत्युत न नश्यति ॥ ३८ ॥

एतन्मे संशयं एतं संशयं । व्यक्तोऽर्थः ॥ ३९ ॥

शां० ॥ तत्र योगाभ्यासांगीकरणेन परलोकेहलोकप्राप्ति-निमित्तानि कर्माणि संन्यस्तानि योगसिद्धिफलं च मोक्ष-साधनं सम्यग्दर्शनं न प्राप्तमिति योगी योगमार्गान्मरण-काले चलितचित्तइति तस्य नाशमाशंक्यार्जुनउवाच । अयतिरिति । अयतिरप्रयत्नवान्योगमार्गे श्रद्धयास्तिक्यबु-द्ध्याचोपेतो योगादंतकालेऽपि चलितं मानसं मनो यस्य स चलितमानसो भ्रष्टस्मृतिः सो अप्राप्य योगसंसिद्धिं योग-फलं सम्यग्दर्शनं कां गतिं हे कृष्ण गच्छति ॥ ३७ ॥

कच्चिदिति । कच्चित्किं नोभयविभ्रष्टः कर्ममार्गाद्योगमा-र्गाच्च विभ्रष्टः संछिन्नाभ्रमिव नश्यति । किं वा न नश्यति। अप्रतिष्ठो निराश्रयो हे महाबाहो विमूढः सन् ब्रह्मणः पथि ब्रह्मप्राप्तिमार्गे ॥ ३८ ॥

एतदिति । एतन्मे मम संशयं कृष्ण छेत्तुमपनेतुमर्हस्य-शेषतः ॥ त्वदन्यस्त्वत्तोन्य ऋषिर्देवोवा छेत्ता नाशयिता संशयस्यास्य नहि यस्मादुपपद्यते न संभवत्यतस्त्वमेव छेत्तुम-र्हसीत्यर्थः ॥ ३९ ॥

रा० ॥ अथ 'नेहाभिक्रमनाशोऽस्ति' इत्यादावेव श्रुतं योगमाहात्म्यं यथावच्छ्रोतुमर्जुनः पृच्छति । अंतर्गतात्मज्ञा-नतया योगशिरस्कतया च हि कर्मयोगस्य माहात्म्यं तत्रो-दितं । तच्च योगमाहात्म्यमेव ॥

श्रद्धया योगे प्रवृत्तो दृढतराभ्यासरूपयतनवैकल्येन योगसंसिद्धिमप्राप्य योगाच्चलितमानसः कां गतिं गच्छति । उभयविभ्रष्टोऽयं छिन्नाभ्रमिव कच्चिन्न नश्यति । यथा मेघशकलः पूर्वस्माद्बृहतो मेघाच्छिन्नः परं बृहंतं मेघमप्राप्य मध्ये विनष्टो भवति तथैव कच्चिन्न नश्यति । कथमुभयभ्रष्टता । अप्रतिष्ठो विमूढो ब्रह्मणः पथीति यथावास्थितं स्वर्गादिसाधनभूतं कर्म फलाभिसंधिरहितस्यास्य पुरुषस्य स्वफलसाधनत्वेन प्रतिष्ठा न भवतीत्यप्रतिष्ठः । प्रक्रांते ब्रह्मणः पथि विमूढः तस्मात्पथः प्रच्युतः । अत उभयविभ्रष्टतया किमयं नश्यत्येव उत न नश्यति । तमेनं संशयमशेषतश्छेत्तुमर्हसि । स्वतः प्रत्यक्षेण युगपत्सर्वं सर्वदा पश्यतस्त्वत्तोऽन्यस्संशयस्यास्य छेत्ता नह्युपपद्यते ॥ ३७ ॥ ३८ ॥ ३९ ॥

विचारः

यः कश्चित्पुण्यपुरुषः सन्मार्गे प्रवृत्तस्सन् मध्ये व्यापद्यते तं प्रत्यर्जुनः पृच्छतीति व्यक्तं गम्यते ।

कोऽयं सन्मार्गे प्रवृत्तः पुरुषः । कीदृशस्तद्भ्रंशः । उभयभ्रष्टत्वेनानर्थशङ्का कीदृशी । इति विचार्यं ।

केचित्कर्मयोगीविविक्षित इत्यभिप्रयन्ति । स हि श्रद्धयोपेतः चित्तशुद्धये ईश्वरार्पणबुद्ध्या कर्म कुर्वाणः । तस्मात्कर्मयोगाद्भ्रष्टस्सन् विषयेष्वासक्तः किं मम मोक्षेण काम्यान्यागादीनेव तत्तल्लोकप्राप्तये करिष्यामि इति चलितमानसः किं नश्यत्युत न नश्यतीति व्याकुर्वते ॥ अत्र चिन्त्यं । कर्मयोगिनः फलाभिसंध्यादिना काम्यमार्गेऽवतरणेऽपि प्रागनुष्ठितं सुकर्म न निष्फलं

भवतीत्येतत् 'नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते । स्वल्पमप्यस्य धर्मस्य त्रायते महतोभयात्' इत्यनेन व्यक्तमुक्तं । एवं कर्मयोगमाहात्म्यस्य स्फुटमुपदिष्टत्वेन पुनरीषदनुष्ठितस्य कर्मयोगस्य साफल्यमस्ति वा न वेति शंका नोपपद्यते । किंचेदं ध्यानयोगप्रकरणं । अतो ध्यानयोगेप्रवृत्तं वैराग्याभ्यासमांद्यादनिष्पन्नपरिपाकं प्रत्येष प्रश्नो युज्यते । किंचोभयभ्रष्टत्वमस्य पुरुषस्याशङ्कितं । कर्मयोगाच्चालितोऽप्ययं चित्तशुद्ध्यादिकं लभत एव । यद्ययं काम्ये पुनः प्रवर्तते तर्हि काम्यफलस्यावश्यंभावेन चोभयभ्रष्टत्वं नोपपद्यते । अतो यः प्रथमं कर्मयोगीसन् पश्चात्काम्ये प्रवर्तमानस्तंप्रति प्रश्न इति पक्षो न रम्यः । एतेन रामानुजाचार्येणोक्तं ' अथ नेहाभिक्रमनाशोऽस्ति इत्यादावेव श्रुतं योगमाहात्म्यं यथावच्छ्रोतुमर्जुनः पृच्छति ' इत्यादि प्रत्युक्तं । ध्यानयोगपरामर्शस्यैवालौचित्यात् ॥

नीलकण्ठस्त्वत्र योगादित्येतत् कर्मयोगादिति व्याख्याय तस्माच्चलितमानसः पुरुषस्त्यक्तकर्मा संन्यासी प्रश्नविषय इति मन्यते । कर्मयोगात्पातेऽपिप्राक्तनपुण्यकर्मणां ईश्वरार्पणबुद्ध्यानुष्ठितानां यथोचिताचित्तशुद्धिसंपादकत्वस्य प्रमितत्वात्पुरस्तादेवार्जुनायोपदिष्टत्वाच्चोभयभ्रष्टत्व कथमिति चिन्त्यम् ॥

"जन्मान्तरसहस्रेषु यज्ञदानतपोध्वरैः ।
नराणां क्षीणपापानां कृष्णभक्तिः प्रजायते ॥

स्ववर्णाश्रमधर्मेण तपसा हरितोषणात् ।
साधनं प्रभवेत्पुंसां वैराग्यादिचतुष्टयम् ॥

नित्यनैमित्तिकैरेव नियमेनेश्वरार्पितैः ।
बहुजन्मकृतैर्विप्रस्सत्वशुद्धिं समश्नुते ॥"

इत्यादिना प्राक्तनपुण्यकर्मणां चित्तशुद्ध्यादिप्रयोजनवत्त्वं सिद्धं । न च वाच्यं चित्तशुद्धेः स्वतः पुरुषार्थत्वाभावात् सम्यग्दर्शनाद्यलाभेसति

कर्मयोगी नष्टएवेति । सम्यग्दर्शनद्वारभूतायास्तत्वशुद्धेर्ज्ञानोपायत्वेन साफल्यादभिक्रमानाशस्य च प्रागेव प्रतिपादितत्वात् । तस्माद्यत्कर्मयोगं प्रति 'नेहाभिक्रम' इत्यादिनोपदिष्टं तस्येह ध्यानयोगेऽपि विनियोगस्संभवति वा उतन्यायवैषम्यादिना विछिन्नध्यानयोगी नश्यत्येवेत्यर्जुनाशय एव रमणीयः । अतएव 'योगात्' इत्येतत् 'ध्यानरूपोपायात्' इति व्याख्यातं विवृत्याचार्येण ॥ 'योगात् समाधियोगात्' इत्युक्तं शङ्करानंदीयेऽपि ॥

विवक्षितश्चलितमानसोऽयतिः पुरुषः संन्यास्येवेति शाङ्कराआहुः । त्रिविधस्तैरभ्युपगतः सन्यासः । विद्वत्संन्यासः विविदिषासंन्यासः आपत्संन्यासश्चेति । आद्यंप्रति पातशङ्का अनुपपन्ना । अंत्यस्य ब्रह्मणःस्थानं 'आपद्यपि च कुर्वीत संन्यासं ब्राह्मणोत्तमः । यदनुष्ठानमात्रेण प्रयाति ब्रह्मणः पदं' इत्यादिना फलतयोक्तं । मध्यस्य विविदिषासंन्यासिनस्तु उभयभ्रष्टता संभाविता । स हि वेदान्तश्रवणमनननिदिध्यासनानि कुर्वन्मध्ये विपद्यते । ज्ञानपरिपाकशून्यत्वान्न मोक्षसुखमनुभवति । नापि स्वर्गादिकं सर्वकर्मसंन्यासात् । यथोक्तं मधुसूदनीये । 'यस्तु प्राकृतकर्मभिः लब्धविविदिषापर्यन्तचित्तशुद्धिः कृतकरत्वात्सर्वाणि कर्माणि परित्यज्य प्राप्तपरमहंसपरिव्राजकभावः मध्येव्यापद्यते नायमुपासनासहितकर्मफलं देवलोकमनुभवत्यर्चिरादिमार्गेण । नापि केवलकर्मफलं पितृलोकमनुभवति धूमादिमार्गेण । कर्मणामुपासनानां त्यक्तत्वात् वर्णाश्रमाचारभ्रष्टत्वात् । तस्मात्सर्वकर्मत्यागिनं प्रत्येवायं प्रश्नः । अनर्थप्राप्तिशङ्कायाः तत्रैवसंभवात्' इति ॥ अत्रोच्यते । परमहंसपरिव्राडेवात्र विवक्षित इति को निर्बंधः । ध्यानयोगमारभ्य वैराग्याभ्यासमांद्याद्भांतरायांतराद्वा निरुद्धो विवक्षित इति ग्रहणे बाधकं न ज्ञायते । न च वाच्यं तस्मिन्पापिष्ठे 'नहिकल्याणकृत्' इत्युत्तरवाक्यमयुक्तमिति । तत्रकल्याणशब्देन प्रथममनुष्ठितस्य योगाभ्यासस्य विवक्षितत्वात् । नतु तस्माच्चलनानन्तर तत्कृत्यस्य । यन्निरूपितं संन्यासत्रैविध्यं तदसत् ।

निरूपितस्यापत्संन्यासस्याप्रामाणिकत्वात् । विविदिषासंन्यासी वर्णाश्रमाचार-भ्रष्ट इत्युक्तंच न सङ्गच्छते । संन्यासिसामान्यः कर्म न करोति वर्णाश्रमा-चारजातमुल्लंघते इति परेषां भ्रमः ॥ अत्र श्रीधरव्याख्यानं द्रष्टव्यं । तेन ह्युक्तं । 'अभ्यासवैराग्याभावेन कथंचिदप्राप्तसम्यग्ज्ञानः किं फलमाप्नोतीत्यर्जुन उवाच अयतिरिति । प्रथमं श्रद्धोपेतएव योगे प्रवृत्तः नतु मिथ्याचारतया । ततः परंतु अयतिर्न सम्यग्यतते । शिथिलाभ्यास इत्यर्थः । तथा योगाच्चलितं मानसं विषयप्रवणं चित्तं यस्य। मन्दवैराग्य इत्यर्थः । एवमभ्यासवैराग्यशैथि-ल्याद्योगस्य संसिद्धिफलं ज्ञानमप्राप्य कां गतिं प्राप्नोति' इति । एतस्मिन् व्याख्याने संन्यासाश्रम्येव विवक्षितः पद्येनेति नोक्तमित्यवधेयम् ।

श्लोकाक्षरेष्वर्थदौर्घट्यमिह न विद्यते । 'कां गतिं' इत्यत्र किं शब्दः प्रश्नार्थः नत्वाक्षेपार्थः । अयतिरित्यल्पप्रयत्नवानुक्तः । अल्पार्थेनञ् । अलवणा यवागूरितिवत् ॥ श्रद्धा आस्तिक्यबुद्धिः । शान्त्यादेरनेनोपलक्षणया ग्रहणं केचिदाहुः । योगात् ध्यानयोगात् नतु कर्मयोगाज्ज्ञानयोगाद्वा ॥ चलितमानसः चालितं प्रच्यावितं मानसं मनो यस्य । अनेन लयविक्षेपाद्यंत-रायकृतध्यानविच्छेदोऽभिप्रेतः । नतु काम्येषु यज्ञादिषु प्रवृत्तिः । योगसं-सिद्धिर्ध्यानफलं सम्यग्दर्शनं । उभयविभ्रष्ट इत्यत्रोभयशब्देन स्वर्गापवर्गौ विवक्षितौ । अथवा ऐहिकामुष्मिकफले ॥ यथा मेघशकलो मेघमेकं परित्यज्य मेघान्तरमप्राप्य वृष्टययोग्यं सदन्तराले नश्यति तथोभयभ्रष्टः किमयं नश्य-तीतिभावः ॥ अप्रतिष्ठः काम्यमार्गध्यानयोगान्यतरालंबनरहितः । अतएव ब्रह्मप्राप्त्युपाये विमूढः ॥

'एतन्मे' इति पाठः प्रसिद्धः। सशयशब्दलिंगानुगुण्येन विशेष्यनिघ्नतया 'एतं मे' इति केचित्पठन्ति। (तथाहि रामानुजाचार्यः) आद्यपाठं स्वीकुर्व-द्भिरेतत् इत्यस्य 'एतं' इत्यर्थे उक्तः । 'मे संशयं' इत्यत्र मे असंशयं इति पद-विभागमुपादाय असंशयं यथाभवति तथा अशेषतः छेत्तुमर्हति इति क्रियाविशे-

षणत्वेन केचिद्व्याकुर्वते । एवं योजनेविशेष्यविशेषणभावप्रसक्तालिंगसाम्याभावदोषः परिहृतः । परंतु संशयस्यास्येत्युक्त्यननुरोधो दोषः कथंचित्समाधेयः ॥

*श्रीभगवानुवाच—*

**पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।**
**नहि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ॥४०**

वि० ॥ प्रश्नस्योत्तरमाह सार्धैश्चतुर्भिः । हे पार्थ इह लोके अमुत्र परलोके च नाशस्तस्य नास्ति । इह नाशस्तिर्यगादिदुर्गतिप्राप्तिः । परत्र नाशो नरकप्राप्तिः । तद्द्वयं तस्य योगभ्रष्टस्य नेत्यर्थः । नञ्द्वयमादरार्थं । कुतइत्यत उक्तं । नहीति । कल्याणकृत् श्रद्धया किंचित्कालं ध्यानादिकृदित्यर्थः ॥

शं० ॥ पार्थेति । हे पार्थ नैवेह लोके नामुत्र परस्मिन्वा लोके विनाशस्तस्य विद्यते नास्ति । नाशो नाम पूर्वस्माद्धीनजन्मप्राप्तिः । स तस्य योगभ्रष्टस्य नास्ति । नहि यस्मात्कल्याणकृच्छुभकृत् कश्चिद्दुर्गतिं कुत्सितां गतिं । हे तात तनोत्यात्मानं पुत्ररूपेणेति पिता तात उच्यते । पितैव पुत्र इति पुत्रोऽपि तातउच्यते । शिष्योऽपि पुत्रतुल्यउच्यते । यतो न गच्छति ।

रा० ॥ श्रद्धया योगे प्रक्रांतस्य तस्मात्प्रच्युतस्येह चामुत्र च विनाशो न विद्यते । प्राकृतस्वर्गादिभोगानुभवे

ब्रह्मानुभवे चाभिलषितानवाप्तिरूपः प्रत्यवायाख्यानिष्टावाप्तिरूपश्च विनाशो न विद्यतइत्यर्थः । नहि निरतिशयकल्याणरूपयोगकृत्कश्चित्कालत्रयेऽपि दुर्गतिं गच्छति ॥

विचारः ॥

' नेहाभिक्रमनाशोऽस्ति 'इतिकर्मयोगविषये उक्तस्य ध्यानयोगेऽप्यतिदेशाभिप्रायेण भगवानर्जुनसंशयं परिहरति । पार्थेति । तस्येत्यनेन ध्यानयोगं श्रद्धयाऽऽरभ्य यो मध्येंऽतरायनिरुद्धस्त्यजति स विवक्षितः । विहितमार्गेणसकृदनुष्ठितयोगत्वेन तस्य कल्याणकृत्त्वं सिद्धं । तद्विषये विछेदोऽकिंचित्कर इति भावः ॥

केचित्संबोधनशब्दानां गूढभावोऽवश्यमन्वेषणीयइति व्यग्रमानसास्संतः उत्प्रेक्षया अयुक्तमाशयं कल्पयन्ति । तथाह्यत्र ' पार्थ ' शब्दभावमाहोत्कर्षदीपिकाकारः । ' नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते । स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ' इति मदुक्तं दिक्प्रकाशकं अल्पबुद्धित्वात् स्त्रीस्वभावेन त्वया विस्मृत्य पृष्टमिति पार्थेति संबोधनेन ध्वनितं ' इति ॥ इदमसत् । पृथाया अत्रोपालंभस्यायुक्तत्वात् । अन्यथा सर्वेऽपि पुरुषाः स्त्रीसंभवाइति सर्वेषां स्त्रीस्वभावत्वेनाल्पबुद्धित्वं वाच्यं स्यात् । नाप्येवं प्रश्नकरणेऽर्जुनस्याल्पबुद्धित्वं व्यक्तं । ध्यानयोगेऽभिक्रमनाशाद्यनर्थोऽस्ति न वेति प्रश्नस्य समंजसत्वात् । लोकोपकाराय वा मंदमोहपरिजिहीर्षया वा च प्रश्नस्योपपत्तेः ॥

विच्छिन्नयोगस्यापि इह वा अमुत्र वाऽनर्थप्राप्तिर्नेत्युक्तं भगवता । श्रद्धया किंचित्कालं ध्यानादिकृत् पुण्यप्राप्यान् लोकान् लब्ध्वा तत्र बहुकालमुषित्वा योगनिमित्तमामुष्मिकं सुखमनुभवति । कृमिकीटादिदुर्योनिमलब्ध्वा

श्रीमतां गेहे पुनर्जायमान ऐहिकं सुखं चानुभवति ॥ तिर्यगादिदुर्गतिप्राप्तिरिह भूलोके नाशो विवक्षितः । नरकादिप्राप्तिरमुत्र नाशः ।

इहशब्देनभूर्भुवस्स्वरादिप्राकृतसर्वफलानां ग्रहणमभिप्रयन्नमुत्रेत्यनेन ब्रह्मानुभवाख्यापवर्गं गृह्णाति रामानुजाचार्यः । इदं चिन्त्यं । अपवर्गस्यात्र साक्षाद्विवक्षाया अयोगात् । प्रकृतोहि पुरुषो विच्छिन्नयोगो न तु सिद्धः । विच्छेददोषात्सर्वथानर्थो भवति वेति शङ्कायां पुण्यफलं लभ्यत एवेति हि समाधानाशयः । अतोऽत्रापवर्गमविवक्षित्वा परलोकफलान्येव परामृष्टानीति गम्यते । एतादृशफलानि तत्र तत्र स्मृतिषूक्तानि । 'अश्वमेधसहस्राणि वाजपेयशतानि च । एकस्य ध्यानयोगस्य कलां नार्हन्ति षोडशीं ॥ स्नानं तेन समस्ततीर्थसलिले सर्वापि दत्तावनिर्यज्ञानां च कृतं सहस्रमखिलादेवाश्च संपूजिताः । संसाराच्च समुद्धृताः स्वपितरः त्रैलोक्यपूज्योऽप्यसौ यस्य ब्रह्मविचारणे क्षणमपि स्थैर्यं मनः प्राप्नुयात् ॥' इत्यादिस्मर्तव्यं । इह न नाश इत्यनेन दुर्योनिप्राप्तिशङ्का निवारिता इत्येतद्भगवदुत्तरवाक्येनावगम्यते ॥ 'तद्य इह रमणीयचरणा अभ्याशोह्यत्तेरमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा' इति प्रमाणसिद्धं समाधानं ॥

इह इत्यनेन भूलोके संभाविताशिष्टगर्हारूपमनिष्टमभिप्रैति भगवानिति शाङ्करा मन्यन्ते । (पश्यत वेङ्कटनाथीयशङ्करानन्दीयमधुसूदनीयेषु) अमुत्रानर्थस्तु दुर्योनिदुर्गतिप्राप्तिलक्षण इति तदाशयः ॥

'तस्य' इति मूलपदं विच्छिन्नध्यानयोगपरं इति स्फुटं । परेतु विविदिषासंन्यासिनं गृह्णंति । 'तस्य यथाशास्त्रं कृतसर्वकर्मसंन्यासस्य सर्वतोविरक्तस्य गुरुमुपसृत्य वेदांतश्रवणादिकुर्वतोऽन्तराले मृतस्य योगभ्रष्टस्य' इत्याह मधुसूदनः । 'संन्यासऋतसत्यशमदमाद्युत्तमतपोविशिष्टस्य ब्रह्मचर्याहिंसादिविशिष्टधर्मवतो योगिनो यतेः' इत्याह शङ्करानन्दः । अत्र चिंत्यते ।

यतिरेवात्र विवक्षित इति को निर्बंधः । शमादिसर्वसंपन्नोऽयं इत्यत्र च गमक न ज्ञायते । यद्यपि 'श्रद्धयोपेतः' इति श्रद्धावान् प्रसक्तः । तथापि शमादिसंपन्नब्रह्मज्ञान्येवात्र विवक्षित इति न ज्ञायते ॥ 'योगभ्रष्टः कष्टांगतिं गच्छति । अज्ञत्वेन देवयानपितृयानमार्गान्यतरासंबंधित्वात्स्वधर्मभ्रष्टवत् । इति पूर्वपक्षमुत्थाप्य 'सन्यासाद्ब्रह्मणःस्थानं' इत्यादिप्रमाणबलादस्य ब्रह्मलोक-प्राप्तिं प्रसाध्य समाधत्ते मधुसूदनः । अतीतश्लोकव्याख्याने शङ्करानंदस्तु ब्रह्मलोकं आपत्संन्यासफलत्वेन क्लृप्तममन्यतेति स्मर्तव्यम् ॥

'नहि कल्याणकृ'दित्यनेन सुकृतसामान्यं निष्फलं न भवति किमु वाच्यं विच्छिन्नयोगस्य न नैष्फल्यमिति ज्ञायते ॥

कल्याणं ब्रह्म करोति स्वात्मना साक्षात्करोति जानातीति कल्याण-कृच्छब्दं ब्रह्मज्ञानिवाचकत्वेन व्याचष्टे शङ्करानंदः । स्वात्मत्वेन ब्रह्मणः साक्षात्कारो बाधितः । करोतेर्ज्ञानार्थकत्वे चोपपत्तिश्चिंत्या ॥

तातेति सवात्सल्यसंबोधनं । भगवतः परमप्रेमास्पदत्वादर्जुनस्य ॥ तनोति विस्तारयति स्वोपदिष्टविद्यां इति व्युत्पत्त्या स्वार्थिकेऽणि तत एव तातः इति केचित् ॥

विच्छिन्नयोगोऽपि क्रमेण सद्गतिं लभते इत्यत्र जडभरतो दृष्टांतः ॥

**प्राप्य पुण्यकृतान् लोकानुषित्वा शाश्वतीः समाः।**
**शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥४१**

अथवा योगिनामेव कुले भवति धीमतां ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशं ॥ ४२ ॥

वि० ॥ तर्हि किं प्राप्नोतीत्यतआह । प्राप्येति । पुण्यकृतान् पुण्यसंपाद्यान् लोकान् । प्राप्य । तेषु शाश्वतीस्समाः अनेकसंवत्सरानुषित्वा शुचीनां श्रीमतां धनिनां गेहे अभिजायते ॥ ४१ ॥

धीमतां ज्ञानिनां योगिनां कुले वंशे वा भवति । यत् ईदृग् जन्म उक्तं द्विविधं जन्मएतत् । दुर्लभं कष्टलभ्यं न सुलभसाध्यं। हि प्रसिद्धं ॥ ४२ ॥

शं० ॥ किंत्वस्य भवति । प्राप्येति । योगमार्गेषु प्रवृत्तः संन्यासी सामर्थ्यात्प्राप्य गत्वा पुण्यकृतामश्वमेधादियाजिनां लोकांस्तत्र चोषित्वा वासमनुभूय शाश्वतीर्नित्याः समाः संवत्सरान् । तद्भोगक्षये शुचीनां यथोक्तकारिणां श्रीमतां विभूतिमतां गेहे गृहे योगभ्रष्टोऽभिजायते ॥ अथेति। अथवा श्रीमतां कुलादन्यस्मिन्योगिनामेव दरिद्राणां कुले भवति जायते । धीमतां बुद्धिमतां । एतद्धिजन्म यद्दरिद्राणां योगिनां कुले दुर्लभतरं दुःखेन लभ्यतरं पूर्वमपेक्ष्य लोके जन्म यदीदृशं यथोक्तविशेषणे कुले ॥

रा० ॥ कथमयं भविष्यतीत्यत्राह । यज्जातीयभोगाभिकांक्षया योगात्प्रच्युतोऽयमतिपुण्यकृतां प्राप्यान् लोका-

न्प्राप्य तज्जातीयानतिकल्याणान् भोगान् योगमाहात्म्यादेव भुंजानो यावत्तद्भोगतृष्णावसानं शाश्वतीस्समास्तत्रोषित्वा तस्मिन् भोगे वितृष्णः शुचीनां श्रीमतां योगोपक्रमयोग्यानां कुले योगोपक्रमे भ्रष्टोयोगमाहात्म्याज्जायते ॥ परिपक्वयोगश्चलितश्चेत् योगिनां धीमतां योगं कुर्वतां स्वयमेव योगोपदेशक्षमाणां कुले भवति । तदेतदुभयविधं योगयोग्यानां योगिनां च कुले जन्म, लोके प्राकृतानां दुर्लभतरं । एतत्तु योगमाहात्म्यकृतं ॥

विचारः

पुण्यकृतां लोकान् इति शांकरपुस्तकेषु पाठो दृश्यते । तथा रामानुजाचार्योऽपि पठति । पाठयोर्नातीवार्थभेदोऽवगम्यते ।

शाश्वतीः समाः बहून् संवत्सरान् इत्यर्थः ॥ परलोकेषु ब्राह्ममानेन वासस्य मानुषमानापेक्षयात्यतिशयत्वेन शाश्वतत्वकथनमुपपद्यते । शाश्वतीस्समा इत्यस्याभिनवगुप्ताचार्यव्याख्यानं द्रष्टव्यं । स आह । 'शाश्वतस्य विष्णोः समाः वैष्णवानि त्रीणि वर्षाणि' इति । अस्याशयो दुर्गमः ।

विवक्षितो योगभ्रष्टो यतिरेव नतु गृहस्थादिरिति शाङ्करा मन्यन्ते । विवक्षानर्हत्वेन काम्यकर्मिणं कर्मयोगिनं च बहिष्कृत्य यस्त्यक्तसर्वकर्मा सन्यतिर्भूत्वा योगमार्गे प्रवृत्तः श्रवणादिकुर्वन्नन्तराले म्रियमाणः तं प्रति प्रकरणमित्याहुः । उक्तं शङ्करानन्दीये । 'कर्मिणस्सति कर्मभ्रंशे पुण्यलोकप्राप्तिः शुचिश्रीमद्गृहे अभिजननं च न संभवति । तैलपाकवत्सांगस्यैव कर्मणः फलावश्यंभावित्वनियमात् । न तथा योगिनः । तस्य देवतादर्शनवद्यावद्यावद्योगानुष्ठानं तावत्तावत्फलवद्भवति । तत एव योगभ्रंशेऽपि योगिनः

पुण्यलोकप्राप्तिः शुचिश्रीमत्कुलप्रसूतिश्चेत्यर्थः' इति । अत्र विच्छेदस्य फलवैधुर्यं यदुक्तं तत्काम्ययज्ञादिपरं । कर्मयोगे त्वभिक्रमनाशाद्यभावस्य प्रागेवोक्तत्वात् । किंच काम्यकर्मिणो योगित्वमेव नास्ति । अतस्तस्य विवक्षाऽयोगो व्यक्तः । कर्मयोगिनःपरामर्शोऽप्यत्रायुक्तः । उक्तयुक्तेः । ध्यानयोगस्यैवात्र प्रस्तुतत्वाच्च । एवं कर्मिकर्मयोगिनोर्बहिर्भावेऽपि यतिरेवात्रग्राह्यो नत्वाश्रमांतरस्थ इति निर्बंधे गमकं चित्यं । यदि गृहस्थादयो यतिभिन्नाः सर्वथा ज्ञानानधिकारिणः इत्यभिप्रायः तर्हि 'अथवा योगिनामेव कुले भवति धीमता' मित्युक्तिरसंगता स्यात् । अत्र हि ज्ञानी विवक्षितः । तत्कुलप्रसूत्युक्त्या तस्य गार्हस्थ्यं गम्यते । धीमत्त्वेन योगित्वेन च विशेषणादनात्मज्ञो विवक्षित इति न शक्यते वक्तुं । गृहिणां सर्वथाज्ञानयोगायोगमाशंक्य विमनाअपि शङ्करानंदो गृहिणां केषांचिदात्मज्ञानमभ्युपगच्छतिस्म । यथोक्तमनेन । 'ननु योगिनामेव ज्ञानिनां गृहमेधिनां कुले भवतीति यदुक्तं तन्नोपपद्यते । गृहिणां ब्रह्मवेदनासंभवात् । ज्ञानोत्पत्तेरधिकारासंभवाच्च । शमदमवैराग्यसंन्यासाद्यंतरंगसाधनशून्यानां तेषां श्रवणादिना ज्ञानमपरोक्षं न संभवति विना यतिं तत्रापि परमहंसान् । तदुक्तं । 'ब्रह्मात्मैकविज्ञानं वेदांतश्रवणादिना । जायते परहंसस्य यतेर्मुख्याधिकारिणः । नाश्रमांतरनिष्ठस्य' इति । ततस्तेषां ज्ञानाभावे कुतो योगनिष्ठेतिचेत् । तर्हि धीमतां कर्मशास्त्रार्थज्ञानवतां योगिनां कर्मयोगिनां कुले भवतीति ब्रूम इति चेन्न । तथात्वे जन्मनो दुर्लभतरत्वाभावप्रसगाच्छ्रोत्रियकुलाभिजननस्य सत्कर्मवत्साधारण्याद्येये सत्कर्मवंतस्तेतेश्रोत्रियकुल एवाभिजायंते । ततो जन्मनो दुर्लभतरत्वानुपपत्तिप्रसूतार्थापत्त्या गृहिणामपि केषांचिदीश्वरप्रसादवतां शुद्धात्मनां ज्ञानं ज्ञानयोगित्वं चाभ्युपगंतव्यं' इति ॥ एतेन यतित्वाभावेऽपि ज्ञानं ज्ञानयोगश्च संभावितः इत्युक्तं ज्ञायते । एवं ध्यानयोगस्यापि विना यतित्वं संभावितत्वात् किमिति विवक्षितो योगभ्रष्टो नियमेनयतिरित्यु-

च्यते । पुनर्योगप्राप्तये यस्य धीमतो योगिनः कुलेऽयं जायते स न ध्यानयोगीति वक्तुं न शक्यते । अन्यस्यापेक्षितध्यानयोगसंधानोपकारकत्वायोगात् । तस्मादाश्रमाविवक्षामंतरा यो योगे प्रवृत्तस्सन् अंतरायेण निरुद्धः स विवक्षित इत्येव वाक्यार्थो निरवद्यः ॥

अस्मिन् पद्यद्वये पुण्यलोकप्राप्ति श्रीमत्सुतत्वेन जननं चाह । कुलं न केवलं श्रीमत्त्वेन विशेषितं । किंतु शुचित्वेन । अन्यथा धनमदेनानर्थोऽपि प्राप्येत ॥ द्वितीयं पद्यं दरिद्रब्राह्मणपरमिति शाङ्करा व्याचक्षते । नात्र श्रीमत्त्वं कुलस्याभिहित । 'शुचीनां श्रीमतां' इति पदे विहाय 'योगिनां धीमतां' इत्युक्तं द्रष्टव्यं । 'गेहे' इति पूर्वपद्ये प्रयुक्तं । तत्स्थाने 'कुले' इति द्वितीये दृश्यते । अत्रार्थवैलक्षण्यं न विवक्षितं । किंच कुले इत्युक्तावपि केवलं वंशे जन्मनोऽकिंचित्करत्वात् सुतत्वादिना उपदेशार्हतया जन्म विवक्षितमिति प्रदर्शयति देशिकः । श्लोकयोर्वाक्यगत्यालोचनायां योगभ्रष्टो द्विविधः । एकः प्रारब्धोपचितभोगवासनः अपरः दृढवैराग्यः । आद्यः पुण्यलोकानुषित्वा श्रीमान् जायते । द्वितीयस्तदपेक्षयाधिककालं योगमनुतिष्ठिन् भ्रशं लेभे इति हेतोः ब्रह्मवित्पुत्रत्वादिना जायमानः शीघ्रतरं सिद्धो भविष्यति इति व्याख्यानस्यास्त्यवकाशः । अत्राह शङ्करानन्दः । 'यदि प्राक्तनकर्मवशात् हृदये विषयभोगेच्छावेगवान् तदा पुण्यकृतां लोकाननुभूय शेषानुभूत्यै श्रीमतां गेहे अभिजायते । यदि हृदये चित्तशोधकसत्कर्मविशेषवशात्तीव्रमोक्षेच्छावैराग्यवेगस्तदा स योगी । अथवा अथ शब्द आनन्तर्यार्थः । वाशब्दोऽवधारणार्थः । अथैव देहपातानन्तरमेव धीमतां ज्ञानिनां तत्रापि योगिनां ज्ञानयोगनिष्ठानामेव कुले भवति । प्रभवतीत्यर्थः । * * लोकान्तरं योन्यन्तरमगत्वा कालव्यवधानं विना जननं दुर्लभतरं' इति ॥ अत्र चिन्त्यते । अथवेति पक्षान्तरं कथितं इति न विवादः । शुचि श्रीमद्गेहे जायते अथवा धीमद्योगिकुले जायते इति पक्षद्वयं स्फुटं । उभयथापि पुण्यलोकप्राप्तिर्न प्रति-

षिध्यते । उचितलोकवासानंतरं श्रीमद्गृहे वा योगिगृहे वा जायते इति वाक्यार्थः सुगमः । अथवेत्यस्याथैवेत्यर्थमादाय यद्व्याख्यातं तत्क्लिष्टं भाति॥

योगभ्रष्टेन लभ्यमाना:लोकाः ब्रह्मलोका एव । एकस्मिन्नपि भोगभूमिभेदापेक्षया बहुवचनमिति मधुसूदनो मन्यते । उचितेतरस्वर्गादिलोकानां व्यावृत्तौ गमकं चिन्त्यं ॥

'एतद्धि दुर्लभतर'मित्यत्र एतच्छब्देन श्रीमद्गेहजननं योगिकुलजननं इत्युक्तजननद्वयस्य संग्रहो वा उत द्वितीयमात्रस्येति संदिह्यते । उभयमप्यतिदुर्लभमित्यर्थं विवृत्याचार्य आह । तथैव रामानुजाचार्यवेंकटनाथौ मन्येते । द्वितीयमात्रं विवक्षितमिति शंकराचार्यनीलकंठश्रीधरशंकरानंदाः ॥ उत्तरस्मिन् श्लोके एतद्विचार्यते ॥

---

**तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकं ।**
**यतते च ततो भूयः संसिद्धौ कुरुनंदन ॥ ४३ ॥**
**पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ।**
**जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ४४ ॥**

वि० ॥ तत्र द्विप्रकारेऽपि जन्मनि पौर्वदेहिकं पूर्वदेहे भवं तं। बुद्धिसंयोगं भगवति मनोयोगं । ध्यानमिति यावत् । लभते । ततो भूयः पौर्वदेहिकादधिकं संसिद्धौ ध्यानसंपूर्तौ यतते यत्नं करोति। हे कुरुनन्दन । तेनैव पूर्वाभ्यासेनावशोऽपि सन् ह्रियते ध्यानादौ। बुद्धिपूर्वं स्वरसतयाप्रवृत्तिही-

नोऽपि पूर्वाभ्यासवशात् ध्यानादिकर्मणि प्रवर्ततइत्यर्थः। योगभ्रष्टस्य पुण्यलोकादिकमित्येतत्कैमुत्येनाप्याह। जिज्ञासुरपीति। योगस्य ध्यानयोगस्य जिज्ञासुरपि केवलं योगज्ञानेच्छुरपि। नलोकाव्ययेति नञा निर्दिष्टस्यानित्यत्वाद्योगस्येति साधु॥ शब्दब्रह्म विधिनिषेधरूपशब्दब्रह्मातिवर्तते। विधिनिषेधातीतो भवति। मुक्तो भवतीति यावत्। किमु किंचित्कालं योगानुष्ठानेनेति भावः॥

शं०॥ यस्मात् तत्रेति। तत्र योगिनां कुले तं बुद्धिसंयोगं बुद्ध्या संयोगं बुद्धिसंयोगं लभते। पौर्वदेहिकं पूर्वस्मिन्देहे भवं पौर्वदेहिकं। यतते च यत्नं करोति। ततस्तस्मात्पूर्वकृतात्संस्काराद्भूयो बहुतरं संसिद्धौ संसिद्धिनिमित्तं हे कुरुनन्दन॥

कथंभूतः पूर्वदेहबुद्धिसंयोगइति। तदुच्यते। पूर्वेति। यः पूर्वजन्मनि कृतोऽभ्यासः स पूर्वाभ्यासः। तेनैव बलवता ह्रियते। हि यस्मादवशोऽपि स योगभ्रष्टो न कृतंचेद्योगाभ्याससंस्काराद्बलवत्तरमधर्मादिलक्षणं कर्म तदा योगाभ्यासजनितेन संस्कारेणाह्रियते। अधर्मश्चेद्बलवत्तरः कृतस्तेन योगजोऽपि संस्कारोऽभिभूयतएव। तत्क्षये तु योगजस्संस्कारः स्वयमेव कार्यमारभते न दीर्घकालस्थस्यापि विनाशस्तस्यास्तीत्यर्थः। जिज्ञासुरपि योगस्य स्वरूपं ज्ञातुमिच्छन् योगमार्गे प्रवृत्तः संन्यासी योगभ्रष्टः सामर्थ्यात्सोऽपि

शब्दब्रह्म वेदोक्तकर्मानुष्ठानफलमतिवर्ततेऽपाकरिष्यति । किमुत बुद्ध्वा यो योगं तन्निष्ठोऽभ्यासं कुर्यात् ॥

रा० ॥ तत्र जन्मनि तमेव पौर्वदेहिकं योगविषयं बुद्धिसंयोगं लभते । ततस्सुप्तप्रबुद्धवद्भूयस्संसिद्धौ यतते । यथा नांतरायहतो भवति तथा यतते । तेन पूर्वाभ्यासेन । पूर्वेण योगविषयेणाभ्यासेन सः योगभ्रष्टो ह्यवशोऽपि योगएव ह्रियते । प्रसिद्धं ह्येतद्योगमाहात्म्यमित्यर्थः । अप्रवृत्तयोगो योगे जिज्ञासुरपि ततश्चलितमानसः पुनरपि तामेव जिज्ञासां प्राप्य कर्मयोगादिकं योगमनुष्ठाय शब्दब्रह्मातिवर्तते । शब्दब्रह्म देवमनुष्यपृथिव्यंतरिक्षस्वर्गादिशब्दाभिलापयोग्यं ब्रह्म प्रकृतिः । प्रकृतिबंधाद्विमुक्तो देवमनुष्यादिशब्दाभिलापानर्हं ज्ञानानन्दैकतानमात्मानं प्राप्नोतीत्यर्थः ॥

विचारः ॥

केचिद्योगभ्रष्टाः श्रीमतां शुचीनां गेहे जायंते केचिद्योगिनां धीमतां कुले इत्युक्तं ॥ प्रागभ्यस्तयोगपाटववैचित्र्येणैतद्वैषम्यमुपपद्यते । सकृदभ्यस्तयोगो वा चिराभ्यस्तयोगो वा परस्मिन् जन्मनि यतमानः पूर्वाभ्यासबलाद्योगे पुनःप्रवृत्तो भवति । अतएवास्य द्विप्रकारस्याऽपि योगभ्रष्टस्य विनाशो न विद्यत इति साधूक्तं मंतव्यं ॥ श्लोके 'तत्र' इत्यस्य द्विप्रकारे जन्मनीत्यर्थः । एवं विवृत्याचार्येण मधुसूदनश्रीधरवेंकटनाथैश्च व्याख्यातं । शङ्कराचार्याशयस्त्वन्यथा प्रदृश्यते । अयं तस्याभिसंधिः । श्रीमत्त्वेन जायमानाद्योगभ्रष्टाद्दरिद्रत्वेन योगिकुले जायमानो वरिष्ठः । एतुद्दुर्लभतरं इत्यतीतश्लोकवाक्यं

द्वितीयोक्तयोगिकुलजननं प्रति प्रवृत्तं । कुतस्तस्य वरिष्ठत्वमित्याकांक्षायां हेतुरुच्यते । तत्रेत्यादिना । पौर्वदेहिकयोगं लभमानः पूर्वाभ्यासेन ह्रियमाणश्च दरिद्रो योगिकुलप्रसूत एव न तु श्रीमानिति ॥ इदमनुपपन्नं ॥ यदि तत्रेत्यादिना प्रतिपादितं कल्याणं द्वितीयोक्तस्यैव तर्हि प्रथमोक्तस्य कल्याणं नोक्तमापद्यते । न च वाच्यं श्रीमद्गृहजन्ममात्र तस्य कल्याणमिति । तावन्मात्रस्य पुरुषार्थत्वाभावात् । किंच श्रीमत्कुले जायमानो योगभ्रष्टः केवलं जिज्ञासोर्वरीयानवगम्यते । जिज्ञासोरपि क्रमेण शब्दब्रह्मातिवर्तनमिह कथ्यते । एतेन हि कैमुतिकन्यायोऽभिप्रेतः । यदि द्वितीयोक्त एव योगभ्रष्टः परामर्शविषयः तर्हि प्रथमोक्तस्य कैमुत्यानंतर्भावेन उत्थित्यनुक्तिरेव प्रसज्येत । किंच कुतः श्रीमच्छुचिगेहे जायमानस्येयमुक्तिरनुपपन्नेति न ज्ञायते । किं आगमबाधात् । अथवा युक्तिबाधेन । नाद्य. । आगमविरोधस्यादर्शनात् । न द्वितीयः । कालविलंबेन यत्नातिशयादिना पूर्वाभ्यासह्रियमाणत्वस्य सम्भवात् । अतएव हि शङ्करभाष्याशयमप्युपेक्ष्य मधुसूदनादिभिर्द्वयोरपि योगभ्रष्टयोर्ग्रहणं कृतं । मधुसूदनवाक्यमनूद्योत्कर्षदीपिकाकारः शाङ्करव्याख्यानरक्षणाय यतमानो मधुसूदनीयं निराह । उक्तमनेन । 'यत्त्वेतादृशजन्मद्वयदुर्लभत्वं कस्मात् यस्मात् । तत्र द्विप्रकारेऽपि जन्मनि । इति, तदुपेक्ष्य । अथवेत्यादिनोक्तपक्षस्य श्रैष्ठ्यप्रतिज्ञायाहेतोरावश्यकत्वात् । अन्यथोभयोरपि साम्यप्रसङ्गे प्रतिज्ञाघातापत्तेः ।' इति । अत्र वक्तव्यं । अथवेत्यादिनोक्तपक्षस्य श्रैष्ठ्यं अस्तुनाम । तत्रेत्यादिनैव तस्य श्रैष्ठ्यं संपद्यत इति को निर्बंधः । एतद्दुर्लभतरं इत्यत्र एतदित्यनेन द्विप्रकारं जन्मोक्तमित्यङ्गीकारे बाधकाभावात्सुरसत्वाच्चोक्तमयुक्तं । द्वितीयोक्तं जन्म प्रथमोक्ताद्वरिष्ठं इत्याकारिका प्रतिज्ञा कृतेत्युपादाने हि सङ्कटः । नैवमुपादेयं । 'न हि कल्याणकृ'दिति प्रतिज्ञाया उपपादकत्वेनैव प्राप्येत्यारभ्य सार्धश्लोकत्रयस्य सार्थक्यसंभवात् । यदुक्तं उभयोरपि साम्यप्रसङ्ग इति तन्न । कालविलंबादिना वैषम्यस्य वक्तुं

शक्यत्वात् । अन्यथा तस्य पौर्वदेहिकयोगलाभाभावे पूर्वाभ्यासेन ह्रियमाणत्वाभावे च प्रागभ्यस्तस्य योगस्य नैष्फल्यमेवोक्तप्रायं भवति ॥

श्रीमद्गृहे जननमात्रस्य पुरुषार्थत्वकथनं तु नीरसं । तथा विवक्षायां शुचीनामिति विशेषणस्य वैयर्थ्यप्रसंगः ॥ किंचोत्कर्षदीपिकाकारादयोऽद्वैताधारत्वेन परमप्रामाणिकमाहुर्वासिष्ठरामायणं । उक्तो हि तत्र वसिष्ठेन शुचिश्रीमत्प्रसूतस्ययोगावाप्त्या क्रमेणोद्धारः । तथाहि ॥ "योगभूमिकयोत्क्रांतजीवितस्य शरीरिणः । भूमिकांशानुसारेण क्षीयते पूर्वदुष्कृतम् ॥ ततस्सुरविमानेषु लोकपालपुरेषु च । मेरुपर्वतकुंजेषु रमते रमणीसखः ॥ ततस्सुकृतसंभारे दुष्कृते च पुराकृते । भोगक्षयात्परिक्षीणे जायंते योगिनो भुवि ॥ शुचीनां श्रीमतां गेहे गुप्ते गुणवतां सताम् ॥ जनित्वा योगमेवैते सेवंते योगवासनाः ॥ तत्र प्राग्भावनाभ्यस्तयोगभूमिक्रमं बुधाः ॥ दृष्ट्वा परिपतंत्युच्चैरुत्तरं भूमिकात्रयम्' इति ॥ अतो युक्त्युपेतत्वात् स्वव्यूहाभ्युपगतप्रमाणेनापि सिद्धत्वात् एतद्धिदुर्लभतरं इत्यत्र पूर्वस्मिन् श्लोके 'तत्र' इति प्रकृतश्लोके च प्रागुक्तं द्विप्रकारं जन्म ग्राह्यमित्यवधेयम् ॥

बुद्धिसंयोगं लभते इत्यत्र बुद्धिसंयोगो भगवति मनोयोगरूपः । ध्यानमिति यावत् । यस्मादेव हि तस्य पूर्वं भ्रंशोऽभवत् । तं पुनर्लभते ॥ ततोऽतीव यतमानस्सन् सिद्ध्युन्मुखो भवति । सिद्धिं च लभते । अस्यानायासेनारोहस्संभवति पूर्वसंस्कारस्य महितत्वात् ॥

एवं ध्यानयोगभ्रष्टस्य तारणक्रममुक्त्वा कैमुतिकेनोक्तमर्थं द्रढयति जिज्ञासुरपीति । योगस्य जिज्ञासुरित्यन्वयः । ज्ञातव्यो मया योगइति यस्यातीवेच्छा सः । अतीवेत्युप्रत्ययार्थः । कर्मणिषष्ठी । नञा निर्दिष्टस्यानित्यत्वोक्त्या नानुपपत्तिः शंक्या । संबंधसामान्ये षष्ठीत्याह देशिकः ।

योगज्ञानेच्छोरपि महाफलं भवतीत्युक्त्या योगस्य माहात्म्यं सुदृढमुक्तं भवति । एतेन कैमुत्यस्वारस्यं सुगमं । प्रकृतं ध्यानयोगं योगशब्देनाविवक्षित्वा योगः परमात्मा इत्याह शंकरानंदः । यथोक्तं तेन । 'योगस्य' श्रवणादिसंजातविज्ञानवंतं योगिनं स्वभावं ब्रह्मभावं योजयति गमयति इति योगः निर्विशेषः परमात्मा तस्य ' इति ॥ अत्र ब्रह्मभावं योजयति इत्यंशो दुष्टः । किंच प्रकरणौचित्यादत्र योगो ध्यानयोग इति भाति । ब्रह्मजिज्ञासुरपि क्रमेण मुच्यते किंपुनस्सकृदनुष्ठितध्यानः इत्यर्थोऽपि कथंचिदविरुद्धः स्यात् । अस्मिन्पक्षे जिज्ञासुः केवलं श्रवणमननरतः न निदिध्यासुः ॥

मुमुक्षुमार्गे दशाप्रभेदाः खलु सर्वाभ्युपगताः । नास्मिस्यात्किंचिद्वैचित्र्यं । परे खल्वत्र वासिष्ठमाश्रित्य सप्तभूमिका आहुः । तथाहि । (१) नित्यानित्यवस्तुविवेकादिहामुत्रार्थभोगवैराग्याच्छमदमश्रद्धातितिक्षासर्वकर्मसंन्यासादिपुरस्सरा मुमुक्षा शुभेच्छाख्या प्रथमा भूमिका साधनचतुष्टयसंपत् ॥ (२) ततो गुरुमुपसृत्य वेदान्तवाक्यविचारणात्मिका द्वितीया श्रवणमननसंपत् ॥ (३) ततः श्रवणमननपरिनिष्पन्नस्य तत्वज्ञानस्य निर्विचिकित्सारूपा तनुमानसा नाम तृतीया निदिध्यासनसंपत् । (४) चतुर्थी भूमिका तत्वसाक्षात्कारः । (५-६-७) पंचमषष्ठसप्तमभूमयस्तु जीवन्मुक्तेरवान्तरभेदाः। इत्युक्तं मधुसूदनीये । एतस्य कृत्स्नतस्सांगत्यविचारस्य नात्रावसरः। सामान्याकारेण जिज्ञासावस्था निदिध्यासनावस्था साक्षात्कारावस्था चेति विभागोऽवगन्तव्यः । जिज्ञासाशब्दस्य विचारार्थकत्वात् उक्तप्रथमद्वितीयभूमिकावस्थितो जिज्ञासुरिति स्यात् । तृतीयभूमिकावस्थितो निदिध्यासुर्विच्छिन्नयोगश्चेद्योगभ्रष्ट इत्येतावत्पर्यंतं निरूपितः । तदूनः जिज्ञासुरपि क्रमेणोद्धृतो भवतीत्युक्ते किमुवाच्यं योगभ्रष्ट इति युक्तिस्सुगमा । 'मोक्षोपायस्य जिज्ञासुरपि केवलपाठकात् । विशिष्टः किमुताविद्वान् किंपुनर्यस्तदा स्थितः इति परमयोगे ।' इति गीतातात्पर्ये ॥

"शब्दब्रह्मातिवर्तते" इत्यस्य प्रकृतिं अतिक्रांत इति रामानुजाचार्यार्थः। अयमुपपादितो देशिकेन। 'ब्रह्मशब्दोऽत्र न परब्रह्मविषयः। तस्यातिवर्तनीयत्वानुपपत्तेः। शब्दब्रह्म इति विशेषणायोगाच्च। अत एव न जीवविषयः। नापि वेदविषयः। तस्याप्यतिवर्तनीयत्वानिरूपणात्। नापि वेदप्रतिपाद्यकर्मविषयः। तत्फलविषयो वा॥ तत्रापि वेदे ब्रह्मशब्दस्य गौणः प्रयोगः तस्यपरस्ताल्लक्षणा उपनिषदंशात्संकोच इति बहुदोषप्रसंगात्॥ नापि शब्दजन्यं ज्ञानमात्रं शब्दब्रह्म॥ योग जिज्ञासोस्तदतिवृत्तेर्विरुद्धत्वात् 'स्वाध्यायाद्योगमासीत योगात्स्वाध्यायमामनेत्' इत्यादिप्रकोपप्रसंगाच्च। योगमारुरुक्षुः पुरुषः शब्दश्रवणजनितज्ञानमात्रवतःपुरुषादधिकः। 'ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः। कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवादिनः' इतिवदिति चेत् तदपि न। अध्याहाराद्यापातात्। अप्रस्तुताभिधानप्रसंगात्। पूर्वोत्तरवाक्यानन्वयाच्च। अतःप्रकृतावपि ब्रह्मशब्दप्रयोगस्यात्रापि प्राचुर्यादतिवर्तनीयत्वौचित्याच्च ब्रह्मशब्दोऽत्र प्रकृतिविषयः।तस्याएव भोग्यभोगोपकरणभोगस्थानाढ्यपरिणामप्रदर्शनाय 'शब्दब्रह्म' इति व्यपदेशः' इति॥ एतेनान्यव्याख्यानानि शब्दब्रह्मपदं वेदपरं वा वेदोक्तकर्मपरं वा वेदोक्तकर्मानुष्ठानफलपरं वा कर्मकांडपरं वा इत्यादिनि शांकरकृतानि प्रत्युक्तानि। 'शब्दब्रह्मातिवर्तते' इत्यस्य मुक्तो भवतीति पर्यवसितार्थो नःसंमतः। विधिनिषेधरूपशब्दब्रह्म विवक्षितमिति व्याख्यात विवृतौ। अयं पक्षो नालोचितो देशिकेन॥

यद्रामानुजाचार्यभाष्ये 'देवमनुष्यपृथिव्यंतरिक्षस्वर्गादिशब्दाभिलापयोग्यं ब्रह्म प्रकृतिः इत्युक्तं तद्विशिष्टाद्वैतप्रक्रिया भाति। आत्मनां स्वभावतः साम्यमभिप्रयन् देवत्वादिधर्माणां केवलमौपाधिकत्वं रामानुजाचार्यो मन्यते। एतत् प्रमाणबाधितं द्रष्टव्यम्॥

**प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।**
**अनेकजन्मसंसिद्धस्ततो याति परां गतिं ॥४५॥**

वि० ॥ योगजिज्ञासामात्रेण मुक्तिश्चेत्तदनुष्ठानं व्यर्थमित्यतो न तावन्मात्रेण मुक्तिरपि त्वनेकजन्मनीत्याह । प्रयत्नादिति । योगजिज्ञासुरपीत्यनुषंगः योगं ज्ञात्वेति शेषः । यतमानः प्रयत्नं कुर्वन् । ततः प्रयत्नाद्योगी ध्यानयोगवान् सन् संशुद्धकिल्बिषः निर्धूतपापः । अनेकजन्मभिः संसिद्धोऽपरोक्षज्ञानी अनेकजन्मसंसिद्धः । ततः अपरोक्षज्ञानात् परां गतिं यातीति ॥

शं० । कुतश्च योगित्वं श्रेय इति । प्रयत्नादिति । प्रयत्नाद्यतमानोऽधिकतरं यतमानइत्यर्थः । तत्र योगी विद्वान् संशुद्धकिल्बिषो विशुद्धकिल्बिषः संशुद्धपापः अनेकेषु जन्मसु किंचित्किंचित्संस्कारजातमुपचित्य तेनोपचितेनानेकजन्मकृतेन संसिद्धोऽनेकजन्मसंसिद्धस्ततो लब्धसम्यग्दर्शनः संयाति परां प्रकृष्टां गतिं ॥

रा० ॥ यतएवं योगमाहात्म्यं ततोऽनेकजन्मार्जितपुण्यसंचयैस्संशुद्धकिल्बिषः संसिद्धस्संजातः प्रयत्नाद्यतमानस्तु योगी चलितोऽपि पुनः परां गतिं यात्येव ॥

विचारः

केवलंजिज्ञासोर्मोक्षकथनेन जायते संशयः किं योगानुष्ठानायासो व्यर्थ इति । संशयं एनं परिहरति भगवान् प्रयत्नादिति । विना प्रयत्नादिकं

केवलं जिज्ञासुर्न मोक्षमाप्नोतीत्यभिप्रायः । किंतु जिज्ञासुः क्रमेण योगं ज्ञात्वा प्रयत्नं श्रवणादिरूपं कुर्वन् योगमनुष्ठाय धौतपापमलस्सन् बहुजन्मपरिपाकानंतरमपरोक्षज्ञानी भूत्वा तदनंतरमेव मोक्षं लभते इति भगवदाशयः ॥ एतेन प्रकृतश्लोकस्योत्थापकाकांक्षा जिज्ञासुरपीत्यस्माल्लब्धेत्युक्तं भवति । केचित् कैमुतिकन्यायप्रदर्शनाय प्रवृत्तं जिज्ञासुरपीत्युक्तं तत्र श्लोकएव समाप्तं मन्वानाः पुनर्योगभ्रष्टगतिरिह निरूप्यते इत्याहुः ॥ तथाहि मधुसूदनः 'प्रथमादिभूमिकात्रयमध्ये प्रथमभूमिकामारूढो जिज्ञासुः कर्माधिकारमतीत्य ज्ञानाधिकारं प्राप्नोतीत्युक्त्वाऽधुना द्वितीयतृतीयभूमिके प्राप्तो मननशीलः निदिध्यासुश्च प्रयत्नादुद्भूतो भवतीत्युच्यते' इति संगतिमाह । तथाच प्रयत्नाद्यतमान इत्युक्तो न जिज्ञासुः किंतु तदुपरितनोऽधिकारीति तदाशयः ॥

नीलकण्ठस्तु योगभ्रष्टप्रकरणं पूर्वश्लोकेन समाप्तं मत्वा योगाभ्रष्टो यो विषयैर्ह्रियमाणोऽपि प्रयत्नेन योगमेवाभ्यसितुं प्रवर्तते हठाद्वायुनिरोधादिरूपात् खेचर्यादिमुद्राविशेषाभ्यासाद्वा यतमानः तस्य गतिमाह पद्यं इति सङ्गतिं रचितवान्। तथाच नेदं पद्यं अर्जुनप्रश्नप्रतिवचनतया सङ्गतं किन्तु हठयोगफलं निरूपयतीति तस्याशयः । 'चक्षुश्चैवांतरे भ्रुवो'रिति पंचमाध्यायांते यदुक्तं योगस्वरूपं तदेवात्र प्रपंच्यते इत्ययं वक्ति ॥ हठयोगानां सर्वेषां पापनिवृत्तिमात्रोपयोगित्वात्साक्षात्कारे तेषां साक्षात्साधनत्वायोगाच्च प्रयत्नाद्यतमानस्य संशुद्धकिल्बिषत्वं वाक्यार्थ इति मन्यते ॥ इदं नीलकण्ठोक्तमरम्यं ॥ अर्जुनप्रश्नं विहाय पंचमाध्यायगतवाक्येन सङ्गत्युद्भावनस्य क्लिष्टत्वात् । योगभ्रष्टमविवक्षित्वा हठयोगनिरूपणमत्रावसरे पुनरारभ्यते इत्युक्तेर्गमकस्यादर्शनाच्च ॥

कश्चित्तु ध्यानयोगप्रकरणमतीतश्लोकेन समापितं मत्वाऽधुना कर्मयोगमाहात्म्यमुच्यत इति व्याचष्टे । तस्य व्याख्याने प्रयत्नं कुर्वन् कर्मयोगी

विगतदर्पः शुचीनां श्रीमतां वा योगिनां धीमतां वा कुले जातोऽस्मीत्यहंकारहीनः इति 'यतमान'शब्दो व्याख्यातः । इदमयुक्तं । अत्र विवक्षितस्य योगस्य ध्यानयोगमात्रत्वौचित्यात् अप्रस्तुतस्य कर्मयोगस्य ग्रहणे ज्ञापकादर्शनात् । यतमानो वीतदर्प इति व्याख्यानमसमीचीनं । अयत्नस्य अयतिरित्यनेन प्रकरणारंभे व्यपदिष्टत्वात् । यतते च ततोभूय इति बहुप्रयत्नस्यचोक्तत्वात्तदनुरोधेनेहापि यतमानशब्दस्य प्रयत्नवद्वाचित्वेन भाव्यं नान्यथेति द्रष्टव्यम् ॥

तस्मात् श्लोकः योगाभ्रष्टपरः इति वा हठयोगपर इति वा कर्मयोगपर इति वा न मंतव्यं ॥ श्लोकस्थप्रयत्नशब्दः श्रवणादिरूपध्यानयोगप्रयत्नपरः । योगीत्युक्तो ध्यानयोगी ॥ अनेकजन्मकृतबहुप्रयत्नव्यवधानेन योगजिज्ञासुः परां गतिमपरोक्षानंतरमेव यातीति वाक्यार्थ एव निरवद्यः । अत एवोक्तं नारदीये । 'अतीव श्रद्धया युक्तो जिज्ञासुर्विष्णुतत्परः । ज्ञात्वा ध्यात्वा तथा दृष्ट्वा जन्मभिर्बहुभिःपुमान् । विशेन्नारायणं देवं नान्यथा तु कथंचन' इति ।

'ततो याति परां गतिं' इत्यत्र 'ततः' इत्यस्य अपरोक्षज्ञानादित्यर्थः । केचित् (पश्यत रामानुजाचार्यभाष्यं देशिकव्युत्पादनं चात्र) तत इत्यनेन योगाच्चलितमानस इत्यर्जुनप्रश्नगतं संचलितमानसत्वं विवक्षित्वा चलितमानसत्वमतीत्य परां गतिं मनोनैश्चल्यरूपां याति इत्याचक्षते । इदमरम्यं । परां गतिं इति मोक्षविवक्षाया एवौचित्यात् । चलितमानसत्वस्य परामर्शेन दूरान्वयस्य क्लिष्टत्वाच्च ॥

तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन
॥ ४६ ॥

योगिनामपि सर्वेषां मद्गतेनांतरात्मना।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः
॥ ४७ ॥

ॐतत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां श्रीकृष्णार्जुनसंवादे आत्मसंयमयोगोनाम षष्ठोऽध्यायः ॥

वि० ॥ योगं स्तौति। तपस्विभ्य इति। कृच्छ्रचान्द्रायणादितपोयुक्तेभ्योऽयोगिज्ञानिभ्योऽपि योगी ध्यानयोगानुष्ठाताऽधिको मतः। तस्मात्सर्वाधिकत्वाद्योगस्येत्यर्थः ॥ ध्यानवत्स्वपि तारतम्यमाह। योगिनामिति। सर्वेषामपि योगिनां मध्ये श्रद्धाशब्दोदितं भक्तिमान्यः स युक्तो मतः। तत्रापि भक्तिमत्स्वपि यो मां भजते सवेते स युक्ततरः। तत्रापि मद्गतेनान्तरात्मना मद्गतान्तःकरणेन फलकामनां विना भजते स युक्ततमो मत इति योगिष्वप्युत्तम इति मे मतः।

इति श्रीमद्भगवद्गीतार्थसंग्रहे श्रीराघवेंद्रयतिकृते षष्ठोऽध्यायः ॥

शं ॥ यस्मादेवं तस्मात्। तपस्विभ्यइति। तपस्विभ्योऽधिको योगी। ज्ञानिभ्योऽपि। ज्ञानमत्र शास्त्रार्थपांडित्यं। तद्वद्भ्योऽपि मतो ज्ञातोऽधिकः श्रेष्ठइति। कर्मिभ्योऽग्निहोत्रादिकर्म। तद्वद्भ्योऽधिको योगी विशिष्टो यस्मात्तस्माद्योगी भवार्जुन ॥ ४६ ॥

योगिनामिति। योगिनामपि सर्वेषां रुद्रादित्यादिध्यानपराणां मध्ये मद्गतेन मयि वासुदेवे समाहितेनांतरात्मनांतःकरणेन श्रद्धावान् श्रद्दधानस्सन् भजते सेवते यो मां स मे मम युक्ततमोऽतिशयेन युक्तो मतोऽभिप्रेतइति ॥ ४७॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यपूज्यपादश्रीमदाचार्यश्रीशंकरभगवत्कृतौ श्रीमद्गीताभाष्ये आत्मसंयमयोगोनाम षष्ठोऽध्यायः ॥

रा० अतिशयितपुरुषार्थनिष्ठतया योगिनः सर्वस्मादाधिक्यमाह—॥ केवलतपोभिर्यः पुरुषार्थः साध्यते। आत्मज्ञानव्यतिरिक्तैर्ज्ञानैश्च यः। यश्च केवलैरश्वमेधादिभिः कर्मभिः। तेभ्यः सर्वेभ्योऽधिकपुरुषार्थसाधनत्वाद्योगस्य तपस्विभ्यो ज्ञानिभ्यः कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥ ४५ ॥

तदेवं परविद्यांगभूतं प्रजापतिवाक्योदितं प्रत्यगात्मदर्शनमुक्तं। अथ परविद्यां प्रस्तौति योगिनामिति। पचंम्यर्थे षष्ठी। 'सर्वभूतस्थमात्मानम्' इत्यादिना चतुर्विधा

योगिनः प्रतिपादिताः। तेष्वनंतर्गतत्वाद्वक्ष्यमाणस्य योगिनो न निर्धारणे षष्ठी संभवति । 'अपि सर्वेषाम्' इति सर्वशब्दनिर्दिष्टास्तपस्विप्रभृतयः ॥ तत्राप्युक्तेन न्यायेन पंचम्यर्थो गृहीतव्यः। योगिभ्योऽपि सर्वेभ्यो वक्ष्यमाणो योगी युक्ततमः। तदपेक्षया अवरत्वे तपस्विप्रभृतीनां योगिनां च न कश्चिद्विशेष इत्यर्थः। मेर्वपेक्षया सर्षपाणामिव। यद्यपि सर्वेष्वन्योन्यन्यूनाधिकभावो विद्यते । तथापि मेर्वपेक्षया अवरत्वनिर्देशस्समानः । मत्प्रियत्वातिरेकेणानन्यधारणस्वभावतया मद्गतेनांतरात्मना मनसा श्रद्धावान् अत्यर्थमत्प्रियत्वेन क्षणमात्रविश्लेषासहतया मत्प्राप्तिप्रवृत्तौ त्वरावान् यो मां भजते । मां विचित्रानन्तभोग्यभोक्तृवर्गभोगोपकरणभोगस्थानपरिपूर्णनिखिलजगदुदयविभवलयलीलं अस्पृष्टाशेषदोषानवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्तितेजःप्रभृत्यसंख्येयकल्याणगुणनिधिं स्वाभिमतानुरूपैकरूपाचिंत्यदिव्याद्भुतनित्यानिरवद्यनिरतिशयौज्वल्यसौंदर्यसौगंध्यसौकुमार्यलावण्ययौवनाद्यनंतगुणनिधिदिव्यरूपं वाङ्मनसापरिच्छेद्यस्वरूपस्वभावं अपारकारुण्यसौशील्यवात्सल्यौदार्यमहोदधिं अनालोचिताविशेषाशेषलोकशरण्यं प्रणतार्तिहरं आश्रितवात्सल्यैकजलधिं अखिलमनुजनयनविषयतांगतं अजहत्स्वभावं वसुदेवगृहेऽवतीर्णं अनवधिकातिशयतेजसा निखिलं जगद्भासयंतं आत्मकांत्या विश्वमाप्याययंतं भजते सेवते

उपास्ते इत्यर्थः । स मे युक्ततमो मतः । स सर्वेभ्यः श्रेष्ठतम इति सर्वं सर्वदा यथावस्थितं स्वतएव साक्षात्कुर्वन् अहं मन्ये ॥

इति श्रीमद्रामानुजविरचिते श्रीमद्भगवद्गीताभाष्ये षष्ठोऽध्यायः ॥

विचार : ॥

कर्मिभ्यः योगी अधिक इत्यत्र कर्मी काम्यकर्ता विवक्षितः । फलेच्छयाग्निहोत्रादिकर्ता । तस्याज्ञत्वात्तदपेक्षया योगिनः आधिक्यं सुगमम् ॥

तपस्विभ्यो योगी अधिक इत्युक्तौ तपश्शब्देनकृच्छ्रचांद्रायणादिकं गृह्यते । यद्यपि तपः शब्देन ज्ञानस्य ग्रहणं संभावितं । 'बहवो ज्ञानतपसा' इत्यादौ ज्ञानस्यापि तपश्शब्दबोध्यतया दृष्टत्वात् । तथाप्यत्र ज्ञानातिरिक्तमेव कृच्छ्रादिकं विवक्षितं मन्तव्यं । ज्ञानिभ्य इति पृथग्गृहीतत्वात् ॥ 'कृच्छ्रादेरपि यज्ञादेर्ध्यानयोगो विशिष्यते' इति गारुडे ॥ 'तपसश्चैव यज्ञादेर्ध्यानमेव विशिष्यते' इति दत्तात्रेयवचनं ॥ गी० ता० ॥

'ज्ञानिभ्यः योगी अधिक' इत्युक्तौ विवक्षितो ज्ञानी किं लौकिकज्ञानवान् उत शास्त्रजन्यपरोक्षज्ञानवान् आहोस्विदन्यो वेति संदिह्यते । जीवात्मज्ञानपरमात्मज्ञानव्यतिरिक्तज्ञानवान् विवक्षित इत्यभिप्रैति रामानुजाचार्यः ॥ अयमाशयोऽयुक्तः । शास्त्रबहिर्भूतस्य काकदन्तपरीक्षानुबंधिभ्यो ज्ञानिभ्यो योगिन आधिक्याभिधानस्य नीरसत्वात् ॥ केवलं लौकिकज्ञानानामप्रस्तुतत्वेनैव व्यावृत्तेस्तदाधिक्यकथनस्यासंगतत्वाच्च ॥

शास्त्रजन्यं परोक्षज्ञानरूपं पाण्डित्यं गृह्णंति शाङ्कराः । शास्त्रजन्यं परोक्षज्ञानमत्र विवक्षितं किं ब्रह्मविषयं वान्यविषयं वा इत्येतन्नोक्तं दृश्यते । ब्रह्मविषयं ज्ञानं अभिप्रेतं चेत् योगीत्युक्तध्यानयोगिनोऽपि शास्त्रज्ञानित्वा-

विशेषात् स्वस्मात्स्वस्याधिक्योक्तिः कथं संगच्छते । शास्त्रजन्यान्यविषयकं ज्ञानं विवक्षितं चेत् तादृशं ज्ञेयं अमुकमिति न प्रतिपादितं शाङ्करव्याख्यानेषु ॥

अत्र मधुसूदनवेङ्कटनाथौ तु शङ्करभाष्योक्तं विहाय 'ज्ञानिभ्यः योगी अधिकः' इत्यस्य स्वोत्प्रेक्षया भावमाहतुः । इदमुक्तं मधुसूदनीये 'ज्ञानिभ्योऽपि परोक्षज्ञानवद्भ्योऽपि अपरोक्षज्ञानवानाधिको मतो योगी। एवमपरोक्षज्ञानवद्भ्योऽपि मनोनाशवासनाक्षयाभावादजीवन्मुक्तेभ्यो मनोनाशवासनाक्षयवत्त्वेन जीवन्मुक्तो योग्यधिको मतः । अतः परमयोगी भव' इति ॥ आह वेङ्कटनाथः । 'तथा ज्ञानिभ्योऽप्यधिकः । सत्यपि तत्वसाक्षात्कारे मनोनाशवासनाक्षयवतः 'स योगी परमो मतः' इति प्राक् पारम्योक्तेः' इति ॥ अत्र द्रष्टव्यं । ज्ञानिभ्य इति विवक्षितो ज्ञानी परोक्षज्ञानी अपरोक्षज्ञानी च इत्यादाय तदानुगुण्येन योगीति पदं अपरोक्षज्ञानिपरं जीवन्मुक्तपरं च क्रमेणेति मधुसूदनाशयः । वेङ्कटनाथस्तु ज्ञानिभ्य इत्युक्तो ज्ञानी अपरोक्षज्ञान्येव योगीत्युक्तश्च जीवन्मुक्त एवेत्यभिप्रैति ॥ 'ज्ञानमत्र शास्त्रार्थपाण्डित्यं' इति शङ्करभाष्यवचने समानादिव ज्ञानशब्देन परोक्षज्ञानमपि विवक्षित्वा व्याख्यातवान् मधुसूदनः । तदनुगस्तु वेङ्कटनाथश्शाङ्करभाष्यमुपेक्ष्यापरोक्षज्ञानिजीवन्मुक्तयोरेव तारतम्यमभिहितमिति मन्यते । इति ॥

वस्तुतस्तु ज्ञानिशब्देन ब्रह्मविषयकपरोक्षज्ञानं वा ब्रह्मापरोक्षज्ञानं वा न विवक्षामर्हति । तथा योगीत्यनेन ब्रह्मापरोक्षज्ञानी वा जीवन्मुक्तो वा न ग्राह्यः । कुत इति चेत् । योगीत्यत्र ध्यानयोगिन एव प्रस्तुतत्वात् । अत एवोत्कर्षदीपिकाकारोऽपि । 'योगी अत्र ध्यानयोगी विवक्षितः । पूर्वोत्तरग्रन्थानुरोधात् । ध्यानयोगस्यैवोपसंहार्यत्वाच्च' इत्युक्त्वा मधुसूदनवाक्यमनूद्य 'एतेन तत्प्रत्युक्तं' इत्यप्याह ॥ किंच यन्मधुसूदनवेङ्कटनाथाभ्यां कल्पितं

मनोनाशवासनाक्षयसदसद्भावाभ्यां तत्वसाक्षात्कारजीवन्मुक्तत्वयोर्वैलक्षण्यं तदसत् । एतत् 'स योगी परमो मतः' इत्यत्र विचारितं द्रष्टव्यं ॥

तथाच ज्ञानिभ्य इत्यत्र लौकिकज्ञानी वा ब्रह्मापरोक्षज्ञानी वा विवक्षित इति न शक्यते वक्तुं । अत एवाह श्रीमध्वः 'ज्ञानिभ्यः योगज्ञानिभ्यः' इति । 'योगस्य जिज्ञासुः' इत्युक्तेनास्यार्थस्यानुरोधः स्फुटः । तथाच योगापरपर्यायध्यानस्वरूपमज्ञात्वा ध्यायिनो ध्यानात् योगापरपर्यायध्यानस्वरूप ज्ञानमेव विशिष्यते । योगापरपर्यायध्यानस्वरूपज्ञानमात्रात् सज्ञानध्यानरूपो योगो विशिष्यते इत्युक्तं भवति । उक्तं हि नारदीये । 'अज्ञात्वा ध्यायिनो ज्ञानाद्ज्ञानमेव विशिष्यते । ज्ञात्वा ध्यानं ज्ञानमात्रात् ध्यानादपि तु दर्शनं । दर्शनादपि भक्तेश्च न किंचित्साधनाधिकं' इति । उदाहृतं च दत्तात्रेयवचनं तात्पर्ये । 'अज्ञानिध्यानतो ज्ञानं ध्यानं सज्ञानमप्यतः ।' इति । विशिष्यते इति शेषः ।

अथाध्यायांतिमः योगिनामितिश्लोकः किंचिद्विचार्यते ॥

अयं श्लोकः भक्तियोगप्रतिपादकस्य गीताद्वितीयषट्कस्य सूत्रायित इति मन्वानाः परे एतावत्पर्यंतं कर्मप्रधानस्य बुद्धिशुद्धिहेतोः कर्मयोगस्य त्वंपदार्थानुबन्धिनः प्रपंचनं । अतः परं भक्तियोगं भजनीयं भगवन्तं च वासुदेवं तत्पदार्थं निरूपयितुं अग्रिममध्यायषट्कमारभ्यते इत्याहुः । यद्यप्युत्तरत्र भक्तिरुच्यते इत्यत्र न विवादः । त्वंतत्पदार्थयोरैक्यप्रतिपादनार्थं त्वंपदार्थवर्णनमतः परं तत्पदार्थवर्णनं इत्यद्वैतप्रक्रिया तु तृतीयाध्यायारम्भे विचारिता द्रष्टव्या ॥

एतावत्पर्यंतं जीवात्मयोगो निरूपितः अतः परं मध्यमषट्केन परमात्मोपासको योगी वक्ष्यते इति रामानुजाचार्याशयः । जीवात्मयोगः परमात्मयोगः इति योगस्य द्वैविध्यमसत् । जीवात्मनः साक्षाद्योगविषयत्वा-

योगात्। यद्यपि अस्वतंत्रत्वेनेश्वरप्रतिबिंबत्वादिना जैवं ज्ञानं स्यादवश्य-संपाद्यं। तादृशज्ञानिनोऽपि दुर्लभत्वात्। तथापि ईश्वराराधनमविवक्षित्वा प्रत्यग्दर्शनमात्रं योगफलं इत्यादाय प्रायशस्सर्वत्र प्रथमषट्के आत्मशब्दस्य जीवपरत्वेन यद्रामानुजाचार्येण व्याख्यानं तच्चिंत्यम्॥

ध्यानयोगप्रकरणं ध्यानवस्तु तारतम्याभिधानेनोपसंहरतीति श्रीमध्वाभिमतः श्लोकाशयः। अंतिमश्लोकत्वेन स्यादस्य देहलीदीपवदतीताध्यायस्योपसंहारकत्वं उत्तरग्रंथस्योपक्षेपकत्वंच॥

ज्ञानयोगाद्भक्तियोगः श्रेष्ठो वा जघन्यो वेति विप्रतिपत्तिमुत्थाप्यात्र वेङ्कटनाथो न श्रेष्ठ इति स्वसिद्धान्तमाह। ज्ञानसाधनत्वेनोक्तायाः भक्तेः फलत्वेन प्रधानभूताद्ज्ञानादाधिक्यं नोचितमिति तस्याशयः। भक्तियोगस्य तु श्रैष्ठ्यमाह रामानुजाचार्यः॥ वस्तुतस्तु योगिनस्त्रिविधाः कर्मयोगिनः ज्ञानयोगिनः भक्तियोगिनश्चेति। भक्तियोगिनो देवाः ज्ञानयोगिनः ऋषयः कर्मयोगिनो मनुष्याः॥ विना भक्तिज्ञाने कर्मयोगो न निष्पद्यते। विना कर्मभक्ती न ज्ञानयोगः। विना ज्ञानकर्मणी न भक्तियोगः। अयं ' लोकेऽस्मिन् द्विविधानिष्ठे "त्यादौ तृतीयाध्याये विचारितोऽनुसंधेयः।

योगिनामिति श्लोके योगिनामिति निर्धारणषष्ठी वा पंचम्यर्थे षष्ठीवेति विचार्यं॥ निर्धारणषष्ठीं तिरस्कृत्य पंचम्यर्थे षष्ठीमाश्रयते रामानुजाचार्यः। उपपादयति देशिकः। ' नन्वेवं किमर्थं परिक्लिश्यते। निर्धारणे षष्ठ्यत्र संभवति। तथाहि। प्रागुक्तेषु चतुर्षु योगेषु सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः इति योगीकश्चिदुक्तः। अत्रापि श्रद्धावान् भजते यो मां इति सएव प्रत्यभिज्ञायते। अतस्तन्निर्धारणेन युक्ततमः इति प्रशंसात्र क्रियते। युक्ततमइत्यत्र प्रत्ययश्च निर्धारणार्थत्वसूचकः। तस्मान्नासौ पंचम्यर्थे षष्ठीति चेन्न। अयमभिप्रायः। परमात्मोपासको योगी मध्यमषट्केन वक्ष्यते। तस्य